THE

# HYMNS OF THE RIG-VEDA

IN THE

## SAMHITA AND PADA TEXTS

*REPRINTED FROM THE EDITIO PRINCEPS*

BY

F. MAX MÜLLER, M.A.

MEMBRE ÉTRANGER DE L'INSTITUT DE FRANCE
ETC.



SECOND EDITION

*WITH THE TWO TEXTS ON PARALLEL PAGES*

---

IN TWO VOLUMES

VOL. II

---

LONDON

TRÜBNER AND CO., 57 AND 59, LUDGATE HILL

STRASBURG: K. I. TRÜBNER

1877

Digitized by Google

## ॥ संहितापाठः ॥

## ॥ ओं ॥

॥ १ ॥ १–२५ वसिष्ठः ॥ अग्निः ॥ १–१८ विराट् । १९–२५ त्रिष्टुप् ॥

॥ १ ॥ अग्निं नरो दीधितिभिररण्योर्हस्तच्युती जनयंत प्र-
शस्तं । दूरेदृशं गृहपतिमथर्युं ॥ १ ॥ तमग्निमस्ते वसवो न्यृण्वन्सु-
प्रतिचक्षमवसे कुतश्चित् । दक्षाय्यो यो दम आस नित्यः ॥ २ ॥
प्रेद्धो अग्ने दीदिहि पुरो नोऽजस्रया सूर्म्या यविष्ठ । त्वां शश्वंत
उप यंति वाजाः ॥ ३ ॥ प्र ते अग्नयोऽग्निभ्यो वरं निः सुवीरासः
शोशुचंत द्युमंतः । यत्रा नरः समासते सुजाताः ॥ ४ ॥ दा नो अग्ने
धिया रयिं सुवीरं स्वपत्यं सहस्य प्रशस्तं । न यं यावा तरति या-
तुमावान् ॥ ५ ॥ २३ ॥ उप यमेति युवतिः सुदक्षं दोषा वस्तोर्हवि-
ष्मती घृताची । उप स्वैनमरमतिर्वसूयुः ॥ ६ ॥ विश्वा अग्नेऽप
दहारातीर्येभिस्तपोभिरदहो जरूथं । प्र निस्वरं चातयस्वामी-
वां ॥ ७ ॥ आ यस्ते अग्न इधते अनीकं वसिष्ठ शुक्र दीदिवः पा-
वक । उतो न एभिः स्तवथैरिह स्याः ॥ ८ ॥ वि ये ते अग्ने भेजिरे
अनीकं मर्ता नरः पित्र्यासः पुरुत्रा । उतो न एभिः सुमना इह
स्याः ॥ ९ ॥ इमे नरो वृत्रहत्येषु शूरा विश्वा अदेवीरभि संतु मा-
याः । ये मे धियं पनयंत प्रशस्तां ॥ १० ॥ २४ ॥ मा शूने अग्ने नि
षदाम नृणां माशेषसोऽवीरता परि त्वा । प्रजावतीषु दुर्यासु दुर्य
॥ ११ ॥ यमश्वी नित्यमुपयाति यज्ञं प्रजावंतं स्वपत्यं क्षयं नः । स्व-
जन्मना शेषसा वावृधानं ॥ १२ ॥ पाहि नो अग्ने रक्षसो अजुष्टा-



Digitized by Google

## ॥ पदपाठः ॥

## ॥ ओं ॥

॥१॥ अग्निं नरः दीधितिऽभिः अरण्योः हस्तऽच्युती जनयंत प्रऽशस्तं दूरेऽदृशं गृहऽपतिं अथर्युं॥१॥ तं अग्निं अस्ते वसवः नि ऋण्वन् सुऽप्रतिचक्षं अवसे कुतः चित् दक्षाय्यः यः दमे आस नित्यः॥२॥ प्रऽइद्धः अग्ने दीदिहि पुरः नः अजस्रया सूर्म्या यविष्ठ त्वां शश्वंतः उप यंति वाजाः॥३॥ प्र ते अग्नयः अग्निऽभ्यः वरं निः सुऽवीरासः शोशुचंत द्युऽमंतः यत्र नरः संऽआसते सुऽजाताः॥४॥ दाः नः अग्ने धिया रयिं सुऽवीरं सुऽअपत्यं सहस्य प्रऽशस्तं न यं यावा तरति यातुऽमावान्॥५॥२३॥ उप यं एति युवतिः सुऽदक्षं दोषा वस्तोः हविष्मती घृताची उप स्वा एनं अरमतिः वसुऽयुः॥६॥ विश्वाः अग्ने अप दह अरातीः येभिः तपःऽभिः अदहः जरूथं प्र निऽस्वरं चातयस्व अमीवां॥७॥ आ यः ते अग्ने इधते अनीकं वसिष्ठ शुक्र दीदिऽवः पावक उतो नः एभिः स्तवथैः इह स्याः॥८॥ वि ये ते अग्ने भेजिरे अनीकं मर्ताः नरः पित्र्यासः पुरुऽत्रा उतो नः एभिः सुऽमनाः इह स्याः॥९॥ इमे नरः वृत्रऽहत्येषु शूराः विश्वाः अदेवीः अभि संतु मायाः ये मे धियं पनयंत प्रऽशस्तां॥१०॥२४॥ मा शूने अग्ने नि सदाम नृणां मा अशेषसः अवीरता परि त्वा प्रजाऽवतीषु दुर्यासु दुर्य॥११॥ यं अश्वी नित्यं उपऽयाति यज्ञं प्रजाऽवंतं सुऽअपत्यं क्षयं नः स्वऽजन्मना शेषसा ववृधानं॥१२॥ पाहि नः अग्ने रक्षसः अजुष्टात्



Digitized by Google

त्पाहि धूर्तेररुषो अघायोः। त्वा युजा पृतनायूँरभि ष्यां ॥ १३ ॥ सेदग्निरग्नीँरत्यस्त्वन्यान्यत्र वाजी तनयो वीळुपाणिः। सहस्रपाथा अक्षरा समेति ॥ १४ ॥ सेदग्निर्यो वनुष्यतो निपाति समेद्धारमंहस उरुष्यात्। सुजातासः परि चरंति वीराः ॥ १५ ॥ २५ ॥ अयं सो अग्निराहुतः पुरुत्रा यमीशानः समिदिंधे हविष्मान्। परि यमेत्यध्वरेषु होता ॥ १६ ॥ त्वे अंग्न आहवनानि भूरीशानास आ जुहुयाम नित्या। उभा कृण्वंतो वहतू मियेधे ॥ १७ ॥ इमो अंग्ने वीततमानि हव्याजस्रो वक्षि देवतातिमच्छ। प्रति न ईं सुरभीणि व्यंतु ॥ १८ ॥ मा नो अग्नेऽवीरते परा दा दुर्वाससेऽमतये मा नो अस्यै। मा नः क्षुधे मा रक्षस ऋतावो मा नो दमे मा वन आ जुहूर्थाः ॥ १९ ॥ नू मे ब्रह्माण्यग्न उच्छशाधि त्वं देव मघवद्भ्यः सुषूदः। राती स्यामोभयास आ ते यूयं पात स्वस्तिभिः सदा नः ॥ २० ॥ २६ ॥ त्वमग्ने सुहवो रण्वसंदृक्सुदीती सूनो सहसो दिदीहि। मा त्वे सचा तनये नित्य आ धङ्मा वीरो अस्मन्नर्यो वि दासीत् ॥ २१ ॥ मा नो अग्ने दुर्भृतये सचैषु देवेद्धेष्वग्निषु प्र वोचः। मा ते अस्मान्दुर्मतयो भृमाच्चिद्देवस्य सूनो सहसो नशंत ॥ २२ ॥ स मर्तो अग्ने स्वनीक रेवानमर्त्ये य आजुहोति हव्यं। स देवता वसुवनिं दधाति यं सूरिरर्थी पृच्छमान एति ॥ २३ ॥ महो नो अग्ने सुवितस्य विद्वान्रयिं सूरिभ्य आ वहा बृहंतं। येन वयं सहसावन्मदेमाविक्षितास आयुषा सुवीराः ॥ २४ ॥ नू मे ब्रह्माण्यग्न उच्छशाधि त्वं देव मघवद्भ्यः सुषूदः। राती स्यामोभयास आ ते यूयं पात स्वस्तिभिः सदा नः ॥ २५ ॥ २७ ॥ १ ॥



Digitized by Google

पाहि धूर्तेः अररुषः अघऽयोः त्वा युजा पृतनाऽयून् अभि स्यां ॥१३॥ सः इत् अग्निः अग्नीन् अति अस्तु अन्यान् यत्र वाजी तनयः वीळुऽपाणिः सहस्रऽपाथाः अक्षरा संऽएति ॥१४॥ सः इत् अग्निः यः वनुष्यतः निऽपाति संऽएद्धारं अंहसः उरुष्यात् सुऽजातासः परि चरंति वीराः ॥१५॥२५॥ अयं सः अग्निः आऽहुतः पुरुऽत्रा यं ईशानः सं इत् इंधे हविष्मान् परि यं एति अध्वरेषु होता ॥१६॥ त्वे अग्ने आऽहवनानि भूरि ईशानासः आ जुहुयाम नित्या उभा कृण्वंतः वहतू मियेधे ॥१७॥ इमो अग्ने वीतऽतमानि हव्या अजस्रः वक्षि देवऽतातिं अच्छ प्रति नः ईं सुरभीणि व्यंतु ॥१८॥ मा नः अग्ने अवीरते परा दाः दुःऽवाससे अमतये मा नः अस्यै मा नः क्षुधे मा रक्षसे ऋतऽवः मा नः दमे मा वने आ जुहूर्थाः ॥१९॥ नु मे ब्रह्माणि अग्ने उत् शशाधि त्वं देव मघवत्ऽभ्यः सुसूदः रातौ स्याम उभयासः आ ते यूयं पात स्वस्तिऽभिः सदा नः ॥२०॥२६॥ त्वं अग्ने सुऽहवः रण्वऽसंदृक् सुऽदीती सूनो सहसः दिदीहि मा त्वे सचा तनये नित्ये आ धक् मा वीरः अस्मत् नर्यः वि दासीत् ॥२१॥ मा नः अग्ने दुःऽभृतये सचा एषु देवऽइद्धेषु अग्निषु प्र वोचः मा ते अस्मान् दुःऽमतयः भृमात् चित् देवस्य सूनो सहसः नशंत ॥२२॥ सः मर्तः अग्ने सुऽअनीक रेवान् अमर्त्ये यः आऽजुहोति हव्यं सः देवता वसुऽवनिं दधाति यं सूरिः अर्थी पृच्छमानः एति ॥२३॥ महः नः अग्ने सुवितस्य विद्वान् रयिं सूरिऽभ्यः आ वह बृहंतं येन वयं सहसाऽवन् मदेम अविऽक्षितासः आयुषा सुऽवीराः ॥२४॥ नु मे ब्रह्माणि अग्ने उत् शशाधि त्वं देव मघवत्ऽभ्यः सुसूदः रातौ स्याम उभयासः आ ते यूयं पात स्वस्तिऽभिः सदा नः ॥२५॥२७॥१॥



Digitized by Google

॥ २ ॥ १—११ वसिष्ठः ॥ आप्रं ॥ त्रिष्टुप् ॥

॥२॥ जुषस्व नः सुमिधमग्ने अद्य शोचा बृहद्यजतं धूममृण्वन्।
उप स्पृश दिव्यं सानु स्तूपैः सं रश्मिभिस्ततनः सूर्यस्य ॥१॥ न-
राशंसस्य महिमानमेषामुप स्तोषाम यजतस्य यज्ञैः। ये सुक्रत-
वः शुचयो धियंधाः स्वदंति देवा उभयानि हव्या ॥२॥ ईळेन्यं वो
असुरं सुदक्षमंतर्दूतं रोदसी सत्यवाचं। मनुष्वदग्निं मनुना स-
मिद्धं समध्वराय सदमिन्महेम ॥३॥ सपर्यवो भरमाणा अभिज्ञु
प्र वृंजते नमसा बर्हिरग्नौ। आजुह्वाना घृतपृष्ठं पृषद्वदध्वर्यवो
हविषा मर्जयध्वं ॥४॥ स्वाध्यो३ वि दुरो देवयंतोऽशिश्रयू रथ-
युर्देवताता। पूर्वी शिशुं न मातरा रिहाणे समग्रुवो न सम-
नेष्वंजन् ॥५॥१॥ उत योषणे दिव्ये मही न उषासानक्ता सुदुघेव
धेनुः। बर्हिषदा पुरुहूते मघोनी आ यज्ञिये सुविताय श्रयेतां ॥६॥
विप्रा यज्ञेषु मानुषेषु कारू मन्ये वां जातवेदसा यजध्यै। ऊर्ध्वं
नो अध्वरं कृतं हवेषु ता देवेषु वनथो वार्याणि ॥७॥ आ भारती
भारतीभिः सजोषा इळा देवैर्मनुष्येभिरग्निः। सरस्वती सारस्व-
तेभिरर्वाक् तिस्रो देवीर्बर्हिरेदं सदंतु ॥८॥ तन्नस्तुरीपमध पो-
षयित्नु देव त्वष्टर्वि रराणः स्यस्व। यतो वीरः कर्मण्यः सुदक्षो
युक्तग्रावा जायते देवकामः ॥९॥ वनस्पतेऽव सृजोप देवा-
नग्निर्हविः शमिता सूदयाति। सेदु होता सत्यतरो यजाति यथा
देवानां जनिमानि वेद ॥१०॥ आ याह्यग्ने समिधानो अर्वाङिं-
द्रेण देवैः सरथं तुरेभिः। बर्हिर्न आस्तामदितिः सुपुत्रा स्वाहा
देवा अमृता मादयंतां ॥११॥२॥

॥ ३ ॥ १—१० वसिष्ठः ॥ अग्निः ॥ त्रिष्टुप् ॥

॥३॥ अग्निं वो देवमग्निभिः सजोषा यजिष्ठं दूतमध्वरे



Digitized by Google

॥ २ ॥ जुषस्वं नः सम्ऽइधं अग्ने अद्य शोचं बृहत् यजतं धूमं ऋण्वन् उपं स्पृश दिव्यं सानुं स्तूपैः सं रश्मिऽभिः ततनः सूर्यस्य ॥ १ ॥ नराशंसस्य महिमानं एषां उपं स्तोषाम यजतस्यं यज्ञैः ये सुऽक्रतवः शुचयः धियम्ऽधाः स्वदंति देवाः उभयानि हव्या ॥ २ ॥ ईळेन्यं वः असुरं सुऽदक्षं अंतः दूतं रोदसी इति सत्यऽवाचं मनुष्वत् अग्निं मनुना सम्ऽइद्धं सं अध्वराय सदं इत् महेम ॥ ३ ॥ सपर्यवः भरमाणाः अभिऽज्ञु प्र वृंजते नमसा बर्हिः अग्नौ आऽजुह्वानाः घृतऽपृष्ठं पृषत्ऽवत् अध्वर्यवः हविषा मर्जयध्वं ॥ ४ ॥ सुऽआध्यः वि दुरः देवऽयंतः अशिश्रयुः रथऽयुः देवऽताता पूर्वी इति शिशुं न मातरा रिहाणे इति सं अग्रुवः न समनेषु अंजन् ॥ ५ ॥ १ ॥ उत योषणे इति दिव्ये इति मही इति नः उषसानक्ता सुदुघाऽइव धेनुः बर्हिऽसदा पुरुऽहूते इति मघोनी इति आ यज्ञिये इति सुविताय श्रयेतां ॥ ६ ॥ विप्रा यज्ञेषु मानुषेषु कारू इति मन्ये वां जातऽवेदसा यजध्यै ऊर्ध्वं नः अध्वरं कृतं हवेषु ता देवेषु वनथः वार्याणि ॥ ७ ॥ आ भारती भारतीभिः सऽजोषाः इळा देवैः मनुष्येभिः अग्निः सरस्वती सारस्वतेभिः अर्वाक् तिस्रः देवीः बर्हिः आ इदं सदंतु ॥ ८ ॥ तत् नः तुरीपं अध पोषयित्नु देवं त्वष्टः वि रराणः स्यस्वेति स्यस्व यतः वीरः कर्मण्यः सुऽदक्षः युक्तऽग्रावा जायते देवऽकामः ॥ ९ ॥ वनस्पते अवं सृज उपं देवान् अग्निः हविः शमिता सूदयाति सः इत् ऊं इति होता सत्यऽतरः यजाति यथा देवानां जनिमानि वेदं ॥ १० ॥ आ याहि अग्ने सम्ऽइधानः अर्वाङ् इंद्रेण देवैः सऽरथं तुरेभिः बर्हिः नः आस्तां अदितिः सुऽपुत्रा स्वाहा देवाः अमृताः मादयंतां ॥ ११ ॥ २ ॥

---

॥ ३ ॥ अग्निं वः देवं अग्निऽभिः सऽजोषाः यजिष्ठं दूतं अध्वरे



Digitized by Google

कृणुध्वं। यो मर्त्येषु निध्रुविर्ऋतावा तपुर्मूर्धा घृतान्नः पा-
वकः ॥ १ ॥ प्रोथदश्वो न यवसेऽविष्यन्यदा महः संवरणाद्व्य-
स्थात्। आदस्य वातो अनु वाति शोचिरध स्म ते व्रजनं
कृष्णमस्ति ॥ २ ॥ उद्यस्य ते नवजातस्य वृष्णोऽग्ने चरंत्यजरा
इधानाः। अच्छा द्यामरुषो धूम एति सं दूतो अग्न ईयसे हि
देवान् ॥ ३ ॥ वि यस्य ते पृथिव्यां पाजो अश्रेत्तृषु यदन्ना सम-
वृक्त जंभैः। सेनेव सृष्टा प्रसितिष्ट एति यवं न दस्म जुह्वा वि-
वेक्षि ॥ ४ ॥ तमिद्दोषा तमुषसि यविष्ठमग्निमत्यं न मर्जयंत
नरः। निशिशाना अतिथिमस्य योनौ दीदाय शोचिराहुतस्य
वृष्णः ॥ ५ ॥ ३ ॥ सुसंदृक्ते स्वनीक प्रतीकं वि यद्रुक्मो न रोचस
उपाके। दिवो न ते तन्यतुरेति शुष्मश्चित्रो न सूरः प्रति चक्षि
भानुं ॥ ६ ॥ यथा वः स्वाहाग्नये दाशेम परीळाभिर्घृतवद्भिश्च
हव्यैः। तेभिर्नो अग्ने अमितैर्महोभिः शतं पूर्भिरायसीभिर्नि
पाहि ॥ ७ ॥ या वा ते संति दाशुषे अधृष्टा गिरो वा या-
भिर्नृवतीरुरुष्याः। ताभिर्नः सूनो सहसो नि पाहि स्मत्सू-
रीञ्जरितॄञ्जातवेदः ॥ ८ ॥ निर्यत्पूतेव स्वधितिः शुचिर्गात्स्व-
या कृपा तन्वा३ रोचमानः। आ यो मात्रोरुशेन्यो जनिष्ट
देवयज्याय सुक्रतुः पावकः ॥ ९ ॥ एता नो अग्ने सौभगा
दिदीह्यपि क्रतुं सुचेतसं वतेम। विश्वा स्तोतृभ्यो गृणते च
संतु यूयं पात स्वस्तिभिः सदा नः ॥ १० ॥ ४ ॥

---

॥ ४ ॥ १—१० वसिष्ठः ॥ अग्निः ॥ त्रिष्टुप् ॥

॥ ४ ॥ प्र वः शुक्राय भानवे भरध्वं हव्यं मतिं चाग्नये सुपूतं।
यो दैव्यानि मानुषा जनूंष्यंतर्विश्वानि विद्मना जिगाति ॥ १ ॥ स



Digitized by Google

कृणुध्वं यः मर्त्येषु निऽध्रुविः ऋतऽवा तपुःऽमूर्धा घृतऽअन्नः पावकः ॥ १ ॥ प्रोथत् अश्वः न यवसे अविष्यन् यदा महः संऽवरणात् वि अस्थात् आत् अस्य वातः अनु वाति शोचिः अध स्म ते व्रजनं कृष्णं अस्ति ॥ २ ॥ उत् यस्य ते नवऽजातस्य वृष्णः अग्ने चरंति अजराः इधानाः अच्छ द्यां अरुषः धूमः एति सं दूतः अग्ने ईयसे हि देवान् ॥ ३ ॥ वि यस्य ते पृथिव्यां पाजः अश्रेत् तृषु यत् अन्ना संऽअवृक्त जंभैः सेनाऽइव सृष्टा प्रऽसितिः ते एति यवं न दस्म जुह्वा विवेक्षि ॥ ४ ॥ तं इत् दोषा तं उषसि यविष्ठं अग्निं अत्यं न मर्जयंत नरः निऽशिशानाः अतिथिं अस्य योनौ दीदाय शोचिः आऽहुतस्य वृष्णः ॥ ५ ॥ ३ ॥ सुऽसंदृक् ते सुऽअनीक प्रतीकं वि यत् रुक्मः न रोचसे उपाके दिवः न ते तन्यतुः एति शुष्मः चित्रः न सूरः प्रति चक्षि भानुं ॥ ६ ॥ यथा वः स्वाहा अग्नये दाशेम परि इळाभिः घृतवत्ऽभिः च हव्यैः तेभिः नः अग्ने अमितैः महःऽभिः शतं पूःऽभिः आयसीभिः नि पाहि ॥ ७ ॥ याः वा ते संति दाशुषे अधृष्टाः गिरः वा याभिः नृऽवतीः उरुष्याः ताभिः नः सूनो सहसः नि पाहि स्मत् सूरीन् जरितॄन् जातऽवेदः ॥ ८ ॥ निः यत् पूताऽइव स्वऽधितिः शुचिः गात् स्वया कृपा तन्वा रोचमानः आ यः मात्रोः उशेन्यः जनिष्ट देवऽयज्याय सुऽक्रतुः पावकः ॥ ९ ॥ एता नः अग्ने सौभगा दिदीहि अपि क्रतुं सुऽचेतसं वतेम विश्वा स्तोतृऽभ्यः गृणते च संतु यूयं पात स्वस्तिऽभिः सदा नः ॥ १० ॥ ४ ॥

---

॥ ४ ॥ प्र वः शुक्राय भानवे भरध्वं हव्यं मतिं च अग्नये सुऽपूतं यः दैव्यानि मानुषा जनूंषि अंतः विश्वानि विद्मना जिगाति ॥ १ ॥ सः



Digitized by Google

गृत्सो अग्निस्तरुणश्चिदस्तु यतो यविष्ठो अजनिष्ट मातुः। सं यो वना युवते शुचिदन्भूरि चिदन्ना समिदत्ति सद्यः ॥२॥ अस्य देवस्य संसद्यनीके यं मर्तासः श्येतं जगृभ्रे। नि यो गृभं पौरुषेयीमुवोच दुरोकमग्निरायवे शुशोच ॥३॥ अयं कविरकविषु प्रचेता मर्तेष्वग्निरमृतो नि धायि। स मा नो अत्र जुहुरः सहस्वः सदा त्वे सुमनसः स्याम ॥४॥ आ यो योनिं देवकृतं ससाद क्रत्वा ह्यग्निरमृताँ अतारीत्। तमोषधीश्च वनिनश्च गर्भं भूमिश्च विश्वधायसं बिभर्ति ॥५॥५॥ ईशे ह्यग्निरमृतस्य भूरेरीशे रायः सुवीर्यस्य दातोः। मा त्वा वयं सहसावन्नवीरा माप्सवः परि षदाम मादुवः ॥६॥ परिषद्यं ह्यरणस्य रेक्णो नित्यस्य रायः पतयः स्याम। न शेषो अग्ने अन्यजातमस्त्यचेतानस्य मा पथो वि दुक्षः ॥७॥ नहि ग्रभायारणः सुशेवोऽन्योदर्यो मनसा मंतवा उ। अधा चिदोकः पुनरित्स एत्या नो वाज्यभीषाळेतु नव्यः ॥८॥ त्वमग्ने वनुष्यतो नि पाहि त्वमु नः सहसावन्नवद्यात्। सं त्वा ध्वस्मन्वदभ्येतु पाथः सं रयिः स्पृहयाय्यः सहस्री ॥९॥ एता नो अग्ने सौभगा दिदीह्यपि क्रतुं सुचेतसं वतेम। विश्वा स्तोतृभ्यो गृणते च संतु यूयं पात स्वस्तिभिः सदा नः ॥१०॥६॥

---

॥५॥ १–९ वसिष्ठः ॥ वैश्वानरः ॥ त्रिष्टुप् ॥

॥५॥ प्राग्नये तवसे भरध्वं गिरं दिवो अरतये पृथिव्याः। यो विश्वेषाममृतानामुपस्थे वैश्वानरो वावृधे जागृवद्भिः ॥१॥ पृष्टो दिवि धाय्यग्निः पृथिव्यां नेता सिंधूनां वृषभः स्तियानां। स मानुषीरभि विशो वि भाति वैश्वानरो वावृधानो वरेण ॥२॥



Digitized by Google

गृणानः अग्निः तरुणः चित् अस्तु यतः यविष्ठः अजनिष्ट मातुः सं
यः वना युवते शुचिऽदन् भूरि चित् अन्ना सं इत् अत्ति सद्यः ॥२॥
अस्य देवस्य संऽसदि अनीके यं मर्तासः श्येतं जगृभ्रे नि यः गृभं
पौरुषेयीं उवोच दुःऽओकं अग्निः आयवे शुशोच ॥३॥ अयं क-
विः अकविषु प्रऽचेताः मर्तेषु अग्निः अमृतः नि धायि सः मा नः
अत्र जुहुरः सहस्वः सदा त्वे सुऽमनसः स्याम ॥४॥ आ यः योनिं
देवऽकृतं ससाद क्रत्वा हि अग्निः अमृतान् अतारीत् तं ओषधीः
च वनिनः च गर्भं भूमिः च विश्वऽधायसं बिभर्ति ॥५॥५॥ ईशे हि
अग्निः अमृतस्य भूरेः ईशे रायः सुऽवीर्यस्य दातोः मा त्वा वयं स-
हसाऽवन् अवीराः मा अप्सवः परि सदाम मा अदुवः ॥६॥ प-
रिऽसद्यं हि अरणस्य रेक्णः नित्यस्य रायः पतयः स्याम न शेषः
अग्ने अन्यऽजातं अस्ति अचेतानस्य मा पथः वि दुक्षः ॥७॥ नहि
ग्रभाय अरणः सुऽशेवः अन्यऽउदर्यः मनसा मंतवै ऊं अध चित्
ओकः पुनः इत् सः एति आ नः वाजी अभीषाट् एतु नव्यः ॥८॥
त्वं अग्ने वनुष्यतः नि पाहि त्वं ऊं नः सहसाऽवन् अवद्यात् सं
त्वा ध्वस्मन्ऽवत् अभि एतु पाथः सं रयिः स्पृहयाय्यः सहस्री
॥९॥ एता नः अग्ने सौभगा दिदीहि अपि क्रतुं सुऽचेतसं वतेम
विश्वा स्तोतृऽभ्यः गृणते च संतु यूयं पात स्वस्तिऽभिः सदा नः
॥१०॥६॥

---

॥५॥ प्र अग्नये तवसे भरध्वं गिरं दिवः अरतये पृथिव्याः यः
विश्वेषां अमृतानां उपऽस्थे वैश्वानरः ववृधे जागृवत्ऽभिः ॥१॥
पृष्टः दिवि धायि अग्निः पृथिव्यां नेता सिंधूनां वृषभः स्तियानां
सः मानुषीः अभि विशः वि भाति वैश्वानरः ववृधानः वरेण ॥२॥



Digitized by Google

त्वन्नि॒या विश॒ आय॒न्नसि॑क्नीरसम॒ना जह॑तीर्भो॑ज॑नानि। वैश्वा॑न॒र पू॒रवे॒ शोशु॑चानः पुरो॒ यद॑ग्ने द॒रय॒न्नदी॑देः॥३॥ तव॑ त्रि॒धातु॑ पृथि॒वी उ॒त द्यौर्वै॑श्वानर व्र॒तम॑ग्ने सचंत। त्वं भा॒सा रोद॑सी॒ आ त॑तं॒थाज॑स्रेण शो॒चिषा॒ शोशु॑चानः॥४॥ त्वाम॑ग्ने ह॒रितो॑ वाव॒शा॒ना गिरः॑ सचंते॒ धुन॑यो घृ॒ताचीः॑। पतिं॑ कृष्टी॒नां र॒थ्यं॑ रयी॒णां वैश्वान॒रमु॒षसां॑ के॒तुमह्नां॑॥५॥७॥ त्वे अ॑सु॒र्यं१॒॑ वस॑वो॒ न्यृ॑ण्वन्क्रतुं॑ हि ते॑ मित्रमहो जु॒षंत॑। त्वं दस्यूँ॒रोक॑सो अग्न आज उ॒रु ज्योति॑र्ज॒नय॒न्नार्या॑य॥६॥ स जाय॑मानः पर॒मे व्यो॑मन्वा॒युर्न पाथः॒ परि॑ पासि स॒द्यः। त्वं भुव॑ना ज॒नय॑न्न॒भि क्र॒न्नप॑त्याय जातवेदो दश॒स्यन्॥७॥ ताम॑ग्ने अ॒स्मे इष॒मेर॑यस्व॒ वैश्वा॑नर द्यु॒मतीं॑ जातवेदः। यया॒ राधः॒ पिन्व॑सि विश्ववार पृ॒थु श्रवो॑ दा॒शुषे॒ मर्त्या॑य॥८॥ तं नो॑ अग्ने म॒घव॑द्भ्यः पुरु॒क्षुं र॒यिं नि वाजं॒ श्रुत्यं॑ युवस्व। वैश्वा॑नर॒ महि॑ नः॒ शर्म॑ यच्छ रु॒द्रेभि॑रग्ने॒ वसु॑भिः स॒जोषाः॑॥९॥८॥

---

॥ ६ ॥ १–७ वसिष्ठः ॥ वैश्वानरः ॥ त्रिष्टुप् ॥

॥६॥ प्र स॒म्राजो॒ असु॑रस्य॒ प्रश॑स्तिं पुं॒सः कृ॑ष्टी॒नाम॑नु॒मा॒द्य॑स्य। इंद्र॑स्येव॒ प्र त॒वस॑स्कृ॒तानि॒ वंदे॑ दा॒रुं वंद॑मानो विवक्मि॥१॥ क॒विं के॒तुं धा॒सिं भा॒नुमद्रे॑र्हि॒न्वंति॒ शं रा॒ज्यं रोद॑स्योः। पु॒रं॒द॒रस्य॑ गी॒र्भिरा॒ वि॑वासे॒ऽग्नेर्व्र॒तानि॑ पू॒र्व्या म॒हानि॑॥२॥ न्य॑क्र॒तून्ग्र॒थिनो॑ मृ॒ध्रवा॑चः प॒णीँर॑श्र॒द्धाँ अ॑वृ॒धाँ अ॑य॒ज्ञान्। प्रप्र॒ तान्दस्यूँ॑र॒ग्निर्वि॑वाय॒ पूर्व॑श्चका॒राप॑राँ॒ अय॑ज्यून्॥३॥ यो अ॑पा॒चीने॒ तम॑सि॒ मदं॑तीः॒ प्राची॑श्च॒कार॒ नृत॑मः॒ शची॑भिः। तमीशा॑नं॒ वस्वो॑ अ॒ग्निं गृ॑णी॒षेऽना॑नतं द॒मयं॑तं पृत॒न्यून्॥४॥ यो दे॒ह्यो॒३॒॑ अन॑मयद्वध॒स्नैर्यो अ॒र्यप॑त्नीरु॒षस॑-



Digitized by Google

त्वत् भिया विशः आयन् असिक्नीः असमनाः जहतीः भोजनानि वैश्वानर पूरवे शोशुचानः पुरः यत् अग्ने दरयन् अदीदेः॥३॥ तव त्रिऽधातु पृथिवी उत द्यौः वैश्वानर व्रतं अग्ने सचंत त्वं भासा रोदसी आ ततंथ अजस्रेण शोचिषा शोशुचानः॥४॥ त्वां अग्ने हरितः वावशानाः गिरः सचंते धुनयः घृताचीः पतिं कृष्टीनां रथ्यं रयीणां वैश्वानरं उषसां केतुं अह्नां॥५॥७॥ त्वे असुर्यं वसवः नि ऋण्वन् क्रतुं हि ते मित्रऽमहः जुषंत त्वं दस्यून् ओकसः अग्ने आजः उरु ज्योतिः जनयन् आर्याय॥६॥ सः जायमानः परमे विऽओमन् वायुः न पाथः परि पासि सद्यः त्वं भुवना जनयन् अभि क्रन् अपत्याय जातऽवेदः दशस्यन्॥७॥ तां अग्ने अस्मे इषं आ ईरयस्व वैश्वानर द्युऽमतीं जातऽवेदः यया राधः पिन्वसि विश्वऽवार पृथु श्रवः दाशुषे मर्त्याय॥८॥ तं नः अग्ने मघवत्ऽभ्यः पुरुऽक्षुं रयिं नि वाजं श्रुत्यं युवस्व वैश्वानर महि नः शर्म यच्छ रुद्रेभिः अग्ने वसुऽभिः सऽजोषाः॥९॥८॥

---

॥६॥ प्र संऽराजः असुरस्य प्रऽशस्तिं पुंसः कृष्टीनां अनुऽमाद्यस्य इंद्रस्यऽइव प्र तवसः कृतानि वंदे दारुं वंदमानः विवक्मि॥१॥ कविं केतुं धासिं भानुं अद्रेः हिन्वंति शं राज्यं रोदस्योः पुरंऽदरस्य गीःऽभिः आ विवासे अग्नेः व्रतानि पूर्व्या महानि॥२॥ नि अक्रतून् ग्रथिनः मृध्रऽवाचः पणीन् अश्रद्धान् अवृधान् अयज्ञान् प्रऽप्र तान् दस्यून् अग्निः विवाय पूर्वः चकार अपरान् अयज्यून्॥३॥ यः अपाचीने तमसि मदंतीः प्राचीः चकार नृऽतमः शचीभिः तं ईशानं वस्वः अग्निं गृणीषे अनानतं दमयंतं पृतन्यून्॥४॥ यः देह्यः अनमयत् वधऽस्नैः यः अर्यऽपत्नीः उषसः



Digitized by Google

चकार। स निरुध्या नहुषो यह्वो अग्निर्विशश्चक्रे बलिहृतः सहोभिः॥५॥ यस्य शर्मन्नुप विश्वे जनास एवैस्तस्थुः सुमतिं भिक्षमाणाः। वैश्वानरो वरमा रोदस्योराग्निः ससाद पित्रोरुपस्थं ॥६॥ आ देवो ददे बुध्न्या३ वसूनि वैश्वानर उदिता सूर्यस्य। आ समुद्रादवरादा परस्मादाग्निर्ददे दिव आ पृथिव्याः॥७॥९॥

---

॥ ७ ॥ १—७ वसिष्ठः ॥ अग्निः ॥ त्रिष्टुप् ॥

॥७॥ प्र वो देवं चित्सहसानमग्निमश्वं न वाजिनं हिषे नमोभिः। भवा नो दूतो अध्वरस्य विद्वान्त्मना देवेषु विविदे मितद्रुः॥१॥ आ याह्यग्ने पथ्या३ अनु स्वा मंद्रो देवानां सख्यं जुषाणः। आ सानु शुष्मैर्नदयन्पृथिव्या जंभेभिर्विश्वमुशधग्वनानि ॥२॥ प्राचीनो यज्ञः सुधितं हि बर्हिः प्रीणीते अग्निरीळितो न होता। आ मातरा विश्ववारे हुवानो यतो यविष्ठ जज्ञिषे सुशेवः॥३॥ सद्यो अध्वरे रथिरं जनंत मानुषासो विचेतसो य एषां। विशामधायि विश्पतिर्दुरोणे३ग्निर्मंद्रो मधुवचा ऋतावा॥४॥ असादि वृतो वह्निराजगन्वानग्निर्ब्रह्मा नृषदने विधर्ता। द्यौश्च यं पृथिवी वावृधाते आ यं होता यजति विश्ववारं ॥५॥ एते द्युम्नेभिर्विश्वमातिरंत मंत्रं ये वारं नर्या अतक्षन्। प्र ये विशस्तिरंत श्रोषमाणा आ ये मे अस्य दीधयन्नृतस्य॥६॥ नू त्वामग्न ईमहे वसिष्ठा ईशानं सूनो सहसो वसूनां। इषं स्तोतृभ्यो मघवद्भ्य आनड्यूयं पात स्वस्तिभिः सदा नः॥७॥१०॥

---

॥ ८ ॥ १—७ वसिष्ठः ॥ अग्निः ॥ त्रिष्टुप् ॥

॥८॥ इंधे राजा समर्यो नमोभिर्यस्य प्रतीकमाहुतं घृतेन।



Digitized by Google

चकार सः निऽरुध्य नहुषः यह्वः अग्निः विशः चक्रे बलिऽहृतः सहःऽभिः ॥५॥ यस्य शर्मन् उप विश्वे जनासः एवैः तस्थुः सुऽमतिं भिक्षमाणाः वैश्वानरः वरं आ रोदस्योः आ अग्निः ससाद पित्रोः उपऽस्थं ॥६॥ आ देवः ददे बुध्न्या वसूनि वैश्वानरः उत्ऽइता सूर्यस्य आ समुद्रात् अवरात् आ परस्मात् आ अग्निः ददे दिवः आ पृथिव्याः ॥७॥९॥

---

॥७॥ प्र वः देवं चित् सहसानं अग्निं अश्वं न वाजिनं हिषे नमःऽभिः भव नः दूतः अध्वरस्य विद्वान् त्मना देवेषु विविदे मितऽद्रुः ॥१॥ आ याहि अग्ने पथ्याः अनु स्वाः मंद्रः देवानां सख्यं जुषाणः आ सानु शुष्मैः नदयन् पृथिव्याः जंभेभिः विश्वं उशधक् वनानि ॥२॥ प्राचीनः यज्ञः सुऽधितं हि बर्हिः प्रीणीते अग्निः ईळितः न होता आ मातरा विश्वऽवारे॰ हुवानः यतः यविष्ठ जज्ञिषे सुऽशेवः ॥३॥ सद्यः अध्वरे रथिरं जनंत मानुषासः विऽचेतसः यः एषां विशां अधायि विश्पतिः दुरोणे अग्निः मंद्रः मधुऽवचाः ऋतऽवा ॥४॥ असादि वृतः वह्निः आऽजगन्वान् अग्निः ब्रह्मा नृऽसदने विऽधर्ता द्यौः च यं पृथिवी ववृधाते आ यं होता यजति विश्वऽवारं ॥५॥ एते द्युम्नेभिः विश्वं आ अतिरंत मंत्रं ये वा अरं नर्याः अतक्षन् प्र ये विशः तिरंत श्रोषमाणाः आ ये मे अस्य दीधयन् ऋतस्य ॥६॥ नु त्वां अग्ने ईमहे वसिष्ठाः ईशानं सूनो सहसः वसूनां इषं स्तोतृऽभ्यः मघवत्ऽभ्यः आनट् यूयं पात स्वस्तिऽभिः सदा नः ॥७॥१०॥

---

॥८॥ इंधे राजा सं अर्यः नमःऽभिः यस्य प्रतीकं आऽहुतं घृतेन



Digitized by Google

नरो हव्येभिरीळते सबाध आग्निरग्र उषसामशोचि ॥१॥ अयमु ष्य सुमहाँ अवेदि होता मंद्रो मनुषो यह्वो अग्निः। वि भा अकः ससृजानः पृथिव्यां कृष्णपविरोषधीभिर्ववक्षे ॥२॥ कया नो अग्ने वि वसः सुवृक्तिं कामु स्वधामृणवः शस्यमानः। कदा भवेम पतयः सुदत्र रायो वंतारो दुष्टरस्य साधोः ॥३॥ प्रप्रायमग्निर्भरतस्य शृण्वे वि यत्सूर्यो न रोचते बृहद्भाः। अभि यः पूरुं पृतनासु तस्थौ द्युतानो दैव्यो अतिथिः शुशोच ॥४॥ असन्नित्त्वे आहवनानि भूरि भुवो विश्वेभिः सुमना अनीकैः। स्तुतश्चिदग्ने शृण्विषे गृणानः स्वयं वर्धस्व तन्वं सुजात ॥५॥ इदं वचः शतसाः संसहस्रमुदग्नये जनिषीष्ट द्विबर्हाः। शं यत्स्तोतृभ्य आपये भवाति द्युमदमीवचातनं रक्षोहा ॥६॥ नू त्वामग्न ईमहे वसिष्ठा ईशानं सूनो सहसो वसूनां। इषं स्तोतृभ्यो मघवद्भ्य आनड्यूयं पात स्वस्तिभिः सदा नः ॥७॥११॥

---

॥ ९ ॥ १—६ वसिष्ठः ॥ अग्निः ॥ त्रिष्टुप् ॥

॥९॥ अबोधि जार उषसामुपस्थाद्धोता मंद्रः कवितमः पावकः। दधाति केतुमुभयस्य जंतोर्हव्या देवेषु द्रविणं सुकृत्सु ॥१॥ स सुक्रतुर्यो वि दुरः पणीनां पुनानो अर्कं पुरुभोजसं नः। होता मंद्रो विशां दमूनास्तिरस्तमो ददृशे राम्याणां ॥२॥ अमूरः कविरदितिर्विवस्वान्सुसंसन्मित्रो अतिथिः शिवो नः। चित्रभानुरुषसां भात्यग्रेऽपां गर्भः प्रस्व१आ विवेश ॥३॥ ईळेन्यो वो मनुषो युगेषु समनगा अशुचज्जातवेदाः। सुसंदृशा भानुना यो विभाति प्रति गावः समिधानं बुधंत ॥४॥ अग्ने याहि दूत्यं१मा रिषण्यो देवाँ अच्छा ब्रह्मकृता



Digitized by Google

नरः हव्येभिः ईळते सऽबाधः आ अग्निः अग्रे उषसां अशोचि ॥१॥ अयं ऊं स्यः सुऽमहान् अवेदि होता मंद्रः मनुषः यह्वः अग्निः वि भाः अकः॰ ससृजानः पृथिव्यां कृष्णऽपविः ओषधीभिः ववक्षे ॥२॥ कया नः अग्ने वि वसः सुऽवृक्तिं कां ऊं स्वधां ऋणवः शस्यमानः कदा भवेम पतयः सुऽदत्र रायः वंतारः दुस्तरस्य साधोः ॥३॥ प्रऽप्र अयं अग्निः भरतस्य शृण्वे वि यत् सूर्यः न रोचते बृहत् भाः अभि यः पूरुं पृतनासु तस्थौ द्युतानः दैव्यः अतिथिः शुशोच ॥४॥ असन् इत् त्वे आऽहवनानि भूरि भुवः विश्वेभिः सुऽमनाः अनीकैः स्तुतः चित् अग्ने शृण्विषे गृणानः स्वयं वर्धस्व तन्वं सुऽजात ॥५॥ इदं वचः शतऽसाः संऽसहस्रं उत् अग्नये जनिषीष्ट द्विऽबर्हाः शं यत् स्तोतृऽभ्यः आपये भवाति द्युऽमत् अमीवऽचातनं रक्षःऽहा ॥६॥ नु त्वां अग्ने ईमहे वसिष्ठाः ईशानं सूनो सहसः वसूनां इषं स्तोतृऽभ्यः मघवत्ऽभ्यः आनट् यूयं पात स्वस्तिऽभिः सदा नः ॥७॥११॥

---

॥९॥ अबोधि जारः उषसां उपऽस्थात् होता मंद्रः कविऽतमः पावकः दधाति केतुं उभयस्य जंतोः हव्या देवेषु द्रविणं सुकृत्ऽसु ॥१॥ सः सुऽक्रतुः यः वि दुरः पणीनां पुनानः अर्कं पुरुऽभोजसं नः होता मंद्रः विशां दमूनाः तिरः तमः ददृशे राम्याणां ॥२॥ अमूरः कविः अदितिः विवस्वान् सुऽसंसत् मित्रः अतिथिः शिवः नः चित्रऽभानुः उषसां भाति अग्रे अपां गर्भः प्रऽस्वः आ विवेश ॥३॥ ईळेन्यः वः मनुषः युगेषु समनऽगाः अशुचत् जातऽवेदाः सुऽसंदृशा भानुना यः विऽभाति प्रति गावः संऽइधानं बुधंत ॥४॥ अग्ने याहि दूत्यं मा रिषण्यः देवान् अच्छ ब्रह्मऽकृता



Digitized by Google

गणेन। सरस्वतीं मरुतो अश्विनापो यक्षि देवान्रत्नधेयाय विश्वान् ॥५॥ त्वामग्ने समिधानो वसिष्ठो जरूथं हन्यक्षि राये पुरंधिं। पुरुणीथा जातवेदो जरस्व यूयं पात स्वस्तिभिः सदा नः ॥६॥१२॥

॥१०॥ १–५ वसिष्ठः ॥ अग्निः ॥ त्रिष्टुप् ॥

॥१०॥ उषो न जारः पृथु पाजो अश्रेद्दविद्युतद्दीद्यच्छोशुचानः। वृषा हरिः शुचिरा भाति भासा धियो हिन्वान उशतीरजीगः ॥१॥ स्वर्ण वस्तोरुषसामरोचि यज्ञं तन्वाना उशिजो न मन्म। अग्निर्जन्मानि देव आ वि विद्वान्द्रवद्दूतो देवयावा वनिष्ठः ॥२॥ अच्छा गिरो मतयो देवयंतीरग्निं यंति द्रविणं भिक्षमाणाः। सुसंदृशं सुप्रतीकं स्वंचं हव्यवाहमरतिं मानुषाणां ॥३॥ इंद्रं नो अग्ने वसुभिः सजोषा रुद्रं रुद्रेभिरा वहा बृहंतं। आदित्येभिरदितिं विश्वजन्यां बृहस्पतिमृक्वभिर्विश्ववारं ॥४॥ मंद्रं होतारमुशिजो यविष्ठमग्निं विश ईळते अध्वरेषु। स हि क्षपावाँ अभवद्रयीणामतंद्रो दूतो यजथाय देवान् ॥५॥१३॥

॥११॥ १–५ वसिष्ठः ॥ अग्निः ॥ त्रिष्टुप् ॥

॥११॥ महाँ अस्यध्वरस्य प्रकेतो न ऋते त्वदमृता मादयंते। आ विश्वेभिः सरथं याहि देवैर्न्यग्ने होता प्रथमः सदेह ॥१॥ त्वामीळते अजिरं दूत्याय हविष्मंतः सदमिन्मानुषासः। यस्य देवैरासदो बर्हिरग्नेऽहान्यस्मै सुदिना भवंति ॥२॥ त्रिश्चिदक्तोः प्र चिकितुर्वसूनि त्वे अंतर्दाशुषे मर्त्याय। मनुष्वदग्न इह यक्षि देवान्भवा नो दूतो अभिशस्तिपावा ॥३॥ अग्निरीशे बृहतो अध्वरस्याग्निर्विश्वस्य हविषः



Digitized by Google

गणेन सरस्वतीं मरुतः अश्विना अपः यक्षि देवान् रत्नऽधेयाय विश्वान् ॥५॥ त्वां अग्ने संऽइधानः वसिष्ठः अरूथं हन् यक्षि राये पुरंऽधिं पुरुऽनीथा जातऽवेदः जरस्व यूयं पात स्वस्तिऽभिः सदा नः ॥६॥१२॥

---

॥१०॥ उषः न जारः पृथु पाजः अश्रेत् दविद्युतत् दीद्यत् शोशुचानः वृषा हरिः शुचिः आ भाति भासा धियः हिन्वानः उशतीः अजीगः ॥१॥ स्वः न वस्तोः उषसां अरोचि यज्ञं तन्वानाः उशिजः न मन्म अग्निः जन्मानि देवः आ वि विद्वान् द्रवत् दूतः देवऽयावा वनिष्ठः ॥२॥ अच्छ गिरः मतयः देवऽयंतीः अग्निं यंति द्रविणं भिक्षमाणाः सुऽसंदृशं सुऽप्रतीकं सुऽअंचं हव्यऽवाहं अरतिं मानुषाणां ॥३॥ इंद्रं नः अग्ने वसुऽभिः सऽजोषाः रुद्रं रुद्रेभिः आ वह बृहंतं आदित्येभिः अदितिं विश्वऽजन्यां बृहस्पतिं ऋक्वऽभिः विश्वऽवारं ॥४॥ मंद्रं होतारं उशिजः यविष्ठं अग्निं विशः ईळते अध्वरेषु सः हि क्षपाऽवान् अभवत् रयीणां अतंद्रः दूतः यजथाय देवान् ॥५॥१३॥

---

॥११॥ महान् असि अध्वरस्य प्रऽकेतः न ऋते त्वत् अमृताः मादयंते आ विश्वेभिः सऽरथं याहि देवैः नि अग्ने होता प्रथमः सद् इह ॥१॥ त्वां ईळते अजिरं दूत्याय हविष्मंतः सदं इत् मानुषासः यस्य देवैः आ असदः बर्हिः अग्ने अहानि अस्मै सुऽदिना भवंति ॥२॥ त्रिः चित् अक्तोः प्र चिकितुः वसूनि त्वे अंतः दाशुषे मर्त्याय मनुष्वत् अग्ने इह यक्षि देवान् भव नः दूतः अभिशस्तिऽपावा ॥३॥ अग्निः ईशे बृहतः अध्वरस्य अग्निः विश्वस्य हविषः



Digitized by Google

मृतस्य। क्रतुं ह्यस्य वसवो जुषंताथा देवा दधिरे हव्यवाहं ॥४॥
आग्ने वह हविरद्याय देवानिंद्रज्येष्ठास इह मादयंतां। इमं यज्ञं
दिवि देवेषु धेहि यूयं पात स्वस्तिभिः सदा नः ॥५॥१४॥

---

॥ १२ ॥ १–३ वसिष्ठः ॥ अग्निः ॥ त्रिष्टुप् ॥

॥१२॥ अगन्म महा नमसा यविष्ठं यो दीदाय समिद्धः स्वे
दुरोणे। चित्रभानुं रोदसी अंतरुर्वी स्वाहुतं विश्वतः प्रत्यंचं ॥१॥
स मह्ना विश्वा दुरितानि साह्वानग्निः ष्टवे दम आ जातवेदाः।
स नो रक्षिषद्दुरितादवद्यादस्मान्गृणत उत नो मघोनः ॥२॥ त्वं
वरुण उत मित्रो अग्ने त्वां वर्धंति मतिभिर्वसिष्ठाः। त्वे वसु सुष-
णनानि संतु यूयं पात स्वस्तिभिः सदा नः ॥३॥१५॥

---

॥ १३ ॥ १–३ वसिष्ठः ॥ वैश्वानरः ॥ त्रिष्टुप् ॥

॥१३॥ प्राग्नये विश्वशुचे धियंधेऽसुरघ्ने मन्म धीतिं भरध्वं।
भरे हविर्न बर्हिषि प्रीणानो वैश्वानराय यतये मतीनां ॥१॥
त्वमग्ने शोचिषा शोशुचान आ रोदसी अपृणा जायमानः। त्वं
देवाँ अभिशस्तेरमुंचो वैश्वानर जातवेदो महित्वा ॥२॥ जातो
यदग्ने भुवना व्यख्यः पशून्न गोपा इर्यः परिज्मा। वैश्वानर
ब्रह्मणे विंद गातुं यूयं पात स्वस्तिभिः सदा नः ॥३॥१६॥

---

॥ १४ ॥ १–३ वसिष्ठः ॥ अग्निः ॥ १ बृहती । २. ३ त्रिष्टुप् ॥

॥१४॥ समिधा जातवेदसे देवाय देवहूतिभिः। हविर्भिः
शुक्रशोचिषे नमस्विनो वयं दाशेमाग्नये ॥१॥ वयं ते अग्ने
समिधा विधेम वयं दाशेम सुष्टुती यजत्र। वयं घृतेनाध्वरस्य



Digitized by Google

कृतस्य क्रतुं हि अस्य वसवः जुषंत अथ देवाः दधिरे हव्यऽवाहं ॥४॥ आ अग्ने वह हविःऽअद्याय देवान् इंद्रऽज्येष्ठासः इह मादयंतां इमं यज्ञं दिवि देवेषु धेहि यूयं पात स्वस्तिऽभिः सदा नः ॥५॥ १४॥

---

॥ १२ ॥ अगन्म महा नमसा यविष्ठं यः दीदाय संऽइद्धः स्वे दुरोणे चित्रऽभानुं रोदसी इति अंतः उर्वी इति सुऽआहुतं विश्वतः प्रत्यंचं ॥१॥ सः मह्ना विश्वा दुःऽइतानि सह्वान् अग्निः स्तवे दमे आ जातऽवेदाः सः नः रक्षिषत् दुःऽइतात् अवद्यात् अस्मान् गृणतः उत नः मघोनः ॥२॥ त्वं वरुणः उत मित्रः अग्ने त्वां वर्धंति मतिऽभिः वसिष्ठाः त्वे इति वसु सुऽसननानि संतु यूयं पात स्वस्तिऽभिः सदा नः ॥३॥ १५॥

---

॥ १३ ॥ प्र अग्नये विश्वऽशुचे धियंऽधे असुरऽघ्ने मन्म धीतिं भरध्वं भरे हविः न बर्हिषि प्रीणानः वैश्वानराय यतये मतीनां ॥१॥ त्वं अग्ने शोचिषा शोशुचानः आ रोदसी इति अपृणाः जायमानः त्वं देवान् अभिऽशस्तेः अमुंचः वैश्वानर जातऽवेदः महिऽत्वा ॥२॥ जातः यत् अग्ने भुवना वि अख्यः पशून् न गोपाः इर्यः परिऽज्मा वैश्वानर ब्रह्मणे विंद गातुं यूयं पात स्वस्तिऽभिः सदा नः ॥३॥ १६॥

---

॥ १४ ॥ संऽइधा जातऽवेदसे देवाय देवहूतिऽभिः हविःऽभिः शुक्रऽशोचिषे नमस्विनः वयं दाशेम अग्नये ॥१॥ वयं ते अग्ने संऽइधा विधेम वयं दाशेम सुऽस्तुती यजत्र वयं घृतेन अध्वरस्य

होतर्वयं देव हविषा भद्रशोचे ॥ २ ॥ आ नो देवेभिरुप देवहूति-
मग्ने याहि वषट्कृतिं जुषाणः । तुभ्यं देवाय दाशतः स्याम यूयं
पात स्वस्तिभिः सदा नः ॥ ३ ॥ १७ ॥

---

॥ १५ ॥ १–१५ वसिष्ठः ॥ अग्निः ॥ गायत्री ॥

॥ १५ ॥ उपसद्याय मीळ्हुषं आस्ये जुहुता हविः । यो नो ने-
दिष्ठमाप्यं ॥ १ ॥ यः पंच चर्षणीरभि निषसाद दमेदमे । कविर्गृह-
पतिर्युवा ॥ २ ॥ स नो वेदो अमात्यमग्नी रक्षतु विश्वतः । उता-
स्मान्पात्वंहसः ॥ ३ ॥ नवं नु स्तोममग्नये दिवः श्येनाय जीजनं ।
वस्वः कुविद्वनाति नः ॥ ४ ॥ स्पार्हा यस्य श्रियो दृशे रयिर्वीर-
वतो यथा । अग्रे यज्ञस्य शोचतः ॥ ५ ॥ १८ ॥ सेमां वेतु वषट्कृति-
मग्निर्जुषत नो गिरः । यजिष्ठो हव्यवाहनः ॥ ६ ॥ नि त्वा नक्ष्य
विश्पते द्युमंतं देव धीमहि । सुवीरमग्न आहुत ॥ ७ ॥ क्षप उस्रश्च
दीदिहि स्वग्नयस्त्वया वयं । सुवीरस्त्वमस्मयुः ॥ ८ ॥ उप त्वा सा-
तये नरो विप्रासो यंति धीतिभिः । उपाक्षरा सहस्रिणी ॥ ९ ॥
अग्नी रक्षांसि सेधति शुक्रशोचिरमर्त्यः । शुचिः पावक ईड्यः
॥ १० ॥ १९ ॥ स नो राधांस्या भरेशानः सहसो यहो । भगश्च
दातु वार्यं ॥ ११ ॥ त्वमग्ने वीरवद्यशो देवश्च सविता भगः । दि-
तिश्च दाति वार्यं ॥ १२ ॥ अग्ने रक्षा णो अंहसः प्रति ष्म देव
रीषतः । तपिष्ठैरजरो दह ॥ १३ ॥ अधा मही न आयस्यना-
धृष्टो नृपीतये । पूर्भवा शतभुजिः ॥ १४ ॥ त्वं नः पाह्यंहसो दो-
षावस्तरघायतः । दिवा नक्तमदाभ्य ॥ १५ ॥ २० ॥

---

॥ १६ ॥ १–१२ वसिष्ठः ॥ अग्निः ॥ प्रागाथं ॥

॥ १६ ॥ एना वो अग्निं नमसोर्जो नपातमा हुवे । प्रियं चे-



Digitized by Google

होतः वयं देव हविषा भद्रऽशोचे ॥२॥ आ नः देवेभिः उप देवऽहूतिं अग्ने याहि वषट्ऽकृतिं जुषाणः तुभ्यं देवाय दाशतः स्याम यूयं पात स्वस्तिऽभिः सदा नः ॥३॥१७॥

॥१५॥ उपऽसद्याय मीळ्हुषे आस्ये जुहुत हविः यः नः नेदिष्ठं आप्यं ॥१॥ यः पंच चर्षणीः अभि निऽससाद दमेऽदमे कविः गृहऽपतिः युवा ॥२॥ सः नः वेदः अमात्यं अग्निः रक्षतु विश्वतः उत अस्मान् पातु अंहसः ॥३॥ नवं नु स्तोमं अग्नये दिवः श्येनाय जीजनं वस्वः कुवित् वनाति नः ॥४॥ स्पार्हाः यस्य श्रियः दृशे रयिः वीरऽवतः यथा अग्रे यज्ञस्य शोचतः ॥५॥१८॥ सः इमां वेतु वषट्ऽकृतिं अग्निः जुषत नः गिरः यजिष्ठः हव्यऽवाहनः ॥६॥ नि त्वा नक्ष्य विश्पते द्युऽमंतं देव धीमहि सुऽवीरं अग्ने आऽहुत ॥७॥ क्षपः उस्रः च दीदिहि सुऽअग्नयः त्वया वयं सुऽवीरः त्वं अस्मऽयुः ॥८॥ उप त्वा सातये नरः विप्रासः यंति धीतिऽभिः उप अक्षरा सहस्रिणी ॥९॥ अग्निः रक्षांसि सेधति शुक्रऽशोचिः अमर्त्यः शुचिः पावकः ईड्यः ॥१०॥१९॥ सः नः राधांसि आ भर ईशानः सहसः यहो भगः च दातु वार्यं ॥११॥ त्वं अग्ने वीरऽवत् यशः देवः च सविता भगः दितिः च दाति वार्यं ॥१२॥ अग्ने रक्ष नः अंहसः प्रति स्म देव रिषतः तपिष्ठैः अजरः दह ॥१३॥ अध मही नः आयसी अनाधृष्टः नृऽपीतये पूः भव शतऽभुंजिः ॥१४॥ त्वं नः पाहि अंहसः दोषाऽवस्तः अघऽयतः दिवा नक्तं अदाभ्य ॥१५॥२०॥

॥१६॥ एना वः अग्निं नमसा ऊर्जः नपातं आ हुवे प्रियं चे-



Digitized by Google

तिष्ठमर॒तिं स्व॑ध्व॒रं विश्व॑स्य दू॒तम॒मृत॑म् ॥१॥ स योजते अरु॒षा वि॒-
श्वभो॑जसा॒ स दु॑द्रव॒त्स्वा॑हुतः । सु॒ब्रह्मा॑ य॒ज्ञः सु॒शमी॒ वसू॑नां दे॒वं
राधो॒ जना॑नां ॥२॥ उद॑स्य शो॒चिर॑स्थादा॒जुह्वा॑नस्य मी॒ळ्हुषः॑ ।
उद्धू॒मासो॑ अरु॒षासो॑ दिवि॒स्पृशः॑ सम॒ग्निमि॑न्धते॒ नरः॑ ॥३॥ तं त्वा॑
दू॒तं कृ॑ण्महे य॒शस्त॑मं दे॒वाँ आ वी॒तये॑ वह । विश्वा॑ सूनो सहसो
मर्त॒भोज॑ना॒ रास्व॒ तद्यत्त्वेम॑हे ॥४॥ त्वम॑ग्ने गृ॒हप॑ति॒स्त्वं होता॑ नो
अध्व॒रे । त्वं पोता॑ विश्ववार॒ प्रचे॑ता॒ यक्षि॒ वेषि॑ च॒ वार्य॑म् ॥५॥ कृ॒धि
रत्नं॒ यज॑मानाय सुक्रतो॒ त्वं हि र॑त्न॒धा असि॑ । आ न॑ ऋ॒ते शि॑-
शीहि॒ विश्व॑मृ॒त्विजं॑ सु॒शंसो॒ यश्च॒ दक्ष॑ते ॥६॥२१॥ त्वे अ॑ग्ने स्वाहुत
प्रि॒यासः॑ सन्तु सू॒रयः॑ । य॒न्तारो॒ ये म॒घवा॑नो॒ जना॑नामू॒र्वान्दय॑न्त
गोना॑म् ॥७॥ येषा॒मिळा॑ घृ॒तह॑स्ता दुरो॒ण आँ अपि॑ प्रा॒ता नि॒षीद॑-
न्ति । ताँस्त्रा॑यस्व सहस्य द्रु॒हो नि॒दो यच्छा॑ नः॒ शर्म॑ दीर्घ॒श्रुत् ॥८॥
स म॒न्द्रया॑ च जि॒ह्वया॒ वह्नि॑रा॒सा वि॒दुष्ट॑रः । अग्ने॑ र॒यिं म॒घव॑द्भ्यो
न॒ आ व॑ह ह॒व्यदा॑तिं च सूदय ॥९॥ ये राधां॑सि॒ दद॒त्यश्व्या॑ म॒घा
कामे॑न॒ श्रव॑सो म॒हः । ताँ अंह॑सः पिपृहि प॒र्तृभि॒ष्ट्वं श॒तं पू॒र्भिर्य॑-
विष्ठ्य ॥१०॥ दे॒वो वो॑ द्रविणो॒दाः पू॒र्णां वि॑वष्ट्या॒सिच॑म् ।
उद्वा॑ सि॒ञ्चध्व॒मुप॑ वा पृणध्व॒मादिद्वो॑ दे॒व ओ॑हते ॥११॥ तं हो॑-
तारमध्व॒रस्य॒ प्रचे॑तसं॒ वह्निं॑ दे॒वा अ॑कृण्वत । दधा॑ति॒ रत्नं॑ विध॒ते
सु॒वीर्य॑म॒ग्निर्जना॑य दा॒शुषे॑ ॥१२॥२२॥

---

॥ १७ ॥ १–७ वसिष्ठः ॥ अग्निः ॥ द्विपदा त्रिष्टुप् ॥

॥१७॥ अग्ने॒ भव॑ सुष॒मिधा॒ समि॑द्ध उ॒त ब॒र्हिरु॑र्वि॒या वि
स्तृ॑णीताम् ॥१॥ उ॒त द्वार॑ उश॒तीर्वि श्र॑यन्तामु॒त दे॒वाँ उ॑श॒त आ
व॑हेह ॥२॥ अग्ने॑ वी॒हि ह॒विषा॒ यक्षि॑ दे॒वान्त्स्व॑ध्व॒रा कृ॑णुहि



Digitized by Google

तिष्ठं अरतिं सुऽअध्वरं विश्वस्य दूतं अमृतं ॥१॥ सः योजते अरुषा
विश्वऽभोजसा सः दुद्रवत् सुऽआहुतः सुऽब्रह्मा यज्ञः सुऽशमी
वसूनां देवं राधः जनानां ॥२॥ उत् अस्य शोचिः अस्थात् आऽजु-
ह्वानस्य मीळ्हुषः उत् धूमासः अरुषासः दिविऽस्पृशः सं अग्निं
इंधते नरः ॥३॥ तं त्वा दूतं कृण्महे यशःऽतमं देवान् आ वीतये वह
विश्वा सूनो सहसः मर्तऽभोजना रास्व तत् यत् त्वा ईमहे ॥४॥
त्वं अग्ने गृहऽपतिः त्वं होता नः अध्वरे त्वं पोता विश्वऽवार प्र-
ऽचेताः यक्षि वेषि च वार्यं ॥५॥ कृधि रत्नं यजमानाय सुऽक्रतो॰
त्वं हि रत्नऽधाः असि आ नः ऋते शिशीहि विश्वं ऋत्विजं सुऽशं-
सः यः च दक्षते ॥ ६ ॥२१॥ त्वे अग्ने सुऽआहुत प्रियासः संतु सूर-
यः यंतारः ये मघऽवानः जनानां ऊर्वान् दयंत गोनां ॥७॥ येषां
इळा घृतऽहस्ता दुरोणे आ अपि प्राता निऽसीदति तान् त्रायस्व
सहस्य द्रुहः निदः यच्छ नः शर्म दीर्घऽश्रुत् ॥८॥ सः मंद्रया च जि-
ह्वया वह्निः आसा विदुःऽतरः अग्ने रयिं मघवत्ऽभ्यः नः आ वह
हव्यऽदातिं च सूदय ॥९॥ ये राधांसि ददति अश्व्या मघा कामेन
श्रवसः महः तान् अंहसः पिपृहि पर्तृऽभिः त्वं शतं पूःऽभिः य-
विष्ठ्य ॥१०॥ देवः वः द्रविणःऽदाः पूर्णां विवष्टि आऽसिचं उत्
वा सिंचध्वं उप वा पृणध्वं आत् इत् वः देवः ओहते ॥११॥ तं हो-
तारं अध्वरस्य प्रऽचेतसं वह्निं देवाः अकृण्वत दधाति रत्नं विधते
सुऽवीर्यं अग्निः जनाय दाशुषे ॥१२॥२२॥

---

॥१७॥ अग्ने भव सुऽसमिधा संऽइद्धः उत बर्हिः उर्विया वि
स्तृणीतां ॥१॥ उत द्वारः उशतीः वि श्रयंतां उत देवान् उशतः आ
वह इह ॥२॥ अग्ने वीहि हविषा यक्षि देवान् सुऽअध्वरा कृणुहि



Digitized by Google

जातवेदः ॥३॥ स्वध्वरा करति जातवेदा यक्षद्देवाँ अमृतान्पि-
प्रयच्च ॥४॥ वंस्व विश्वा वार्याणि प्रचेतः सत्या भवंत्वाशिषो
नो अद्य ॥५॥ त्वामु ते दधिरे हव्यवाहं देवासो अग्न ऊर्ज आ
नपातं ॥६॥ ते ते देवाय दाशतः स्याम महो नो रत्ना वि दध
इयानः ॥७॥२३॥१॥

---

॥ १८ ॥ १–२५ वसिष्ठः ॥ १–२१ इंद्रः । २२–२५ सुदासः पैजवनस्य दानस्तुतिः ॥ त्रिष्टुप् ॥

॥१८॥ त्वे ह यत्पितरश्चिन्न इंद्र विश्वा वामा जरितारो अ-
सन्वन् । त्वे गावः सुदुघास्त्वे ह्यश्वास्त्वं वसु देवयते वनिष्ठः ॥१॥
राजेव हि जनिभिः क्षेष्येवाव द्युभिरभि विदुष्कविः सन् । पिशा
गिरो मघवन्गोभिरश्वैस्त्वायतः शिशीहि राये अस्मान् ॥२॥
इमा उ त्वा पस्पृधानासो अत्र मंद्रा गिरो देवयंतीरुप स्थुः ।
अर्वाची ते पथ्या राय एतु स्याम ते सुमताविंद्र शर्मन् ॥३॥
धेनुं न त्वा सूयवसे दुदुक्षन्नुप ब्रह्माणि ससृजे वसिष्ठः । त्वामिन्मे
गोपतिं विश्व आहा न इंद्रः सुमतिं गंत्वच्छ ॥४॥ अर्णांसि
चित्पप्रथाना सुदास इंद्रो गाधान्यकृणोत्सुपारा । शर्धंतं शिम्यु-
मुचथस्य नव्यः शापं सिंधूनामकृणोदशस्तीः ॥५॥२४॥ पुरोळा
इत्तुर्वशो यक्षुरासीद्राये मत्स्यासो निशिता अपीव । श्रुष्टिं
चक्रुर्भृगवो द्रुह्यवश्च सखा सखायमतरद्विषूचोः ॥६॥ आ
पक्थासो भलानसो भनंतालिनासो विषाणिनः शिवासः ।
आ योऽनयत्सधमा आर्यस्य गव्या तृत्सुभ्यो अजगन्युधा
नॄन् ॥७॥ दुराध्यो३ अदितिं स्रेवयंतोऽचेतसो वि जगृभ्रे
परुष्णीं । महाविव्यक्पृथिवीं पत्यमानः पशुष्कविरशयच्चा-
यमानः ॥८॥ ईयुरर्थं न न्यर्थं परुष्णीमाशुश्चनेदभिपित्वं



Digitized by Google

जातऽवेदः ॥३॥ सुऽअध्वरा करति जातऽवेदाः यक्षत् देवान् अमृतान् पिप्रयत् च ॥४॥ वंस्व विश्वा वार्याणि प्रऽचेतः॰ सत्याः भवंतु आऽशिषः नः अद्य ॥५॥ त्वां ऊं ते दधिरे हव्यऽवाहं देवासः अग्ने ऊर्जः आ नपातं ॥६॥ ते ते देवाय दाशतः स्याम महः नः रत्ना वि दधः इयानः ॥७॥२३॥१॥

---

॥१८॥ त्वे ह यत् पितरः चित् नः इंद्र विश्वा वामा जरितारः असन्वन् त्वे गावः सुऽदुघाः त्वे हि अश्वाः त्वं वसु देवऽयते वनिष्ठः ॥१॥ राजाऽइव हि जनिऽभिः क्षेषि एव अव द्युऽभिः अभि विदुः कविः सन् पिशा गिरः मघऽवन् गोभिः अश्वैः त्वाऽयतः शिशीहि राये अस्मान् ॥२॥ इमाः ऊं त्वा पस्पृधानासः अत्र मंद्राः गिरः देवऽयंतीः उप स्थुः अर्वाची ते पथ्या रायः एतु स्याम ते सुऽमतौ इंद्र शर्मन् ॥३॥ धेनुं न त्वा सुऽयवसे दुधुक्षन् उप ब्रह्माणि ससृजे वसिष्ठः त्वां इत् मे गोऽपतिं विश्वः आह आ नः इंद्रः सुऽमतिं गंतु अच्छ ॥४॥ अर्णांसि चित् पप्रथाना सुऽदासे इंद्रः गाधानि अकृणोत् सुऽपारा शर्धंतं शिम्युं उचथस्य नव्यः शापं सिंधूनां अकृणोत् अशस्तीः ॥५॥२४॥ पुरोळाः इत् तुर्वशः यक्षुः आसीत् राये मत्स्यासः निऽशिताः अपिऽइव श्रुष्टिं चक्रुः भृगवः द्रुह्यवः च सखा सखायं अतरत् विषूचोः ॥६॥ आ पक्थासः भलानसः भनंत आ अलिनासः विषाणिनः शिवासः आ यः अनयत् सधऽमाः आर्यस्य गव्या तृत्सुऽभ्यः अजगन् युधा नॄन् ॥७॥ दुःऽआध्यः अदितिं स्रेवयंतः अचेतसः वि जगृभ्रे परुष्णीं मह्ना अविव्यक् पृथिवीं पत्यमानः पशुः कविः अशयत् चायमानः ॥८॥ ईयुः अर्थं न निऽअर्थं परुष्णीं आशुः चन इत् अभिऽपित्वं



Digitized by Google

जगाम । सुदास इंद्रः सुतुकाँ अमित्रानरंधयन्मानुषे व-
ध्रिवाचः ॥ ९ ॥ ईयुर्गावो न यवसादगोपा यथाकृतमभि
मित्रं चितासः । पृश्निगावः पृश्निनिप्रेषितासः श्रुष्टिं चक्रुर्नि-
युतो रंतयश्च ॥ १० ॥ २५ ॥ एकं च यो विंशतिं च श्रवस्या
वैकर्णयोर्जनान्राजा न्यस्तः । दस्मो न सद्मन्नि शिशाति
बर्हिः शूरः सर्गमकृणोदिंद्र एषां ॥ ११ ॥ अध श्रुतं कवषं
वृद्धमप्स्वनु द्रुह्युं नि वृणग्वज्रबाहुः । वृणाना अत्र सख्याय
सख्यं त्वायंतो ये अमदन्ननु त्वा ॥ १२ ॥ वि सद्यो विश्वा
दृंहितान्येषामिंद्रः पुरः सहसा सप्त दर्दः । व्यानवस्य तृत्सवे
गयं भाग्जेष्म पूरुं विदथे मृध्रवाचं ॥ १३ ॥ नि गव्यवोऽनवो
द्रुह्यवश्च षष्टिः शता सुषुपुः षट् सहस्रा । षष्टिर्वीरासो अधि
षट् दुवोयु विश्वेदिंद्रस्य वीर्या कृतानि ॥ १४ ॥ इंद्रेणैते तृत्सवो
वेविषाणा आपो न सृष्टा अधवंत नीचीः । दुर्मित्रासः प्रक-
लविन्मिमाना जहुर्विश्वानि भोजना सुदासे ॥ १५ ॥ २६ ॥
अर्धं वीरस्य शृतपामनिंद्रं परा शर्धंतं नुनुदे अभि क्षां । इंद्रो
मन्युं मन्युम्यो मिमाय भेजे पथो वर्तनिं पत्यमानः ॥ १६ ॥
आध्रेण चित्तद्वेकं चकार सिंह्यं चित्पेत्वेना जघान । अव
स्रक्तीर्वेश्यावृश्चदिंद्रः प्रायच्छद्विश्वा भोजना सुदासे ॥ १७ ॥
शश्वंतो हि शत्रवो रारधुष्टे भेदस्य चिच्छर्धतो विंद रंधिं । मर्ताँ
एनः स्तुवतो यः कृणोति तिग्मं तस्मिन्नि जहि वज्रमिंद्र ॥ १८ ॥
आवदिंद्रं यमुना तृत्सवश्च प्रात्र भेदं सर्वताता मुषायत् ।
अजासश्च शिग्रवो यक्षवश्च बलिं शीर्षाणि जभ्रुरश्व्यानि
॥ १९ ॥ न त इंद्र सुमतयो न रायः संचक्षे पूर्वा उषसो न
नूत्नाः । देवकं चिन्मान्यमानं जघंथाव त्मना बृहतः शंबरं भेत्



Digitized by Google

जगाम सुऽदासे इंद्रः सुऽतुकान् अमित्रान् अरंधयत् मानुषे व-
ध्रिऽवाचः ॥ ९ ॥ ईयुः गावः न यवसात् अगोपाः यथाऽकृतं
अभि मित्रं चितासः पृश्निऽगावः पृश्निऽनिप्रेषितासः श्रुष्टिं
चक्रुः निऽयुतः रंतयः च ॥ १० ॥ २५ ॥ एकं च यः विंशतिं च श्रव-
स्या वैकर्णयोः जनान् राजा नि अस्तः॰ दस्मः न सद्मन् नि शि-
शाति बर्हिः शूरः सर्गं अकृणोत् इंद्रः एषां ॥ ११ ॥ अध श्रुतं कवषं
वृद्धं अप्ऽसु अनु द्रुह्युं नि वृणक् वज्रऽबाहुः वृणानाः अत्र स-
ख्याय सख्यं त्वाऽयंतः ये अमदन् अनु त्वा ॥ १२ ॥ वि सद्यः विश्वा
दृंहितानि एषां इंद्रः पुरः सहसा सप्त दर्दः॰ वि आनवस्य तृत्सवे
गयं भाक् जेष्म पूरुं विदथे मृध्रऽवाचं ॥ १३ ॥ नि गव्यवः अनवः
द्रुह्यवः च षष्टिः शता सुसुपुः षट् सहस्रा षष्टिः वीरासः अधि षट्
दुवःऽयु विश्वा इत् इंद्रस्य वीर्या कृतानि ॥ १४ ॥ इंद्रेण एते तृत्सवः
वेविषाणाः आपः न सृष्टाः अधवंत नीचीः दुःऽमित्रासः प्रक-
लऽवित् मिमानाः जहुः विश्वानि भोजना सुऽदासे ॥ १५ ॥ २६ ॥
अर्धं वीरस्य शृतऽपां अनिंद्रं परा शर्धंतं नुनुदे अभि क्षां इंद्रः
मन्युं मन्युऽम्यः मिमाय भेजे पथः वर्तनिं पत्यमानः ॥ १६ ॥ आ-
ध्रेण चित् तत् ऊं इति एकं चकार सिंह्यं चित् पेत्वेन जघान अव स्र-
क्तीः वेश्याः अवृश्चत् इंद्रः प्र अयच्छत् विश्वा भोजना सुऽदासे ॥ १७ ॥
शश्वंतः हि शत्रवः रारधुः ते भेदस्य चित् शर्धतः विंद रंधिं मर्तान्
एनः स्तुवतः यः कृणोति तिग्मं तस्मिन् नि जहि वज्रं इंद्र ॥ १८ ॥
आवत् इंद्रं यमुना तृत्सवः च प्र अत्र भेदं सर्वऽताता मुषायत् अ-
जासः च शिग्रवः यक्षवः च बलिं शीर्षाणि जभ्रुः अश्व्यानि
॥ १९ ॥ न ते इंद्र सुऽमतयः न रायः संऽचक्षे पूर्वाः उषसः न नूत्नाः
देवकं चित् मान्यमानं जघंथ अव त्मना बृहतः शंबरं भेत्



Digitized by Google

॥२०॥२७॥ प्र ये गृहादममदुस्त्वाया पराशरः शतयातुर्वसिष्ठः। न ते भोजस्य सख्यं मृषंताधा सूरिभ्यः सुदिना व्युच्छान्॥२१॥ द्वे नप्तुर्देववतः शते गोर्द्वा रथा वधूमंता सुदासः। अर्हन्नग्ने पैजवनस्य दानं होतेव सद्म पर्येमि रेभन्॥२२॥ चत्वारो मा पैजवनस्य दानाः स्मद्दिष्टयः कृशनिनो निरेके। ऋज्रासो मा पृथिविष्ठाः सुदासस्तोकं तोकाय श्रवसे वहंति॥२३॥ यस्य श्रवो रोदसी अंतरुर्वी शीर्ष्णेशीर्ष्णे विबभाजा विभक्ता। सप्तेदिंद्रं न स्रवतो गृणंति नि युध्यामधिमशिशादभीके॥२४॥ इमं नरो मरुतः सश्चतानु दिवोदासं न पितरं सुदासः। अविष्टना पैजवनस्य केतं दूणाशं क्षत्रमजरं दुवोयु॥२५॥२८॥

---

॥ १९ ॥ १–११ वसिष्ठः ॥ इंद्रः ॥ त्रिष्टुप् ॥

॥१९॥ यस्तिग्मशृंगो वृषभो न भीम एकः कृष्टीश्च्यावयति प्र विश्वाः। यः शश्वतो अदाशुषो गयस्य प्रयंतासि सुष्वितराय वेदः॥१॥ त्वं ह त्यदिंद्र कुत्समावः शुश्रूषमाणस्तन्वा समर्ये। दासं यच्छुष्णं कुयवं न्यस्मा अरंधय आर्जुनेयाय शिक्षन्॥२॥ त्वं धृष्णो धृषता वीतहव्यं प्रावो विश्वाभिरूतिभिः सुदासं। प्र पौरुकुत्सिं त्रसदस्युमावः क्षेत्रसाता वृत्रहत्येषु पूरुं॥३॥ त्वं नृभिर्नृमणो देववीतौ भूरीणि वृत्रा हर्यश्व हंसि। त्वं नि दस्युं चुमुरिं धुनिं चास्वापयो दभीतये सुहंतु॥४॥ तव च्यौत्नानि वज्रहस्त तानि नव यत्पुरो नवतिं च सद्यः। निवेशने शततमाविवेषीरहन् च वृत्रं नमुचिमुताहन्॥५॥२९॥ सना ता त इंद्र भोजनानि रातहव्याय दाशुषे सुदासे। वृष्णे ते हरी वृषणा युनज्मि व्यंतु ब्रह्माणि पुरु-



Digitized by Google

॥२०॥२७॥ प्र ये गृहात् अममदुः त्वाऽया पराऽशरः शतऽयातुः वसिष्ठः न ते भोजस्य सख्यं मृषंत अध सूरिऽभ्यः सुऽदिना वि उच्छान् ॥२१॥ द्वे नप्तुः देवऽवतः शते गोः द्वा रथा वधूऽमंता सुऽदासः अर्हन् अग्ने पैजऽवनस्य दानं होताऽइव सद्म परि एमि रेभन् ॥२२॥ चत्वारः मा पैजऽवनस्य दानाः स्मत्ऽदिष्टयः कृशनिनः निऽरेके ऋज्रासः मा पृथिविऽस्थाः सुऽदासः तोकं तोकाय श्रवसे वहंति ॥२३॥ यस्य श्रवः रोदसी अंतः उर्वी शीर्ष्णेऽशीर्ष्णे विऽबभाज विऽभक्ता सप्त इत् इंद्रं न स्रवतः गृणंति नि युध्यामधिं अशिशात् अभीके ॥२४॥ इमं नरः मरुतः सश्चत अनु दिवःऽदासं न पितरं सुऽदासः अविष्टन पैजऽवनस्य केतं दुःऽनशं क्षत्रं अजरं दुवःऽयु ॥२५॥२८॥

---

॥१९॥ यः तिग्मऽशृंगः वृषभः न भीमः एकः कृष्टीः च्यवयति प्र विश्वाः यः शश्वतः अदाशुषः गयस्य प्रऽयंता असि सुस्विऽतराय वेदः ॥१॥ त्वं ह त्यत् इंद्र कुत्सं आवः शुश्रूषमाणः तन्वा सऽमर्ये दासं यत् शुष्णं कुयवं नि अस्मै अरंधयः आर्जुनेयाय शिक्षन् ॥२॥ त्वं धृष्णो धृषता वीतऽहव्यं प्र आवः विश्वाभिः ऊतिऽभिः सुऽदासं प्र पौरुऽकुत्सिं त्रसदस्युं आवः क्षेत्रऽसाता वृत्रऽहत्येषु पूरुं ॥३॥ त्वं नृऽभिः नृऽमनः देवऽवीतौ भूरीणि वृत्रा हरिऽअश्व हंसि त्वं नि दस्युं चुमुरिं धुनिं च अस्वापयः दभीतये सुऽहंतु ॥४॥ तव च्यौत्नानि वज्रऽहस्त तानि नव यत् पुरः नवतिं च सद्यः निऽवेशने शतऽतमा अविवेषीः अहन् च वृत्रं नमुचिं उत अहन् ॥५॥२९॥ सना ता ते इंद्र भोजनानि रातऽहव्याय दाशुषे सुऽदासे वृष्णे ते हरी वृषणा युनज्मि व्यंतु ब्रह्माणि पुरु-



Digitized by Google

शाक वाजैं ॥६॥ मा ते अस्यां सहसावन्परिष्टावघाय भूम हरि-
वः परादै। त्रायस्व नोऽवृकेभिर्वरूथैस्तव प्रियासः सूरिषु स्याम
॥७॥ प्रियास इत्ते मघवन्नभिष्टौ नरो मदेम शरणे सखायः। नि
तुर्वशं नि याद्वं शिशीह्यतिथिग्वाय शंस्यं करिष्यन् ॥८॥ सद्य-
श्चिन्नु ते मघवन्नभिष्टौ नरः शंसंत्युक्थशास उक्था। ये ते हवे-
भिर्वि पणीँरदाशन्नस्मान्वृणीष्व युज्याय तस्मै ॥९॥ एते स्तोमा
नरां नृतम तुभ्यमस्मद्र्यंचो ददतो मघानि। तेषामिंद्र वृत्रहत्ये
शिवो भूः सखा च शूरोऽविता च नृणां ॥१०॥ नू इंद्र शूर स्तव-
मान ऊती ब्रह्मजूतस्तन्वा वावृधस्व। उप नो वाजान्मिमीह्युप
स्तीन्यूयं पात स्वस्तिभिः सदा नः ॥११॥३०॥२॥

---

॥ २० ॥ १–१० वसिष्ठः ॥ इंद्रः ॥ त्रिष्टुप् ॥

॥२०॥ उग्रो जज्ञे वीर्याय स्वधावाञ्चक्रिरपो नर्यो यत्क-
रिष्यन् । जग्मिर्युवा नृषदनमवोभिस्त्राता न इंद्र एनसो
महश्चित् ॥१॥ हंता वृत्रमिंद्रः शूशुवानः प्रावीन्नु वीरो जरि-
तारमूती । कर्ता सुदासे अह वा उ लोकं दाता वसु मुहुरा
दाशुषे भूत् ॥२॥ युध्मो अनर्वा खजकृत्समद्वा शूरः सत्राषाड्
जनुषेमषाळ्हः । व्यास इंद्रः पृतनाः स्वोजा अधा विश्वं
शत्रूयंतं जघान ॥३॥ उभे चिदिंद्र रोदसी महित्वा पप्राथ
तविषीभिस्तुविष्मः । नि वज्रमिंद्रो हरिवान्मिमिक्षन्त्समं-
धसा मदेषु वा उवोच ॥४॥ वृषा जजान वृषणं रणाय तमु
चिन्नारी नर्यं ससूव। प्र यः सेनानीरध नृभ्यो अस्तीनः सत्वा
गवेषणः स धृष्णुः ॥५॥१॥ नू चित्स भ्रेषते जनो न रेषन्मनो
यो अस्य घोरमाविवासात्। यज्ञैर्य इंद्रे दधते दुवांसि क्षयत्स



Digitized by Google

ऽशाक वाजैः ॥ ६ ॥ मा ते अस्यां सहसाऽवन् परिष्टौ अघाय भूम हरिऽवः पराऽदै त्रायस्व नः अवृकेभिः वरूथैः तव प्रियासः सूरिषु स्याम ॥ ७ ॥ प्रियासः इत् ते मघऽवन् अभिष्टौ नरः मदेम शरणे सखायः नि तुर्वशं नि याद्वं शिशीहि अतिथिऽग्वाय शंस्यं करिष्यन् ॥ ८ ॥ सद्यः चित् नु ते मघऽवन् अभिष्टौ नरः शंसंति उक्थऽशासः उक्था ये ते हवेभिः वि पणीन् अदाशन् अस्मान् वृणीष्व युज्याय तस्मै ॥ ९ ॥ एते स्तोमाः नरां नृऽतम तुभ्यं अस्मद्र्यंचः ददतः मघानि तेषां इंद्र वृत्रऽहत्ये शिवः भूः सखा च शूरः अविता च नृणां ॥ १० ॥ नु इंद्र शूर स्तवमानः ऊती ब्रह्मऽजूतः तन्वा ववृधस्व उप नः वाजान् मिमीहि उप स्तीन् यूयं पात स्वस्तिऽभिः सदा नः ॥ ११ ॥ ३० ॥ २ ॥

---

॥ २० ॥ उग्रः जज्ञे वीर्याय स्वधाऽवान् चक्रिः अपः नर्यः यत् करिष्यन् जग्मिः युवा नृऽसदनं अवःऽभिः त्राता नः इंद्रः एनसः महः चित् ॥ १ ॥ हंता वृत्रं इंद्रः शूशुवानः प्र आवीत् नु वीरः जरितारं ऊती कर्ता सुऽदासे अह वै ऊं इति लोकं दाता वसु मुहुः आ दाशुषे भूत् ॥ २ ॥ युध्मः अनर्वा खजऽकृत् समत्ऽवा शूरः सत्राषाट् जनुषा ईं अषाळ्हः वि आसे इंद्रः पृतनाः सुऽओजाः अध विश्वं शत्रुऽयंतं जघान ॥ ३ ॥ उभे इति चित् इंद्र रोदसी इति महिऽत्वा आ पप्राथ तविषीभिः तुविष्मः नि वज्रं इंद्रः हरिऽवान् मिमिक्षन् सं अंधसा मदेषु वै उवोच ॥ ४ ॥ वृषा जजान वृषणं रणाय तं ऊं इति चित् नारी नर्यं ससूव प्र यः सेनाऽनीः अध नृऽभ्यः अस्ति इनः सत्वा गोऽएषणः सः धृष्णुः ॥ ५ ॥ १ ॥ नु चित् सः भ्रेषते जनः न रेषत् मनः यः अस्य घोरं आऽविवासात् यज्ञैः यः इंद्रे दधते दुवांसि क्षयत् सः

राय श्रुतपा श्रुतेजाः॥६॥ यदिंद्र पूर्वो अपराय शिक्षन्नयज्ज्या-
यान्कनीयसो देष्णं। अमृत इत्पर्यासीत दूरमा चित्र चित्र्यं भरा
रयिं नः॥७॥ यस्त इंद्र प्रियो जनो ददाशदसन्निरेके अद्रिवः सखा
ते। वयं ते अस्यां सुमतौ चनिष्ठाः स्याम वरूथे अघ्नतो नृपीतौ
॥८॥ एष स्तोमो अचिक्रदद्वृषा त उत स्तामुर्मघवन्नक्रपिष्ट। रा-
यस्कामो जरितारं त आगन्त्वमंग शक्र वस्व आ शको नः॥९॥
स न इंद्र त्वयताया इषे धास्त्मना च ये मघवानो जुनंति। वस्वी
षु ते जरित्रे अस्तु शक्तिर्यूयं पात स्वस्तिभिः सदा नः॥१०॥२॥

---

॥ २१ ॥ १—१० वसिष्ठः ॥ इंद्रः ॥ त्रिष्टुप् ॥

॥२१॥ असावि देवं गोऋजीकमंधो न्यस्मिन्निंद्रो जनु-
षेमुवोच। बोधामसि त्वा हर्यश्व यज्ञैर्बोधा नः स्तोममंधसो
मदेषु ॥१॥ प्र यंति यज्ञं विपयंति बर्हिः सोममादो विदथे
दुध्रवाचः। न्यु भ्रियंते यशसो गृभादा दूरउपब्दो वृषणो
नृषाचः ॥२॥ त्वमिंद्र स्रवितवा अपस्कः परिष्ठिता अहिना
शूर पूर्वीः। त्वद्वावक्रे रथ्यो३ न धेना रेजंते विश्वा कृत्रिमाणि
भीषा ॥३॥ भीमो विवेषायुधेभिरेषामपांसि विश्वा नर्याणि
विद्वान्। इंद्रः पुरो जर्हृषाणो वि दूधोद्वि वज्रहस्तो महिना
जघान॥४॥ न यातव इंद्र जूजुवुर्नो न वंदना शविष्ठ वेद्याभिः।
स शर्धदर्यो विषुणस्य जंतोर्मा शिश्नदेवा अपि गुर्ऋतं नः
॥५॥३॥ अभि क्रत्वेंद्र भूरध ज्मन्न ते विव्यङ्महिमानं रजांसि।
स्वेना हि वृत्रं शवसा जघंथ न शत्रुरंतं विविदद्युधा ते ॥६॥
देवाश्चित्ते असुर्याय पूर्वेऽनु क्षत्राय ममिरे सहांसि। इंद्रो
मघानि दयते विषह्येंद्रं वाजस्य जोहुवंत सातौ ॥७॥ कीरि-



Digitized by Google

राये ऋतऽपाः ऋतेऽजाः ॥ ६ ॥ यत् इंद्र पूर्वः अपराय शिक्षन् अ-
यत् ज्यायान् कनीयसः देष्णं अमृतः इत् परि आसीत दूरं आ चित्र
चित्र्यं भर रयिं नः ॥ ७ ॥ यः ते इंद्र प्रियः जनः ददाशत् असत् नि-
रेके अद्रिऽवः सखा ते वयं ते अस्यां सुऽमतौ चनिष्ठाः स्याम व-
रूथे अघ्नतः नृऽपीतौ ॥ ८ ॥ एषः स्तोमः अचिक्रदत् वृषा ते उत
स्तामुः मघऽवन् अक्रपिष्ट रायः कामः जरितारं ते आ अगन् त्वं
अंग शक्र वस्वः आ शकः नः ॥ ९ ॥ सः नः इंद्र त्वऽयताये इषे धाः
त्मना च ये मघऽवानः जुनंति वस्वी सु ते जरित्रे अस्तु शक्तिः यूयं
पात स्वस्तिऽभिः सदा नः ॥ १० ॥ २ ॥

---

॥ २१ ॥ असावि देवं गोऽऋजीकं अंधः नि अस्मिन् इंद्रः ज-
नुषा ईं उवोच बोधामसि त्वा हरिऽअश्व यज्ञैः बोध नः स्तोमं अं-
धसः मदेषु ॥ १ ॥ प्र यंति यज्ञं विपयंति बर्हिः सोमऽमादः विदथे
दुध्रऽवाचः नि ऊं भ्रियंते यशसः गृभात् आ दूरेऽउपब्दः वृषणः
नृऽसाचः ॥ २ ॥ त्वं इंद्र स्रवितवै अपः कः॰ परिऽस्थिताः अहिना
शूर पूर्वीः त्वत् वावक्रे रथ्यः न धेनाः रेजंते विश्वा कृत्रिमाणि भी-
षा ॥ ३ ॥ भीमः विवेष आयुधेभिः एषां अपांसि विश्वा नर्याणि
विद्वान् इंद्रः पुरः जर्हृषाणः वि दूधोत् वि वज्रऽहस्तः महिना ज-
घान ॥ ४ ॥ न यातवः इंद्र जूजुवुः नः न वंदना शविष्ठ वेद्याभिः सः
शर्धत् अर्यः विषुणस्य जंतोः मा शिश्नऽदेवाः अपि गुः ऋतं नः
॥ ५ ॥ ३ ॥ अभि क्रत्वा इंद्र भूः अध ज्मन् न ते विव्यक् महिमानं र-
जांसि स्वेन हि वृत्रं शवसा जघंथ न शत्रुः अंतं विविदत् युधा ते
॥ ६ ॥ देवाः चित् ते असुर्याय पूर्वे अनु क्षत्राय ममिरे सहांसि इंद्रः
मघानि दयते विऽसह्य इंद्रं वाजस्य जोहुवंत सातौ ॥ ७ ॥ कीरिः



Digitized by Google

श्रिद्वि त्वामवसे जुहावेशानमिंद्र सौभंगस्य भूरेः। अवो बभूथ शतमूते अस्मे अभिक्षतुस्त्वावंतो वरूता ॥ ८ ॥ सखायस्त इंद्र विश्वहं स्याम नमोवृधासो महिना तरुत्र। वन्वंतु स्मा तेऽवसा समीकेऽभीतिमर्यो वनुषां शवांसि ॥ ९ ॥ स न इंद्र त्वयताया इषे धास्त्मना च ये मघवानो जुनंति। वस्वी षु ते जरित्रे अस्तु शक्तिर्यूयं पात स्वस्तिभिः सदा नः ॥ १० ॥ ४ ॥

॥ २२ ॥ १—९ वसिष्ठः ॥ इंद्रः ॥ १—८ विराट् । ९ त्रिष्टुप् ॥

॥ २२ ॥ पिबा सोममिंद्र मंदतु त्वा यं ते सुषाव हर्यश्वाद्रिः। सोतुर्बाहुभ्यां सुयतो नार्वा ॥ १ ॥ यस्ते मदो युज्यश्चारुरस्ति येन वृत्राणि हर्यश्व हंसि। स त्वामिंद्र प्रभूवसो ममत्तु ॥ २ ॥ बोधा सु मे मघवन्वाचमेमां यां ते वसिष्ठो अर्चति प्रशस्तिं। इमा ब्रह्म सधमादे जुषस्व ॥ ३ ॥ श्रुधी हवं विपिपानस्याद्रेर्बोधा विप्रस्यार्चतो मनीषां। कृष्वा दुवांस्यंतमा सचेमा ॥ ४ ॥ न ते गिरो अपि मृष्ये तुरस्य न सुष्टुतिमसुर्यस्य विद्वान्। सदा ते नाम स्वयशो विवक्मि ॥ ५ ॥ ५ ॥ भूरि हि ते सवना मानुषेषु भूरि मनीषी हवते त्वामित्। मारे अस्मन्मघवञ्ज्योक्कः ॥ ६ ॥ तुभ्येदिमा सवना शूर विश्वा तुभ्यं ब्रह्माणि वर्धना कृणोमि। त्वं नृभिर्हव्यो विश्वधासि ॥ ७ ॥ नू चिन्नु ते मन्यमानस्य दस्मोदश्नुवंति महिमानमुग्र। न वीर्यमिंद्र ते न राधः ॥ ८ ॥ ये च पूर्व ऋषयो ये च नूत्ना इंद्र ब्रह्माणि जनयंत विप्राः। अस्मे ते संतु सख्या शिवानि यूयं पात स्वस्तिभिः सदा नः ॥ ९ ॥ ६ ॥

॥ २३ ॥ १—६ वसिष्ठः ॥ इंद्रः ॥ त्रिष्टुप् ॥

॥ २३ ॥ उदु ब्रह्माण्यैरत श्रवस्येंद्रं समर्ये महया वसिष्ठ।



Digitized by Google

चित् हि त्वां अवसे जुहाव ईशानं इंद्र सौभगस्य भूरेः अवः बभूथ शतंऽऊते अस्मे अभिऽस्तेः त्वाऽवतः वरूता ॥ ८ ॥ सखायः ते इंद्र विश्वहं स्याम नमःऽवृधासः महिना तरुत्र वन्वंतु स्म ते अवसा सम्ऽईके अभिऽइतिं अर्यः वनुषां शवांसि ॥ ९ ॥ सः नः इंद्र त्वऽयताये इषे धाः त्मना च ये मघऽवानः जुनंति वस्वी सु ते जरित्रे अस्तु शक्तिः यूयं पात स्वस्तिऽभिः सदा नः ॥ १० ॥ ४ ॥

---

॥ २२ ॥ पिब सोमं इंद्र मंदतु त्वा यं ते सुसाव हरिऽअश्व अद्रिः सोतुः बाहुऽभ्यां सुऽयतः न अर्वा ॥ १ ॥ यः ते मदः युज्यः चारुः अस्ति येन वृत्राणि हरिऽअश्व हंसि सः त्वां इंद्र प्रभुऽवसो॰ ममत्तु ॥ २ ॥ बोध सु मे मघऽवन् वाचं आ इमां यां ते वसिष्ठः अर्चति प्रऽशस्तिं इमा ब्रह्म सधऽमादे जुषस्व ॥ ३ ॥ श्रुधि हवं विऽपिपानस्य अद्रेः बोध विप्रस्य अर्चतः मनीषां कृष्व दुवांसि अंतमा सचा इमा ॥ ४ ॥ न ते गिरः अपि मृष्ये तुरस्य न सुऽस्तुतिं असुर्यस्य विद्वान् सदा ते नाम स्वऽयशः विवक्मि ॥ ५ ॥ ५ ॥ भूरि हि ते सवना मानुषेषु भूरि मनीषी हवते त्वां इत् मा आरे अस्मत् मघऽवन् ज्योक् कः॰ ॥ ६ ॥ तुभ्यं इत् इमा सवना शूर विश्वा तुभ्यं ब्रह्माणि वर्धना कृणोमि त्वं नृऽभिः हव्यः विश्वधा असि ॥ ७ ॥ नु चित् नु ते मन्यमानस्य दस्म उत् अश्नुवंति महिमानं उग्र न वीर्यं इंद्र ते न राधः ॥ ८ ॥ ये च पूर्वे ऋषयः ये च नूत्नाः इंद्र ब्रह्माणि जनयंत विप्राः अस्मे ते संतु सख्या शिवानि यूयं पात स्वस्तिऽभिः सदा नः ॥ ९ ॥ ६ ॥

---

॥ २३ ॥ उत् ऊं ब्रह्माणि ऐरत श्रवस्या इंद्रं सऽमर्ये महय वसिष्ठ



Digitized by Google

आ यो विश्वानि शवसा ततानोपश्रोता म ईवतो वचांसि ॥१॥
अयामि घोष इंद्र देवजामिरिरज्यंत यच्छुरुधो विवाचि। नहि
स्वमायुश्चिकिते जनेषु तानीदंहांस्यति पर्ष्यस्मान् ॥२॥ युजे
रथं गवेषणं हरिभ्यामुप ब्रह्माणि जुजुषाणमस्थुः। वि बाधिष्ट
स्य रोदसी महित्वेंद्रो वृत्राण्यप्रती जघन्वान् ॥३॥ आपश्चित्पि-
प्युः स्तर्यो३न गावो नक्षन्नृतं जरितारस्त इंद्र। याहि वायुर्न
नियुतो नो अच्छा त्वं हि धीभिर्दयसे वि वाजान् ॥४॥ ते त्वा
मदा इंद्र मादयंतु शुष्मिणं तुविराधसं जरित्रे। एको देवत्रा दयसे
हि मर्तानस्मिञ्छूर सवने मादयस्व ॥५॥ एवेदिंद्रं वृषणं वज्र-
बाहुं वसिष्ठासो अभ्यर्चंत्यर्कैः। स नः स्तुतो वीरवत्पातु गोम-
द्यूयं पात स्वस्तिभिः सदा नः ॥६॥७॥

---

॥ २४ ॥ १—६ वसिष्ठः ॥ इंद्रः ॥ त्रिष्टुप् ॥

॥२४॥ योनिष्ट इंद्र सदने अकारि तमा नृभिः पुरुहूत प्र
याहि। असो यथा नोऽविता वृधे च ददो वसूनि ममदश्च सोमैः
॥१॥ गृभीतं ते मन इंद्र द्विबर्हाः सुतः सोमः परिषिक्ता मधूनि।
विसृष्टधेना भरते सुवृक्तिरियमिंद्रं जोहुवती मनीषा ॥२॥ आ
नो दिव आ पृथिव्या ऋजीषिन्निदं बर्हिः सोमपेयाय याहि।
वहंतु त्वा हरयो मद्र्यंचमांगूषमच्छा तवसं मदाय ॥३॥ आ
नो विश्वाभिरूतिभिः सजोषा ब्रह्म जुषाणो हर्यश्व याहि।
वरीवृजत्स्थविरेभिः सुशिप्रास्मे दधद्वृषणं शुष्ममिंद्र ॥४॥
एष स्तोमो मह उग्राय वाहे धुरी३वात्यो न वाजयन्नधायि।
इंद्र त्वायमर्क ईट्टे वसूनां दिवीव द्यामधि नः श्रोमतं धाः
॥५॥ एवा न इंद्र वार्यस्य पूर्धि प्र ते महीं सुमतिं वेविदाम। इषं



Digitized by Google

आ यः विश्वानि शवसा ततान उपऽश्रोता मे ईवतः वचांसि॥१॥
अयामि घोषः इंद्र देवऽजामिः इरज्यंत यत् शुरुधः विऽवाचि
नहि स्वं आयुः चिकिते जनेषु तानि इत् अंहांसि अति पर्षि अ-
स्मान्॥२॥ युजे रथं गोऽएषणं हरिऽभ्यां उप ब्रह्माणि जुजुषाणं
अस्थुः वि बाधिष्ट स्यः रोदसी महिऽत्वा इंद्रः वृत्राणि अप्रति ज-
घन्वान्॥३॥ आपः चित् पिप्युः स्तर्यः न गावः नक्षन् ऋतं जरि-
तारः ते इंद्र याहि वायुः न निऽयुतः नः अच्छ त्वं हि धीभिः दयसे
वि वाजान्॥४॥ ते त्वा मदाः इंद्र मादयंतु शुष्मिणं तुविऽराधसं
जरित्रे एकः देवऽत्रा दयसे हि मर्तान् अस्मिन् शूर सवने माद-
यस्व॥५॥ एव इत् इंद्रं वृषणं वज्रऽबाहुं वसिष्ठासः अभि अर्चंति
अर्कैः सः नः स्तुतः वीरऽवत् पातु गोऽमत् यूयं पात स्वस्तिऽभिः
सदा नः॥६॥७॥

---

॥२४॥ योनिः ते इंद्र सदने अकारि तं आ नृऽभिः पुरुऽहूत प्र
याहि असः यथा नः अविता वृधे च ददः वसूनि ममदः च सोमैः
॥१॥ गृभीतं ते मनः इंद्र द्विऽबर्हाः सुतः सोमः परिऽसिक्ता मधूनि
विसृष्टऽधेना भरते सुऽवृक्तिः इयं इंद्रं जोहुवती मनीषा॥२॥ आ
नः दिवः आ पृथिव्याः ऋजीषिन् इदं बर्हिः सोमऽपेयाय याहि
वहंतु त्वा हरयः मद्र्यंचं आंगूषं अच्छ तवसं मदाय॥३॥ आ नः
विश्वाभिः ऊतिऽभिः सऽजोषाः ब्रह्म जुषाणः हरिऽअश्व याहि
वरीवृजत् स्थविरेभिः सुऽशिप्र अस्मे दधत् वृषणं शुष्मं इंद्र॥४॥
एषः स्तोमः महे उग्राय वाहे धुरिऽइव अत्यः न वाजयन् अधायि
इंद्र त्वा अयं अर्कः ईट्टे वसूनां दिविऽइव द्यां अधि नः श्रोमतं धाः
॥५॥ एव नः इंद्र वार्यस्य पूर्धि प्र ते महीं सुऽमतिं वेविदाम इषं



Digitized by Google

पिन्व मघवद्भ्यः सुवीरां यूयं पात स्वस्तिभिः सदा नः ॥ ६ ॥ ८ ॥

---

॥ २५ ॥ १—६ वसिष्ठः ॥ इंद्रः ॥ त्रिष्टुप् ॥

॥ २५ ॥ आ ते मह इंद्रोत्युग्र समन्यवो यत्समरंत सेनाः। पताति दिद्युन्नर्यस्य बाह्वोर्मा ते मनो विष्वद्र्य१ग्वि चारीत् ॥ १ ॥ नि दुर्ग इंद्र श्नथिह्यमित्रानभि ये नो मर्तासो अमंति। आरे तं शंसं कृणुहि निनित्सोरा नो भर संभरणं वसूनां ॥ २ ॥ शतं ते शिप्रिन्नूतयः सुदासे सहस्रं शंसा उत रातिरस्तु। जहि वधर्वनुषो मर्त्यस्यास्मे द्युम्नमधि रत्नं च धेहि ॥ ३ ॥ त्वावतो हींद्र क्रत्वे अस्मि त्वावतोऽवितुः शूर रातौ। विश्वेदहानि तविषीव उग्रँ ओकः कृणुष्व हरिवो न मर्धीः ॥ ४ ॥ कुत्सा एते हर्यश्वाय शूषमिंद्रे सहो देवजूतमियानाः। सत्रा कृधि सुहना शूर वृत्रा वयं तरुत्राः सनुयाम वाजं ॥ ५ ॥ एवा न इंद्र वार्यस्य पूर्धि प्र ते महीं सुमतिं वेविदाम। इषं पिन्व मघवद्भ्यः सुवीरां यूयं पात स्वस्तिभिः सदा नः ॥ ६ ॥ ९ ॥

---

॥ २६ ॥ १—५ वसिष्ठः ॥ इंद्रः ॥ त्रिष्टुप् ॥

॥ २६ ॥ न सोम इंद्रमसुतो ममाद नाब्रह्माणो मघवानं सुतासः। तस्मा उक्थं जनये यज्जुजोषन्नृवन्नवीयः शृणवद्यथा नः ॥ १ ॥ उक्थउक्थे सोम इंद्रं ममाद नीथेनीथे मघवानं सुतासः। यदीं सबाधः पितरं न पुत्राः समानदक्षा अवसे हवंते ॥ २ ॥ चकार ता कृणवन्नूनमन्या यानि ब्रुवंति वेधसः सुतेषु। जनीरिव पतिरेकः समानो नि मामृजे पुर इंद्रः सु सर्वाः ॥ ३ ॥ एवा तमाहुरुत शृण्व इंद्र एको विभक्ता तरणिर्मघानां।



Digitized by Google

पिन्व मघवत्ऽभ्यः सुऽवीरां यूयं पात स्वस्तिऽभिः सदा नः
॥ ६ ॥ ८ ॥

---

॥ २५ ॥ आ ते महः इंद्र ऊती उग्र सऽमन्यवः यत् संऽअरंत से-
नाः पताति दिद्युत् नर्यस्य बाह्वोः मा ते मनः विष्वद्र्यक् वि चा-
रीत् ॥ १ ॥ नि दुःऽगे इंद्र श्नथिहि अमित्रान् अभि ये नः मर्तासः
अमंति आरे तं शंसं कृणुहि निनित्सोः आ नः भर संऽभरणं वसू-
नां ॥ २ ॥ शतं ते शिप्रिन् ऊतयः सुऽदासे सहस्रं शंसाः उत रातिः
अस्तु जहि वधः वनुषः मर्त्यस्य अस्मे द्युम्नं अधि रत्नं च धेहि
॥ ३ ॥ त्वाऽवतः हि इंद्र क्रत्वे अस्मि त्वाऽवतः अवितुः शूर रातौ
विश्वा इत् अहानि तविषीऽवः उग्र ओकः कृणुष्व हरिऽवः न
मर्धीः ॥ ४ ॥ कुत्साः एते हरिऽअश्वाय शूषं इंद्रे सहः देवऽजूतं इया-
नाः सत्रा कृधि सुऽहना शूर वृत्रा वयं तरुत्राः सनुयाम वाजं
॥ ५ ॥ एव नः इंद्र वार्यस्य पूर्धि प्र ते महीं सुऽमतिं वेविदाम इषं
पिन्व मघवत्ऽभ्यः सुऽवीरां यूयं पात स्वस्तिऽभिः सदा नः
॥ ६ ॥ ९ ॥

---

॥ २६ ॥ न सोमः इंद्रं असुतः ममाद न अब्रह्माणः मघऽवानं
सुतासः तस्मै उक्थं जनये यत् जुजोषत् नृऽवत् नवीयः शृणवत्
यथा नः ॥ १ ॥ उक्थेऽउक्थे सोमः इंद्रं ममाद नीथेऽनीथे मघ-
ऽवानं सुतासः यत् ईं सऽबाधः पितरं न पुत्राः समानऽदक्षाः
अवसे हवंते ॥ २ ॥ चकार ता कृणवत् नूनं अन्या यानि ब्रुवंति
वेधसः सुतेषु जनीःऽइव पतिः एकः समानः नि ममृजे पुरः इंद्रः
सु सर्वाः ॥ ३ ॥ एव तं आहुः उत शृण्वे इंद्रः एकः विऽभक्ता तरणिः



Digitized by Google

ग्रानां। मिथस्तुरं ऊतयो यस्य पूर्वीरस्मे भद्राणि सश्चत प्रियाणि ॥४॥ एवा वसिष्ठ इंद्रमूतये नृन्कृष्टीनां वृषभं सुते गृणाति। सहस्रिण उप नो माहि वाजान्यूयं पात स्वस्तिभिः सदा नः ॥५॥१०॥

॥ २७ ॥ १–५ वसिष्ठः ॥ इंद्रः ॥ त्रिष्टुप् ॥

॥२७॥ इंद्रं नरो नेमधिता हवंते यत्पार्या युनजते धियस्ताः। शूरो नृषाता शवसश्चकान आ गोमति व्रजे भजा त्वं नः ॥१॥ य इंद्र शुष्मो मघवन्ते अस्ति शिक्षा सखिभ्यः पुरुहूत नृभ्यः। त्वं हि दृळ्हा मघवन्विचेता अपा वृधि परिवृतं न राधः ॥२॥ इंद्रो राजा जगतश्चर्षणीनामधि क्षमि विषुरूपं यदस्ति। ततो ददाति दाशुषे वसूनि चोदद्राध उपस्तुतश्चिदर्वाक् ॥३॥ नू चिन्न इंद्रो मघवा सहूती दानो वाजं नि यमते न ऊती। अनूना यस्य दक्षिणा पीपाय वामं नृभ्यो अभिवीता सखिभ्यः ॥४॥ नू इंद्र राये वरिवस्कृधी न आ ते मनो ववृत्याम मघाय। गोमदश्वावद्रथवद्व्यंतो यूयं पात स्वस्तिभिः सदा नः ॥५॥११॥

॥ २८ ॥ १–५ वसिष्ठः ॥ इंद्रः ॥ त्रिष्टुप् ॥

॥२८॥ ब्रह्मा ण इंद्रोप याहि विद्वानर्वाचस्ते हरयो संतु युक्ताः। विश्वे चिद्धि त्वा विहवंत मर्ता अस्माकमिच्छृणुहि विश्वमिन्व ॥१॥ हवं त इंद्र महिमा व्यानड्ब्रह्म यत्पासि शवसिन्नृषीणां। आ यद्वज्रं दधिषे हस्त उग्र घोरः सन्क्रत्वा जनिष्ठा अषाळ्हः ॥२॥ तव प्रणीतींद्र जोहुवानान्सं यन्नॄन्न रोदसी निनेथ। महे क्षत्राय शवसे हि जज्ञेऽतूतुजिं चित्तूतुजिरशिश्नत् ॥३॥ एभिर्न इंद्राहभिर्दशस्य दुर्मि-



Digitized by Google

मघानां मिथःऽतुरः ऊतयः यस्य पूर्वीः अस्मे भद्राणि सश्चत प्रियाणि ॥४॥ एव वसिष्ठः इंद्रं ऊतये नॄन् कृष्टीनां वृषभं सुते गृणाति सहस्रिणः उप नः माहि वाजान् यूयं पात स्वस्तिऽभिः सदा नः ॥५॥१०॥

---

॥२७॥ इंद्रं नरः नेमऽधिता हवंते यत् पार्याः युनजंते धियः ताः शूरः नृऽसाता शवसः चकानः आ गोऽमति व्रजे भज त्वं नः ॥१॥ यः इंद्र शुष्मः मघऽवन् ते अस्ति शिक्ष सखिऽभ्यः पुरुऽहूत नृऽभ्यः त्वं हि दृळ्हा मघऽवन् विऽचेताः अप वृधि परिऽवृतं न राधः ॥२॥ इंद्रः राजा जगतः चर्षणीनां अधि क्षमि विषुऽरूपं यत् अस्ति ततः ददाति दाशुषे वसूनि चोदत् राधः उपऽस्तुतः चित् अर्वाक् ॥३॥ नु चित् नः इंद्रः मघऽवा सऽहूती दानः वाजं नि यमते नः ऊती अनूना यस्य दक्षिणा पीपाय वामं नृऽभ्यः अभिऽवीता सखिऽभ्यः ॥४॥ नु इंद्र राये वरिवः कृधि नः आ ते मनः ववृत्याम मघाय गोऽमत् अश्वऽवत् रथऽवत् व्यंतः यूयं पात स्वस्तिऽभिः सदा नः ॥५॥११॥

---

॥२८॥ ब्रह्म नः इंद्र उप याहि विद्वान् अर्वांचः ते हरयः संतु युक्ताः विश्वे चित् हि त्वा विऽहवंत मर्ताः अस्माकं इत् शृणुहि विश्वंऽइन्व ॥१॥ हवं ते इंद्र महिमा वि आनट् ब्रह्म यत् पासि शवसिन् ऋषीणां आ यत् वज्रं दधिषे हस्ते उग्र घोरः सन् क्रत्वा जनिष्ठाः अषाळ्हः ॥२॥ तव प्रऽनीती इंद्र जोहुवानान् सं यत् नॄन् न रोदसी निनेथ महे क्षत्राय शवसे हि जज्ञे अतूतुजिं चित् तूतुजिः अशिश्नत् ॥३॥ एभिः नः इंद्र अहऽभिः दशस्य दुःऽमि-



Digitized by Google

यासो हि क्षितयः पवंते। प्रति यच्चष्टे अनृतमनेना अव द्विता वरुणो मायी नः सात् ॥ ४॥ वोचेमेदिंद्रं मघवानमेनं महो रायो राधसो यद्ददन्नः। यो अर्चतो ब्रह्मकृतिमविष्ठो यूयं पात स्वस्तिभिः सदा नः ॥ ५ ॥ १२ ॥

---

॥ २९ ॥ १–५ वसिष्ठः ॥ इंद्रः ॥ त्रिष्टुप् ॥

॥२९॥ अयं सोम इंद्र तुभ्यं सुन्व आ तु प्र याहि हरिवस्तदोकाः। पिबा त्व१स्य सुषुतस्य चारोर्ददो मघानि मघवन्नियानः ॥१॥ ब्रह्मन्वीर ब्रह्मकृतिं जुषाणोऽर्वाचीनो हरिभिर्याहि तूयं। अस्मिन्नू षु सवने मादयस्वोप ब्रह्माणि शृणव इमा नः ॥२॥ का ते अस्त्यरंकृतिः सूक्तैः कदा नूनं ते मघवन्दाशेम। विश्वा मतीरा ततने त्वायाधा म इंद्र शृणवो हवेमा ॥ ३ ॥ उतो घा ते पुरुष्या३ इदासन्येषां पूर्वेषामशृणोर्ऋषीणां। अधाहं त्वा मघवञ्जोहवीमि त्वं न इंद्रासि प्रमतिः पितेव ॥ ४ ॥ वोचेमेदिंद्रं मघवानमेनं महो रायो राधसो यद्ददन्नः। यो अर्चतो ब्रह्मकृतिमविष्ठो यूयं पात स्वस्तिभिः सदा नः ॥ ५ ॥ १३ ॥

---

॥ ३० ॥ १–५ वसिष्ठः ॥ इंद्रः ॥ त्रिष्टुप् ॥

॥३०॥ आ नो देव शवसा याहि शुष्मिन्भवा वृध इंद्र रायो अस्य। महे नृम्णाय नृपते सुवज्र महि क्षत्राय पौंस्याय शूर ॥१॥ हवंत उ त्वा हव्यं विवाचि तनूषु शूराः सूर्यस्य सातौ। त्वं विश्वेषु सेन्यो जनेषु त्वं वृत्राणि रंधया सुहंतु ॥२॥ अहा यदिंद्र सुदिना व्युच्छान्दधो यत्केतुमुपमं समत्सु। न्य१ग्निः सीदद सुरो न होता हुवानो अत्र सुभगाय देवान् ॥ ३ ॥ वयं ते त इंद्र ये च देव स्तवंत शूर ददतो मघानि। यच्छा सूरिभ्य उपमं

चासः हि क्षितयः पर्वंते प्रति यत् चष्टे अनृतं अनेनाः अव द्विता वरुणः मायी नः सात् ॥४॥ वोचेम इत् इंद्रं मघऽवानं एनं महः रायः राधसः यत् ददत् नः यः अर्चतः ब्रह्मऽकृतिं अविष्ठः यूयं पात स्वस्तिऽभिः सदा नः ॥५॥१२॥

---

॥२९॥ अयं सोमः इंद्र तुभ्यं सुन्वे आ तु प्र याहि हरिऽवः तत्ऽओकाः पिब तु अस्य सुऽसुतस्य चारोः ददः मघानि मघऽवन् इयानः ॥१॥ ब्रह्मन् वीर ब्रह्मऽकृतिं जुषाणः अर्वाचीनः हरिऽभिः याहि तूयं अस्मिन् ऊं इति सु सवने मादयस्व उप ब्रह्माणि शृणवः इमा नः ॥२॥ का ते अस्ति अरंऽकृतिः सुऽउक्तैः कदा नूनं ते मघऽवन् दाशेम विश्वाः मतीः आ ततने त्वाऽया अध मे इंद्र शृणवः हवा इमा ॥३॥ उतो इति घ ते पुरुष्याः इत् आसन् येषां पूर्वेषां अशृणोः ऋषीणां अध अहं त्वा मघऽवन् जोहवीमि त्वं नः इंद्र असि प्रऽमतिः पिताऽइव ॥४॥ वोचेम इत् इंद्रं मघऽवानं एनं महः रायः राधसः यत् ददत् नः यः अर्चतः ब्रह्मऽकृतिं अविष्ठः यूयं पात स्वस्तिऽभिः सदा नः ॥५॥१३॥

---

॥३०॥ आ नः देव शवसा याहि शुष्मिन् भव वृधः इंद्र रायः अस्य महे नृम्णाय नृऽपते सुऽवज्र महि क्षत्राय पौंस्याय शूर ॥१॥ हवंते ऊं इति त्वा हव्यं विऽवाचि तनूषु शूराः सूर्यस्य सातौ त्वं विश्वेषु सेन्यः जनेषु त्वं वृत्राणि रंधय सुऽहंतु ॥२॥ अहा यत् इंद्र सुऽदिना विऽउच्छान् दधः यत् केतुं उपऽमं समत्ऽसु नि अग्निः सीदत् असुरः न होता हुवानः अत्र सुऽभगाय देवान् ॥३॥ वयं ते ते इंद्र ये च देव स्तवंत शूर ददतः मघानि यच्छ सूरिऽभ्यः उपऽमं



Digitized by Google

वरूथं स्वाभुवो जरणामश्नवंत ॥४॥ वोचेमेदिंद्रं मघवानमेनं महो रायो राधसो यद्ददन्नः । यो अर्चतो ब्रह्मकृतिमविष्ठो यूयं पात स्वस्तिभिः सदा नः ॥५॥१४॥

॥ ३१ ॥ १–१२ वसिष्ठः ॥ इंद्रः ॥ १–९ गायत्री । १०–१२ विराट् ॥

॥३१॥ प्र व इंद्राय मादनं हर्यश्वाय गायत । सखायः सोमपाव्ने ॥१॥ शंसेदुक्थं सुदानव उत द्युक्षं यथा नरः । चकृमा सत्यराधसे ॥२॥ त्वं न इंद्र वाजयुस्त्वं गव्युः शतक्रतो । त्वं हिरण्ययुर्वसो ॥३॥ वयमिंद्र त्वायवोऽभि प्र णोनुमो वृषन् । विद्धी त्व१स्य नो वसो ॥४॥ मा नो निदे च वक्तवेऽर्यो रंधीरराव्णे । त्वे अपि क्रतुर्मम ॥५॥ त्वं वर्मासि सप्रथः पुरोयोधश्च वृत्रहन् । त्वया प्रति ब्रुवे युजा ॥६॥१५॥ महाँ उतासि यस्य तेऽनु स्वधावरी सहः । मम्नाते इंद्र रोदसी ॥७॥ तं त्वा मरुत्वती परि भुवद्वाणी सयावरी । नक्षमाणा सह द्युभिः ॥८॥ ऊर्ध्वासस्त्वान्विंदवो भुवन्दस्ममुप द्यवि । सं ते नमंत कृष्टयः ॥९॥ प्र वो महे महिवृधे भरध्वं प्रचेतसे प्र सुमतिं कृणुध्वं । विशः पूर्वीः प्र चरा चर्षणिप्राः ॥१०॥ उरुव्यचसे महिने सुवृक्तिमिंद्राय ब्रह्म जनयंत विप्राः । तस्य व्रतानि न मिनंति धीराः ॥११॥ इंद्रं वाणीरनुत्तमन्युमेव सत्रा राजानं दधिरे सहध्यै । हर्यश्वाय बर्हया समापीन् ॥१२॥१६॥

॥ ३२ ॥ १–२५. २६[१]. २७ वसिष्ठः । २६[२] वसिष्ठः शक्तिर्वा ॥ इंद्रः ॥
१. २. ४–२७ प्रागाथं । ३ द्विपदा ॥

॥३२॥ मो षु त्वा वाघतश्चनारे अस्मन्नि रीरमन् । आरात्ताच्चित्सधमादं न आ गहीह वा सन्नुप श्रुधि ॥१॥ इमे हि ते ब्रह्मकृतः सुते सचा मधौ न मक्ष आसते । इंद्रे कामं जरितारो वसूयवो रथे न पादमा दधुः ॥२॥ रायस्कामो वज्रहस्तं सु-



Digitized by Google

वरूथं सुऽआभुवः जरणां अश्नवंत ॥४॥ वोचेम इत् इंद्रं मघ-
ऽवानं एनं महः रायः राधसः यत् ददत् नः यः अर्चतः ब्रह्मऽकृ-
तिं अविष्ठः यूयं पात स्वस्तिऽभिः सदा नः ॥५॥१४॥

---

॥३१॥ प्र वः इंद्राय मादनं हरिऽअश्वाय गायत सखायः सो-
मऽपाव्ने ॥१॥ शंस इत् उक्थं सुऽदानवे उत द्युक्षं यथा नरः चकृम
सत्यऽराधसे ॥२॥ त्वं नः इंद्र वाजऽयुः त्वं गव्युः शतऽक्रतो॰ त्वं हि-
रण्यऽयुः वसो ॥३॥ वयं इंद्र त्वाऽयवः अभि प्र नोनुमः वृषन्
विद्धि तु अस्य नः वसो ॥४॥ मा नः निदे च वक्तवे अर्यः रंधीः
अराव्णे त्वे अपि क्रतुः मम ॥५॥ त्वं वर्म असि सऽप्रथः पुरः-
ऽयोधः च वृत्रऽहन् त्वया प्रति ब्रुवे युजा ॥६॥१५॥ महान् उत
असि यस्य ते अनु स्वधाऽवरी॰ सहः मम्नाते इंद्र रोदसी ॥७॥
तं त्वा मरुत्वती परि भुवत् वाणी सऽयावरी नक्षमाणा सह द्यु-
ऽभिः ॥८॥ ऊर्ध्वासः त्वा अनु इंदवः भुवन् दस्मं उप द्यवि सं ते
नमंत कृष्टयः ॥९॥ प्र वः महे महिऽवृधे भरध्वं प्रऽचेतसे प्र सुऽम-
तिं कृणुध्वं विशः पूर्वीः प्र चर चर्षणिऽप्राः ॥१०॥ उरुऽव्यचसे
महिने सुऽवृक्तिं इंद्राय ब्रह्म जनयंत विप्राः तस्य व्रतानि न मि-
नंति धीराः ॥११॥ इंद्रं वाणीः अनुत्तऽमन्युं एव सत्रा राजानं
दधिरे सहध्यै हरिऽअश्वाय बर्हय सं आपीन् ॥१२॥१६॥

---

॥३२॥ मो सु त्वा वाघतः चन आरे अस्मत् नि रीरमन् आ-
रात्तात् चित् सधऽमादं नः आ गहि इह वा सन् उप श्रुधि ॥१॥ इमे
हि ते ब्रह्मऽकृतः सुते सचा मधौ न मक्षः आसते इंद्रे कामं जरिता-
रः वसुऽयवः रथे न पादं आ दधुः ॥२॥ रायःऽकामः वज्रऽहस्तं सु-



Digitized by Google

दक्षिणं पुत्रो न पितरं हुवे ॥३॥ इम इंद्राय सुन्विरे सोमासो
दध्याशिरः। ताँ आ मदाय वज्रहस्त पीतये हरिभ्यां याह्योक
आ ॥४॥ श्रवच्छ्रुत्कर्ण ईयते वसूनां नू चिन्नो मर्धिषद्गि-
रः। सद्यश्चिद्यः सहस्राणि शता ददन्नकिर्दित्संतमा मिनत्
॥५॥१७॥ स वीरो अप्रतिष्कुत इंद्रेण शूशुवे नृभिः। यस्ते
गभीरा सवनानि वृत्रहन्त्सुनोत्या च धावति ॥६॥ भवा
वरूथं मघवन्मघोनां यत्समजासि शर्धतः। वि त्वाहतस्य
वेदनं भजेमह्या दूणाशो भरा गयं ॥७॥ सुनोता सोमपाव्ने
सोममिंद्राय वज्रिणे। पचता पक्तीरवसे कृणुध्वमित्पृणन्नित्पृ-
णते मयः॥८॥ मा स्रेधत सोमिनो दक्षता महे कृणुध्वं राय आ-
तुजे। तरणिरिज्जयति क्षेति पुष्यति न देवासः कवत्नवे ॥९॥
नकिः सुदासो रथं पर्यास न रीरमत्। इंद्रो यस्याविता यस्य म-
रुतो गमत्स गोमति व्रजे॥१०॥१८॥ गमद्वाजं वाजयन्निंद्र मर्त्यो
यस्य त्वमविता भुवः। अस्माकं बोध्यविता रथानामस्माकं
शूर नृणां ॥११॥ उदिन्न्वस्य रिच्यतेऽंशो धनं न जिग्युषः।
य इंद्रो हरिवान्न दभंति तं रिपो दक्षं दधाति सोमिनि ॥१२॥
मंत्रमखर्वं सुधितं सुपेशसं दधात यज्ञियेष्वा। पूर्वीश्चन प्र-
सितयस्तरंति तं य इंद्रे कर्मणा भुवत्॥१३॥ कस्तमिंद्र त्वावसु-
मा मर्त्यो दधर्षति। श्रद्धा इत्ते मघवन्पार्ये दिवि वाजी वाजं
सिषासति ॥१४॥ मघोनः स्म वृत्रहत्येषु चोदय ये ददति
प्रिया वसु। तव प्रणीती हर्यश्व सूरिभिर्विश्वा तरेम दुरिता
॥१५॥१९॥ तवेदिंद्रावमं वसु त्वं पुष्यसि मध्यमं। सत्रा विश्वस्य
परमस्य राजसि नकिष्ट्वा गोषु वृण्वते ॥१६॥ त्वं विश्वस्य
धनदा असि श्रुतो य ईं भवंत्याजयः। तवायं विश्वः पुरु-



Digitized by Google

ऽदक्षिणं पुत्रः न पितरं हुवे ॥३॥ इमे इंद्राय सुन्विरे सोमासः द-
धिऽआशिरः तान् आ मदाय वज्रऽहस्त पीतये हरिऽभ्यां याहि
ओकः आ ॥४॥ श्रवत् श्रुतऽकर्णः ईयते वसूनां नु चित् नः मर्धि-
षत् गिरः सद्यः चित् यः सहस्राणि शता ददत् नकिः दित्सन्तं आ
मिनत् ॥५॥१७॥ सः वीरः अप्रतिऽस्कुतः इंद्रेण शूशुवे नृऽभिः यः
ते गभीरा सवनानि वृत्रऽहन् सुनोति आ च धावति ॥६॥ भव
वरूथं मघऽवन् मघोनां यत् संऽअजासि शर्धतः वि त्वाऽहतस्य
वेदनं भजेमहि आ दुःऽनशः भर गयं ॥७॥ सुनोत सोमऽपाव्ने
सोमं इंद्राय वज्रिणे पचत पक्तीः अवसे कृणुध्वं इत् पृणन् इत् पृ-
णते मयः ॥८॥ मा स्रेधत सोमिनः दक्षत महे कृणुध्वं राये आऽतु-
जे तरणिः इत् जयति क्षेति पुष्यति न देवासः कवत्नवे ॥९॥ नकिः
सुऽदासः रथं परि आस न रीरमत् इंद्रः यस्य अविता यस्य मरुतः
गमत् सः गोऽमति व्रजे ॥१०॥१८॥ गमत् वाजं वाजयन् इंद्र मर्त्यः
यस्य त्वं अविता भुवः अस्माकं बोधि अविता रथानां अस्माकं
शूर नृणां ॥११॥ उत् इत् नु अस्य रिष्यते अंशः धनं न जिग्युषः
यः इंद्रः हरिऽवान् न दभंति तं रिपः दक्षं दधाति सोमिनि ॥१२॥
मंत्रं अखर्वं सुऽधितं सुऽपेशसं दधात यज्ञियेषु आ पूर्वीः चन प्र-
ऽसितयः तरंति तं यः इंद्रे कर्मणा भुवत् ॥१३॥ कः तं इंद्र त्वाऽवसुं
आ मर्त्यः दधर्षति श्रद्धा इत् ते मघऽवन् पार्ये दिवि वाजी वाजं
सिसासति ॥१४॥ मघोनः स्म वृत्रऽहत्येषु चोदय ये ददति प्रिया
वसु तव प्रऽनीती हरिऽअश्व सूरिऽभिः विश्वा तरेम दुःऽइता
॥१५॥१९॥ तव इत् इंद्र अवमं वसु त्वं पुष्यसि मध्यमं सत्रा वि-
श्वस्य परमस्य राजसि नकिः त्वा गोषु वृण्वते ॥१६॥ त्वं विश्वस्य
धनऽदाः असि श्रुतः ये ईं भवंति आजयः तव अयं विश्वः पुरु-



Digitized by Google

हूत पार्थिवोऽवस्युर्नाम भिक्षते ॥१७॥ यदिंद्र यावतस्त्वमेता-
वदहमीशीय। स्तोतारमिद्दिधिषेय रदावसो न पापत्वाय रा-
सीय ॥१८॥ शिक्षेयमिन्महयते दिवेदिवे राय आ कुहचिद्विदे।
नहि त्वदन्यन्मघवन्न आप्यं वस्यो अस्ति पिता चन ॥१९॥ तर-
णिरित्सिषासति वाजं पुरंध्या युजा। आ व इंद्रं पुरुहूतं नमे
गिरा नेमिं तष्टेव सुद्र्वं ॥२०॥२०॥ न दुष्टुती मर्त्यो विंदते वसु
न स्रेधंतं रयिर्नशत्। सुशक्तिरिन्मघवन्तुभ्यं मावते देष्णं यत्पार्ये
दिवि ॥२१॥ अभि त्वा शूर नोनुमोऽदुग्धा इव धेनवः। ईशा-
नमस्य जगतः स्वर्दृशमीशानमिंद्र तस्थुषः ॥२२॥ न त्वावाँ
अन्यो दिव्यो न पार्थिवो न जातो न जनिष्यते। अश्वायंतो
मघवन्निंद्र वाजिनो गव्यंतस्त्वा हवामहे ॥२३॥ अभी षतस्तदा
भरेंद्र ज्यायः कनीयसः। पुरूवसुर्हि मघवन्सनादसि भरेभरे च
हव्यः ॥२४॥ परा णुदस्व मघवन्नमित्रान्सुवेदा नो वसू कृधि।
अस्माकं बोध्यविता महाधने भवा वृधः सखीनां ॥२५॥ इंद्र
क्रतुं न आ भर पिता पुत्रेभ्यो यथा। शिक्षा णो अस्मिन्पुरुहूत
यामनि जीवा ज्योतिरशीमहि ॥२६॥ मा नो अज्ञाता वृजना
दुराध्यो३ माशिवासो अव क्रमुः। त्वया वयं प्रवतः शश्वतीर-
पोऽति शूर तरामसि ॥२७॥२१॥

---

॥ ३३ ॥ १—१४ संस्तवो वसिष्ठस्य सपुत्रस्येंद्रेण वा संवादः ॥ १—९ वसिष्ठः।
१०—१४ वसिष्ठपुत्राः ॥ १—९ वसिष्ठपुत्राः। १०—१४ वसिष्ठः ॥ त्रिष्टुप् ॥

॥३३॥ श्वित्यंचो मा दक्षिणतस्कपर्दा धियंजिन्वासो अभि
हि प्रमंदुः। उत्तिष्ठन्वोचे परि बर्हिषो नॄन्न मे दूरादवि-
तवे वसिष्ठाः ॥१॥ दूरादिंद्रमनयन्ना सुतेन तिरो वैशंतम-
ति पांतमुग्रं। पाशद्युम्नस्य वायतस्य सोमात्सुतादिंद्रो अवृ-



Digitized by Google

ऽहूत पार्थिवः अवस्युः नाम भिक्षते ॥१७॥ यत् इंद्र यावतः त्वं
एतावत् अहं ईशीय स्तोतारं इत् दिधिषेय रदऽवसो॰ न पापऽ-
ऽत्वाय रासीय ॥१८॥ शिक्षेयं इत् महऽयते दिवेऽदिवे रायः आ
कुहचित्ऽविदे नहि त्वत् अन्यत् मघऽवन् नः आप्यं वस्यः अस्ति
पिता चन ॥१९॥ तरणिः इत् सिसासति वाजं पुरंऽध्या युजा आ
वः इंद्रं पुरुऽहूतं नमे गिरा नेमिं तष्टाऽइव सुऽद्रुं ॥२०॥२०॥ न
दुःऽस्तुती मर्त्यः विंदते वसु न स्रेधंतं रयिः नशत् सुऽशक्तिः इत्
मघऽवन् तुभ्यं माऽवते देष्णं यत् पार्ये दिवि ॥२१॥ अभि त्वा शूर
नोनुमः अदुग्धाःऽइव धेनवः ईशानं अस्य जगतः स्वःऽदृशं
ईशानं इंद्र तस्थुषः ॥२२॥ न त्वाऽवान् अन्यः दिव्यः न पार्थिवः
न जातः न जनिष्यते अश्वऽयंतः मघऽवन् इंद्र वाजिनः गव्यंतः
त्वा हवामहे ॥२३॥ अभि सतः तत् आ भर इंद्र ज्यायः कनीयसः
पुरुऽवसुः हि मघऽवन् सनात् असि भरेऽभरे च हव्यः ॥२४॥ परा
नुदस्व मघऽवन् अमित्रान् सुऽवेदा नः वसु कृधि अस्माकं बोधि
अविता महाऽधने भव वृधः सखीनां ॥२५॥ इंद्र क्रतुं नः आ भर
पिता पुत्रेभ्यः यथा शिक्ष नः अस्मिन् पुरुऽहूत यामनि जीवाः
ज्योतिः अशीमहि ॥२६॥ मा नः अज्ञाताः वृजनाः दुःऽआध्यः
मा अशिवासः अव क्रमुः त्वया वयं प्रऽवतः शश्वतीः अपः अति
शूर तरामसि ॥२७॥२१॥

---

॥३३॥ श्वित्यंचः मा दक्षिणतःऽकपर्दाः धियंऽजिन्वासः अ-
भि हि प्रऽमंदुः उत्ऽतिष्ठन् वोचे परि बर्हिषः नॄन् न मे दूरात्
अवितवे वसिष्ठाः ॥१॥ दूरात् इंद्रं अनयन् आ सुतेन तिरः वैशंतं
अति पांतं उग्रं पाशऽद्युम्नस्य वायतस्य सोमात् सुतात् इंद्रः अवृ-



Digitized by Google

णीता वसिष्ठान् ॥२॥ एवेन्नु कं सिंधुमेभिस्ततारेवेन्नु कं
भेदमेभिर्जघान। एवेन्नु कं दाशराज्ञे सुदासं प्रावदिंद्रो ब्रह्म-
णा वो वसिष्ठाः ॥३॥ जुष्टी नरो ब्रह्मणा वः पितॄणाम-
क्षमव्ययं न किला रिषाथ। यच्छक्करीषु बृहता रवेणेंद्रे
शुष्ममदधाता वसिष्ठाः ॥४॥ उद्द्यामिवेत्तृष्णजो नाथिता-
सोऽदीधयुर्दाशराज्ञे वृतासः। वसिष्ठस्य स्तुवत इंद्रो अश्रोदुरुं
तृत्सुभ्यो अकृणोदु लोकं ॥५॥२२॥ दंडा इवेद्गोअजनास
आसन्परिच्छिन्ना भरता अर्भकासः। अभवच्च पुरएता व-
सिष्ठ आदित्तृत्सूनां विशो अप्रथंत ॥६॥ त्रयः कृण्वंति
भुवनेषु रेतस्तिस्रः प्रजा आर्या ज्योतिरग्राः। त्रयो घर्मास
उषसं सचंते सर्वाँ इत्ताँ अनु विदुर्वसिष्ठाः ॥७॥ सूर्य-
स्येव वक्षथो ज्योतिरेषां समुद्रस्येव महिमा गभीरः।
वातस्येव प्रजवो नान्येन स्तोमो वसिष्ठा अन्वेतवे वः ॥८॥
त इन्निण्यं हृदयस्य प्रकेतैः सहस्रवल्शमभि सं चरंति।
यमेन ततं परिधिं वयंतोऽप्सरस उप सेदुर्वसिष्ठाः ॥९॥
विद्युतो ज्योतिः परि संजिहानं मित्रावरुणा यदपश्यतां
त्वा। तत्ते जन्मोतैकं वसिष्ठागस्त्यो यत्त्वा विश आजभार
॥१०॥२३॥ उतासि मैत्रावरुणो वसिष्ठोर्वश्या ब्रह्मन्मनसो-
ऽधि जातः। द्रप्सं स्कन्नं ब्रह्मणा दैव्येन विश्वे देवाः पुष्करे
त्वाददंत ॥११॥ स प्रकेत उभयस्य प्रविद्वान्सहस्रदान उत
वा सदानः। यमेन ततं परिधिं वयिष्यन्नप्सरसः परि जज्ञे
वसिष्ठः ॥१२॥ सत्रे ह जाताविषिता नमोभिः कुंभे रेतः सि-
षिचतुः समानं। ततो ह मान उदियाय मध्यात्ततो जातमृ-
षिमाहुर्वसिष्ठं ॥१३॥ उक्थभृतं सामभृतं बिभर्ति ग्रावाणं वि-



Digitized by Google

श्रीत वसिष्ठान्॥२॥ एव इत् नु कं सिंधुं एभिः ततार एव इत् नु कं
भेदं एभिः जघान एव इत् नु कं दाशऽराज्ञे सुऽदासं प्र आवत्
इंद्रः ब्रह्मणा वः वसिष्ठाः ॥३॥ जुष्टी नरः ब्रह्मणा वः पितृणां
अक्षं अव्ययं न किल रिषाथ यत् शक्करीषु बृहता रवेण इंद्रे शुष्मं
अदधात वसिष्ठाः ॥४॥ उत् द्यांऽइव इत् तृष्णऽजः नाथितासः
अदीधयुः दाशऽराज्ञे वृतासः वसिष्ठस्य स्तुवतः इंद्रः अश्रोत् उरुं
तृत्सुऽभ्यः अकृणोत् ऊं लोकं ॥ ५ ॥ २२ ॥ दंडाःऽइव इत् गोऽअ-
जनासः आसन् परिऽछिन्नाः भरताः अर्भकासः अभवत् च पु-
रःऽएता वसिष्ठः आत् इत् तृत्सूनां विशः अप्रथंत ॥ ६ ॥ त्रयः कृ-
ण्वंति भुवनेषु रेतः तिस्रः प्रऽजाः आर्याः ज्योतिःऽअग्राः त्रयः
घर्मासः उषसं सचंते सर्वान् इत् तान् अनु विदुः वसिष्ठाः ॥ ७ ॥
सूर्यस्यऽइव वक्षथः ज्योतिः एषां समुद्रस्यऽइव महिमा गभीरः
वातस्यऽइव प्रऽजवः न अन्येन स्तोमः वसिष्ठाः अनुऽएतवे वः
॥ ८ ॥ ते इत् निण्यं हृदयस्य प्रऽकेतैः सहस्रऽवल्शं अभि सं चरंति
यमेन ततं परिऽधिं वयंतः अप्सरसः उप सेदुः वसिष्ठाः ॥ ९ ॥ वि-
ऽद्युतः ज्योतिः परि संऽजिहानं मित्रावरुणा यत् अपश्यतां त्वा
तत् ते जन्म उत एकं वसिष्ठ अगस्त्यः यत् त्वा विशः आऽजभार
॥ १० ॥ २३ ॥ उत असि मैत्रावरुणः वसिष्ठ उर्वश्याः ब्रह्मन् मनसः
अधि जातः द्रप्सं स्कन्नं ब्रह्मणा दैव्येन विश्वे देवाः पुष्करे त्वा अद-
दंत ॥ ११ ॥ सः प्रऽकेतः उभयस्य प्रऽविद्वान् सहस्रऽदानः उत
वा सऽदानः यमेन ततं परिऽधिं वयिष्यन् अप्सरसः परि जज्ञे
वसिष्ठः ॥ १२ ॥ सत्रे ह जातौ इषिता नमःऽभिः कुंभे रेतः सिसि-
चतुः समानं ततः ह मानः उत् इयाय मध्यात् ततः जातं ऋषिं
आहुः वसिष्ठं ॥ १३ ॥ उक्थऽभृतं सामऽभृतं बिभर्ति ग्रावाणं बि-

26 *

Digitized by Google

भत्म वदात्यये। उपैनमाध्वं सुमनस्यमाना आ वो गच्छाति प्रतृदो वसिष्ठः ॥१४॥२४॥२॥

॥ ३४ ॥ १—२५ वसिष्ठः ॥ १—१५. १८—२५ विश्वे देवाः । १६ अहिः । १७ अहिर्बुध्न्यः ॥
१—२१ द्विपदा । २२—२५ त्रिष्टुप् ॥

॥३४॥ प्र शुक्रैतु देवी मनीषा अस्मत्सुतष्टो रथो न वाजी
॥१॥ विदुः पृथिव्या दिवो जनित्रं शृण्वन्त्यापो अध क्षरन्तीः ॥२॥
आपश्चिदस्मै पिन्वन्त पृथ्वीर्वृत्रेषु शूरा मंसन्त उग्राः ॥३॥ आ
धूर्ष्वस्मै दधाताश्वानिन्द्रो न वज्री हिरण्यबाहुः ॥४॥ अभि प्र
स्थाताहेव यज्ञं यातेव पत्मन्त्मना हिनोत ॥५॥ त्मना समत्सु
हिनोत यज्ञं दधात केतुं जनाय वीरं ॥६॥ उदस्य शुष्माद्भा-
नुर्नार्त बिभर्ति भारं पृथिवी न भूम ॥७॥ ह्वयामि देवाँ अया-
तुरग्ने साधन्नृतेन धियं दधामि ॥८॥ अभि वो देवीं धियं
दधिध्वं प्र वो देवत्रा वाचं कृणुध्वं ॥९॥ आ चष्ट आसां पाथो
नदीनां वरुण उग्रः सहस्रचक्षाः ॥१०॥२५॥ राजा राष्ट्रानां
पेशो नदीनामनुत्तमस्मै क्षत्रं विश्वायु ॥११॥ अविष्टो अ-
स्मान्विश्वासु विक्ष्वद्युं कृणोत शंसं निनित्सोः ॥१२॥ व्येतु दि-
द्युद्द्विषामशेवा युयोत विष्वग्रपस्तनूनां ॥१३॥ अवीन्नो अग्निर्ह-
व्यान्नमोभिः प्रेष्ठो अस्मा अधायि स्तोमः ॥१४॥ सजूर्देवेभि-
रपां नपातं सखायं कृध्वं शिवो नो अस्तु ॥१५॥ अब्जामुक्थैरहिं
गृणीषे बुध्ने नदीनां रजःसु षीदन् ॥१६॥ मा नोऽहिर्बुध्न्यो
रिषे धान्मा यज्ञो अस्य स्रिधदृतायोः ॥१७॥ उत नः एषु
नृषु श्रवो धुः प्र राये यन्तु शर्धन्तो अर्यः ॥१८॥ तपन्ति शत्रुं स्वर्ण
भूमा महासेनासो अमेभिरेषां ॥१९॥ आ यन्नः पत्नीर्ग-
मन्त्यच्छा त्वष्टा सुपाणिर्दधातु वीरान् ॥२०॥२६॥ प्रति नः



Digitized by Google

अंत् प्र वदाति अग्ने उर्प एनं आध्वं सुऽमनस्यमानाः आ वः गच्छाति प्रऽतृदः वसिष्ठः ॥ १४ ॥ २४ ॥ २ ॥

---

॥ ३४ ॥ प्र शुक्रा एतु देवी मनीषा अस्मत् सुऽतष्टः रथः न वाजी ॥ १ ॥ विदुः पृथिव्याः दिवः जनित्रं शृण्वंति आपः अर्ध क्षरंतीः ॥ २ ॥ आपः चित् अस्मै पिन्वंत पृथ्वीः वृत्रेषु शूराः मंसंते उग्राः ॥ ३ ॥ आ धूःऽसु अस्मै दधात अश्वान् इंद्रः न वज्री हिरण्यऽबाहुः ॥ ४ ॥ अभि प्र स्थात अहेऽइव यज्ञं यातोऽइव पत्मन् त्मना हिनोत ॥ ५ ॥ त्मना समत्ऽसु हिनोत यज्ञं दधात केतुं जनाय वीरं ॥ ६ ॥ उत् अस्य शुष्मात् भानुः न आर्त बिभर्ति भारं पृथिवी न भूम ॥ ७ ॥ ह्वयामि देवान् अयातुः अग्ने साधन् ऋतेन धियं दधामि ॥ ८ ॥ अभि वः देवीं धियं दधिध्वं प्र वः देवऽत्रा वाचं कृणुध्वं ॥ ९ ॥ आ चष्टे आसां पार्थः नदीनां वरुणः उग्रः सहस्रऽचक्षाः ॥ १० ॥ २५ ॥ राजा राष्ट्रानां पेशः नदीनां अनुत्तं अस्मै क्षत्रं विश्वऽआयु ॥ ११ ॥ अविष्टो अस्मान् विश्वासु विक्षु अद्युं कृणोत शंसं निनित्सोः ॥ १२ ॥ वि एतु दिद्युत् द्विषां अशेवा युयोत विष्वक् रपः तनूनां ॥ १३ ॥ अवीत् नः अग्निः हव्यऽअत् नमःऽभिः प्रेष्ठः अस्मै अधायि स्तोमः ॥ १४ ॥ सऽजूः देवेभिः अपां नपातं सखायं कृध्वं शिवः नः अस्तु ॥ १५ ॥ अप्ऽजां उक्थैः अहिं गृणीषे बुध्ने नदीनां रजःऽसु सीदन् ॥ १६ ॥ मा नः अहिः बुध्न्यः रिषे धात् मा यज्ञः अस्य स्रिधत् ऋतऽयोः ॥ १७ ॥ उत नः एषु नृषु श्रवः धुः प्र राये यंतु शर्धंतः अर्यः ॥ १८ ॥ तपंति शत्रुं स्वः न भूम महाऽसेनासः अमेभिः एषां ॥ १९ ॥ आ यत् नः पत्नीः गमंति अच्छ त्वष्टा सुऽपाणिः दधातु वीरान् ॥ २० ॥ २६ ॥ प्रति नः



Digitized by Google

स्तोमं त्वष्टा जुषेत स्यादस्मे अरमतिर्वसूयुः ॥२१॥ ता नो रासन्रातिषाचो वसून्या रोदसी वरुणानी शृणोतु । वरूत्रीभिः सुशरणो नो अस्तु त्वष्टा सुदत्रो वि दधातु रायः॥२२॥ तन्नो रायः पर्वतास्तन्न आपस्तद्रातिषाच ओषधीरुत द्यौः । वनस्पतिभिः पृथिवी सजोषा उभे रोदसी परि पासतो नः ॥२३॥ अनु तदुर्वी रोदसी जिहातामनु द्युक्षो वरुण इंद्रसखा । अनु विश्वे मरुतो ये सहासो रायः स्याम धरुणं धियध्यै ॥२४॥ तन्न इंद्रो वरुणो मित्रो अग्निराप ओषधीर्वनिनो जुषंत । शर्मन्त्स्याम मरुतामुपस्थे यूयं पात स्वस्तिभिः सदा नः ॥२५॥२७॥

---

॥ ३५ ॥ १–१५ वसिष्ठः ॥ विश्वे देवाः ॥ त्रिष्टुप् ॥

॥३५॥ शं न इंद्राग्नी भवतामवोभिः शं न इंद्रावरुणा रातहव्या । शमिंद्रासोमा सुविताय शं योः शं न इंद्रापूषणा वाजसातौ ॥१॥ शं नो भगः शमु नः शंसो अस्तु शं नः पुरंधिः शमु संतु रायः । शं नः सत्यस्य सुयमस्य शंसः शं नो अर्यमा पुरुजातो अस्तु ॥२॥ शं नो धाता शमु धर्ता नो अस्तु शं न उरूची भवतु स्वधाभिः । शं रोदसी बृहती शं नो अद्रिः शं नो देवानां सुहवानि संतु ॥३॥ शं नो अग्निर्ज्योतिरनीको अस्तु शं नो मित्रावरुणावश्विना शं । शं नः सुकृतां सुकृतानि संतु शं न इषिरो अभि वातु वातः ॥४॥ शं नो द्यावापृथिवी पूर्वहूतौ शमंतरिक्षं दृशये नो अस्तु । शं न ओषधीर्वनिनो भवंतु शं नो रजसस्पतिरस्तु जिष्णुः ॥५॥२८॥ शं न इंद्रो वसुभिर्देवो अस्तु शमादित्येभिर्वरुणः सुशंसः । शं नो रुद्रो रुद्रेभिर्जलाषः शं नस्त्वष्टा ग्नाभिरिह शृणोतु ॥६॥ शं नः सोमो भवतु



Digitized by Google

स्तोमं त्वष्टा जुषेत स्यात् अस्मे अरंऽमतिः वसुऽयुः ॥२१॥ ता नः रासन् रातिऽसाचः वसूनि आ रोदसी वरुणानी शृणोतु वरूत्रीभिः सुऽशरणः नः अस्तु त्वष्टा सुऽदत्रः वि दधातु रायः ॥२२॥ तत् नः रायः पर्वताः तत् नः आपः तत् रातिऽसाचः ओषधीः उत द्यौः वनस्पतिऽभिः पृथिवी सऽजोषाः उभे रोदसी परि पासतः नः ॥२३॥ अनु तत् उर्वी रोदसी जिहातां अनु द्युक्षः वरुणः इंद्रऽसखा अनु विश्वे मरुतः ये सहासः रायः स्याम धरुणं धियध्यै॥२४॥ तत् नः इंद्रः वरुणः मित्रः अग्निः आपः ओषधीः वनिनः जुषंत शर्मन् स्याम मरुतां उपऽस्थे यूयं पात स्वस्तिऽभिः सदा नः ॥२५॥२७॥

---

॥३५॥ शं नः इंद्राग्नी भवतां अवःऽभिः शं नः इंद्रावरुणा रातऽहव्या शं इंद्रासोमा सुविताय शं योः शं नः इंद्रापूषणा वाजऽसातौ ॥१॥ शं नः भगः शं ऊं नः शंसः अस्तु शं नः पुरंऽधिः शं ऊं संतु रायः शं नः सत्यस्य सुऽयमस्य शंसः शं नः अर्यमा पुरुऽजातः अस्तु ॥२॥ शं नः धाता शं ऊं धर्ता नः अस्तु शं नः उरूची भवतु स्वधाभिः शं रोदसी बृहती शं नः अद्रिः शं नः देवानां सुऽहवानि संतु ॥३॥ शं नः अग्निः ज्योतिःऽअनीकः अस्तु शं नः मित्रावरुणौ अश्विना शं शं नः सुऽकृतां सुऽकृतानि संतु शं नः इषिरः अभि वातु वातः ॥४॥ शं नः द्यावापृथिवी पूर्वऽहूतौ शं अंतरिक्षं दृशये नः अस्तु शं नः ओषधीः वनिनः भवंतु शं नः रजसः पतिः अस्तु जिष्णुः ॥५॥२८॥ शं नः इंद्रः वसुऽभिः देवः अस्तु शं आदित्येभिः वरुणः सुऽशंसः शं नः रुद्रः रुद्रेभिः जलाषः शं नः त्वष्टा ग्नाभिः इह शृणोतु ॥६॥ शं नः सोमः भवतु



Digitized by Google

ब्रह्म शं नः॒ शं नो॒ ग्रावा॑णः॒ शमु॑ सन्तु य॒ज्ञाः । शं नः॒ स्वरू॑णां मि॒त-
यो॑ भवन्तु॒ शं नः॑ प्र॒स्व१ः॒ शम्व॑स्तु॒ वेदिः॑ ॥७॥ शं नः॒ सूर्य॑ उरु॒चक्षा॒
उदे॑तु॒ शं न॒श्चत॑स्रः प्र॒दिशो॑ भवन्तु । शं नः॒ पर्व॑ता ध्रु॒वयो॑ भवन्तु॒ शं
नः॒ सिन्ध॑वः॒ शमु॑ सन्त्वापः॑ ॥८॥ शं नो॒ अदि॑तिर्भवतु व्र॒तेभि॒ः शं नो॑
भवन्तु म॒रुतः॑ स्व॒र्काः । शं नो॒ विष्णुः॒ शमु॑ पू॒षा नो॑ अस्तु॒ शं नो॑
भ॒वित्रं॒ शम्व॑स्तु वा॒युः ॥९॥ शं नः॑ दे॒वः स॑वि॒ता त्राय॑माणः॒ शं नो॑
भवन्तू॒षसो॑ विभा॒तीः । शं नः॑ प॒र्जन्यो॑ भवतु प्र॒जाभ्यः॒ शं नः॒ क्षे-
त्र॑स्य॒ पति॑रस्तु श॒म्भुः ॥१०॥२९॥ शं नो॑ दे॒वा वि॒श्वदे॑वा भवन्तु॒ शं
सर॑स्वती स॒ह धी॒भिर॑स्तु । शम॑भि॒षाचः॒ शमु॑ राति॒षाचः॒ शं नो॑
दि॒व्याः पार्थि॑वाः॒ शं नो॒ अप्याः॑ ॥११॥ शं नः॑ स॒त्यस्य॒ पत॑यो
भवन्तु॒ शं नो॒ अर्व॑न्तः॒ शमु॑ सन्तु॒ गावः॑ । शं न॑ ऋ॒भवः॑ सु॒कृतः॑ सु॒ह-
स्ताः॒ शं नो॑ भवन्तु पि॒तरो॒ हवे॑षु ॥१२॥ शं नो॑ अ॒ज एक॑पाद्दे॒वो
अ॑स्तु॒ शं नोऽहि॑र्बु॒ध्न्य१ः॒ शं स॑मु॒द्रः । शं नो॑ अ॒पां नपा॑त्पे॒रुर॑स्तु॒
शं नः॒ पृश्नि॑र्भवतु दे॒वगो॑पा ॥१३॥ आ॒दि॒त्या रु॒द्रा वस॑वो जुषन्-
ते॒दं ब्रह्म॑ क्रि॒यमा॑णं॒ नवी॑यः । शृ॒ण्वन्तु॑ नो दि॒व्याः पार्थि॑वासो॒
गोजा॑ता उ॒त ये य॒ज्ञिया॑सः ॥१४॥ ये दे॒वानां॑ य॒ज्ञिया॑ य॒ज्ञिया॑-
नां॒ मनो॒र्यज॑त्रा अ॒मृता॑ ऋत॒ज्ञाः । ते नो॑ रासन्तामुरुगा॒यम॒द्य
यू॒यं पा॑त स्व॒स्तिभिः॒ सदा॑ नः ॥१५॥३०॥३॥

---

॥ ३६ ॥ १–९ वसिष्ठः ॥ विश्वे देवाः ॥ त्रिष्टुप् ॥

॥३६॥ प्र ब्रह्मै॑तु॒ सद॑नादृ॒तस्य॒ वि र॒श्मिभि॑ः ससृजे॒ सूर्यो॒
गाः । वि सानु॑ना पृथि॒वी स॑स्र उ॒र्वी पृ॒थु प्रती॑कम॒ध्येधे॑
अ॒ग्निः ॥१॥ इ॒मां वां॑ मित्रावरुणा सुवृ॒क्तिमिषं॒ न कृ॑ण्वे असु-
रा॒ नवी॑यः । इ॒नो वा॑म॒न्यः प॑द॒वीरद॑ब्धो॒ जनं॑ च मि॒त्रो यत-



Digitized by Google

ब्रह्म शं नः शं नः ग्रावाणः शं ऊं संतु यज्ञाः शं नः स्वरूणां मितयः
भवंतु शं नः प्रऽस्वः शं ऊं अस्तु वेदिः ॥७॥ शं नः सूर्यः उरुऽच-
क्षाः उत् एतु शं नः चतस्रः प्रऽदिशः भवंतु शं नः पर्वताः ध्रुवयः
भवंतु शं नः सिंधवः शं ऊं संतु आपः ॥८॥ शं नः अदितिः भवतु
व्रतेभिः शं नः भवंतु मरुतः सुऽअर्काः शं नः विष्णुः शं ऊं पूषा
नः अस्तु शं नः भवित्रं शं ऊं अस्तु वायुः ॥९॥ शं नः देवः सविता
त्रायमाणः शं नः भवंतु उषसः विऽभातीः शं नः पर्जन्यः भवतु
प्रऽजाभ्यः शं नः क्षेत्रस्य पतिः अस्तु शंऽभुः ॥१०॥२९॥ शं नः
देवाः विश्वऽदेवाः भवंतु शं सरस्वती सह धीभिः अस्तु शं अभि-
ऽसाचः शं ऊं रातिऽसाचः शं नः दिव्याः पार्थिवाः शं नः अप्याः
॥११॥ शं नः सत्यस्य पतयः भवंतु शं नः अर्वंतः शं ऊं संतु गावः
शं नः ऋभवः सुऽकृतः सुऽहस्ताः शं नः भवंतु पितरः हवेषु ॥१२॥
शं नः अजः एकऽपात् देवः अस्तु शं नः अहिः बुध्न्यः शं समुद्रः
शं नः अपां नपात् पेरुः अस्तु शं नः पृश्निः भवतु देवऽगोपाः
॥१३॥ आदित्याः रुद्राः वसवः जुषंत इदं ब्रह्म क्रियमाणं नवीयः
शृण्वंतु नः दिव्याः पार्थिवासः गोऽजाताः उत ये यज्ञियासः
॥१४॥ ये देवानां यज्ञियाः यज्ञियानां मनोः यजत्राः अमृताः
ऋतऽज्ञाः ते नः रासंतां उरुऽगायं अद्य यूयं पात स्वस्तिऽभिः
सदा नः ॥१५॥३०॥३॥

---

॥३६॥ प्र ब्रह्म एतु सदनात् ऋतस्य वि रश्मिऽभिः ससृजे
सूर्यः गाः वि सानुना पृथिवी सस्रे उर्वी पृथु प्रतीकं अधि आ
ईधे अग्निः ॥१॥ इमां वां मित्रावरुणा सुऽवृक्तिं इषं न कृण्वे अ-
सुरा नवीयः इनः वां अन्यः पदऽवीः अदब्धः जनं च मित्रः यत-



Digitized by Google

ति ब्रुवाणः ॥२॥ आ वार्तस्य ध्रजंतो रंत इत्या अपीपयंत धेनवो न सूदाः। महो दिवः सदने जायमानोऽचिक्रदद्वृषभः सस्मिन्नूधन् ॥३॥ गिरा य एता युनजद्धरी त इंद्र प्रिया सुरथा शूर धायू। प्र यो मन्युं रिरिक्षतो मिनात्या सुक्रतुमर्यमणं ववृत्यां ॥४॥ यजंते अस्य सख्यं वयश्च नमस्विनः स्व ऋतस्य धामन्। वि पृक्षो बाबधे नृभिः स्तवान इदं नमो रुद्राय प्रेष्ठं ॥५॥१॥ आ यत्साकं यशसो वावशानाः सरस्वती सप्तथी सिंधुमाता। याः सुष्वयंत सुदुघाः सुधारा अभि स्वेन पयसा पीप्यानाः ॥६॥ उत त्ये नो मरुतो मंदसाना धियं तोकं च वाजिनोऽवंतु। मा नः परि ख्यदक्षरा चरंत्यवीवृधन्युज्यं ते रयिं नः ॥७॥ प्र वो महीमरमतिं कृणुध्वं प्र पूषणं विदथ्यं न वीरं। भगं धियोऽवितारं नो अस्याः सातौ वाजं रातिषाचं पुरंधिं ॥८॥ अच्छायं वो मरुतः श्लोक एत्वच्छा विष्णुं निषिक्तपामवोभिः। उत प्रजायै गृणते वयो धुर्यूयं पात स्वस्तिभिः सदा नः ॥९॥२॥

---

॥ ३७ ॥ १–८ वसिष्ठः ॥ विश्वे देवाः ॥ त्रिष्टुप् ॥

॥३७॥ आ वो वाहिष्ठो वहतु स्तवध्यै रथो वाजा ऋभुक्षणो अमृक्तः। अभि त्रिपृष्ठैः सवनेषु सोमैर्मदे सुशिप्रा महभिः पृणध्वं ॥१॥ यूयं ह रत्नं मघवत्सु धत्थ स्वर्दृश ऋभुक्षणो अमृक्तं। सं यज्ञेषु स्वधावंतः पिबध्वं वि नो राधांसि मतिभिर्दयध्वं ॥२॥ उवोचिथ हि मघवन्देष्णं महो अर्भस्य वसुनो विभागे। उभा ते पूर्णा वसुना गभस्ती न सूनृता नि यमते वसव्या ॥३॥ त्वमिंद्र स्वयशा ऋभुक्षा वाजो न साधुरस्तमेष्यृक्वा। वयं नु ते दाश्वांसः स्याम ब्रह्म कृण्वंतो हरिवो वसिष्ठाः ॥४॥



Digitized by Google

ति ब्रुवाणः ॥२॥ आ वातस्य ध्रजतः रंते इत्याः अपीपयंत धेनवः न सूदाः महः दिवः सदने जायमानः अचिक्रदत् वृषभः सस्मिन् ऊधन् ॥३॥ गिरा यः एता युनजत् हरी इति ते इंद्र प्रिया सुऽरथा शूर धायू इति प्र यः मन्युं रिरिक्षतः मिनाति आ सुऽक्रतुं अर्यमणं ववृत्यां ॥४॥ यजंते अस्य सख्यं वयः च नमस्विनः स्वे ऋतस्य धामन् वि पृक्षः बाबधे नृऽभिः स्तवानः इदं नमः रुद्राय प्रेष्ठं ॥५॥१॥ आ यत् साकं यशसः वावशानाः सरस्वती सप्तथी सिंधुऽमाता याः सुस्वयंत सुऽदुघाः सुऽधाराः अभि स्वेन पयसा पीप्यानाः ॥६॥ उत त्ये नः मरुतः मंदसानाः धियं तोकं च वाजिनः अवंतु मा नः परि ख्यत् अक्षरा चरंती अवीवृधन् युज्यं ते रयिं नः ॥७॥ प्र वः महीं अरमतिं कृणुध्वं प्र पूषणं विदथ्यं न वीरं भगं धियः अवितारं नः अस्याः सातौ वाजं रातिऽसाचं पुरंऽधिं ॥८॥ अच्छ अयं वः मरुतः श्लोकः एतु अच्छ विष्णुं निसिक्तऽपां अवःऽभिः उत प्रऽजायै गृणते वयः धुः यूयं पात स्वस्तिऽभिः सदा नः ॥९॥२॥

---

॥३७॥ आ वः वाहिष्ठः वहतु स्तवध्यै रथः वाजाः ऋभुक्षणः अमृक्तः अभि त्रिऽपृष्ठैः सवनेषु सोमैः मदे सुऽशिप्राः महऽभिः पृणध्वं ॥१॥ यूयं ह रत्नं मघवत्ऽसु धत्थ स्वःऽदृशः ऋभुक्षणः अमृक्तं सं यज्ञेषु स्वधाऽवंतः पिबध्वं वि नः राधांसि मतिऽभिः दयध्वं ॥२॥ उवोचिथ हि मघऽवन् देष्णं महः अर्भस्य वसुनः विऽभागे उभा ते पूर्णा वसुना गभस्ती इति न सूनृता नि यमते वसव्या ॥३॥ त्वं इंद्र स्वऽयशाः ऋभुक्षाः वाजः न साधुः अस्तं एषि ऋक्वा वयं नु ते दाश्वांसः स्याम ब्रह्म कृण्वंतः हरिऽवः वसिष्ठाः ॥४॥



Digitized by Google

सनितासि प्रवतो दाशुषे चिद्याभिर्विवेषो हर्यश्व धीभिः । व-
वन्मा नु ते युज्याभिरूती कदा न इंद्र राय आ दशस्येः ॥५॥३॥
वासयसीव वेधसस्त्वं नः कदा न इंद्र वचसो बुबोधः । अस्तं ता-
त्या धिया रयिं सुवीरं पृक्षो नो अर्वा न्युहीत वाजी ॥६॥ अभि
यं देवी निर्ऋतिश्चिदीशे नक्षंत इंद्रं शरदः सुपृक्षः । उप त्रिबं-
धुर्जरदष्टिमेत्यस्ववेशं यं कृणवंत मर्ताः ॥७॥ आ नो राधांसि
सवितः स्तवध्या आ रायो यंतु पर्वतस्य रातौ । सदा नो दिव्यः
पायुः सिषक्तु यूयं पात स्वस्तिभिः सदा नः ॥८॥४॥

---

॥ ३८ ॥ १-८ वसिष्ठः ॥ १-६[1] सविता । ६[2] सविता भगो वा । ७.८ वाजिनः ॥ त्रिष्टुप् ॥

॥ ३८ ॥ उदु ष्य देवः सविता ययाम हिरण्ययीममतिं या-
मशिश्रेत् । नूनं भगो हव्यो मानुषेभिर्वि यो रत्ना पुरू-
वसुर्दधाति ॥१॥ उदु तिष्ठ सवितः श्रुध्य१स्य हिरण्यपाणे
प्रभृतावृतस्य । व्यु१र्वीं पृथ्वीममतिं सृजान आ नृभ्यो मर्त-
भोजनं सुवानः ॥२॥ अपि ष्टुतः सविता देवो अस्तु यमा चि-
द्विश्वे वसवो गृणंति । स नः स्तोमान्नमस्य१श्चनो धाद्विश्वेभिः
पातु पायुभिर्नि सूरीन् ॥३॥ अभि यं देव्यदितिर्गृणाति सवं
देवस्य सवितुर्जुषाणा । अभि सम्राजो वरुणो गृणंत्यभि
मित्रासो अर्यमा सजोषाः ॥४॥ अभि ये मिथो वनुषः सपंते
रातिं दिवो रातिषाचः पृथिव्याः । अहिर्बुध्न्य उत नः शृणोतु
वरूत्र्येकधेनुभिर्नि पातु ॥५॥ अनु तन्नो जास्पतिर्मंसीष्ट
रत्नं देवस्य सवितुरियानः । भगमुग्रोऽवसे जोहवीति भगम-
नुग्रो अध याति रत्नं ॥६॥ शं नो भवंतु वाजिनो हवेषु देवता-
ता मितद्रवः स्वर्काः । जंभयंतोऽहिं वृकं रक्षांसि सनेम्यस्म-



Digitized by Google

सनिता असि प्रऽवतः दाशुषे चित् याभिः विवेषः हरिऽअश्व धीभिः ववन्म नु ते युज्याभिः ऊती कदा नः इंद्र रायः आ दशस्येः ॥५॥३॥ वासयसिऽइव वेधसः त्वं नः कदा नः इंद्र वचसः बुबोधः अस्तं तात्या धिया रयिं सुऽवीरं पृक्षः नः अर्वा नि उहीत वाजी ॥६॥ अभि यं देवी निःऽऋतिः चित् ईशे नक्षंते इंद्रं शरदः सुऽपृक्षः उप त्रिऽबंधुः जरत्ऽअष्टिं एति अस्वऽवेशं यं कृणवंत मर्ताः ॥७॥ आ नः राधांसि सवितः स्तवध्यै आ रायः यंतु पर्वतस्य रातौ सदा नः दिव्यः पायुः सिसक्तु यूयं पात स्वस्तिऽभिः सदा नः ॥८॥४॥

---

॥३८॥ उत् ऊं स्यः देवः सविता ययाम हिरण्ययीं अमतिं यां अशिश्रेत् नूनं भगः हव्यः मानुषेभिः वि यः रत्ना पुरुऽवसुः दधाति ॥१॥ उत् ऊं तिष्ठ सवितः श्रुधि अस्य हिरण्यऽपाणे प्रऽभृतौ ऋतस्य वि उर्वीं पृथ्वीं अमतिं सृजानः आ नृऽभ्यः मर्तऽभोजनं सुवानः ॥२॥ अपि स्तुतः सविता देवः अस्तु यं आ चित् विश्वे वसवः गृणंति सः नः स्तोमान् नमस्यः चनः धात् विश्वेभिः पातु पायुऽभिः नि सूरीन् ॥३॥ अभि यं देवी अदितिः गृणाति सवं देवस्य सवितुः जुषाणा अभि संऽराजः वरुणः गृणंति अभि मित्रासः अर्यमा सऽजोषाः ॥४॥ अभि ये मिथः वनुषः सपंते रातिं दिवः रातिऽसाचः पृथिव्याः अहिः बुध्न्यः उत नः शृणोतु वरूत्री एकधेनुऽभिः नि पातु ॥५॥ अनु तत् नः जाःपतिः मंसीष्ट रत्नं देवस्य सवितुः इयानः भगं उग्रः अवसे जोहवीति भगं अनुग्रः अध याति रत्नं ॥६॥ शं नः भवंतु वाजिनः हवेषु देवऽताता मितऽद्रवः सुऽअर्काः जंभयंतः अहिं वृकं रक्षांसि सनेमि अस्मत्



Digitized by Google

युयवन्नमीवाः ॥७॥ वाजेवाजेऽवत वाजिनो नो धनेषु विप्रा
अमृता ऋतज्ञाः । अस्य मध्वः पिबत मादयध्वं तृप्ता यात
पथिभिर्देवयानैः ॥८॥५॥

॥३९॥ १–७ वसिष्ठः ॥ विश्वे देवाः ॥ त्रिष्टुप् ॥

॥३९॥ ऊर्ध्वो अग्निः सुमतिं वस्वो अश्रेत्प्रतीची जूर्णिर्देव-
तातिमेति । भेजाते अद्री रथ्येव पंथामृतं होता न इषितो यजा-
ति ॥१॥ प्र वावृजे सुप्रया बर्हिरेषामा विश्पतीव बीरिट इया-
ते । विशामक्तोरुषसः पूर्वहूतौ वायुः पूषा स्वस्तये नियुत्वान्
॥२॥ ज्मया अत्र वसवो रंत देवा उरावंतरिक्षे मर्जयंत शुभ्राः ।
अर्वाक्पथ उरुज्रयः कृणुध्वं श्रोता दूतस्य जग्मुषो नो अस्य ॥३॥
ते हि यज्ञेषु यज्ञियास ऊमाः सधस्थं विश्वे अभि संति देवाः । ताँ
अध्वर उशतो यक्ष्यग्ने श्रुष्टी भगं नासत्या पुरंधिं ॥४॥ आग्ने गि-
रो दिव आ पृथिव्या मित्रं वह वरुणमिंद्रमग्निं । आर्यमणम-
दितिं विष्णुमेषां सरस्वती मरुतो मादयंतां ॥५॥ ररे हव्यं मति-
भिर्यज्ञियानां नक्षत्कामं मर्त्यानामसिन्वन् । धाता रयिमवि-
दस्यं सदासां सक्षीमहि युज्येभिर्नु देवैः ॥६॥ नू रोदसी अभिष्टुते
वसिष्ठैर्ऋतावानो वरुणो मित्रो अग्निः । यच्छंतु चंद्रा उपमं नो
अर्कं यूयं पात स्वस्तिभिः सदा नः ॥७॥६॥

॥४०॥ १–७ वसिष्ठः ॥ विश्वे देवाः ॥ त्रिष्टुप् ॥

॥४०॥ ओ श्रुष्टिर्विदथ्या३ समेतु प्रति स्तोमं दधीमहि तुरा-
णां । यदद्य देवः सविता सुवाति स्यामास्य रत्निनो विभागे
॥१॥ मित्रस्तन्नो वरुणो रोदसी च द्युभक्तमिंद्रो अर्यमा
ददातु । दिदेष्टु देव्यदिती रेक्णो वायुश्च यन्नियुवैते भगश्च



Digitized by Google

गृयवन् अमीवाः ॥७॥ वाजेऽवाजे अवत वाजिनः नः धनेषु विप्राः अमृताः ऋतऽज्ञाः अस्य मध्वः पिबत मादयध्वं तृप्ताः यात पथिऽभिः देवऽयानैः ॥८॥५॥

---

॥३९॥ ऊर्ध्वः अग्निः सुऽमतिं वस्वः अश्रेत् प्रतीची जूर्णिः देवऽतातिं एति भेजाते॑ अद्री॑ रथ्याऽइव पंथां ऋतं होता नः इषितः यजाति ॥१॥ प्र ववृजे सुऽप्रयाः बर्हिः एषां आ विश्पतीऽइव॰ बीरिटे इयाते॑ विशां अक्तोः उषसः पूर्वऽहूतौ वायुः पूषा स्वस्तये नियुत्वान् ॥२॥ ज्मया अत्र वसवः रंत देवाः उरौ अंतरिक्षे मर्जयंत शुभ्राः अर्वाक् पथः उरुऽज्रयः कृणुध्वं श्रोत दूतस्य जग्मुषः नः अस्य ॥३॥ ते हि यज्ञेषु यज्ञियासः ऊमाः सधऽस्थं विश्वे अभि संति देवाः तान् अध्वरे उशतः यक्षि अग्ने श्रुष्टी भगं नासत्या पुरंऽधिं ॥४॥ आ अग्ने गिरः दिवः आ पृथिव्याः मित्रं वह वरुणं इंद्रं अग्निं आ अर्यमणं अदितिं विष्णुं एषां सरस्वती मरुतः मादयंतां ॥५॥ ररे हव्यं मतिऽभिः यज्ञियानां नक्षत् कामं मर्त्यानां असिन्वन् धात रयिं अविऽदस्यं सदाऽसां सक्षीमहि युज्येभिः नु देवैः ॥६॥ नु रोदसी॑ अभिऽस्तुते॰ वसिष्ठैः ऋतऽवानः वरुणः मित्रः अग्निः यच्छंतु चंद्राः उपऽमं नः अर्कं यूयं पात स्वस्तिऽभिः सदा नः ॥७॥६॥

---

॥४०॥ ओ॑ श्रुष्टिः विदथ्या सं एतु प्रति स्तोमं दधीमहि तुराणां यत् अद्य देवः सविता सुवाति स्याम अस्य रत्निनः विऽभागे ॥१॥ मित्रः तत् नः वरुणः रोदसी॑ च द्युऽभक्तं इंद्रः अर्यमा ददातु दिदेष्टु देवी अदितिः रेक्णः वायुः च यत् निऽयुवैते॰ भगः च

॥२॥ सेदुग्रो अस्तु मरुतः स शुष्मी यं मर्त्यं पृषदश्वा अवाथ। उ-
तेमग्निः सरस्वती जुनंति न तस्य रायः पर्येतास्ति॥३॥ अयं हि
नेता वरुण ऋतस्य मित्रो राजानो अर्यमापो धुः। सुहवा देव्य-
दितिरनर्वा ते नो अंहो अति पर्षन्नरिष्टान्॥४॥ अस्य देवस्य
मीळ्हुषो वया विष्णोरेषस्य प्रभृथे हविर्भिः। विदे हि रुद्रो रु-
द्रियं महित्वं यासिष्टं वर्तिरश्विनाविरावत्॥५॥ मात्र पूषन्ना-
घृण इरस्यो वरूत्री यद्रातिषाचश्च रासन्। मयोभुवो नो अर्व-
तो नि पांतु वृष्टिं परिज्मा वातो ददातु॥६॥ नू रोदसी अभिष्टुते
वसिष्ठैर्ऋतावानो वरुणो मित्रो अग्निः। यच्छंतु चंद्रा उपमं
नो अर्कं यूयं पात स्वस्तिभिः सदा नः॥७॥७॥

---

॥ ४१ ॥ १–७ वसिष्ठः ॥ १ लिंगोक्तदेवताः। २–६ भगः। ७ उषाः॥ १ जगती। २–७ त्रिष्टुप्॥

॥४१॥ प्रातरग्निं प्रातरिंद्रं हवामहे प्रातर्मित्रावरुणा प्रा-
तरश्विना। प्रातर्भगं पूषणं ब्रह्मणस्पतिं प्रातः सोममुत रुद्रं
हुवेम॥१॥ प्रातर्जितं भगमुग्रं हुवेम वयं पुत्रमदितेर्यो वि-
धर्ता। आध्रश्चिद्यं मन्यमानस्तुरश्चिद्राजा चिद्यं भगं भ-
क्षीत्याह॥२॥ भग प्रणेतर्भग सत्यराधो भगेमां धियमु-
दवा ददन्नः। भग प्र णो जनय गोभिरश्वैर्भग प्र नृभिर्नृ-
वंतः स्याम॥३॥ उतेदानीं भगवंतः स्यामोत प्रपित्व
उत मध्ये अह्नां। उतोदिता मघवन्सूर्यस्य वयं देवानां
सुमतौ स्याम॥४॥ भग एव भगवाँ अस्तु देवास्तेन वयं
भगवंतः स्याम। तं त्वा भग सर्व इज्जोहवीति स नो भग पुर-
एता भवेह॥५॥ समध्वरायोषसो नमंत दधिक्रावेव शुचये
पदाय। अर्वाचीनं वसुविदं भगं नो रथमिवाश्वा वाजिन



Digitized by Google

॥२॥ सः इत् उग्रः अस्तु मरुतः सः शुष्मी यं मर्त्यं पृषत्ऽअश्वाः अवाथ उत ईं अग्निः सरस्वती जुनंति न तस्य रायः परिऽएता अस्ति ॥३॥ अयं हि नेता वरुणः ऋतस्य मित्रः राजानः अर्यमा अपः धुः॰ सुऽहवा देवी अदितिः अनर्वा ते नः अंहः अति पर्षन् अरिष्टान् ॥४॥ अस्य देवस्य मीळ्हुषः वयाः विष्णोः एषस्य प्रऽभृथे हविःऽभिः विदे हि रुद्रः रुद्रियं महिऽत्वं यासिष्टं वर्तिः अश्विनौ इराऽवत् ॥५॥ मा अत्र पूषन् आघृणे इरस्यः वरूत्री यत् रातिऽसाचः च रासन् मयःऽभुवः नः अर्वंतः नि पांतु वृष्टिं परिऽज्मा वातः ददातु ॥६॥ नु रोदसी अभिऽस्तुते॰ वसिष्ठैः ऋतऽवानः वरुणः मित्रः अग्निः यच्छंतु चंद्राः उपऽमं नः अर्कं यूयं पात स्वस्तिऽभिः सदा नः ॥७॥७॥

---

॥४१॥ प्रातः अग्निं प्रातः इंद्रं हवामहे प्रातः मित्रावरुणा प्रातः अश्विना प्रातः भगं पूषणं ब्रह्मणः पतिं प्रातः सोमं उत रुद्रं हुवेम ॥१॥ प्रातःऽजितं भगं उग्रं हुवेम वयं पुत्रं अदितेः यः विऽधर्ता आध्रः चित् यं मन्यमानः तुरः चित् राजा चित् यं भगं भक्षि इति आह ॥२॥ भग प्रऽनेतः॰ भग सत्यऽराधः भग इमां धियं उत् अव ददत् नः भग प्र नः जनय गोभिः अश्वैः भग प्र नृऽभिः नृऽवंतः स्याम ॥३॥ उत इदानीं भगऽवंतः स्याम उत प्रऽपित्वे उत मध्ये अह्नां उत उत्ऽइता मघऽवन् सूर्यस्य वयं देवानां सुऽमतौ स्याम ॥४॥ भगः एव भगऽवान् अस्तु देवाः तेन वयं भगऽवंतः स्याम तं त्वा भग सर्वः इत् जोहवीति सः नः भग पुरःऽएता भव इह ॥५॥ सं अध्वराय उषसः नमंत दधिक्राऽवाऽइव शुचये पदाय अर्वाचीनं वसुऽविदं भगं नः रथंऽइव अश्वाः वाजिनः

आ वहंतु ॥ ६ ॥ अश्वावतीर्गोमतीर्न उषासो वीरवतीः सद॑मुच्छंतु भद्राः। घृतं दुहाना विश्वतः प्रपीता यूयं पात स्वस्तिभिः सदा नः ॥ ७ ॥ ८ ॥

॥ ४२ ॥ १—६ वसिष्ठः ॥ विश्वे देवाः ॥ त्रिष्टुप् ॥

॥ ४२ ॥ प्र ब्रह्माणो अंगिरसो नक्षंत प्र क्रंदनुर्नभन्यस्य वेतु। प्र धेनव उदप्रुतो नवंत युज्यातामद्री अध्वरस्य पेशः ॥ १ ॥ सुगस्ते अग्ने सनवित्तो अध्वा युंक्ष्वा सुते हरितो रोहितश्च। ये वा सद्मन्नरुषा वीरवाहो हुवे देवानां जनिमानि सत्तः ॥ २ ॥ समु वो यज्ञं महयन्नमोभिः प्र होता मंद्रो रिरिच उपाके। यजस्व सु पुर्वणीक देवाना यज्ञियामरमतिं ववृत्याः ॥ ३ ॥ यदा वीरस्य रेवतो दुरोणे स्योनशीरतिथिराचिकेतत्। सुप्रीतो अग्निः सुधितो दम आ स विशे दाति वार्यमियत्यै ॥ ४ ॥ इमं नो अग्ने अध्वरं जुषस्व मरुत्स्विंद्रे यशसं कृधी नः। आ नक्ता बर्हिः सदतामुषासोशंता मित्रावरुणा यजेह ॥ ५ ॥ एवाग्निं सहस्यं१ वसिष्ठो रायस्कामो विश्वप्स्न्यस्य स्तौत्। इषं रयिं पप्रथद्वाजमस्मे यूयं पात स्वस्तिभिः सदा नः ॥ ६ ॥ ९ ॥

॥ ४३ ॥ १—५ वसिष्ठः ॥ विश्वे देवाः ॥ त्रिष्टुप् ॥

॥ ४३ ॥ प्र वो यज्ञेषु देवयंतो अर्चन्द्यावा नमोभिः पृथिवी इषध्यै। येषां ब्रह्माण्यसमानि विप्रा विष्वग्वियंति वनिनो न शाखाः ॥ १ ॥ प्र यज्ञ एतु हेत्वो न सप्तिरुद्यच्छध्वं समनसो घृताचीः। स्तृणीत बर्हिरध्वराय साधूर्ध्वा शोचींषि देवयून्यस्थुः ॥ २ ॥ आ पुत्रासो न मातरं विभृत्राः सानौ देवासो बर्हिषः सदंतु। आ विश्वाची विदथ्यामनक्त्वग्ने मा नो देवताता मृधस्कः ॥ ३ ॥ ते सीषपंत जोषमा यजत्रा ऋतस्य



Digitized by Google

आ वहंतु ॥६॥ अश्वऽवतीः गोऽमतीः नः उषसः वीरऽवतीः सदं उच्छंतु भद्राः घृतं दुहानाः विश्वतः प्रऽपीताः यूयं पात स्वस्तिऽभिः सदा नः ॥७॥८॥

---

॥४२॥ प्र ब्रह्माणः अंगिरसः नक्षंत प्र क्रंदनुः नभन्यस्य वेतु प्र धेनवः उदऽप्रुतः नवंत युज्यातां अद्री' अध्वरस्य पेशः ॥१॥ सुऽगः ते अग्ने सनऽवित्तः अध्वा युंक्ष्व सुते हरितः रोहितः च ये वा सद्मन् अरुषाः वीरऽवाहः हुवे देवानां जनिमानि सत्तः ॥२॥ सं ऊं' वः यज्ञं महयन् नमःऽभिः प्र होता मंद्रः रिरिचे उपाके यजस्व सु पुरुऽअनीक देवान् आ यज्ञियां अरमतिं ववृत्याः ॥३॥ यदा वीरस्य रेवतः दुरोणे स्योनऽशीः अतिथिः आऽचिकेतत् सुऽप्रीतः अग्निः सुऽधितः दमे आ सः विशे दाति वार्यं इयत्यै ॥४॥ इमं नः अग्ने अध्वरं जुषस्व मरुत्ऽसु इंद्रे यशसं कृधि नः आ नक्ता बर्हिः सदतां उषसा उशंता मित्रावरुणा यज इह ॥५॥ एव अग्निं सहस्यं वसिष्ठः रायःऽकामः विश्वऽप्स्न्यस्य स्तौत् इषं रयिं पप्रथत् वाजं अस्मे' यूयं पात स्वस्तिऽभिः सदा नः ॥६॥९॥

---

॥४३॥ प्र वः यज्ञेषु देवऽयंतः अर्चन् द्यावा नमःऽभिः पृथिवी' इषध्यै येषां ब्रह्माणि असमानि विप्राः विष्वक् विऽयंति वनिनः न शाखाः ॥१॥ प्र यज्ञः एतु हेत्वः न सप्तिः उत् यच्छध्वं सऽमनसः घृताचीः स्तृणीत बर्हिः अध्वराय साधु ऊर्ध्वा शोचींषि देवऽयूनि अस्थुः ॥२॥ आ पुत्रासः न मातरं विऽभृत्राः सानौ देवासः बर्हिषः सदंतु आ विश्वाची विदथ्यां अनक्तु अग्ने मा नः देवऽताता मृधः कः॰ ॥३॥ ते सीषपंत जोषं आ यजत्राः ऋतस्य



Digitized by Google

धाराः सुदुघा दुहानाः। ज्येष्ठं वो अद्य मह आ वसूनामा गंतन समनसो यति ष्ठ ॥४॥ एवा नो अग्ने विक्ष्वा दशस्य त्वया वयं सहसावन्नास्क्राः। राया युजा सधमादो अरिष्टा यूयं पात स्वस्तिभिः सदा नः ॥५॥१०॥

---

॥४४॥ १–५ वसिष्ठः ॥ १ लिंगोक्तदेवताः। २–५ दधिक्राः ॥ १ जगती। २–५ त्रिष्टुप् ॥

॥४४॥ दधिक्रां वः प्रथममश्विनोषसमग्निं समिद्धं भगमूतये हुवे। इंद्रं विष्णुं पूषणं ब्रह्मणस्पतिमादित्यान्द्यावापृथिवी अपः स्वः ॥१॥ दधिक्रामु नमसा बोधयंत उदीराणा यज्ञमुपप्रयंतः। इळां देवीं बर्हिषि सादयंतोऽश्विना विप्रा सुहवा हुवेम ॥२॥ दधिक्रावाणं बुबुधानो अग्निमुप ब्रुव उषसं सूर्यं गां। ब्रध्नं मंश्चतोर्वरुणस्य बभ्रुं ते विश्वास्मद्दुरिता यावयंतु ॥३॥ दधिक्रावा प्रथमो वाज्यर्वाग्रे रथानां भवति प्रजानन्। संविदान उषसा सूर्येणादित्येभिर्वसुभिरंगिरोभिः ॥४॥ आ नो दधिक्राः पथ्यामनक्त्वृतस्य पंथामन्वेतवा उ। शृणोतु नो दैव्यं शर्धो अग्निः शृण्वंतु विश्वे महिषा अमूराः ॥५॥११॥

---

॥४५॥ १–४ वसिष्ठः ॥ सविता ॥ त्रिष्टुप् ॥

॥४५॥ आ देवो यातु सविता सुरत्नोऽतरिक्षप्रा वहमानो अश्वैः। हस्ते दधानो नर्या पुरूणि निवेशयञ्च प्रसुवञ्च भूम ॥१॥ उदस्य बाहू शिथिरा बृहंता हिरण्यया दिवो अंताँ अनष्टां। नूनं सो अस्य महिमा पनिष्ट सूरश्चिदस्मा अनु दादपस्यां ॥२॥ स घा नो देवः सविता सहावा साविषद्वसुपतिर्वसूनि। विश्रयमाणो अमतिमुरूचीं मर्तभोजनमध रासते नः ॥३॥ इमा गिरः सवितारं सुजिह्वं पूर्णगभस्तिमी-



Digitized by Google

धाराः सुऽदुघाः दुहानाः ज्येष्ठं वः अद्य महः आ वसूनां आ गंतन सऽमनसः यति स्थ ॥४॥ एव नः अग्ने विक्षु आ दशस्य त्वया वयं सहसाऽवन् आस्क्राः राया युजा सधऽमादः अरिष्टाः यूयं पात स्वस्तिऽभिः सदा नः ॥५॥१०॥

---

॥४४॥ दधिऽक्रां वः प्रथमं अश्विना उषसं अग्निं संऽइद्धं भगं ऊतये हुवे इंद्रं विष्णुं पूषणं ब्रह्मणः पतिं आदित्यान् द्यावापृथिवी॑ अपः स्वः॰ ॥१॥ दधिऽक्रां ऊं॑ नमसा बोधयंतः उत्ऽईराणाः यज्ञं उपऽप्रयंतः इळां देवीं बर्हिषि सादयंतः अश्विना विप्रा सुऽहवा हुवेम ॥२॥ दधिऽक्रावाणं बुबुधानः अग्निं उप ब्रुवे उषसं सूर्यं गां ब्रध्नं मंश्चतोः वरुणस्य बभ्रुं ते विश्वा अस्मत् दुःऽइता यवयंतु ॥३॥ दधिऽक्रावा प्रथमः वाजी अर्वा अग्रे रथानां भवति प्रऽजानन् संऽविदानः उषसा सूर्येण आदित्येभिः वसुऽभिः अंगिरःऽभिः ॥४॥ आ नः दधिऽक्राः पथ्यां अनक्तु ऋतस्य पंथां अनुऽएतवै ऊं॑ शृणोतु नः दैव्यं शर्धः अग्निः शृण्वंतु विश्वे महिषाः अमूराः ॥५॥११॥

---

॥४५॥ आ देवः यातु सविता सुऽरत्नः अंतरिक्षऽप्राः वहमानः अश्वैः हस्ते दधानः नर्या पुरूणि निऽवेशयन् च प्रऽसुवन् च भूम ॥१॥ उत् अस्य बाहू॑ शिथिरा बृहंता हिरण्यया दिवः अंतान् अनष्टां नूनं सः अस्य महिमा पनिष्ट सूरः चित् अस्मै अनु दात् अपस्यां ॥२॥ सः घ नः देवः सविता सहऽवा आ साविषत् वसुऽपतिः वसूनि विऽश्रयमाणः अमतिं उरूचीं मर्तऽभोजनं अध रासते नः ॥३॥ इमाः गिरः सवितारं सुऽजिह्वं पूर्णऽगभस्तिं



Digitized by Google

ळते सुपाणिं। चित्रं वयो बृहदस्मे दधातु यूयं पात स्वस्तिभिः सदा नः ॥ ४ ॥ १२ ॥

॥ ४६ ॥ १–४ वसिष्ठः ॥ रुद्रः ॥ १–३ जगती । ४ त्रिष्टुप् ॥

॥ ४६ ॥ इमा रुद्राय स्थिरधन्वने गिरः क्षिप्रेषवे देवाय स्वधाव्ने। अषाळ्हाय सहमानाय वेधसे तिग्मायुधाय भरता शृणोतु नः ॥ १ ॥ स हि क्षयेण क्षम्यस्य जन्मनः साम्राज्येन दिव्यस्य चेतति। अवन्नवंतीरुप नो दुरश्चरानमीवो रुद्र जासु नो भव ॥ २ ॥ या ते दिद्युदवसृष्टा दिवस्परि क्ष्मया चरति परि सा वृणक्तु नः। सहस्रं ते स्वपिवात भेषजा मा नस्तोकेषु तनयेषु रीरिषः ॥ ३ ॥ मा नो वधी रुद्र मा परा दा मा ते भूम प्रसितौ हीळितस्य। आ नो भज बर्हिषि जीवशंसे यूयं पात स्वस्तिभिः सदा नः ॥ ४ ॥ १३ ॥

॥ ४७ ॥ १–४ वसिष्ठः ॥ आपः ॥ त्रिष्टुप् ॥

॥ ४७ ॥ आपो यं वः प्रथमं देवयंत इंद्रपानमूर्मिमकृण्वतेळः। तं वो वयं शुचिमरिप्रमद्य घृतप्रुषं मधुमंतं वनेम ॥ १ ॥ तमूर्मिमापो मधुमत्तमं वोऽपां नपादवत्वाशुहेमा। यस्मिन्निंद्रो वसुभिर्मादयाते तमश्याम देवयंतो वो अद्य ॥ २ ॥ शतपवित्राः स्वधया मदंतीर्देवीर्देवानामपि यंति पाथः। ता इंद्रस्य न मिनंति व्रतानि सिंधुभ्यो हव्यं घृतवज्जुहोत ॥ ३ ॥ याः सूर्यो रश्मिभिराततान याभ्य इंद्रो अरदद्गातुमूर्मिं। ते सिंधवो वरिवो धातना नो यूयं पात स्वस्तिभिः सदा नः ॥ ४ ॥ १४ ॥

॥ ४८ ॥ १–४ वसिष्ठः ॥ १–३ ऋभवः । ४ ऋभवो विश्वे देवा वा ॥ त्रिष्टुप् ॥

॥ ४८ ॥ ऋभुक्षणो वाजा मादयध्वमस्मे नरो मघवानः



Digitized by Google

ईळते सुऽपाणिं चित्रं वयः बृहत् अस्मे दधातु यूयं पात स्वस्ति-ऽभिः सदा नः ॥४॥१२॥

---

॥४६॥ इमाः रुद्राय स्थिरऽधन्वने गिरः क्षिप्रऽइषवे देवाय स्वधाऽव्ने अषाळ्हाय सहमानाय वेधसे तिग्मऽआयुधाय भरत शृणोतु नः ॥१॥ सः हि क्षयेण क्षम्यस्य जन्मनः सांऽराज्येन दिव्यस्य चेतति अवन् अवंतीः उप नः दुरः चर अनमीवः रुद्र जासु नःभव ॥२॥ या ते दिद्युत् अवंऽसृष्टा दिवः परि क्ष्मया चरति परि सा वृणक्तु नः सहस्रं ते सुऽअपिवात भेषजा मा नः तोकेषु तनयेषु रिरिषः॥३॥ मा नः वधीः रुद्र मा परा दाः मा ते भूम प्रऽसितौ हीळितस्य आ नः भज बर्हिषि जीवऽशंसे यूयं पात स्वस्ति-ऽभिः सदा नः ॥४॥१३॥

---

॥४७॥ आपः यं वः प्रथमं देवऽयंतः इंद्रऽपानं ऊर्मिं अकृण्वत इळः तं वः वयं शुचिं अरिप्रं अद्य घृतऽप्रुषं मधुऽमंतं वनेम ॥१॥ तं ऊर्मिं आपः मधुमत्ऽतमं वः अपां नपात् अवतु आशुऽहेमा यस्मिन् इंद्रः वसुऽभिः मादयाते तं अश्याम देवऽयंतः वः अद्य ॥२॥ शतऽपवित्राः स्वधया मदंतीः देवीः देवानां अपि यंति पाथः ताः इंद्रस्य न मिनंति व्रतानि सिंधुऽभ्यः हव्यं घृतऽवत् जुहोत ॥३॥ याः सूर्यः रश्मिऽभिः आऽततान याभ्यः इंद्रः अरदत् गातुं ऊर्मिं ते सिंधवः वरिवः धातन नः यूयं पात स्वस्तिऽभिः सदा नः ॥४॥१४॥

---

॥४८॥ ऋभुक्षणः वाजाः मादयध्वं अस्मे नरः मघऽवानः



Digitized by Google

सुतस्य। आ वोऽर्वाचः क्रतवो न यातां विभ्वो रथं नर्यं वर्तयंतु ॥१॥ ऋभुर्ऋभुभिरभि वः स्याम विभ्वो विभुभिः शवसा शवांसि। वाजो अस्माँ अवतु वाजसाताविंद्रेण युजा तरुषेम वृत्रं ॥२॥ ते चिद्धि पूर्वीरभि संति शासा विश्वाँ अर्य उपरताति वन्वन्। इंद्रो विभ्वाँ ऋभुक्षा वाजो अर्यः शत्रोर्मिथत्या कृणवन्वि नृम्णं ॥३॥ नू देवासो वरिवः कर्तना नो भूत नो विश्वेऽवसे सजोषाः। समस्मे इषं वसवो ददीरन्यूयं पात स्वस्तिभिः सदा नः ॥४॥१५॥

॥ ४९ ॥ १—४ वसिष्ठः ॥ आपः ॥ त्रिष्टुप् ॥

॥४९॥ समुद्रज्येष्ठाः सलिलस्य मध्यात्पुनाना यंत्यनिविशमानाः। इंद्रो या वज्री वृषभो रराद ता आपो देवीरिह मामवंतु ॥१॥ या आपो दिव्या उत वा स्रवंति खनित्रिमा उत वा याः स्वयंजाः। समुद्रार्था याः शुचयः पावकास्ता आपो देवीरिह मामवंतु ॥२॥ यासां राजा वरुणो याति मध्ये सत्यानृते अवपश्यञ्जनानां। मधुश्चुतः शुचयो याः पावकास्ता आपो देवीरिह मामवंतु ॥३॥ यासु राजा वरुणो यासु सोमो विश्वे देवा यासूर्जं मदंति। वैश्वानरो यास्वग्निः प्रविष्टस्ता आपो देवीरिह मामवंतु ॥४॥१६॥

॥ ५० ॥ १—४ वसिष्ठः ॥ १ मित्रावरुणौ। २ अग्निः। ३ विश्वे देवाः। ४ नद्यः ॥ १—३ जगती। ४ अतिजगती शक्वरी वा ॥

॥५०॥ आ मां मित्रावरुणेह रक्षतं कुलाययद्विश्वयन्मा न आ गन्। अजकावं दुर्दृशीकं तिरो दधे मा मां पद्येन रपसा विदत्त्सरुः ॥१॥ यद्विजामन्परुषि वंदनं भुवदष्ठीवंतौ परि कुल्फौ च देहत्। अग्निष्टच्छोचन्नप बाधतामितो मा मां पद्येन रपसा विदत्त्सरुः ॥२॥ यच्छल्मलौ भवति यन्न-



Digitized by Google

सुतस्य आ वः अर्वाचः ऋतवः न याता विऽभ्वः रथं नर्यं वर्तयंतु
॥१॥ ऋभुः ऋभुऽभिः अभि वः स्याम विऽभ्वः विभुऽभिः शवसा
शवांसि वाजः अस्मान् अवतु वाजऽसातौ इंद्रेण युजा तरुषेम
वृत्रं ॥२॥ ते चित् हि पूर्वीः अभि संति शासा विश्वान् अर्यः उप-
रऽताति वन्वन् इंद्रः विऽभ्वा ऋभुक्षाः वाजः अर्यः शत्रोः मिथ-
त्या कृण्वन् वि नृम्णं ॥३॥ नु देवासः वरिवः कर्तन नः भूत नः
विश्वे अवसे सऽजोषाः सं अस्मे इषं वसवः ददीरन् यूयं पात
स्वस्तिऽभिः सदा नः ॥४॥१५॥

---

॥४९॥ समुद्रऽज्येष्ठाः सलिलस्य मध्यात् पुनानाः यंति अ-
निऽविशमानाः इंद्रः याः वज्री वृषभः रराद ताः आपः देवीः इह
मां अवंतु ॥१॥ याः आपः दिव्याः उत वा स्रवंति खनित्रिमाः उत
वा याः स्वयंऽजाः समुद्रऽअर्थाः याः शुचयः पावकाः ताः आपः
देवीः इह मां अवंतु ॥२॥ यासां राजा वरुणः याति मध्ये सत्या-
नृते अवऽपश्यन् जनानां मधुश्चुतः शुचयः याः पावकाः ताः
आपः देवीः इह मां अवंतु ॥३॥ यासु राजा वरुणः यासु सोमः
विश्वे देवाः यासु ऊर्जं मदंति वैश्वानरः यासु अग्निः प्रऽविष्टः
ताः आपः देवीः इह मां अवंतु ॥४॥१६॥

---

॥५०॥ आ मां मित्रावरुणा इह रक्षतं कुलाययत् विऽश्वयत्
मा नः आ गन् अजकाऽवं दुःऽदृशीकं तिरः दधे मा मां पद्येन र-
पसा विदत् त्सरुः ॥१॥ यत् विऽजामन् परुषि वंदनं भुवत् अ-
ष्ठीवंतौ परि कुल्फौ च देहत् अग्निः तत् शोचन् अप बाधतां इतः
मा मां पद्येन रपसा विदत् त्सरुः ॥२॥ यत् शल्मली भवति यत्



Digitized by Google

दीषु यदोषधीभ्यः परि जायते विषं। विश्वे देवा निरितस्तत्सुवंतु
मा मां पद्मेन रपसा विदत्त्सरुः ॥३॥ याः प्रवतो निवत उद्वत
उदन्वतीरनुदकाश्च याः। ता अस्मभ्यं पयसा पिन्वमानाः शिवा
देवीरशिपदा भवंतु सर्वा नद्यो अशिमिदा भवंतु ॥४॥१७॥

---

॥ ५१ ॥ १–३ वसिष्ठः ॥ आदित्याः ॥ त्रिष्टुप् ॥

॥५१॥ आदित्यानामवसा नूतनेन सक्षीमहि शर्मणा शंत-
मेन। अनागास्त्वे अदितित्वे तुरास इमं यज्ञं दधतु श्रोषमा-
णाः ॥१॥ आदित्यासो अदितिर्मादयंतां मित्रो अर्यमा वरुणो
रजिष्ठाः। अस्माकं संतु भुवनस्य गोपाः पिबंतु सोममवसे नो
अद्य ॥२॥ आदित्या विश्वे मरुतश्च विश्वे देवाश्च विश्वे ऋभवश्च
विश्वे। इंद्रो अग्निरश्विना तुष्टुवाना यूयं पात स्वस्तिभिः सदा
नः ॥३॥१८॥

---

॥ ५२ ॥ १–३ वसिष्ठः ॥ आदित्याः ॥ त्रिष्टुप् ॥

॥५२॥ आदित्यासो अदितयः स्याम पूर्देवत्रा वसवो मर्त्य-
त्रा। सनेम मित्रावरुणा सनंतो भवेम द्यावापृथिवी भवंतः॥१॥
मित्रस्तन्नो वरुणो मामहंत शर्म तोकाय तनयाय गोपाः। मा
वो भुजेमान्यजातमेनो मा तत्कर्म वसवो यच्चयध्वे॥२॥ तुरण्य-
वोऽगिरसो नक्षंत रत्नं देवस्य सवितुरियानाः। पिता च तन्नो
महान्यजत्रो विश्वे देवाः समनसो जुषंत ॥३॥१९॥

---

॥ ५३ ॥ १–३ वसिष्ठः ॥ द्यावापृथिव्यौ ॥ त्रिष्टुप् ॥

॥५३॥ प्र द्यावा यज्ञैः पृथिवी नमोभिः सबाध ईळे बृ-
हती यजत्रे। ते चिद्धि पूर्वे कवयो गृणंतः पुरो मही दधिरे



Digitized by Google

नदीषु यत् ओषधीभ्यः परि जायते विषं विश्वे देवाः निः इतः तत्
सुवंतु मा मां पद्मेन रपसा विदत् त्सरुः ॥ ३ ॥ याः प्रऽवतः नि-
ऽवतः उत्ऽवतः उदन्ऽवतीः अनुदकाः च याः ताः अस्मभ्यं प-
यसा पिन्वमानाः शिवाः देवीः अशिपदाः भवंतु सर्वाः नद्यः अ-
शिमिदाः भवंतु ॥ ४ ॥ १७ ॥

---

॥ ५१ ॥ आदित्यानां अवसा नूतनेन सक्षीमहि शर्मणा शं-
ऽतमेन अनागाःऽत्वे अदितिऽत्वे तुरासः इमं यज्ञं दधतु श्रोष-
माणाः ॥ १ ॥ आदित्यासः अदितिः मादयंतां मित्रः अर्यमा वरुणः
रजिष्ठाः अस्माकं संतु भुवनस्य गोपाः पिबंतु सोमं अवसे नः
अद्य ॥ २ ॥ आदित्याः विश्वे मरुतः च विश्वे देवाः च विश्वे ऋ-
भवः च विश्वे इंद्रः अग्निः अश्विना तुस्तुवानाः यूयं पात स्वस्ति-
ऽभिः सदा नः ॥ ३ ॥ १८ ॥

---

॥ ५२ ॥ आदित्यासः अदितयः स्याम पूः देवऽत्रा वसवः मर्त्य-
ऽत्रा सनेम मित्रावरुणा सनंतः भवेम द्यावापृथिवी भवंतः
॥ १ ॥ मित्रः तत् नः वरुणः ममहंत शर्म तोकाय तनयाय गोपाः
मा वः भुजेम अन्यऽजातं एनः मा तत् कर्म वसवः यत् चयध्वे
॥ २ ॥ तुरण्यवः अंगिरसः नक्षंत रत्नं देवस्य सवितुः इयानाः
पिता च तत् नः महान् यजत्रः विश्वे देवाः सऽमनसः जुषंत
॥ ३ ॥ १९ ॥

---

॥ ५३ ॥ प्र द्यावा यज्ञैः पृथिवी नमःऽभिः सऽबाधः ईळे बृ-
हती यजत्रे ते चित् हि पूर्वे कवयः गृणंतः पुरः मही दधिरे



Digitized by Google

देवयुंचे ॥१॥ प्र पूर्वजे पितरा नव्यसीभिर्गीर्भिः कृणुध्वं सदने ऋतस्य। आ नो द्यावापृथिवी दैव्येन जनेन यातं महि वां वरूथं ॥२॥ उतो हि वां रत्नधेयानि संति पुरूणि द्यावापृथिवी सुदासे। अस्मे धत्तं यदसदस्कृधोयु यूयं पात स्वस्तिभिः सदा नः ॥३॥२०॥

॥ ५४ ॥ १—३ वसिष्ठः ॥ वास्तोष्पतिः ॥ त्रिष्टुप् ॥

॥५४॥ वास्तोष्पते प्रति जानीह्यस्मान्त्स्वावेशो अनमीवो भवा नः। यत्त्वेमहे प्रति तन्नो जुषस्व शं नो भव द्विपदे शं चतुष्पदे ॥१॥ वास्तोष्पते प्रतरणो न एधि गयस्फानो गोभिरश्वेभिरिंदो। अजरासस्ते सख्ये स्याम पितेव पुत्रान्प्रति नो जुषस्व ॥२॥ वास्तोष्पते शग्मया संसदा ते सक्षीमहि रण्वया गातुमत्या। पाहि क्षेम उत योगे वरं नो यूयं पात स्वस्तिभिः सदा नः ॥३॥२१॥

॥ ५५ ॥ १—८ वसिष्ठः ॥ १ वास्तोष्पतिः। २—८ इंद्रः ॥ १ गायत्री। २—४ उपरिष्टाद्बृहती। ५—८ अनुष्टुप् ॥

॥५५॥ अमीवहा वास्तोष्पते विश्वा रूपाण्याविशन्। सखा सुशेव एधि नः ॥१॥ यदर्जुन सारमेय दतः पिशंग यच्छसे। वीव भ्राजंत ऋष्टय उप स्रक्वेषु बप्सतो नि षु स्वप ॥२॥ स्तेनं राय सारमेय तस्करं वा पुनःसर। स्तोतॄनिंद्रस्य रायसि किमस्मान्दुच्छुनायसे नि षु स्वप ॥३॥ त्वं सूकरस्य दर्दृहि तव दर्दर्तु सूकरः। स्तोतॄनिंद्रस्य रायसि किमस्मान्दुच्छुनायसे नि षु स्वप ॥४॥ सस्तु माता सस्तु पिता सस्तु श्वा सस्तु विश्पतिः। ससंतु सर्वे ज्ञातयः सस्त्वयमभितो जनः ॥५॥ य आस्ते यश्च चरति यश्च पश्यति नो जनः। तेषां सं हन्मो अक्षाणि यथेदं हर्म्यं तथा ॥६॥ सहस्रशृंगो वृषभो यः समुद्रादुदाचरत्।



Digitized by Google

देवऽयुधे॰ ॥ १ ॥ प्र पूर्वेऽजे॰ पितरा नव्यसीभिः गीःऽभिः कृणुध्वं सदने ऋतस्य आ नः द्यावापृथिवी दैव्येन जनेन यातं महि वां वरूथं ॥ २ ॥ उतो हि वां रत्नऽधेयानि संति पुरूणि द्यावापृथिवी सुऽदासे अस्मे धत्तं यत् असत् अस्कृधोयु यूयं पात स्वस्तिऽभिः सदा नः ॥ ३ ॥ २० ॥

---

॥ ५४ ॥ वास्तोः पते प्रति जानीहि अस्मान् सुऽआवेशः अनमीवः भव नः यत् त्वा ईमहे प्रति तत् नः जुषस्व शं नः भव द्विऽपदे शं चतुःऽपदे ॥ १ ॥ वास्तोः पते प्रऽतरणः नः एधि गयऽस्फानः गोभिः अश्वेभिः इंदो अजरासः ते सख्ये स्याम पिताऽइव पुत्रान् प्रति नः जुषस्व ॥ २ ॥ वास्तोः पते शग्मया संऽसदा ते सक्षीमहि रण्वया गातुऽमत्या पाहि क्षेमे उत योगे वरं नः यूयं पात स्वस्तिऽभिः सदा नः ॥ ३ ॥ २१ ॥

---

॥ ५५ ॥ अमीवऽहा वास्तोः पते विश्वा रूपाणि आऽविशन् सखा सुऽशेवः एधि नः ॥ १ ॥ यत् अर्जुन सारमेय दतः पिशंग यच्छसे विऽइव भ्राजंते ऋष्टयः उप स्रक्वेषु बप्सतः नि सु स्वप ॥ २ ॥ स्तेनं राय सारमेय तस्करं वा पुनःऽसर स्तोतॄन् इंद्रस्य रायसि किं अस्मान् दुच्छुनऽयसे नि सु स्वप ॥ ३ ॥ त्वं सूकरस्य दर्दृहि तव दर्दर्तु सूकरः स्तोतॄन् इंद्रस्य रायसि किं अस्मान् दुच्छुनऽयसे नि सु स्वप ॥ ४ ॥ सस्तु माता सस्तु पिता सस्तु श्वा सस्तु विश्पतिः ससंतु सर्वे ज्ञातयः सस्तु अयं अभितः जनः ॥ ५ ॥ यः आस्ते यः च चरति यः च पश्यति नः जनः तेषां सं हन्मः अक्षाणि यथा इदं हर्म्यं तथा ॥ ६ ॥ सहस्रऽशृंगः वृषभः यः समुद्रात् उत्ऽआचरत्



Digitized by Google

तेना सहस्येना वयं नि जनान्स्वापयामसि ॥ ७ ॥ प्रोष्ठेशया
वह्येशया नारीर्यास्तल्पशीवरीः । स्त्रियो याः पुण्यगंधास्ताः
सर्वाः स्वापयामसि ॥ ८ ॥ २२ ॥ ३ ॥

---

॥ ५६ ॥ १—२५ वसिष्ठः ॥ मरुतः ॥ १—११ द्विपदा । १२—२५ त्रिष्टुप् ॥

॥ ५६ ॥ क ईं व्यक्ता नरः सनीळा रुद्रस्य मर्या अधा स्वश्वाः
॥ १ ॥ नकिर्ह्येषां जनूंषि वेद ते अंग विद्रे मिथो जनित्रं ॥ २ ॥
अभि स्वपूभिर्मिथो वपंत वातस्वनसः श्येना अस्पृध्रन् ॥ ३ ॥
एतानि धीरो निण्या चिकेत पृश्निर्यदूधो मही जभार ॥ ४ ॥ सा
विट् सुवीरा मरुद्भिरस्तु सनात्सहंती पुष्यंती नृम्णं ॥ ५ ॥ यामं
येष्ठाः शुभा शोभिष्ठाः श्रिया संमिश्ला ओजोभिरुग्राः ॥ ६ ॥ उग्रं
व ओजः स्थिरा शवांस्यधा मरुद्भिर्गणस्तुविष्मान् ॥ ७ ॥ शुभ्रो
वः शुष्मः क्रुध्मी मनांसि धुनिर्मुनिरिव शर्धस्य धृष्णोः ॥ ८ ॥
सनेम्यस्मद्युयोत दिद्युं मा वो दुर्मतिरिह प्रणङ्नः ॥ ९ ॥ प्रिया
वो नाम हुवे तुराणामा यत्तृपन्मरुतो वावशानाः ॥ १० ॥ २३ ॥
स्वायुधास इष्मिणः सुनिष्का उत स्वयं तन्व१ः शुंभमानाः
॥ ११ ॥ शुची वो हव्या मरुतः शुचीनां शुचिं हिनोम्यध्वरं शु-
चिभ्यः । ऋतेन सत्यमृतसाप आयञ्छुचिजन्मानः शुचयः पा-
वकाः ॥ १२ ॥ अंसेष्वा मरुतः खादयो वो वक्षःसु रुक्मा उपशि-
श्रियाणाः । वि विद्युतो न वृष्टिभी रुचाना अनु स्वधामायु-
धैर्यच्छमानाः ॥ १३ ॥ प्र बुध्न्या व ईरते महांसि प्र नामानि
प्रयज्यवस्तिरध्वं । सहस्रियं दम्यं भागमेतं गृहमेधीयं मरुतो
जुषध्वं ॥ १४ ॥ यदि स्तुतस्य मरुतो अधीथेत्था विप्रस्य वाजिनो
हवीमन् । मक्षू रायः सुवीर्यस्य दात नू चिद्यमन्य आदभद-



Digitized by Google

तेन॑ स॒हस्रे॑ण व॒यं नि जना॑न् स्वा॒प॒या॒म॒सि॒ ॥ ७ ॥ प्रो॒ष्ठे॒ऽश॒याः व॒ह्ये॒ऽश॒याः नारीः॑ याः त॒ल्प॒ऽशीव॑रीः स्त्रियः॑ याः पुण्य॑ऽगंधाः ताः सर्वाः॑ स्वा॒प॒या॒म॒सि॒ ॥ ८ ॥ २२ ॥ ३ ॥

---

॥ ५६ ॥ के ईं॒ वि॒ऽअ॑क्ताः नरः॑ सऽनी॑ळाः रु॒द्रस्य॑ मर्याः॑ अध॑ सु॒ऽअ॒श्वाः॑ ॥ १ ॥ नकिः॑ हि ए॒षां ज॒नूंषि॑ वेद॑ ते अं॒ग वि॒द्रे मि॒थः ज॒नित्रं॑ ॥ २ ॥ अ॒भि स्व॒ऽपूभिः॑ मि॒थः व॒पंत॒ वात॑ऽस्वनसः श्ये॒नाः अ॒स्पृ॒ध्र॒न् ॥ ३ ॥ ए॒तानि॒ धीरः॑ नि॒ण्या चि॑केत॒ पृश्निः॑ यत् ऊधः॑ म॒ही ज॒भार॑ ॥ ४ ॥ सा विट् सु॒ऽवीरा॑ म॒रुत्ऽभिः॑ अ॒स्तु॒ स॒नात् सहं॑ती पुष्यं॑ती नृ॒म्णं ॥ ५ ॥ यामं॒ येष्ठाः॑ शु॒भा शोभि॑ष्ठाः श्रि॒या संऽमि॑श्लाः ओजः॑ऽभिः उ॒ग्राः ॥ ६ ॥ उ॒ग्रं वः॒ ओजः॑ स्थि॒रा शवां॑सि॒ अध॑ म॒रुत्ऽभिः॑ ग॒णः तु॒वि॑ष्मान् ॥ ७ ॥ शु॒भ्रः वः॒ शुष्मः॑ क्रुध्मी॑ मनां॑सि धुनिः॑ मुनिः॑ऽइव॒ शर्धं॑स्य धृ॒ष्णोः ॥ ८ ॥ सनेमि॑ अ॒स्मत् यु॒योत॑ दि॒द्युं मा वः॒ दुः॒ऽम॒तिः इ॒ह प्रण॑क् नः॒ ॥ ९ ॥ प्रि॒या वः॒ नाम॑ हु॒वे तु॒राणां॑ आ यत् तृ॒पत् म॒रु॒तः॒ वा॒व॒शा॒नाः ॥ १० ॥ २३ ॥ सु॒ऽआ॒यु॒धासः॑ इ॒ष्मिणः॑ सु॒ऽनि॒ष्काः उ॒त स्व॒यं त॒न्वः॑ शुंभ॑मानाः ॥ ११ ॥ शुची॑ वः॒ ह॒व्या म॒रु॒तः॒ शुची॑नां शुचिं॑ हि॒नो॒मि॒ अ॒ध्वरं॑ शुचि॑ऽभ्यः ऋ॒तेन॑ स॒त्यं ऋ॒त॒ऽसापः॑ आ॒य॒न् शुचि॑ऽजन्मानः शुच॑यः पा॒व॒काः ॥ १२ ॥ अंसे॑षु आ म॒रु॒तः॒ खा॒दयः॑ वः॒ वक्षः॑ऽसु रु॒क्माः उ॒प॒ऽशि॒श्रि॒या॒णाः वि वि॒ऽद्युतः॑ न वृ॒ष्टिऽभिः॑ रु॒चा॒नाः अनु॑ स्व॒धां आयु॑धैः यच्छ॑मानाः ॥ १३ ॥ प्र बु॒ध्न्या॑ वः॒ ई॒र॒ते॒ महां॑सि॒ प्र नामा॑नि प्र॒ऽय॒ज्य॒वः॒ ति॒र॒ध्वं स॒ह॒स्रियं॑ दम्यं॑ भा॒गं ए॒तं गृ॒ह॒ऽमे॒धीयं॑ म॒रु॒तः॒ जु॒ष॒ध्वं॒ ॥ १४ ॥ यदि॑ स्तु॒तस्य॑ म॒रु॒तः॒ अ॒धि॒ऽइ॒थ इ॒त्था विप्र॑स्य वा॒जिनः॑ हवी॑मन् म॒क्षु रा॒यः सु॒ऽवीर्य॑स्य दा॒त नु चि॒त् यं अ॒न्यः आ॒ऽदभ॑त्

रांवा ॥ १५ ॥ २४ ॥ अत्यासो न ये मरुतः स्वंचो यक्षदृशो न शुभयंत मर्याः। ते हर्म्येष्ठाः शिशवो न शुभ्रा वत्सासो न प्रक्रीळिनः पयोधाः ॥ १६ ॥ दशस्यंतो नो मरुतो मृळंतु वरिवस्यंतो रोदसी सुमेके। आरे गोहा नृहा वधो वो अस्तु सुम्नेभिरस्मे वसवो नमध्वं ॥ १७ ॥ आ वो होता जोहवीति सत्तः सत्राचीं रातिं मरुतो गृणानः। य ईवतो वृषणो अस्ति गोपाः सो अद्वयावी हवते व उक्थैः ॥ १८ ॥ इमे तुरं मरुतो रामयंतीमे सहः सहस आ नमंति। इमे शंसं वनुष्यतो नि पांति गुरु द्वेषो अररुषे दधंति ॥ १९ ॥ इमे रध्रं चिन्मरुतो जुनंति भृमिं चिद्यथा वसवो जुषंत। अप बाधध्वं वृषणस्तमांसि धत्त विश्वं तनयं तोकमस्मे ॥ २० ॥ २५ ॥ मा वो दात्रान्मरुतो निरराम मा पश्चाद्दघ्म रथ्यो विभागे। आ नः स्पार्हे भजतना वसव्ये३ यदीं सुजातं वृषणो वो अस्ति ॥ २१ ॥ सं यद्धनंत मन्युभिर्जनासः शूरा यह्वीष्वोषधीषु विक्षु। अध स्मा नो मरुतो रुद्रियासस्त्रातारो भूत पृतनास्वर्यः ॥ २२ ॥ भूरि चक्र मरुतः पित्र्याण्युक्थानि या वः शस्यंते पुरा चित्। मरुद्भिरुग्रः पृतनासु साळ्हा मरुद्भिरित्सनिता वाजमर्वा ॥ २३ ॥ अस्मे वीरो मरुतः शुष्म्यस्तु जनानां यो असुरो विधर्ता। अपो येन सुक्षितये तरेमाध स्वमोको अभि वः स्याम ॥ २४ ॥ तन्न इंद्रो वरुणो मित्रो अग्निराप ओषधीर्वनिनो जुषंत। शर्मन्त्स्याम मरुतामुपस्थे यूयं पात स्वस्तिभिः सदा नः ॥ २५ ॥ २६ ॥

---

॥ ५७ ॥ १–७ वसिष्ठः ॥ मरुतः ॥ त्रिष्टुप् ॥

॥ ५७ ॥ मध्वो वो नाम मारुतं यजत्राः प्र यज्ञेषु शवसा मदंति। ये रेजयंति रोदसी चिदुर्वी पिन्वंत्युत्सं यदयासुरुग्राः



Digitized by Google

अरावा ॥१५॥२४॥ अत्यासः न ये मरुतः सुऽअंचः यक्षऽदृशः न
शुभयंत मर्याः ते हर्म्यऽस्थाः शिशवः न शुभ्राः वत्सासः न प्रऽक्री-
ळिनः पयःऽधाः ॥१६॥ दशस्यंतः नः मरुतः मृळंतु वरिवस्यंतः
रोदसी' सुऽमेके' आरे गोऽहा नृऽहा वधः वः अस्तु सुम्नेभिः अ-
स्मे' वसवः नमध्वं ॥१७॥ आ वः होता जोहवीति सत्तः सत्राचीं
रातिं मरुतः गृणानः यः ईवतः वृषणः अस्ति गोपाः सः अद्व-
यावी हवते वः उक्थैः ॥१८॥ इमे तुरं मरुतः रमयंति इमे सहः
सहसः आ नमंति इमे शंसं वनुष्यतः नि पांति गुरु द्वेषः अररुषे
दधंति ॥१९॥ इमे रध्रं चित् मरुतः जुनंति भृमिं चित् यथा वसवः
जुषंत अप बाधध्वं वृषणः तमांसि धत्त विश्वं तनयं तोकं अस्मे'
॥२०॥२५॥ मा वः दात्रात् मरुतः निः अराम मा पश्चात् दघ्म
रथ्यः विऽभागे आ नः स्पार्हे भजतन वसव्ये यत् ईं सुऽजातं वृ-
षणः वः अस्ति ॥२१॥ सं यत् हनंत मन्युऽभिः जनासः शूराः य-
ह्वीषु ओषधीषु विक्षु अध स्म नः मरुतः रुद्रियासः त्रातारः भूत
पृतनासु अर्यः ॥२२॥ भूरि चक्र मरुतः पित्र्याणि उक्थानि या
वः शस्यंते पुरा चित् मरुत्ऽभिः उग्रः पृतनासु साळ्हा मरुत्-
ऽभिः इत् सनिता वाजं अर्वा ॥२३॥ अस्मे' वीरः मरुतः शुष्मी
अस्तु जनानां यः असुरः विऽधर्ता अपः येन सुऽक्षितये तरेम
अध स्वं ओकः अभि वः स्याम ॥२४॥ तत् नः इंद्रः वरुणः मित्रः
अग्निः आपः ओषधीः वनिनः जुषंत शर्मन् स्याम मरुतां उप-
ऽस्थे यूयं पात स्वस्तिऽभिः सदा नः ॥२५॥२६॥

---

॥५७॥ मध्वः वः नाम मारुतं यजत्राः प्र यज्ञेषु शवसा मदंति
ये रेजयंति रोदसी' चित् उर्वी' पिन्वंति उत्सं यत् अयासुः उग्राः



Digitized by Google

॥१॥ निचेतारो हि मरुतो गृणंतं प्रणेतारो यजमानस्य मन्म। अस्माकमद्य विदथेषु बर्हिरा वीतये सदत पिप्रियाणाः ॥२॥ नैतावदन्ये मरुतो यथेमे भ्राजंते रुक्मैरायुधैस्तनूभिः। आ रोदसी विश्वपिशः पिशानाः समानमंज्यंजते शुभे कं ॥३॥ ऋधक्सा वो मरुतो दिद्युदस्तु यद्व आगः पुरुषता कराम। मा वस्तस्यामपि भूमा यजत्रा अस्मे वो अस्तु सुमतिश्चनिष्ठा ॥४॥ कृते चिदत्र मरुतो रणंतानवद्यासः शुचयः पावकाः। प्र णोऽवत सुमतिभिर्यजत्राः प्र वाजेभिस्तिरत पुष्यसे नः ॥५॥ उत स्तुतासो मरुतो व्यंतु विश्वेभिर्नामभिर्नरो हवींषि। ददात नो अमृतस्य प्रजायै जिगृत रायः सूनृता मघानि ॥६॥ आ स्तुतासो मरुतो विश्व ऊती अच्छा सूरीन्सर्वताता जिगात। ये नस्त्मना शतिनो वर्धयंति यूयं पात स्वस्तिभिः सदा नः ॥७॥२७॥

---

॥ ५८ ॥ १–६ वसिष्ठः ॥ मरुतः ॥ त्रिष्टुप् ॥

॥५८॥ प्र साकमुक्षे अर्चता गणाय यो दैव्यस्य धाम्नस्तुविष्मान्। उत क्षोदंति रोदसी महित्वा नक्षंते नाकं निर्ऋतेरवंशात् ॥१॥ जनूश्चिद्वो मरुतस्त्वेष्येण भीमासस्तुविमन्यवोऽयासः। प्र ये महोभिरोजसोत संति विश्वो वो यामन्भयते स्वर्दृक् ॥२॥ बृहद्वयो मघवद्भ्यो दधात जुजोषन्निन्मरुतः सुष्टुतिं नः। गतो नाध्वा वि तिराति जंतुं प्र णः स्पार्हाभिरूतिभिस्तिरेत ॥३॥ युष्मोतो विप्रो मरुतः शतस्वी युष्मोतो अर्वा सहुरिः सहस्री। युष्मोतः सम्राळुत हंति वृत्रं प्र तद्वो अस्तु धूतयो देष्णं ॥४॥ ताँ आ रुद्रस्य मीळ्हुषो विवासे कुविन्नंसंते मरुतः पुनर्नः। यत्सस्वर्ता जिहीळिरे



Digitized by Google

॥१॥ निऽचेतारः हि मरुतः गृणंतं प्रऽनेतारः यजमानस्य मन्म अस्माकं अद्य विदथेषु बर्हिः आ वीतये सदत पिप्रियाणाः ॥ २॥ न एतावत् अन्ये मरुतः यथा इमे भ्राजंते रुक्मैः आयुधैः तनूभिः आ रोदसी इति विश्वऽपिशः पिशानाः समानं अंजि अंजते शुभे कं ॥३॥ ऋधक् सा वः मरुतः दिद्युत् अस्तु यत् वः आगः पुरुषता कराम मा वः तस्यां अपि भूम यजत्राः अस्मे इति वः अस्तु सुऽमतिः चनिष्ठा ॥४॥ कृते चित् अत्र मरुतः रणंत अनवद्यासः शुचयः पावकाः प्र नः अवत सुमतिऽभिः यजत्राः प्र वाजेभिः तिरत पुष्यसे नः ॥५॥ उत स्तुतासः मरुतः व्यंतु विश्वेभिः नामऽभिः नरः हवींषि ददात नः अमृतस्य प्रऽजायै जिगृत रायः सूनृता मघानि ॥६॥ आ स्तुतासः मरुतः विश्वे ऊती अच्छ सूरीन् सर्वऽताता जिगात ये नः त्मना शतिनः वर्धयंति यूयं पात स्वस्तिऽभिः सदा नः ॥७॥२७॥

---

॥ ५८ ॥ प्र साकंऽउक्षे अर्चत गणाय यः दैव्यस्य धाम्नः तुविष्मान् उत क्षोदंति रोदसी इति महिऽत्वा नक्षंते नाकं निःऽऋतेः अवंशात् ॥१॥ जनूः चित् वः मरुतः त्वेष्येण भीमासः तुविऽमन्यवः अयासः प्र ये महःऽभिः ओजसा उत संति विश्वः वः यामन् भयते स्वःऽदृक् ॥२॥ बृहत् वयः मघवत्ऽभ्यः दधात जुजोषन् इत् मरुतः सुऽस्तुतिं नः गतः न अध्वा वि तिराति जंतुं प्र नः स्पार्हाभिः ऊतिऽभिः तिरेत ॥३॥ युष्माऽऊतः विप्रः मरुतः शतस्वी युष्माऽऊतः अर्वा सहुरिः सहस्री युष्माऽऊतः संऽराट् उत हंति वृत्रं प्र तत् वः अस्तु धूतयः देष्णं ॥४॥ तान् आ रुद्रस्य मीळ्हुषः विवासे कुवित् नंसंते मरुतः पुनः नः यत् सस्वर्ता जिहीळिरे



Digitized by Google

यदाविरव तदेनं ईमहे तुराणां ॥५॥ प्र सा वाचि सुष्टुतिर्मघो-
नामिदं सूक्तं मरुतो जुषंत । आराच्चिद्द्वेषो वृषणो युयोत यूयं
पात स्वस्तिभिः सदा नः ॥६॥२८॥

---

॥५९॥ १—१२ वसिष्ठः ॥ १—११ मरुतः । १२ रुद्रः ॥ १. ३. ५ बृहती । २. ४. ६ सतोबृहती ।
७. ८ त्रिष्टुप् । ९—११ गायत्री । १२ अनुष्टुप् ॥

॥५९॥ यं त्रायध्व इदमिदं देवासो यं च नयथ । तस्मा अग्ने व-
रुण मित्रार्यमन्मरुतः शर्म यच्छत ॥१॥ युष्माकं देवा अवसाह-
नि प्रिय ईजानस्तरति द्विषः । प्र स क्षयं तिरते वि महीरिषो यो
वो वराय दाशति ॥२॥ नहि वश्चरमं चन वसिष्ठः परिमंसते ।
अस्माकमद्य मरुतः सुते सचा विश्वे पिबत कामिनः ॥३॥ नहि
व ऊतिः पृतनासु मर्धति यस्मा अराध्वं नरः । अभि व आवर्त्सु-
मतिर्नवीयसी तूयं यात पिपीषवः ॥४॥ ओ षु घृष्विराधसो या-
तनांधांसि पीतये । इमा वो हव्या मरुतो ररे हि कं मो ष्व१न्यत्र
गंतन ॥५॥ आ च नो बर्हिः सदताविता च नः स्पार्हाणि दातवे
वसु । अस्रेधंतो मरुतः सोम्ये मधौ स्वाहेह मादयाध्वै ॥६॥२९॥
सस्वश्चिद्धि तन्व१ः शुंभमाना आ हंसासो नीलपृष्ठा अपप्तन् ।
विश्वं शर्धो अभितो मा नि षेद नरो न रण्वाः सवने मदंतः ॥७॥
यो नो मरुतो अभि दुर्हृणायुस्तिरश्चित्तानि वसवो जिघांसति ।
द्रुहः पाशान्प्रति स मुचीष्ट तपिष्ठेन हन्मना हंतना तं ॥८॥ सां-
तपना इदं हविर्मरुतस्तज्जुजुष्टन । युष्माकोती रिशादसः ॥९॥
गृहमेधास आ गत मरुतो माप भूतन । युष्माकोती सुदानवः
॥१०॥ इहेह वः स्वतवसः कवयः सूर्यत्वचः । यज्ञं मरुत आ
वृणे ॥११॥ त्र्यंबकं यजामहे सुगंधिं पुष्टिवर्धनं । उर्वारुकमिव
बंधनान्मृत्योर्मुक्षीय मामृतात् ॥१२॥३०॥४॥



Digitized by Google

यत् आविः अर्व तत् एनः ईमहे तुराणां॥५॥ प्र सा वाचि सु-ऽस्तुतिः मघोनां इदं सुऽउक्तं मरुतः जुषंत आरात् चित् द्वेषः वृषणः युयोत यूयं पात स्वस्तिऽभिः सदा नः ॥६॥२८॥

---

॥५९॥ यं त्रायध्वे इदंऽइदं देवासः यं च नयथ तस्मै अग्ने वरुण मित्र अर्यमन् मरुतः शर्म यच्छत॥१॥ युष्माकं देवाः अवसा अहनि प्रिये ईजानः तरति द्विषः प्र सः क्षयं तिरते वि महीः इषः यः वः वराय दाशति॥२॥ नहि वः चरमं चन वसिष्ठः परिऽमंसते अस्माकं अद्य मरुतः सुते सचा विश्वे पिबत कामिनः॥३॥ नहि वः ऊतिः पृतनासु मर्धति यस्मै अराध्वं नरः अभि वः आ अवर्त् सुऽमतिः नवीयसी तूयं यात पिपीषवः॥४॥ ओ सु घृष्विऽराधसः यातन अंधांसि पीतये इमा वः हव्या मरुतः ररे हि कं मो सु अन्यत्र गंतन॥५॥ आ च नः बर्हिः सदत अवित च नः स्पार्हाणि दातवे वसु अस्रेधंतः मरुतः सोम्ये मधौ स्वाहा इह मादयाध्वै॥६॥२९॥ सस्वः चित् हि तन्वः शुंभमानाः आ हंसासः नीलऽपृष्ठाः अपप्तन् विश्वं शर्धः अभितः मा नि सेद नरः न रण्वाः सवने मदंतः॥७॥ यः नः मरुतः अभि दुःऽहृणायुः तिरः चित्तानि वसवः जिघांसति द्रुहः पाशान् प्रति सः मुचीष्ट तपिष्ठेन हन्मना हंतन तं॥८॥ सांऽतपनाः इदं हविः मरुतः तत् जुजुष्टन युष्माक ऊती रिशादसः॥९॥ गृहऽमेधासः आ गत मरुतः मा अप भूतन युष्माक ऊती सुऽदानवः॥१०॥ इहऽइह वः स्वऽतवसः कवयः सूर्यऽत्वचः यज्ञं मरुतः आ वृणे॥११॥ त्र्यंबकं यजामहे सुगंधिं पुष्टिवर्धनं उर्वारुकमिव बंधनान्मृत्योर्मुक्षीय मामृतात्॥१२॥३०॥४॥



Digitized by Google

॥६०॥ १—१२ वसिष्ठः ॥ १ सूर्यः । २—१२ मित्रावरुणौ ॥ त्रिष्टुप् ॥

॥६०॥ यदद्य सूर्य ब्रवोऽनागा उद्यन्मित्राय वरुणाय सत्यं। वयं देवत्रादिते स्याम तव प्रियासो अर्यमन्गृणंतः ॥१॥ एष स्य मित्रावरुणा नृचक्षा उभे उदेति सूर्यो अभि ज्मन्। विश्वस्य स्थातुर्जगतश्च गोपा ऋजु मर्तेषु वृजिना च पश्यन् ॥२॥ अयुक्त सप्त हरितः सधस्थाद्या ईं वहंति सूर्यं घृताचीः। धामानि मित्रावरुणा युवाकुः सं यो यूथेव जनिमानि चष्टे ॥३॥ उद्वां पृक्षासो मधुमंतो अस्थुरा सूर्यो अरुहच्छुक्रमर्णः। यस्मा आदित्या अध्वनो रदंति मित्रो अर्यमा वरुणः सजोषाः ॥४॥ इमे चेतारो अनृतस्य भूरेर्मित्रो अर्यमा वरुणो हि संति। इम ऋतस्य वावृधुर्दुरोणे शग्मासः पुत्रा अदितेरदब्धाः ॥५॥ इमे मित्रो वरुणो दूळभासोऽचेतसं चिच्चितयंति दक्षैः। अपि क्रतुं सुचेतसं वतंतस्तिरश्चिदंहः सुपथा नयंति ॥६॥१॥ इमे दिवो अनिमिषा पृथिव्याश्चिकित्वांसो अचेतसं नयंति। प्रव्राजे चिन्नद्यो गाधमस्ति पारं नो अस्य विष्पितस्य पर्षन् ॥७॥ यद्गोपावददितिः शर्म भद्रं मित्रो यच्छंति वरुणः सुदासे। तस्मिन्ना तोकं तनयं दधाना मा कर्म देवहेळनं तुरासः ॥८॥ अव वेदिं होत्राभिर्यजेत रिपः काश्चिद्वरुणध्रुतः सः। परि द्वेषोभिरर्यमा वृणक्तूरुं सुदासे वृषणा उ लोकं ॥९॥ सस्वश्चिद्धि समृतिस्त्वेष्येषामपीच्येन सहसा सहंते। युष्मद्भिया वृषणो रेजमाना दक्षस्य चिन्महिना मृळता नः ॥१०॥ यो ब्रह्मणे सुमतिमायजाते वाजस्य सातौ परमस्य रायः। सीक्षंत मन्युं मघवानो अर्य उरु क्षयाय चक्रिरे सुधातु ॥११॥ इयं देव पुरोहितिर्युवभ्यां यज्ञेषु मित्रावरुणावकारि।



Digitized by Google

॥६०॥ यत् अद्य सूर्य ब्रवः अनागाः उत्ऽयन् मित्राय वरुणाय सत्यं वयं देवऽत्रा अदिते स्याम तव प्रियासः अर्यमन् गृणंतः ॥१॥ एषः स्यः मित्रावरुणा नृऽचक्षाः उभे उत् एति सूर्यः अभि ज्मन् विश्वस्य स्थातुः जगतः च गोपाः ऋजु मर्तेषु वृजिना च पश्यन् ॥२॥ अयुक्त सप्त हरितः सधऽस्थात् याः ईं वहंति सूर्यं घृताचीः धामानि मित्रावरुणा युवाकुः सं यः यूथाऽइव जनिमानि चष्टे ॥३॥ उत् वां पृक्षासः मधुऽमंतः अस्थुः आ सूर्यः अरुहत् शुक्रं अर्णः यस्मै आदित्याः अध्वनः रदंति मित्रः अर्यमा वरुणः सऽजोषाः ॥४॥ इमे चेतारः अनृतस्य भूरेः मित्रः अर्यमा वरुणः हि संति इमे ऋतस्य ववृधुः दुरोणे शग्मासः पुत्राः अदितेः अदब्धाः ॥५॥ इमे मित्रः वरुणः दुःऽदभासः अचेतसं चित् चितयंति दक्षैः अपि क्रतुं सुऽचेतसं वतंतः तिरः चित् अंहः सुऽपथा नयंति ॥६॥१॥ इमे दिवः अनिऽमिषा पृथिव्याः चिकित्वांसः अचेतसं नयंति प्रऽव्राजे चित् नद्यः गाधं अस्ति पारं नः अस्य विष्पितस्य पर्षन् ॥७॥ यत् गोपावत् अदितिः शर्म भद्रं मित्रः यच्छंति वरुणः सुऽदासे तस्मिन् आ तोकं तनयं दधानाः मा कर्म देवऽहेळनं तुरासः ॥८॥ अव वेदिं होत्राभिः यजेत रिपः काः चित् वरुणऽध्रुतः सः परि द्वेषःऽभिः अर्यमा वृणक्तु उरुं सुऽदासे वृषणौ ऊं लोकं ॥९॥ सस्वः चित् हि संऽवृतिः त्वेषी एषां अपीच्येन सहसा सहंते युष्मत् भिया वृषणः रेजमानाः दक्षस्य चित् महिना मृळत नः ॥१०॥ यः ब्रह्मणे सुऽमतिं आऽयजाते वाजस्य सातौ परमस्य रायः सीक्षंत मन्युं मघऽवानः अर्यः उरु क्षयाय चक्रिरे सुऽधातु ॥११॥ इयं देवा पुरःऽहितिः युवऽभ्यां यज्ञेषु मित्रावरुणौ अकारि



Digitized by Google

विश्वानि दुर्गा पिपृतं तिरो नो यूयं पात स्वस्तिभिः सदा नः ॥१२॥२॥

---

॥ ६१ ॥ १—७ वसिष्ठः ॥ मित्रावरुणौ ॥ त्रिष्टुप् ॥

॥६१॥ उद्वां चक्षुर्वरुणा सुप्रतीकं देवयोरेति सूर्यस्ततन्वान्। अभि यो विश्वा भुवनानि चष्टे स मन्युं मर्त्येष्वा चिकेत ॥१॥ प्र वां स मित्रावरुणावृतावा विप्रो मन्मानि दीर्घश्रुदियर्ति। यस्य ब्रह्माणि सुक्रतू अवाथ आ यत्क्रत्वा न शरदः पृणैथे ॥२॥ प्रोरोर्मित्रावरुणा पृथिव्याः प्र दिव ऋष्वाद्बृहतः सुदानू। स्पशो दधाथे ओषधीषु विक्ष्वृधग्यतो अनिमिषं रक्षमाणा ॥३॥ शंसा मित्रस्य वरुणस्य धाम शुष्मो रोदसी बद्बधे महित्वा। अयन्मासा अयज्वनामवीराः प्र यज्ञमन्मा वृजनं तिराते ॥४॥ अमूरा विश्वा वृषणाविमा वां न यासु चित्रं ददृशे न यक्षं। द्रुहः सचन्ते अनृता जनानां न वां निण्यान्यचिते अभूवन् ॥५॥ समु वां यज्ञं महयं नमोभिर्हुवे वां मित्रावरुणा सबाधः। प्र वां मन्मान्यृचसे नवानि कृतानि ब्रह्म जुजुषन्निमानि ॥६॥ इयं देव पुरोहितिर्युवभ्यां यज्ञेषु मित्रावरुणावकारि। विश्वानि दुर्गा पिपृतं तिरो नो यूयं पात स्वस्तिभिः सदा नः ॥७॥३॥

---

॥ ६२ ॥ १—६ वसिष्ठः ॥ १—३ सूर्यः । ४—६ मित्रावरुणौ ॥ त्रिष्टुप् ॥

॥६२॥ उत्सूर्यो बृहदर्चींष्यश्रेत्पुरु विश्वा जनिम मानुषाणां। समो दिवा ददृशे रोचमानः क्रत्वा कृतः सुकृतः कर्तृभिर्भूत् ॥१॥ स सूर्य प्रति पुरो न उद्गा एभिः स्तोमेभिरेतशेभिरेवैः। प्र नो मित्राय वरुणाय वोचोऽनागसो अर्यम्णे अग्नये च ॥२॥ वि नः सहस्रं शुरुधो रदन्त्वृतावानो वरुणो मित्रो



Digitized by Google

विश्वानि दुःऽगा पिपृतं तिरः नः यूयं पात स्वस्तिऽभिः सदा नः ॥ १२ ॥ २ ॥

॥ ६१ ॥ उत् वां चक्षुः वरुणा सुऽप्रतीकं देवयोः एति सूर्यः ततन्वान् अभि यः विश्वा भुवनानि चष्टे सः मन्युं मर्त्येषु आ चिकेत ॥ १ ॥ प्र वां सः मित्रावरुणौ ऋतऽवा विप्रः मन्मानि दीर्घऽश्रुत् इयर्ति यस्य ब्रह्माणि सुऽक्रतू॰ अवाथः आ यत् क्रत्वा न शरदः पृणैथे॰ ॥ २ ॥ प्र उरोः मित्रावरुणा पृथिव्याः प्र दिवः ऋष्वात् बृहतः सुऽदानू॰ स्पशः दधाथे॰ ओषधीषु विक्षु ऋधक् यतः अनिऽमिषं रक्षमाणा ॥ ३ ॥ शंस मित्रस्य वरुणस्य धाम शुष्मः रोदसी॰ बबधे महिऽत्वा अयन् मासाः अयज्वनां अवीराः प्र यज्ञऽमन्मा वृजनं तिराते ॥ ४ ॥ अमूरा विश्वा वृषणौ इमाः वां न यासु चित्रं ददृशे न यक्षं द्रुहः सचन्ते अनृता जनानां न वां निण्यानि अचिते अभूवन् ॥ ५ ॥ सं ऊं॰ वां यज्ञं महयं नमःऽभिः हुवे वां मित्रावरुणा सऽबाधः प्र वां मन्मानि ऋचसे नवानि कृतानि ब्रह्म जुजुषन् इमानि ॥ ६ ॥ इयं देवा पुरःऽहितिः युवऽभ्यां यज्ञेषु मित्रावरुणौ अकारि विश्वानि दुःऽगा पिपृतं तिरः नः यूयं पात स्वस्तिऽभिः सदा नः ॥ ७ ॥ ३ ॥

॥ ६२ ॥ उत् सूर्यः बृहत् अर्चींषि अश्रेत् पुरु विश्वा जनिम मानुषाणां समः दिवा ददृशे रोचमानः क्रत्वा कृतः सुऽकृतः कर्तृऽभिः भूत् ॥ १ ॥ सः सूर्य प्रति पुरः नः उत् गाः एभिः स्तोमेभिः एतशेभिः एवैः प्र नः मित्राय वरुणाय वोचः अनागसः अर्यम्णे अग्नये च ॥ २ ॥ वि नः सहस्रं शुरुधः रदन्तु ऋतऽवानः वरुणः मित्रः

अग्निः। यच्छंतु चंद्रा उपमं नो अर्कमा नः कामं पूपुरंतु स्तवानाः ॥ ३॥ द्यावाभूमी अदिते त्रासीथां नो ये वां जज्ञुः सुजनिमान ऋष्वे। मा हेळे भूम वरुणस्य वायोर्मा मित्रस्य प्रियतमस्य नृणां॥४॥ प्र बाहवा सिसृतं जीवसे न आ नो गव्यूतिमुक्षतं घृतेन। आ नो जने श्रवयतं युवाना श्रुतं मे मित्रावरुणा हवेमा॥५॥ नू मित्रो वरुणो अर्यमा नस्त्मने तोकाय वरिवो दधंतु। सुगा नो विश्वा सुपथानि संतु यूयं पात स्वस्तिभिः सदा नः ॥ ६॥ ४॥

---

॥ ६३॥ १—६ वसिष्ठः ॥ १—५¹ सूर्यः । ५².६ मित्रावरुणौ ॥ त्रिष्टुप् ॥

॥ ६३॥ उद्वेति सुभगो विश्वचक्षाः साधारणः सूर्यो मानुषाणां। चक्षुर्मित्रस्य वरुणस्य देवश्चर्मेव यः समविव्यक्तमांसि॥१॥ उद्वेति प्रसवीता जनानां महान्केतुरर्णवः सूर्यस्य। समानं चक्रं पर्याविवृत्सन्यदेतशो वहति धूर्षु युक्तः॥२॥ विभ्राजमान उषसामुपस्थाद्रेभैरुदेत्यनुमद्यमानः। एष मे देवः सविता चच्छंद यः समानं न प्रमिनाति धाम॥३॥ दिवो रुक्म उरुचक्षा उदेति दूरेअर्थस्तरणिर्भ्राजमानः। नूनं जनाः सूर्येण प्रसूता अयन्नर्थानि कृणवन्नपांसि ॥४॥ यत्रा चक्रुरमृता गातुमस्मै श्येनो न दीयन्नन्वेति पाथः। प्रति वां सूर उदिते विधेम नमोभिर्मित्रावरुणोत हव्यैः ॥५॥ नू मित्रो वरुणो अर्यमा नस्त्मने तोकाय वरिवो दधंतु। सुगा नो विश्वा सुपथानि संतु यूयं पात स्वस्तिभिः सदा नः ॥ ६॥ ५॥

---

॥ ६४॥ १—५ वसिष्ठः ॥ मित्रावरुणौ ॥ त्रिष्टुप् ॥

॥ ६४॥ दिवि क्षयंता रजसः पृथिव्यां प्र वां घृतस्य निर्णिजो



Digitized by Google

अग्निः यच्छंतु चंद्राः उपऽमं नः अर्कं आ नः कामं पूपुरंतु स्तवा-
नाः ॥३॥ द्यावाभूमी अदिते त्रासीथां नः ये वां जज्ञुः सुऽजनि-
मानः क्षुधे मा हेळे भूम वरुणस्य वायोः मा मित्रस्य प्रियऽतं-
मस्य नृणां ॥४॥ प्र बाहवा सिसृतं जीवसे नः आ नः गव्यूतिं उ-
क्षतं घृतेन आ नः जने श्रवयतं युवाना श्रुतं मे मित्रावरुणा हवा
इमा ॥५॥ नु मित्रः वरुणः अर्यमा नः त्मने तोकाय वरिवः दधंतु
सुऽगा नः विश्वा सुऽपथानि संतु यूयं पात स्वस्तिऽभिः सदा
नः ॥६॥४॥

---

॥६३॥ उत् ऊं एति सुऽभगः विश्वऽचक्षाः साधारणः सूर्यः
मानुषाणां चक्षुः मित्रस्य वरुणस्य देवः चर्मऽइव यः संऽअवि-
व्यक् तमांसि ॥१॥ उत् ऊं एति प्रऽसविता जनानां महान् केतुः
अर्णवः सूर्यस्य समानं चक्रं परिऽआविवृत्सन् यत् एतशः वहति
धूःऽसु युक्तः ॥२॥ विऽभ्राजमानः उषसां उपऽस्थात् रेभैः उत्
एति अनुऽमद्यमानः एषः मे देवः सविता चच्छंद यः समानं न
प्रऽमिनाति धाम ॥३॥ दिवः रुक्मः उरुऽचक्षाः उत् एति दूरे-
ऽअर्थः तरणिः भ्राजमानः नूनं जनाः सूर्येण प्रऽसूताः अयन्
अर्थानि कृणवन् अपांसि ॥४॥ यत्र चक्रुः अमृताः गातुं अस्मै
श्येनः न दीयन् अनु एति पाथः प्रति वां सूरे उत्ऽइते विधेम
नमःऽभिः मित्रावरुणा उत हव्यैः ॥५॥ नु मित्रः वरुणः अर्यमा
नः त्मने तोकाय वरिवः दधंतु सुऽगा नः विश्वा सुऽपथानि संतु
यूयं पात स्वस्तिऽभिः सदा नः ॥६॥५॥

---

॥६४॥ दिवि क्षयंता रजसः पृथिव्यां प्र वां घृतस्य निःऽनिजः



Digitized by Google

ददीरन्। हव्यं नो मित्रो अर्यमा सुजातो राजा सुक्षत्रो वरुणो
जुषंत ॥१॥ आ राजाना मह ऋतस्य गोपा सिंधुपती क्षत्रिया
यातमर्वाक्। इळां नो मित्रावरुणोत वृष्टिमव दिव इन्वतं जी-
रदानू ॥२॥ मित्रस्तन्नो वरुणो देवो अर्यः प्र साधिष्ठेभिः पथि-
भिर्नयंतु। ब्रवद्यथा न आदरिः सुदास इषा मदेम सह देवगोपाः
॥३॥ यो वां गर्तं मनसा तक्षदेतमूर्ध्वां धीतिं कृणवद्धारयच्च। उक्षे-
थां मित्रावरुणा घृतेन ता राजाना सुक्षितीस्तर्पयेथां ॥४॥ एष
स्तोमो वरुण मित्र तुभ्यं सोमः शुक्रो न वायवेऽयामि। अविष्टं
धियो जिगृतं पुरंधीर्यूयं पात स्वस्तिभिः सदा नः ॥५॥६॥

---

॥ ६५ ॥ १—५ वसिष्ठः ॥ मित्रावरुणौ ॥ त्रिष्टुप् ॥

॥६५॥ प्रति वां सूर उदिते सूक्तैर्मित्रं हुवे वरुणं पूतदक्षं।
ययोरसुर्य१मक्षितं ज्येष्ठं विश्वस्य यामन्नाचिता जिगत्नु ॥१॥
ता हि देवानामसुरा तावर्या ता नः क्षितीः करतमूर्जयंतीः।
अश्याम मित्रावरुणा वयं वां द्यावा च यत्र पीपयन्नहा च ॥२॥
ता भूरिपाशावनृतस्य सेतू दुरत्येतू रिपवे मर्त्याय। ऋतस्य मि-
त्रावरुणा पथा वामपो न नावा दुरिता तरेम ॥३॥ आ नो
मित्रावरुणा हव्यजुष्टिं घृतैर्गव्यूतिमुक्षतमिळाभिः। प्रति वा-
मत्र वरमा जनाय पृणीतमुद्नो दिव्यस्य चारोः॥४॥ एष स्तोमो
वरुण मित्र तुभ्यं सोमः शुक्रो न वायवेऽयामि। अविष्टं धियो
जिगृतं पुरंधीर्यूयं पात स्वस्तिभिः सदा नः ॥५॥७॥

---

॥ ६६ ॥ १—१९ वसिष्ठः ॥ १—३. १७—१९ मित्रावरुणौ। ४—१३ आदित्याः। १४—१६ सूर्यः ॥
१—९. १७—१९ गायत्री। १०. १२. १४ बृहती। ११. १३. १५ सतोबृहती। १६ पुरउष्णिक् ॥

॥६६॥ प्र मित्रयोर्वरुणयोः स्तोमो न एतु शूष्यः। नमस्वा-



Digitized by Google

दुदीरन् हुव्यं नः मित्रः अर्यमा सुऽजातः राजा सुऽक्षत्रः वरुणः जुषंत ॥१॥ आ राजाना महः ऋतस्य गोपा सिंधुऽपती॰ क्षत्रिया यातं अर्वाक् इळां नः मित्रावरुणा उत वृष्टिं अव दिवः इन्वतं जीरऽदानू॰ ॥२॥ मित्रः तत् नः वरुणः देवः अर्यः प्र साधिष्ठेभिः पथिऽभिः नयंतु अवत् यथा नः आत् अरिः सुऽदासे इषा मदेम सह देवऽगोपाः ॥३॥ यः वां गर्तं मनसा तक्षत् एतं ऊर्ध्वां धीतिं कृणवत् धारयत् च उक्षेथां मित्रावरुणा घृतेन ता राजाना सुऽक्षितीः तर्पयेथां ॥४॥ एषः स्तोमः वरुण मित्र तुभ्यं सोमः शुक्रः न वायवे अयामि अविष्टं धियः जिगृतं पुरंऽधीः यूयं पात स्वस्तिऽभिः सदा नः ॥५॥६॥

---

॥६५॥ प्रति वां सूरे उत्ऽइते सुऽउक्तैः मित्रं हुवे वरुणं पूतऽदक्षं ययोः असुर्यं अक्षितं ज्येष्ठं विश्वस्य यामन् आऽचिता जिगत्नु ॥१॥ ता हि देवानां असुरा तौ अर्या ता नः क्षितीः करतं ऊर्जयंतीः अश्याम मित्रावरुणा वयं वां द्यावा च यत्र पीपयन् अहा च ॥२॥ ता भूरिऽपाशौ अनृतस्य सेतू॰ दुःऽअत्येतू॰ रिपवे मर्त्याय ऋतस्य मित्रावरुणा पथा वां अपः न नावा दुःऽइता तरेम ॥३॥ आ नः मित्रावरुणा हव्यऽजुष्टिं घृतैः गव्यूतिं उक्षतं इळाभिः प्रति वां अत्र वरं आ जनाय पृणीतं उद्नः दिव्यस्य चारोः ॥४॥ एषः स्तोमः वरुण मित्र तुभ्यं सोमः शुक्रः न वायवे अयामि अविष्टं धियः जिगृतं पुरंऽधीः यूयं पात स्वस्तिऽभिः सदा नः ॥५॥७॥

---

॥६६॥ प्र मित्रयोः वरुणयोः स्तोमः नः एतु शूष्यः नमस्वान्



Digitized by Google

न्नुविजातयोः ॥१॥ या धारयंत देवाः सुदक्षा दक्षपितरा ।
असुर्याय प्रमंहसा ॥२॥ ता नः स्तिपा तनूपा वरुण जरितॄ-
णां । मित्र साधयतं धियः ॥३॥ यदद्य सूर उदितेऽनागा
मित्रो अर्यमा । सुवाति सविता भगः ॥४॥ सुप्रावीरस्तु स
क्षयः प्र नु यामन्त्सुदानवः । ये नो अंहोऽतिपिप्रति ॥५॥८॥
उत स्वराजो अदितिरदब्धस्य व्रतस्य ये । महो राजान ईशते
॥६॥ प्रति वां सूर उदिते मित्रं गृणीषे वरुणं । अर्यमणं रिशा-
दसं ॥७॥ राया हिरण्यया मतिरियमवृकाय शवसे । इयं विप्रा
मेधसातये ॥८॥ ते स्याम देव वरुण ते मित्र सूरिभिः सह ।
इषं स्वश्च धीमहि ॥९॥ बहवः सूरचक्षसोऽग्निजिह्वा ऋता-
वृधः । त्रीणि ये येमुर्विदथानि धीतिभिर्विश्वानि परिभूति-
भिः ॥१०॥९॥ वि ये दधुः शरदं मासमादहर्यज्ञमक्तुं चादृचं ।
अनाप्यं वरुणो मित्रो अर्यमा क्षत्रं राजान आशत ॥११॥
तद्वो अद्य मनामहे सूक्तैः सूर उदिते । यदोहते वरुणो
मित्रो अर्यमा यूयमृतस्य रथ्यः ॥१२॥ ऋतावान ऋतजाता
ऋतावृधो घोरासो अनृतद्विषः । तेषां वः सुम्ने सुच्छर्दिष्टमे
नरः स्याम ये च सूरयः ॥१३॥ उदु त्यद्दर्शतं वपुर्दिव एति
प्रतिह्वरे । यदीमाशुर्वहति देव एतशो विश्वस्मै चक्षसे अरं
॥१४॥ शीर्ष्णःशीर्ष्णो जगतस्तस्थुषस्पतिं समया विश्वमा
रजः । सप्त स्वसारः सुविताय सूर्यं वहंति हरितो रथे ॥१५॥१०॥
तच्चक्षुर्देवहितं शुक्रमुच्चरत् । पश्येम शरदः शतं जीवेम
शरदः शतं ॥१६॥ काव्येभिरदाभ्या यातं वरुण द्युमत् ।
मित्रश्च सोमपीतये ॥१७॥ दिवो धामभिर्वरुण मित्र-
श्चा यातमद्रुहा । पिबतं सोममातुजी ॥१८॥ आ यातं



Digitized by Google

तुवि॒ऽजा॒तयोः॑ ॥ १ ॥ या धा॒रय॑न्त दे॒वाः सु॒ऽदक्षा॒ दक्ष॑ऽपितरा असु॒र्या॑य प्रऽम॑हसा ॥ २ ॥ ता नः॑ स्ति॒ऽपा त॑नू॒ऽपा वरु॑ण जरि॒तॄ॒णां मित्र॑ साध॒यतं॒ धियः॑ ॥ ३ ॥ यत् अ॒द्य सूरे॑ उत्ऽइ॑ते अना॑गाः मि॒त्रः अ॒र्य॒मा सु॒वाति॑ सवि॒ता भगः॑ ॥ ४ ॥ सु॒प्र॒ऽअ॒वीः अ॒स्तु सः क्षयः॑ प्र नु याम॑न् सु॒ऽदा॒न॒वः॒ ये नः॒ अंहः॑ अ॒ति॒ऽपिप्र॑ति ॥ ५ ॥ ८ ॥ उ॒त स्व॒ऽरा॑जः अदि॑तिः अद॑ब्धस्य व्र॒तस्य॑ ये म॒हः राजा॑नः ई॒श॒ते ॥ ६ ॥ प्रति॑ वां॒ सूरे॑ उत्ऽइ॑ते मि॒त्रं गृ॑णी॒षे॒ वरु॑णं अ॒र्य॒मणं॑ रि॒शाद॑सं ॥ ७ ॥ रा॒या हि॒र॒ण्य॒ऽया म॒तिः इ॒यं अ॒वृ॒काय॒ शव॑से इ॒यं विप्रा॑ मे॒धऽसा॑तये ॥ ८ ॥ ते स्या॒म दे॒व॒ व॒रु॒ण॒ ते मि॒त्र॒ सू॒रिऽभिः स॒ह इषं॑ स्वः॑ च धी॒महि ॥ ९ ॥ ब॒ह॒वः॑ सूर॑ऽचक्षसः अ॒ग्नि॒ऽजि॒ह्वाः ऋ॒त॒ऽवृधः॑ त्रीणि॑ ये ये॒मुः वि॒दथा॑नि धी॒तिऽभिः॑ विश्वा॑नि परि॑भूति॒ऽभिः॑ ॥ १० ॥ ९ ॥ वि ये द॒धुः श॒रद॑ मास॑ आत् अहः॑ य॒ज्ञं अ॒क्तुं च॒ आत् ऋचं॑ अना॒प्यं वरु॑णः मि॒त्रः अ॒र्य॒मा क्ष॒त्रं राजा॑नः आ॒श॒त ॥ ११ ॥ तत् व॒ः अ॒द्य म॒नामहे सु॒ऽउ॒क्तैः सूरे॑ उत्ऽइ॑ते यत् ओह॑ते वरु॑णः मि॒त्रः अ॒र्य॒मा यू॒यं ऋ॒तस्य॑ र॒थ्यः ॥ १२ ॥ ऋ॒तऽवा॑नः ऋ॒तऽजा॑ताः ऋ॒त॒ऽवृधः॑ घो॒रासः॑ अ॒नृ॒त॒ऽद्विषः॑ तेषां॑ वः॒ सु॒म्ने सु॒च्छ॒र्दिः॒ऽत॑मे न॒रः स्या॒म॑ ये च॒ सू॒रयः॑ ॥ १३ ॥ उत् ऊं॒ त्यत् द॒र्श॒तं वपुः॑ दि॒वः ए॒ति॒ प्र॒ति॒ऽह्व॒रे यत् ई॒म् आ॒शुः वह॑ति दे॒वः एत॑शः विश्व॑स्मै चक्ष॑से अरं॑ ॥ १४ ॥ शी॒र्ष्णःऽशी॒र्ष्णः जग॑तः त॒स्थुषः॑ पतिं॑ स॒मया॑ विश्वं॑ आ रजः॑ स॒प्त स्वसा॑रः सु॒वि॒ताय॑ सूर्यं॑ वह॑न्ति ह॒रितः॑ रथे॑ ॥ १५ ॥ १० ॥ तत् चक्षुः॑ दे॒वऽहि॑तं शु॒क्रं उ॒त्ऽच॒रत् पश्ये॑म श॒रदः॑ श॒तं जी॑वे॑म श॒रदः॑ श॒तं ॥ १६ ॥ का॒व्येभिः अ॒दा॒भ्या आ या॒तं व॒रु॒ण॒ द्यु॒ऽम॒त् मि॒त्रः च॒ सोम॑ऽपीतये ॥ १७ ॥ दि॒वः धाम॑ऽभिः व॒रु॒ण॒ मि॒त्रः च॒ आ या॒तं अ॒द्रुहा॑ पिब॑तं सोमं॑ आ॒ऽतु॒जी॒ ॥ १८ ॥ आ या॒तं



Digitized by Google

मित्रावरुणा जुषाणावाहुतिं नरा । पातं सोममृतावृधा ॥१९॥११॥

---

॥ ६७ ॥ १–१० वसिष्ठः ॥ अश्विनौ ॥ त्रिष्टुप् ॥

॥६७॥ प्रति वां रथं नृपती जरध्यै हविष्मता मनसा यज्ञियेन । यो वां दूतो न धिष्ण्यावजीगरच्छा सूनुर्न पितरा विवक्मि ॥१॥ अशोच्यग्निः समिधानो अस्मे उपो अदृश्रन्तमसश्चिदंताः । अचेति केतुरुषसः पुरस्ताच्छ्रिये दिवो दुहितुर्जायमानः ॥२॥ अभि वां नूनमश्विना सुहोता स्तोमैः सिषक्ति नासत्या विवक्वान् । पूर्वीभिर्यातं पथ्याभिरर्वाक्स्वर्विदा वसुमता रथेन ॥३॥ अवोर्वां नूनमश्विना युवाकुर्हुवे यद्वां सुते माध्वी वसूयुः । आ वां वहंतु स्थविरासो अश्वाः पिबाथो अस्मे सुषुता मधूनि ॥४॥ प्राचीमु देवाश्विना धियं मेऽमृध्रां सातये कृतं वसूयुं । विश्वा अविष्टं वाज आ पुरंधीस्ता नः शक्तं शचीपती शचीभिः ॥५॥१२॥ अविष्टं धीष्वश्विना न आसु प्रजावद्रेतो अह्रयं नो अस्तु । आ वां तोके तनये तूतुजानाः सुरत्नासो देववीतिं गमेम ॥६॥ एष स्य वां पूर्वगत्वेव सख्ये निधिर्हितो माध्वी रातो अस्मे । अहेळता मनसा यातमर्वागश्नंता हव्यं मानुषीषु विक्षु ॥७॥ एकस्मिन्योगे भुरणा समाने परि वां सप्त स्रवतो रथो गात् । न वायंति सुभ्वो देवयुक्ता ये वां धूर्षु तरणयो वहंति ॥८॥ असश्चता मघवद्भ्यो हि भूतं ये राया मघदेयं जुनंति । प्र ये बंधुं सूनृताभिस्तिरंते गव्या पृंचंतो अश्व्या मघानि ॥९॥ नू मे हवमा शृणुतं युवाना यासिष्टं वर्तिरश्विनाविरावत् । धत्तं रत्नानि जरतं च सूरीन्यूयं पात स्वस्तिभिः सदा नः ॥१०॥१३॥



Digitized by Google

मित्रावरुणा जुषाणौ आऽहुतिं नरा पातं सोमं ऋतऽवृधा ॥१९॥११॥

---

॥६७॥ प्रति वां रथं नृऽपती॰ जरध्यै हविष्मता मनसा यज्ञियेन यः वां दूतः न धिष्ण्यौ अजीगः अच्छ सूनुः न पितरा विवक्मि ॥१॥ अशोचि अग्निः संऽइधानः अस्मे॰ उपो॰ अदृश्रन् तमसः चित् अन्ताः अचेति केतुः उषसः पुरस्तात् श्रिये दिवः दुहितुः जायमानः ॥२॥ अभि वां नूनं अश्विना सुऽहोता स्तोमैः सिसक्ति नासत्या विवक्वान् पूर्वीभिः यातं पथ्याभिः अर्वाक् स्वःऽविदा वसुऽमता रथेन ॥३॥ अवोः वां नूनं अश्विना युवाकुः हुवे यत् वां सुते माध्वी॰ वसुऽयुः आ वां वहन्तु स्थविरासः अश्वाः पिबाथः अस्मे॰ सुऽसुता मधूनि ॥४॥ प्राचीं ऊं॰ देवा अश्विना धियं मे अमृध्रां सातये कृतं वसुऽयुं विश्वाः अविष्टं वाजे आ पुरंऽधीः ता नः शक्तं शचीऽपती॰ शचीभिः ॥५॥१२॥ अविष्टं धीषु अश्विना नः आसु प्रजाऽवत् रेतः अह्रयं नः अस्तु आ वां तोके तनये तूतुजानाः सुऽरत्नासः देवऽवीतिं गमेम ॥६॥ एषः स्यः वां पूर्वगत्वाऽइव सख्ये निऽधिः हितः माध्वी॰ रातः अस्मे॰ अहेळता मनसा आ यातं अर्वाक् अश्नन्ता हव्यं मानुषीषु विक्षु ॥७॥ एकस्मिन् योगे भुरणा समाने परि वां सप्त स्रवतः रथः गात् न वायन्ति सुऽभ्वः देवऽयुक्ताः ये वां धूःऽसु तरणयः वहन्ति ॥८॥ असश्चता मघवत्ऽभ्यः हि भूतं ये राया मघऽदेयं जुनन्ति प्र ये बन्धुं सूनृताभिः तिरन्ते गव्या पृञ्चन्तः अश्व्या मघानि ॥९॥ नु मे हवं आ शृणुतं युवाना यासिष्टं वर्तिः अश्विनौ इरावत् धत्तं रत्नानि जरतं च सूरीन् यूयं पात स्वस्तिऽभिः सदा नः ॥१०॥१३॥



Digitized by Google

॥ ६८ ॥ १–९ वसिष्ठः ॥ अश्विनौ ॥ १–७ विराट् । ८.९ त्रिष्टुप् ॥

॥ ६८ ॥ आ शुभ्रा यातमश्विना स्वश्वा गिरो दस्रा जुजुषाणा युवाकोः । हव्यानि च प्रतिभृता वीतं नः ॥ १ ॥ प्र वामंधांसि मद्यान्यस्थुररं गंतं हविषो वीतये मे । तिरो अर्यो हवनानि श्रुतं नः ॥ २ ॥ प्र वां रथो मनोजवा इयर्ति तिरो रजांस्यश्विना शतोतिः । अस्मभ्यं सूर्यावसू इयानः ॥ ३ ॥ अयं ह यद्वां देवया उ अद्रिरूर्ध्वो विवक्ति सोमसुद्युवभ्यां । आ वल्गू विप्रो ववृतीत हव्यैः ॥ ४ ॥ चित्रं ह यद्वां भोजनं न्वस्ति न्यत्रये महिष्वंतं युयोतं । यो वामोमानं दधते प्रियः सन् ॥ ५ ॥ १४ ॥ उत त्यद्वां जुरते अश्विना भूच्च्यवानाय प्रतीत्यं हविर्दे । अधि यद्वर्प इतऊति धत्थः ॥ ६ ॥ उत त्यं भुज्युमश्विना सखायो मध्ये जहुर्दुरेवासः समुद्रे । निरीं पर्षदरावा यो युवाकुः ॥ ७ ॥ वृकाय चिज्जसमानाय शक्तमुत श्रुतं शयवे हूयमाना । यावघ्न्यामपिन्वतमपो न स्तर्यं चिच्छक्त्यश्विना शचीभिः ॥ ८ ॥ एष स्य कारुर्जरते सूक्तैरग्रे बुधान उषसां सुमन्मा । इषा तं वर्धदघ्न्या पयोभिर्यूयं पात स्वस्तिभिः सदा नः ॥ ९ ॥ १५ ॥

---

॥ ६९ ॥ १–८ वसिष्ठः ॥ अश्विनौ ॥ त्रिष्टुप् ॥

॥ ६९ ॥ आ वां रथो रोदसी बद्बधानो हिरण्ययो वृषभिर्यात्वश्वैः । घृतवर्तनिः पविभी रुचान इषां वोळ्हा नृपतिर्वाजिनीवान् ॥ १ ॥ स पप्रथानो अभि पंच भूमा त्रिवंधुरो मनसा यातु युक्तः । विशो येन गच्छथो देवयंतीः कुत्रा चिद्याममश्विना दधाना ॥ २ ॥ स्वश्वा यशसा यातमर्वाग्दस्रा निधिं मधुमंतं पिबाथः । वि वां रथो वध्वा३ यादमानोऽंतान्दिवो बाधते वर्तनिभ्यां ॥ ३ ॥ युवोः श्रियं परि



Digitized by Google

॥६८॥ आ शुभ्रा यातं अश्विना सुऽअश्वा गिरः दस्रा जुजुषाणा युवाकोः हव्यानि च प्रति॑ऽभृता वीतं नः ॥१॥ प्र वां अंधांसि मद्यानि अस्थुः अरं गंतं हविषः वीतये मे तिरः अर्यः हवनानि श्रुतं नः ॥२॥ प्र वां रथः मनःऽजवाः इयर्ति तिरः रजांसि अश्विना शतऽऊतिः अस्मभ्यं सूर्यावसू इयानः ॥३॥ अयं ह यत् वां देवऽयाः ऊं अद्रिः ऊर्ध्वः विवक्ति सोमऽसुत् युवऽभ्यां आ वल्गू विप्रः ववृतीत हव्यैः ॥४॥ चित्रं ह यत् वां भोजनं नु अस्ति नि अत्रये महिष्वंतं युयोतं यः वां ओमानं दधते प्रियः सन् ॥५॥ १४॥ उत त्यत् वां जुरते अश्विना भूत् च्यवानाय प्रतीत्यं हविःऽदे अधि यत् वर्पः इतःऽऊति धत्थः ॥६॥ उत त्यं भुज्युं अश्विना सखायः मध्ये जहुः दुःऽएवासः समुद्रे निः ईं पर्षत् अरावा यः युवाकुः ॥७॥ वृकाय चित् जसमानाय शक्तं उत श्रुतं शयवे हूयमाना यौ अघ्न्यां अपिन्वतं अपः न स्तर्यं चित् शक्ती अश्विना शचीभिः ॥८॥ एषः स्यः कारुः जरते सुऽउक्तैः अग्रे बुधानः उषसां सुऽमन्मा इषा तं वर्धत् अघ्न्या पयःऽभिः यूयं पात स्वस्तिऽभिः सदा नः ॥९॥ १५॥

---

॥६९॥ आ वां रथः रोदसी बद्बधानः हिरण्ययः वृषऽभिः यातु अश्वैः घृतऽवर्तनिः पविऽभिः रुचानः इषां वोळ्हा नृऽपतिः वाजिनीऽवान् ॥१॥ सः पप्रथानः अभि पंच भूम त्रिऽवंधुरः मनसा आ यातु युक्तः विशः येन गच्छथः देवऽयंतीः कुत्र चित् यामं अश्विना दधाना ॥२॥ सुऽअश्वा यशसा आ यातं अर्वाक् दस्रा निऽधिं मधुऽमंतं पिबाथः वि वां रथः वध्वा यादमानः अंतान् दिवः बाधते वर्तनिऽभ्यां ॥३॥ युवोः श्रियं परि



Digitized by Google

योषावृणीत सूरो दुहिता परितक्म्यायां । यद्देवयंतमवथः श-
चीभिः परि घ्रंसमोमना वां वयो गात् ॥४॥ यो ह स्य वां रथि-
रा वस्त उस्रा रथो युजानः परियाति वर्तिः । तेन नः शं योरुष-
सो व्युष्टौ न्यश्विना वहतं यज्ञे अस्मिन् ॥५॥ नरा गौरेव विद्युतं
तृषाणास्माकमद्य सवनोप यातं । पुरुत्रा हि वां मतिभिर्हवंते
मा वामन्ये नि यमन्देवयंतः ॥६॥ युवं भुज्युमवविद्धं समुद्र
उदूहथुरर्णसो अस्रिधानैः । पतत्रिभिरश्रमैरव्यथिभिर्दंसना-
भिरश्विना पारयंता ॥७॥ नू मे हवमा शृणुतं युवाना यासिष्टं
वर्तिरश्विनाविरावत् । धत्तं रत्नानि जरतं च सूरीन्यूयं पात
स्वस्तिभिः सदा नः ॥८॥१६॥

---

॥ ७० ॥ १—७ वसिष्ठः ॥ अश्विनौ ॥ त्रिष्टुप् ॥

॥७०॥ आ विश्ववाराश्विना गतं नः प्र तत्स्थानमवाचि
वां पृथिव्यां । अश्वो न वाजी शुनपृष्ठो अस्थादा यत्से-
दथुर्ध्रुवसे न योनिं ॥१॥ सिषक्ति सा वां सुमतिश्चनिष्ठातापि
घर्मो मनुषो दुरोणे । यो वां समुद्रान्त्सरितः पिपर्त्येतग्वा
चिन्न सुयुजा युजानः ॥२॥ यानि स्थानान्यश्विना दधाथे
दिवो यह्वीष्वोषधीषु विक्षु । नि पर्वतस्य मूर्धनि सदंतेषं
जनाय दाशुषे वहंता ॥३॥ चनिष्टं देवा ओषधीष्वप्सु य-
द्योग्या अश्नवैथे ऋषीणां । पुरूणि रत्ना दधतौ न्य१स्मे
अनु पूर्वाणि चख्यथुर्युगानि ॥४॥ शुश्रुवांसा चिदश्विना
पुरूण्यभि ब्रह्माणि चक्षाथे ऋषीणां । प्रति प्र यातं वरमा
जनायास्मे वामस्तु सुमतिश्चनिष्ठा ॥५॥ यो वां यज्ञो ना-
सत्या हविष्मान्कृतब्रह्मा समर्यो३ भवाति । उप प्र यातं वरमा

योषा अवृणीत सूरः दुहिता परिऽतक्म्यायां यत् देवऽयंतं अ-
वथः शचीभिः परि घ्रंसं ओमना वां वयः गात् ॥४॥ यः ह स्यः
वां रथिरा वस्ते उस्राः रथः युजानः परिऽयाति वर्तिः तेन नः शं
योः उषसः विऽउष्टौ नि अश्विना वहतं यज्ञे अस्मिन् ॥५॥ नरा
गौराऽइव विऽद्युतं तृषाणा अस्माकं अद्य सवना उप यातं पुरु-
ऽत्रा हि वां मतिभिः हवंते मा वां अन्ये नि यमन् देवऽयंतः ॥६॥
युवं भुज्युं अवऽविद्धं समुद्रे उत् ऊहथुः अर्णसः अस्रिधानैः पत-
त्रिऽभिः अश्रमैः अव्यथिऽभिः दंसनाभिः अश्विना पारयंता
॥७॥ नु मे हवं आ शृणुतं युवाना यासिष्टं वर्तिः अश्विनौ इरा-
ऽवत् धत्तं रत्नानि जरतं च सूरीन् यूयं पात स्वस्तिऽभिः सदा
नः ॥८॥१६॥

---

॥७०॥ आ विश्वऽवारा अश्विना गतं नः प्र तत् स्थानं अवा-
चि वां पृथिव्यां अश्वः न वाजी शुनऽपृष्ठः अस्थात् आ यत्
सेदथुः ध्रुवसे न योनिं ॥१॥ सिसक्ति सा वां सुऽमतिः चनिष्ठा
अतापि घर्मः मनुषः दुरोणे यः वां समुद्रान् सरितः पिपर्ति एत-
ऽग्वा चित् न सुऽयुजा युजानः ॥२॥ यानि स्थानानि अश्विना
दधाथे दिवः यह्वीषु ओषधीषु विक्षु नि पर्वतस्य मूर्धनि सदंता
इषं जनाय दाशुषे वहंता ॥३॥ चनिष्टं देवौ ओषधीषु अप्ऽसु
यत् योग्याः अश्नवैथे ऋषीणां पुरूणि रत्ना दधतौ नि अस्मे
अनु पूर्वाणि चख्यथुः युगानि ॥४॥ शुश्रुऽवांसा चित् अश्विना
पुरूणि अभि ब्रह्माणि चक्षाथे ऋषीणां प्रति प्र यातं वरं आ
जनाय अस्मे वां अस्तु सुऽमतिः चनिष्ठा ॥५॥ यः वां यज्ञः ना-
सत्या हविष्मान् कृतऽब्रह्मा सऽमर्यः भवाति उप प्र यातं वरं आ



Digitized by Google

वसिष्ठमिमा ब्रह्मारायृच्यंते युवभ्यां ॥६॥ इयं मनीषा इयमश्विना गीरिमां सुवृक्तिं वृषणा जुषेथां। इमा ब्रह्माणि युवयून्यग्मन्यूयं पात स्वस्तिभिः सदा नः ॥७॥१७॥४॥

॥ ७१ ॥ १—६ वसिष्ठः ॥ अश्विनौ ॥ त्रिष्टुप् ॥

॥७१॥ अप स्वसुरुषसो नग्जिहीते रिणक्ति कृष्णीररुषाय पंथां। अश्वामघा गोमघा वां हुवेम दिवा नक्तं शरुमस्मद्युयोतं ॥१॥ उपायातं दाशुषे मर्त्याय रथेन वाममश्विना वहंता। युयुतमस्मदनिराममीवां दिवा नक्तं माध्वी त्रासीथां नः ॥२॥ आ वां रथमवमस्यां व्युष्टौ सुम्नायवो वृषणो वर्तयंतु। स्यूमगभस्तिमृतयुग्भिरश्वैराश्विना वसुमंतं वहेथां ॥३॥ यो वां रथो नृपती अस्ति वोळ्हा त्रिवंधुरो वसुमाँ उस्रयामा। आ न एना नासत्योप यातमभि यद्वां विश्वप्स्न्यो जिगाति ॥४॥ युवं च्यवानं जरसोऽमुमुक्तं नि पेदव ऊहथुराशुमश्वं। निरंहसस्तमसः स्पर्तमत्रिं नि जाहुषं शिथिरे धातमंतः ॥५॥ इयं मनीषा इयमश्विना गीरिमां सुवृक्तिं वृषणा जुषेथां। इमा ब्रह्माणि युवयून्यग्मन्यूयं पात स्वस्तिभिः सदा नः ॥६॥१८॥

॥ ७२ ॥ १—५ वसिष्ठः ॥ अश्विनौ ॥ त्रिष्टुप् ॥

॥७२॥ आ गोमता नासत्या रथेनाश्वावता पुरुश्चंद्रेण यातं। अभि वां विश्वा नियुतः सचंते स्पार्हया श्रिया तन्वा शुभाना ॥१॥ आ नो देवेभिरुप यातमर्वाक्सजोषसा नासत्या रथेन। युवोर्हि नः सख्या पित्र्याणि समानो बंधुरुत तस्य वित्तं ॥२॥ उदु स्तोमासो अश्विनोरबुध्रञ्जामि ब्रह्माण्युषसश्च देवीः। आविवासन्रोदसी धिष्ण्येमे अच्छा विप्रो



Digitized by Google

वसिष्ठं इमा ब्रह्माणि ऋच्यंते युवऽभ्यां ॥ ६॥ इयं मनीषा इयं अश्विना गीः इमां सुऽवृक्तिं वृषणा जुषेथां इमा ब्रह्माणि युवऽयूनि अग्मन् यूयं पात स्वस्तिऽभिः सदा नः ॥ ७॥ १७॥ ४॥

---

॥ ७१॥ अप स्वसुः उषसः नक् जिहीते रिणक्ति कृष्णीः अरुषाय पंथां अश्वऽमघा गोऽमघा वां हुवेम दिवा नक्तं शरुं अस्मत् युयोतं ॥ १॥ उपऽआयातं दाशुषे मर्त्याय रथेन वामं अश्विना वहंता युयुतं अस्मत् अनिरां अमीवां दिवा नक्तं माध्वी त्रासीथां नः ॥ २॥ आ वां रथं अवमस्यां विऽउष्टौ सुम्नऽयवः वृषणः वर्तयंतु स्यूमऽगभस्तिं ऋतयुक्ऽभिः अश्वैः आ अश्विना वसुऽमंतं वहेथां ॥ ३॥ यः वां रथः नृऽपती॰ अस्ति वोळ्हा त्रिऽवंधुरः वसुऽमान् उस्रऽयामा आ नः एना नासत्या उप यातं अभि यत् वां विश्वऽप्स्न्यः जिगाति ॥ ४॥ युवं च्यवानं जरसः अमुमुक्तं नि पेदवे ऊहथुः आशुं अश्वं निः अंहसः तमसः स्पर्तं अत्रिं नि जाहुषं शिथिरे धातं अंतः ॥ ५॥ इयं मनीषा इयं अश्विना गीः इमां सुऽवृक्तिं वृषणा जुषेथां इमा ब्रह्माणि युवऽयूनि अग्मन् यूयं पात स्वस्तिऽभिः सदा नः ॥ ६॥ १८॥

---

॥ ७२॥ आ गोऽमता नासत्या रथेन अश्वऽवता पुरुऽचंद्रेण यातं अभि वां विश्वाः निऽयुतः सचंते स्पार्हया श्रिया तन्वा शुभाना ॥ १॥ आ नः देवेभिः उप यातं अर्वाक् सऽजोषसा नासत्या रथेन युवोः हि नः सख्या पित्र्याणि समानः बंधुः उत तस्य वित्तं ॥ २॥ उत् ऊं स्तोमासः अश्विनोः अबुध्रन् जामि ब्रह्माणि उषसः च देवीः आऽविवासन् रोदसी धिष्ण्ये इमे अच्छ विप्रः



Digitized by Google

नासत्या विवक्ति ॥ ३ ॥ वि चेदुच्छंत्यश्विना उषासः प्र वां ब्रह्मा-
णि कारवो भरंते। ऊर्ध्वं भानुं सविता देवो अश्रेद्बृहदग्नयः समि-
धा जरंते ॥ ४ ॥ आ पश्चातान्नासत्या पुरस्तादाश्विना यातमध-
रादुदक्तात्। आ विश्वतः पांचजन्येन राया यूयं पात स्वस्तिभिः
सदा नः ॥ ५ ॥ १९ ॥

॥ ७३ ॥ १—५ वसिष्ठः ॥ अश्विनौ ॥ त्रिष्टुप् ॥

॥ ७३ ॥ अतारिष्म तमसस्पारमस्य प्रति स्तोमं देवयंतो द-
धानाः। पुरुदंसा पुरुतमा पुराजामर्त्या हवते अश्विना गीः ॥ १ ॥
न्यु प्रियो मनुषः सादि होता नासत्या यो यजते वंदते च। अश्नीतं
मध्वो अश्विना उपाक आ वां वोचे विदथेषु प्रयस्वान् ॥ २ ॥
अहेम यज्ञं पथामुराणा इमां सुवृक्तिं वृषणा जुषेथां। श्रुष्टीवेव
प्रेषितो वामबोधि प्रति स्तोमैर्जरमाणो वसिष्ठः ॥ ३ ॥ उप त्या
वह्नी गमतो विशं नो रक्षोहणा संभृता वीळुपाणी। समंधां-
स्यग्मत मत्सराणि मा नो मर्धिष्टमा गतं शिवेन ॥ ४ ॥ आ प-
श्चातान्नासत्या पुरस्तादाश्विना यातमधरादुदक्तात्। आ विश्वतः
पांचजन्येन राया यूयं पात स्वस्तिभिः सदा नः ॥ ५ ॥ २० ॥

॥ ७४ ॥ १—६ वसिष्ठः ॥ अश्विनौ ॥ १. ३. ५ बृहती । २. ४. ६ सतोबृहती ॥

॥ ७४ ॥ इमा उ वां दिविष्टय उस्रा हवंते अश्विना। अयं वा-
मह्वेऽवसे शचीवसू विशंविशं हि गच्छथः ॥ १ ॥ युवं चित्रं
ददथुर्भोजनं नरा चोदेथां सूनृतावते। अर्वाग्रथं समनसा नि
यच्छतं पिबतं सोम्यं मधु ॥ २ ॥ आ यातमुप भूषतं मध्वः पि-
बतमश्विना। दुग्धं पयो वृषणा जेन्यावसू मा नो मर्धिष्टमा गतं
॥ ३ ॥ अश्वासो ये वामुप दाशुषो गृहं युवां दीयंति बिभ्रतः। मक्षू-



Digitized by Google

नासत्या विवक्ति ॥३॥ वि च इत् उच्छंति अश्विनौ उषसः प्र वां ब्रह्माणि कारवः भरंते ऊर्ध्वं भानुं सविता देवः अश्रेत् बृहत् अग्नयः संऽइधा जरंते ॥४॥ आ पश्चातात् नासत्या आ पुरस्तात् आ अश्विना यातं अधरात् उदक्तात् आ विश्वतः पांचंऽजन्येन राया यूयं पात स्वस्तिऽभिः सदा नः ॥५॥१९॥

---

॥७३॥ अतारिष्म तमसः पारं अस्य प्रति स्तोमं देवऽयंतः दधानाः पुरुऽदंसा पुरुऽतमा पुराऽजा अमर्त्या हवते अश्विना गीः ॥१॥ नि ऊं' प्रियः मनुषः सादि होता नासत्या यः यजते वंदते च अश्नीतं मध्वः अश्विनौ उपाके आ वां वोचे विदथेषु प्रयस्वान् ॥२॥ अहेम यज्ञं पथां उराणाः इमां सुऽवृक्तिं वृषणा जुषेथां श्रुष्टीवाऽइव प्रऽइषितः वां अबोधि प्रति स्तोमैः जरमाणः वसिष्ठः ॥३॥ उप त्या वह्नी' गमतः विशं नः रक्षःऽहना संऽभृता वीळुऽपाणी॰ सं अंधांसि अग्मत मत्सराणि मा नः मर्धिष्टं आ गतं शिवेन ॥४॥ आ पश्चातात् नासत्या आ पुरस्तात् आ अश्विना यातं अधरात् उदक्तात् आ विश्वतः पांचंऽजन्येन राया यूयं पात स्वस्तिऽभिः सदा नः ॥५॥२०॥

---

॥७४॥ इमाः ऊं' वां दिविष्टयः उस्रा हवंते अश्विना अयं वां अह्वे अवसे शचीऽवसू॰ विशंऽविशं हि गच्छथः ॥१॥ युवं चित्रं ददथुः भोजनं नरा चोदेथां सूनृताऽवते अर्वाक् रथं सऽमनसा नि यच्छतं पिबतं सोम्यं मधु ॥२॥ आ यातं उप भूषतं मध्वः पिबतं अश्विना दुग्धं पयः वृषणा जेन्यावसू' मा नः मर्धिष्टं आ गतं ॥३॥ अश्वासः ये वां उप दाशुषः गृहं युवां दीयंति बिभ्रतः मक्षु-



Digitized by Google

युभिर्नरा हयेभिरश्विना देवा यातमस्मयू ॥४॥ अर्वा ह यंतो अश्विना पृक्षः सचंत सूरयः । ता यंसतो मघवद्भ्यो ध्रुवं यशश्छर्दिरस्मभ्यं नासत्या ॥५॥ प्र ये ययुरवृकासो रथा इव नृपातारो जनानां । उत स्वेन शवसा शूशुवुर्नर उत क्षियंति सुक्षितिं ॥६॥२१॥

---

॥ ७५ ॥ १–८ वसिष्ठः ॥ उषाः ॥ त्रिष्टुप् ॥

॥७५॥ व्यु१षा आवो दिविजा ऋतेनाविष्कृण्वाना महिमानमागात् । अप द्रुहस्तम आवरजुष्टमंगिरस्तमा पथ्या अजीगः ॥१॥ महे नो अद्य सुविताय बोध्युषो महे सौभगाय प्र यंधि । चित्रं रयिं यशसं धेह्यस्मे देवि मर्तेषु मानुषि श्रवस्युं ॥२॥ एते त्ये भानवो दर्शतायाश्चित्रा उषसो अमृतास आगुः । जनयंतो दैव्यानि व्रतान्यापृणंतो अंतरिक्षा व्यस्थुः ॥३॥ एषा स्या युजाना पराकात्पंच क्षितीः परि सद्यो जिगाति । अभिपश्यंती वयुना जनानां दिवो दुहिता भुवनस्य पत्नी ॥४॥ वाजिनीवती सूर्यस्य योषा चित्रामघा राय ईशे वसूनां । ऋषिष्टुता जरयंती मघोन्युषा उच्छति वह्निभिर्गृणाना ॥५॥ प्रति द्युतानामरुषासो अश्वाश्चित्रा अदृश्रन्नुषसं वहंतः । याति शुभ्रा विश्वपिशा रथेन दधाति रत्नं विधते जनाय ॥६॥ सत्या सत्येभिर्महती महद्भिर्देवी देवेभिर्यजता यजत्रैः । रुजदृळ्हानि दददुस्रियाणां प्रति गाव उषसं वावशंत ॥७॥ नू नो गोमद्वीरवद्धेहि रत्नमुषो अश्वावत्पुरुभोजो अस्मे । मा नो बर्हिः पुरुषता निदे कर्यूयं पात स्वस्तिभिः सदा नः ॥८॥२२॥



Digitized by Google

युऽभिः नरा हयेभिः अश्विना आ देवा यातं अस्मऽयू॰ ॥४॥ अर्ध ह यंतः अश्विना पृक्षः सचंत सूरयः ता यंसतः मघवत्ऽभ्यः ध्रुवं यशः छर्दिः अस्मभ्यं नासत्या ॥५॥ प्र ये ययुः अवृकासः रथाःऽइव नृऽपातारः जनानां उत स्वेन शवसा शूशुवुः नरः उत क्षियंति सुऽक्षितिं ॥६॥२१॥

---

॥७५॥ वि उषाः आवः दिविऽजाः ऋतेन आविःऽकृण्वाना महिमानं आ अगात् अप द्रुहः तमः आवः अजुष्टं अंगिरःऽतमा पथ्याः अजीगरिति ॥१॥ महे नः अद्य सुविताय बोधि उषः महे सौभगाय प्र यंधि चित्रं रयिं यशसं धेहि अस्मे इति देवि मर्तेषु मानुषि श्रवस्युं ॥२॥ एते त्ये भानवः दर्शतायाः चित्राः उषसः अमृतासः आ अगुः जनयंतः दैव्यानि व्रतानि आऽपृणंतः अंतरिक्षा वि अस्थुः ॥३॥ एषा स्या युजाना पराकात् पंच क्षितीः परि सद्यः जिगाति अभिऽपश्यंती वयुना जनानां दिवः दुहिता भुवनस्य पत्नी ॥४॥ वाजिनीऽवती सूर्यस्य योषा चित्रऽमघा रायः ईशे वसूनां ऋषिऽस्तुता जरयंती मघोनी उषाः उच्छति वह्निऽभिः गृणाना ॥५॥ प्रति द्युतानां अरुषासः अश्वाः चित्राः अदृश्रन् उषसं वहंतः याति शुभ्रा विश्वऽपिशा रथेन दधाति रत्नं विधते जनाय ॥६॥ सत्या सत्येभिः महती महत्ऽभिः देवी देवेभिः यजता यजत्रैः रुजत् दृळ्हानि ददत् उस्रियाणां प्रति गावः उषसं वावशंत ॥७॥ नु नः गोऽमत् वीरऽवत् धेहि रत्नं उषः अश्वऽवत् पुरुऽभोजः अस्मे इति मा नः बर्हिः पुरुषता निदे कः यूयं पात स्वस्तिऽभिः सदा नः ॥८॥२२॥



Digitized by Google

॥ ७६ ॥ १—७ वसिष्ठः ॥ उषाः ॥ त्रिष्टुप् ॥

॥ ७६ ॥ उदु ज्योतिरमृतं विश्वजन्यं विश्वानरः सविता देवो अश्रेत्। क्रत्वा देवानामजनिष्ट चक्षुराविरकर्भुवनं विश्वमुषाः ॥१॥ प्र मे पंथा देवयाना अदृश्रन्नमर्धंतो वसुभिरिष्कृतासः। अभूदु केतुरुषसः पुरस्तात्प्रतीच्यागादधि हर्म्येभ्यः ॥२॥ तानीदहानि बहुलान्यासन्या प्राचीनमुदिता सूर्यस्य। यतः परि जार इवाचरंत्युषो ददृक्षे न पुनर्यतीव ॥३॥ त इद्देवानां सधमाद आसन्नृतावानः कवयः पूर्व्यासः। गूळ्हं ज्योतिः पितरो अन्वविंदन्सत्यमंत्रा अजनयन्नुषासं ॥४॥ समान ऊर्वे अधि संगतासः सं जानते न यतंते मिथस्ते। ते देवानां न मिनंति व्रतान्यमर्धंतो वसुभिर्यादमानाः ॥५॥ प्रति त्वा स्तोमैरीळते वसिष्ठा उषर्बुधः सुभगे तुष्टुवांसः। गवां नेत्री वाजपत्नी न उच्छोषः सुजाते प्रथमा जरस्व ॥६॥ एषा नेत्री राधसः सूनृतानामुषा उच्छंती रिभ्यते वसिष्ठैः। दीर्घश्रुतं रयिमस्मे दधाना यूयं पात स्वस्तिभिः सदा नः ॥७॥२३॥

---

॥ ७७ ॥ १—६ वसिष्ठः ॥ उषाः ॥ त्रिष्टुप् ॥

॥ ७७ ॥ उपो रुरुचे युवतिर्न योषा विश्वं जीवं प्रसुवंती चरायै। अभूदग्निः समिधे मानुषाणामकर्ज्योतिर्बाधमाना तमांसि ॥१॥ विश्वं प्रतीची सप्रथा उदस्थाद्रुशद्वासो बिभ्रती शुक्रमश्वैत्। हिरण्यवर्णा सुदृशीकसंदृग्गवां माता नेत्र्यह्नामरोचि ॥२॥ देवानां चक्षुः सुभगा वहंती श्वेतं नयंती सुदृशीकमश्वं। उषा अदर्शि रश्मिभिर्व्यक्ता चित्रामघा विश्वमनु प्रभूता ॥३॥ अंतिवामा दूरे अमित्रमुच्छोर्वीं गव्यूतिमभयं कृधी नः। यावय द्वेष आ भरा वसूनि चो-



Digitized by Google

॥७६॥ उत् ऊं ज्योतिः अमृतं विश्वऽजन्यं विश्वानरः सविता देवः अश्रेत् क्रत्वा देवानां अजनिष्ट चक्षुः आविः अकः भुवनं विश्वं उषाः ॥१॥ प्र मे पंथाः देवऽयानाः अदृश्रन् अमर्धंतः वसुऽभिः इष्कृतासः अभूत् ऊं केतुः उषसः पुरस्तात् प्रतीची आ अगात् अधि हर्म्येभ्यः ॥२॥ तानि इत् अहानि बहुलानि आसन् या प्राचीनं उतऽइता सूर्यस्य यतः परि जारःऽइव आऽचरंती उषः ददृक्षे न पुनः यतीऽइव ॥३॥ ते इत् देवानां सधऽमादः आसन् ऋतऽवानः कवयः पूर्व्यासः गूळ्हं ज्योतिः पितरः अनु अविंदन् सत्यऽमंत्राः अजनयन् उषसं ॥४॥ समाने ऊर्वे अधि संऽगतासः सं जानते न यतंते मिथः ते ते देवानां न मिनंति व्रतानि अमर्धंतः वसुऽभिः यादमानाः ॥५॥ प्रति त्वा स्तोमैः ईळते वसिष्ठाः उषःऽबुधः सुऽभगे तुस्तुऽवांसः गवां नेत्री वाजऽपत्नी नः उच्छ उषः सुऽजाते प्रथमा जरस्व ॥६॥ एषा नेत्री राधसः सूनृतानां उषाः उच्छंती रिभ्यते वसिष्ठैः दीर्घऽश्रुतं रयिं अस्मे दधाना यूयं पात स्वस्तिऽभिः सदा नः ॥७॥२३॥

---

॥७७॥ उपो रुरुचे युवतिः न योषा विश्वं जीवं प्रऽसुवंती चरायै अभूत् अग्निः संऽइधे मानुषाणां अकः ज्योतिः बाधमाना तमांसि ॥१॥ विश्वं प्रतीची सऽप्रथाः उत् अस्थात् रुशत् वासः बिभ्रती शुक्रं अश्वैत् हिरण्यऽवर्णा सुदृशीकऽसंदृक् गवां माता नेत्री अह्नां अरोचि ॥२॥ देवानां चक्षुः सुऽभगा वहंती श्वेतं नयंती सुऽदृशीकं अश्वं उषाः अदर्शि रश्मिऽभिः विऽअक्ता चित्रऽमघा विश्वं अनु प्रऽभूता ॥३॥ अंतिऽवामा दूरे अमित्रं उच्छ उर्वीं गव्यूतिं अभयं कृधि नः यवय द्वेषः आ भर वसूनि चो-



Digitized by Google

द्य राधो गृणते मघोनि ॥४॥ अस्मे श्रेष्ठेभिर्भानुभिर्वि भाह्युषो
देवि प्रतिरंती न आयुः। इषं च नो दधती विश्ववारे गोमदश्वा-
वद्रथवच्च राधः ॥५॥ यां त्वा दिवो दुहितर्वर्धयंत्युषः सुजाते म-
तिभिर्वसिष्ठाः। सास्मासु धा रयिमृष्वं बृहंतं यूयं पात स्वस्ति-
भिः सदा नः ॥६॥२४॥

॥ ७८ ॥ १—५ वसिष्ठः ॥ उषाः ॥ त्रिष्टुप् ॥

॥७८॥ प्रति केतवः प्रथमा अदृश्रन्नूर्ध्वा अस्या अंजयो वि श्र-
यंते। उषो अर्वाचा बृहता रथेन ज्योतिष्मता वाममस्मभ्यं वक्षि
॥१॥ प्रति षीमग्निर्जरते समिद्धः प्रति विप्रासो मतिभिर्गृणंतः।
उषा याति ज्योतिषा बाधमाना विश्वा तमांसि दुरितापं देवी
॥२॥ एता उ त्याः प्रत्यदृश्रन्पुरस्ताज्ज्योतिर्यच्छंतीरुषसो विभा-
तीः। अजीजनन्सूर्यं यज्ञमग्निमपाचीनं तमो अगादजुष्टं ॥३॥
अचेति दिवो दुहिता मघोनी विश्वे पश्यंत्युषसं विभातीं। आ-
स्थाद्रथं स्वधया युज्यमानमा यमश्वासः सुयुजो वहंति॥४॥ प्रति
त्वाद्य सुमनसो बुधंतास्माकासो मघवानो वयं च। तिल्विला-
यध्वमुषसो विभातीर्यूयं पात स्वस्तिभिः सदा नः ॥५॥२५॥

॥ ७९ ॥ १—५ वसिष्ठः ॥ उषाः ॥ त्रिष्टुप् ॥

॥७९॥ व्यु१षा आवः पथ्या३ जनानां पंच क्षितीर्मानु-
षीर्बोधयंती। सुसंदृग्भिरुक्षभिर्भानुमश्रेद्वि सूर्यो रोदसी च-
क्षसावः ॥१॥ व्यंजते दिवो अंतेष्वक्तून्विशो न युक्ता
उषसो यतंते। सं ते गावस्तम आ वर्तयंति ज्योतिर्यच्छंति
सवितेव बाहू ॥२॥ अभूदुषा इंद्रतमा मघोन्यजीजनत्सु-
विताय श्रवांसि। वि दिवो देवी दुहिता दधात्यंगि-



Digitized by Google

दर्य राधः गृणते मघोनि ॥४॥ अस्मे श्रेष्ठेभिः भानुऽभिः वि भाहि उषः देवि प्रऽतिरंती नः आयुः इषं च नः दधती विश्वऽवारे गोऽमत् अश्वऽवत् रथऽवत् च राधः ॥५॥ यां त्वा दिवः दुहितः वर्धयंति उषः सुऽजाते मतिऽभिः वसिष्ठाः सा अस्मासु धाः रयिं ऋष्वं बृहंतं यूयं पात स्वस्तिऽभिः सदा नः ॥६॥२४॥

---

॥७८॥ प्रति केतवः प्रथमाः अदृश्रन् ऊर्ध्वाः अस्याः अंजयः वि श्रयंते उषः अर्वाचा बृहता रथेन ज्योतिष्मता वामं अस्मभ्यं वक्षि ॥१॥ प्रति सीं अग्निः जरते संऽइद्धः प्रति विप्रासः मतिऽभिः गृणंतः उषाः याति ज्योतिषा बाधमाना विश्वा तमांसि दुःऽइता अप देवी ॥२॥ एताः ऊं त्याः प्रति अदृश्रन् पुरस्तात् ज्योतिः यच्छंतीः उषसः विऽभातीः अजीजनन् सूर्यं यज्ञं अग्निं अपाचीनं तमः अगात् अजुष्टं ॥३॥ अचेति दिवः दुहिता मघोनी विश्वे पश्यंति उषसं विऽभातीं आ अस्थात् रथं स्वधया युज्यमानं आ यं अश्वासः सुऽयुजः वहंति ॥४॥ प्रति त्वा अद्य सुऽमनसः बुधंत अस्माकासः मघऽवानः वयं च तिल्विलायध्वं उषसः विऽभातीः यूयं पात स्वस्तिऽभिः सदा नः ॥५॥२५॥

---

॥७९॥ वि उषाः आवः पथ्या जनानां पंच क्षितीः मानुषीः बोधयंती सुसंदृक्ऽभिः उक्षऽभिः भानुं अश्रेत् वि सूर्यः रोदसी चक्षसा आवः ॥१॥ वि अंजते दिवः अंतेषु अक्तून् विशः न युक्ताः उषसः यतंते सं ते गावः तमः आ वर्तयंति ज्योतिः यच्छंति सविताऽइव बाहू ॥२॥ अभूत् उषाः इंद्रऽतमा मघोनी अजीजनत् सुविताय श्रवांसि वि दिवः देवी दुहिता दधाति अंगि-



Digitized by Google

रत्नमा सुकृते वसूनि ॥३॥ तावदुषो राधो अस्मभ्यं रास्व या-
वत्स्तोतृभ्यो अरदो गृणाना । यां त्वा जज्ञुर्वृषभस्या रवेण वि
दृळ्हस्य दुरो अद्रेरौर्णोः ॥४॥ देवंदेवं राधसे चोदयन्त्यस्मद्र्यक्सू-
नृता ईरयन्ती । व्युच्छन्ती नः सनये धियो धा यूयं पात स्वस्तिभिः
सदा नः ॥५॥२६॥

॥ ८० ॥ १–३ वसिष्ठः ॥ उषाः ॥ त्रिष्टुप् ॥

॥८०॥ प्रति स्तोमेभिरुषसं वसिष्ठा गीर्भिर्विप्रासः प्रथमा
अबुध्रन् । विवर्तयन्तीं रजसी समन्ते आविष्कृण्वतीं भुवनानि
विश्वा ॥१॥ एषा स्या नव्यमायुर्दधाना गूढ्वी तमो ज्योतिषोषा
अबोधि । अग्र एति युवतिरह्रयाणा प्राचिकितत्सूर्यं यज्ञमग्निं
॥२॥ अश्वावतीर्गोमतीर्न उषासो वीरवतीः सदमुच्छन्तु भद्राः ।
घृतं दुहाना विश्वतः प्रपीता यूयं पात स्वस्तिभिः सदा नः
॥३॥२७॥५॥

॥ ८१ ॥ १–६ वसिष्ठः ॥ उषाः ॥ १.३.५ बृहती । २.४.६ सतोबृहती ॥

॥८१॥ प्रत्यु अदर्श्यायत्युच्छन्ती दुहिता दिवः । अपो महि
व्ययति चक्षसे तमो ज्योतिष्कृणोति सूनरी ॥१॥ उदुस्रियाः सृ-
जते सूर्यः सचाँ उद्यन्नक्षत्रमर्चिवत् । तवेदुषो व्युषि सूर्यस्य च सं
भक्तेन गमेमहि ॥२॥ प्रति त्वा दुहितर्दिव उषो जीरा अभुत्स्म-
हि । या वहसि पुरु स्पार्हं वनन्वति रत्नं न दाशुषे मयः ॥३॥
उच्छन्ती या कृणोषि मंहना महि प्रख्यै देवि स्वर्दृशे । तस्यास्ते
रत्नभाज ईमहे वयं स्याम मातुर्न सूनवः ॥४॥ तच्चित्रं राध आ
भरोषो यद्दीर्घश्रुत्तमं । यत्ते दिवो दुहितर्मर्तभोजनं तद्रास्व
भुनजामहे ॥५॥ श्रवः सूरिभ्यो अमृतं वसुत्वनं वाजाँ अ-



Digitized by Google

रःऽतमा सुऽकृते वसूनि ॥३॥ तावत् उषः राधः अस्मभ्यं रास्व यावत् स्तोतृऽभ्यः अरदः गृणाना यां त्वा जज्ञुः वृषभस्य रवेण वि हळ्हस्य दुरः अद्रेः और्णोः ॥४॥ देवंऽदेवं राधसे चोदयंती अस्मद्र्यक् सूनृताः ईरयंती विऽउच्छंती नः सनये धियः धाः यूयं पात स्वस्तिऽभिः सदा नः ॥५॥२६॥

---

॥८०॥ प्रति स्तोमेभिः उषसं वसिष्ठाः गीःऽभिः विप्रासः प्रथमाः अबुध्रन् विऽवर्तयंतीं रजसी संऽअंते आविःऽकृण्वतीं भुवनानि विश्वा ॥१॥ एषा स्या नव्यं आयुः दधाना गूढ्वी तमः ज्योतिषा उषाः अबोधि अग्रे एति युवतिः अह्रयाणा प्र अचिकितत् सूर्यं यज्ञं अग्निं ॥२॥ अश्वऽवतीः गोऽमतीः नः उषसः वीरऽवतीः सदं उच्छंतु भद्राः घृतं दुहानाः विश्वतः प्रऽपीताः यूयं पात स्वस्तिऽभिः सदा नः ॥३॥२७॥५॥

---

॥८१॥ प्रति ऊं अदर्शि आऽयती उच्छंती दुहिता दिवः अपो महि व्ययति चक्षसे तमः ज्योतिः कृणोति सूनरी ॥१॥ उत् उस्रियाः सृजते सूर्यः सचा उत्ऽयत् नक्षत्रं अर्चिऽवत् तव इत् उषः विऽउषि सूर्यस्य च सं भक्तेन गमेमहि ॥२॥ प्रति त्वा दुहितः दिवः उषः जीराः अभुत्स्महि या वहसि पुरु स्पार्हं वनन्ऽवति रत्नं न दाशुषे मयः ॥३॥ उच्छंती या कृणोषि मंहना महि प्रऽख्यै देवि स्वः दृशे तस्याः ते रत्नऽभाजः ईमहे वयं स्याम मातुः न सूनवः ॥४॥ तत् चित्रं राधः आ भर उषः यत् दीर्घश्रुत्ऽतमं यत् ते दिवः दुहितः मर्तऽभोजनं तत् रास्व भुनजामहै ॥५॥ अवः सूरिऽभ्यः अमृतं वसुऽत्वनं वाजान् अ-



Digitized by Google

स्मभ्यं गोमंतः । चोदयित्री मघोनः सूनृतावत्युषा उच्छदप
स्रिधः ॥ ६ ॥ १ ॥

---

॥ ८२ ॥ १-१० वसिष्ठः ॥ इंद्रावरुणौ ॥ जगती ॥

॥ ८२ ॥ इंद्रावरुणा युवमध्वराय नो विशे जनाय महि शर्म
यच्छतं । दीर्घप्रयज्युमति यो वनुष्यति वयं जयेम पृतनासु दूढ्यः
॥ १ ॥ सम्राळन्यः स्वराळन्य उच्यते वां महांताविंद्रावरुणा म-
हावसू । विश्वे देवासः परमे व्योमनि सं वामोजो वृषणा सं बलं
दधुः ॥ २ ॥ अन्वपां खान्यतृंतमोजसा सूर्यमैरयतं दिवि प्रभुं । इंद्रा-
वरुणा मदे अस्य मायिनोऽपिन्वतमपितः पिन्वतं धियः ॥ ३ ॥
युवामिद्युत्सु पृतनासु वह्नयो युवां क्षेमस्य प्रसवे मितज्ञवः ।
ईशाना वस्व उभयस्य कारव इंद्रावरुणा सुहवा हवामहे ॥ ४ ॥
इंद्रावरुणा यदिमानि चक्रथुर्विश्वा जातानि भुवनस्य मज्मना ।
क्षेमेण मित्रो वरुणं दुवस्यति मरुद्भिरुग्रः शुभमन्य ईयते ॥ ५ ॥ २ ॥
महे शुल्काय वरुणस्य नु त्विष ओजो मिमाते ध्रुवमस्य यत्स्वं ।
अजामिमन्यः श्नथयंतमातिरद्दभ्रेभिरन्यः प्र वृणोति भूयसः ॥ ६ ॥
न तमंहो न दुरितानि मर्त्यमिंद्रावरुणा न तपः कुतश्चन । यस्य
देवा गच्छथो वीथो अध्वरं न तं मर्तस्य नशते परिह्वृतिः ॥ ७ ॥
अर्वाङ्नरा दैव्येनावसा गतं शृणुतं हवं यदि मे जुजोषथः । युवोर्हि
सख्यमुत वा यदाप्यं मार्डीकमिंद्रावरुणा नि यच्छतं ॥ ८ ॥ अ-
स्माकमिंद्रावरुणा भरेभरे पुरोयोधा भवतं कृष्ट्योजसा । यद्वां
हवंत उभये अध स्पृधि नरस्तोकस्य तनयस्य सातिषु ॥ ९ ॥ अस्मे
इंद्रो वरुणो मित्रो अर्यमा द्युम्नं यच्छंतु महि शर्म सप्रथः । अवध्रं
ज्योतिरदितेर्ऋतावृधो देवस्य श्लोकं सवितुर्मनामहे ॥ १० ॥ ३ ॥



Digitized by Google

स्मभ्यं गोऽमतः चोदयित्री मघोनः सूनृताऽवती उषाः उच्छत् अप स्निधः ॥ ६ ॥ १ ॥

॥ ८२ ॥ इंद्रावरुणा युवं अध्वराय नः विशे जनाय महि शर्म यच्छतं दीर्घऽप्रयज्युं अति यः वनुष्यति वयं जयेम पृतनासु दुःऽध्यः ॥ १ ॥ संऽराट् अन्यः स्वऽराट् अन्यः उच्यते वां महांतौ इंद्रावरुणा महाऽवसू॰ विश्वे देवासः परमे विऽओमनि सं वां ओजः वृषणा सं बलं दधुः ॥ २ ॥ अनु अपां खानि अतृंतं ओजसा आ सूर्यं ऐरयतं दिवि प्रऽभुं इंद्रावरुणा मदे अस्य मायिनः अपिन्वतं अपितः पिन्वतं धियः ॥ ३ ॥ युवां इत् युतऽसु पृतनासु वह्नयः युवां क्षेमस्य प्रऽसवे मितऽज्ञवः ईशाना वस्वः उभयस्य कारवः इंद्रावरुणा सुऽहवा हवामहे ॥ ४ ॥ इंद्रावरुणा यत् इमानि चक्रथुः विश्वा जातानि भुवनस्य मज्मना क्षेमेण मित्रः वरुणं दुवस्यति मरुत्ऽभिः उग्रः शुभं अन्यः ईयते ॥ ५ ॥ २ ॥ महे शुल्काय वरुणस्य नु त्विषे ओजः मिमाते ध्रुवं अस्य यत् स्वं अजामिं अन्यः श्नथयंतं आ अतिरत् दभ्रेभिः अन्यः प्र वृणोति भूयसः ॥ ६ ॥ न तं अंहः न दुःऽइतानि मर्त्यं इंद्रावरुणा न तपः कुतः चन यस्य देवा गच्छथः वीथः अध्वरं न तं मर्तस्य नशते परिऽह्वृतिः ॥ ७ ॥ अर्वाक् नरा दैव्येन अवसा आ गतं शृणुतं हवं यदि मे जुजोषथः युवोः हि सख्यं उत वा यत् आप्यं मार्डीकं इंद्रावरुणा नि यच्छतं ॥ ८ ॥ अस्माकं इंद्रावरुणा भरेऽभरे पुरःऽयोधा भवतं कृष्टिऽओजसा यत् वां हवंते उभये अध स्पृधि नरः तोकस्य तनयस्य सातिषु ॥ ९ ॥ अस्मे इंद्रः वरुणः मित्रः अर्यमा द्युम्नं यच्छंतु महि शर्म सऽप्रथः अवध्रं ज्योतिः अदितेः ऋतऽवृधः देवस्य श्लोकं सवितुः मनामहे ॥ १० ॥ ३ ॥



Digitized by Google

॥ ८३ ॥ १–१० वसिष्ठः ॥ इंद्रावरुणौ ॥ जगती ॥

॥८३॥ युवां नरा पश्यमानास आप्यं प्राचा गव्यंतः पृथुपर्शवो ययुः। दासा च वृत्रा हतमार्याणि च सुदासमिंद्रावरुणावसावतं॥१॥ यत्रा नरः समयंते कृतध्वजो यस्मिन्नाजा भवति किं चन प्रियं। यत्रा भयंते भुवना स्वर्दृशस्तत्रा न इंद्रावरुणाधि वोचतं॥२॥ सं भूम्या अंता ध्वसिरा अदृक्षतेंद्रावरुणा दिवि घोष आरुहत्। अस्थुर्जनानामुप मामरातयोऽर्वागवसा हवनश्रुता गतं॥३॥ इंद्रावरुणा वधनाभिरप्रति भेदं वन्वंता प्र सुदासमावतं। ब्रह्माण्येषां शृणुतं हवीमनि सत्या तृत्सूनामभवत्पुरोहितिः॥४॥ इंद्रावरुणावभ्या तपंति माघान्यर्यो वनुषामरातयः। युवं हि वस्व उभयस्य राजथोऽध स्मा नोऽवतं पार्ये दिवि॥५॥४॥ युवां हवंत उभयास आजिष्विंद्रं च वस्वो वरुणं च सातये। यत्र राजभिर्दशभिर्निबाधितं प्र सुदासमावतं तृत्सुभिः सह॥६॥ दश राजानः समिता अयज्यवः सुदासमिंद्रावरुणा न युयुधुः। सत्या नृणामद्मसदामुपस्तुतिर्देवा एषामभवन्देवहूतिषु॥७॥ दाशराज्ञे परियत्ताय विश्वतः सुदास इंद्रावरुणावशिक्षतं। श्वित्यंचो यत्र नमसा कपर्दिनो धिया धीवंतो असपंत तृत्सवः॥८॥ वृत्राण्यन्यः समिथेषु जिघ्नते व्रतान्यन्यो अभि रक्षते सदा। हवामहे वां वृषणा सुवृक्तिभिरस्मे इंद्रावरुणा शर्म यच्छतं॥९॥ अस्मे इंद्रो वरुणो मित्रो अर्यमा द्युम्नं यच्छंतु महि शर्म सप्रथः। अवध्रं ज्योतिरदितेर्ऋतावृधो देवस्य श्लोकं सवितुर्मनामहे॥१०॥५॥

---

॥ ८४ ॥ १–५ वसिष्ठः ॥ इंद्रावरुणौ ॥ त्रिष्टुप् ॥

॥८४॥ आ वां राजानावध्वरे ववृत्यां हव्येभिरिंद्रावरुणा



Digitized by Google

॥ ८३ ॥ युवां नरा पश्यमानासः आप्यं प्राचा गव्यंतः पृथुऽपर्शवः ययुः दासा च वृत्रा हतं आर्याणि च सुऽदासं इंद्रावरुणा अवसा अवतं ॥ १ ॥ यत्र नरः संऽअयंते कृतऽध्वजः यस्मिन् आजा भवति किं चन प्रियं यत्र भयंते भुवना स्वःऽदृशः तत्र नः इंद्रावरुणा अधि वोचतं ॥ २ ॥ सं भूम्याः अंताः ध्वसिराः अदृक्षत इंद्रावरुणा दिवि घोषः आ अरुहत् अस्थुः जनानां उप मां अरातयः अर्वाक् अवसा हवनऽश्रुता आ गतं ॥ ३ ॥ इंद्रावरुणा वधनाभिः अप्रति भेदं वन्वंता प्र सुऽदासं आवतं ब्रह्माणि एषां शृणुतं हवीमनि सत्या तृत्सूनां अभवत् पुरःऽहितिः ॥ ४ ॥ इंद्रावरुणौ अभि आ तपंति मा अघानि अर्यः वनुषां अरातयः युवं हि वस्वः उभयस्य राजथः अध स्म नः अवतं पार्ये दिवि ॥ ५ ॥ ४ ॥ युवां हवंते उभयासः आजिषु इंद्रं च वस्वः वरुणं च सातये यत्र राजऽभिः दशऽभिः निऽबाधितं प्र सुऽदासं आवतं तृत्सुऽभिः सह ॥ ६ ॥ दश राजानः संऽइताः अयज्यवः सुऽदासं इंद्रावरुणा न युयुधुः सत्या नृणां अद्मऽसदां उपऽस्तुतिः देवाः एषां अभवन् देवऽहूतिषु ॥ ७ ॥ दाशऽराज्ञे परिऽयत्ताय विश्वतः सुऽदासे इंद्रावरुणौ अशिक्षतं श्वित्यंचः यत्र नमसा कपर्दिनः धिया धीऽवंतः असपंत तृत्सवः ॥ ८ ॥ वृत्राणि अन्यः संऽइथेषु जिघ्नते व्रतानि अन्यः अभि रक्षते सदा हवामहे वां वृषणा सुवृक्तिऽभिः अस्मे इंद्रावरुणा शर्म यच्छतं ॥ ९ ॥ अस्मे इंद्रः वरुणः मित्रः अर्यमा द्युम्नं यच्छंतु महि शर्म सऽप्रथः अवध्रं ज्योतिः अदितेः ऋतऽवृधः देवस्य श्लोकं सवितुः मनामहे ॥ १० ॥ ५ ॥

---

॥ ८४ ॥ आ वां राजानौ अध्वरे ववृत्यां हव्येभिः इंद्रावरुणा



Digitized by Google

नमोभिः। प्र वां घृताचीं बाह्वोर्दधाना परि त्मना विषुरूपा जिगाति ॥१॥ युवो राष्ट्रं बृहदिन्वति द्यौर्यौ सेतृभिररज्जुभिः सिनीथः। परि नो हेळो वरुणस्य वृज्या उरुं न इंद्रः कृणवदु लोकं ॥२॥ कृतं नो यज्ञं विदथेषु चारुं कृतं ब्रह्माणि सूरिषु प्रशस्ता। उपो रयिर्देवजूतो न एतु प्र णः स्पार्हाभिरूतिभिस्तिरेतं ॥३॥ अस्मे इंद्रावरुणा विश्ववारं रयिं धत्तं वसुमंतं पुरुक्षुं। प्र य आदित्यो अनृता मिनात्यमिता शूरो दयते वसूनि ॥४॥ इयमिंद्रं वरुणमष्ट मे गीः प्रावत्तोके तनये तूतुजाना। सुरत्नासो देववीतिं गमेम यूयं पात स्वस्तिभिः सदा नः ॥५॥६॥

---

॥८५॥ १–५ वसिष्ठः ॥ इंद्रावरुणौ ॥ त्रिष्टुप् ॥

॥८५॥ पुनीषे वामरक्षसं मनीषां सोममिंद्राय वरुणाय जुह्वत्। घृतप्रतीकामुषसं न देवीं ता नो यामन्नुरुष्यतामभीके ॥१॥ स्पर्धंते वा उ देवहूये अत्र येषु ध्वजेषु दिद्यवः पतंति। युवं ताँ इंद्रावरुणावमित्रान्हतं पराचः शर्वा विषूचः ॥२॥ आपश्चिद्धि स्वयशसः सदःसु देवीरिंद्रं वरुणं देवता धुः। कृष्टीरन्यो धारयति प्रविक्ता वृत्राण्यन्यो अप्रतीनि हंति ॥३॥ स सुक्रतुर्ऋतचिदस्तु होता य आदित्य शवसा वां नमस्वान्। आववर्तदवसे वां हविष्मानसदित्स सुविताय प्रयस्वान् ॥४॥ इयमिंद्रं वरुणमष्ट मे गीः प्रावत्तोके तनये तूतुजाना। सुरत्नासो देववीतिं गमेम यूयं पात स्वस्तिभिः सदा नः ॥५॥७॥

---

॥८६॥ १–८ वसिष्ठः ॥ वरुणः ॥ त्रिष्टुप् ॥

॥८६॥ धीरा त्वस्य महिना जनूंषि वि यस्तस्तंभ रोदसी



Digitized by Google

नमः॑ऽभिः प्र वां घृताची बाह्वोः दधाना परि त्मना विषुऽरूपा जिगाति ॥ १ ॥ युवोः राष्ट्रं बृहत् इन्वति द्यौः यौ सेतृऽभिः अरज्जुऽभिः सिनीथः परि नः हेळः वरुणस्य वृज्याः उरुं नः इंद्रः कृणवत् ऊं इति लोकं ॥ २ ॥ कृतं नः यज्ञं विदथेषु चारुं कृतं ब्रह्माणि सूरिषु प्रऽशस्ता उपो इति रयिः देवऽजूतः नः एतु प्र नः स्पार्हाभिः ऊतिऽभिः तिरेतं ॥ ३ ॥ अस्मे इति इंद्रावरुणा विश्वऽवारं रयिं धत्तं वसुऽमंतं पुरुऽक्षुं प्र यः आदित्यः अनृता मिनाति अमिता शूरः दयते वसूनि ॥ ४ ॥ इयं इंद्रं वरुणं अष्ट मे गीः प्र आवत् तोके तनये तूतुजाना सुऽरत्नासः देवऽवीतिं गमेम यूयं पात स्वस्तिऽभिः सदा नः ॥ ५ ॥ ६ ॥

---

॥ ८५ ॥ पुनीषे वां अरक्षसं मनीषां सोमं इंद्राय वरुणाय जुह्वत् घृतऽप्रतीकां उषसं न देवीं ता नः यामन् उरुष्यतां अभीके ॥ १ ॥ स्पर्धंते वै ऊं इति देवऽहूये अत्र येषु ध्वजेषु दिद्यवः पतंति युवं तान् इंद्रावरुणौ अमित्रान् हतं पराचः शर्वा विषूचः ॥ २ ॥ आपः चित् हि स्वऽयशसः सदःऽसु देवीः इंद्रं वरुणं देवता धुः॰ कृष्टीः अन्यः धारयति प्रऽविक्ताः वृत्राणि अन्यः अप्रतीनि हंति ॥ ३ ॥ सः सुऽक्रतुः ऋतऽचित् अस्तु होता यः आदित्या शवसा वां नमस्वान् आऽववर्तत् अवसे वां हविष्मान् असत् इत् सः सुविताय प्रयस्वान् ॥ ४ ॥ इयं इंद्रं वरुणं अष्ट मे गीः प्र आवत् तोके तनये तूतुजाना सुऽरत्नासः देवऽवीतिं गमेम यूयं पात स्वस्तिऽभिः सदा नः ॥ ५ ॥ ७ ॥

---

॥ ८६ ॥ धीरा तु अस्य महिना जनूंषि वि यः तस्तंभ रोदसी इति



Digitized by Google

चिदुर्वी। प्र नाकमृष्वं नुनुदे बृहंतं द्विता नक्षत्रं पप्रथच्च भूम॥१॥
उत स्वया तन्वा३ सं वदे तत्कदा न्व१ंतर्वरुणे भुवानि। किं मे
हव्यमहृणानो जुषेत कदा मृळीकं सुमना अभि ख्यं॥२॥ पृच्छे
तदेनो वरुण दिदृक्षूपो एमि चिकितुषो विपृच्छं। समानमिन्मे
कवयश्चिदाहुरयं ह तुभ्यं वरुणो हृणीते॥३॥ किमाग आस व-
रुण ज्येष्ठं यत्स्तोतारं जिघांससि सखायं। प्र तन्मे वोचो दूळभ
स्वधावोऽव त्वानेना नमसा तुर इयां॥४॥ अव द्रुग्धानि पि-
त्र्या सृजा नोऽव या वयं चकृमा तनूभिः। अव राजन्पशुतृपं न
तायुं सृजा वत्सं न दाम्नो वसिष्ठं॥५॥ न स स्वो दक्षो वरुण ध्रु-
तिः सा सुरा मन्युर्विभीदको अचित्तिः। अस्ति ज्यायान्कनीयस
उपारे स्वप्नश्चनेदनृतस्य प्रयोता॥६॥ अरं दासो न मीळ्हुषे
कराण्यहं देवाय भूर्णयेऽनागाः। अचेतयदचितो देवो अर्यो
गृत्सं राये कवितरो जुनाति॥७॥ अयं सु तुभ्यं वरुण स्वधावो
हृदि स्तोम उपश्रितश्चिदस्तु। शं नः क्षेमे शमु योगे नो अस्तु
यूयं पात स्वस्तिभिः सदा नः॥८॥८॥

---

॥८७॥ १–७ वसिष्ठः॥ वरुणः॥ त्रिष्टुप्॥

॥८७॥ रदत्पथो वरुणः सूर्याय प्रार्णांसि समुद्रिया नदीनां।
सर्गो न सृष्टो अर्वतीर्ऋतायञ्चकार महीरवनीरहभ्यः॥१॥
आत्मा ते वातो रज आ नवीनोत्पशुर्न भूर्णिर्यवसे ससु-
वान्। अंतर्मही बृहती रोदसीमे विश्वा ते धाम वरुण प्रि-
याणि॥२॥ परि स्पशो वरुणस्य स्मदिष्टा उभे पश्यंति रो-
दसी सुमेके। ऋतावानः कवयो यज्ञधीराः प्रचेतसो य इषयंत
मन्म॥३॥ उवाच मे वरुणो मेधिराय त्रिः सप्त नामाघ्न्या



Digitized by Google

चित् उर्वी' प्र नाकं ऋष्वं नुनुदे बृहंतं द्विता नक्षत्रं पप्रथत् च भूमं
॥१॥ उत स्वया तन्वा सं वदे तत् कदा नु अंतः वरुणे भुवानि किं
मे हव्यं अहृणानः जुषेत कदा मृळीकं सुऽमनाः अभि ख्यं ॥२॥
पृच्छे तत् एनः वरुण दिदृक्षु उपो' एमि चिकितुषः विऽपृच्छं स-
मानं इत् मे कवयः चित् आहुः अयं ह तुभ्यं वरुणः हृणीते ॥३॥
किं आगः आस वरुण ज्येष्ठं यत् स्तोतारं जिघांससि सखायं प्र
तत् मे वोचः दुःऽदभ स्वधाऽवः अव त्वा अनेनाः नमसा तुरः
इयां ॥४॥ अव द्रुग्धानि पित्र्या सृज नः अव या वयं चकृम तनू-
भिः अव राजन् पशुऽतृपं न तायुं सृज वत्सं न दाम्नः वसिष्ठं ॥५॥
न सः स्वः दक्षः वरुण ध्रुतिः सा सुरा मन्युः विऽभीदकः अचित्तिः
अस्ति ज्यायान् कनीयसः उपऽआरे स्वप्नः चन इत् अनृतस्य प्र-
ऽयोता ॥६॥ अरं दासः न मीळ्हुषे कराणि अहं देवाय भूर्णये
अनागाः अचेतयत् अचितः देवः अर्यः गृत्सं राये कविऽतरः जु-
नाति ॥७॥ अयं सु तुभ्यं वरुण स्वधाऽवः हृदि स्तोमः उपऽश्रितः
चित् अस्तु शं नः क्षेमे शं ऊं' योगे नः अस्तु यूयं पात स्वस्तिऽभिः
सदा नः ॥८॥८॥

---

॥८७॥ रदत् पथः वरुणः सूर्याय प्र अर्णांसि समुद्रियां नदीनां
सर्गः न सृष्टः अर्वतीः ऋतऽयन् चकार महीः अवनीः अहऽभ्यः
॥१॥ आत्मा ते वातः रजः आ नवीनोत् पशुः न भूर्णिः यवसे स-
सऽवान् अंतः मही' बृहती' रोदसी' इमे' विश्वा ते धाम वरुण
प्रियाणि ॥२॥ परि स्पशः वरुणस्य स्मत्ऽदिष्टाः उभे' पश्यंति रो-
दसी' सुऽमेके॰ ऋतऽवानः कवयः यज्ञऽधीराः प्रऽचेतसः ये
इषयंत मन्म ॥३॥ उवाच मे वरुणः मेधिराय त्रिः सप्त नाम अघ्न्या



Digitized by Google

बिभर्ति। विद्वान्पदस्य गुह्या न वोचद्युगाय विप्र उपराय शि-
क्षन्॥४॥ तिस्रो द्यावो निहिता अंतरस्मिन्तिस्रो भूमीरुपराः
षड्विधानाः। गृत्सो राजा वरुणश्चक्र एतं दिवि प्रेंखं हिरण्ययं
शुभे कं॥५॥ अव सिंधुं वरुणो द्यौरिव स्याद्द्रप्सो न श्वेतो मृग-
स्तुविष्मान्। गंभीरशंसो रजसो विमानः सुपारक्षत्रः सतो
अस्य राजा॥६॥ यो मृळयाति चक्रुषे चिदागो वयं स्याम व-
रुणे अनागाः। अनु व्रतान्यदितेर्ऋधंतो यूयं पात स्वस्तिभिः
सदा नः॥७॥९॥

---

॥ ८८ ॥ १–७ वसिष्ठः ॥ वरुणः ॥ त्रिष्टुप् ॥

॥८८॥ प्र शुंध्युवं वरुणाय प्रेष्ठां मतिं वसिष्ठ मीळ्हुषे भरस्व।
य ईमर्वांचं करते यजत्रं सहस्रामघं वृषणं बृहंतं॥१॥ अधा न्वस्य
संदृशं जगन्वानग्नेरनीकं वरुणस्य मंसि। स्व१र्यदश्मन्नधिपा उ
अंधोऽभि मा वपुर्दृशये निनीयात्॥२॥ आ यद्रुहाव वरुणश्च
नावं प्र यत्समुद्रमीरयाव मध्यं। अधि यदपां स्नुभिश्चराव प्र
प्रेंख ईंखयावहै शुभे कं॥३॥ वसिष्ठं ह वरुणो नाव्याधादृषिं च-
कार स्वपा महोभिः। स्तोतारं विप्रः सुदिनत्वे अह्नां यान्नु द्या-
वस्ततनन्यादुषासः॥४॥ क्व१त्यानि नौ सख्या बभूवुः सचावहे
यदवृकं पुरा चित्। बृहंतं मानं वरुण स्वधावः सहस्रद्वारं जग-
मा गृहं ते॥५॥ य आपिर्नित्यो वरुण प्रियः सन्त्वामागांसि
कृणवत्सखा ते। मा त एनस्वंतो यक्षिन्भुजेम यंधि ष्मा विप्रः
स्तुवते वरूथं॥६॥ ध्रुवासु त्वासु क्षितिषु क्षियंतो व्य१स्मत्पाशं
वरुणो मुमोचत्। अवो वन्वाना अदितेरुपस्थाद्यूयं पात स्व-
स्तिभिः सदा नः॥७॥१०॥



Digitized by Google

बिभर्ति विद्वान् पदस्य गुह्या न वोचत् युगाय विप्रः उपराय शिक्षन् ॥ ४ ॥ तिस्रः द्यावः निऽहिताः अंतः अस्मिन् तिस्रः भूमीः उपराः षट्ऽविधानाः गृत्सः राजा वरुणः चक्रे एतं दिवि प्रऽईखं हिरण्ययं शुभे कं ॥ ५ ॥ अव सिंधुं वरुणः द्यौःऽइव स्यात् द्रप्सः न श्वेतः मृगः तुविष्मान् गंभीरऽशंसः रजसः विऽमानः सुपारऽक्षत्रः सतः अस्य राजा ॥ ६ ॥ यः मृळयाति चक्रुषे चित् आगः वयं स्याम वरुणे अनागाः अनु व्रतानि अदितेः ऋधंतः यूयं पात स्वस्तिऽभिः सदा नः ॥ ७ ॥ ९ ॥

---

॥ ८८ ॥ प्र शुंध्युवं वरुणाय प्रेष्ठां मतिं वसिष्ठ मीळ्हुषे भरस्व यः ईं अर्वांचं करते यजत्रं सहस्रऽमघं वृषणं बृहंतं ॥ १ ॥ अध नु अस्य संऽदृशं जगन्वान् अग्नेः अनीकं वरुणस्य मंसि स्वः यत् अश्मन् अधिऽपाः ऊं इति अंधः अभि मा वपुः दृशये निनीयात् ॥ २ ॥ आ यत् रुहाव वरुणः च नावं प्र यत् समुद्रं ईरयाव मध्यं अधि यत् अपां स्नुऽभिः चराव प्र प्रऽईखे ईखयावहै शुभे कं ॥ ३ ॥ वसिष्ठं ह वरुणः नावि आ अधात् ऋषिं चकार सुऽअपाः महःऽभिः स्तोतारं विप्रः सुदिनऽत्वे अह्नां यात् नु द्यावः ततनन् यात् उषसः ॥ ४ ॥ क्व त्यानि नौ सख्या बभूवुः सचावहे यत् अवृकं पुरा चित् बृहंतं मानं वरुण स्वधाऽवः सहस्रऽद्वारं जगम गृहं ते ॥ ५ ॥ यः आपिः नित्यः वरुण प्रियः सन् त्वां आगांसि कृणवत् सखा ते मा ते एनस्वंतः यक्षिन् भुजेम यंधि स्म विप्रः स्तुवते वरूथं ॥ ६ ॥ ध्रुवासु त्वा आसु क्षितिषु क्षियंतः वि अस्मत् पाशं वरुणः मुमोचत् अवः वन्वानाः अदितेः उपऽस्थात् यूयं पात स्वस्तिऽभिः सदा नः ॥ ७ ॥ १० ॥



Digitized by Google

॥ ८९ ॥ १—५ वसिष्ठः ॥ वरुणः ॥ १—४ गायत्री । ५ जगती ॥

॥८९॥ मो षु वरुण मृन्मयं गृहं राजन्नहं गमं। मृळा सुक्षत्र मृळय॥१॥ यदेमि प्रस्फुरन्निव दृतिर्न ध्मातो अद्रिवः। मृळा सुक्षत्र मृळय॥२॥ क्रत्वः समह दीनता प्रतीपं जगमा शुचे। मृळा सुक्षत्र मृळय॥३॥ अपां मध्ये तस्थिवांसं तृष्णाविदज्जरितारं। मृळा सुक्षत्र मृळय॥४॥ यत्किं चेदं वरुण दैव्ये जनेऽभिद्रोहं मनुष्याश्चरामसि। अचित्ती यत्तव धर्मा युयोपिम मा नस्तस्मादेनसो देव रीरिषः॥५॥११॥५॥

---

॥ ९० ॥ १—७ वसिष्ठः ॥ १—४ वायुः । ५—७ इंद्रवायू ॥ त्रिष्टुप् ॥

॥९०॥ प्र वीरया शुचयो दद्रिरे वामध्वर्युभिर्मधुमंतः सुतासः। वह वायो नियुतो याह्यच्छा पिबा सुतस्यांधसो मदाय॥१॥ ईशानाय प्रहुतिं यस्त आनट् शुचिं सोमं शुचिपास्तुभ्यं वायो। कृणोषि तं मर्त्येषु प्रशस्तं जातोजातो जायते वाज्यस्य॥२॥ राये नु यं जज्ञतू रोदसीमे राये देवी धिषणा धाति देवं। अध वायुं नियुतः सश्चत स्वा उत श्वेतं वसुधितिं निरेके॥३॥ उच्छन्नुषसः सुदिना अरिप्रा उरु ज्योतिर्विविदुर्दीध्यानाः। गव्यं चिदूर्वमुशिजो वि वव्रुस्तेषामनु प्रदिवः सस्रुरापः॥४॥ ते सत्येन मनसा दीध्यानाः स्वेन युक्तासः क्रतुना वहंति। इंद्रवायू वीरवाहं रथं वामीशानयोरभि पृक्षः सचंते॥५॥ ईशानासो ये दधते स्वर्णो गोभिरश्वेभिर्वसुभिर्हिरण्यैः। इंद्रवायू सूरयो विश्वमायुरर्वद्भिर्वीरैः पृतनासु सह्युः॥६॥ अर्वंतो न श्रवसो भिक्षमाणा इंद्रवायू सुष्टुतिभिर्वसिष्ठाः। वाजयंतः स्ववसे हुवेम यूयं पात स्वस्तिभिः सदा नः॥७॥१२॥



Digitized by Google

॥८९॥ मो इति सु वरुण मृत्ऽमयं गृहं राजन् अहं गमं मृळ
सुऽक्षत्र मृळय ॥१॥ यत् एमि प्रस्फुरन्ऽइव दृतिः न ध्मातः
अद्रिऽवः मृळ सुऽक्षत्र मृळय ॥२॥ क्रत्वः समह दीनता प्र-
तिऽईपं जगम शुचे मृळ सुऽक्षत्र मृळय ॥३॥ अपां मध्ये त-
स्थिऽवांसं तृष्णा अविदत् जरितारं मृळ सुऽक्षत्र मृळय ॥४॥
यत् किं च इदं वरुण दैव्ये जने अभिऽद्रोहं मनुष्याः चरामसि अ-
चित्ती यत् तव धर्म युयोपिम मा नः तस्मात् एनसः देव रिरिषः
॥५॥११॥५॥

---

॥९०॥ प्र वीरऽया शुचयः दद्रिरे वां अध्वर्युऽभिः मधुऽमंतः
सुतासः वह वायो इति निऽयुतः याहि अच्छ पिब सुतस्य अंधसः
मदाय ॥१॥ ईशानाय प्रऽहुतिं यः ते आनट् शुचिं सोमं शुचि-
ऽपाः तुभ्यं वायो इति कृणोषि तं मर्त्येषु प्रऽशस्तं जातःऽजातः जायते
वाजी अस्य ॥२॥ राये नु यं जज्ञतुः रोदसी इति इमे इति राये देवी धिषणा
धाति देवं अध वायुं निऽयुतः सश्चत स्वाः उत श्वेतं वसुऽधितिं
निऽरेके ॥३॥ उच्छन् उषसः सुऽदिनाः अरिप्राः उरु ज्योतिः
विविदुः दीध्यानाः गव्यं चित् ऊर्वं उशिजः वि वव्रुः तेषां अनु
प्रऽदिवः सस्रुः आपः ॥४॥ ते सत्येन मनसा दीध्यानाः स्वेन यु-
क्तासः क्रतुना वहंति इंद्रवायू इति वीरऽवाहं रथं वां ईशानयोः अ-
भि पृक्षः सचंते ॥५॥ ईशानासः ये दधते स्वः नः गोभिः अश्वेभिः
वसुऽभिः हिरण्यैः इंद्रवायू इति सूरयः विश्वं आयुः अर्वत्ऽभिः
वीरैः पृतनासु सह्युः ॥६॥ अर्वंतः न श्रवसः भिक्षमाणाः इंद्र-
वायू इति सुस्तुतिऽभिः वसिष्ठाः वाजऽयंतः सु अवसे हुवेम यूयं
पात स्वस्तिऽभिः सदा नः ॥७॥१२॥



Digitized by Google

॥ ९१ ॥ १-७ वसिष्ठः ॥ १. ३ वायुः । २. ४-७ इंद्रवायू ॥ त्रिष्टुप् ॥

॥९१॥ कुविदंग नमसा ये वृधासः पुरा देवा अनवद्यास आसन्। ते वायवे मनवे बाधितायावासयन्नुषसं सूर्येण ॥१॥ उशंता दूता न दभाय गोपा मासश्च पाथः शरदश्च पूर्वीः। इंद्रवायू सुष्टुतिर्वामियाना मार्डीकमीट्टे सुवितं च नव्यं॥२॥ पीवोअन्नाँ रयिवृधः सुमेधाः श्वेतः सिषक्ति नियुतामभिश्रीः। ते वायवे समनसो वि तस्थुर्विश्वेन्नरः स्वपत्यानि चक्रुः ॥३॥ यावत्तरस्तन्वो३ यावदोजो यावन्नरश्चक्षसा दीध्यानाः। शुचिं सोमं शुचिपा पातमस्मे इंद्रवायू सदतं बर्हिरेदं॥४॥ नियुवाना नियुतः स्पार्हवीरा इंद्रवायू सरथं यातमर्वाक्। इदं हि वां प्रभृतं मध्वो अग्रमध प्रीणाना वि मुमुक्तमस्मे॥५॥ या वां शतं नियुतो याः सहस्रमिंद्रवायू विश्ववाराः सचंते। आभिर्यातं सुविदत्राभिरर्वाक्पातं नरा प्रतिभृतस्य मध्वः॥६॥ अर्वंतो न श्रवसो भिक्षमाणा इंद्रवायू सुष्टुतिभिर्वसिष्ठाः। वाजयंतः स्ववसे हुवेम यूयं पात स्वस्तिभिः सदा नः ॥७॥१३॥

---

॥ ९२ ॥ १-५ वसिष्ठः ॥ १. ३-५ वायुः । २ इंद्रवायू ॥ त्रिष्टुप् ॥

॥९२॥ आ वायो भूष शुचिपा उप नः सहस्रं ते नियुतो विश्ववार। उपो ते अंधो मद्यमयामि यस्य देव दधिषे पूर्वपेयं ॥१॥ प्र सोता जीरो अध्वरेष्वस्थात्सोममिंद्राय वायवे पिबध्यै। प्र यद्वां मध्वो अग्रियं भरंत्यध्वर्यवो देवयंतः शचीभिः ॥२॥ प्र याभिर्यासि दाश्वांसमच्छा नियुद्भिर्वायविष्टये दुरोणे। नि नो रयिं सुभोजसं युवस्व नि वीरं गव्यमश्व्यं च राधः ॥३॥ ये वायव इंद्रमादनास आदेवासो नितोशनासो अर्यः। घ्नंतो वृत्राणि सूरिभिः ष्याम सासह्वांसो युधा नृभिरमि-



Digitized by Google

॥९१॥ कुवित् अंग नमसा ये वृधासः पुरा देवाः अनवद्यासः आसन् ते वायवे मनवे बाधिताय अवासयन् उषसं सूर्येण ॥१॥ उशंता दूता न दभाय गोपा मासः च पाथः शरदः च पूर्वीः इंद्रवायू सुऽस्तुतिः वां इयाना मार्डीकं ईट्टे सुवितं च नव्यं ॥२॥ पीवःऽअन्नान् रयिऽवृधः सुऽमेधाः श्वेतः सिसक्ति निऽयुतां अभिऽश्रीः ते वायवे सऽमनसः वि तस्थुः विश्वा इत् नरः सुऽअपत्यानि चक्रुः ॥३॥ यावत् तरः तन्वः यावत् ओजः यावत् नरः चक्षसा दीध्यानाः शुचिं सोमं शुचिऽपा पातं अस्मे इंद्रवायू सदतं बर्हिः आ इदं ॥४॥ निऽयुवाना निऽयुतः स्पार्हऽवीराः इंद्रवायू सऽरथं यातं अर्वाक् इदं हि वां प्रऽभृतं मध्वः अग्रं अध प्रीणाना वि मुमुक्तं अस्मे ॥५॥ याः वां शतं निऽयुतः याः सहस्रं इंद्रवायू विश्वऽवाराः सचंते आ आभिः यातं सुऽविदत्राभिः अर्वाक् पातं नरा प्रतिऽभृतस्य मध्वः ॥६॥ अर्वंतः न श्रवसः भिक्षमाणाः इंद्रवायू सुस्तुतिऽभिः वसिष्ठाः वाजऽयंतः सु अवसे हुवेम यूयं पात स्वस्तिऽभिः सदा नः ॥७॥१३॥

---

॥९२॥ आ वायो भूष शुचिऽपाः उप नः सहस्रं ते निऽयुतः विश्वऽवार उपो ते अंधः मद्यं अयामि यस्य देव दधिषे पूर्वऽपेयं ॥१॥ प्र सोता जीरः अध्वरेषु अस्थात् सोमं इंद्राय वायवे पिबध्यै प्र यत् वां मध्वः अग्रियं भरंति अध्वर्यवः देवऽयंतः शचीभिः ॥२॥ प्र याभिः यासि दाश्वांसं अच्छ नियुत्ऽभिः वायो इष्टये दुरोणे नि नः रयिं सुऽभोजसं युवस्व नि वीरं गव्यं अश्व्यं च राधः ॥३॥ ये वायवे इंद्रऽमादनासः आऽदेवासः निऽतोशनासः अर्यः घ्नंतः वृत्राणि सूरिऽभिः स्याम सस्ह्वांसः युधा नृऽभिः अमि-



Digitized by Google

चान् ॥४॥ आ नो नियुद्भिः शतिनीभिरध्वरं सहस्रिणीभिरुप याहि यज्ञं। वायो अस्मिन्त्सवने मादयस्व यूयं पात स्वस्तिभिः सदा नः ॥५॥१४॥

---

॥९३॥ १-८ वसिष्ठः ॥ इंद्राग्नी ॥ त्रिष्टुप् ॥

॥९३॥ शुचिं नु स्तोमं नवजातमद्येंद्राग्नी वृत्रहणा जुषेथां। उभा हि वां सुहवा जोहवीमि ता वाजं सद्य उशते धेष्ठा ॥१॥ ता सानसी शवसाना हि भूतं साकंवृधा शवसा शूशुवांसा। क्षयंतौ रायो यवसस्य भूरेः पृंक्तं वाजस्य स्थविरस्य घृष्वेः ॥२॥ उपो ह यद्विदथं वाजिनो गुर्धीभिर्विप्राः प्रमतिमिच्छमानाः। अर्वंतो न काष्ठां नक्षमाणा इंद्राग्नी जोहुवतो नरस्ते ॥३॥ गीर्भिर्विप्रः प्रमतिमिच्छमान ईट्टे रयिं यशसं पूर्वभाजं। इंद्राग्नी वृत्रहणा सुवज्रा प्र नो नव्येभिस्तिरतं देष्णैः ॥४॥ सं यन्मही मिथती स्पर्धमाने तनूरुचा शूरसाता यतैते। अदेवयुं विदथे देवयुभिः सत्रा हतं सोमसुता जनेन ॥५॥१५॥ इमामु षु सोमसुतिमुप न एंद्राग्नी सौमनसाय यातं। नू चिद्धि परिमम्नाथे अस्माना वां शश्वद्भिर्ववृतीय वाजैः ॥६॥ सो अग्न एना नमसा समिद्धोऽच्छा मित्रं वरुणमिंद्रं वोचेः। यत्सीमागश्चकृमा तत्सु मृळ तदर्यमादितिः शिश्रथंतु ॥७॥ एता अग्न आशुषाणास इष्टीर्युवोः सचाभ्यश्याम वाजान्। मेंद्रो नो विष्णुर्मरुतः परि ख्यन्यूयं पात स्वस्तिभिः सदा नः ॥८॥१६॥

---

॥९४॥ १-१२ वसिष्ठः ॥ इंद्राग्नी ॥ १-११ गायत्री । १२ अनुष्टुप् ॥

॥९४॥ इयं वामस्य मन्मन इंद्राग्नी पूर्व्यस्तुतिः। अभ्राद्वृष्टिरिवाजनि ॥१॥ शृणुतं जरितुर्हवमिंद्राग्नी वनतं गिरः।



Digitized by Google

चान् ॥४॥ आ नः नियुत्ऽभिः शतिनीभिः अध्वरं सहस्रिणीभिः उप याहि यज्ञं वायो इति अस्मिन् सवने मादयस्व यूयं पात स्वस्तिऽभिः सदा नः ॥५॥१४॥

---

॥९३॥ शुचिं नु स्तोमं नवऽजातं अद्य इंद्राग्नी इति वृत्रहना जुषेथां उभा हि वां सुऽहवा जोहवीमि ता वाजं सद्यः उशते धेष्ठा ॥१॥ ता सानसी इति शवसाना हि भूतं साकंऽवृधा शवसा शूशुऽवांसा क्षयंतौ रायः यवसस्य भूरेः पृंक्तं वाजस्य स्थविरस्य घृष्वेः ॥२॥ उपो इति ह यत् विदथं वाजिनः गुः धीभिः विप्राः प्रऽमतिं इच्छमानाः अर्वंतः न काष्ठां नक्षमाणाः इंद्राग्नी इति जोहुवतः नरः ते ॥३॥ गीःऽभिः विप्रः प्रऽमतिं इच्छमानः ईट्टे रयिं यशसं पूर्वऽभाजं इंद्राग्नी इति वृत्रहना सुऽवज्रा प्र नः नव्येभिः तिरतं देष्णैः ॥४॥ सं यत् मही इति मिथती इति स्पर्धमाने इति तनूऽरुचा शूरऽसाता यतैते इति अदेवऽयुं विदथे देवयुऽभिः सत्रा हतं सोमऽसुता जनेन ॥५॥१५॥ इमां ऊं इति सु सोमऽसुतिं उप नः आ इंद्राग्नी इति सौमनसाय यातं नु चित् हि परिऽमम्नाथे इति अस्मान् आ वां शश्वत्ऽभिः ववृतीय वाजैः ॥६॥ सः अग्ने एना नमसा संऽइद्धः अच्छ मित्रं वरुणं इंद्रं वोचेः यत् सीं आगः चकृम तत् सु मृळ तत् अर्यमा अदितिः शिश्रथंतु ॥७॥ एताः अग्ने आशुषाणासः इष्टीः युवोः सचा अभि अश्याम वाजान् मा इंद्रः नः विष्णुः मरुतः परि ख्यन् यूयं पात स्वस्तिऽभिः सदा नः ॥८॥१६॥

---

॥९४॥ इयं वां अस्य मन्मनः इंद्राग्नी इति पूर्व्यऽस्तुतिः अभ्रात् वृष्टिःऽइव अजनि ॥१॥ शृणुतं जरितुः हवं इंद्राग्नी इति वनतं गिरः



Digitized by Google

ईशाना पिप्यतं धियः ॥२॥ मा पापत्वाय नो नरेंद्राग्नी माभिशस्तये। मा नो रीरधतं निदे॥३॥ इंद्रे अग्ना नमो बृहत्सुवृक्तिमेरयामहे। धिया धेना अवस्यवः ॥४॥ ता हि शश्वंत ईळत इत्था विप्रास ऊतये। सबाधो वाजसातये॥५॥ ता वां गीर्भिर्विपन्यवः प्रयस्वंतो हवामहे। मेधसाता सनिष्यवः ॥६॥१७॥ इंद्राग्नी अवसा गतमस्मभ्यं चर्षणीसहा। मा नो दुःशंस ईशत॥७॥ मा कस्य नो अररुषो धूर्तिः प्र णङ्मर्त्यस्य। इंद्राग्नी शर्म यच्छतं ॥८॥ गोमद्धिरण्यवद्वसु यद्वामश्वावदीमहे। इंद्राग्नी तद्वनेमहि ॥९॥ यत्सोम आ सुते नर इंद्राग्नी अजोहवुः। सप्तीवंता सपर्यवः॥१०॥ उक्थेभिर्वृत्रहंतमा या मंदाना चिदा गिरा। आंगूषैराविवासतः ॥११॥ ताविद्दुःशंसं मर्त्यं दुर्विद्वांसं रक्षस्विनं। आभोगं हन्मना हतमुदधिं हन्मना हतं ॥१२॥१८॥

---

॥ ९५ ॥ १–६ वसिष्ठः ॥ १. २. ४–६ सरस्वती। ३ सरस्वान् ॥ त्रिष्टुप् ॥

॥९५॥ प्र क्षोदसा धायसा सस्र एषा सरस्वती धरुणमायसी पूः। प्रबाबधाना रथ्येव याति विश्वा अपो महिना सिंधुरन्याः ॥१॥ एकाचेतत्सरस्वती नदीनां शुचिर्यती गिरिभ्य आ समुद्रात्। रायश्चेतंती भुवनस्य भूरेर्घृतं पयो दुदुहे नाहुषाय॥२॥ स वावृधे नर्यो योषणासु वृषा शिशुर्वृषभो यज्ञियासु। स वाजिनं मघवद्भ्यो दधाति वि सातये तन्वं मामृजीत ॥३॥ उत स्या नः सरस्वती जुषाणोप श्रवत्सुभगा यज्ञे अस्मिन्। मितज्ञुभिर्नमस्यैरियाना राया युजा चिदुत्तरा सखिभ्यः ॥४॥ इमा जुह्वाना युष्मदा नमोभिः प्रति स्तोमं सरस्वति जुषस्व। तव शर्मन्प्रियतमे दधाना उप स्थेयाम



Digitized by Google

ईशाना पिप्यतं धियः॥२॥ मा पापऽत्वाय नः नरा इंद्राग्नी मा अभिऽशस्तये मा नः रीरधतं निदे॥३॥ इंद्रे अग्ना नमः बृहत् सुऽवृक्तिं आ ईरयामहे धिया धेनाः अवस्यवः॥४॥ ता हि शश्वंतः ईळते इत्था विप्रासः ऊतये सऽबाधः वाजऽसातये॥५॥ ता वां गीःऽभिः विपन्यवः प्रयस्वंतः हवामहे मेधऽसाता सनिष्यवः ॥६॥१७॥ इंद्राग्नी अवसा आ गतं अस्मभ्यं चर्षणिऽसहा मा नः दुःऽशंसः ईशत॥७॥ मा कस्य नः अररुषः धूर्तिः प्रणक् मर्त्यस्य इंद्राग्नी शर्म यच्छतं॥८॥ गोऽमत् हिरण्यऽवत् वसु यत् वां अश्वऽवत् ईमहे इंद्राग्नी तत् वनेमहि॥९॥ यत् सोमे आ सुते नरः इंद्राग्नी अजोहवुः सप्तिऽवंता सपर्यवः॥१०॥ उक्थेभिः वृत्रहन्ऽतमा या मंदाना चित् आ गिरा आंगूषैः आऽविवासतः ॥११॥ तौ इत् दुःऽशंसं मर्त्यं दुःऽविद्वांसं रक्षस्विनं आऽभोगं हन्मना हतं उदऽधिं हन्मना हतं॥१२॥१८॥

---

॥९५॥ प्र क्षोदसा धायसा सस्रे एषा सरस्वती धरुणं आयसी पूः प्रऽबाबधाना रथ्याऽइव याति विश्वाः अपः महिना सिंधुः अन्याः॥१॥ एका अचेतत् सरस्वती नदीनां शुचिः यती गिरिऽभ्यः आ समुद्रात् रायः चेतंती भुवनस्य भूरेः घृतं पयः दुदुहे नाहुषाय॥२॥ सः ववृधे नर्यः योषणासु वृषा शिशुः वृषभः यज्ञियासु सः वाजिनं मघवत्ऽभ्यः दधाति वि सातये तन्वं ममृजीत ॥३॥ उत स्या नः सरस्वती जुषाणा उप श्रवत् सुऽभगा यज्ञे अस्मिन् मितज्ञुऽभिः नमस्यैः इयाना राया युजा चित् उत्ऽतरा सखिऽभ्यः॥४॥ इमा जुह्वानाः युष्मत् आ नमःऽभिः प्रति स्तोमं सरस्वति जुषस्व तव शर्मन् प्रियऽतमे दधानाः उप स्थेयाम



Digitized by Google

शरणं न वृक्षं॥५॥ अयमु ते सरस्वति वसिष्ठो द्वारावृतस्य सुभगे व्यावः। वर्ध शुभ्रे स्तुवते रासि वाजान्यूयं पात स्वस्तिभिः सदा नः॥६॥१९॥

---

॥९६॥ १-६ वसिष्ठः ॥ १-३ सरस्वती । ४-६ सरस्वान् ॥ १ बृहती । २ सतोबृहती । ३ प्रस्तारपंक्तिः । ४-६ गायत्री ॥

॥९६॥ बृहदु गायिषे वचोऽसुर्या नदीनां। सरस्वतीमिन्महया सुवृक्तिभिः स्तोमैर्वसिष्ठ रोदसी॥१॥ उभे यत्ते महिना शुभ्रे अंधसी अधिक्षियंति पूरवः। सा नो बोध्यवित्री मरुत्सखा चोद राधो मघोनां॥२॥ भद्रमिद्भद्रा कृणवत्सरस्वत्यकवारी चेतति वाजिनीवती। गृणाना जमदग्निवत्स्तुवाना च वसिष्ठवत्॥३॥ जनीयंतो न्वग्रवः पुत्रीयंतः सुदानवः। सरस्वंतं हवामहे॥४॥ ये ते सरस्व ऊर्मयो मधुमंतो घृतश्चुतः। तेभिर्नोऽविता भव॥५॥ पीपिवांसं सरस्वतः स्तनं यो विश्वदर्शतः। भक्षीमहि प्रजामिषं॥६॥२०॥

---

॥९७॥ १-१० वसिष्ठः ॥ १ इंद्रः । २.४-८ बृहस्पतिः । ३.९ इंद्राब्रह्मणस्पती । १० इंद्राबृहस्पती ॥ त्रिष्टुप् ॥

॥९७॥ यज्ञे दिवो नृषदने पृथिव्या नरो यत्र देवयवो मदंति। इंद्राय यत्र सवनानि सुन्वे गमन्मदाय प्रथमं वयश्च॥१॥ आ दैव्या वृणीमहेऽवांसि बृहस्पतिर्नो मह आ सखायः। यथा भवेम मीळ्हुषे अनागा यो नो दाता परावतः पितेव॥२॥ तमु ज्येष्ठं नमसा हविर्भिः सुशेवं ब्रह्मणस्पतिं गृणीषे। इंद्रं श्लोको महि दैव्यः सिषक्तु यो ब्रह्मणो देवकृतस्य राजा॥३॥ स आ नो योनिं सदतु प्रेष्ठो बृहस्पतिर्विश्ववारो यो अस्ति। कामो रायः सुवीर्यस्य तं दात्पर्षन्नो अति सश्चतो अरिष्टान्॥४॥ तमा नो अर्कममृताय जुष्टमिमे धासुरमृता-



Digitized by Google

शर्णं न वृक्षं॥५॥ अयं ऊं इति ते सरस्वति वसिष्ठः द्वारौ ऋतस्य सु-ऽभगे वि आवः॰ वर्ध शुभ्रे स्तुवते रासि वाजान् यूयं पात स्व-स्तिऽभिः सदा नः॥६॥१९॥

॥९६॥ बृहत् ऊं इति गायिषे वचः असुर्या नदीनां सरस्वतीं इत् महय सुवृक्तिऽभिः स्तोमैः वसिष्ठ रोदसी इति॥१॥ उभे इति यत् ते महि-ना शुभ्रे अंधसी इति अधिऽक्षियंति पूरवः सा नः बोधि अविची मरुत्ऽसखा चोद राधः मघोनां॥२॥ भद्रं इत् भद्रा कृणवत् सरस्वती अकवऽअरी चेतति वाजिनीऽवती गृणाना जम-दग्निऽवत् स्तुवाना च वसिष्ठऽवत्॥३॥ जनिऽयंतः नु अग्रवः पुत्रिऽयंतः सुऽदानवः सरस्वंतं हवामहे॥४॥ ये ते सरस्वः ऊर्म-यः मधुऽमंतः घृतऽश्चुतः तेभिः नः अविता भव॥५॥ पीपि-ऽवांसं सरस्वतः स्तनं यः विश्वऽदर्शतः भक्षीमहि प्रऽजां इषं ॥६॥२०॥

॥९७॥ यज्ञे दिवः नृऽसदने पृथिव्याः नरः यत्र देवऽयवः मदंति इंद्राय यत्र सवनानि सुन्वे गमत् मदाय प्रथमं वयः च ॥१॥ आ दैव्या वृणीमहे अवांसि बृहस्पतिः नः महे आ सखायः यथा भवेम मीळ्हुषे अनागाः यः नः दाता पराऽवतः पिता-ऽइव॥२॥ तं ऊं इति ज्येष्ठं नमसा हविःऽभिः सुऽशेवं ब्रह्मणः पतिं गृणीषे इंद्रं श्लोकः महि दैव्यः सिसक्तु यः ब्रह्मणः देवऽकृतस्य रा-जा॥३॥ सः आ नः योनिं सदतु प्रेष्ठः बृहस्पतिः विश्वऽवारः यः अस्ति कामः रायः सुऽवीर्यस्य तं दात् पर्षत् नः अति सश्चतः अरिष्टान्॥४॥ तं आ नः अर्कं अमृताय जुष्टं इमे धासुः अमृता-



Digitized by Google

सः पुराजाः। शुचिंक्रंदं यजतं पस्त्यानां बृहस्पतिमनर्वाणं हुवेम ॥५॥२१॥ तं शग्मासो अरुषासो अश्वा बृहस्पतिं सहवाहो वहंति। सहश्चिद्यस्य नीलवत्सधस्थं नभो न रूपमरुषं वसानाः॥६॥ स हि शुचिः शतपत्रः स शुंध्युर्हिरण्यवाशीरिषिरः स्वर्षाः। बृहस्पतिः स स्वावेश ऋष्वः पुरू सखिभ्य आसुतिं करिष्ठः ॥७॥ देवी देवस्य रोदसी जनित्री बृहस्पतिं वावृधतुर्महित्वा। दक्षाय्याय दक्षता सखायः करद्ब्रह्मणे सुतरा सुगाधा ॥८॥ इयं वां ब्रह्मणस्पते सुवृक्तिर्ब्रह्मेंद्राय वज्रिणे अकारि। अविष्टं धियो जिगृतं पुरंधीर्जजस्तमर्यो वनुषामरातीः ॥९॥ बृहस्पते युवमिंद्रश्च वस्वो दिव्यस्येशाथे उत पार्थिवस्य। धत्तं रयिं स्तुवते कीरये चिद्यूयं पात स्वस्तिभिः सदा नः ॥१०॥२२॥

---

॥ ९८ ॥ १–७ वसिष्ठः ॥ १–६ इंद्रः । ७ इंद्राबृहस्पती ॥ त्रिष्टुप् ॥

॥९८॥ अध्वर्यवोऽरुणं दुग्धमंशुं जुहोतन वृषभाय क्षितीनां। गौराद्वेदीयाँ अवपानमिंद्रो विश्वाहेद्याति सुतसोममिच्छन् ॥१॥ यद्दधिषे प्रदिवि चार्वन्नं दिवेदिवे पीतिमिदस्य वक्षि। उत हृदोत मनसा जुषाण उशन्निंद्र प्रस्थितान्पाहि सोमान् ॥२॥ जज्ञानः सोमं सहसे पपाथ प्र ते माता महिमानमुवाच। एंद्र पप्राथोर्वं१तरिक्षं युधा देवेभ्यो वरिवश्चकर्थ ॥३॥ यद्योधया महतो मन्यमानान्साक्षाम तान्बाहुभिः शाशदानान्। यद्वा नृभिर्वृत इंद्राभियुध्यास्तं त्वयाजिं सौश्रवसं जयेम ॥४॥ प्रेंद्रस्य वोचं प्रथमा कृतानि प्र नूतना मघवा या चकार। यदेददेवीरसहिष्ट माया अथाभवत्केवलः सोमो अस्य ॥५॥ तवेदं विश्वम-



Digitized by Google

सः पुराऽजाः शुचिऽक्रंदं यजतं पस्त्यानां बृहस्पतिं अनर्वाणं हुवेम॥५॥२१॥ तं शग्मासः अरुषासः अश्वाः बृहस्पतिं सहऽवाहः वहंति सहः चित् यस्य नीलऽवत् सधऽस्थं नभः न रूपं अरुषं वसानाः ॥६॥ सः हि शुचिः शतऽपत्रः सः शुंध्युः हिरण्यऽवाशीः इषिरः स्वःऽसाः बृहस्पतिः सः सुऽआवेशः ऋष्वः पुरु सखिऽभ्यः आऽसुतिं करिष्ठः॥७॥ देवी देवस्य रोदसी जनित्री बृहस्पतिं ववृधतुः महिऽत्वा दक्षाय्याय दक्षत सखायः करत् ब्रह्मणे सुऽतरा सुऽगाधा ॥८॥ इयं वां ब्रह्मणः पते सुऽवृक्तिः ब्रह्म इंद्राय वज्रिणे अकारि अविष्टं धियः जिगृतं पुरंऽधीः जजस्तं अर्यः वनुषां अरातीः ॥९॥ बृहस्पते युवं इंद्रः च वस्वः दिव्यस्य ईशाथे उत पार्थिवस्य धत्तं रयिं स्तुवते कीरये चित् यूयं पात स्वस्तिऽभिः सदा नः ॥१०॥२२॥

---

॥९८॥ अध्वर्यवः अरुणं दुग्धं अंशुं जुहोतन वृषभाय क्षितीनां गौरात् वेदीयान् अवऽपानं इंद्रः विश्वाहा इत् याति सुतऽसोमं इच्छन् ॥१॥ यत् दधिषे प्रऽदिवि चारु अन्नं दिवेऽदिवे पीतिं इत् अस्य वक्षि उत हृदा उत मनसा जुषाणः उशन् इंद्र प्रऽस्थितान् पाहि सोमान् ॥२॥ जज्ञानः सोमं सहसे पपाथ प्र ते माता महिमानं उवाच आ इंद्र पप्राथ उरु अंतरिक्षं युधा देवेभ्यः वरिवः चकर्थ ॥३॥ यत् योधयाः महतः मन्यमानान् साक्षाम तान् बाहुऽभिः शाशदानान् यत् वा नृऽभिः वृतः इंद्र अभिऽयुध्याः तं त्वया आजिं सौश्रवसं जयेम ॥४॥ प्र इंद्रस्य वोचं प्रथमा कृतानि प्र नूतना मघऽवा या चकार यदा इत् अदेवीः असहिष्ट मायाः अथ अभवत् केवलः सोमः अस्य ॥५॥ तव इदं विश्वं अ-



Digitized by Google

भितः पश्व्यं॑ यत्पश्य॑सि॒ चक्ष॑सा॒ सूर्य॑स्य। गवा॑मसि॒ गोप॑ति॒रेक॑
इंद्र भक्षीमहि॑ ते॒ प्रय॑तस्य॒ वस्वः॑ ॥६॥ बृह॑स्पते यु॒वमिंद्र॑श्च॒ वस्वो॑
दि॒व्यस्ये॑शाथे उ॒त पार्थि॑वस्य। धत्तं र॒यिं स्तु॑व॒ते की॒रये॑ चिद्यू॒यं
पा॑त स्व॒स्तिभिः॒ सदा॑ नः ॥७॥२३॥

॥ ९९ ॥ १–७ वसिष्ठः ॥ १–३. ७ विष्णुः । ४–६ इंद्राविष्णू ॥ त्रिष्टुप् ॥

॥९९॥ प॒रो मात्र॑या त॒न्वा॑ वृधान॒ न ते॑ महि॒त्वमन्व॑श्नुवंति।
उ॒भे ते॑ विद्म॒ रज॑सी पृथि॒व्या विष्णो॑ देव॒ त्वं प॑र॒मस्य॑ वित्से ॥१॥
न ते॑ विष्णो॒ जाय॑मानो॒ न जा॒तो देव॑ महि॒म्नः पर॒मंत॑माप। उद॑-
स्तभ्ना॒ नाक॑मृ॒ष्वं बृ॒हंतं॑ दा॒धर्थ॒ प्राचीं॑ क॒कुभं॑ पृथि॒व्याः ॥२॥ इरा॑व-
ती धे॒नुमती॒ हि भू॒तं सू॑यव॒सिनी॒ मनु॑षे दश॒स्या। व्य॑स्तभ्ना॒ रोद॑सी
विष्णवे॒ते दा॒धर्थ॑ पृथि॒वीम॒भितो॑ म॒यूखैः॑ ॥३॥ उ॒रुं य॒ज्ञाय॑ चक्र-
थुरु लो॒कं ज॒नय॑न्ता॒ सूर्य॑मु॒षास॑म॒ग्निं। दास॑स्य चिद्वृषशि॒प्रस्य॑
मा॒या ज॒घ्नथु॑र्नरा पृत॒नाज्ये॑षु ॥४॥ इंद्रा॑विष्णू दृंहि॒ताः शंब॑रस्य॒
नव॒ पुरो॑ नव॒तिं च॑ श्नथिष्टं। श॒तं व॒र्चिनः॑ स॒हस्रं॑ च सा॒कं ह॒थो
अ॑प्र॒त्यसु॑रस्य वी॒रान् ॥५॥ इ॒यं म॑नी॒षा बृ॑ह॒ती बृ॒हंतो॑रुक्र॒मा
त॒वसा॑ व॒र्धयं॑ती। र॒रे वां॒ स्तोमं॑ वि॒दथे॑षु विष्णो॒ पिन्व॑त॒मिषो॑ वृ॒-
जने॑ष्विंद्र ॥६॥ वष॑ट् ते विष्ण॒वास॒ आ कृ॑णोमि॒ तन्मे॑ जुषस्व शि-
पिविष्ट ह॒व्यं। वर्धं॑तु त्वा सुष्टु॒तयो॒ गिरो॑ मे यू॒यं पा॑त स्व॒स्तिभिः॒
सदा॑ नः ॥७॥२४॥

॥ १०० ॥ १–७ वसिष्ठः ॥ विष्णुः ॥ त्रिष्टुप् ॥

॥१००॥ नू मर्तो॑ दयते सनि॒ष्यन्यो विष्ण॑व उरुगा॒याय॒ दा-
श॑त्। प्र यः स॒त्राचा॒ मन॑सा॒ यजा॑त ए॒ताव॑न्तं॒ नर्य॑मा॒विवा॑-
सात् ॥१॥ त्वं वि॑ष्णो सुम॒तिं वि॒श्वज॑न्याम॒प्रयु॑तामेवयावो



Digitized by Google

भितः पश्व्यं यत् पश्यसि चक्षसा सूर्यस्य गवां असि गोऽपतिः एकः इंद्र भक्षीमहि ते प्रऽयतस्य वस्वः ॥६॥ बृहस्पते युवं इंद्रः च वस्वः दिव्यस्य ईशाथे उत पार्थिवस्य धत्तं रयिं स्तुवते कीरये चित् यूयं पात स्वस्तिऽभिः सदा नः ॥७॥२३॥

---

॥९९॥ परः मात्रया तन्वा वृधान न ते महिऽत्वं अनु अश्नुवंति उभे ते विद्म रजसी पृथिव्याः विष्णो देव त्वं परमस्य वित्से ॥१॥ न ते विष्णो जायमानः न जातः देव महिम्नः परं अंतं आप उत् अस्तभ्नाः नाकं ऋष्वं बृहंतं दाधर्थ प्राचीं ककुभं पृथिव्याः ॥२॥ इराऽवती॰ धेनुऽमती॰ हि भूतं सुऽयवसिनी॰ मनुषे दशस्या वि अस्तभ्नाः रोदसी विष्णो एते दाधर्थ पृथिवीं अभितः मयूखैः ॥३॥ उरुं यज्ञाय चक्रथुः ऊं लोकं जनयंता सूर्यं उषसं अग्निं दासस्य चित् वृषऽशिप्रस्य मायाः जघ्नथुः नरा पृतनाज्येषु ॥४॥ इंद्राविष्णू दृंहिताः शंबरस्य नव पुरः नवतिं च श्नथिष्टं शतं वर्चिनः सहस्रं च साकं हथः अप्रति असुरस्य वीरान् ॥५॥ इयं मनीषा बृहती बृहंता उरुऽक्रमा तवसा वर्धयंती ररे वां स्तोमं विदथेषु विष्णो पिन्वतं इषः वृजनेषु इंद्र ॥६॥ वषट् ते विष्णो आसः आ कृणोमि तत् मे जुषस्व शिपिऽविष्ट हव्यं वर्धंतु त्वा सुऽस्तुतयः गिरः मे यूयं पात स्वस्तिऽभिः सदा नः ॥७॥२४॥

---

॥१००॥ नु मर्तः दयते सनिष्यन् यः विष्णवे उरुऽगायाय दाशत् प्र यः सत्राचा मनसा यजाते एतावंतं नर्यं आऽविवासात् ॥१॥ त्वं विष्णो सुऽमतिं विश्वऽजन्यां अप्रऽयुतां एवऽयावः



Digitized by Google

मतिं दाः। पर्चो यथा नः सुवितस्य भूरेरश्वावतः पुरुश्चंद्रस्य रायः
॥२॥ त्रिर्देवः पृथिवीमेष एतां वि चक्रमे शतर्चसं महित्वा। प्र
विष्णुरस्तु तवसस्तवीयान्त्वेषं ह्यस्य स्थविरस्य नाम ॥३॥ वि
चक्रमे पृथिवीमेष एतां क्षेत्राय विष्णुर्मनुषे दशस्यन्। ध्रुवासो
अस्य कीरयो जनास उरुक्षितिं सुजनिमा चकार ॥४॥ प्र तत्ते
अद्य शिपिविष्ट नामार्यः शंसामि वयुनानि विद्वान्। तं त्वा गृ-
णामि तवसमतव्यान्क्षयंतमस्य रजसः पराके ॥५॥ किमित्ते
विष्णो परिचक्ष्यं भूत्प्र यद्ववक्षे शिपिविष्टो अस्मि। मा वर्पो अ-
स्मदप गूह एतद्यदन्यरूपः समिथे बभूथ ॥६॥ वषट्ते विष्णवास
आ कृणोमि तन्मे जुषस्व शिपिविष्ट हव्यं। वर्धंतु त्वा सुष्टुतयो
गिरो मे यूयं पात स्वस्तिभिः सदा नः ॥७॥२५॥६॥

---

॥१०१॥ १—६ वसिष्ठः कुमारो वाग्नेयः ॥ पर्जन्यः ॥ त्रिष्टुप् ॥

॥१०१॥ तिस्रो वाचः प्र वद ज्योतिरग्रा या एतद्दुह्रे मधु-
दोघमूधः। स वत्सं कृण्वन्गर्भमोषधीनां सद्यो जातो वृषभो
रोरवीति ॥१॥ यो वर्धन ओषधीनां यो अपां यो विश्वस्य
जगतो देव ईशे। स त्रिधातु शरणं शर्म यंसत्त्रिवर्तु ज्योतिः
स्वभिष्ट्य१स्मे ॥२॥ स्तरीरु त्वद्भवति सूत उ त्वद्यथावशं
तन्वं चक्र एषः। पितुः पयः प्रति गृभ्णाति माता तेन पिता
वर्धते तेन पुत्रः ॥३॥ यस्मिन्विश्वानि भुवनानि तस्थुस्तिस्रो
द्यावस्त्रेधा सस्रुरापः। त्रयः कोशास उपसेचनासो मध्वः
श्चोतंत्यभितो विरप्शं ॥४॥ इदं वचः पर्जन्याय स्वराजे हृदो
अस्त्वंतरं तज्जुजोषत्। मयोभुवो वृष्टयः संत्वस्मे सुपि-
प्पला ओषधीर्देवगोपाः ॥५॥ स रेतोधा वृषभः शश्व-



Digitized by Google

मतिं दाः पर्चः यथा नः सुवितस्य भूरैः अश्वंऽवतः पुरुऽचंद्रस्य रायः ॥२॥ त्रिः देवः पृथिवीं एषः एतां वि चक्रमे शतऽर्चसं महिऽत्वा प्र विष्णुः अस्तु तवसः तवीयान् त्वेषं हि अस्य स्थविरस्य नाम ॥३॥ वि चक्रमे पृथिवीं एषः एतां क्षेत्राय विष्णुः मनुषे दशस्यन् ध्रुवासः अस्य कीरयः जनासः उरुऽक्षितिं सुऽजनिमा चकार ॥४॥ प्र तत् ते अद्य शिपिऽविष्ट नाम अर्यः शंसामि वयुनानि विद्वान् तं त्वा गृणामि तवसं अतव्यान् क्षयंतं अस्य रजसः पराके ॥५॥ किं इत् ते विष्णो इति परिऽचक्ष्यं भूत् प्र यत् ववक्षे शिपिऽविष्टः अस्मि मा वर्पः अस्मत् अप गूहः एतत् यत् अन्यऽरूपः संऽइथे बभूथ ॥६॥ वषट् ते विष्णो इति आसः आ कृणोमि तत् मे जुषस्व शिपिऽविष्ट हव्यं वर्धंतु त्वा सुऽस्तुतयः गिरः मे यूयं पात स्वस्तिऽभिः सदा नः ॥७॥२५॥६॥

---

॥१०१॥ तिस्रः वाचः प्र वद ज्योतिःऽअग्राः याः एतत् दुहे मधुऽदोघं ऊधः सः वत्सं कृण्वन् गर्भं ओषधीनां सद्यः जातः वृषभः रोरवीति ॥१॥ यः वर्धनः ओषधीनां यः अपां यः विश्वस्य जगतः देवः ईशे सः त्रिऽधातु शरणं शर्म यंसत् त्रिऽवर्तु ज्योतिः सुऽअभिष्टि अस्मे इति ॥२॥ स्तरीः ऊं इति त्वत् भवति सूते ऊं इति त्वत् यथाऽवशं तन्वं चक्रे एषः पितुः पयः प्रति गृभ्णाति माता तेन पिता वर्धते तेन पुत्रः ॥३॥ यस्मिन् विश्वानि भुवनानि तस्थुः तिस्रः द्यावः त्रेधा सस्रुः आपः त्रयः कोशासः उपऽसेचनासः मध्वः श्चोतंति अभितः विऽरप्शं ॥४॥ इदं वचः पर्जन्याय स्वऽराजे हृदः अस्तु अंतरं तत् जुजोषत् मयःऽभुवः वृष्टयः संतु अस्मे इति सुऽपिप्पलाः ओषधीः देवऽगोपाः ॥५॥ सः रेतःऽधाः वृषभः शश्व-



Digitized by Google

तीनां तस्मिन्नात्मा जगतस्तस्थुषश्च। तन्म ऋतं पातु शतशारदाय यूयं पात स्वस्तिभिः सदा नः ॥ ६ ॥ १ ॥

---

॥ १०२ ॥ १—३ वसिष्ठः कुमारो वाग्नेयः ॥ पर्जन्यः ॥ गायत्री । २ पादनिचृत् ॥

॥ १०२ ॥ पर्जन्याय प्र गायत दिवस्पुत्राय मीळ्हुषे। स नो यवसमिच्छतु ॥ १ ॥ यो गर्भमोषधीनां गवां कृणोत्यर्वतां। पर्जन्यः पुरुषीणां ॥ २ ॥ तस्मा इदास्ये हविर्जुहोता मधुमत्तमं। इळां नः संयतं करत् ॥ ३ ॥ २ ॥

---

॥ १०३ ॥ १—१० वसिष्ठः ॥ मंडूकाः ॥ १ अनुष्टुप् । २—१० त्रिष्टुप् ॥

॥ १०३ ॥ संवत्सरं शशयाना ब्राह्मणा व्रतचारिणः। वाचँ पर्जन्यजिन्वितां प्र मंडूका अवादिषुः ॥ १ ॥ दिव्या आपो अभि यदेनमायन्दृतिं न शुष्कं सरसी शयानं। गवामह न मायुर्वत्सिनीनां मंडूकानां वग्नुरत्रा समेति ॥ २ ॥ यदीमेनाँ उशतो अभ्यवर्षीत्तृष्यावतः प्रावृष्यागतायां। अख्खलीकृत्या पितरं न पुत्रो अन्यो अन्यमुप वदंतमेति ॥ ३ ॥ अन्यो अन्यमनु गृभ्णात्येनोरपां प्रसर्गे यदमंदिषातां। मंडूको यदभिवृष्टः कनिष्कन्पृश्निः संपृंक्ते हरितेन वाचँ ॥ ४ ॥ यदेषामन्यो अन्यस्य वाचँ शाक्तस्येव वदति शिक्षमाणः। सर्वं तदेषां समृधेव पर्व यत्सुवाचो वदथनाध्यप्सु ॥ ५ ॥ ३ ॥ गोमायुरेको अजमायुरेकः पृश्निरेको हरित एक एषां। समानं नाम बिभ्रतो विरूपाः पुरुत्रा वाचँ पिपिशुर्वदंतः ॥ ६ ॥ ब्राह्मणासो अतिरात्रे न सोमे सरो न पूर्णमभितो वदंतः। संवत्सरस्य तदहः परि ष्ठ यन्मंडूकाः प्रावृषीणं बभूव ॥ ७ ॥ ब्राह्मणासः सोमिनो वाचमक्रत ब्रह्म कृण्वंतः परिवत्सरीणं। अध्वर्यवो घर्मिणः सिष्विदाना आविर्भवंति गुह्या न के



Digitized by Google

तीनां तस्मिन् आत्मा जगतः तस्थुषः च तत् मा ऋतं पातु शत-ऽशारदाय यूयं पात स्वस्तिऽभिः सदा नः ॥६॥१॥

---

॥१०२॥ पर्जन्याय प्र गायत दिवः पुत्राय मीळ्हुषे सः नः य-वसं इच्छतु ॥१॥ यः गर्भं ओषधीनां गवां कृणोति अर्वतां पर्ज-न्यः पुरुषीणां ॥२॥ तस्मैं इत् आस्ये हुविः जुहोत मधुमत्ऽतमं इळां नः संऽयतं करत् ॥३॥२॥

---

॥१०३॥ संवत्सरं शशयानाः ब्राह्मणाः व्रतऽचारिणः वाचं पर्जन्यऽजिन्वितां प्र मंडूकाः अवादिषुः ॥१॥ दिव्याः आपः अभि यत् एनं आयन् हतिं न शुष्कं सरसी शयानं गवां अह न मायुः वत्सिनीनां मंडूकानां वग्नुः अत्र सं एति ॥२॥ यत् ईं एनान् उशतः अभि अवर्षीत् तृष्याऽवतः प्रावृषि आऽगतायां अख्खलीकृत्य पितरं न पुत्रः अन्यः अन्यं उप वदंतं एति ॥३॥ अन्यः अन्यं अनु गृभ्णाति एनोः अपां प्रऽसर्गे यत् अमंदिषातां मंडूकः यत् अभि-ऽवृष्टः कनिस्कन् पृश्निः संऽपृंक्ते हरितेन वाचं ॥४॥ यत् एषां अ-न्यः अन्यस्य वाचं शाक्तस्यऽइव वदति शिक्षमाणः सर्वं तत् एषां समृधाऽइव पर्व यत् सुऽवाचः वदथन अधि अप्ऽसु ॥५॥३॥ गोऽमायुः एकः अजऽमायुः एकः पृश्निः एकः हरितः एकः एषां समानं नाम बिभ्रतः विऽरूपाः पुरुऽत्रा वाचं पिपिशुः वदंतः ॥६॥ ब्राह्मणासः अतिऽरात्रे न सोमे सरः न पूर्णं अभितः वदंतः संवत्सरस्य तत् अहः परि स्थ यत् मंडूकाः प्रावृषीणं बभूव ॥७॥ ब्राह्मणासः सोमिनः वाचं अक्रत ब्रह्म कृण्वंतः परिवत्सरीणं अध्वर्यवः घर्मिणः सिस्विदानाः आविः भवंति गुह्याः न के



Digitized by Google

चित् ॥८॥ देवहितिं जुगुपुर्द्वादशस्य ऋतुं नरो न प्र मिनंत्येते ।
संवत्सरे प्रावृष्यागतायां तप्ता घर्मा अश्नुवते विसर्गं ॥९॥ गो-
मायुरदादजमायुरदात्पृश्निरदाद्धरितो नो वसूनि । गवां मंडू-
का ददतः शतानि सहस्रसावे प्र तिरंत आयुः ॥१०॥४॥

---

॥ १०४ ॥ १–२५ वसिष्ठः ॥ १–७. १५. २५ इंद्रासोमौ रक्षोहणौ । ८. १६. १९–२२. २४ इंद्रः । ९. १२. १३ सोमः । १०. १४ अग्निः । ११ देवाः । १७ ग्रावाणः । १८ मरुतः । २३[1] वसिष्ठः । २३[2] पृथिव्यंतरिक्षे ॥ १–६. १८. २१. २३ जगती । ७ त्रिष्टुब्जगती वा । ८–१७. १९. २०. २२. २४ त्रिष्टुप् । २५ अनुष्टुप् ॥

॥१०४॥ इंद्रासोमा तपतं रक्ष उब्जतं न्यर्पयतं वृषणा तमोवृ-
धः । परा शृणीतमचितो न्योषतं हतं नुदेथां नि शिशीतमत्त्रिणः
॥१॥ इंद्रासोमा समघशंसमभ्य१घं तपुर्ययस्तु चरुरग्निवाँ इव ।
ब्रह्मद्विषे क्रव्यादे घोरचक्षसे द्वेषो धत्तमनवायं किमीदिने ॥२॥
इंद्रासोमा दुष्कृतो वव्रे अंतरनारंभणे तमसि प्र विध्यतं । यथा
नातः पुनरेकश्चनोदयत्तद्वामस्तु सहसे मन्युमच्छवः ॥३॥ इंद्रा-
सोमा वर्तयतं दिवो वधं सं पृथिव्या अघशंसाय तर्हणं । उत्तक्षतं
स्वर्य१ं पर्वतेभ्यो येन रक्षो वावृधानं निजूर्वथः ॥४॥ इंद्रासोमा
वर्तयतं दिवस्पर्यग्नितप्तेभिर्युवमश्महन्मभिः । तपुर्वधेभिरजरे-
भिरत्त्रिणो नि पर्शाने विध्यतं यंतु निस्वरं ॥५॥५॥ इंद्रासोमा
परि वां भूतु विश्वत इयं मतिः कक्ष्याश्वेव वाजिना । यां वां हो-
त्रां परिहिनोमि मेधयेमा ब्रह्माणि नृपतीव जिन्वतं ॥६॥
प्रति स्मरेथां तुजयद्भिरेवैर्हतं द्रुहो रक्षसो भंगुरावतः । इंद्रा-
सोमा दुष्कृते मा सुगं भूद्यो नः कदा चिदभिदासति द्रुहा
॥७॥ यो मा पाकेन मनसा चरंतमभिचष्टे अनृतेभिर्व-
चोभिः । आप इव काशिना संगृभीता असन्नस्त्वासत
इंद्र वक्ता ॥८॥ ये पाकशंसं विहरंत एवैर्ये वा भद्रं दूषयंति



Digitized by Google

चित् ॥ ८ ॥ देवऽहितिं जुगुपुः द्वादशस्य ऋतुं नरः न प्र मिनंति एते संवत्सरे प्रावृषि आऽगतायां तप्ताः घर्माः अश्नुवते विऽसर्गं ॥ ९ ॥ गोऽमायुः अदात् अजऽमायुः अदात् पृश्निः अदात् हरितः नः वसूनि गवां मंडूकाः ददतः शतानि सहस्रऽसावे प्र तिरंते आयुः ॥ १० ॥ ४ ॥

---

॥ १०४ ॥ इंद्रासोमा तपतं रक्षः उब्जतं नि अर्पयतं वृषणा तमःऽवृधः परा शृणीतं अचितः नि ओषतं हतं नुदेथां नि शिशीतं अत्रिणः ॥ १ ॥ इंद्रासोमा सं अघऽशंसं अभि अघं तपुः ययस्तु चरुः अग्निवान्ऽइव ब्रह्मऽद्विषे क्रव्यऽअदे घोरऽचक्षसे द्वेषः धत्तं अनवायं किमीदिने ॥ २ ॥ इंद्रासोमा दुःऽकृतः वव्रे अंतः अनारंभणे तमसि प्र विध्यतं यथा न अतः पुनः एकः चन उत्ऽअयत् तत् वां अस्तु सहसे मन्युऽमत् शवः ॥ ३ ॥ इंद्रासोमा वर्तयतं दिवः वधं सं पृथिव्याः अघऽशंसाय तर्हणं उत् तक्षतं स्वर्यं पर्वतेभ्यः येन रक्षः ववृधानं निऽजूर्वथः ॥ ४ ॥ इंद्रासोमा वर्तयतं दिवः परि अग्निऽतप्तेभिः युवं अश्महन्मऽभिः तपुःऽवधेभिः अजरेभिः अत्रिणः नि पर्शाने विध्यतं यंतु निऽस्वरं ॥ ५ ॥ ५ ॥ इंद्रासोमा परि वां भूतु विश्वतः इयं मतिः कक्ष्या अश्वाऽइव वाजिना यां वां होत्रां परिऽहिनोमि मेधया इमा ब्रह्माणि नृपतीऽइव॰ जिन्वतं ॥ ६ ॥ प्रति स्मरेथां तुजयत्ऽभिः एवैः हतं द्रुहः रक्षसः भंगुरऽवतः इंद्रासोमा दुःऽकृते मा सुऽगं भूत् यः नः कदा चित् अभिऽदासति द्रुहा ॥ ७ ॥ यः मा पाकेन मनसा चरंतं अभिऽचष्टे अनृतेभिः वचःऽभिः आपःऽइव काशिना संऽगृभीताः असन् अस्तु असतः इंद्र वक्ता ॥ ८ ॥ ये पाकऽशंसं विऽहरंते एवैः ये वा भद्रं दूषयंति



Digitized by Google

स्वधाभिः। अर्हये वा तान्प्रददातु सोम आ वा दधातु निर्ऋ-
तेरुपस्थे॥९॥ यो नो रसं दिप्सति पित्वो अग्ने यो अश्वा-
नां यो गवां यस्तनूनां। रिपुः स्तेनः स्तेयकृद्दभ्रमेतु नि ष
हीयतां तन्वा३ तना च॥१०॥६॥ परः सो अस्तु तन्वा३ तना च
तिस्रः पृथिवीरधो अस्तु विश्वाः। प्रति शुष्यतु यशो अस्य देवा
यो नो दिवा दिप्सति यश्च नक्तं॥११॥ सुविज्ञानं चिकितुषे
जनाय सच्चासच्च वचसी पस्पृधाते। तयोर्यत्सत्यं यतरदृजी-
यस्तदित्सोमोऽवति हंत्यासत्॥१२॥ न वा उ सोमो वृ-
जिनं हिनोति न क्षत्रियं मिथुया धारयंतं। हंति रक्षो हंत्या-
सद्वदंतमुभाविंद्रस्य प्रसितौ शयाते॥१३॥ यदि वाहमनृतदेव
आस मोघं वा देवाँ अप्यूहे अग्ने। किमस्मभ्यं जातवेदो
हृणीषे द्रोघवाचस्ते निर्ऋथं सचंतां॥१४॥ अद्या मुरीय
यदि यातुधानो अस्मि यदि वायुस्ततप पूरुषस्य। अधा
स वीरैर्दशभिर्वि यूया यो मा मोघं यातुधानेत्याह॥१५॥७॥
यो मायातुं यातुधानेत्याह यो वा रक्षाः शुचिरस्मी-
त्याह। इंद्रस्तं हंतु महता वधेन विश्वस्य जंतोरधमस्प-
दीष्ट॥१६॥ प्र या जिगाति खर्गलेव नक्तमप द्रुहा
तन्वं१ गूहमाना। वव्राँ अनंताँ अव सा पदीष्ट ग्रावाणो घ्नंतु
रक्षस उपब्दैः॥१७॥ वि तिष्ठध्वं मरुतो विक्ष्वि१च्छत गृभायत
रक्षसः सं पिनष्टन। वयो ये भूत्वी पतयंति नक्तभिर्ये वा रिपो
दधिरे देवे अध्वरे॥१८॥ प्र वर्तय दिवो अश्मानमिंद्र सोम-
शितं मघवन्सं शिशाधि। प्राक्तादपाक्तादधरादुदक्तादभि जहि
रक्षसः पर्वतेन॥१९॥ एत उ त्ये पतयंति श्वयातव इंद्रं
दिप्संति दिप्सवोऽदाभ्यं। शिशीते शक्रः पिशुनेभ्यो वधं नूनं



Digitized by Google

स्वधाभिः अहये वा तान् प्रऽददातु सोमः आ वा दधातु निः-
ऽऋतेः उपऽस्थे ॥९॥ यः नः रसं दिप्सति पित्वः अग्ने यः अश्वा-
नां यः गवां यः तनूनां रिपुः स्तेनः स्तेयऽकृत् दभ्रं एतु नि सः
हीयतां तन्वा तना च ॥१०॥६॥ परः सः अस्तु तन्वा तना च तिस्रः
पृथिवीः अधः अस्तु विश्वाः प्रति शुष्यतु यशः अस्य देवाः यः नः
दिवा दिप्सति यः च नक्तं ॥११॥ सुऽविज्ञानं चिकितुषे जनाय
सत् च असत् च वचसी पस्पृधाते तयोः यत् सत्यं यतरत् ऋजीं-
यः तत् इत् सोमः अवति हंति असत् ॥१२॥ न वै ऊं सोमः वृ-
जिनं हिनोति न क्षत्रियं मिथुया धारयंतं हंति रक्षः हंति असत्
वदंतं उभौ इंद्रस्य प्रऽसितौ शयाते ॥१३॥ यदि वा अहं अनृत-
ऽदेवः आस मोघं वा देवान् अपिऽऊहे अग्ने किं अस्मभ्यं जात-
ऽवेदः हृणीषे द्रोघऽवाचः ते निःऽऋथं सचंतां ॥१४॥ अद्य मु-
रीय यदि यातुऽधानः अस्मि यदि वा आयुः ततप पुरुषस्य अथ
सः वीरैः दशऽभिः वि यूयाः यः मा मोघं यातुऽधान इति आह
॥१५॥७॥ यः मा अयातुं यातुऽधान इति आह यः वा रक्षाः शु-
चिः अस्मि इति आह इंद्रः तं हंतु महता वधेन विश्वस्य जंतोः अ-
धमः पदीष्ट ॥१६॥ प्र या जिगाति खर्गलाऽइव नक्तं अप द्रुहा
तन्वं गूहमाना वव्रान् अनंतान् अव सा पदीष्ट ग्रावाणः घ्नंतु
रक्षसः उपब्दैः ॥१७॥ वि तिष्ठध्वं मरुतः विक्षु इच्छत गृभायत
रक्षसः सं पिनष्टन वयः ये भूत्वी पतयंति नक्तऽभिः ये वा रिपः
दधिरे देवे अध्वरे ॥१८॥ प्र वर्तय दिवः अश्मानं इंद्र सोमऽशितं
मघऽवन् सं शिशाधि प्राक्तात् अपाक्तात् अधरात् उदक्तात् अ-
भि जहि रक्षसः पर्वतेन ॥१९॥ एते ऊं त्ये पतयंति श्वऽयातवः
इंद्रं दिप्संति दिप्सवः अदाभ्यं शिशीते शक्रः पिशुनेभ्यः वधं नूनं



Digitized by Google

मृजद्दशनिं यातुमद्भ्यः ॥२०॥८॥ इंद्रो यातूनामभवत्पराशरो ह-
विर्मथीनामभ्या३विवासतां। अभीदु शक्रः परशुर्यथा वनं पा-
त्रेव भिंदन्सत एति रक्षसः ॥२१॥ उलूकयातुं शुशुलूकयातुं ज-
हि श्वयातुमुत कोकयातुं। सुपर्णयातुमुत गृध्रयातुं दृषदेव प्र मृण
रक्ष इंद्र ॥२२॥ मा नो रक्षो अभि नड्यातुमावतामपोच्छतु मि-
थुना या किमीदिना। पृथिवी नः पार्थिवात्पात्वंहसोऽंतरिक्षं
दिव्यात्पात्वस्मान् ॥२३॥ इंद्र जहि पुमांसं यातुधानमुत स्त्रियं
मायया शाशदानां। विग्रीवासो मूरदेवा ऋदंतु मा ते दृशन्त्सूर्य-
मुच्चरंतं ॥२४॥ प्रति चक्ष्व वि चक्ष्वेंद्रश्च सोम जागृतं। रक्षोभ्यो
वधमस्यतमशनिं यातुमद्भ्यः ॥२५॥९॥६॥७॥

॥ इति सप्तमं मंडलं समाप्तं ॥

---

॥१॥ १.२ प्रगाथो घौरः काण्वो वा। ३–२९ मेधातिथिमेध्यातिथी काण्वौ। ३०–३३ आसंगः प्लायोगिः। ३४ शश्वत्यांगिरस्यासंगस्य पत्नी ॥ १–२९ इंद्रः। ३०–३३ आसंगस्य दानस्तुतिः। ३४ आसंगः ॥ १.३.५–३२ बृहती। २.४ सतोबृहती। ३३.३४ त्रिष्टुप् ॥

॥१॥ मा चिदन्यद्वि शंसत सखायो मा रिषण्यत। इंद्रमित्स्तो-
ता वृषणं सचा सुते मुहुरुक्था च शंसत ॥१॥ अवक्रक्षिणं
वृषभं यथाजुरं गां न चर्षणीसहं। विद्वेषणं संवननोभ-
यंकरं मंहिष्ठमुभयाविनं ॥२॥ यच्चिद्धि त्वा जना इमे नाना
हवंत ऊतये। अस्माकं ब्रह्मेदमिंद्र भूतु तेऽहा विश्वा च वर्धनं
॥३॥ वि तर्तूर्यंते मघवन्विपश्चितोऽर्यो विपो जनानां।
उप क्रमस्व पुरुरूपमा भर वाजं नेदिष्ठमूतये ॥४॥ महे चन
त्वामद्रिवः परा शुल्काय देयां। न सहस्राय नायुताय वज्रि-
वो न शताय शतामघ ॥५॥१०॥ वस्याँ इंद्रासि मे पितुरुत
भ्रातुरभुंजतः। माता च मे छदयथः समा वसो वसुत्वनाय रा-



Digitized by Google

सृजत् अशनिं यातुमत्ऽभ्यः ॥२०॥८॥ इंद्रः यातूनां अभवत् प-
राऽशरः हविःऽमथीनां अभि आऽविवासतां अभि इत् ऊं इति श-
क्रः परशुः यथा वनं पात्राऽइव भिंदन् सतः एति रक्षसः ॥२१॥
उलूकऽयातुं शुशुलूकऽयातुं जहि श्वऽयातुं उत कोकऽयातुं सु-
पर्णऽयातुं उत गृध्रऽयातुं दृषदाऽइव प्र मृण रक्षः इंद्र ॥२२॥ मा
नः रक्षः अभि नट् यातुऽमावतां अप उच्छतु मिथुना या कि-
मीदिना पृथिवी नः पार्थिवात् पातु अंहसः अंतरिक्षं दिव्यात्
पातु अस्मान् ॥२३॥ इंद्र जहि पुमांसं यातुऽधानं उत स्त्रियं मा-
यया शाशदानां विऽग्रीवासः मूरऽदेवाः ऋदंतु मा ते दृशन् सूर्यं
उत्ऽचरंतं ॥२४॥ प्रति चक्ष्व वि चक्ष्व इंद्रः च सोम जागृतं रक्षः-
ऽभ्यः वधं अस्यतं अशनिं यातुमत्ऽभ्यः ॥२५॥९॥६॥७॥

॥ इति सप्तमं मंडलं समाप्तं ॥

---

॥१॥ मा चित् अन्यत् वि शंसत सखायः मा रिषण्यत इंद्रं इत्
स्तोत वृषणं सचा सुते मुहुः उक्था च शंसत ॥१॥ अवऽक्रक्षिणं
वृषभं यथा अजुरं गां न चर्षणिऽसहं विऽद्वेषणं संऽवननां उभ-
यंऽकरं मंहिष्ठं उभयाविनं ॥२॥ यत् चित् हि त्वा जनाः इमे नाना
हवंते ऊतये अस्माकं ब्रह्म इदं इंद्र भूतु ते अहा विश्वा च वर्धनं
॥३॥ वि तर्तूर्यंते मघऽवन् विपःऽचितः अर्यः विपः जनानां
उप क्रमस्व पुरुऽरूपं आ भर वाजं नेदिष्ठं ऊतये ॥४॥ महे चन
त्वां अद्रिऽवः परा शुल्काय देयां न सहस्राय न अयुताय वज्रि-
ऽवः न शताय शतऽमघ ॥५॥१०॥ वस्यान् इंद्र असि मे पितुः उत
भ्रातुः अभुंजतः माता च मे छदयथः समा वसो इति वसुऽत्वनाय रा-



Digitized by Google

धसे ॥ ६॥ कोयथ क्वेदसि पुरुत्रा चिद्धि ते मनः । अलर्षि युध्म खजकृत्पुरंदर प्र गायत्रा अंगासिषुः ॥ ७॥ प्रास्मै गायत्रमर्चत वावातुर्यः पुरंदरः । याभिः काण्वस्योप बर्हिरासदं यासद्वज्री भिनत्पुरः ॥ ८॥ ये ते संति दशग्विनः शतिनो ये सहस्रिणः । अश्वासो ये ते वृषणो रघुद्रुवस्तेभिर्नस्तूयमा गहि ॥ ९॥ आ त्व१द्य सबर्दुघां हुवे गायत्रवेपसं । इंद्रं धेनुं सुदुघामन्यामिषमुरुधारामरंकृतं ॥ १०॥ ११॥ यत्तुदत्सूर एतशं वंकू वातस्य पर्णिना । वहत्कुत्समार्जुनेयं शतक्रतुस्त्सरद्गंधर्वमस्तृतं ॥ ११॥ य ऋते चिदभिश्रिषः पुरा जत्रुभ्य आतृदः । संधाता संधिं मघवा पुरूवसुरिष्कर्ता विहुतं पुनः ॥ १२॥ मा भूम निष्ट्या इवेंद्र त्वदरणा इव । वनानि न प्रजहितान्यद्रिवो दुरोषासो अमन्महि ॥ १३॥ अमन्महीदनाशवोऽनुग्रासश्च वृत्रहन् । सकृत्सु ते महता शूर राधसानु स्तोमं मुदीमहि ॥ १४॥ यदि स्तोमं मम श्रवदस्माकमिंद्रमिंदवः । तिरः पवित्रं ससृवांस आशवो मंदंतु तुग्र्यावृधः ॥ १५॥ १२॥ आ त्व१द्य सधस्तुतिं वावातुः सख्युरा गहि । उपस्तुतिर्मघोनां प्र त्वावत्वधा ते वश्मि सुष्टुतिं ॥ १६॥ सोता हि सोममद्रिभिरेमेनमप्सु धावत । गव्या वस्त्रेव वासयंत इन्नरो निर्धुक्षन्वक्षणाभ्यः ॥ १७॥ अध ज्मो अध वा दिवो बृहतो रोचनादधि । अया वर्धस्व तन्वा गिरा ममा जाता सुक्रतो पृण ॥ १८॥ इंद्राय सु मदिन्तमं सोमं सोता वरेण्यं । शक्र एणं पीपयद्विश्वया धिया हिन्वानं न वाजयुं ॥ १९॥ मा त्वा सोमस्य गल्दया सदा याचन्नहं गिरा । भूर्णिं मृगं न सवनेषु चुक्रुधं क ईशानं न याचिषत् ॥ २०॥ १३॥ मदेने-



Digitized by Google

धसे॥ ६॥ कं इयथ कं इत् असि पुरुऽधा चित् हि ते मनः अलं वि गुध्म खजऽकृत पुरंऽदर प्र गायत्राः अगासिषुः॥ ७॥ प्र अस्मै गायत्रं अर्चत ववातुः यः पुरंऽदरः याभिः काण्वस्य उप बर्हिः आऽसदं यासत् वज्री भिनत् पुरः॥ ८॥ ये ते संति दशऽग्विनः शतिनः ये सहस्रिणः अश्वासः ये ते वृषणः रघुऽद्रुवः तेभिः नः तूयं आ गहि॥ ९॥ आ तु अद्य सबःऽदुघां हुवे गायत्रऽवेपसं इंद्रं धेनुं सुऽदुघां अन्यां इषं उरुऽधारां अरंऽकृतं॥ १०॥ ११॥ यत् तुदत् सूरः एतशं वंकू वातस्य पर्णिना वहत् कुत्सं आर्जुनेयं शतऽक्रतुः त्सरत् गंधर्वं अस्तृतं॥ ११॥ यः ऋते चित् अभिऽश्रिषः पुरा जत्रुऽभ्यः आऽतृदः संऽधाता संऽधिं मघऽवा पुरुऽवसुः इष्कर्ता विऽहुतं पुनः॥ १२॥ मा भूम निष्ट्याःऽइव इंद्र त्वत् अरणाःऽइव वनानि न प्रऽजहितानि अद्रिऽवः दुरोषासः अमन्महि॥ १३॥ अमन्महि इत् अनाशवः अनुग्रासः च वृत्रऽहन् सकृत् सु ते महता शूर राधसा अनु स्तोमं मुदीमहि॥ १४॥ यदि स्तोमं मम श्रवत् अस्माकं इंद्रं इंदवः तिरः पवित्रं ससृऽवांसः आशवः मंदंतु तुग्र्यऽवृधः॥ १५॥ १२॥ आ तु अद्य सधऽस्तुतिं ववातुः सख्युः आ गहि उपऽस्तुतिः मघोनां प्र त्वा अवतु अध ते वश्मि सुऽस्तुतिं॥ १६॥ सोत हि सोमं अद्रिऽभिः आ ईं एनं अप्ऽसु धावत गव्या वस्त्राऽइव वासयंतः इत् नरः निः धुक्षन् वक्षणाभ्यः॥ १७॥ अध ज्मः अध वा दिवः बृहतः रोचनात् अधि अया वर्धस्व तन्वा गिरा मम आ जाता सुऽक्रतो॰ पृण॥ १८॥ इंद्राय सु मदिन्ऽतमं सोमं सोत वरेण्यं शक्रः एनं पीपयत् विश्वया धिया हिन्वानं न वाजऽयुं॥ १९॥ मा त्वा सोमस्य गल्दया सदा याचन् अहं गिरा भूर्णिं मृगं न सवनेषु चुक्रुधं कः ईशानं न याचिषत्॥ २०॥ १३॥ मदेन



Digitized by Google

षितं मदमुग्रमुग्रेण शवसा। विश्वेषां तरुतारं मदच्युतं मदे हि
ष्मा ददाति नः ॥२१॥ शेवारे वार्या पुरु देवो मर्ताय दाशुषे। स
सुन्वते च स्तुवते च रासते विश्वगूर्तो अरिष्टुतः ॥२२॥ एंद्र
याहि मत्स्व चित्रेण देव राधसा। सरो न प्रास्युदरं सपीतिभि-
रा सोमेभिरुरु स्फिरं ॥२३॥ आ त्वा सहस्रमा शतं युक्ता रथे
हिरण्यये। ब्रह्मयुजो हरय इंद्र केशिनो वहंतु सोमपीतये ॥२४॥
आ त्वा रथे हिरण्यये हरी मयूरशेप्या। शितिपृष्ठा वहतां मध्वो
अंधसो विवक्षणस्य पीतये ॥२५॥१४॥ पिबा त्व१स्य गिर्वणः
सुतस्य पूर्वपा इव। परिष्कृतस्य रसिन इयमासुतिश्चारुर्मदाय
पत्यते ॥२६॥ य एको अस्ति दंसना महाँ उग्रो अभि व्रतैः।
गमत्स शिप्री न स योषदा गमद्धवं न परि वर्जति ॥२७॥
त्वं पुरं चरिष्ण्वं वधैः शुष्णस्य सं पिणक्। त्वं भा अनु चरो अध
द्विता यदिंद्र हव्यो भुवः ॥२८॥ मम त्वा सूर उदिते मम मध्यं-
दिने दिवः। मम प्रपित्वे अपिशर्वरे वसवा स्तोमासो अवृ-
त्सत ॥२९॥ स्तुहि स्तुहीदेते घा ते मंहिष्ठासो मघोनां। निंदि-
ताश्वः प्रपथी परमज्या मघस्य मेध्यातिथे ॥३०॥१५॥ आ
यदश्वान्वनन्वतः श्रद्धयाहं रथे रुहं। उत वामस्य वसुन-
श्चिकेतति यो अस्ति याद्वः पशुः ॥३१॥ य ऋज्रा मह्यं
मामहे सह त्वचा हिरण्यया। एष विश्वान्यभ्यस्तु सौभगा-
संगस्य स्वनद्रथः ॥३२॥ अध प्लायोगिरति दासदन्याना-
संगो अग्ने दशभिः सहस्रैः। अधोक्षणो दश मह्यं रुशंतो
नळा इव सरसो निरतिष्ठन् ॥३३॥ अन्वस्य स्थूरं ददृशे
पुरस्तादनस्थ ऊरुरवरंबमाणः। शश्वती नार्यभिचक्ष्याह सु-
भद्रमर्य भोजनं बिभर्षि ॥३४॥१६॥



Digitized by Google

इषितं मदं उग्रं उग्रेण शवसा विश्वेषां तरुतारं मदऽच्युतं मदे हि स्म ददाति नः ॥२१॥ शेवारे वार्या पुरु देवः मर्ताय दाशुषे सः सुन्वते च स्तुवते च रासते विश्वऽगूर्तः अरिऽस्तुतः ॥२२॥ आ इंद्र याहि मत्स्व चित्रेण देव राधसा सरः न प्रासि उदरं सपीतिऽभिः आ सोमेभिः उरु स्फिरं ॥२३॥ आ त्वा सहस्रं आ शतं युक्ताः रथे हिरण्यये ब्रह्मऽयुजः हरयः इंद्र केशिनः वहंतु सोमऽपीतये ॥२४॥ आ त्वा रथे हिरण्यये हरी मयूरऽशेप्या शितिऽपृष्ठा वहतां मध्वः अंधसः विवक्षणस्य पीतये ॥२५॥१४॥ पिब तु अस्य गिर्वणः सुतस्य पूर्वपाःऽइव परिऽकृतस्य रसिनः इयं आऽसुतिः चारुः मदाय पत्यते ॥२६॥ यः एकः अस्ति दंसना महान् उग्रः अभि व्रतैः गमत् सः शिप्री न सः योषत् आ गमत् हवं न परि वर्जति ॥२७॥ त्वं पुरं चरिष्ण्वं वधैः शुष्णस्य सं पिणक् त्वं भाः अनु चरः अध द्विता यत् इंद्र हव्यः भुवः ॥२८॥ मम त्वा सूरे उत्ऽइते मम मध्यंदिने दिवः मम प्रऽपित्वे अपिऽशर्वरे वसो आ स्तोमासः अवृत्सत ॥२९॥ स्तुहि स्तुहि इत् एते घ ते मंहिष्ठासः मघोनां निंदितऽअश्वः प्रऽपथी परमऽज्याः मघस्य मेध्यऽअतिथे ॥३०॥१५॥ आ यत् अश्वान् वनन्ऽवतः श्रद्धया अहं रथे रुहं उत वामस्य वसुनः चिकेतति यः अस्ति याद्वः पशुः ॥३१॥ यः ऋज्रा मह्यं ममहे सह त्वचा हिरण्यया एषः विश्वानि अभि अस्तु सौभगा आऽसंगस्य स्वनत्ऽरथः ॥३२॥ अध प्लायोगिः अति दासत् अन्यान् आऽसंगः अग्ने दशऽभिः सहस्रैः अध उक्षणः दश मह्यं रुशंतः नळाःऽइव सरसः निः अतिष्ठन् ॥३३॥ अनु अस्य स्थूरं ददृशे पुरस्तात् अनस्थः ऊरुः अवऽरंबमाणः शश्वती नारी अभिऽचक्ष्य आह सुऽभद्रं अर्य भोजनं बिभर्षि ॥३४॥१६॥



Digitized by Google

॥ २ ॥ १–४० मेधातिथिः काण्वः प्रियमेधश्चांगिरसः । ४१. ४२ मेधातिथिः ॥ १–४० इंद्रः । ४१. ४२ विभिंदोर्दानस्तुतिः ॥ १–२७. २९–४२ गायत्री । २८ अनुष्टुप् ॥

॥२॥ इ॒दं व॑सो सु॒तमंधः॒ पिबा॒ सुपू॑र्णमु॒दरं॑। अना॑भयिन्ररि॒मा ते॑॥१॥ नृभि॑र्धू॒तः सु॒तो अश्नै॒रव्यो॒ वारैः॒ परि॑पूतः। अश्वो॒ न नि॒क्तो न॒दीषु॑॥२॥ तं ते॒ यवं॒ यथा॒ गोभिः॑ स्वा॒दुम॑कर्म श्री॒णंतः॑। इंद्र॑ त्वा॒स्मिन्त्सध॒मादे॑॥३॥ इंद्र॒ इत्सो॑म॒पा एक॒ इंद्रः॑ सुत॒पा वि॒श्वायुः॑। अं॒तर्दे॒वान्मर्त्यां॑श्च॥४॥ न यं शु॒क्रो न दुरा॑शी॒र्न तृ॒प्रा उ॑रु॒व्यच॑सं। अ॒प॒स्पृ॒ण्वते॑ सु॒हार्दं॑॥५॥१७॥ गोभि॒र्यदी॑म॒न्ये अ॒स्मन्मृ॒गं न व्रा मृ॒गयं॑ते। अ॒भि॒त्सरं॑ति धे॒नुभिः॑॥६॥ त्रय॒ इंद्र॑स्य॒ सोमाः॑ सु॒तासः॑ सं॒तु दे॒वस्य॑। स्वे क्षये॑ सुत॒पाव्नः॑॥७॥ त्रयः॒ कोशा॑सः श्चोतंति ति॒स्रश्च॒म्वः सु॒पूर्णाः॑। स॒मा॒ने अधि॒ भार्म॑न्॥८॥ शुचि॑रसि पुरुनिः॒ष्ठाः क्षी॒रैर्म॑ध्य॒त आशी॑र्तः। द॒ध्ना मंदि॑ष्ठः॒ शूर॑स्य॥९॥ इ॒मे त॑ इंद्र॒ सोमा॑स्ती॒व्रा अ॒स्मे सु॒तासः॑। शु॒क्रा आ॒शिरं॑ याचंते॥१०॥१८॥ ताँ आ॒शिरं॑ पुरो॒ळाश॒मिंद्रे॒मं सोमं॑ श्रीणीहि। रे॒वंतं॒ हि त्वा॑ शृणोमि॑॥११॥ हृ॒त्सु पी॒तासो॑ युध्यंते दु॒र्मदा॑सो॒ न सुरा॑यां। ऊध॒र्न न॒ग्ना ज॑रंते॥१२॥ रे॒वाँ इद्रे॒वतः॑ स्तो॒ता स्यात्त्वाव॑तो म॒घोनः॑। प्रेदु॑ हरिवः श्रु॒तस्य॑॥१३॥ उ॒क्थं च॒न श॒स्यमा॑न॒मगो॑र॒रिरा चि॑केत। न गा॑य॒त्रं गी॒यमा॑नं॥१४॥ मा न॑ इंद्र पीय॒त्नवे॒ मा शर्ध॑ते॒ परा॑ दाः। शिक्षा॑ शचीवः॒ शची॑भिः॥१५॥१९॥ व॒यमु॑ त्वा त॒दिद॑र्था इंद्र॑ त्वा॒यंतः॒ सखा॑यः। कण्वा॑ उ॒क्थेभि॑र्जरंते॥१६॥ न घे॑म॒न्यदा प॑पन॒ वज्रि॑न्न॒पसो॒ नवि॑ष्टौ। तवेदु॒ स्तोमं॑ चिकेत॥१७॥ इ॒च्छंति॑ दे॒वाः सु॒न्वंतं॒ न स्वप्ना॑य स्पृहयंति। यंति॑ प्र॒माद॒मतं॑द्राः॥१८॥ ओ षु प्र या॑हि॒ वाजे॑भि॒र्मा हृ॑णीथा अ॒भ्य१॒स्मान्। म॒हाँ इ॑व॒ युव॑जानिः॥१९॥ मो ष्व१॒द्य दु॒र्हणा॑वान्त्सा॒यं क॑रदा॒रे अ॒स्मत्। अ॒-



Digitized by Google

॥२॥ इदं वसो सुतं अंधः पिब सुऽपूर्णं उदरं अनाभयिन् र-
रिम ते ॥१॥ नृऽभिः धूतः सुतः अश्नैः अव्यः वारैः परिऽपूतः अ-
श्वः न निक्तः नदीषु ॥२॥ तं ते यवं यथा गोभिः स्वादुं अकर्म श्री-
णंतः इंद्र त्वा अस्मिन् सधऽमादे ॥३॥ इंद्रः इत् सोमऽपाः एकः
इंद्रः सुतऽपाः विश्वऽआयुः अंतः देवान् मर्त्यान् च ॥४॥ न यं
शुक्रः न दुःऽआशीः न तृप्राः उरुऽव्यचसं अपऽस्पृण्वते सुऽहार्दं
॥५॥१७॥ गोभिः यत् ईं अन्ये अस्मत् मृगं न व्राः मृगयंते अभि-
ऽत्सरंति धेनुऽभिः ॥६॥ त्रयः इंद्रस्य सोमाः सुतासः संतु देवस्य
स्वे क्षये सुतऽपाव्नः ॥७॥ त्रयः कोशासः श्चोतंति तिस्रः चम्वः
सुऽपूर्णाः समाने अधि भार्मन् ॥८॥ शुचिः असि पुरुनिःऽस्थाः
क्षीरैः मध्यतः आऽशीर्तः दध्ना मंदिष्ठः शूरस्य ॥९॥ इमे ते इंद्र
सोमाः तीव्राः अस्मे सुतासः शुक्राः आऽशिरं याचंते ॥१०॥१८॥
तान् आऽशिरं पुरोळाशं इंद्र इमं सोमं श्रीणीहि रेवंतं हि त्वा
शृणोमि ॥११॥ हृत्ऽसु पीतासः युध्यंते दुःऽमदासः न सुरायां
ऊधः न नग्नाः जरंते ॥१२॥ रेवान् इत् रेवतः स्तोता स्यात् त्वा-
ऽवतः मघोनः प्र इत् ऊं हरिऽवः श्रुतस्य ॥१३॥ उक्थं चन श-
स्यमानं अगोः अरिः आ चिकेत न गायत्रं गीयमानं ॥१४॥ मा
नः इंद्र पीयत्नवे मा शर्धते परा दाः शिक्ष शचीऽवः शचीभिः
॥१५॥१९॥ वयं ऊं त्वा तदित्ऽअर्थाः इंद्र त्वाऽयंतः सखायः क-
ण्वाः उक्थेभिः जरंते ॥१६॥ न घ ईं अन्यत् आ पपन वज्रिन् अ-
पसः नविष्टौ तव इत् ऊं स्तोमं चिकेत ॥१७॥ इच्छंति देवाः सु-
न्वंतं न स्वप्नाय स्पृहयंति यंति प्रऽमादं अतंद्राः ॥१८॥ ओ सु प्र
याहि वाजेभिः मा हृणीथाः अभि अस्मान् महान्ऽइव युवऽजा-
निः ॥१९॥ मो सु अद्य दुःऽहनाऽवान् सायं करत् आरे अस्मत् अ-

भीर इव जामाता ॥२०॥२०॥ विद्मा ह्यस्य वीरस्य भूरिदावरीं सुमतिं। त्रिषु जातस्य मनांसि ॥२१॥ आ तू षिंच कण्वमंतं न घा विद्म शवसानात्। यशस्तरं शतमूतेः ॥२२॥ ज्येष्ठेन सोतरिंद्राय सोमं वीराय शक्राय। भरा पिबन्नर्याय ॥२३॥ यो वेदिष्ठो अव्यथिष्वश्वावंतं जरितृभ्यः। वाजं स्तोतृभ्यो गोमंतं ॥२४॥ पन्यंपन्यमित्सोतार आ धावत मद्याय। सोमं वीराय शूराय ॥२५॥२१॥ पाता वृत्रहा सुतमा घा गमन्नारे अस्मत्। नि यमते शतमूतिः ॥२६॥ एह हरी ब्रह्मयुजा शग्मा वक्षतः सखायं। गीर्भिः श्रुतं गिर्वणसं ॥२७॥ स्वादवः सोमा आ याहि श्रीताः सोमा आ याहि। शिप्रिन्नृषीवः शचीवो नायमच्छा सधमादं ॥२८॥ स्तुतश्च यास्त्वा वर्धंति महे राधसे नृम्णाय। इंद्र कारिणं वृधंतः ॥२९॥ गिरश्च यास्ते गिर्वाह उक्था च तुभ्यं तानि। सत्रा दधिरे शवांसि ॥३०॥२२॥ एवेदेष तुविकूर्मिर्वाजाँ एको वज्रहस्तः। सनादमृक्तो दयते ॥३१॥ हंता वृत्रं दक्षिणेनेंद्रः पुरू पुरुहूतः। महान्महीभिः शचीभिः ॥३२॥ यस्मिन्विश्वाश्चर्षणय उत च्यौत्ना ज्रयांसि च। अनु घेन्मंदी मघोनः ॥३३॥ एष एतानि चकारेंद्रो विश्वा योऽति शृण्वे। वाजदावा मघोनां ॥३४॥ प्रभर्ता रथं गव्यंतमपाकाच्चिद्यमवति। इनो वसु स हि वोळ्हा ॥३५॥२३॥ सनिता विप्रो अर्वद्भिर्हंता वृत्रं नृभिः शूरः। सत्योऽविता विधंतं ॥३६॥ यजध्वैनं प्रियमेधा इंद्रं सत्राचा मनसा। यो भूत्सोमैः सत्यमद्वा ॥३७॥ गाथश्रवसं सत्पतिं श्रवस्कामं पुरुत्मानं। कण्वासो गात वाजिनं ॥३८॥ य ऋते चिद्गास्पदेभ्यो दात्सखा नृभ्यः शचीवान्। ये अस्मिन्काममश्रियन् ॥३९॥ इत्था



Digitized by Google

श्रीरःऽइव जामाता॥२०॥२०॥ विद्म हि अस्य वीरस्य भूरिऽदा-
वरीं सुऽमतिं त्रिषु जातस्य मनांसि॥२१॥ आ तु सिंच कण्वऽमंतं
न घ विद्म शवसानात् यशःऽतरं शतंऽऊते:॥२२॥ ज्येष्ठेन सोतः
इंद्राय सोमं वीराय शक्राय भर पिबत् नर्याय॥२३॥ यः वेदिष्ठः
अव्यथिषु अश्वऽवंतं जरितृऽभ्यः वाजं स्तोतृऽभ्यः गोऽमंतं॥२४॥
पन्यंऽपन्यं इत् सोतारः आ धावत मद्याय सोमं वीराय शूराय
॥२५॥२१॥ पाता वृत्रऽहा सुतं आ घ गमत् न आरे अस्मत् नि
यमते शतंऽऊतिः॥२६॥ आ इह हरी ब्रह्मऽयुजा शग्मा वक्षतः
सखायं गीःऽभिः श्रुतं गिर्वणसं॥२७॥ स्वादवः सोमाः आ याहि
श्रीताः सोमाः आ याहि शिप्रिन् ऋषिऽवः शचीऽवः न अयं
अच्छ सधऽमादं॥२८॥ स्तुतः च याः त्वा वर्धंति महे राधसे नृम्णाय
इंद्र कारिणं वृधंतः॥२९॥ गिरः च याः ते गिर्वाहः उक्था च तुभ्यं
तानि सत्रा दधिरे शवांसि॥३०॥२२॥ एव इत् एषः तुविऽकूर्मिः
वाजान् एकः वज्रऽहस्तः सनात् अमृक्तः दयते॥३१॥ हंता वृत्रं
दक्षिणेन इंद्रः पुरु पुरुऽहूतः महान् महीभिः शचीभिः॥३२॥ य-
स्मिन् विश्वाः चर्षणयः उत च्यौत्ना ज्रयांसि च अनु घ इत् मंदी
मघोनः॥३३॥ एषः एतानि चकार इंद्रः विश्वा यः अति शृण्वे
वाजऽदावा मघोनां॥३४॥ प्रऽभर्ता रथं गव्यंतं अपाकात् चित्
यं अवति इनः वसु सः हि वोळ्हा॥३५॥२३॥ सनिता विप्रः
अर्वत्ऽभिः हंता वृत्रं नृऽभिः शूरः सत्यः अविता विधंतं॥३६॥
यजध्व एनं प्रियऽमेधाः इंद्रं सत्राचा मनसा यः भूत् सोमैः सत्य-
ऽमद्वा॥३७॥ गाथऽश्रवसं सत्ऽपतिं श्रवःऽकामं पुरुऽत्मानं
कण्वासः गात वाजिनं॥३८॥ यः ऋते चित् गाः पदेभ्यः दात् सखा
नृऽभ्यः शचीऽवान् ये अस्मिन् कामं अश्रियन्॥३९॥ इत्था



Digitized by Google

धीवंतमद्रिवः काण्वं मेध्यातिथिं। मेषो भूतो३ऽभि यन्नयः ॥४०॥ शिक्षा विभिंदो अस्मै चत्वार्ययुता ददत्। अष्टा परः सहस्रा ॥४१॥ उत सु त्ये पयोवृधा माकी रणस्य नप्त्या। जनित्वनाय मामहे ॥४२॥२४॥

---

॥ ३ ॥ १–२४ मेध्यातिथिः काण्वः ॥ १–२० इंद्रः । २१–२४ पाकस्थाम्नः कौरयाणस्य दानस्तुतिः ॥ १–२० प्रागाथं । २१ अनुष्टुप् । २२.२३ गायत्री । २४ बृहती ॥

॥३॥ पिबा सुतस्य रसिनो मत्स्वा न इंद्र गोमतः। आपिर्नो बोधि सधमाद्यो वृधे३ऽस्माँ अवंतु ते धियः ॥१॥ भूयाम ते सुमतौ वाजिनो वयं मा नः स्तरभिमातये। अस्माञ्चित्राभिरवतादभिष्टिभिरा नः सुम्नेषु यामय ॥२॥ इमा उ त्वा पुरूवसो गिरो वर्धंतु या मम। पावकवर्णाः शुचयो विपश्चितोऽभि स्तोमैरनूषत ॥३॥ अयं सहस्रमृषिभिः सहस्कृतः समुद्र इव पप्रथे। सत्यः सो अस्य महिमा गृणे शवो यज्ञेषु विप्रराज्ये ॥४॥ इंद्रमिद्देवतातय इंद्रं प्रयत्यध्वरे। इंद्रं समीके वनिनो हवामह इंद्रं धनस्य सातये ॥५॥२५॥ इंद्रो मह्ना रोदसी पप्रथच्छव इंद्रः सूर्यमरोचयत्। इंद्रे ह विश्वा भुवनानि येमिर इंद्रे सुवानास इंदवः ॥६॥ अभि त्वा पूर्वपीतय इंद्र स्तोमेभिरायवः। समीचीनास ऋभवः समस्वरन्रुद्रा गृणंत पूर्व्यं ॥७॥ अस्येदिंद्रो वावृधे वृष्ण्यं शवो मदे सुतस्य विष्णवि। अद्या तमस्य महिमानमायवोऽनु ष्टुवंति पूर्वथा ॥८॥ तत्त्वा यामि सुवीर्यं तद्ब्रह्म पूर्वचित्तये। येना यतिभ्यो भृगवे धने हिते येन प्रस्कण्वमाविथ ॥९॥ येना समुद्रमसृजो महीरपस्तदिंद्र वृष्णि ते शवः। सद्यः सो अस्य महिमा न संनशे यं क्षोणीरनुचक्रदे ॥१०॥२६॥ शग्धी न इंद्र यत्त्वा रयिं यामि सुवीर्यं। शग्धि वाजाय प्रथमं सिषासते शग्धि स्तोमाय पूर्व्य ॥११॥ शग्धी



Digitized by Google

धीऽवंतं अद्रिऽवः काण्वं मेध्यऽअतिथिं मेषः भूतः अभि यन्
अयः ॥४०॥ शिक्ष विऽभिंदो॰ अस्मै चत्वारि अयुता ददत् अष्ट
परः सहस्रा ॥४१॥ उत सु त्ये पयःऽवृधा माकी रणस्य नप्त्या
जनिऽत्वनाय ममहे ॥४२॥२४॥

---

॥३॥ पिब सुतस्य रसिनः मत्स्व नः इंद्र गोऽमतः आपिः नः
बोधि सधऽमाद्यः वृधे अस्मान् अवंतु ते धियः ॥१॥ भूयाम ते
सुऽमतौ वाजिनः वयं मा नः स्तः अभिऽमातये अस्मान् चि-
त्राभिः अवतात् अभिष्टिऽभिः आ नः सुम्नेषु यमय ॥२॥ इमाः ऊं
त्वा पुरुऽवसो॰ गिरः वर्धंतु याः मम पावकऽवर्णाः शुचयः वि-
पःऽचितः अभि स्तोमैः अनूषत ॥३॥ अयं सहस्रं ऋषिऽभिः
सहःऽकृतः समुद्रःऽइव पप्रथे सत्यः सः अस्य महिमा गृणे शवः
यज्ञेषु विप्रऽराज्ये ॥४॥ इंद्रं इत् देवऽतातये इंद्रं प्रऽयति अध्वरे इंद्रं
संऽईके वनिनः हवामहे इंद्रं धनस्य सातये ॥५॥२५॥ इंद्रः मह्ना
रोदसी पप्रथत् शवः इंद्रः सूर्यं अरोचयत् इंद्रे ह विश्वा भुवनानि
येमिरे इंद्रे सुवानासः इंदवः ॥६॥ अभि त्वा पूर्वऽपीतये इंद्र स्तो-
मेभिः आयवः संऽईचीनासः ऋभवः सं अस्वरन् रुद्राः गृणंत
पूर्व्यं ॥७॥ अस्य इत् इंद्रः ववृधे वृष्ण्यं शवः मदे सुतस्य विष्णवि
अद्य तं अस्य महिमानं आयवः अनु स्तुवंति पूर्वऽथा ॥८॥ तत्
त्वा यामि सुऽवीर्यं तत् ब्रह्म पूर्वऽचित्तये येन यतिऽभ्यः भृगवे
धने हिते येन प्रस्कण्वं आविथ ॥९॥ येन समुद्रं असृजः महीः अपः
तत् इंद्र वृष्णि ते शवः सद्यः सः अस्य महिमा न संऽनशे यं क्षोणीः
अनुऽचक्रदे ॥१०॥२६॥ शग्धि नः इंद्र यत् त्वा रयिं यामि सुऽवीर्यं
शग्धि वाजाय प्रथमं सिसासते शग्धि स्तोमाय पूर्व्य ॥११॥ शग्धि



Digitized by Google

नो अस्य यद्ध पौरमाविथ धियं इंद्र सिषासतः। शग्धि यथा रुशमं श्यावकं कृपमिंद्र प्रावः स्वर्णरं॥१२॥ कन्नव्यो अतसीनां तुरो गृणीत मर्त्यः। नही न्वस्य महिमानमिंद्रियं स्वर्गृणंत आनशुः॥१३॥ कदु स्तुवंत ऋतयंत देवत ऋषिः को विप्र ओहते। कदा हवं मघवन्निंद्र सुन्वतः कदु स्तुवत आ गमः॥१४॥ उदु त्ये मधुमत्तमा गिरः स्तोमास ईरते। सत्राजितो धनसा अक्षितोतयो वाजयंतो रथा इव॥१५॥२७॥ कण्वा इव भृगवः सूर्या इव विश्वमिद्धीतमानशुः। इंद्रं स्तोमेभिर्महयंत आयवः प्रियमेधासो अस्वरन्॥१६॥ युक्ष्वा हि वृत्रहंतम हरी इंद्र परावतः। अर्वाचीनो मघवन्त्सोमपीतय उग्र ऋष्वेभिरा गहि॥१७॥ इमे हि ते कारवो वावशुर्धिया विप्रासो मेधसातये। स त्वं नो मघवन्निंद्र गिर्वणो वेनो न शृणुधी हवं॥१८॥ निरिंद्र बृहतीभ्यो वृत्रं धनुभ्यो अस्फुरः। निरर्बुदस्य मृगयस्य मायिनो निः पर्वतस्य गा आजः॥१९॥ निरग्नयो रुरुचुर्निरु सूर्यो निः सोम इंद्रियो रसः। निरंतरिक्षादधमो महामहिं कृषे तदिंद्र पौंस्यं॥२०॥२८॥ यं मे दुरिंद्रो मरुतः पाकस्थामा कौरयाणः। विश्वेषां त्मना शोभिष्ठमुपेव दिवि धावमानं॥२१॥ रोहितं मे पाकस्थामा सुधुरं कक्ष्यप्रां। अदाद्रायो विबोधनं॥२२॥ यस्मा अन्ये दश प्रति धुरं वहंति वह्नयः। अस्तं वयो न तुग्र्यं॥२३॥ आत्मा पितुस्तनूर्वास ओजोदा अभ्यंजनं। तुरीयमिद्रोहितस्य पाकस्थामानं भोजं दातारमब्रवं॥२४॥२९॥

---

॥४॥ १—२१ देवातिथिः काण्वः॥ १—१४ इंद्रः। १५—१८ इंद्रः पूषा वा। १९—२१ कुरुंगस्य दानस्तुतिः॥ १—२० प्रागाथं। २१ पुरउष्णिक्॥

॥४॥ यदिंद्र प्रागपागुदङ् न्यग्वा हूयसे नृभिः। सिमा

नः अस्य मत् ह पौरं आविथ धियः इंद्र सिसासतः शग्धि यथा रु-
शमं श्यावकं कृपं इंद्र प्र आवः स्वः ऽनरं ॥ १२॥ कत् नव्यः अत-
सीनां तुरः गृणीत मर्त्यः नहि नु अस्य महिमानं इंद्रियं स्वः गृ-
णंतः आनशुः ॥ १३॥ कत् ऊं स्तुवंतः ऋतऽयंत देवता ऋषिः
कः विप्रः ओहते कदा हवं मघऽवन् इंद्र सुन्वतः कत् ऊं स्तुवतः
आ गमः ॥ १४॥ उत् ऊं त्ये मधुमत्ऽतमाः गिरः स्तोमासः ईरते
सत्राऽजितः धनऽसाः अक्षितऽऊतयः वाजऽयंतः रथाःऽइव
॥ १५॥२७॥ कण्वाःऽइव भृगवः सूर्याःऽइव विश्वं इत् धीतं आन-
शुः इंद्रं स्तोमेभिः महयंतः आयवः प्रियऽमेधासः अस्वरन् ॥ १६॥
युक्ष्व हि वृत्रहन्ऽतम हरी इंद्र पराऽवतः अर्वाचीनः मघऽवन्
सोमऽपीतये उग्रः ऋष्वेभिः आ गहि ॥ १७॥ इमे हि ते कारवः
वावशुः धिया विप्रासः मेधऽसातये सः त्वं नः मघऽवन् इंद्र गिर्व-
णः वेनः न शृणुधि हवं ॥ १८॥ निः इंद्र बृहतीभ्यः वृत्रं धनुऽभ्यः
अस्फुरः निः अर्बुदस्य मृगयस्य मायिनः निः पर्वतस्य गाः आ-
जः ॥ १९॥ निः अग्नयः रुरुचुः निः ऊं सूर्यः निः सोमः इंद्रियः रसः
निः अंतरिक्षात् अधमः महां अहिं कृषे तत् इंद्र पौंस्यं ॥ २०॥२८॥
यं मे दुः इंद्रः मरुतः पाकऽस्थामा कौरयाणः विश्वेषां त्मना शो-
भिष्ठं उपऽइव दिवि धावमानं ॥ २१॥ रोहितं मे पाकऽस्थामा
सुऽधुरं कक्ष्यऽप्रां अदात् रायः विऽबोधनं ॥ २२॥ यस्मै अन्ये दश
प्रति धुरं वहंति वह्नयः अस्तं वयः न तुग्र्यं ॥ २३॥ आत्मा पितुः
तनूः वासः ओजःऽदाः अभिऽअंजनं तुरीयं इत् रोहितस्य पा-
कऽस्थामानं भोजं दातारं अब्रवं ॥ २४॥ २९॥

---

॥ ४॥ यत् इंद्र प्राक् अपाक् उदक् न्यक् वा हूयसे नृऽभिः सिम

पुरू नृषूतो अस्यानवेऽसि प्रशर्ध तुर्वशे ॥१॥ यद्वा रुमे
रुशमे श्यावके कृप इंद्र मादयसे सचा। कण्वासस्त्वा ब्रह्मभिः
स्तोमवाहस इंद्रा यच्छंत्या गहि ॥२॥ यथा गौरो अपा
कृतं तृष्यन्नेत्यवेरिणं। आपित्वे नः प्रपित्वे तूयमा गहि
कण्वेषु सु सचा पिब ॥३॥ मंदंतु त्वा मघवन्निंद्रेंदवो राधो-
देयाय सुन्वते। आमुष्या सोममपिबश्चमू सुतं ज्येष्ठं तद्दधिषे
सहः ॥४॥ प्र चक्रे सहसा सहो बभंज मन्युमोजसा। विश्वे त
इंद्र पृतनायवो यहो नि वृक्षा इव येमिरे ॥५॥३०॥ सहस्रेणेव
सचते यवीयुधा यस्त आनळुपस्तुतिं। पुत्रं प्रावर्गं कृणुते सु-
वीर्ये दाश्नोति नमउक्तिभिः ॥६॥ मा भेम मा श्रमिष्मोग्रस्य
सख्ये तव। महत्ते वृष्णो अभिचक्ष्यं कृतं पश्येम तुर्वशं यदुं ॥७॥
सव्यामनु स्फिग्यं वावसे वृषा न दानो अस्य रोषति। मध्वा
संपृक्ताः सारघेण धेनवस्तूयमेहि द्रवा पिब ॥८॥ अश्वी रथी
सुरूप इद्गोमाँ इदिंद्र ते सखा। श्वात्रभाजा वयसा सचते
सदा चंद्रो याति सभामुप ॥९॥ ऋश्यो न तृष्यन्नवपानमा
गहि पिबा सोमं वशाँ अनु। निमेघमानो मघवन्दिवेदिव
ओजिष्ठं दधिषे सहः ॥१०॥३१॥ अध्वर्यो द्रावया त्वं सोममिंद्रः
पिपासति। उप नूनं युयुजे वृषणा हरी आ च जगाम वृत्रहा
॥११॥ स्वयं चित्स मन्यते दाशुरिर्जनो यत्रा सोमस्य तृंपसि। इदं
ते अन्नं युज्यं समुक्षितं तस्येहि प्र द्रवा पिब ॥१२॥ रथेष्ठाया-
ध्वर्यवः सोममिंद्राय सोतन। अधि ब्रध्नस्याद्रयो वि चक्षते
सुन्वंतो दाश्वध्वरं ॥१३॥ उप ब्रध्नं वावाता वृषणा हरी इंद्रम-
पसु वक्षतः। अर्वाचं त्वा सप्तयोऽध्वरश्रियो वहंतु सवने-
दुप ॥१४॥ प्र पूषणं वृणीमहे युज्याय पुरूवसुं। स शक्र शिक्ष



Digitized by Google

पुरु नृऽसूतः असि आनवे असि प्रऽशर्ध तुर्वशे ॥१॥ यत् वा रुमे रुशमे श्यावके कृपे इंद्र मादयसे सचा कण्वासः त्वा ब्रह्मऽभिः स्तोमऽवाहसः इंद्र आ यच्छंति आ गहि ॥२॥ यथा गौरः अपा कृतं तृष्यन् एति अव इरिणं आऽपित्वे नः प्रऽपित्वे तूयं आ गहि कण्वेषु सु सचा पिब ॥३॥ मंदंतु त्वा मघऽवन् इंद्र इंदवः राधःऽदेयाय सुन्वते आऽमुष्य सोमं अपिबः चमू इति सुतं ज्येष्ठं तत् दधिषे सहः ॥४॥ प्र चक्रे सहसा सहः बभंज मन्युं ओजसा विश्वे ते इंद्र पृतनाऽयवः यहो इति नि वृक्षाःऽइव येमिरे ॥५॥३०॥ सहस्रेणऽइव सचते यविऽयुधा यः ते आनट् उपऽस्तुतिं पुत्रं प्रावर्गं कृणुते सुऽवीर्ये दाश्नोति नमउक्तिऽभिः ॥६॥ मा भेम मा श्रमिष्म उग्रस्य सख्ये तव महत् ते वृष्णः अभिऽचक्ष्यं कृतं पश्येम तुर्वशं यदुं ॥७॥ सव्यां अनु स्फिग्यं ववसे वृषा न दानः अस्य रोषति मध्वा संऽपृक्ताः सारघेण धेनवः तूयं आ इहि द्रव पिब ॥८॥ अश्वी रथी सुऽरूपः इत् गोऽमान् इत् इंद्र ते सखा श्वात्रऽभाजा वयसा सचते सदा चंद्रः याति सभां उप ॥९॥ ऋश्यः न तृष्यन् अवऽपानं आ गहि पिब सोमं वशान् अनु निऽमेघमानः मघऽवन् दिवेऽदिवे ओजिष्ठं दधिषे सहः ॥१०॥३१॥ अध्वर्यो इति द्रवय त्वं सोमं इंद्रः पिपासति उप नूनं युयुजे वृषणा हरी इति आ च जगाम वृत्रऽहा ॥११॥ स्वयं चित् सः मन्यते दाशुरिः जनः यत्र सोमस्य तृंपसि इदं ते अन्नं युज्यं संऽउक्षितं तस्य आ इहि प्र द्रव पिब ॥१२॥ रथेऽस्थाय अध्वर्यवः सोमं इंद्राय सोतन अधि ब्रध्नस्य अद्रयः वि चक्षते सुन्वंतः दाशुऽअध्वरं ॥१३॥ उप ब्रध्नं वावाता वृषणा हरी इति इंद्रं अपऽसु वक्षतः अर्वाचं त्वा सप्तयः अध्वरऽश्रियः वहंतु सवना इत् उप ॥१४॥ प्र पूषणं वृणीमहे युज्याय पुरुऽवसुं सः शक्र शिक्ष

पुरुहूत नो धिया तुजे राये विमोचन ॥१५॥३२॥ सं नः शिशीहि भुरिजोरिव क्षुरं रास्व रायो विमोचन । त्वे तन्नः सुवेदमुस्रियं वसु यं त्वं हिनोषि मर्त्यं ॥१६॥ वेमि त्वा पूषन्नृंजसे वेमि स्तोतव आघृणे । न तस्य वेम्यरणं हि तद्वसो स्तुषे पज्राय साम्ने ॥१७॥ परा गावो यवसं कच्चिदाघृणे नित्यं रेक्णो अमर्त्य । अस्माकं पूषन्नविता शिवो भव मंहिष्ठो वाजसातये ॥१८॥ स्थूरं राधः शताश्वं कुरुंगस्य दिविष्टिषु । राज्ञस्त्वेषस्य सुभगस्य रातिषु तुर्वशेष्वमन्महि ॥१९॥ धीभिः सातानि काण्वस्य वाजिनः प्रियमेधैरभिद्युभिः । षष्टिं सहस्रानु निर्मजामजे निर्यूथानि गवामृषिः ॥२०॥ वृक्षाश्चिन्मे अभिपित्वे अरारणुः । गां भजंत मेहनाश्वं भजंत मेहना ॥२१॥३३॥७॥

---

॥५॥ १-३९ ब्रह्मातिथिः काण्वः ॥ १-३७¹ अश्विनौ । ३७²-३९ चैद्यस्य कशोर्दानस्तुतिः ॥
१-३६ गायत्री । ३७. ३८ बृहती । ३९ अनुष्टुप् ॥

॥५॥ दूरादिहेव यत्सत्यरुणप्सुरशिश्वितत् । वि भानुं विश्वधातनत् ॥१॥ नृवद्दस्रा मनोयुजा रथेन पृथुपाजसा । सचेथे अश्विनोषसं ॥२॥ युवाभ्यां वाजिनीवसू प्रति स्तोमा अदृक्षत । वाचं दूतो यथोहिषे ॥३॥ पुरुप्रिया ण ऊतये पुरुमंद्रा पुरूवसू । स्तुषे कण्वासो अश्विना ॥४॥ मंहिष्ठा वाजसातमेषयंता शुभस्पती । गंतारा दाशुषो गृहं ॥५॥१॥ ता सुदेवाय दाशुषे सुमेधामवितारिणीं । घृतैर्गव्यूतिमुक्षतं ॥६॥ आ नः स्तोममुप द्रवत्तूयं श्येनेभिराशुभिः । यातमश्वेभिरश्विना ॥७॥ येभिस्तिस्रः परावतो दिवो विश्वानि रोचना । त्रीँरक्तून्परिदीयथः ॥८॥ उत नो गोमतीरिष उत सातीरहर्विदा । वि पथः सातये सितं ॥९॥



Digitized by Google

पुरुऽहूत नः धिया तुजे राये विऽमोचन ॥१५॥३२॥ सं नः शिशीहि भुरिजोःऽइव क्षुरं रास्व रायः विऽमोचन त्वे इति तत् नः सुऽवेदं उस्रियं वसु यं त्वं हिनोषि मर्त्यं ॥१६॥ वेमि त्वा पूषन् ऋंजसे वेमि स्तोतवे आघृणे न तस्य वेमि अरणं हि तत् वसो इति स्तुषे पज्राय साम्ने ॥१७॥ परा गावः यवसं कत् चित् आघृणे नित्यं रेक्णः अमर्त्य अस्माकं पूषन् अविता शिवः भव मंहिष्ठः वाजऽसातये ॥१८॥ स्थूरं राधः शतऽअश्वं कुरुंगस्य दिविऽइष्टिषु राज्ञः त्वेषस्य सुऽभगस्य रातिषु तुर्वशेषु अमन्महि ॥१९॥ धीभिः सातानि काण्वस्य वाजिनः प्रियऽमेधैः अभिद्युऽभिः षष्टिं सहस्रा अनु निःऽमजां अजे निः यूथानि गवां ऋषिः ॥२०॥ वृक्षाः चित् मे अभिऽपित्वे अरारणुः गां भजंत मेहना अश्वं भजंत मेहना ॥२१॥३३॥७॥

---

॥५॥ दूरात् इहऽइव यत् सती अरुणऽप्सुः अशिश्वितत् वि भानुं विश्वधा अतनत् ॥१॥ नृऽवत् दस्रा मनःऽयुजा रथेन पृथुऽपाजसा सचेथे इति अश्विना उषसं ॥२॥ युवाभ्यां वाजिनीऽवसू इति प्रति स्तोमाः अदृक्षत वाचं दूतः यथा ओहिषे ॥३॥ पुरुऽप्रिया नः ऊतये पुरुऽमंद्रा पुरुऽवसू इति स्तुषे कण्वासः अश्विना ॥४॥ मंहिष्ठा वाजऽसातमा इषयंता शुभः पती इति गंतारा दाशुषः गृहं ॥५॥१॥ ता सुऽदेवाय दाशुषे सुऽमेधां अविऽतारिणीं घृतैः गव्यूतिं उक्षतं ॥६॥ आ नः स्तोमं उप द्रवत् तूयं श्येनेभिः आशुऽभिः यातं अश्वेभिः अश्विना ॥७॥ येभिः तिस्रः पराऽवतः दिवः विश्वानि रोचना त्रीन् अक्तून् परिऽदीयथः ॥८॥ उत नः गोऽमतीः इषः उत सातीः अहःऽविदा वि पथः सातये सितं ॥९॥



Digitized by Google

आ नो॒ गोम॑न्तमश्विना सु॒वीरं॑ सु॒रथं॑ र॒यिं। वो॒ळ्हमश्वा॑वती॒-
रिषः॑ ॥१०॥२॥ वा॒वृ॒धा॒ना शु॑भस्पती॒ दस्रा॒ हिर॑ण्यवर्तनी।
पिब॑तं सो॒म्यं मधु॑ ॥११॥ अ॒स्मभ्यं॑ वाजिनीवसू म॒घव॑द्भ्यश्च
स॒प्रथः॑। छ॒र्दिर्य॑न्तमदा॑भ्यं ॥१२॥ नि षु ब्रह्म॒ जना॑नां॒ यावि॑ष्टं
तूय॒मा ग॑तं। मो ष्व१॒॑न्याँ उपा॑रतं ॥१३॥ अ॒स्य पि॑बतम-
श्विना यु॒वं मद॑स्य॒ चारु॑णः। मध्वो॑ रा॒तस्य॑ धिष्ण्या ॥१४॥
अ॒स्मे आ व॑हतं र॒यिं श॒तव॑न्तं सह॒स्रिणं॑। पु॒रु॒क्षुं वि॒श्वधा॑यसं
॥१५॥३॥ पु॒रु॒त्रा चि॒द्धि वां॑ नरा वि॒ह्वय॑न्ते मनी॒षिणः॑। वा॒घ-
द्भि॑रश्विना ग॑तं ॥१६॥ जना॑सो वृ॒क्तब॑र्हिषो ह॒विष्म॑न्तो अ॒रं-
कृतः॑। यु॒वां ह॑वन्ते अश्विना ॥१७॥ अ॒स्माक॑म॒द्य वा॑म॒यं स्तोमो॒
वाहि॑ष्ठो॒ अन्त॑मः। यु॒वाभ्यां॑ भूत्वश्विना ॥१८॥ यो ह॑ वां॒ मधु॑नो॒
दृति॒राहि॑तो र॒थ॒चर्ष॑णे। ततः॑ पिबतमश्विना ॥१९॥ तेन॑ नो
वाजिनीवसू॒ पश्वे॑ तो॒काय॒ शं गवे॑। वह॑तं॒ पीव॑री॒रिषः॑ ॥२०॥४॥
उ॒त नो॑ दि॒व्या इष॑ उ॒त सिन्धूँ॑रहर्विदा। अप॒ द्वारे॑व वर्षथः
॥२१॥ क॒दा वां॑ तौ॒ग्र्यो वि॑धत्समु॒द्रे ज॑हि॒तो न॑रा। यद्वां॒
रथो॒ विभि॒ष्पता॑त् ॥२२॥ यु॒वं कण्वा॑य नासत्या॒पिरि॑प्ताय
ह॒र्म्ये। शश्व॑दू॒तीर्द॑शस्यथः ॥२३॥ ताभि॒रा या॑तमू॒तिभि॒र्न-
व्य॑सीभिः सुश॒स्तिभिः॑। यद्वां॑ वृषण्वसू हु॒वे ॥२४॥ यथा॑
चि॒त्कण्व॒माव॑तं प्रि॒यमे॑धमुपस्तु॒तं। अत्रिं॑ शि॒ञ्जार॑मश्विना
॥२५॥५॥ यथो॒त कृत्व्ये॒ धने॒ऽंशुं गोष्व॒गस्त्यं॑। यथा॒ वाजे॑षु॒
सोभ॑रिं ॥२६॥ ए॒ताव॑द्वां वृषण्वसू॒ अतो॑ वा॒ भूयो॑ अश्विना।
गृ॒णन्तः॑ सु॒म्नमी॑महे ॥२७॥ रथं॒ हिर॑ण्यवन्धुरं॒ हिर॑ण्याभीशुम-
श्विना। आ हि स्थाथो॑ दिवि॒स्पृशं॑ ॥२८॥ हि॒र॒ण्ययी॑ वां॒ रभि॒रीषा॒
अक्षो॑ हिर॒ण्ययः॑। उ॒भा च॒क्रा हि॑र॒ण्यया॑ ॥२९॥ तेन॑ नो वाजिनी-



Digitized by Google

आ नः गोऽमंतं अश्विना सुऽवीरं सुऽरथं रयिं वोळ्हं अश्वऽवतीः
इषः ॥१०॥२॥ ववृधाना शुभः पती दस्रा हिरण्यऽवर्तनी॰ पि-
बतं सोम्यं मधु ॥११॥ अस्मभ्यं वाजिनीऽवसू॰ मघवत्ऽभ्यः च
सऽप्रथः छर्दिः यंतं अदाभ्यं ॥१२॥ नि सु ब्रह्म जनानां या अविष्टं
तूयं आ गतं मो सु अन्यान् उप अरतं ॥१३॥ अस्य पिबतं अ-
श्विना युवं मदस्य चारुणः मध्वः रातस्य धिष्ण्या ॥१४॥ अस्मे
आ वहतं रयिं शतऽवंतं सहस्रिणं पुरुऽक्षुं विश्वऽधायसं ॥१५॥३॥
पुरुऽत्रा चित् हि वां नरा विऽह्वयंते मनीषिणः वाघत्ऽभिः अ-
श्विना आ गतं ॥१६॥ जनासः वृक्तऽबर्हिषः हविष्मंतः अरंऽकृतः
युवां हवंते अश्विना ॥१७॥ अस्माकं अद्य वां अयं स्तोमः वा-
हिष्ठः अंतमः युवाभ्यां भूतु अश्विना ॥१८॥ यः ह वां मधुनः दृतिः
आऽहितः रथऽचर्षणे ततः पिबतं अश्विना ॥१९॥ तेन नः वा-
जिनीऽवसू॰ पश्वे तोकाय शं गवे वहतं पीवरीः इषः ॥२०॥४॥
उत नः दिव्याः इषः उत सिंधून् अहः ऽविदा अप द्वाराऽइव व-
र्षथः ॥२१॥ कदा वां तौग्र्यः विधत् समुद्रे जहितः नरा यत् वां
रथः विऽभिः पतात् ॥२२॥ युवं कण्वाय नासत्या अपिऽरिप्ताय
हर्म्ये शश्वत् ऊतीः दशस्यथः ॥२३॥ ताभिः आ यातं ऊतिऽभिः
नव्यसीभिः सुशस्तिऽभिः यत् वां वृषण्ऽवसू॰ हुवे ॥२४॥ यथा
चित् कण्वं आवतं प्रियऽमेधं उपऽस्तुतं अत्रिं शिंजारं अश्विना
॥२५॥५॥ यथा उत कृत्व्ये धने अंशुं गोषु अगस्त्यं यथा वाजेषु
सोभरिं ॥२६॥ एतावत् वां वृषण्ऽवसू॰ अतः वा भूयः अश्विना
गृणंतः सुम्नं ईमहे ॥२७॥ रथं हिरण्यऽवंधुरं हिरण्यऽअभीशुं अ-
श्विना आ हि स्थाथः दिविऽस्पृशं ॥२८॥ हिरण्ययी वां रभिः ईषा
अक्षः हिरण्ययः उभा चक्रा हिरण्यया ॥२९॥ तेन नः वाजिनी-



Digitized by Google

वसू परावर्तश्चिदा गतं। उपेमां सुष्टुतिं मम॥३०॥६॥ आ वहेथे
पराकात्पूर्वीरश्नंतावश्विना। इषो दासीरमर्त्या॥३१॥ आ नो
द्युम्नैरा श्रवोभिरा राया यातमश्विना। पुरुश्चंद्रा नासत्या॥३२॥
एह वां प्रुषितप्सवो वयो वहंतु पर्णिनः। अच्छा स्वध्वरं जनं
॥३३॥ रथं वामनुगायसं य इषा वर्तते सह। न चक्रमभि बा-
धते॥३४॥ हिरण्ययेन रथेन द्रवत्पाणिभिरश्वैः। धीजवना ना-
सत्या॥३५॥७॥ युवं मृगं जागृवांसं स्वदथो वा वृषण्वसू। ता नः
पृंक्तमिषा रयिं॥३६॥ ता मे अश्विना सनीनां विद्यातं नवानां।
यथा चिच्चैद्यः कशुः शतमुष्ट्रानां ददत्सहस्रा दश गोनां॥३७॥
यो मे हिरण्यसंदृशो दश राज्ञो अमंहत। अधस्पदा इच्चैद्यस्य कृ-
ष्टयश्चर्मम्ना अभितो जनाः॥३८॥ माकिरेना पथा गाद्येनेमे यंति
चेदयः। अन्यो नेत्सूरिरोहते भूरिदावत्तरो जनः॥३९॥८॥१॥

---

॥ ६ ॥ १—४८ वत्सः काण्वः ॥ १—४५ इंद्रः । ४६—४८ तिरिंदिरस्य पारशव्यस्य दानस्तुतिः ॥ गायत्री ॥

॥६॥ महाँ इंद्रो य ओजसा पर्जन्यो वृष्टिमाँ इव। स्तोमैर्व-
त्सस्य वावृधे॥१॥ प्रजामृतस्य पिप्रतः प्र यद्भरंत वह्नयः।
विप्रा ऋतस्य वाहसा॥२॥ कण्वा इंद्रं यदक्रत स्तोमैर्यज्ञस्य सा-
धनं। जामि ब्रुवत आयुधं॥३॥ समस्य मन्यवे विशो विश्वा न-
मंत कृष्टयः। समुद्रायेव सिंधवः॥४॥ ओजस्तदस्य तित्विष उभे
यत्समवर्तयत्। इंद्रश्चर्मेव रोदसी॥५॥९॥ वि चिद्वृत्रस्य
दोधतो वज्रेण शतपर्वणा। शिरो बिभेद वृष्णिना॥६॥ इमा
अभि प्र णोनुमो विपामग्रेषु धीतयः। अग्नेः शोचिर्न दिद्युतः
॥७॥ गुहा सतीरुप त्मना प्र यच्छोचंत धीतयः। कण्वा ऋतस्य
धारया॥८॥ प्र तमिंद्र नशीमहि रयिं गोमंतमश्विनं। प्र ब्रह्म पूर्व-



Digitized by Google

ऽवसू पराऽवतः चित् आ गतं उप इमां सुऽस्तुतिं मम ॥ ३० ॥ ९ ॥
आ वहेथे पराकात् पूर्वीः अश्नंतौ अश्विना इषः दासीः अमर्त्या
॥ ३१ ॥ आ नः द्युम्नैः आ श्रवःऽभिः आ राया यातं अश्विना पुरु-
ऽचंद्रा नासत्या ॥ ३२ ॥ आ इह वां प्रुषितऽप्सवः वयः वहंतु प-
र्णिनः अच्छ सुऽअध्वरं जनं ॥ ३३ ॥ रथं वां अनुऽगायसं यः इषा
वर्तते सह न चक्रं अभि बाधते ॥ ३४ ॥ हिरण्ययेन रथेन द्रवत्पा-
णिऽभिः अश्वैः धीऽजवना नासत्या ॥ ३५ ॥ ७ ॥ युवं मृगं जागृ-
ऽवांसं स्वदथः वा वृषणऽवसू० ता नः पृंक्तं इषा रयिं ॥ ३६ ॥
ता मे अश्विना सनीनां विद्यातं नवानां यथा चित् चैद्यः कशुः
शतं उष्ट्रानां ददत् सहस्रा दश गोनां ॥ ३७ ॥ यः मे हिरण्यऽसंदृशः
दश राज्ञः अमंहत अधःऽपदाः इत् चैद्यस्य कृष्टयः चर्मऽम्नाः अ-
भितः जनाः ॥ ३८ ॥ माकिः एना पथा गात् येन इमे यंति चेदयः
अन्यः न इत् सूरिः ओहते भूरिदावत्ऽतरः जनः ॥ ३९ ॥ ८ ॥ १ ॥

---

॥ ६ ॥ महान् इंद्रः यः ओजसा पर्जन्यः वृष्टिमान्ऽइव स्तोमैः
वत्सस्य ववृधे ॥ १ ॥ प्रऽजां ऋतस्य पिप्रतः प्र यत् भरंत वह्नयः
विप्राः ऋतस्य वाहसा ॥ २ ॥ कण्वाः इंद्रं यत् अक्रत स्तोमैः यज्ञस्य
साधनं जामि ब्रुवते आयुधं ॥ ३ ॥ सं अस्य मन्यवे विशः विश्वाः न-
मंत कृष्टयः समुद्रायऽइव सिंधवः ॥ ४ ॥ ओजः तत् अस्य तित्विषे
उभे यत् संऽअवर्तयत् इंद्रः चर्मऽइव रोदसी ॥ ५ ॥ ९ ॥ वि चित् वृ-
त्रस्य दोधतः वज्रेण शतऽपर्वणा शिरः बिभेद वृष्णिना ॥ ६ ॥ इ-
माः अभि प्र नोनुमः विपां अग्रेषु धीतयः अग्नेः शोचिः न दिद्युतः
॥ ७ ॥ गुहा सतीः उप त्मना प्र यत् शोचंत धीतयः कण्वाः ऋतस्य
धारया ॥ ८ ॥ प्र तं इंद्र नशीमहि रयिं गोऽमंतं अश्विनं प्र ब्रह्म पूर्व-



Digitized by Google

चित्तये ॥ ९ ॥ अहमिद्धि पितुष्परि मेधामृतस्य जग्रभ । अहं सूर्यं इवाजनि ॥ १० ॥ १० ॥ अहं प्रत्नेन मन्मना गिरः शुंभामि कण्ववत् । येनेंद्रः शुष्ममिद्दधे ॥ ११ ॥ ये त्वामिंद्र न तुष्टुवुर्ऋषयो ये च तुष्टुवुः । ममेद्वर्धस्व सुष्टुतः ॥ १२ ॥ यदस्य मन्युरध्वनीद्वि वृत्रं पर्वशो रुजन् । अपः समुद्रमैरयत् ॥ १३ ॥ नि शुष्ण इंद्र धर्णसिं वज्रं जघंथ दस्यवि । वृषा ह्युग्र शृण्विषे ॥ १४ ॥ न द्याव इंद्रमोजसा नांतरिक्षाणि वज्रिणं । न विव्यचंत भूमयः ॥ १५ ॥ ११ ॥ यस्त इंद्र महीरपः स्तभूयमान आशयत् । नि तं पद्यासु शिश्नथः ॥ १६ ॥ य इमे रोदसी मही समीची समजग्रभीत् । तमोभिरिंद्र तं गुहः ॥ १७ ॥ य इंद्र यतयस्त्वा भृगवो ये च तुष्टुवुः । ममेदुग्र श्रुधी हवं ॥ १८ ॥ इमास्त इंद्र पृश्नयो घृतं दुहत आशिरं । एनामृतस्य पिप्युषीः ॥ १९ ॥ या इंद्र प्रस्वस्त्वासा गर्भमचक्रिरन् । परि धर्मेव सूर्यं ॥ २० ॥ १२ ॥ त्वामिच्छवसस्पते कण्वा उक्थेन वावृधुः । त्वां सुतास इंदवः ॥ २१ ॥ तवेदिंद्र प्रणीतिषूत प्रशस्तिरद्रिवः । यज्ञो वितंतसाय्यः ॥ २२ ॥ आ न इंद्र महीमिषं पुरं न दर्षि गोमतीं । उत प्रजां सुवीर्यं ॥ २३ ॥ उत त्यदाश्वश्व्यं यदिंद्र नाहुषीष्वा । अग्रे विक्षु प्रदीदयत् ॥ २४ ॥ अभि व्रजं न तत्निषे सूर उपाकचक्षसं । यदिंद्र मृळयासि नः ॥ २५ ॥ १३ ॥ यदंग तविषीयस इंद्र प्रराजसि क्षितीः । महाँ अपार ओजसा ॥ २६ ॥ तं त्वा हविष्मतीर्विश उप ब्रुवत ऊतये । उरुज्रयसमिंदुभिः ॥ २७ ॥ उपह्वरे गिरीणां संगथे च नदीनां । धिया विप्रो अजायत ॥ २८ ॥ अतः समुद्रमुद्वतश्चिकित्वाँ अव पश्यति । यतो विपान एजति ॥ २९ ॥ आदित्प्रत्नस्य रेतसो ज्योतिष्पश्यंति वासरं । परो



Digitized by Google

ऽचित्तये ॥ ९ ॥ अहं इत् हि पितुः परि मेधां ऋतस्य जग्रभ अहं
सूर्यःऽइव अजनि ॥ १० ॥ १० ॥ अहं प्रत्नेन मन्मना गिरः शुंभामि
कण्वऽवत् येन इंद्रः शुष्मं इत् दधे ॥ ११ ॥ ये त्वां इंद्र न तुस्तुवुः ऋ-
षयः ये च तुस्तुवुः मम इत् वर्धस्व सुऽस्तुतः ॥ १२ ॥ यत् अस्य म-
न्युः अध्वनीत् वि वृत्रं पर्वऽशः रुजन् अपः समुद्रं ऐरयत् ॥ १३ ॥
नि शुष्णे इंद्र धर्णसिं वज्रं जघंथ दस्यवि वृषा हि उग्र शृण्विषे
॥ १४ ॥ न द्यावः इंद्रं ओजसा न अंतरिक्षाणि वज्रिणं न विव्यचंत
भूमयः ॥ १५ ॥ ११ ॥ यः ते इंद्र महीः अपः स्तभुऽयमानः आ अशं-
यत् नि तं पद्यासु शिश्नथः ॥ १६ ॥ यः इमे रोदसी मही संऽईची
संऽअजग्रभीत् तमःऽभिः इंद्र तं गुहः ॥ १७ ॥ ये इंद्र यतयः त्वा भृ-
गवः ये च तुस्तुवुः मम इत् उग्र श्रुधि हवं ॥ १८ ॥ इमाः ते इंद्र पृश्नयः
घृतं दुहते आऽशिरं एनां ऋतस्य पिप्युषीः ॥ १९ ॥ याः इंद्र प्रऽस्वः
त्वा आसा गर्भं अचक्रिरन् परि धर्मऽइव सूर्यं ॥ २० ॥ १२ ॥ त्वां इत्
शवसः पते कण्वाः उक्थेन ववृधुः त्वां सुतासः इंदवः ॥ २१ ॥ तव
इत् इंद्र प्रऽनीतिषु उत प्रऽशस्तिः अद्रिऽवः यज्ञः वितंतसाय्यः
॥ २२ ॥ आ नः इंद्र महीं इषं पुरं न दर्षि गोऽमतीं उत प्रऽजां सु-
ऽवीर्यं ॥ २३ ॥ उत त्यत् आशुऽअश्व्यं यत् इंद्र नाहुषीषु आ अग्रे
विक्षु प्रऽदीदयत् ॥ २४ ॥ अभि व्रजं न तत्निषे सूरः उपाकऽचक्षसं
यत् इंद्र मृळयासि नः ॥ २५ ॥ १३ ॥ यत् अंग तविषीऽयसे इंद्र प्र-
ऽराजसि क्षितीः महान् अपारः ओजसा ॥ २६ ॥ तं त्वा हविष्मं-
तीः विशः उप ब्रुवते ऊतये उरुऽज्रयसं इंदुऽभिः ॥ २७ ॥ उप-
ऽह्वरे गिरीणां संऽगथे च नदीनां धिया विप्रः अजायत ॥ २८ ॥
अतः समुद्रं उत्ऽवतः चिकित्वान् अव पश्यति यतः विपानः
एजति ॥ २९ ॥ आत् इत् प्रत्नस्य रेतसः ज्योतिः पश्यंति वासरं परः



Digitized by Google

यद्दिध्यते दिवा ॥३०॥१४॥ कण्वास इंद्र ते मतिं विश्वे वर्धंति पौंस्यं। उतो शविष्ठ वृष्ण्यं ॥३१॥ इमां म इंद्र सुष्टुतिं जुषस्व प्र सु मामव। उत प्र वर्धया मतिं ॥३२॥ उत ब्रह्मण्या वयं तुभ्यं प्रवृद्ध वज्रिवः। विप्रा अतक्ष्म जीवसे ॥३३॥ अभि कण्वा अनूषतापो न प्रवता यतीः। इंद्रं वनन्वती मतिः ॥३४॥ इंद्रमुक्थानि वावृधुः समुद्रमिव सिंधवः। अनुत्तमन्युमजरं ॥३५॥१५॥ आ नो याहि परावतो हरिभ्यां हर्यताभ्यां। इममिंद्र सुतं पिब ॥३६॥ त्वामिद्वृत्रहंतम जनासो वृक्तबर्हिषः। हवंते वाजसातये ॥३७॥ अनु त्वा रोदसी उभे चक्रं न वर्त्येतशं। अनु सुवानास इंदवः ॥३८॥ मंदस्वा सु स्वर्णर उतेंद्र शर्यणावति। मत्स्वा विवस्वतो मती ॥३९॥ वावृधान उप द्यवि वृषा वज्र्यरोरवीत्। वृत्रहा सोमपातमः ॥४०॥१६॥ ऋषिर्हि पूर्वजा अस्येक ईशान ओजसा। इंद्र चोष्कूयसे वसु ॥४१॥ अस्माकं त्वा सुताँ उप वीतपृष्ठा अभि प्रयः। शतं वहंतु हरयः ॥४२॥ इमां सु पूर्व्यां धियं मधोर्घृतस्य पिप्युषीं। कण्वा उक्थेन वावृधुः ॥४३॥ इंद्रमिद्विमहीनां मेधे वृणीत मर्त्यः। इंद्रं सनिष्युरूतये ॥४४॥ अर्वांचं त्वा पुरुष्टुत प्रियमेधस्तुता हरी। सोमपेयाय वक्षतः ॥४५॥ शतमहं तिरिंदिरे सहस्रं पर्शावा ददे। राधांसि याद्वानां ॥४६॥ त्रीणि शतान्यर्वतां सहस्रा दश गोनां। ददुष्पज्राय साम्ने ॥४७॥ उदानट्ककुहो दिवमुष्ट्राञ्चतुर्युजो ददत्। श्रवसा याद्वं जनं ॥४८॥१७॥

---

॥ ७ ॥ १–३६ पुनर्वत्सः काण्वः ॥ मरुतः ॥ गायत्री ॥

॥७॥ प्र यद्वस्त्रिष्टुभमिषं मरुतो विप्रो अक्षरत्। वि पर्वतेषु राजथ ॥१॥ यदंग तविषीयवो यामं शुभ्रा अचिध्वं। नि पर्वे-



Digitized by Google

यत् इध्यते दिवा॥३०॥१४॥ कण्वासः इंद्र ते मतिं विश्वे वर्धंति पौं-
स्यं उतो शविष्ठ वृष्ण्यं॥३१॥ इमां मे इंद्र सुऽस्तुतिं जुषस्व प्र सु मां
अव उत प्र वर्धय मतिं॥३२॥ उत ब्रह्मण्या वयं तुभ्यं प्रऽवृद्ध व-
ज्रिऽवः विप्राः अतक्ष्म जीवसे॥३३॥ अभि कण्वाः अनूषत आ-
पः न प्रऽवता यतीः इंद्रं वनन्ऽवती मतिः॥३४॥ इंद्रं उक्थानि
ववृधुः समुद्रंऽइव सिंधवः अनुत्तऽमन्युं अजरं॥३५॥१५॥ आ नः
याहि पराऽवतः हरिऽभ्यां हर्यताभ्यां इमं इंद्र सुतं पिब॥३६॥
त्वां इत् वृत्रहन्ऽतम जनासः वृक्तऽबर्हिषः हवंते वाजऽसातये
॥३७॥ अनु त्वा रोदसी उभे चक्रं न वर्ति एतशं अनु सुवानासः
इंदवः॥३८॥ मंदस्व सु स्वःऽनरे उत इंद्र शर्यणाऽवति मत्स्व
विवस्वतः मती॥३९॥ ववृधानः उप द्यवि वृषा वज्री अरोरवीत्
वृत्रऽहा सोमऽपातमः॥४०॥१६॥ ऋषिः हि पूर्वऽजाः असि
एकः ईशानः ओजसा इंद्र चोष्कूयसे वसु॥४१॥ अस्माकं त्वा सु-
तान् उप वीतऽपृष्ठाः अभि प्रयः शतं वहंतु हरयः॥४२॥ इमां
सु पूर्व्यां धियं मधोः घृतस्य पिप्युषीं कण्वाः उक्थेन ववृधुः॥४३॥
इंद्रं इत् विऽमहीनां मेधे वृणीत मर्त्यः इंद्रं सनिष्युः ऊतये॥४४॥
अर्वांचं त्वा पुरुऽस्तुत प्रियमेधऽस्तुता हरी सोमऽपेयाय वक्षतः
॥४५॥ शतं अहं तिरिंदिरे सहस्रं पर्शौ आ ददे राधांसि याद्वानां
॥४६॥ त्रीणि शतानि अर्वतां सहस्रा दश गोनां ददुः पज्राय सा-
म्ने॥४७॥ उत् आनट् ककुहः दिवं उष्ट्रान् चतुःऽयुजः ददत् श्रव-
सा याद्वं जनं॥४८॥१७॥

---

॥७॥ प्र यत् वः त्रिऽस्तुभं इषं मरुतः विप्रः अक्षरत् वि पर्वतेषु
राजथ॥१॥ यत् अंग तविषीऽयवः यामं शुभ्राः अचिध्वं नि पर्व-



Digitized by Google

ता अहासत ॥ २ ॥ उदीरयंत वायुभिर्वाश्रासः पृश्निमातरः । धुक्षंत पिप्युषीमिषं ॥ ३ ॥ वपंति मरुतो मिहं प्र वेपयंति पर्वतान् । यद्यामं यांति वायुभिः ॥ ४ ॥ नि यद्यामाय वो गिरिर्नि सिंधवो विधर्मणे । महे शुष्माय येमिरे ॥ ५ ॥ १८ ॥ युष्मॉ उ नक्तमूतये युष्मान्दिवा हवामहे । युष्मान्प्रयत्यध्वरे ॥ ६ ॥ उदु त्ये अरुणप्सवश्चित्रा यामेभिरीरते । वाश्रा अधि ष्णुना दिवः ॥ ७ ॥ सृजंति रश्मिमोजसा पंथां सूर्याय यातवे । ते भानुभिर्वि तस्थिरे ॥ ८ ॥ इमां मे मरुतो गिरमिमं स्तोममृभुक्षणः । इमं मे वनता हवं ॥ ९ ॥ त्रीणि सरांसि पृश्नयो दुदुह्रे वज्रिणे मधु । उत्सं कवंधमुद्रिणं ॥ १० ॥ १९ ॥ मरुतो यद्ध वो दिवः सुम्नायंतो हवामहे । आ तू न उप गंतन ॥ ११ ॥ यूयं हि ष्ठा सुदानवो रुद्रा ऋभुक्षणो दमे । उत प्रचेतसो मदे ॥ १२ ॥ आ नो रयिं मदच्युतं पुरुक्षुं विश्वधायसं । इयर्ता मरुतो दिवः ॥ १३ ॥ अधीव यद्गिरीणां यामं शुभ्रा अचिध्वं । सुवानैर्मंदध्व इंदुभिः ॥ १४ ॥ एतावतश्चिदेषां सुम्नं भिक्षेत मर्त्यः । अदाभ्यस्य मन्मभिः ॥ १५ ॥ २० ॥ ये द्रप्सा इव रोदसी धमंत्यनु वृष्टिभिः । उत्सं दुहंतो अक्षितं ॥ १६ ॥ उदु स्वानेभिरीरत उद्रथैरुदु वायुभिः । उत्स्तोमैः पृश्निमातरः ॥ १७ ॥ येनाव तुर्वशं यदुं येन कण्वं धनस्पृतं । राये सु तस्य धीमहि ॥ १८ ॥ इमा उ वः सुदानवो घृतं न पिप्युषीरिषः । वर्धान्काण्वस्य मन्मभिः ॥ १९ ॥ क्व नूनं सुदानवो मदथा वृक्तबर्हिषः । ब्रह्मा को वः सपर्यति ॥ २० ॥ २१ ॥ नहि ष्म यद्ध वः पुरा स्तोमेभिर्वृक्तबर्हिषः । शर्धाँ ऋतस्य जिन्वथ ॥ २१ ॥ समु त्ये महतीरपः सं क्षोणी समु सूर्यं । सं वज्रं पर्वशो दधुः ॥ २२ ॥ वि वृत्रं पर्वशो ययुर्वि पर्व-



Digitized by Google

ताः अहासत ॥ २ ॥ उत् ईरयंत वायुऽभिः वाश्रासः पृश्निऽमातरः
धुक्षंत पिप्युषीं इषं ॥ ३ ॥ वपंति मरुतः मिहं प्र वेपयंति पर्वतान्
यत् यामं यांति वायुऽभिः ॥ ४ ॥ नि यत् यामाय वः गिरिः नि
सिंधवः विऽधर्मणे महे शुष्माय येमिरे ॥ ५ ॥ १८ ॥ युष्मान् ऊं
नक्तं ऊतये युष्मान् दिवा हवामहे युष्मान् प्रऽयति अध्वरे ॥ ६ ॥
उत् ऊं त्ये अरुणऽप्सवः चित्राः यामेभिः ईरते वाश्राः अधि
स्नुना दिवः ॥ ७ ॥ सृजंति रश्मिं ओजसा पंथां सूर्याय यातवे ते
भानुऽभिः वि तस्थिरे ॥ ८ ॥ इमां मे मरुतः गिरं इमं स्तोमं ऋभु-
क्षणः इमं मे वनत हवं ॥ ९ ॥ त्रीणि सरांसि पृश्नयः दुदुह्रे वज्रिणे
मधु उत्सं कवंधं उद्रिणं ॥ १० ॥ १९ ॥ मरुतः यत् ह वः दिवः सुम्न-
ऽयंतः हवामहे आ तु नः उप गंतन ॥ ११ ॥ यूयं हि स्थ सुऽदानवः
रुद्राः ऋभुक्षणः दमे उत प्रऽचेतसः मदे ॥ १२ ॥ आ नः रयिं मद-
ऽच्युतं पुरुऽक्षुं विश्वऽधायसं इयर्त मरुतः दिवः ॥ १३ ॥ अधिऽइव
यत् गिरीणां यामं शुभ्राः अचिध्वं सुवानैः मंदध्वे इंदुऽभिः ॥ १४ ॥
एतावंतः चित् एषां सुम्नं भिक्षेत मर्त्यः अदाभ्यस्य मन्मऽभिः
॥ १५ ॥ २० ॥ ये द्रप्साःऽइव रोदसी धमंति अनु वृष्टिऽभिः उत्सं
दुहंतः अक्षितं ॥ १६ ॥ उत् ऊं स्वानेभिः ईरते उत् रथैः उत् ऊं वा-
युऽभिः उत् स्तोमैः पृश्निऽमातरः ॥ १७ ॥ येन आव तुर्वशं यदुं
येन कण्वं धनऽस्पृतं राये सु तस्य धीमहि ॥ १८ ॥ इमाः ऊं वः सु-
ऽदानवः घृतं न पिप्युषीः इषः वर्धान् काण्वस्य मन्मऽभिः ॥ १९ ॥
क्व नूनं सुऽदानवः मदथ वृक्तऽबर्हिषः ब्रह्मा कः वः सपर्यति
॥ २० ॥ २१ ॥ नहि स्म यत् ह वः पुरा स्तोमेभिः वृक्तऽबर्हिषः शर्धान्
ऋतस्य जिन्वथ ॥ २१ ॥ सं ऊं त्ये महतीः अपः सं क्षोणी सं ऊं
सूर्यं सं वज्रं पर्वऽशः दधुः ॥ २२ ॥ वि वृत्रं पर्वऽशः ययुः वि पर्व-



Digitized by Google

ताँ अराजिनः। चक्राणा वृष्णि पौंस्यं ॥२३॥ अनु चितस्य युध्यतः शुष्ममावन्नुत क्रतुं। अन्विंद्रं वृत्रतूर्ये ॥२४॥ विद्युद्धस्ता अभिद्यवः शिप्राः शीर्षन्हिरण्ययीः। शुभ्रा व्यंजत श्रिये॥२५॥२२॥ उशना यत्परावत उक्ष्णो रंध्रमयातन। द्यौर्न चक्रदद्भिया॥२६॥ आ नो मखस्य दावनेऽश्वैर्हिरण्यपाणिभिः। देवास उप गंतन ॥२७॥ यदेषां पृषती रथे प्रष्टिर्वहति रोहितः। यांति शुभ्रा रिणन्नपः ॥२८॥ सुषोमे शर्यणावत्यार्जीके पस्त्यावति। ययुर्निचक्रया नरः ॥२९॥ कदा गच्छाथ मरुत इत्था विप्रं हवमानं। मार्डीकेभिर्नाधमानं ॥३०॥२३॥ कद्ध नूनं कधप्रियो यदिंद्रमजहातन। को वः सखित्व ओहते ॥३१॥ सहो षु णो वज्रहस्तैः कण्वासो अग्निं मरुद्भिः। स्तुषे हिरण्यवाशीभिः ॥३२॥ ओ षु वृष्णः प्रयज्यूना नव्यसे सुविताय। ववृत्यां चित्रवाजान् ॥३३॥ गिरयश्चिन्नि जिहते पर्शानासो मन्यमानाः। पर्वताश्चिन्नि येमिरे ॥३४॥ आक्ष्णयावानो वहंत्यंतरिक्षेण पततः। धातारः स्तुवते वयः ॥३५॥ अग्निर्हि जानि पूर्व्यश्छंदो न सूरो अर्चिषा। ते भानुभिर्वि तस्थिरे ॥३६॥२४॥

---

॥ ८ ॥ १–२३ सध्वंसः काण्वः ॥ अश्विनौ ॥ अनुष्टुप् ॥

॥ ८ ॥ आ नो विश्वाभिरूतिभिरश्विना गच्छतं युवं। दस्रा हिरण्यवर्तनी पिबतं सोम्यं मधु ॥१॥ आ नूनं यातमश्विना रथेन सूर्यत्वचा। भुजी हिरण्यपेशसा कवी गंभीरचेतसा ॥२॥ आ यातं नहुषस्पर्यांतरिक्षात्सुवृक्तिभिः। पिबाथो अश्विना मधु कण्वानां सवने सुतं ॥३॥ आ नो यातं दिवस्पर्यांतरिक्षादधप्रिया। पुत्रः कण्वस्य वामिह सुषाव सोम्यं



Digitized by Google

तान् अराजिनः चक्राणाः वृष्णि पौंस्यं ॥२३॥ अनु त्रितस्य युध्यतः शुष्मं आवन् उत क्रतुं अनु इंद्रं वृत्रऽतूर्ये ॥२४॥ विद्युत्ऽहस्ताः अभिऽद्यवः शिप्राः शीर्षन् हिरण्ययीः शुभ्राः वि अंजत श्रिये ॥२५॥२२॥ उशना यत् पराऽवतः उक्ष्णः रंध्रं अयातन द्यौः न चक्रदत् भिया ॥२६॥ आ नः मखस्य दावने अश्वैः हिरण्यपाणिऽभिः देवासः उप गंतन ॥२७॥ यत् एषां पृषतीः रथे प्रष्टिः वहति रोहितः यांति शुभ्राः रिणन् अपः ॥२८॥ सुऽसोमे शर्यणाऽवति आर्जीके पस्त्यऽवति ययुः निऽचक्रया नरः ॥२९॥ कदा गच्छाथ मरुतः इत्था विप्रं हवमानं मार्डीकेभिः नाधमानं ॥३०॥२३॥ कत् ह नूनं कधऽप्रियः यत् इंद्रं अजहातन कः वः सखिऽत्वे ओहते ॥३१॥ सहो इति सु नः वज्रऽहस्तैः कण्वासः अग्निं मरुत्ऽभिः स्तुषे हिरण्यऽवाशीभिः ॥३२॥ ओ इति सु वृष्णः प्रऽयज्यून् आ नव्यसे सुविताय ववृत्यां चित्रऽवाजान् ॥३३॥ गिरयः चित् नि जिहते पर्शानासः मन्यमानाः पर्वताः चित् नि येमिरे ॥३४॥ आ अक्ष्णऽयावानः वहंति अंतरिक्षेण पततः धातारः स्तुवते वयः ॥३५॥ अग्निः हि जनि पूर्व्यः छंदः न सूरः अर्चिषा ते भानुऽभिः वि तस्थिरे ॥३६॥२४॥

---

॥८॥ आ नः विश्वाभिः ऊतिऽभिः अश्विना गच्छतं युवं दस्रा हिरण्यऽवर्तनी॰ पिबतं सोम्यं मधु ॥१॥ आ नूनं यातं अश्विना रथेन सूर्यऽत्वचा भुजी इति हिरण्यऽपेशसा कवी इति गंभीरऽचेतसा ॥२॥ आ यातं नहुषः परि आ अंतरिक्षात् सुवृक्तिऽभिः पिबाथः अश्विना मधु कण्वानां सवने सुतं ॥३॥ आ नः यातं दिवः परि आ अंतरिक्षात् अधऽप्रिया पुत्रः कण्वस्य वां इह सुसाव सोम्यं

मधु ॥४॥ आ नो यातमुपश्रुत्यश्विना सोमपीतये । स्वाहा स्तोमस्य वर्धना प्र कवी धीतिभिर्नरा ॥५॥२५॥ यच्चिद्धि वां पुर ऋषयो जुहूरेऽवसे नरा । आ यातमश्विना गतमुपेमां सुष्टुतिं मम ॥६॥ दिवश्चिद्रोचनादध्या नो गन्तं स्वर्विदा । धीभिर्वत्सप्रचेतसा स्तोमेभिर्हवनश्रुता ॥७॥ किमन्ये पर्यासतेऽस्मत्स्तोमेभिरश्विना । पुत्रः कण्वस्य वामृषिर्गीर्भिर्वत्सो अवीवृधत् ॥८॥ आ वां विप्र इहावसेऽह्वत्स्तोमेभिरश्विना । अरिप्रा वृत्रहन्तमा ता नो भूतं मयोभुवा ॥९॥ आ यद्वां योषणा रथमतिष्ठद्वाजिनीवसू । विश्वान्यश्विना युवं प्र धीतान्यगच्छतं ॥१०॥२६॥ अतः सहस्रनिर्णिजा रथेना यातमश्विना । वत्सो वां मधुमद्वचोऽशंसीत्काव्यः कविः ॥११॥ पुरुमन्द्रा पुरूवसू मनोतरा रयीणां । स्तोमं मे अश्विनाविममभि वह्नी अनूषातां ॥१२॥ आ नो विश्वान्यश्विना धत्तं राधांस्यह्रया । कृतं न ऋत्वियावतो मा नो रीरधतं निदे ॥१३॥ यन्नासत्या परावति यद्वा स्थो अध्यम्बरे । अतः सहस्रनिर्णिजा रथेना यातमश्विना ॥१४॥ यो वां नासत्यावृषिर्गीर्भिर्वत्सो अवीवृधत् । तस्मै सहस्रनिर्णिजमिषं धत्तं घृतश्चुतं ॥१५॥२७॥ प्रास्मा ऊर्जं घृतश्चुतमश्विना यच्छतं युवं । यो वां सुम्नाय तुष्टवद्वसूयाद्दानुनस्पती ॥१६॥ आ नो गन्तं रिशादसेमं स्तोमं पुरुभुजा । कृतं नः सुश्रियो नरेमा दातमभिष्टये ॥१७॥ आ वां विश्वाभिरूतिभिः प्रियमेधा अहूषत । राजन्तावध्वराणामश्विना यामहूतिषु ॥१८॥ आ नो गन्तं मयोभुवाश्विना शम्भुवा युवं । यो वां विपन्यू धीतिभिर्गीर्भिर्वत्सो अवीवृधत् ॥१९॥ याभिः



Digitized by Google

मधु ॥४॥ आ नः यातं उपऽश्रुति अश्विना सोमऽपीतये स्वाहा
स्तोमस्य वर्धना प्र कवी धीतिऽभिः नरा ॥५॥२५॥ यत् चित् हि
वां पुरा ऋषयः जुहूरे अवसे नरा आ यातं अश्विना आ गतं उप
इमां सुऽस्तुतिं मम ॥६॥ दिवः चित् रोचनात् अधि आ नः गंतं
स्वःऽविदा धीभिः वत्सऽप्रचेतसा स्तोमेभिः हवनऽश्रुता ॥७॥
किं अन्ये परि आसते अस्मत् स्तोमेभिः अश्विना पुत्रः कण्वस्य वां
ऋषिः गीःऽभिः वत्सः अवीवृधत् ॥८॥ आ वां विप्रः इह अवसे
अह्वत् स्तोमेभिः अश्विना अरिप्रा वृत्रहन्ऽतमा ता नः भूतं म-
यःऽभुवा ॥९॥ आ यत् वां योषणा रथं अतिष्ठत् वाजिनीऽवसू॰
विश्वानि अश्विना युवं प्र धीतानि अगच्छतं ॥१०॥२६॥ अतः
सहस्रऽनिर्निजा रथेन आ यातं अश्विना वत्सः वां मधुऽमत् व-
चः अशंसीत् काव्यः कविः ॥११॥ पुरुऽमंद्रा पुरुऽवसू॰ मनोतरा
रयीणां स्तोमं मे अश्विनौ इमं अभि वह्नी अनूषातां ॥१२॥ आ
नः विश्वानि अश्विना धत्तं राधांसि अह्रया कृतं नः ऋत्वियऽवतः
मा नः रीरधतं निदे ॥१३॥ यत् नासत्या पराऽवति यत् वा स्थः
अधि अंबरे अतः सहस्रऽनिर्निजा रथेन आ यातं अश्विना ॥१४॥
यः वां नासत्यौ ऋषिः गीःऽभिः वत्सः अवीवृधत् तस्मै सहस्र-
ऽनिर्निजं इषं धत्तं घृतऽश्चुतं ॥१५॥२७॥ प्र अस्मै ऊर्जं घृतऽश्चुतं
अश्विना यच्छतं युवं यः वां सुम्नाय तुष्टवत् वसुऽयात् दानुनः
पती ॥१६॥ आ नः गंतं रिशादसा इमं स्तोमं पुरुऽभुजा कृतं नः
सुऽश्रियः नरा इमा दातं अभिष्टये ॥१७॥ आ वां विश्वाभिः ऊ-
तिऽभिः प्रियऽमेधाः अहूषत राजंता अध्वराणां अश्विना याम-
ऽहूतिषु ॥१८॥ आ नः गंतं मयःऽभुवा अश्विना शंऽभुवा युवं यः
वां विपन्यू धीतिऽभिः गीःऽभिः वत्सः अवीवृधत् ॥१९॥ याभिः



Digitized by Google

कण्वं मेधातिथिं याभिर्वशं दशव्रजं। याभिर्गोशर्यमावतं ताभि-
र्नोऽवतं नरा ॥२०॥२८॥ याभिर्नरा त्रसदस्युमावतं कृत्व्ये धने।
ताभिः ष्व१स्माँ अश्विना प्रावतं वाजसातये ॥२१॥ प्र वां स्तो-
माः सुवृक्तयो गिरो वर्धंत्वश्विना। पुरुत्रा वृत्रहंतमा ता नो भूतं
पुरुस्पृहा ॥२२॥ त्रीणि पदान्यश्विनोराविः सांति गुहा परः।
कवी ऋतस्य पत्मभिरर्वाग्जीवेभ्यस्परि ॥२३॥२९॥

---

॥९॥ १–२१ शशकर्णः काण्वः ॥ अश्विनौ ॥ १. ४. ६. १४. १५ बृहती। २. ३. २०. २१ गायत्री।
५ ककुप्। ७–९. १३. १६–१९ अनुष्टुप्। १० त्रिष्टुप्। ११ विराट्। १२ जगती ॥

॥९॥ आ नूनमश्विना युवं वत्सस्य गंतमवसे। प्रास्मै यच्छ-
तमवृकं पृथु छर्दिर्युयुतं या अरातयः ॥१॥ यदंतरिक्षे यद्दिवि
यत्पंच मानुषाँ अनु। नृम्णं तद्धत्तमश्विना ॥२॥ ये वां दंसांस्य-
श्विना विप्रासः परिमामृशुः। एवेत्काण्वस्य बोधतं ॥३॥ अयं
वां घर्मो अश्विना स्तोमेन परि षिच्यते। अयं सोमो मधुमान्वा-
जिनीवसू येन वृत्रं चिकेतथः ॥४॥ यदप्सु यद्वनस्पतौ यदोषधीषु
पुरुदंससा कृतं। तेन माविष्टमश्विना ॥५॥३०॥ यन्नासत्या भुर-
ण्यथो यद्वा देव भिषज्यथः। अयं वां वत्सो मतिभिर्न विंधते
हविष्मंतं हि गच्छथः ॥६॥ आ नूनमश्विनोर्ऋषिः स्तोमं
चिकेत वामया। आ सोमं मधुमत्तमं घर्मं सिंचादथर्वणि
॥७॥ आ नूनं रघुवर्तनिं रथं तिष्ठाथो अश्विना। आ वां
स्तोमा इमे मम नभो न चुच्यवीरत ॥८॥ यदद्य वां ना-
सत्योक्थैराचुच्युवीमहि। यद्वा वाणीभिरश्विनेवेत्काण्वस्य
बोधतं ॥९॥ यद्वां कक्षीवाँ उत यद्व्यश्व ऋषिर्यद्वां दीर्घतमा
जुहाव। पृथी यद्वां वैन्यः सादनेष्वेवेदतो अश्विना चेत-



Digitized by Google

कण्वं मेधऽअतिथिं याभिः वशं दशऽव्रजं याभिः गोऽशर्यं आवतं ताभिः नः अवतं नरा ॥२०॥२८॥ याभिः नरा त्रसदस्युं आवतं कृत्व्ये धने ताभिः सु अस्मान् अश्विना प्र अवतं वाजऽसातये ॥२१॥ प्र वां स्तोमाः सुऽवृक्तयः गिरः वर्धंतु अश्विना पुरुऽत्रा वृत्रहन्ऽतमा ता नः भूतं पुरुऽस्पृहा ॥२२॥ त्रीणि पदानि अश्विनोः आविः संति गुहा परः कवी ऋतस्य पत्मऽभिः अर्वाक् जीवेभ्यः परि ॥२३॥२९॥

---

॥९॥ आ नूनं अश्विना युवं वत्सस्य गंतं अवसे प्र अस्मै यच्छतं अवृकं पृथु छर्दिः युयुतं याः अरातयः ॥१॥ यत् अंतरिक्षे यत् दिवि यत् पंच मानुषान् अनु नृम्णं तत् धत्तं अश्विना ॥२॥ ये वां दंसांसि अश्विना विप्रासः परिऽममृशुः एव इत् काण्वस्य बोधतं ॥३॥ अयं वां घर्मः अश्विना स्तोमेन परि सिच्यते अयं सोमः मधुऽमान् वाजिनीऽवसू॰ येन वृत्रं चिकेतथः ॥४॥ यत् अप्ऽसु यत् वनस्पतौ यत् ओषधीषु पुरुऽदंससा कृतं तेन मा अविष्टं अश्विना ॥५॥३०॥ यत् नासत्या भुरण्यथः यत् वा देवा भिषज्यथः अयं वां वत्सः मतिऽभिः न विंधते हविष्मंतं हि गच्छथः ॥६॥ आ नूनं अश्विनोः ऋषिः स्तोमं चिकेत वामया आ सोमं मधुमत्ऽतमं घर्मं सिंचात् अथर्वणि ॥७॥ आ नूनं रघुऽवर्तनिं रथं तिष्ठाथः अश्विना आ वां स्तोमाः इमे मम नभः न चुच्यवीरत ॥८॥ यत् अद्य वां नासत्या उक्थैः आऽचुच्युवीमहि यत् वा वाणीभिः अश्विना एव इत् काण्वस्य बोधतं ॥९॥ यत् वां कक्षीवान् उत यत् विऽअश्वः ऋषिः यत् वां दीर्घऽतमाः जुहाव पृथी यत् वां वैन्यः सदनेषु एव इत् अतः अश्विना चेत-



Digitized by Google

येथां ॥१०॥३१॥ यातं छर्दिष्पा उत नः परस्पा भूतं जगत्पा उत
नस्तनूपा। वर्तिस्तोकाय तनयाय यातं ॥११॥ यदिंद्रेण सरथं
याथो अश्विना यद्वा वायुना भवथः समोकसा। यदादित्येभि-
र्ऋभुभिः सजोषसा यद्वा विष्णोर्विक्रमणेषु तिष्ठथः ॥१२॥ यद-
द्याश्विनावहं हुवेय वाजसातये। यत्पृत्सु तुर्वणे सहस्तच्छ्रेष्ठम-
श्विनोरवः ॥१३॥ आ नूनं यातमश्विनेमा हव्यानि वां हिता।
इमे सोमासो अधि तुर्वशे यदाविमे कण्वेषु वामथ ॥१४॥ यन्ना-
सत्या पराके अर्वाके अस्ति भेषजं। तेन नूनं विमदाय प्रचेतसा
छर्दिर्वत्साय यच्छतं ॥१५॥३२॥ अभुत्स्यु प्र देव्या साकं वाचाहम-
श्विनोः। व्यावर्देव्या मतिं वि रातिं मर्त्येभ्यः ॥१६॥ प्र बोधयोषो
अश्विना प्र देवि सूनृते महि। प्र यज्ञहोतरानुषक्प्र मदाय श्रवो
बृहत् ॥१७॥ यदुषो यासि भानुना सं सूर्येण रोचसे। आ हायम-
श्विनो रथो वर्तिर्याति नृपाय्यं ॥१८॥ यदापीतासो अंशवो
गावो न दुह्र ऊधभिः। यद्वा वाणीरनूषत प्र देवयंतो अश्विना
॥१९॥ प्र द्युम्नाय प्र शवसे प्र नृषाह्याय शर्मणे। प्र दक्षाय प्रचे-
तसा ॥२०॥ यन्नूनं धीभिरश्विना पितुर्योना निषीदथः। यद्वा
सुम्नेभिरुक्थ्या ॥२१॥३३॥

---

॥१०॥ १—६ प्रगाथः काण्वः ॥ अश्विनौ ॥ १.५ बृहती । २ मध्येज्योतिः ।
३ अनुष्टुप् । ४ आस्तारपंक्तिः । ६ सतोबृहती ॥

॥१०॥ यत्स्थो दीर्घप्रसद्मनि यद्वादो रोचने दिवः। यद्वा
समुद्रे अध्याकृते गृहेऽत आ यातमश्विना ॥१॥ यद्वा यज्ञं
मनवे संमिमिक्षथुरेवेत्काण्वस्य बोधतं। बृहस्पतिं वि-
श्वान्देवाँ अहं हुव इंद्राविष्णू अश्विनावाशुहेषसा ॥२॥ त्या
न्व१श्विना हुवे सुदंससा गृभे कृता। ययोरस्ति प्र णः सख्यं



Digitized by Google

मेषजं ॥ १० ॥ ३१ ॥ यातं छर्दिःऽपौ उत नः परःऽपा भूतं जगत्ऽपौ उत नः तनूऽपा वर्तिः तोकाय तनयाय यातं ॥ ११ ॥ यत् इंद्रेण सऽरथं याथः अश्विना यत् वा वायुना भवथः संऽओकसा यत् आदित्येभिः ऋभुऽभिः सऽजोषसा यत् वा विष्णोः विऽक्रमणेषु तिष्ठथः ॥ १२ ॥ यत् अद्य अश्विनौ अहं हुवेयं वाजऽसातये यत् पृत्ऽसु तुर्वणे सहः तत् श्रेष्ठं अश्विनोः अवः ॥ १३ ॥ आ नूनं यातं अश्विना इमा हव्यानि वां हिता इमे सोमासः अधि तुर्वशे यदौ इमे कण्वेषु वां अथ ॥ १४ ॥ यत् नासत्या पराके अर्वाके अस्ति भेषजं तेन नूनं विऽमदाय प्रऽचेतसा छर्दिः वत्साय यच्छतं ॥ १५ ॥ ३२ ॥ अभुत्सि ऊं प्र देव्या साकं वाचा अहं अश्विनोः वि आवः देवि आ मतिं वि रातिं मर्त्येभ्यः ॥ १६ ॥ प्र बोधय उषः अश्विना प्र देवि सूनृते महि प्र यज्ञऽहोतः आनुषक् प्र मदाय श्रवः बृहत् ॥ १७ ॥ यत् उषः यासि भानुना सं सूर्येण रोचसे आ ह अयं अश्विनोः रथः वर्तिः याति नृऽपाय्यं ॥ १८ ॥ यत् आऽपीतासः अंशवः गावः न दुह्रे ऊधऽभिः यत् वा वाणीः अनूषत प्र देवऽयंतः अश्विना ॥ १९ ॥ प्र द्युम्नाय प्र शवसे प्र नृऽसह्याय शर्मणे प्र दक्षाय प्रऽचेतसा ॥ २० ॥ यत् नूनं धीभिः अश्विना पितुः योना निऽसीदथः यत् वा सुम्नेभिः उक्थ्या ॥ २१ ॥ ३३ ॥

---

॥ १० ॥ यत् स्थः दीर्घऽप्रसद्मनि यत् वा अदः रोचने दिवः यत् वा समुद्रे अधि आऽकृते गृहे अतः आ यातं अश्विना ॥ १ ॥ यत् वा यज्ञं मनवे संऽमिमिक्षथुः एव इत् काण्वस्य बोधतं बृहस्पतिं विश्वान् देवान् अहं हुवे इंद्राविष्णू अश्विनौ आशुऽहेषसा ॥ २ ॥ त्या नु अश्विना हुवे सुऽदंससा गृभे कृता ययोः अस्ति प्र नः सख्यं



Digitized by Google

देवेष्वध्याप्यं ॥३॥ ययोरधि प्र यज्ञा असूरे संति सूरयः। ता यज्ञस्याध्वरस्य प्रचेतसा स्वधाभिर्या पिबतः सोम्यं मधु ॥४॥ यदद्याश्विनावपाग्यत्प्राक्स्थो वाजिनीवसू। यद्द्रुह्यव्यनवि तुर्वशे यदौ हुवे वामथ मा गतं ॥५॥ यदंतरिक्षे पतथः पुरुभुजा यद्वेमे रोदसी अनु। यद्वा स्वधाभिरधितिष्ठथो रथमत आ यातमश्विना ॥६॥३४॥

---

॥११॥ १–१० वत्सः काण्वः ॥ अग्निः ॥ १ प्रतिष्ठा। २ वर्धमाना। ३–९ गायत्री। १० त्रिष्टुप् ॥

॥११॥ त्वमग्ने व्रतपा असि देव आ मर्त्येष्वा। त्वं यज्ञेष्वीड्यः ॥१॥ त्वमसि प्रशस्यो विदथेषु सहंत्य। अग्ने रथीरध्वराणां ॥२॥ स त्वमस्मदप द्विषो युयोधि जातवेदः। अदेवीरग्ने अरातीः ॥३॥ अंति चित्संतमह यज्ञं मर्तस्य रिपोः। नोप वेषि जातवेदः ॥४॥ मर्ता अमर्त्यस्य ते भूरि नाम मनामहे। विप्रासो जातवेदसः ॥५॥३५॥ विप्रं विप्रासोऽवसे देवं मर्तास ऊतये। अग्निं गीर्भिर्हवामहे ॥६॥ आ ते वत्सो मनो यमत्परमाच्चित्सधस्थात्। अग्ने त्वांकामया गिरा ॥७॥ पुरुत्रा हि सदृङ्ङसि विशो विश्वा अनु प्रभुः। समत्सु त्वा हवामहे ॥८॥ समत्स्वग्निमवसे वाजयंतो हवामहे। वाजेषु चित्रराधसं ॥९॥ प्रत्नो हि कमीड्यो अध्वरेषु सनाच्च होता नव्यश्च सत्सि। स्वां चाग्ने तन्वं पिप्रयस्वास्मभ्यं च सौभगमा यजस्व ॥१०॥३६॥८॥५॥

---

॥१२॥ १–३३ पर्वतः काण्वः ॥ इंद्रः ॥ उष्णिक् ॥

॥१२॥ य इंद्र सोमपातमो मदः शविष्ठ चेतति। येना हंसि न्यत्रिणं तमीमहे ॥१॥ येना दशग्वमध्रिगुं वेपयंतं स्वर्णरं। येना समुद्रमाविथा तमीमहे ॥२॥ येन सिंधुं महीरपो रथाँ इव



Digitized by Google

देवेषु अधि आर्यं ॥३॥ ययोः अधि प्र यज्ञाः असूरे संति सूरयः ता यज्ञस्य अध्वरस्य प्रऽचेतसा स्वधाभिः या पिबतः सोम्यं मधु ॥४॥ यत् अद्य अश्विनौ अपाक् यत् प्राक् स्थः वाजिनीऽवसू० यत् द्रुह्यवि अनवि तुर्वशे यदौ हुवे वां अथ मा आ गतं ॥५॥ यत् अंतरिक्षे पतथः पुरुऽभुजा यत् वा इमे रोदसी अनु यत् वा स्वधाभिः अधिऽतिष्ठथः रथं अतः आ यातं अश्विना ॥६॥३४॥

---

॥११॥ त्वं अग्ने व्रतऽपाः असि देवः आ मर्त्येषु आ त्वं यज्ञेषु ईड्यः ॥१॥ त्वं असि प्रऽशस्यः विदथेषु सहंत्य अग्ने रथीः अध्वराणां ॥२॥ सः त्वं अस्मत् अप द्विषः युयोधि जातऽवेदः अदेवीः अग्ने अरातीः ॥३॥ अंति चित् संतं अह यज्ञं मर्तस्य रिपोः न उप वेषि जातऽवेदः ॥४॥ मर्ताः अमर्त्यस्य ते भूरि नाम मनामहे विप्रासः जातऽवेदसः ॥५॥३५॥ विप्रं विप्रासः अवसे देवं मर्तासः ऊतये अग्निं गीःऽभिः हवामहे ॥६॥ आ ते वत्सः मनः यमत् परमात् चित् सधऽस्थात् अग्ने त्वांऽकामया गिरा ॥७॥ पुरुऽत्रा हि सऽदृङ् असि विशः विश्वाः अनु प्रऽभुः समत्ऽसु त्वा हवामहे ॥८॥ समत्ऽसु अग्निं अवसे वाजऽयंतः हवामहे वाजेषु चित्रऽराधसं ॥९॥ प्रत्नः हि कं ईड्यः अध्वरेषु सनात् च होता नव्यः च सत्सि स्वां च अग्ने तन्वं पिप्रयस्व अस्मभ्यं च सौभगं आ यजस्व ॥१०॥३६॥८॥५॥

---

॥१२॥ यः इंद्र सोमऽपातमः मदः शविष्ठ चेतति येन हंसि नि अत्रिणं तं ईमहे ॥१॥ येन दशऽग्वं अध्रिऽगुं वेपयंतं स्वःऽनरं येन समुद्रं आविथ तं ईमहे ॥२॥ येन सिंधुं महीः अपः रथान्ऽइव



Digitized by Google

प्रचोदयः। पंथामृतस्य यातवे तमीमहे॥३॥ इमं स्तोममभिष्टये
घृतं न पूतमद्रिवः। येना नु सद्य ओजसा ववक्षिथ॥४॥ इमं
जुषस्व गिर्वणः समुद्र इव पिन्वते। इंद्र विश्वाभिरूतिभिर्ववक्षिथ॥५॥१॥
यो नो देवः परावतः सखित्वनाय मामहे। दिवो
न वृष्टिं प्रथयन्ववक्षिथ॥६॥ ववक्षुरस्य केतव उत वज्रो
गभस्त्योः। यत्सूर्यो न रोदसी अवर्धयत्॥७॥ यदि प्रवृद्ध सत्पते
सहस्रं महिषाँ अघः। आदित्त इंद्रियं महि प्र वावृधे॥८॥
इंद्रः सूर्यस्य रश्मिभिर्न्यर्शसानमोषति। अग्निर्वनेव सासहिः
प्र वावृधे॥९॥ इयं त ऋत्वियावती धीतिरेति नवीयसी।
सपर्यंती पुरुप्रिया मिमीत इत्॥१०॥२॥ गर्भो यज्ञस्य देवयुः
क्रतुं पुनीत आनुषक्। स्तोमैरिंद्रस्य वावृधे मिमीत इत्॥११॥
सनिर्मित्रस्य पप्रथ इंद्रः सोमस्य पीतये। प्राची वाशीव सुन्वते
मिमीत इत्॥१२॥ यं विप्रा उक्थवाहसोऽभिप्रमंदुरायवः।
घृतं न पिप्य आसन्यृतस्य यत्॥१३॥ उत स्वराजे अदितिः
स्तोममिंद्राय जीजनत्। पुरुप्रशस्तमूतय ऋतस्य यत्
॥१४॥ अभि वह्नय ऊतयेऽनूषत प्रशस्तये। न देव विव्रता
हरी ऋतस्य यत्॥१५॥३॥ यत्सोममिंद्र विष्णवि यद्वा घ त्रित
आप्त्ये। यद्वा मरुत्सु मंदसे समिंदुभिः॥१६॥ यद्वा शक्र परावति
समुद्रे अधि मंदसे। अस्माकमित्सुते रणा समिंदुभिः
॥१७॥ यद्वासि सुन्वतो वृधो यजमानस्य सत्पते। उक्थे वा
यस्य रण्यसि समिंदुभिः॥१८॥ देवंदेवं वोऽवस इंद्रमिंद्रं गृणीषणि।
अधा यज्ञाय तुर्वणे व्यानशुः॥१९॥ यज्ञेभिर्यज्ञवाहसं
सोमेभिः सोमपातमं। होत्राभिरिंद्रं वावृधुर्व्यानशुः
॥२०॥४॥ महीरस्य प्रणीतयः पूर्वीरुत प्रशस्तयः। विश्वा



Digitized by Google

प्रऽचोदयः पंथां ऋतस्य यातवे तं ईमहे ॥३॥ इमं स्तोमं अभिष्टये
घृतं न पूतं अद्रिऽवः येन नु सद्यः ओजसा ववक्षिथ ॥४॥ इमं जु-
षस्व गिर्वणः समुद्रःऽइव पिन्वते इंद्र विश्वाभिः ऊतिऽभिः वव-
क्षिथ ॥५॥१॥ यः नः देवः पराऽवतः सखिऽत्वनाय ममहे दिवः
न वृष्टिं प्रथयन् ववक्षिथ ॥६॥ ववक्षुः अस्य केतवः उत वज्रः
गभस्त्योः यत् सूर्यः न रोदसी इति अवर्धयत् ॥७॥ यदि प्रऽवृद्ध सत्-
ऽपते सहस्रं महिषान् अघः आत् इत् ते इंद्रियं महि प्र ववृधे ॥८॥
इंद्रः सूर्यस्य रश्मिऽभिः नि अर्शसानं ओषति अग्निः वनाऽइव
ससहिः प्र ववृधे ॥९॥ इयं ते ऋत्वियऽवती धीतिः एति नवीयसी
सपर्यंती पुरुऽप्रिया मिमीत इत् ॥१०॥२॥ गर्भः यज्ञस्य देवऽयुः
क्रतुं पुनीते आनुषक् स्तोमैः इंद्रस्य ववृधे मिमीत इत् ॥११॥ स-
निः मित्रस्य पप्रथे इंद्रः सोमस्य पीतये प्राची वाशीऽइव सुन्वते
मिमीत इत् ॥१२॥ यं विप्राः उक्थऽवाहसः अभिऽप्रमंदुः आ-
यवः घृतं न पिप्ये आसनि ऋतस्य यत् ॥१३॥ उत स्वऽराजे अ-
दितिः स्तोमं इंद्राय जीजनत् पुरुऽप्रशस्तं ऊतये ऋतस्य यत्
॥१४॥ अभि वह्नयः ऊतये अनूषत प्रऽशस्तये न देव विऽव्रता
हरी इति ऋतस्य यत् ॥१५॥३॥ यत् सोमं इंद्र विष्णवि यत् वा घ त्रिते
आप्त्ये यत् वा मरुत्ऽसु मंदसे सं इंदुऽभिः ॥१६॥ यत् वा शक्र प-
राऽवति समुद्रे अधि मंदसे अस्माकं इत् सुते रण सं इंदुऽभिः
॥१७॥ यत् वा असि सुन्वतः वृधः यजमानस्य सत्ऽपते उक्थे वा
यस्य रण्यसि सं इंदुऽभिः ॥१८॥ देवंऽदेवं वः अवसे इंद्रंऽइंद्रं गृ-
णीषणि अध यज्ञाय तुर्वणे वि आनशुः ॥१९॥ यज्ञेभिः यज्ञऽवा-
हसं सोमेभिः सोमऽपातमं होत्राभिः इंद्रं ववृधुः वि आनशुः
॥२०॥४॥ महीः अस्य प्रऽनीतयः पूर्वीः उत प्रऽशस्तयः विश्वा



Digitized by Google

वसूनि दाशुषे व्यानशुः ॥२१॥ इंद्रं वृत्राय हंतवे देवासो दधिरे पुरः । इंद्रं वाणीरनूषता समोजसे ॥२२॥ महांतं महिना वयं स्तोमेभिर्हवनश्रुतं । अर्कैरभि प्र णोनुमः समोजसे ॥२३॥ न यं विविक्तो रोदसी नांतरिक्षाणि वज्रिणं । अमादिदस्य तित्विषे समोजसः ॥२४॥ यदिंद्र पृतनाज्ये देवास्त्वा दधिरे पुरः । आदित्ते हर्यता हरी ववक्षतुः ॥२५॥५॥ यदा वृत्रं नदीवृतं शवसा वज्रिन्नवधीः । आदित्ते हर्यता हरी ववक्षतुः ॥२६॥ यदा ते विष्णुरोजसा त्रीणि पदा विचक्रमे । आदित्ते हर्यता हरी ववक्षतुः ॥२७॥ यदा ते हर्यता हरी वावृधाते दिवेदिवे । आदित्ते विश्वा भुवनानि येमिरे ॥२८॥ यदा ते मारुतीर्विशस्तुभ्यमिंद्र नियेमिरे । आदित्ते विश्वा भुवनानि येमिरे ॥२९॥ यदा सूर्यममुं दिवि शुक्रं ज्योतिरधारयः । आदित्ते विश्वा भुवनानि येमिरे ॥३०॥ इमां त इंद्र सुष्टुतिं विप्र इयर्ति धीतिभिः । जामिं पदेव पिप्रतीं प्राध्वरे ॥३१॥ यदस्य धामनि प्रिये समीचीनासो अस्वरन् । नाभा यज्ञस्य दोहना प्राध्वरे ॥३२॥ सुवीर्यं स्वश्व्यं सुगव्यमिंद्र दद्धि नः । होतेव पूर्वचित्तये प्राध्वरे ॥३३॥६॥२॥

---

॥ १३ ॥ १–३३ नारदः काण्वः ॥ इंद्रः ॥ उष्णिक् ॥

॥१३॥ इंद्रः सुतेषु सोमेषु क्रतुं पुनीत उक्थ्यं । विदे वृधस्य दक्षसो महान्हि षः ॥१॥ स प्रथमे व्योमनि देवानां सदने वृधः । सुपारः सुश्रवस्तमः समप्सुजित् ॥२॥ तमह्वे वाजसातय इंद्रं भराय शुष्मिणं । भवा नः सुम्ने अंतमः सखा वृधे ॥३॥ इयं त इंद्र गिर्वणो रातिः क्षरति सुन्वतः । मंदानो अस्य बर्हिषो वि राजसि ॥४॥ नूनं तदिंद्र दद्धि नो यत्त्वा सुन्वंत ईमहे । रयिं नः



Digitized by Google

वसूनि दाशुषे वि आनशुः ॥२१॥ इंद्रं वृत्राय हंतवे देवासः द-
धिरे पुरः इंद्रं वाणीः अनूषत सं ओजसे ॥२२॥ महांतं महिना
वयं स्तोमेभिः हवनऽश्रुतं अर्कैः अभि प्र नोनुमः सं ओजसे
॥२३॥ न यं विविक्तः रोदसी इति न अंतरिक्षाणि वज्रिणं अमात्
इत् अस्य तित्विषे सं ओजसः ॥२४॥ यत् इंद्र पृतनाज्ये देवाः त्वा
दधिरे पुरः आत् इत् ते हर्यता हरी इति ववक्षतुः ॥२५॥५॥ यदा वृत्रं
नदीऽवृतं शवसा वज्रिन् अवधीः आत् इत् ते हर्यता हरी इति वव-
क्षतुः॥ २६॥ यदा ते विष्णुः ओजसा त्रीणि पदा विऽचक्रमे आत्
इत् ते हर्यता हरी इति ववक्षतुः ॥ २७॥ यदा ते हर्यता हरी इति ववृधाते इति
दिवेऽदिवे आत् इत् ते विश्वा भुवनानि येमिरे ॥ २८॥ यदा ते
मारुतीः विशः तुभ्यं इंद्र निऽयेमिरे आत् इत् ते विश्वा भुवनानि
येमिरे ॥ २९॥ यदा सूर्यं अमुं दिवि शुक्रं ज्योतिः अधारयः आत्
इत् ते विश्वा भुवनानि येमिरे ॥ ३०॥ इमां ते इंद्र सुऽस्तुतिं विप्रः
इयर्ति धीतिऽभिः जामिं पदाऽइव पिप्रतीं प्र अध्वरे ॥३१॥ यत्
अस्य धामनि प्रिये संऽईचीनासः अस्वरन् नाभा यज्ञस्य दोहना
प्र अध्वरे ॥ ३२॥ सुऽवीर्यं सुऽअश्व्यं सुऽगव्यं इंद्र दद्धि नः होता-
ऽइव पूर्वऽचित्तये प्र अध्वरे ॥ ३३॥ ६॥ २॥

---

॥१३॥ इंद्रः सुतेषु सोमेषु क्रतुं पुनीते उक्थ्यं विदे वृधस्य द-
क्षसः महान् हि सः ॥१॥ सः प्रथमे विऽओमनि देवानां सदने
वृधः सुऽपारः सुश्रवःऽतमः सं अप्सुऽजित् ॥ २॥ तं अह्वे वाज-
ऽसातये इंद्रं भराय शुष्मिणं भव नः सुम्ने अंतमः सखा वृधे ॥ ३॥
इयं ते इंद्र गिर्वणः रातिः क्षरति सुन्वतः मंदानः अस्य बर्हिषः वि
राजसि ॥४॥ नूनं तत् इंद्र दद्धि नः यत् त्वा सुन्वंतः ईमहे रयिं नः



Digitized by Google

चिचमा भरा स्वर्विदं ॥५॥७॥ स्तोता यत्ते विचर्षणिरतिप्रशर्धयद्गिरः । वया इवानु रोहते जुषंत यत् ॥६॥ प्रत्नवज्जनया गिरः शृणुधी जरितुर्हवं । मदेमदे ववक्षिथा सुकृत्वने ॥७॥ क्रीळंत्यस्य सूनृता आपो न प्रवता यतीः । अया धिया य उच्यते पतिर्दिवः ॥८॥ उतो पतिर्य उच्यते कृष्टीनामेक इद्वशी । नमोवृधैरवस्युभिः सुते रण ॥९॥ स्तुहि श्रुतं विपश्चितं हरी यस्य प्रसक्षिणा । गंतारा दाशुषो गृहं नमस्विनः ॥१०॥८॥ तूतुजानो महेमतेऽश्वेभिः प्रुषितप्सुभिः । आ याहि यज्ञमाशुभिः शमिद्धि ते ॥११॥ इंद्र शविष्ठ सत्पते रयिं गृणत्सु धारय । श्रवः सूरिभ्यो अमृतं वसुत्वनं ॥१२॥ हवे त्वा सूर उदिते हवे मध्यंदिने दिवः । जुषाण इंद्र सप्तिभिर्न आ गहि ॥१३॥ आ तू गहि प्र तु द्रव मत्स्वा सुतस्य गोमतः । तंतुं तनुष्व पूर्व्यं यथा विदे ॥१४॥ यच्छक्रासि परावति यदर्वावति वृत्रहन् । यद्वा समुद्रे अंधसोऽवितेदसि ॥१५॥९॥ इंद्रं वर्धंतु नो गिर इंद्रं सुतास इंदवः । इंद्रे हविष्मतीर्विशो अराणिषुः ॥१६॥ तमिद्विप्रा अवस्यवः प्रवत्वतीभिरूतिभिः । इंद्रं क्षोणीरवर्धयन्वया इव ॥१७॥ त्रिकद्रुकेषु चेतनं देवासो यज्ञमत्नत । तमिद्वर्धंतु नो गिरः सदावृधं ॥१८॥ स्तोता यत्ते अनुव्रत उक्थान्यृतुथा दधे । शुचिः पावक उच्यते सो अद्भुतः ॥१९॥ तदिद्रुद्रस्य चेतति यह्वं प्रत्नेषु धामसु । मनो यत्रा वि तद्दधुर्विचेतसः ॥२०॥१०॥ यदि मे सख्यमावर इमस्य पाह्यंधसः । येन विश्वा अति द्विषो अतारिम ॥२१॥ कदा त इंद्र गिर्वणः स्तोता भवाति शंतमः । कदा नो गव्ये अश्व्ये वसौ दधः ॥२२॥ उत ते सुष्टुता हरी वृषणा वहतो रथं । अजुर्यस्य मदिं-



Digitized by Google

चित्रं आ भर स्वःऽविदं ॥५॥७॥ स्तोता यत् ते विऽचर्षणिः अति-
ऽप्रशर्धयत् गिरः वयाःऽइव अनु रोहते जुषंत यत् ॥६॥ प्रत्नऽवत्
जनय गिरः शृणुधि जरितुः हवं मदेऽमदे ववक्षिथ सुऽकृत्वने
॥७॥ क्रीळंति अस्य सूनृताः आपः न प्रऽवता यतीः अया धिया
यः उच्यते पतिः दिवः ॥८॥ उतो पतिः यः उच्यते कृष्टीनां एकः
इत् वशी नमःऽवृधैः अवस्युऽभिः सुते रण ॥९॥ स्तुहि श्रुतं विपः-
ऽचितं हरी यस्य प्रऽसक्षिणा गंतारा दाशुषः गृहं नमस्विनः
॥१०॥८॥ तूतुजानः महेऽमते अश्वेभिः प्रुषितप्सुऽभिः आ याहि
यज्ञं आशुऽभिः शं इत् हि ते ॥११॥ इंद्र शविष्ठ सत्ऽपते रयिं गृ-
णत्ऽसु धारय श्रवः सूरिऽभ्यः अमृतं वसुऽत्वनं ॥१२॥ हवे त्वा
सूरे उत्ऽइते हवे मध्यंदिने दिवः जुषाणः इंद्र सप्तिऽभिः नः आ
गहि ॥१३॥ आ तु गहि प्र तु द्रव मत्स्व सुतस्य गोऽमतः तंतुं तनुष्व
पूर्व्यं यथा विदे ॥१४॥ यत् शक्र असि पराऽवति यत् अर्वाऽवति
वृत्रऽहन् यत् वा समुद्रे अंधसः अविता इत् असि ॥१५॥९॥ इंद्रं
वर्धंतु नः गिरः इंद्रं सुतासः इंदवः इंद्रे हविष्मतीः विशः अरा-
णिषुः ॥१६॥ तं इत् विप्राः अवस्यवः प्रवत्वतीभिः ऊतिऽभिः इंद्रं
क्षोणीः अवर्धयन् वयाःऽइव ॥१७॥ त्रिऽकद्रुकेषु चेतनं देवासः
यज्ञं अत्नत तं इत् वर्धंतु नः गिरः सदाऽवृधं ॥१८॥ स्तोता यत् ते
अनुऽव्रतः उक्थानि ऋतुऽथा दधे शुचिः पावकः उच्यते सः अ-
द्भुतः ॥१९॥ तत् इत् रुद्रस्य चेतति यह्वं प्रत्नेषु धामऽसु मनः यत्र
वि तत् दधुः विऽचेतसः ॥२०॥१०॥ यदि मे सख्यं आऽवरः इमस्य
पाहि अंधसः येन विश्वाः अति द्विषः अतारिम ॥२१॥ कदा ते इंद्र
गिर्वणः स्तोता भवाति शंऽतमः कदा नः गव्ये अश्व्ये वसौ दधः
॥२२॥ उत ते सुऽस्तुता हरी वृषणा वहतः रथं अजुर्यस्य मदिन्-



Digitized by Google

त्वमं यमीमहे ॥२३॥ तमीमहे पुरुष्टुतं यह्वं प्रत्नाभिरूतिभिः । नि बर्हिषि प्रिये संदद्ध द्विता ॥२४॥ वर्धस्वा सु पुरुष्टुत ऋषिष्टुताभिरूतिभिः । धुक्षस्व पिप्युषीमिषमवा च नः ॥२५॥११॥ इंद्र त्वमवितेदसीत्था स्तुवतो अद्रिवः । ऋतादियर्मि ते धियं मनोयुजं ॥२६॥ इह त्या सधमाद्या युजानः सोमपीतये । हरी इंद्र प्रतद्वसू अभि स्वर ॥२७॥ अभि स्वरंतु ये तव रुद्रासः सक्षत श्रियं । उतो मरुत्वतीर्विशो अभि प्रयः ॥२८॥ इमा अस्य प्रतूर्तयः पदं जुषंत यद्दिवि । नाभा यज्ञस्य सं दधुर्यथा विदे ॥२९॥ अयं दीर्घाय चक्षसे प्राचि प्रयत्यध्वरे । मिमीते यज्ञमानुषग्विचक्ष्य ॥३०॥१२॥ वृषायमिंद्र ते रथ उतो ते वृषणा हरी । वृषा त्वं शतक्रतो वृषा हवः ॥३१॥ वृषा ग्रावा वृषा मदो वृषा सोमो अयं सुतः । वृषा यज्ञो यमिन्वसि वृषा हवः ॥३२॥ वृषा त्वा वृषणं हुवे वज्रिञ्चित्राभिरूतिभिः । वावंथ हि प्रतिष्टुतिं वृषा हवः ॥३३॥१३॥

---

॥ १४ ॥ १—१५ गोषूक्त्यश्वसूक्तिनौ काण्वायनौ । इंद्रः ॥ गायत्री ॥

॥१४॥ यदिंद्राहं यथा त्वमीशीय वस्व एक इत् । स्तोता मे गोषखा स्यात् ॥१॥ शिक्षेयमस्मै दित्सेयं शचीपते मनीषिणे । यदहं गोपतिः स्यां ॥२॥ धेनुष्ट इंद्र सूनृता यजमानाय सुन्वते । गामश्वं पिप्युषी दुहे ॥३॥ न ते वर्तास्ति राधस इंद्र देवो न मर्त्यः । यद्दित्ससि स्तुतो मघं ॥४॥ यज्ञ इंद्रमवर्धयद्यद्भूमिं व्यवर्तयत् । चक्राण ओपशं दिवि ॥५॥१४॥ वावृधानस्य ते वयं विश्वा धनानि जिग्युषः । ऊतिमिंद्रा वृणीमहे ॥६॥ व्यं१तरिक्षमतिरन्मदे सोमस्य रोचना । इंद्रो यदभिनद्वलं ॥७॥ उद्गा आजदंगिरोभ्य आविष्कृण्वन्गुहा सतीः । अर्वाचं नु-



Digitized by Google

ऽतमं यं ईमहे ॥२३॥ तं ईमहे पुरुऽस्तुतं यह्वं प्रत्नाभिः ऊतिऽभिः नि बर्हिषि प्रिये सदत् अध द्विता ॥२४॥ वर्धस्व सु पुरुऽस्तुत ऋषिऽस्तुताभिः ऊतिऽभिः धुक्षस्व पिप्युषीं इषं अव च नः ॥२५॥११॥ इंद्र त्वं अविता इत् असि इत्था स्तुवतः अद्रिऽवः ऋतात् इयर्मि ते धियं मनःऽयुजं ॥२६॥ इह त्या सधऽमाद्या युजानः सोमऽपीतये हरी इंद्र प्रुतत्ऽवसू इति अभि स्वर ॥२७॥ अभि स्वरंतु ये तव रुद्रासः सक्षत श्रियं उतो इति मरुत्वतीः विशः अभि प्रयः ॥२८॥ इमाः अस्य प्रऽतूर्तयः पदं जुषंत यत् दिवि नाभा यज्ञस्य सं दधुः यथा विदे ॥२९॥ अयं दीर्घाय चक्षसे प्राचि प्रऽयति अध्वरे मिमीते यज्ञं आनुषक् विऽचक्ष्य ॥३०॥१२॥ वृषा अयं इंद्र ते रथः उतो इति ते वृषणा हरी इति वृषा त्वं शतऽक्रतो इति वृषा हवः ॥३१॥ वृषा ग्रावा वृषा मदः वृषा सोमः अयं सुतः वृषा यज्ञः यं इन्वसि वृषा हवः ॥३२॥ वृषा त्वा वृषणं हुवे वज्रिन् चित्राभिः ऊतिऽभिः ववंथ हि प्रतिऽस्तुतिं वृषा हवः ॥३३॥१३॥

---

॥१४॥ यत् इंद्र अहं यथा त्वं ईशीय वस्वः एकः इत् स्तोता मे गोऽसखा स्यात् ॥१॥ शिक्षेयं अस्मै दित्सेयं शचीऽपते मनीषिणे यत् अहं गोऽपतिः स्यां ॥२॥ धेनुः ते इंद्र सूनृता यजमानाय सुन्वते गां अश्वं पिप्युषी दुहे ॥३॥ न ते वर्ता अस्ति राधसः इंद्र देवः न मर्त्यः यत् दित्ससि स्तुतः मघं ॥४॥ यज्ञः इंद्रं अवर्धयत् यत् भूमिं वि अवर्तयत् चक्राणः ओपशं दिवि ॥५॥१४॥ ववृधानस्य ते वयं विश्वा धनानि जिग्युषः ऊतिं इंद्र आ वृणीमहे ॥६॥ वि अंतरिक्षं अतिरत् मदे सोमस्य रोचना इंद्रः यत् अभिनत् वलं ॥७॥ उत् गाः आजत् अंगिरःऽभ्यः आविः कृण्वन् गुहा सतीः अर्वाचं नु-



Digitized by Google

नुदे वलं ॥८॥ इंद्रेण रोचना दिवो दृळ्हानि दृंहितानि च। स्थिराणि न पराणुदे ॥९॥ अपामूर्मिर्मदन्निव स्तोम इंद्राजिरायते। वि ते मदा अराजिषुः ॥१०॥१५॥ त्वं हि स्तोमवर्धन इंद्रास्युक्थवर्धनः। स्तोतॄणामुत भद्रकृत् ॥११॥ इंद्रमित्केशिना हरी सोमपेयाय वक्षतः। उप यज्ञं सुराधसं ॥१२॥ अपां फेनेन नमुचेः शिर इंद्रोदवर्तयः। विश्वा यदजयः स्पृधः ॥१३॥ मायाभिरुत्सिसृप्सत इंद्र द्यामारुरुक्षतः। अव दस्यूँरधूनुथाः ॥१४॥ असुन्वामिंद्र संसदं विषूचीं व्यनाशयः। सोमपा उत्तरो भवन् ॥१५॥१६॥

---

॥१५॥ १—१३ गोषूक्त्यश्वसूक्तिनौ काण्वायनौ ॥ इंद्रः ॥ उष्णिक् ॥

॥१५॥ तम्वभि प्र गायत पुरुहूतं पुरुष्टुतं। इंद्रं गीर्भिस्तविषमा विवासत ॥१॥ यस्य द्विबर्हसो बृहत्सहो दाधार रोदसी। गिरीँरज्राँ अपः स्वर्वृषत्वना ॥२॥ स राजसि पुरुष्टुतँ एको वृत्राणि जिघ्नसे। इंद्र जैत्रा श्रवस्या च यंतवे ॥३॥ तं ते मदं गृणीमसि वृषणं पृत्सु सासहिं। उ लोककृत्नुमद्रिवो हरिश्रियं ॥४॥ येन ज्योतींष्यायवे मनवे च विवेदिथ। मंदानो अस्य बर्हिषो वि राजसि ॥५॥१७॥ तदद्या चित्त उक्थिनोऽनु ष्टुवंति पूर्वथा। वृषपत्नीरपो जया दिवेदिवे ॥६॥ तव त्यदिंद्रियं बृहत्तव शुष्ममुत क्रतुं। वज्रं शिशाति धिषणा वरेण्यं ॥७॥ तव द्यौरिंद्र पौंस्यं पृथिवी वर्धति श्रवः। त्वामापः पर्वतासश्च हिन्विरे ॥८॥ त्वां विष्णुर्बृहन्क्षयो मित्रो गृणाति वरुणः। त्वां शर्धो मदत्यनु मारुतं ॥९॥ त्वं वृषा जनानां मंहिष्ठ इंद्र जज्ञिषे। सचा विश्वा स्वपत्यानि दधिषे ॥१०॥१८॥ सचा त्वं पुरुष्टुतँ एको वृत्राणि तोशसे। नान्य इंद्रात्करणं



Digitized by Google

नुदे वलं ॥८॥ इंद्रेण रोचना दिवः दृळ्हानि दृंहितानि च स्थि-
राणि न पराऽनुदे ॥९॥ अपां ऊर्मिः मदन्ऽइव स्तोमः इंद्र अ-
जिरऽयते वि ते मदाः अराजिषुः ॥१०॥१५॥ त्वं हि स्तोमऽवर्धनः
इंद्र असि उक्थऽवर्धनः स्तोतृणां उत भद्रऽकृत् ॥११॥ इंद्रं इत्
केशिना हरी सोमऽपेयाय वक्षतः उप यज्ञं सुऽराधसं ॥१२॥
अपां फेनेन नमुचेः शिरः इंद्र उत् अवर्तयः विश्वाः यत् अजयः
स्पृधः ॥१३॥ मायाभिः उत्ऽसिसृप्सतः इंद्र द्यां आऽरुरुक्षतः अव
दस्यून् अधूनुथाः ॥१४॥ असुन्वां इंद्र संऽसदं विषूचीं वि अना-
शयः सोमऽपाः उत्ऽतरः भवन् ॥१५॥१६॥

---

॥१५॥ तं ऊं अभि प्र गायत पुरुऽहूतं पुरुऽस्तुतं इंद्रं गीःऽभिः
तविषं आ विवासत ॥१॥ यस्य द्विऽबर्हसः बृहत् सहः दाधार रो-
दसी गिरीन् अज्रान् अपः स्वः वृषऽत्वना ॥२॥ सः राजसि पु-
रुऽस्तुत एकः वृत्राणि जिघ्नसे इंद्र जैत्रा श्रवस्या च यंतवे ॥३॥
तं ते मदं गृणीमसि वृषणं पृत्ऽसु सासहिं ऊं लोकऽकृत्नुं अद्रि-
ऽवः हरिऽश्रियं ॥४॥ येन ज्योतींषि आयवे मनवे च विवेदिथ
मंदानः अस्य बर्हिषः वि राजसि ॥५॥१७॥ तत् अद्य चित् ते उ-
क्थिनः अनु स्तुवंति पूर्वऽथा वृषऽपत्नीः अपः जय दिवेऽदिवे
॥६॥ तव त्यत् इंद्रियं बृहत् तव शुष्मं उत क्रतुं वज्रं शिशाति धि-
षणा वरेण्यं ॥७॥ तव द्यौः इंद्र पौंस्यं पृथिवी वर्धति श्रवः त्वां
आपः पर्वतासः च हिन्विरे ॥८॥ त्वां विष्णुः बृहन् क्षयः मित्रः
गृणाति वरुणः त्वां शर्धः मदति अनु मारुतं ॥९॥ त्वं वृषा जनानां
मंहिष्ठः इंद्र जज्ञिषे सचा विश्वा सुऽअपत्यानि दधिषे ॥१०॥१८॥
सचा त्वं पुरुऽस्तुत एकः वृत्राणि तोशसे न अन्यः इंद्रात् करणं

भूर्य इन्वति ॥११॥ यदिंद्र मन्मशस्त्वा नाना हवंत ऊतये। अस्मा-
केभिर्नृभिरत्रा स्वर्जय ॥१२॥ अरं क्षयाय नो महे विश्वा रूपा-
ण्याविशन्। इंद्रं जैत्राय हर्षया शचीपतिं ॥१३॥१९॥

॥ १६ ॥ १–१२ इरिंबिठिः काण्वः ॥ इंद्रः ॥ गायत्री ॥

॥१६॥ प्र सम्राजं चर्षणीनामिंद्रं स्तोता नव्यं गीर्भिः। नरं
नृषाहं मंहिष्ठं ॥१॥ यस्मिन्नुक्थानि रण्यंति विश्वानि च श्रव-
स्या। अपामवो न समुद्रे ॥२॥ तं सुष्टुत्या विवासे ज्येष्ठराजं भरे
कृत्नुं। महो वाजिनं सनिभ्यः ॥३॥ यस्यानूना गभीरा मदा
उरवस्तरुत्राः। हर्षुमंतः शूरसातौ ॥४॥ तमिद्धनेषु हितेष्वधिवा-
काय हवंते। येषामिंद्रस्ते जयंति ॥५॥ तमिच्च्यौत्नैरार्यंति तं कृते-
भिश्चर्षणयः। एष इंद्रो वरिवस्कृत् ॥६॥२०॥ इंद्रो ब्रह्मेंद्र ऋषिरिंद्रः
पुरू पुरुहूतः। महान्महीभिः शचीभिः ॥७॥ स स्तोम्यः स हव्यः
सत्यः सत्वा तुविकूर्मिः। एकश्चित्सन्नभिभूतिः ॥८॥ तमर्केभिस्तं
सामभिस्तं गायत्रैश्चर्षणयः। इंद्रं वर्धंति क्षितयः ॥९॥ प्रणेतारं
वस्यो अच्छा कर्तारं ज्योतिः समत्सु। सासह्वांसं युधामित्रान्
॥१०॥ स नः पप्रिः पारयाति स्वस्ति नावा पुरुहूतः। इंद्रो विश्वा
अति द्विषः ॥११॥ स त्वं न इंद्र वाजेभिर्दशस्या च गातुया च।
अच्छा च नः सुम्नं नेषि ॥१२॥२१॥

॥ १७ ॥ १–१५ इरिंबिठिः काण्वः ॥ इंद्रः ॥ १–१३ गायत्री । १४ बृहती । १५ सतोबृहती ॥

॥१७॥ आ याहि सुषुमा हि त इंद्र सोमं पिबा इमं। एदं बर्हिः
सदो मम ॥१॥ आ त्वा ब्रह्मयुजा हरी वहतामिंद्र केशिना। उप
ब्रह्माणि नः शृणु ॥२॥ ब्रह्माणस्त्वा वयं युजा सोमपामिंद्र सो-
मिनः। सुतावंतो हवामहे ॥३॥ आ नो याहि सुतावतोऽस्माकं



Digitized by Google

भूयः इन्वति ॥११॥ यत् इंद्र मन्मऽशः त्वा नाना हवंते ऊतये अ-
स्माकेभिः नृऽभिः अत्र स्वः जय ॥१२॥ अरं क्षयाय नः महे विश्वा
रूपाणि आऽविशन् इंद्रं जैत्राय हर्षय शचीऽपतिं ॥१३॥१९॥

॥१६॥ प्र सम्ऽराजं चर्षणीनां इंद्रं स्तोत नव्यं गीःऽभिः नरं
नृऽसहं मंहिष्ठं ॥१॥ यस्मिन् उक्थानि रण्यंति विश्वानि च श्र-
वस्या अपां अवः न समुद्रे ॥२॥ तं सुऽस्तुत्या आ विवासे ज्येष्ठ-
ऽराजं भरे कृत्नुं महः वाजिनं सनिऽभ्यः ॥३॥ यस्य अनूनाः ग-
भीराः मदाः उरवः तरुत्राः हर्षुऽमंतः शूरऽसातौ ॥४॥ तं इत्
धनेषु हितेषु अधिऽवाकाय हवंते येषां इंद्रः ते जयंति ॥५॥ तं
इत् च्यौत्नैः आर्यंति तं कृतेभिः चर्षणयः एषः इंद्रः वरिवःऽकृत्
॥६॥२०॥ इंद्रः ब्रह्मा इंद्रः ऋषिः इंद्रः पुरु पुरुऽहूतः महान् मही-
भिः शचीभिः ॥७॥ सः स्तोम्यः सः हव्यः सत्यः सत्वा तुविऽकूर्मिः
एकः चित् सन् अभिऽभूतिः ॥८॥ तं अर्केभिः तं सामऽभिः तं
गायत्रैः चर्षणयः इंद्रं वर्धंति क्षितयः ॥९॥ प्रऽनेतारं वस्यः अच्छ
कर्तारं ज्योतिः समत्ऽसु ससह्वांसं युधा अमित्रान् ॥१०॥ सः नः
पप्रिः पारयाति स्वस्ति नावा पुरुऽहूतः इंद्रः विश्वाः अति द्विषः
॥११॥ सः त्वं नः इंद्र वाजेभिः दशस्य च गातुऽय च अच्छ च नः
सुम्नं नेषि ॥१२॥२१॥

॥१७॥ आ याहि सुसुम हि ते इंद्र सोमं पिब इमं आ इदं बर्हिः
सदः मम ॥१॥ आ त्वा ब्रह्मऽयुजा हरी वहतां इंद्र केशिना उप
ब्रह्माणि नः शृणु ॥२॥ ब्रह्माणः त्वा वयं युजा सोमऽपां इंद्र सो-
मिनः सुतऽवंतः हवामहे ॥३॥ आ नः याहि सुतऽवतः अस्माकं



Digitized by Google

सुष्टुतीरुप। पिबा सु शिप्रिन्नंधसः ॥४॥ आ ते सिंचामि कुक्ष्यो-
रनु गात्रा वि धावतु। गृभाय जिह्वया मधु ॥५॥२२॥ स्वादुष्टे
अस्तु संसुदे मधुमान्तन्वे३ तव। सोमः शमस्तु ते हृदे ॥६॥ अयमु
त्वा विचर्षणे जनीरिवाभि संवृतः। प्र सोम इंद्र सर्पतु ॥७॥ तु-
विग्रीवो वपोदरः सुबाहुरंधसो मदे। इंद्रो वृत्राणि जिघ्नते ॥८॥
इंद्र प्रेहि पुरस्त्वं विश्वस्येशान ओजसा। वृत्राणि वृत्रहञ्जहि ॥९॥
दीर्घस्ते अस्त्वंकुशो येना वसु प्रयच्छसि। यजमानाय सुन्वते
॥१०॥२३॥ अयं त इंद्र सोमो निपूतो अधि बर्हिषि। एहीमस्य
द्रवा पिब ॥११॥ शाचिगो शाचिपूजनायं रणाय ते सुतः। आ-
खंडल प्र हूयसे ॥१२॥ यस्ते शृंगवृषो नपात्प्रणपात्कुंडपाय्यः।
न्यस्मिन्दध्र आ मनः ॥१३॥ वास्तोष्पते ध्रुवा स्थूणांसत्रं सोम्या-
नां। द्रप्सो भेत्ता पुरां शश्वतीनामिंद्रो मुनीनां सखा ॥१४॥ पृ-
दाकुसानुर्यजतो गवेषण एकः सन्नभि भूयसः। भूर्णिमश्वं न-
यत्तुजा पुरो गृभेंद्रं सोमस्य पीतये ॥१५॥२४॥

---

॥१८॥ १–२२ इरिंबिठिः काण्वः ॥ १–७. १०–२२ आदित्याः। ८ अश्विनौ।
९ अग्निसूर्यानिलाः ॥ उष्णिक् ॥

॥१८॥ इदं ह नूनमेषां सुम्नं भिक्षेत मर्त्यः। आदित्यानामपूर्व्यं
सवीमनि ॥१॥ अनर्वाणो ह्येषां पंथा आदित्यानां। अदब्धाः
संति पायवः सुगेवृधः ॥२॥ तत्सु नः सविता भगो वरुणो
मित्रो अर्यमा। शर्म यच्छंतु सप्रथो यदीमहे ॥३॥ देवेभिर्दे-
व्यदितेऽरिष्टभर्मन्ना गहि। स्मत्सूरिभिः पुरुप्रिये सुशर्म-
भिः ॥४॥ ते हि पुत्रासो अदितेर्विदुर्द्वेषांसि योतवे। अंहो-
श्चिदुरुचक्रयोऽनेहसः ॥५॥२५॥ अदितिर्नो दिवा पशुमदि-
तिर्नक्तमद्वयाः। अदितिः पात्वंहसः सदावृधा ॥६॥ उत स्या



Digitized by Google

सुऽस्तुतीः उप पिबस्व शिप्रिन् अंधसः ॥४॥ आ ते सिंचामि कुक्ष्योः अनु गात्रा वि धावतु गृभाय जिह्वया मधु ॥५॥२२॥ स्वादुः ते अस्तु संऽसुदे मधुऽमान् तन्वे तव सोमः शं अस्तु ते हृदे ॥६॥ अयं ऊं इति त्वा विऽचर्षणे जनीःऽइव अभि संऽवृतः प्र सोमः इंद्र सर्पतु ॥७॥ तुविऽग्रीवः वपाऽउदरः सुऽबाहुः अंधसः मदे इंद्रः वृत्राणि जिघ्नते ॥८॥ इंद्र प्र इहि पुरः त्वं विश्वस्य ईशानः ओजसा वृत्राणि वृत्रऽहन् जहि ॥९॥ दीर्घः ते अस्तु अंकुशः येन वसु प्रऽयच्छसि यजमानाय सुन्वते ॥१०॥२३॥ अयं ते इंद्र सोमः निऽपूतः अधि बर्हिषि आ इहि ईं अस्य द्रव पिब ॥११॥ शाचिऽगो॰ शाचिऽपूजन अयं रणाय ते सुतः आखंडल प्र हूयसे ॥१२॥ यः ते शृंगऽवृषः नपात् प्रऽनपात्॰ कुंडऽपाय्यः नि अस्मिन् दध्रे आ मनः ॥१३॥ वास्तोः पते ध्रुवा स्थूणा अंसत्रं सोम्यानां द्रप्सः भेत्ता पुरां शश्वतीनां इंद्रः मुनीनां सखा ॥१४॥ पृदाकुऽसानुः यजतः गोऽएषणः एकः सन् अभि भूयसः भूर्णिं अश्वं नयत् तुजा पुरः गृभा इंद्रं सोमस्य पीतये ॥१५॥२४॥

---

॥१८॥ इदं ह नूनं एषां सुम्नं भिक्षेत मर्त्यः आदित्यानां अपूर्व्यं सवीमनि ॥१॥ अनर्वाणः हि एषां पंथाः आदित्यानां अदब्धाः संति पायवः सुगेऽवृधः ॥२॥ तत् सु नः सविता भगः वरुणः मित्रः अर्यमा शर्म यच्छंतु सऽप्रथः यत् ईमहे ॥३॥ देवेभिः देवि अदिते अरिष्टऽभर्मन् आ गहि स्मत् सूरिऽभिः पुरुऽप्रिये सुशर्मऽभिः ॥४॥ ते हि पुत्रासः अदितेः विदुः द्वेषांसि योतवे अंहोः चित् उरुऽचक्रयः अनेहसः ॥५॥२५॥ अदितिः नः दिवा पशुं अदितिः नक्तं अद्वयाः अदितिः पातु अंहसः सदाऽवृधा ॥६॥ उत स्या



Digitized by Google

नो दिवा मतिरदितिरूत्या गमत्। सा शंताति मयस्करदप
स्रिधः॥७॥ उत त्या दैव्या भिषजा शं नः करतो अश्विना। युयु-
यातामितो रपो अप स्रिधः॥८॥ शमग्निरग्निभिः करच्छं नस्त-
पतु सूर्यः। शं वातो वात्वरपा अप स्रिधः॥९॥ अपामीवामप
स्रिधमप सेधत दुर्मतिं। आदित्यासो युयोतना नो अंहसः
॥१०॥२६॥ युयोता शरुमस्मदाँ आदित्यास उतामतिं। ऋधग्द्वेषः
कृणुत विश्ववेदसः॥११॥ तत्सु नः शर्म यच्छतादित्या यन्मुमो-
चति। एनस्वंतं चिदेनसः सुदानवः॥१२॥ यो नः कश्चिद्रिरिक्ष-
ति रक्षस्त्वेन मर्त्यः। स्वैः ष एवै रिरिषीष्ट युर्जनः॥१३॥ समित्त-
मघमश्नवद्दुःशंसं मर्त्यं रिपुं। यो अस्मत्रा दुर्हणावाँ उप द्वयुः
॥१४॥ पाकत्रा स्थन देवा हृत्सु जानीथ मर्त्यं। उप द्वयुं चाद्वयुं च
वसवः॥१५॥२७॥ आ शर्म पर्वतानामोतापां वृणीमहे। द्या-
वाक्षामारे अस्मद्रपस्कृतं॥१६॥ ते नो भद्रेण शर्मणा युष्माकं
नावा वसवः। अति विश्वानि दुरिता पिपर्तन॥१७॥ तुचे त-
नाय तत्सु नो द्राघीय आयुर्जीवसे। आदित्यासः सुमहसः कृणो-
तन॥१८॥ यज्ञो हीळो वो अंतर आदित्या अस्ति मृळत। युष्मे
इद्वो अपि ष्मसि सजात्ये॥१९॥ बृहद्वरूथं मरुतां देवं त्रातारम-
श्विना। मित्रमीमहे वरुणं स्वस्तये॥२०॥ अनेहो मित्रार्यमन्नृ-
वद्वरुण शंस्यं। त्रिवरूथं मरुतो यंत नश्छर्दिः॥२१॥ ये चिद्धि
मृत्युबंधव आदित्या मनवः स्मसि। प्र सू न आयुर्जीवसे तिरे-
तन॥२२॥२८॥

---

॥१९॥ १-३७ सोभरिः काण्वः॥ १-३३ अग्निः। ३४. ३५ आदित्याः। ३६. ३७ त्रसद-
स्योर्दानस्तुतिः॥ १-२६. २८-३३ प्रागाथं काकुभं। २७ द्विपदा। ३४ उष्णिक्।
३५ सतोबृहती। ३६ ककुप्। ३७ पंक्तिः॥

॥१९॥ तं गूर्धया स्वर्णरं देवासो देवमरतिं दधन्विरे। देवत्रा



Digitized by Google

नः द्विवा मतिः अदितिः ऊत्या आ गमत् सा शंऽताति मयः करत् अप स्रिधः ॥ ७ ॥ उत त्या दैव्या भिषजा शं नः करतः अश्विना युयुयातां इतः रपः अप स्रिधः ॥ ८ ॥ शं अग्निः अग्निऽभिः करत् शं नः तपतु सूर्यः शं वातः वातु अरपाः अप स्रिधः ॥ ९ ॥ अप अमीवां अप स्रिधं अप सेधत दुःऽमतिं आदित्यासः युयोतन नः अंहसः ॥ १० ॥ २६ ॥ युयोत शरुं अस्मत् आ आदित्यासः उत अमतिं पृथक् द्वेषः कृणुत विश्वऽवेदसः ॥ ११ ॥ तत् सु नः शर्म यच्छत आदित्याः यत् मुमोचति एनस्वंतं चित् एनसः सुऽदानवः ॥ १२ ॥ यः नः कः चित् रिरिक्षति रक्षःऽत्वेन मर्त्यः स्वैः सः एवैः रिरिषीष्ट युः जनः ॥ १३ ॥ सं इत् तं अघं अश्नवत् दुःऽशंसं मर्त्यं रिपुं यः अस्मऽत्रा दुःऽहनावान् उप द्वयुः ॥ १४ ॥ पाकऽत्रा स्थन देवाः हृत्ऽसु जानीथ मर्त्यं उप द्वयुं च अद्वयुं च वसवः ॥ १५ ॥ २७ ॥ आ शर्म पर्वतानां आ उत अपां वृणीमहे द्यावाक्षामा आरे अस्मत् रपः कृतं ॥ १६ ॥ ते नः भद्रेण शर्मणा युष्माकं नावा वसवः अति विश्वानि दुःऽइता पिपर्तन ॥ १७ ॥ तुचे तनाय तत् सु नः द्राघीयः आयुः जीवसे आदित्यासः सुऽमहसः कृणोतन ॥ १८ ॥ यज्ञः हीळः वः अंतरः आदित्याः अस्ति मृळत युष्मे इत् वः अपि स्मसि सऽजात्ये ॥ १९ ॥ बृहत् वरूथं मरुतां देवं त्रातारं अश्विना मित्रं ईमहे वरुणं स्वस्तये ॥ २० ॥ अनेहः मित्र अर्यमन् नृऽवत् वरुण शंस्यं त्रिऽवरूथं मरुतः यंत नः छर्दिः ॥ २१ ॥ ये चित् हि मृत्युऽबंधवः आदित्याः मनवः स्मसि प्र सु नः आयुः जीवसे तिरेतन ॥ २२ ॥ २८ ॥

---

॥ १९ ॥ तं गूर्धय स्वःऽनरं देवासः देवं अरतिं दधन्विरे देवऽत्रा



Digitized by Google

हव्यमोहिरे ॥ १ ॥ विभूतरातिं विप्र चित्रशोचिषमग्निमीळिष्व यंतुरं । अस्य मेधस्य सोम्यस्य सोभरे प्रेमध्वराय पूर्व्यं ॥ २ ॥ यजिष्ठं त्वा ववृमहे देवं देवत्रा होतारममर्त्यं । अस्य यज्ञस्य सुक्रतुं ॥ ३ ॥ ऊर्जो नपातं सुभगं सुदीदितिमग्निं श्रेष्ठशोचिषं । स नो मित्रस्य वरुणस्य सो अपामा सुम्नं यक्षते दिवि ॥ ४ ॥ यः समिधा य आहुती यो वेदेन ददाश मर्तो अग्नये । यो नमसा स्वध्वरः ॥ ५ ॥ २९ ॥ तस्येदर्वंतो रंहयंत आशवस्तस्य द्युम्नितमं यशः । न तमंहो देवकृतं कुतश्चन न मर्त्यकृतं नशत् ॥ ६ ॥ स्वग्नयो वो अग्निभिः स्याम सूनो सहस ऊर्जां पते । सुवीरस्त्वमस्मयुः ॥ ७ ॥ प्रशंसमानो अतिथिर्न मित्रियोऽग्नी रथो न वेद्यः । त्वे क्षेमासो अपि संति साधवस्त्वं राजा रयीणां ॥ ८ ॥ सो अद्धा दाश्वध्वरोऽग्ने मर्तः सुभग स प्रशंस्यः । स धीभिरस्तु सनिता ॥ ९ ॥ यस्य त्वमूर्ध्वो अध्वराय तिष्ठसि क्षयद्वीरः स साधते । सो अर्वद्भिः सनिता स विपन्युभिः स शूरैः सनिता कृतं ॥ १० ॥ ३० ॥ यस्याग्निर्वपुर्गृहे स्तोमं चनो दधीत विश्ववार्यः । हव्या वा वेविषद्विषः ॥ ११ ॥ विप्रस्य वा स्तुवतः सहसो यहो मक्षूतमस्य रातिषु । अवोदेवमुपरिमर्त्यं कृधि वसो विविदुषो वचः ॥ १२ ॥ यो अग्निं हव्यदातिभिर्नमोभिर्वा सुदक्षमाविवासति । गिरा वाजिरशोचिषं ॥ १३ ॥ समिधा यो निशिती दाशददितिं धामभिरस्य मर्त्यः । विश्वेत्स धीभिः सुभगो जनाँ अति द्युम्नैरुद्न इव तारिषत् ॥ १४ ॥ तदग्ने द्युम्नमा भर यत्सासहत्सदने कं चिदत्रिणं । मन्युं जनस्य दूढ्यः ॥ १५ ॥ ३१ ॥ येन चष्टे वरुणो मित्रो अर्यमा येन नासत्या भगः । वयं तत्ते शवसा गातुवित्त-



Digitized by Google

हव्यं आ ऊहिरे ॥ १ ॥ विभूतऽरातिं विप्र चित्रऽशोचिषं अग्निं ईळिष्व यन्तुरं अस्य मेधस्य सोम्यस्य सोभरे प्र ईं अध्वराय पूर्व्यं ॥ २ ॥ यजिष्ठं त्वा ववृमहे देवं देवऽत्रा होतारं अमर्त्यं अस्य यज्ञस्य सुऽक्रतुं ॥ ३ ॥ ऊर्जः नपातं सुऽभगं सुऽदीदितिं अग्निं श्रेष्ठऽशोचिषं सः नः मित्रस्य वरुणस्य सः अपां आ सुम्नं यक्षते दिवि ॥ ४ ॥ यः सम्ऽइधा यः आऽहुती यः वेदेन ददाश मर्तः अग्नये यः नमसा सुऽअध्वरः ॥ ५ ॥ २९ ॥ तस्य इत् अर्वन्तः रंहयन्ते आशवः तस्य द्युम्निऽतमं यशः न तं अंहः देवऽकृतं कुतः चन न मर्त्यऽकृतं नशत् ॥ ६ ॥ सुऽअग्नयः वः अग्निऽभिः स्याम सूनो इति सहसः ऊर्जां पते सुऽवीरः त्वं अस्मऽयुः ॥ ७ ॥ प्रऽशंसमानः अतिथिः न मित्रियः अग्निः रथः न वेद्यः त्वे इति क्षेमासः अपि सन्ति साधवः त्वं राजा रयीणां ॥ ८ ॥ सः अद्धा अस्तु ऽअध्वरः अग्ने मर्तः सुऽभग सः प्रऽशंस्यः सः धीभिः अस्तु सनिता ॥ ९ ॥ यस्य त्वं ऊर्ध्वः अध्वराय तिष्ठसि क्षयत्ऽवीरः सः साधते सः अर्वत्ऽभिः सनिता स विपन्युऽभिः सः शूरैः सनिता कृतं ॥ १० ॥ ३० ॥ यस्य अग्निः वपुः गृहे स्तोमं चनः दधीत विश्वऽवार्यः हव्या वा वेविषत् विषः ॥ ११ ॥ विप्रस्य वा स्तुवतः सहसः यहो इति मक्षुऽतमस्य रातिषु अवःऽदेवं उपरिऽमर्त्यं कृधि वसो इति विविदुषः वचः ॥ १२ ॥ यः अग्निं हव्यदातिऽभिः नमःऽभिः वा सुऽदक्षं आऽविवासति गिरा वा अजिरऽशोचिषं ॥ १३ ॥ सम्ऽइधा यः निऽशिती दाशत् अदितिं धामऽभिः अस्य मर्त्यः विश्वा इत् सः धीभिः सुऽभगः जनान् अति द्युम्नैः उद्नःऽइव तारिषत् ॥ १४ ॥ तत् अग्ने द्युम्नं आ भर यत् ससहत् सदने कं चित् अत्रिणं मन्युं जनस्य दुःऽध्यः ॥ १५ ॥ ३१ ॥ येन चष्टे वरुणः मित्रः अर्यमा येन नासत्या भगः वयं तत् ते शवसा गातुवित्ऽ



Digitized by Google

मा इंद्रत्वोता विधेमहि ॥१६॥ ते घेदग्ने स्वाध्यो३ ये त्वा विप्र निदधिरे नृचक्षसं । विप्रासो देव सुक्रतुं ॥१७॥ त इद्वेदिं सुभग त आहुतिं ते सोतुं चक्रिरे दिवि । त इद्वाजेभिर्जिग्युर्महद्धनं ये त्वे कामं न्येरिरे ॥१८॥ भद्रो नो अग्निराहुतो भद्रा रातिः सुभग भद्रो अध्वरः । भद्रा उत प्रशस्तयः ॥१९॥ भद्रं मनः कृणुष्व वृत्रतूर्ये येना समत्सु सासहः । अव स्थिरा तनुहि भूरि शर्धतां वनेमा ते अभिष्टिभिः ॥२०॥३२॥ ईळे गिरा मनुर्हितं यं देवा दूतमरतिं न्येरिरे । यजिष्ठं हव्यवाहनं ॥२१॥ तिग्मजंभाय तरुणाय राजते प्रयो गायस्यग्नये । यः पिंशते सूनृताभिः सुवीर्यमग्निर्घृतेभिराहुतः ॥२२॥ यदी घृतेभिराहुतो वाशीमग्निर्भरत उच्चाव च । असुर इव निर्णिजं ॥२३॥ यो हव्यान्यैरयता मनुर्हितो देव आसा सुगंधिना । विवासते वार्याणि स्वध्वरो होता देवो अमर्त्यः ॥२४॥ यदग्ने मर्त्यस्त्वं स्यामहं मित्रमहो अमर्त्यः । सहसः सूनवाहुत ॥२५॥३३॥ न त्वा रासीयाभिशस्तये वसो न पापत्वाय संत्य । न मे स्तोतामतीवा न दुर्हितः स्यादग्ने न पापया ॥२६॥ पितुर्न पुत्रः सुभृतो दुरोण आ देवाँ एतु प्र णो हविः ॥२७॥ तवाहमग्न ऊतिभिर्नेदिष्ठाभिः सचेय जोषमा वसो । सदा देवस्य मर्त्यः ॥२८॥ तव क्रत्वा सनेयं तव रातिभिरग्ने तव प्रशस्तिभिः । त्वामिदाहुः प्रमतिं वसो ममाग्ने हर्षस्व दातवे ॥२९॥ प्र सो अग्ने तवोतिभिः सुवीराभिस्तिरते वाजभर्मभिः । यस्य त्वं सख्यमावरः ॥३०॥३४॥ तव द्रप्सो नीलवान्वाश ऋत्विय इंधानः सिष्णवा ददे । त्वं महीनामुषसामसि प्रियः क्षपो वस्तुषु राजसि



Digitized by Google

ऽतमाः इंद्रत्वाऽऊताः विधेमहि ॥ १६ ॥ ते घ इत् अग्ने सुऽआध्यः
ये त्वा विप्र निऽदधिरे नृऽचक्षसं विप्रासः देव सुऽक्रतुं ॥ १७ ॥
ते इत् वेदिं सुऽभग ते आऽहुतिं ते सोतुं चक्रिरे दिवि ते इत् वाजे-
भिः जिग्युः महत् धनं ये त्वे कामं निऽएरिरे ॥ १८ ॥ भद्रः नः अ-
ग्निः आऽहुतः भद्रा रातिः सुऽभग भद्रः अध्वरः भद्राः उत प्रऽश-
स्तयः ॥ १९ ॥ भद्रं मनः कृणुष्व वृत्रऽतूर्ये येन समत्ऽसु सासहः अव
स्थिरा तनुहि भूरि शर्धतां वनेम ते अभिष्टिऽभिः ॥ २० ॥ ३२ ॥ ईळे
गिरा मनुःऽहितं यं देवाः दूतं अरतिं निऽएरिरे यजिष्ठं हव्य-
ऽवाहनं ॥ २१ ॥ तिग्मऽजंभाय तरुणाय राजते प्रयः गायसि अ-
ग्नये यः पिंशते सूनृताभिः सुऽवीर्यं अग्निः घृतेभिः आऽहुतः
॥ २२ ॥ यदि घृतेभिः आऽहुतः वाशीं अग्निः भरते उत् च अव च
असुरःऽइव निःऽनिजं ॥ २३ ॥ यः हव्यानि ऐरयत मनुःऽहितः
देवः आसा सुऽगंधिना विवासते वार्याणि सुऽअध्वरः होता
देवः अमर्त्यः ॥ २४ ॥ यत् अग्ने मर्त्यः त्वं स्यां अहं मित्रऽमहः अ-
मर्त्यः सहसः सूनो आऽहुत ॥ २५ ॥ ३३ ॥ न त्वा रासीय अभिऽश-
स्तये वसो न पापऽत्वाय संत्य न मे स्तोता अमतिऽवा न दुः-
ऽहितः स्यात् अग्ने न पापया ॥ २६ ॥ पितुः न पुत्रः सुऽभृतः दुरोणे
आ देवान् एतु प्र नः हविः ॥ २७ ॥ तव अहं अग्ने ऊतिऽभिः नेदि-
ष्ठाभिः सचेय जोषं आ वसो सदा देवस्य मर्त्यः ॥ २८ ॥ तव क्रत्वा
सनेयं तव रातिऽभिः अग्ने तव प्रशस्तिऽभिः त्वां इत् आहुः प्रऽम-
तिं वसो मम अग्ने हर्षस्व दातवे ॥ २९ ॥ प्र सः अग्ने तव ऊति-
ऽभिः सुऽवीराभिः तिरते वाजभर्मऽभिः यस्य त्वं सख्यं आऽवरः
॥ ३० ॥ ३४ ॥ तव द्रप्सः नीलऽवान् वाशः ऋत्वियः इंधानः सि-
ष्णो आ ददे त्वं महीनां उषसां असि प्रियः क्षपः वस्तुषु राजसि

॥३१॥ तमागन्म सोभरयः सहस्रमुष्कं स्वभिष्टिमवसे। सम्राजं त्रासदस्यवं॥३२॥ यस्य ते अग्ने अन्ये अग्नय उपक्षितो वया इव। विपो न द्युम्ना नि युवे जनानां तव क्षत्राणि वर्धयन्॥३३॥ यमादित्यासो अद्रुहः पारं नयथ मर्त्यं। मघोनां विश्वेषां सुदानवः॥३४॥ यूयं राजानः कं चिच्चर्षणीसहः क्षयंतं मानुषाँ अनु। वयं ते वो वरुण मित्रार्यमन्स्यामेदृतस्य रथ्यः॥३५॥ अदान्मे पौरुकुत्स्यः पंचाशतं त्रसदस्युर्वधूनां। मंहिष्ठो अर्यः सत्पतिः॥३६॥ उत मे प्रयियोर्वयियोः सुवास्त्वा अधि तुग्वनि। तिसृणां सप्ततीनां श्यावः प्रणेता भुवद्वसुर्दियानां पतिः॥३७॥३५॥

---

॥२०॥ १–२६ सोभरिः काण्वः ॥ मरुतः ॥ प्रागाथं काकुभं ॥

॥२०॥ आ गंता मा रिषण्यत प्रस्थावानो माप स्थाता समन्यवः। स्थिरा चिन्नमयिष्णवः॥१॥ वीळुपविभिर्मरुत ऋभुक्षण आ रुद्रासः सुदीतिभिः। इषा नो अद्या गता पुरुस्पृहो यज्ञमा सोभरीयवः॥२॥ विद्मा हि रुद्रियाणां शुष्ममुग्रं मरुतां शिमीवतां। विष्णोरेषस्य मीळ्हुषां॥३॥ वि द्वीपानि पापतन्तिष्ठद्दुच्छुनोभे युजंत रोदसी। प्र धन्वान्यैरत शुभ्रखादयो यदेजथ स्वभानवः॥४॥ अच्युता चिद्वो अज्मन्ना नानदति पर्वतासो वनस्पतिः। भूमिर्यामेषु रेजते॥५॥३६॥ अमाय वो मरुतो यातवे द्यौर्जिहीत उत्तरा बृहत्। यत्रा नरो देदिशते तनूष्वा त्वक्षांसि बाह्वोजसः॥६॥ स्वधामनु श्रियं नरो महि त्वेषा अमवंतो वृषप्सवः। वहंते अह्रुतप्सवः॥७॥ गोभिर्वाणो अज्यते सोभरीणां रथे कोशे हिरण्यये। गोबंधवः सुजातास इषे भुजे महांतो नः स्परसे नु॥८॥ प्रति वो वृषदं-



Digitized by Google

॥३१॥ तं आ अगन्म सोभरयः सहस्रऽमुष्कं सुऽअभिष्टिं अवसे संऽराजं त्रासदस्यवं॥३२॥ यस्य ते अग्ने अन्ये अग्नयः उपऽक्षितः वयाःऽइव विपः न द्युम्ना नि युवे जनानां तव क्षत्राणि वर्धयन् ॥३३॥ यं आदित्यासः अद्रुहः पारं नयथ मर्त्यं मघोनां विश्वेषां सुऽदानवः॥३४॥ यूयं राजानः कं चित् चर्षणिऽसहः क्षयंतं मानुषान् अनु वयं ते वः वरुण मित्र अर्यमन् स्याम इत् ऋतस्य रथ्यः॥३५॥ अदात् मे पौरुऽकुत्स्यः पंचाशतं त्रसदस्युः वधूनां मंहिष्ठः अर्यः सत्ऽपतिः॥३६॥ उत मे प्रयियोः वयियोः सुऽवास्त्वाः अधि तुग्वनि तिसृणां सप्ततीनां श्यावः प्रऽनेता भुवत् वसुः दियानां पतिः॥३७॥३५॥

---

॥२०॥ आ गंत मा रिषण्यत प्रऽस्थावानः मा अप स्थात सऽमन्यवः स्थिरा चित् नमयिष्णवः॥१॥ वीळुपविऽभिः मरुतः ऋभुक्षणः आ रुद्रासः सुदीतिऽभिः इषा नः अद्य आ गत पुरुऽस्पृहः यज्ञं आ सोभरीऽयवः॥२॥ विद्म हि रुद्रियाणां शुष्मं उग्रं मरुतां शिमीऽवतां विष्णोः एषस्य मीळ्हुषां॥३॥ वि द्वीपानि पापतन् तिष्ठत् दुच्छुना उभे युजंत रोदसी प्र धन्वानि ऐरत शुभ्रऽखादयः यत् एजथ स्वऽभानवः॥४॥ अच्युता चित् वः अज्मन् आ नानदति पर्वतासः वनस्पतिः भूमिः यामेषु रेजते॥५॥३६॥ अमाय वः मरुतः यातवे द्यौः जिहीते उत्ऽतरा बृहत् यत्र नरः देदिशते तनूषु आ त्वक्षांसि बाहुऽओजसः॥६॥ स्वधां अनु श्रियं नरः महि त्वेषाः अमऽवंतः वृषऽप्सवः वहंते अह्रुतऽप्सवः॥७॥ गोभिः वाणः अज्यते सोभरीणां रथे कोशे हिरण्यये गोऽबंधवः सुऽजातासः इषे भुजे महांतः नः स्परसे नु॥८॥ प्रति वः वृषत्-



Digitized by Google

ज्रयो वृष्णे शर्धाय मारुताय भरध्वं। हव्या वृषप्रयाव्णे ॥९॥
वृषणश्वेन मरुतो वृषप्सुना रथेन वृषनाभिना। आ श्येनासो
न पक्षिणो वृथा नरो हव्या नो वीतये गत ॥१०॥३७॥
समानमंज्येषां वि भ्राजंते रुक्मासो अधि बाहुषु। दविद्युत-
त्यृष्टयः ॥११॥ त उग्रासो वृषण उग्रबाहवो नकिष्टनूषु येतिरे।
स्थिरा धन्वान्यायुधा रथेषु वोऽनीकेष्वधि श्रियः ॥१२॥ येषा-
मर्णो न सप्रथो नाम त्वेषं शश्वतामेकमिद्भुजे। वयो न पित्र्यं
सहः ॥१३॥ तान्वंदस्व मरुतस्ताँ उप स्तुहि तेषां हि धुनीनां।
अराणां न चरमस्तदेषां दाना मह्ना तदेषां ॥१४॥ सुभगः स
व ऊतिष्वास पूर्वासु मरुतो व्युष्टिषु। यो वा नूनमुतासति
॥१५॥३८॥ यस्य वा यूयं प्रति वाजिनो नर आ हव्या वीतये
गथ। अभि ष द्युम्नैरुत वाजसातिभिः सुम्ना वो धूतयो नशत्
॥१६॥ यथा रुद्रस्य सूनवो दिवो वशंत्यसुरस्य वेधसः। युवा-
नस्तथेदसत् ॥१७॥ ये चार्हंति मरुतः सुदानवः स्मन्मीळ्हु-
षश्चरंति ये। अतश्चिदा न उप वस्यसा हृदा युवान आ ववृध्वं
॥१८॥ यून ऊ षु नविष्ठया वृष्णः पावकाँ अभि सोभरे गिरा।
गाय गा इव चर्कृषत् ॥१९॥ साहा ये संति मुष्टिहेव हव्यो
विश्वासु पृत्सु होतृषु। वृष्णश्चंद्रान्न सुश्रवस्तमान् गिरा वंदस्व
मरुतो अह ॥२०॥३९॥ गावश्चिद्घा समन्यवः सजात्येन
मरुतः सबंधवः। रिहते ककुभो मिथः ॥२१॥ मर्तश्चिद्वो
नृतवो रुक्मवक्षस उप भ्रातृत्वमायति। अधि नो गात
मरुतः सदा हि व आपित्वमस्ति निध्रुवि ॥२२॥ मरुतो
मारुतस्य न आ भेषजस्य वहता सुदानवः। यूयं सखायः सप्तयः
॥२३॥ याभिः सिंधुमवथ याभिस्तूर्वथ याभिर्दशस्यथा क्रिविं।



Digitized by Google

ऽअंजयः वृष्णे शर्धाय मारुताय भरध्वं हव्या वृषऽप्रयाव्ने ॥९॥
वृषणश्वेन मरुतः वृषऽप्सुना रथेन वृषऽनाभिना आ श्येनासः
न पक्षिणः वृथा नरः हव्या नः वीतये गत ॥१०॥३७॥ समानं
अंजि एषां वि भ्राजंते रुक्मासः अधि बाहुषु दविद्युतति ऋष्टयः
॥११॥ ते उग्रासः वृषणः उग्रऽबाहवः नकिः तनूषु येतिरे स्थिरा
धन्वानि आयुधा रथेषु वः अनीकेषु अधि श्रियः ॥१२॥ येषां अर्णः
न सऽप्रथः नाम त्वेषं शश्वतां एकं इत् भुजे वयः न पित्र्यं सहः
॥१३॥ तान् वंदस्व मरुतः तान् उप स्तुहि तेषां हि धुनीनां अरा-
णां न चरमः तत् एषां दाना मह्ना तत् एषां ॥१४॥ सुऽभगः सः
वः ऊतिषु आस पूर्वासु मरुतः विऽउष्टिषु यः वा नूनं उत असति
॥१५॥३८॥ यस्य वा यूयं प्रति वाजिनः नरः आ हव्या वीतये गथ
अभि सः द्युम्नैः उत वाजसातिऽभिः सुम्ना वः धूतयः नशत् ॥१६॥
यथा रुद्रस्य सूनवः दिवः वशंति असुरस्य वेधसः युवानः तथा
इत् असत् ॥१७॥ ये च अर्हंति मरुतः सुऽदानवः स्मत् मीळ्हुषः
चरंति ये अतः चित् आ नः उप वस्यसा हृदा युवानः आ ववृध्वं
॥१८॥ यूनः ऊं इति सु नविष्ठया वृष्णः पावकान् अभि सोभरे गिरा
गाय गाःऽइव चर्कृषत् ॥१९॥ सहाः ये संति मुष्टिहाऽइव हव्यः
विश्वासु पृत्ऽसु होतृषु वृष्णः चंद्रान् न सुश्रवःऽतमान् गिरा
वंदस्व मरुतः अह ॥२०॥३९॥ गावः चित् घ सऽमन्यवः सऽजा-
त्येन मरुतः सऽबंधवः रिहते ककुभः मिथः ॥२१॥ मर्तः चित् वः
नृतवः रुक्मऽवक्षसः उप भ्रातृऽत्वं आ अयति अधि नः गात म-
रुतः सदा हि वः आपिऽत्वं अस्ति निऽध्रुवि ॥२२॥ मरुतः मा-
रुतस्य नः आ भेषजस्य वहत सुऽदानवः यूयं सखायः सप्तयः
॥२३॥ याभिः सिंधुं अवथ याभिः तूर्वथ याभिः दशस्यथ क्रिविं



Digitized by Google

मयो नो भूतोतिभिर्मयोभुवः शिवाभिरसचद्विषः ॥२४॥ यत्सिं-
धौ यदसिक्न्यां यत्समुद्रेषु मरुतः सुबर्हिषः । यत्पर्वतेषु भेषजं ॥२५॥
विश्वं पश्यंतो बिभृथा तनूष्वा तेना नो अधि वोचत । क्षमा र-
पो मरुत आतुरस्य न इष्कर्ता विह्रुतं पुनः ॥२६॥४०॥१॥३॥

---

॥२१॥ १–१८ सोभरिः काण्वः ॥ १–१६ इंद्रः । १७.१८ चित्रस्य दानस्तुतिः ॥ प्रागाथं काकुभं ॥

॥२१॥ वयमु त्वामपूर्व्य स्थूरं न कच्चिद्भरंतोऽवस्यवः ।
वाजे चित्रं हवामहे ॥१॥ उप त्वा कर्मन्नूतये स नो युवोग्रश्च-
क्राम यो धृषत् । त्वामिद्ध्यवितारं ववृमहे सखाय इंद्र सान-
सिं ॥२॥ आ याहीम इंदवोऽश्वपते गोपत उर्वरापते ।
सोमं सोमपते पिब ॥३॥ वयं हि त्वा बंधुमंतमबंधवो वि-
प्रास इंद्र येमिम । या ते धामानि वृषभ तेभिरा गहि विश्वेभिः
सोमपीतये ॥४॥ सीदंतस्ते वयो यथा गोश्रीते मधौ मदिरे
विवक्षणे । अभि त्वामिंद्र नोनुमः ॥५॥१॥ अच्छा च त्वैना न-
मसा वदामसि किं मुहुश्चिद्वि दीधयः । संति कामासो हरिवो
ददिष्ट्वं स्मो वयं संति नो धियः ॥६॥ नूत्ना इदिंद्र ते वयमूती
अभूम नहि नू ते अद्रिवः । विद्मा पुरा परीणसः ॥७॥ विद्मा स-
खित्वमुत शूर भोज्यमा ते ता वज्रिन्नीमहे । उतो समस्मिन्ना
शिशीहि नो वसो वाजे सुशिप्र गोमति ॥८॥ यो न इदमिदं पुरा
प्र वस्य आनिनाय तमु वः स्तुषे । सखाय इंद्रमूतये ॥९॥ हर्यश्वं
सत्पतिं चर्षणीसहं स हि ष्मा यो अमंदत । आ तु नः स
वयति गव्यमश्व्यं स्तोतृभ्यो मघवा शतं ॥१०॥२॥ त्वया ह
स्विद्युजा वयं प्रति श्वसंतं वृषभ ब्रुवीमहि । संस्थे जनस्य गो-
मतः ॥११॥ जयेम कारे पुरुहूत कारिणोऽभि तिष्ठेम दूढ्यः ।



Digitized by Google

मर्यः नः भूत ऊतिऽभिः मयःऽभुवः शिवाभिः असचऽद्विषः ॥२४॥ यत् सिंधौ यत् असिक्न्यां यत् समुद्रेषु मरुतः सुऽबर्हिषः यत् पर्वतेषु भेषजं ॥२५॥ विश्वं पश्यंतः बिभृथ तनूषु आ तेन नः अधि वोचत क्षमा रपः मरुतः आतुरस्य नः इष्कर्त विऽह्रुतं पुनरिति ॥२६॥४०॥१॥३॥

---

॥२१॥ वयं ऊं इति त्वां अपूर्व्य स्थूरं न कत् चित् भरंतः अवस्यवः वाजे चित्रं हवामहे ॥१॥ उप त्वा कर्मन् ऊतये सः नः युवा उग्रः चक्राम यः धृषत् त्वां इत् हि अवितारं ववृमहे सखायः इंद्र सानसिं ॥२॥ आ याहि इमे इंदवः अश्वऽपते गोऽपते उर्वराऽपते सोमं सोमऽपते पिब ॥३॥ वयं हि त्वा बंधुऽमंतं अबंधवः विप्रासः इंद्र येमिम या ते धामानि वृषभ तेभिः आ गहि विश्वेभिः सोमऽपीतये ॥४॥ सीदंतः ते वयः यथा गोऽश्रीते मधौ मदिरे विवक्षणे अभि त्वां इंद्र नोनुमः ॥५॥१॥ अच्छ च त्वा एना नमसा वदामसि किं मुहुः चित् वि दीधयः संति कामासः हरिऽवः ददिः त्वं स्मः वयं संति नः धियः ॥६॥ नूत्नाः इत् इंद्र ते वयं ऊती अभूम नहि नु ते अद्रिऽवः विद्म पुरा परीणसः ॥७॥ विद्म सखिऽत्वं उत शूर भोज्यं आ ते ता वज्रिन् ईमहे उतो इति समस्मिन् आ शिशीहि नः वसो इति वाजे सुऽशिप्र गोऽमति ॥८॥ यः नः इदंऽइदं पुरा प्र वस्यः आऽनिनाय तं ऊं इति वः स्तुषे सखायः इंद्रं ऊतये ॥९॥ हरिऽअश्वं सत्ऽपतिं चर्षणिऽसहं सः हि स्म यः अमंदत आ तु नः सः वयति गव्यं अश्व्यं स्तोतृऽभ्यः मघऽवा शतं ॥१०॥२॥ त्वया ह स्वित् युजा वयं प्रति श्वसंतं वृषभ ब्रुवीमहि संऽस्थे जनस्य गोऽमतः ॥११॥ जयेम कारे पुरुऽहूत कारिणः अभि तिष्ठेम दुःऽध्यः



Digitized by Google

नृभिर्वृत्रं हन्याम शूशुयाम चावेरिंद्र प्र णो धियः ॥१२॥ अभ्रा-
तृव्यो अना त्वमनापिरिंद्र जनुषा सनादसि। युधेदापित्वमिच्छसे
॥१३॥ नकी रेवंतं सख्याय विंदसे पीयंति ते सुराश्वः। यदा
कृणोषि नदनुं समूहस्यादित्पितेव हूयसे ॥१४॥ मा ते अमाजुरो
यथा मूरास इंद्र सख्ये त्वावतः। नि षदाम सचा सुते ॥१५॥३॥
मा ते गोदत्र निरराम राधस इंद्र मा ते गृहामहि। दृळ्हा चिदर्यः
प्र मृशाभ्या भर न ते दामान आदभे ॥१६॥ इंद्रो वा घेदियन्मघं
सरस्वती वा सुभगा ददिर्वसु। त्वं वा चित्र दाशुषे ॥१७॥ चित्र
इद्राजा राजका इदन्यके यके सरस्वतीमनु। पर्जन्य इव ततनद्धि
वृष्ट्या सहस्रमयुता ददत् ॥१८॥४॥

---

॥२२॥ १—१८ सोभरिः काण्वः ॥ अश्विनौ ॥ १—६ प्रागाथं। ७ बृहती। ८ अनुष्टुप्।
९.१०.१३—१८ प्रागाथं काकुभं। ११ ककुप्। १२ मध्येज्योतिः ॥

॥२२॥ ओ त्यमह्व आ रथमद्या दंसिष्ठमूतये। यमश्विना
सुहवा रुद्रवर्तनी आ सूर्यायै तस्थथुः ॥१॥ पूर्वायुषं सुहवं
पुरुस्पृहं भुज्युं वाजेषु पूर्व्यं। सचनावंतं सुमतिभिः सोभरे वि-
द्वेषसमनेहसं ॥२॥ इह त्या पुरुभूतमा देवा नमोभिरश्विना।
अर्वाचीना स्ववसे करामहे गंतारा दाशुषो गृहं ॥३॥ युवो
रथस्य परि चक्रमीयत ईर्मान्यद्वामिषण्यति। अस्माँ अच्छा
सुमतिर्वां शुभस्पती आ धेनुरिव धावतु ॥४॥ रथो यो वां
त्रिवंधुरो हिरण्याभीशुरश्विना। परि द्यावापृथिवी भूषति
श्रुतस्तेन नासत्या गतं ॥५॥५॥ दशस्यंता मनवे पूर्व्यं दिवि
यवं वृकेण कर्षथः। ता वामद्य सुमतिभिः शुभस्पती अश्विना
प्र स्तुवीमहि ॥६॥ उप नो वाजिनीवसू यातमृतस्य पथि-
भिः। येभिस्तृक्षिं वृषणा त्रासदस्यवं महे क्षत्राय जिन्वथः ॥७॥



Digitized by Google

नृऽभिः वृत्रं हन्याम शूशुयाम च अवैः इंद्र प्र नः धियः॥१२॥ अ-भ्रातृव्यः अना त्वं अनापिः इंद्र जनुषा सनात् असि युधा इत् आ-पिऽत्वं इच्छसे॥१३॥ नकिः रेवंतं सख्याय विंदसे पीयंति ते सुरा-श्वः यदा कृणोषि नदनुं सं ऊहसि आत् इत् पिताऽइव हूयसे॥१४॥ मा ते अमाऽजुरः यथा मूरासः इंद्र सख्ये त्वाऽवतः नि सदाम सचा सुते॥१५॥३॥ मा ते गोऽदत्र निः अराम राधसः इंद्र मा ते गृहामहि दृळ्हा चित् अर्यः प्र मृश अभि आ भर न ते दामानः आऽदभे॥१६॥ इंद्रः वा घ इत् इयत् मघं सरस्वती वा सुऽभगा ददिः वसु त्वं वा चित्र दाशुषे॥१७॥ चित्रः इत् राजा राजकाः इत् अन्यके यके सरस्वतीं अनु पर्जन्यःऽइव ततनत् हि वृष्ट्या सहस्रं अयुता ददत्॥१८॥४॥

---

॥२२॥ ओ त्यं अह्वे आ रथं अद्य दंसिष्ठं ऊतये यं अश्विना सु-ऽहवा रुद्रऽवर्तनी॰ आ सूर्यायै तस्थथुः॥१॥ पूर्वऽआयुषं सुऽहवं पुरुऽस्पृहं भुज्युं वाजेषु पूर्व्यं सचनाऽवंतं सुमतिऽभिः सोभरे वि-ऽद्वेषसं अनेहसं॥२॥ इह त्या पुरुऽभूतमा देवा नमःऽभिः अश्विना अर्वाचीना सु अवसे करामहे गंतारा दाशुषः गृहं॥३॥ युवोः र-थस्य परि चक्रं ईयते ईर्मा अन्यत् वां इषण्यति अस्मान् अच्छ सुऽमतिः वां शुभः पती आ धेनुःऽइव धावतु॥४॥ रथः यः वां त्रिऽवंधुरः हिरण्यऽअभीशुः अश्विना परि द्यावापृथिवी भूष-ति श्रुतः तेन नासत्या आ गतं॥५॥५॥ दशस्यंता मनवे पूर्व्यं दिवि यवं वृकेण कर्षथः ता वां अद्य सुमतिऽभिः शुभः पती अश्विना प्र स्तुवीमहि॥६॥ उप नः वाजिनीऽवसू॰ यातं ऋतस्य पथि-ऽभिः येभिः तृक्षिं वृषणा त्रासदस्यवं महे क्षत्राय जिन्वथः॥७॥

अयं वामद्रिभिः सुतः सोमो नरा वृषण्वसू। आ यातं सोमपीतये पिबतं दाशुषो गृहे ॥८॥ आ हि रुहतमश्विना रथे कोशे हिरण्यये वृषण्वसू। युंजाथां पीवरीरिषः ॥९॥ याभिः पक्थमवथो याभिरध्रिगुं याभिर्बभ्रुं विजोषसं। ताभिर्नो मक्षू तूयमश्विना गतं भिषज्यतं यदातुरं ॥१०॥६॥ यदध्रिगावो अध्रिगू इदा चिदह्नो अश्विना हवामहे। वयं गीर्भिर्विपन्यवः ॥११॥ ताभिरा यातं वृषणोप मे हवं विश्वप्सुं विश्ववार्यं। इषा मंहिष्ठा पुरुभूतमा नरा याभिः क्रिविं वावृधुस्ताभिरा गतं ॥१२॥ ताविदा चिदहानां तावश्विना वंदमान उप ब्रुवे। ता ऊ नमोभिरीमहे ॥१३॥ ताविद्दोषा ता उषसि शुभस्पती ता यामन्रुद्रवर्तनी। मा नो मर्ताय रिपवे वाजिनीवसू परो रुद्रावति ख्यतं ॥१४॥ आ सुग्म्याय सुग्म्यं प्राता रथेनाश्विना वा सक्षणी। हुवे पितेव सोभरी ॥१५॥७॥ मनोजवसा वृषणा मदच्युता मक्षुंगमाभिरूतिभिः। आरात्ताच्चिद्भूतमस्मे अवसे पूर्वीभिः पुरुभोजसा ॥१६॥ आ नो अश्वावदश्विना वर्तिर्यासिष्टं मधुपातमा नरा। गोमद्दस्रा हिरण्यवत् ॥१७॥ सुप्रावर्गं सुवीर्यं सुष्ठु वार्यमनाधृष्टं रक्षस्विना। अस्मिन्ना वामायाने वाजिनीवसू विश्वा वामानि धीमहि ॥१८॥८॥

---

॥ २३ ॥ १–३० विश्वमना वैयश्वः ॥ अग्निः ॥ उष्णिक् ॥

॥२३॥ ईळिष्वा हि प्रतीव्यं१ यजस्व जातवेदसं। चरिष्णुधूममगृभीतशोचिषं ॥१॥ दामानं विश्वचर्षणेऽग्निं विश्वमनो गिरा। उत स्तुषे विष्पर्धसो रथानां ॥२॥ येषामाबाध ऋग्मियं इषः पृक्षश्च निग्रभे। उपविदा वह्निर्विंदते वसु ॥३॥



Digitized by Google

अयं वां अद्रिऽभिः सुतः सोमः नरा वृषणऽवसू॰ आ यातं सोमऽपीतये पिबतं दाशुषः गृहे॥८॥ आ हि रुहतं अश्विना रथे कोशे हिरण्यये वृषणऽवसू॰ युंजाथां पीवरीः इषः॥९॥ याभिः पक्थं अवथः याभिः अध्रिऽगुं याभिः बभ्रुं विऽजोषसं ताभिः नः मक्षु तूयं अश्विना आ गतं भिषज्यतं यत् आतुरं॥१०॥६॥ यत् अध्रिऽगावः अध्रिऽगू॰ इदा चित् अह्नः अश्विना हवामहे वयं गीःऽभिः विपन्यवः॥११॥ ताभिः आ यातं वृषणा उप मे हवं विश्वऽप्सुं विश्वऽवार्यं इषा मंहिष्ठा पुरुऽभूतमा नरा याभिः क्रिविं ववृधुः ताभिः आ गतं॥१२॥ तौ इदा चित् अहानां तौ अश्विना वंदमानः उप ब्रुवे तौ ऊं इति नमःऽभिः ईमहे॥१३॥ तौ इत् दोषा तौ उषसि शुभः पती इति ता यामन् रुद्रऽवर्तनी॰ मा नः मर्ताय रिपवे वाजिनीऽवसू॰ परः रुद्रौ अति ख्यतं॥१४॥ आ सुग्म्याय सुग्म्यं प्रातः इति रथेन अश्विना वा सक्षणी इति हुवे पिताऽइव सोभरी॥१५॥७॥ मनःऽजवसा वृषणा मदऽच्युता मक्षुंऽगमाभिः ऊतिऽभिः आरात्तात् चित् भूतं अस्मे इति अवसे पूर्वीभिः पुरुऽभोजसा॥१६॥ आ नः अश्वऽवत् अश्विना वर्तिः यासिष्टं मधुऽपातमा नरा गोऽमत् दस्रा हिरण्यऽवत्॥१७॥ सुऽप्रावर्गं सुऽवीर्यं सुष्टु वार्यं अनाधृष्टं रक्षस्विना अस्मिन् आ वां आऽयाने वाजिनीऽवसू॰ विश्वा वामानि धीमहि॥१८॥८॥

---

॥२३॥ ईळिष्व हि प्रतीव्यं यजस्व जातऽवेदसं चरिष्णुऽधूमं अगृभीतऽशोचिषं॥१॥ दामानं विश्वऽचर्षणे अग्निं विश्वऽमनः गिरा उत स्तुषे विऽस्पर्धसः रथानां॥२॥ येषां आऽबाधः ऋग्मियः इषः पृक्षः च निऽग्रभे उपऽविदा वह्निः विंदते वसु॥३॥



Digitized by Google

उदस्य शोचिरस्थाद्दीदियुषो व्य१जरं । तपुर्जम्भस्य सुद्युतो गणश्रियः ॥४॥ उदु तिष्ठ स्वध्वर स्तवानो देव्या कृपा । अभिख्या भासा बृहता शुशुक्वनिः ॥५॥९॥ अग्ने याहि सुशस्तिभिर्हव्या जुह्वान आनुषक् । यथा दूतो बभूथ हव्यवाहनः ॥६॥ अग्निं वः पूर्व्यं हुवे होतारं चर्षणीनां । तमया वाचा गृणे तमु वः स्तुषे ॥७॥ यज्ञेभिरद्भुतक्रतुं यं कृपा सूदयंत इत् । मित्रं न जने सुधितमृतावनि ॥८॥ ऋतावानमृतायवो यज्ञस्य साधनं गिरा । उपो एनं जुजुषुर्नमसस्पदे ॥९॥ अच्छा नो अंगिरस्तमं यज्ञासो यंतु संयतः । होता यो अस्ति विक्ष्वा यशस्तमः ॥१०॥१०॥ अग्ने तव त्ये अजरेंधानासो बृहद्भाः । अश्वा इव वृषणस्तविषीयवः ॥११॥ स त्वं न ऊर्जां पते रयिं रास्व सुवीर्यं । प्राव नस्तोके तनये समत्स्वा ॥१२॥ यद्वा उं विश्पतिः शितः सुप्रीतो मनुषो विशि । विश्वेदग्निः प्रति रक्षांसि सेधति ॥१३॥ श्रुष्ट्यग्ने नवस्य मे स्तोमस्य वीर विश्पते । नि मायिनस्तपुषा रक्षसो दह ॥१४॥ न तस्य मायया चन रिपुरीशीत मर्त्यः । यो अग्नये ददाश हव्यदातिभिः ॥१५॥११॥ व्यश्वस्त्वा वसुविदमुक्षण्युरप्रीणादृषिः । महो राये तमु त्वा समिधीमहि ॥१६॥ उशना काव्यस्त्वा नि होतारमसादयत् । आयजिं त्वा मनवे जातवेदसं ॥१७॥ विश्वे हि त्वा सजोषसो देवासो दूतमक्रत । श्रुष्टी देव प्रथमो यज्ञियो भुवः ॥१८॥ इमं घा वीरो अमृतं दूतं कृण्वीत मर्त्यः । पावकं कृष्णवर्तनिं विहायसं ॥१९॥ तं हुवेम यतस्रुचः सुभासं शुक्रशोचिषं । विशामग्निमजरं प्रत्नमीड्यं ॥२०॥१२॥ यो अस्मै हव्यदातिभिराहुतिं मर्तोऽविधत् । भूरि पोषं स धत्ते वीरवद्यशः ॥२१॥ प्रथमं



Digitized by Google

उत् अस्य शोचिः अस्थात् दीदियुषः वि अजरं तपुःऽजंभस्य सुऽद्युतः गणऽश्रियः ॥४॥ उत् ऊं इति तिष्ठ सुऽअध्वर स्तवानः देव्या कृपा अभिऽख्या भासा बृहता शुशुक्वनिः ॥५॥ ९॥ अग्ने याहि सुशस्तिऽभिः हव्या जुह्वानः आनुषक् यथा दूतः बभूथ हव्यऽवाहनः ॥६॥ अग्निं वः पूर्व्यं हुवे होतारं चर्षणीनां तं अया वाचा गृणे तं ऊं इति वः स्तुषे ॥७॥ यज्ञेभिः अद्भुतऽक्रतुं यं कृपा सूदयंते इत् मिषं न जने सुऽधितं ऋतऽवनि ॥८॥ ऋतऽवानं ऋतऽयवः यज्ञस्य साधनं गिरा उपो इति एनं जुजुषुः नमसः पदे ॥९॥ अच्छ नः अंगिरःऽतमं यज्ञासः यंतु संऽयतः होता यः अस्ति विक्षु आ यशःऽतमः ॥१०॥ १०॥ अग्ने तव त्ये अजर इंधानासः बृहत् भाः अश्वाःऽइव वृषणः तविषीऽयवः ॥११॥ स त्वं नः ऊर्जां पते रयिं रास्व सुऽवीर्यं प्र अव नः तोके तनये समत्ऽसु आ ॥१२॥ यत् वै ऊं इति विश्पतिः शितः सुऽप्रीतः मनुषः विशि विश्वा इत् अग्निः प्रति रक्षांसि सेधति ॥१३॥ श्रुष्टी अग्ने नवस्य मे स्तोमस्य वीर विश्पते नि मायिनः तपुषा रक्षसः दह ॥१४॥ न तस्य मायया चन रिपुः ईशीत मर्त्यः यः अग्नये ददाश हव्यदातिऽभिः ॥१५॥ ११॥ विऽअश्वः त्वा वसुऽविदं उक्षण्युः अप्रीणात् ऋषिः महः राये त ऊं इति त्वा सं इधीमहि ॥१६॥ उशना काव्यः त्वा नि होतारं असादयत् आऽयजिं त्वा मनवे जातऽवेदसं ॥१७॥ विश्वे हि त्वा सऽजोषसः देवासः दूतं अक्रत श्रुष्टी देव प्रथमः यज्ञियः भुवः ॥१८॥ इमं घ वीरः अमृतं दूतं कृण्वीत मर्त्यः पावकं कृष्णऽवर्तनिं विऽहायसं ॥१९॥ तं हुवेम यतऽस्रुचः सुऽभासं शुक्रऽशोचिषं विशां अग्निं अजरं प्रत्नं ईड्यं ॥२०॥ १२॥ यः अस्मै हव्यदातिऽभिः आऽहुतिं मर्तः अविधत् भूरि पोषं सः धत्ते वीरऽवत् यशः ॥२१॥ प्रथमं



Digitized by Google

जातवेदसमग्निं यज्ञेषु पूर्व्यं। प्रति स्रुगेति नमसा हविष्मती॥२२॥ आभिर्विधेमाग्नये ज्येष्ठाभिर्व्यश्ववत्। मंहिष्ठाभिर्मतिभिः शुक्रशोचिषे॥२३॥ नूनमर्च विहायसे स्तोमेभिः स्थूरयूपवत्। ऋषे वैयश्व दम्यायाग्नये॥२४॥ अतिथिं मानुषाणां सूनुं वनस्पतीनां। विप्रा अग्निमवसे प्रत्नमीळते॥२५॥१३॥ महो विश्वाँ अभि षतोऽभि हव्यानि मानुषा। अग्ने नि षत्सि नमसाधि बर्हिषि॥२६॥ वंस्वा नो वार्या पुरु वंस्व रायः पुरुस्पृहः। सुवीर्यस्य प्रजावतो यशस्वतः॥२७॥ त्वं वरो सुषाम्णेऽग्ने जनाय चोदय। सदा वसो रातिं यविष्ठ शश्वते॥२८॥ त्वं हि सुप्रतूरसि त्वं नो गोमतीरिषः। महो रायः सातिमग्ने अपा वृधि॥२९॥ अग्ने त्वं यशा अस्या मित्रावरुणा वह। ऋतावाना सम्राजा पूतदक्षसा॥३०॥१४॥

---

॥२४॥ १–३० विश्वमना वैयश्वः॥ १–२७ इंद्रः। २८–३० वरोः सौषाम्णस्य दानस्तुतिः॥ १–२९ उष्णिक्। ३० अनुष्टुप्॥

॥२४॥ सखाय आ शिषामहि ब्रह्मेंद्राय वज्रिणे। स्तुष ऊ षु वो नृतमाय धृष्णवे॥१॥ शवसा ह्यसि श्रुतो वृत्रहत्येन वृत्रहा। मघैर्मघोनो अति शूर दाशसि॥२॥ स नः स्तवान आ भर रयिं चित्रश्रवस्तमं। निरेके चिद्यो हरिवो वसुर्ददिः॥३॥ आ निरेकमुत प्रियमिंद्र दर्षि जनानां। धृषता धृष्णो स्तवमान आ भर॥४॥ न ते सव्यं न दक्षिणं हस्तं वरंत आमुरः। न परिबाधो हरिवो गविष्टिषु॥५॥१५॥ आ त्वा गोभिरिव व्रजं गीर्भिरृणोम्यद्रिवः। आ स्मा कामं जरितुरा मनः पृण॥६॥ विश्वानि विश्वमनसो धिया नो वृत्रहंतम। उग्र प्रणेतरधि षू वसो गहि॥७॥ वयं ते अस्य वृत्रहन्विद्याम शूर नव्यसः। वसोः स्पार्हस्य पुरुहूत राधसः॥८॥ इंद्र यथा ह्य-



Digitized by Google

जातऽवेदसं अग्निं यज्ञेषु पूर्व्यं प्रति स्रुक् एति नमसा हविष्मती ॥२२॥ आभिः विधेम अग्नये ज्येष्ठाभिः व्यश्वऽवत् मंहिष्ठाभिः मतिऽभिः शुक्रऽशोचिषे ॥२३॥ नूनं अर्च विऽहायसे स्तोमेभिः स्थूरयूपऽवत् ऋषे वैयश्व दम्याय अग्नये ॥२४॥ अतिथिं मानुषाणां सूनुं वनस्पतीनां विप्राः अग्निं अवसे प्रत्नं ईळते ॥२५॥१३॥ महः विश्वान् अभि सतः अभि हव्यानि मानुषा अग्ने नि सत्सि नमसा अधि बर्हिषि ॥२६॥ वंस्व नः वार्या पुरु वंस्व रायः पुरुऽस्पृहः सुऽवीर्यस्य प्रजाऽवतः यशस्वतः ॥२७॥ त्वं वरो सुऽसाम्ने अग्ने जनाय चोदय सदा वसो रातिं यविष्ठ शश्वते ॥२८॥ त्वं हि सुऽप्रतूः असि त्वं नः गोऽमतीः इषः महः रायः सातिं अग्ने अप वृधि ॥२९॥ अग्ने त्वं यशाः असि आ मित्रावरुणा वह ऋतऽवाना संऽराजा पूतऽदक्षसा ॥३०॥१४॥

---

॥२४॥ सखायः आ शिषामहि ब्रह्म इंद्राय वज्रिणे स्तुषे ऊं सु वः नृऽतमाय धृष्णवे ॥१॥ शवसा हि असि श्रुतः वृत्रऽहत्येन वृत्रऽहा मघैः मघोनः अति शूर दाशसि ॥२॥ सः नः स्तवानः आ भर रयिं चित्रश्रवःऽतमं निरेके चित् यः हरिऽवः वसुः ददिः ॥३॥ आ निरेकं उत प्रियं इंद्र दर्षि जनानां धृषता धृष्णो स्तवमानः आ भर ॥४॥ न ते सव्यं न दक्षिणं हस्तं वरंते आऽमुरः न परिऽबाधः हरिऽवः गोऽइष्टिषु ॥५॥१५॥ आ त्वा गोभिःऽइव व्रजं गीःऽभिः ऋणोमि अद्रिऽवः आ स्म कामं जरितुः आ मनः पृण ॥६॥ विश्वानि विश्वऽमनसः धिया नः वृत्रहन्ऽतम उग्र प्रऽनेतः अधि सु वसो गहि ॥७॥ वयं ते अस्य वृत्रऽहन् विद्याम शूर नव्यसः वसोः स्पार्हस्य पुरुऽहूत राधसः ॥८॥ इंद्र यथा हि अ-



Digitized by Google

स्ति तेऽपरीतं नृतो शवः। अमृक्ता रातिः पुरुहूत दाशुषे ॥ ९ ॥ आ वृषस्व महामह महे नृतम राधसे । दृळ्हश्चिद्दृह्य मघवन्मघत्तये ॥ १० ॥ १६ ॥ नू अन्यत्रा चिदद्रिवस्त्वन्नो जग्मुराशसः । मघवञ्छग्धि तव तन्न ऊतिभिः ॥ ११ ॥ नह्यं१ग नृतो त्वदन्यं विंदामि राधसे। राये द्युम्नाय शवसे च गिर्वणः ॥ १२ ॥ एंदुमिंद्राय सिंचत पिबाति सोम्यं मधु। प्र राधसा चोदयाते महित्वना ॥ १३ ॥ उपो हरीणां पतिं दक्षं पृंचंतमब्रवं। नूनं श्रुधि स्तुवतो अश्व्यस्य ॥ १४ ॥ नह्यं१ग पुरा चन जज्ञे वीरतरस्त्वत्। नकी राया नैवथा न भंदना ॥ १५ ॥ १७ ॥ एदु मध्वो मदिंतरं सिंच वाध्वर्यो अंधसः । एवा हि वीरः स्तवते सदावृधः ॥ १६ ॥ इंद्र स्थातर्हरीणां नकिष्टे पूर्व्यस्तुतिं । उदानंश शवसा न भंदना ॥ १७ ॥ तं वो वाजानां पतिमहूमहि श्रवस्यवः। अप्रायुभिर्यज्ञेभिर्वावृधेन्यं ॥ १८ ॥ एतो न्विंद्रं स्तवाम सखायः स्तोम्यं नरं। कृष्टीर्यो विश्वा अभ्यस्त्येक इत् ॥ १९ ॥ अगोरुधाय गविषे द्युक्षाय दस्म्यं वचः। घृतात्स्वादीयो मधुनश्च वोचत ॥ २० ॥ १८ ॥ यस्यामितानि वीर्या३ न राधः पर्येतवे । ज्योतिर्न विश्वमभ्यस्ति दक्षिणा ॥ २१ ॥ स्तुहींद्रं व्यश्ववदनूर्मिं वाजिनं यमं। अर्यो गयं मंहमानं वि दाशुषे ॥ २२ ॥ एवा नूनमुप स्तुहि वैयश्व दशमं नवं। सुविद्वांसं चर्कृत्यं चरणीनां ॥ २३ ॥ वेत्था हि निर्ऋतीनां वज्रहस्त परिवृजं। अहरहः शुंध्युः परिपदामिव ॥ २४ ॥ तदिंद्राव आ भर येना दंसिष्ठ कृत्वने। द्विता कुत्साय शिश्नथो नि चोदय ॥ २५ ॥ १९ ॥ तमु त्वा नूनमीमहे नव्यं दंसिष्ठ सन्यसे। स त्वं नो विश्वा अभिमातीः सक्षणिः ॥ २६ ॥ य ऋक्षादंहसो मुचद्यो वार्या-



Digitized by Google

स्थि॑ ते॒ अप॑रिऽइतं नृतो॒ शवः॑ अमृ॑क्ता रा॒तिः पु॑रुऽहूत॒ दा॒शुषे॑
॥९॥ आ वृ॑षस्व म॒हा॒ऽम॒ह म॒हे नृ॑ऽत॒म॒ राध॑से दृ॒ळ्हः चि॒त् दृ॒ह्य
म॒घ॒ऽव॒न् म॒घत्त॑ये ॥ १० ॥ १६ ॥ नु अ॒न्यत्र॑ चि॒त् अ॒द्रि॒ऽव॒ः त्वत् न॒ः
ज॒ग्मुः आ॒ऽशसः॑ मघ॑ऽवन् श॒ग्धि तव॑ तत् न॒ः ऊ॒तिऽभिः॑ ॥ ११ ॥
न॒हि अं॒ग नृतो॒ त्वत् अ॒न्यं विं॒दामि॑ राध॑से रा॒ये द्यु॒म्नाय॒ शव॑से च॒
गि॒र्व॒णः॒ ॥ १२ ॥ आ इंदुं॑ इंद्राय॑ सिं॒च॒त पिबा॑ति सो॒म्यं मधु॑ प्र राध॑-
सा चो॒द॒या॒ते॒ म॒हि॒ऽत्व॒ना ॥ १३ ॥ उपो॑ हरी॑णां पतिं॑ दक्षं॑ पृं॒चंतं॑
अ॒ब्र॒वं॒ नू॒नं श्रु॒धि॒ स्तु॒व॒तः अ॒श्व्यस्य॑ ॥ १४ ॥ न॒हि अं॒ग पु॒रा च॒न ज॒ज्ञे
वी॒रऽत॑रः त्वत् नकिः॑ रा॒या न॒ ए॒वऽथा॑ न भंद॒ना॑ ॥ १५ ॥ १७ ॥ आ
इत् ऊं॑ मध्वः॑ म॒दिन्ऽत॑रं सिं॒च वा॒ अ॒ध्व॒र्यो॑ अंध॑सः ए॒व हि
वी॒रः स्तव॑ते स॒दा॒ऽवृ॒धः ॥ १६ ॥ इंद्र॑ स्था॒त॒ः ह॒री॒णां॒ नकिः॑ ते॒ पू॒र्व्य-
ऽस्तु॑तिं उत् आ॒नं॒श शव॑सा न भं॒द॒ना ॥ १७ ॥ तं व॒ः वाजा॑नां पतिं॑
अहू॑महि॒ श्र॒व॒स्यवः॑ अप्रा॑युऽभिः य॒ज्ञेभिः॑ व॒वृ॒धेन्यं॑ ॥ १८ ॥ एतो॑
नु इंद्रं॑ स्तवा॑म सखा॑यः स्तोम्यं॑ नरं॑ कृ॒ष्टीः यः विश्वाः॑ अ॒भि अ॒स्ति
एकः॑ इत् ॥ १९ ॥ अगो॑ऽरुधाय॒ गो॒ऽइषे॑ द्यु॒क्षाय॑ दस्म्यं॑ वचः॑ घृ॒तात्
स्वादी॑यः मधु॑नः च॒ वो॒च॒त ॥ २० ॥ १८ ॥ यस्य॑ अमि॑तानि वी॒र्या॑
न राधः॑ परि॑ऽएतवे ज्योतिः॑ न विश्वं॑ अ॒भि अ॒स्ति दक्षि॑णा ॥ २१ ॥
स्तु॒हि इंद्रं॑ व्य॒श्व॒ऽव॒त् अनू॑र्मिं वा॒जिनं॑ यमं॑ अ॒र्यः गयं॑ मंह॑मानं वि
दा॒शुषे॑ ॥ २२ ॥ ए॒व नू॒नं उप॑ स्तु॒हि॒ वैय॑श्व द॒श॒मं नवं॑ सु॒ऽवि॑द्वांसं
च॒र्कृ॒त्यं॑ च॒र॒णी॑नां ॥ २३ ॥ वेत्थ॑ हि निः॑ऽऋतीनां वज्र॑ऽहस्त प॒रि॒-
ऽवृजं॑ अहः॑ऽअहः शुं॒ध्युः प॒रि॒पदा॑ऽइव ॥ २४ ॥ तत् इं॒द्र॒ अवः॑ आ
भ॒र॒ येन॑ दं॒सि॒ष्ठ॒ कृत्व॑ने द्वि॒ता कु॒त्साय॑ शि॒श्नथः॑ नि चो॒द॒य ॥ २५ ॥ १९ ॥
तं ऊं॑ त्वा॒ नू॒नं ई॒म॒हे॒ नव्यं॑ दं॒सि॒ष्ठ॒ सन्य॑से सः त्वं नः॒ विश्वाः॑ अ॒भि-
ऽमा॑तीः स॒क्ष॒णिः ॥ २६ ॥ यः ऋक्षा॑त् अंह॑सः मु॒च॒त् यः वा॒ आर्या॑त्

स्प्त सिंधुषु। वधर्दासस्यं तुविनृम्ण नीनमः ॥२७॥ यथा वरो
सुषाम्णे सनिभ्य आवहो रयिं। व्यश्वेभ्यः सुभगे वाजिनीवति
॥२८॥ आ नार्यस्य दक्षिणा व्यश्वाँ एतु सोमिनः। स्थूरं च राधः
शतवत्सहस्रवत् ॥२९॥ यत्त्वा पृच्छादीजानः कुहया कुहयाकृते।
एषो अपश्रितो वलो गोमतीमव तिष्ठति ॥३०॥२०॥

---

॥ २५ ॥ १–२४ विश्वमना वैयश्वः ॥ १–९. १३–२४ मित्रावरुणौ । १०–१२ विश्वे देवाः ॥
१–२२. २४ उष्णिक् । २३ उष्णिग्गर्भा ॥

॥२५॥ ता वां विश्वस्य गोपा देवा देवेषु यज्ञिया। ऋता-
वाना यजसे पूतदक्षसा ॥१॥ मित्रा तना न रथ्या वरुणो
यश्च सुक्रतुः। सनात्सुजाता तनया धृतव्रता ॥२॥ ता माता
विश्ववेदसासुर्याय प्रमहसा। मही जजानादितिरृतावरी
॥३॥ महांता मित्रावरुणा सम्राजा देवावसुरा। ऋतावाना-
वृतमा घोषतो बृहत् ॥४॥ नपाता शवसो महः सूनू दक्षस्य
सुक्रतू। सृप्रदानू इषो वास्त्वधि क्षितः ॥५॥२१॥ सं या
दानूनि येमथुर्दिव्याः पार्थिवीरिषः। नभस्वतीरा वां चरंतु
वृष्टयः ॥६॥ अधि या बृहतो दिवोऽभि यूथेव पश्यतः। ऋ-
तावाना सम्राजा नमसे हिता ॥७॥ ऋतावाना नि षेदतुः
साम्राज्याय सुक्रतू। धृतव्रता क्षत्रिया क्षत्रमाशतुः ॥८॥ अ-
क्ष्णश्चिद्गातुवित्तरानुल्बणेन चक्षसा। नि चिन्मिषंता नि-
चिरा नि चिक्यतुः ॥९॥ उत नो देव्यदितिरुरुष्यतां नासत्या।
उरुष्यंतु मरुतो वृद्धशवसः ॥१०॥२२॥ ते नो नावमुरुष्यत
दिवा नक्तं सुदानवः। अरिष्यंतो नि पायुभिः सचेमहि ॥११॥
अघ्नते विष्णवे वयमरिष्यंतः सुदानवे। श्रुधि स्वयावन्त्सिंधो
पूर्वचित्तये ॥१२॥ तद्वार्यं वृणीमहे वरिष्ठं गोपयत्यं। मित्रो

सप्त सिंधुषु वधः दासस्य तुविऽनृम्ण नीनमः ॥२७॥ यथा वरो
सुऽसाम्णे सनिऽभ्यः आ अवहः रयिं विऽअश्वेभ्यः सुऽभगे वा-
जिनीऽवति ॥२८॥ आ नार्यस्य दक्षिणा विऽअश्वान् एतु सो-
मिनः स्थूरं च राधः शतऽवत् सहस्रऽवत् ॥२९॥ यत् त्वा पृच्छात्
ईजानः कुहया कुहयाऽकृते एषः अपऽश्रितः वलः गोऽमती
अव तिष्ठति ॥३०॥२०॥

---

॥२५॥ ता वां विश्वस्य गोपा देवा देवेषु यज्ञिया ऋतऽवाना
यजसे पूतऽदक्षसा ॥१॥ मित्रा तना न रथ्या वरुणः यः च सु-
ऽक्रतुः सनात् सुऽजाता तनया धृतऽव्रता ॥२॥ ता माता विश्व-
ऽवेदसा असुर्याय प्रऽमहसा मही जजान अदितिः ऋतऽवरी
॥३॥ महांता मित्रावरुणा संऽराजा देवौ असुरा ऋतऽवानौ
ऋतं आ घोषतः बृहत् ॥४॥ नपाता शवसः महः सूनू॰ दक्षस्य
सुऽक्रतू॰ सुप्रऽदानू॰ इषः वास्तु अधि क्षितः ॥५॥२१॥ सं या
दानूनि येमथुः दिव्याः पार्थिवीः इषः नभस्वतीः आ वां चरंतु
वृष्टयः ॥६॥ अधि या बृहतः दिवः अभि यूथाऽइव पश्यतः ऋ-
तऽवाना संऽराजा नमसे हिता ॥७॥ ऋतऽवाना नि सेदतुः सां-
ऽराज्याय सुऽक्रतू॰ धृतऽव्रता क्षत्रिया क्षत्रं आशतुः ॥८॥ अक्ष्णः
चित् गातुवित्ऽतरा अनुल्बणेन चक्षसा नि चित् मिषंता नि-
ऽचिरा नि चिक्यतुः ॥९॥ उत नः देवी अदितिः उरुष्यतां नास-
त्या उरुष्यंतु मरुतः वृद्धऽशवसः ॥१०॥२२॥ ते नः नावं उरुष्यत
दिवा नक्तं सुऽदानवः अरिष्यंतः नि पायुऽभिः सचेमहि ॥११॥
अघ्नते विष्णवे वयं अरिष्यंतः सुऽदानवे श्रुधि स्वऽयावन् सिंधो॰
पूर्वऽचित्तये ॥१२॥ तत् वार्यं वृणीमहे वरिष्ठं गोपयत्यं मित्रः



Digitized by Google

यत्पांति वरुणो यदर्यमा ॥१३॥ उत नः सिंधुरपां तन्मरुतस्त-
दश्विना। इंद्रो विष्णुर्मीढ्वांसः सजोषसः ॥१४॥ ते हि ष्मा वनुषो
नरोऽभिमातिं कयस्य चित्। तिग्मं न क्षोदः प्रतिघ्नंति भूर्ण-
यः ॥१५॥२३॥ अयमेक इत्था पुरूरु चष्टे वि विश्पतिः। तस्य
व्रतान्यनु वश्चरामसि ॥१६॥ अनु पूर्वाण्योक्या साम्राज्यस्य स-
श्चिम। मित्रस्य व्रता वरुणस्य दीर्घश्रुत् ॥१७॥ परि यो रश्मिना
दिवोऽंतान्ममे पृथिव्याः। उभे आ पप्रौ रोदसी महित्वा ॥१८॥
उदु ष्य शरणे दिवो ज्योतिरयंस्त सूर्यः। अग्निर्न शुक्रः समिधान
आहुतः ॥१९॥ वचो दीर्घप्रसद्मनीशे वाजस्य गोमतः। ईशे हि
पित्वोऽविषस्य दावने ॥२०॥२४॥ तत्सूर्यं रोदसी उभे दोषा व-
स्तोरुप ब्रुवे। भोजेष्वस्माँ अभ्युच्चरा सदा ॥२१॥ ऋज्रमुक्षण्या-
यने रजतं हरयाणे। रथं युक्तमसनाम सुषामणि ॥२२॥ ता मे
अश्व्यानां हरीणां नितोशना। उतो नु कृत्व्यानां नृवाह-
सा ॥२३॥ स्मदभीशू कशावंता विप्रा नविष्ठया मती। महो
वाजिनावर्वंता सचासनं ॥२४॥२५॥

---

॥ २६ ॥ १—२५ विश्वमना वैयश्वो व्यश्वो वांगिरसः ॥ १—१९ अश्विनौ। २०—२५ वायुः ॥
१—१५. २२—२४ उष्णिक्। १६—१९. २१. २५ गायत्री। २० अनुष्टुप् ॥

॥२६॥ युवोरु षू रथं हुवे सधस्तुत्याय सूरिषु। अतूर्तदक्षा
वृषणा वृषण्वसू ॥१॥ युवं वरो सुषाम्णे महे तने नासत्या।
अवोभिर्याथो वृषणा वृषण्वसू ॥२॥ ता वामद्य हवामहे
हव्येभिर्वाजिनीवसू। पूर्वीरिष इषयंतावति क्षपः ॥३॥ आ
वां वाहिष्ठो अश्विना रथो यातु श्रुतो नरा। उप स्तोमान्तुरस्य
दर्शथः श्रिये ॥४॥ जुहुराणा चिदश्विना मन्येथां वृषण्वसू।
युवं हि रुद्रा पर्षथो अति द्विषः ॥५॥२६॥ दस्रा हि विश्व-



Digitized by Google

यत् पांति वरुणः यत् अर्यमा ॥१३॥ उत नः सिंधुः अपां तत् म-
रुतः तत् अश्विना इंद्रः विष्णुः मीढ्वांसः सऽजोषसः ॥१४॥ ते हि
स्म वनुषः नरः अभिऽमातिं कयस्य चित् तिग्मं न क्षोदः प्रति-
ऽघ्नंति भूर्णयः ॥१५॥२३॥ अयं एकः इत्था पुरु उरु चष्टे वि वि-
श्पतिः तस्य व्रतानि अनु वः चरामसि ॥१६॥ अनु पूर्वाणि
ओक्या सांऽराज्यस्य सश्चिम मित्रस्य व्रता वरुणस्य दीर्घऽश्रुत्
॥१७॥ परि यः रश्मिना दिवः अंतान् ममे पृथिव्याः उभे आ
पप्रौ रोदसी महिऽत्वा ॥१८॥ उत् ऊं स्यः शरणे दिवः ज्योतिः
अयंस्त सूर्यः अग्निः न शुक्रः संऽइधानः आऽहुतः ॥१९॥ वचः
दीर्घऽप्रसद्मनि ईशे वाजस्य गोऽमतः ईशे हि पित्वः अविषस्य
दावने ॥२०॥२४॥ तत् सूर्यं रोदसी उभे दोषा वस्तोः उप ब्रुवे
भोजेषु अस्मान् अभि उत् चर सदा ॥२१॥ ऋज्रं उक्षण्यायने
रजतं हरयाणे रथं युक्तं असनाम सुऽसामनि ॥२२॥ ता मे अ-
श्व्यानां हरीणां निऽतोशना उतो नु कृत्व्यानां नृऽवाहसा ॥२३॥
स्मत्ऽअभीशू कशाऽवंता विप्रा नविष्ठया मती महः वाजिनौ
अर्वंता सचा असनं ॥२४॥२५॥

---

॥२६॥ युवोः ऊं सु रथं हुवे सधऽस्तुत्याय सूरिषु अतूर्तऽदक्षा
वृषणा वृषण्ऽवसू ॥१॥ युवं वरो सुऽसाम्ने महे तने नासत्या
अवःऽभिः याथः वृषणा वृषण्ऽवसू ॥२॥ ता वां अद्य हवामहे
हव्येभिः वाजिनीऽवसू पूर्वीः इषः इषयंतौ अति क्षपः ॥३॥
आ वां वाहिष्ठः अश्विना रथः यातु श्रुतः नरा उप स्तोमान् तुर-
स्य दर्शथः श्रिये ॥४॥ जुहुराणा चित् अश्विना आ मन्येथां वृषण्-
ऽवसू युवं हि रुद्रा पर्षथः अति द्विषः ॥५॥२६॥ दस्रा हि विश्वं



Digitized by Google

मानुषद्युम्नमूभिः परिदीयथः। धियंजिन्वा मधुवर्णा शुभस्पती
॥६॥ उप नो यातमश्विना राया विश्वपुषा सह। मघवाना
सुवीरावनपच्युता ॥७॥ आ मे अस्य प्रतीव्य१मिंद्रनासत्या
गतं। देवा देवेभिरद्य सचनस्तमा ॥८॥ वयं हि वां हवामह
उक्षण्यंतो व्यश्ववत्। सुमतिभिरुप विप्राविहा गतं ॥९॥ अ-
श्विना स्वृषे स्तुहि कुवित्ते श्रवतो हवं। नेदीयसः कूळयातः
पणींरुत ॥१०॥२७॥ वैयश्वस्य श्रुतं नरोतो मे अस्य वेदथः।
सजोषसा वरुणो मित्रो अर्यमा ॥११॥ युवादत्तस्य धिष्ण्या
युवानीतस्य सूरिभिः। अहरहर्वृषणा मह्यं शिक्षतं ॥१२॥
यो वां यज्ञेभिरावृतोऽधिवस्त्रा वधूरिव। सपर्यंता शुभे
चक्राते अश्विना ॥१३॥ यो वामुरुव्यचस्तमं चिकेतति
नृपाय्यं। वर्तिरश्विना परि यातमस्मयू ॥१४॥ अस्मभ्यं
सु वृषणवसू यातं वर्तिर्नृपाय्यं। विषुद्रुहेव यज्ञमूहथुर्गिरा
॥१५॥२८॥ वाहिष्ठो वां हवानां स्तोमो दूतो हुवन्नरा।
युवाभ्यां भूत्वश्विना ॥१६॥ यददो दिवो अर्णव इषो वा
मदथो गृहे। श्रुतमिन्मे अमर्त्या ॥१७॥ उत स्या श्वेतया-
वरी वाहिष्ठा वां नदीनां। सिंधुर्हिरण्यवर्तनिः ॥१८॥ स्म-
देतया सुकीर्त्याश्विना श्वेतया धिया। वहेथे शुभ्रयावाना
॥१९॥ युक्ष्वा हि त्वं रथासहा युवस्व पोष्या वसो। आन्नो
वायो मधु पिबास्माकं सवना गहि ॥२०॥२९॥ तव वा-
यवृतस्पते त्वष्टुर्जामातरद्भुत। अवांस्या वृणीमहे ॥२१॥
त्वष्टुर्जामातरं वयमीशानं राय ईमहे। सुतावंतो वायुं द्युम्ना
जनासः ॥२२॥ वायो याहि शिवा दिवो वहस्वा सु स्वश्व्यं।
वहस्व महः पृथुपक्षसा रथे ॥२३॥ त्वां हि सुप्सरस्तमं नृ-



Digitized by Google

आ नु॒षट्ऽम॒नुऽभिः॒ परि॑ऽदीयथः धि॒यंऽजि॑न्वा मधु॑ऽवर्णा शु॒भः
पती॑ ॥ ६ ॥ उप॑ नः॒ या॒तं॒ अ॒श्विना॒ रा॒या वि॒श्वऽपु॑षा स॒ह म॒घऽवा॑-
ना सु॒ऽवीरौ॒ अन॑पऽच्युता ॥ ७ ॥ आ मे॒ अ॒स्य प्र॒ती॒व्यं॑ इंद्र॑नासत्या
ग॒तं दे॒वा दे॒वेभिः॑ अ॒द्य स॒चन॑ःऽतमा ॥ ८ ॥ व॒यं हि वां॒ हवा॑महे उ॒-
क्ष॒ण्यंत॑ः व्यश्व॒ऽवत् सु॒म॒तिऽभिः॑ उप॑ वि॒प्रौ इ॒ह आ ग॒तं॒ ॥ ९ ॥ अ॒-
श्विनौ॑ सु ऋ॒षे॒ स्तु॒हि कु॒वित् ते॒ श्रव॑तः हवं॑ नेदी॑यसः कूळ॒यात॒ः
प॒णीन् उ॒त ॥ १० ॥ २७ ॥ वै॒य॒श्वस्य॑ श्रु॒तं न॒रा॒ उ॒तो॑ मे॒ अ॒स्य वे॒-
द॒थः स॒ऽजोष॑सा वरु॑णः मि॒त्रः अ॒र्य॒मा ॥ ११ ॥ यु॒वाऽद॑त्तस्य धि॒-
ष्ण्या॒ यु॒वाऽनी॑तस्य सू॒रिऽभिः॑ अह॑ःऽअहः वृ॒ष॒णा॒ मह्यं॑ शि॒क्ष॒तं॒
॥ १२ ॥ यः वां॒ य॒ज्ञेभिः॑ आऽवृ॑तः अधि॑ऽवस्त्रा व॒धूःऽइ॑व स॒पर्य॑-
ता॑ शु॒भे च॒क्राते॑ अ॒श्विना॑ ॥ १३ ॥ यः वां॒ उ॒रु॒व्यच॑ःऽतमं चि॒-
केत॑ति नृ॒ऽपाय्यं॑ व॒र्तिः अ॒श्विना॒ परि॑ या॒तं॒ अ॒स्म॒ऽयू ॥ १४ ॥
अ॒स्मभ्यं॑ सु वृ॒ष॒ण्ऽवसू॒ या॒तं व॒र्तिः नृ॒ऽपाय्यं॑ वि॒षु॒द्रुहा॑ऽइव
य॒ज्ञं ऊ॒ह॒थुः॒ गि॒रा ॥ १५ ॥ २८ ॥ वाहि॑ष्ठः वां॒ हवा॑नां॒ स्तोम॑ः दू॒तः
हु॒व॒त् न॒रा॒ यु॒वाभ्यां॑ भू॒तु॒ अ॒श्विना॒ ॥ १६ ॥ यत् अ॒दः दि॒वः अ॒र्ण॒वे
इ॒षः वा॒ मद॑थः गृ॒हे श्रु॒तं इत् मे॒ अ॒म॒र्त्या॒ ॥ १७ ॥ उ॒त स्या श्वे॒त॒ऽया॑-
वरी वाहि॑ष्ठा वां॒ न॒दीनां॑ सिंधु॑ः हिर॑ण्यऽवर्तनिः ॥ १८ ॥ स्मत्
ए॒तया॑ सु॒ऽकी॒र्त्या अ॒श्विना॑ श्वे॒तया॑ धि॒या वहे॑थे शु॒भ्र॒ऽयावा॒ना॒
॥ १९ ॥ यु॒क्ष्व हि त्वं र॑थ॒ऽसहा॑ यु॒वस्व॑ पोष्या॑ व॒सो॒ आत् नः॒ वा॒यो॒
मधु॑ पि॒ब॒ अ॒स्माकं॑ सव॑ना आ ग॒हि॒ ॥ २० ॥ २९ ॥ तव॑ वा॒यो॒
ऋ॒त॒ःऽप॒ते॒ त्वष्टु॑ः जा॒मा॒त॒ः अ॒द्भु॒त॒ अवां॑सि आ वृ॒णी॒म॒हे॒ ॥ २१ ॥
त्वष्टु॑ः जामा॑तरं व॒यं ईशा॑नं रा॒यः ई॒म॒हे॒ सु॒तऽव॑न्तः वा॒युं द्यु॒म्ना
जना॑सः ॥ २२ ॥ वायो॑ या॒हि शि॒व॒ आ दि॒वः वह॑स्व सु सु॒ऽअश्व्य॑
वह॑स्व म॒हः पृ॒थु॒ऽपक्ष॑सा रथे॑ ॥ २३ ॥ त्वां हि सु॒प्सर॑ःऽतमं नृ॒-

सदनेषु हूमहे। ग्रावाणं नाश्वपृष्ठं मंहना॥२४॥ स त्वं नो देव मनसा वायो मंदानो अग्रियः। कृधि वाजाँ अपो धियः॥२५॥३०॥

---

॥ २७ ॥ १—२२ मनुर्वैवस्वतः ॥ विश्वे देवाः ॥ प्रागाथं ॥

॥२७॥ अग्निरुक्थे पुरोहितो ग्रावाणो बर्हिरध्वरे। ऋचा यामि मरुतो ब्रह्मणस्पतिं देवाँ अवो वरेण्यं॥१॥ आ पशुं गासि पृथिवीं वनस्पतीनुषासा नक्तमोषधीः। विश्वे च नो वसवो विश्ववेदसो धीनां भूत प्रावितारः॥२॥ प्र सू न एत्वध्वरो३ग्ना देवेषु पूर्व्यः। आदित्येषु प्र वरुणे धृतव्रते मरुत्सु विश्वभानुषु॥३॥ विश्वे हि ष्मा मनवे विश्ववेदसो भुवन्वृधे रिशादसः। अरिष्टेभिः पायुभिर्विश्ववेदसो यंता नोऽवृकं छर्दिः॥४॥ आ नो अद्य समनसो गंता विश्वे सजोषसः। ऋचा गिरा मरुतो देव्यदिते सदने पस्त्ये महि॥५॥३१॥ अभि प्रिया मरुतो या वो अश्व्या हव्या मित्र प्रयाथन। आ बर्हिरिंद्रो वरुणस्तुरा नर आदित्यासः सदंतु नः॥६॥ वयं वो वृक्तबर्हिषो हितप्रयस आनुषक्। सुतसोमासो वरुण हवामहे मनुष्वदिद्धाग्नयः॥७॥ आ प्र यात मरुतो विष्णो अश्विना पूषन्माकीनया धिया। इंद्र आ यातु प्रथमः सनिष्युभिर्वृषा यो वृत्रहा गृणे॥८॥ वि नो देवासो अद्रुहोऽच्छिद्रं शर्म यच्छत। न यद्दूराद्वसवो नू चिदंतितो वरूथमादधर्षति॥९॥ अस्ति हि वः सजात्यं रिशादसो देवासो अस्त्याप्यं। प्र णः पूर्वस्मै सुविताय वोचत मक्षू सुम्नाय नव्यसे॥१०॥३२॥ इदा हि व उपस्तुतिमिदा वामस्य भक्तये। उप वो विश्ववेदसो नमस्युराँ असृक्ष्यन्यामिव॥११॥ उदु ष्य वः सविता सुप्रणीतयोऽस्थादूर्ध्वो



Digitized by Google

ऽसदनेषु हूमहे ग्रावाणं न अश्वऽपृष्ठं मंहना ॥२४॥ सः त्वं नः देव मनसा वायो मंदानः अग्रियः कृधि वाजान् अपः धियः ॥२५॥३०॥

---

॥२७॥ अग्निः उक्थे पुरःऽहितः ग्रावाणः बर्हिः अध्वरे ऋचा यामि मरुतः ब्रह्मणः पतिं देवान् अवः वरेण्यं ॥१॥ आ पशुं गासि पृथिवीं वनस्पतीन् उषसा नक्तं ओषधीः विश्वे च नः वसवः विश्वऽवेदसः धीनां भूत प्रऽअवितारः ॥२॥ प्र सु नः एतु अध्वरः अग्ना देवेषु पूर्व्यः आदित्येषु प्र वरुणे धृतऽव्रते मरुत्ऽसु विश्वऽभानुषु ॥३॥ विश्वे हि स्म मनवे विश्वऽवेदसः भुवन् वृधे रिशादसः अरिष्टेभिः पायुऽभिः विश्वऽवेदसः यंत नः अवृकं छर्दिः ॥४॥ आ नः अद्य सऽमनसः गंत विश्वे सऽजोषसः ऋचा गिरा मरुतः देवि अदिते सदने पस्त्ये महि ॥५॥३१॥ अभि प्रिया मरुतः या वः अश्व्या हव्या मित्र प्रऽयाथन आ बर्हिः इंद्रः वरुणः तुराः नरः आदित्यासः सदंतु नः ॥६॥ वयं वः वृक्तऽबर्हिषः हितऽप्रयसः आनुषक् सुतऽसोमासः वरुण हवामहे मनुष्वत् इद्धऽअग्नयः ॥७॥ आ प्र यात मरुतः विष्णो अश्विना पूषन् माकीनया धिया इंद्रः आ यातु प्रथमः सनिष्युऽभिः वृषा यः वृत्रऽहा गृणे ॥८॥ वि नः देवासः अद्रुहः अच्छिद्रं शर्म यच्छत न यत् दूरात् वसवः नु चित् अंतितः वरूथं आऽदधर्षति ॥९॥ अस्ति हि वः सऽजात्यं रिशादसः देवासः अस्ति आप्यं प्र नः पूर्वस्मै सुविताय वोचत मक्षु सुम्नाय नव्यसे ॥१०॥३२॥ इदा हि वः उपऽस्तुतिं इदा वामस्य भक्तये उप वः विश्वऽवेदसः नमस्युः आ असृक्षि अन्याऽइव ॥११॥ उत् ऊं स्यः वः सविता सुऽप्रनीतयः अस्थात् ऊर्ध्वः



Digitized by Google

वरेण्यः । नि द्विपादश्चतुष्पादो अर्थिनोऽविश्रन्पतयिष्णवः
॥१२॥ देवंदेवं वोऽवसे देवंदेवमभिष्टये । देवंदेवं हुवेम वाज-
सातये गृणंतो देव्या धिया ॥१३॥ देवासो हि ष्मा मनवे समन्यवो
विश्वे साकं सरातयः । ते नो अद्य ते अपरं तुचे तु नो भवंतु वरि-
वोविदः ॥१४॥ प्र वः शंसाम्यद्रुहः संस्थ उपस्तुतीनां । न तं धूर्ति-
र्वरुण मित्र मर्त्यं यो वो धामभ्योऽविधत् ॥१५॥ प्र स क्षयं तिरते
वि महीरिषो यो वो वराय दाशति । प्र प्रजाभिर्जायते धर्मण-
स्पर्यरिष्टः सर्व एधते ॥१६॥३३॥ ऋते स विंदते युधः सुगेभिर्यात्य-
ध्वनः । अर्यमा मित्रो वरुणः सरातयो यं त्रायंते सजोषसः ॥१७॥
अज्रे चिदस्मै कृणुथा न्यंचनं दुर्गे चिदा सुसरणं । एषा चिदस्मा-
दशनिः परो नु सास्रेधंती वि नश्यतु ॥१८॥ यदद्य सूर्य उद्यति
प्रियक्षत्रा ऋतं दध । यन्निम्रुचि प्रबुधि विश्ववेदसो यद्वा मध्यं-
दिने दिवः ॥१९॥ यद्वाभिपित्वे असुरा ऋतं यते छर्दियेम वि
दाशुषे । वयं तद्वो वसवो विश्ववेदस उप स्थेयाम मध्य आ ॥२०॥
यदद्य सूर उदिते यन्मध्यंदिन आतुचि । वामं धत्थ मनवे वि-
श्ववेदसो जुह्वानाय प्रचेतसे ॥२१॥ वयं तद्वः सम्राज आ वृणीमहे
पुत्रो न बहुपाय्यं । अश्याम तदादित्या जुह्वतो हविर्येन वस्यो-
ऽनशामहै ॥२२॥३४॥

---

॥ २८ ॥ १–५ मनुर्वैवस्वतः ॥ विश्वे देवाः ॥ १–३.५ गायत्री । ४ पुरउष्णिक् ॥

॥२८॥ ये त्रिंशति त्रयस्परो देवासो बर्हिरासदन् । विदन्नह
द्वितासनन् ॥१॥ वरुणो मित्रो अर्यमा स्मद्रातिषाचो अ-
ग्नयः । पत्नीवंतो वषट्कृताः ॥२॥ ते नो गोपा अपाच्यास्त
उदक्त इत्था न्यक् । पुरस्तात्सर्वया विशा ॥३॥ यथा वशंति देवा-



Digitized by Google

वरेण्यः नि द्वि॒ऽपादः॑ चतुः॑ऽपादः अ॒र्थिनः॑ अविंश्रन् प॒त॒यि॒-
ष्णवः॑ ॥ १२ ॥ दे॒वंऽदे॑वं वः॒ अव॑से दे॒वंऽदे॑वं अ॒भिष्ट॑ये दे॒वंऽदे॑वं हु॒-
वेम॒ वाज॑ऽसातये गृ॒णन्तः॑ दे॒व्या धि॒या ॥ १३ ॥ दे॒वासः॑ हि स्म॒ मन॑वे
सऽमन्यवः विश्वे॑ सा॒कं सऽरा॑तयः ते नः॒ अ॒द्य ते अ॒प॒रं तु॒चे तु नः॒
भव॑न्तु वरि॒वः॒ऽविदः॑ ॥ १४ ॥ प्र वः॒ शं॒सा॒मि॒ अ॒द्रुहः॒ सं॒ऽस्थे उप॑ऽस्तु॒-
तीनां न तं धूर्तिः॑ व॒रु॒णा॒ मित्र॒ मर्त्यं॑ यः वः॒ धाम॑ऽभ्यः अवि॑धत्
॥ १५ ॥ प्र सः क्षयं॑ ति॒रते॒ वि म॒हीः इषः॑ यः वः॒ वराय दाश॑ति प्र
प्र॒ऽजाभिः॑ जा॒य॒ते॒ धर्म॑णः परि॑ अरि॑ष्टः सर्वः॑ ए॒ध॒ते॒ ॥ १६ ॥ ३३ ॥ ऋ॒ते
सः वि॒न्द॒ते॒ यु॒धः सु॒ऽगेभिः॑ या॒ति॒ अध्व॑नः अ॒र्य॒मा मि॒त्रः वरु॑णः स-
ऽरा॑तयः यं त्राय॑न्ते स॒ऽजोष॑सः ॥ १७ ॥ अज्रे॑ चि॒त् अ॒स्मै कृ॒णु॒थ॒ नि॒-
ऽअञ्च॑नं दुः॒ऽगे चि॒त् आ सु॒ऽस॒र॒णं ए॒षा चि॒त् अ॒स्मा॒त् अ॒शनिः॑
प॒रः नु सा अस्रे॑धन्ती वि न॒श्य॒तु॒ ॥ १८ ॥ यत् अ॒द्य सूर्ये॑ उ॒त्ऽय॒ति॒
प्रिय॑ऽक्षत्राः ऋ॒तं द॒ध यत् नि॒ऽम्रुचि॑ प्र॒ऽबुधि॑ वि॒श्व॒ऽवे॒द॒सः॒ यत्
वा॒ म॒ध्यंदि॑ने दि॒वः ॥ १९ ॥ यत् वा॒ अ॒भि॒ऽपि॒त्वे अ॒सु॒राः॒ ऋ॒तं य॒ते
छ॒र्दिः येम॒ वि दा॒शुषे॑ व॒यं तत् वः॒ व॒स॒वः॒ वि॒श्व॒ऽवे॒द॒सः॒ उप॑ स्थे॒-
याम॒ मध्ये॑ आ ॥ २० ॥ यत् अ॒द्य सूरे॑ उत्ऽइ॑ते यत् मध्यं॑दिने आ॒-
ऽतुचि॑ वा॒मं ध॒त्थ मन॑वे वि॒श्व॒ऽवे॒द॒सः॒ जुह्वा॑नाय प्र॒ऽचे॑तसे ॥ २१ ॥
व॒यं तत् वः॒ सं॒ऽरा॒जः॒ आ वृ॒णी॒म॒हे॒ पु॒त्रः न ब॒हु॒ऽपाय्यं॑ अ॒श्याम॑
तत् आ॒दि॒त्याः॒ जुह्व॑तः ह॒विः येन॑ वस्यः॑ अ॒नशा॑महै ॥ २२ ॥ ३४ ॥

---

॥ २८ ॥ ये त्रिं॒शति॒ त्रयः॑ प॒रः दे॒वासः॑ ब॒र्हिः आ अस॑दन् वि॒दन्
अह॑ द्वि॒ता अ॒स॒न॒न् ॥ १ ॥ वरु॑णः मि॒त्रः अ॒र्य॒मा स्मद्रा॑तिऽसाचः
अ॒ग्नयः॑ पत्नी॑ऽवन्तः वष॑ट्ऽकृताः ॥ २ ॥ ते न॒ः गो॒पाः अ॒पा॒च्याः॒ ते
उद॑क् ते इ॒त्था न्य॑क् पु॒रस्ता॑त् सर्व॑या वि॒शा ॥ ३ ॥ यथा॑ वश॑न्ति दे॒वाः



Digitized by Google

स्तथेदसन्तदेषां नकिरा मिनत्। अरावा चन मर्त्यः ॥४॥ सप्तानां
सप्त ऋष्टयः सप्त द्युम्नान्येषां। सप्तो अधि श्रियो धिरे ॥५॥३५॥

---

॥ २९ ॥ १—१० मनुर्वैवस्वतः कश्यपो वा मारीचः ॥ विश्वे देवाः ॥ द्विपदा ॥

॥२९॥ बभ्रुरेको विषुणः सूनरो युवांज्यंक्ते हिरण्ययं ॥१॥ यो-
निमेक आ ससाद द्योतनोऽंतर्देवेषु मेधिरः ॥२॥ वाशीमेको
बिभर्ति हस्त आयसीमंतर्देवेषु निध्रुविः ॥३॥ वज्रमेको बिभर्ति
हस्त आहितं तेन वृत्राणि जिघ्नते ॥४॥ तिग्ममेको बिभर्ति हस्त
आयुधं शुचिरुग्रो जलाषभेषजः ॥५॥ पथ एकः पीपाय तस्करो
यथाँ एष वेद निधीनां ॥६॥ त्रीण्येक उरुगायो वि चक्रमे यत्र
देवासो मदंति ॥७॥ विभिर्द्वा चरत एकया सह प्र प्रवासेव वसतः
॥८॥ सदो द्वा चक्राते उपमा दिवि सम्राजा सर्पिरासुती ॥९॥
अर्चंत एके महि साम मन्वत तेन सूर्यमरोचयन् ॥१०॥३६॥

---

॥ ३० ॥ १—४ मनुर्वैवस्वतः ॥ विश्वे देवाः ॥ १ गायत्री । २ पुरउष्णिक् । ३ बृहती । ४ अनुष्टुप् ॥

॥३०॥ नहि वो अस्त्यर्भको देवासो न कुमारकः। विश्वे स-
तोमहांत इत् ॥१॥ इति स्तुतासो असथा रिशादसो ये स्थ त्रयश्च
त्रिंशच्च। मनोर्देवा यज्ञियासः ॥२॥ ते नस्त्राध्वं तेऽवत त उ नो
अधि वोचत। मा नः पथः पित्र्यान्मानवादधि दूरं नैष्ट परावतः
॥३॥ ये देवास इह स्थन विश्वे वैश्वानरा उत। अस्मभ्यं शर्म स-
प्रथो गवेऽश्वाय यच्छत ॥४॥३७॥४॥

---

॥ ३१ ॥ १—१८ मनुर्वैवस्वतः ॥ १—४ ईज्यास्तवो यजमानप्रशंसा च। ५—९ दंपती। १०—१८ दंपत्यो-
राशिषः ॥ १—८. ११—१३ गायत्री। ९. १४ अनुष्टुप्। १० पादनिचृत्। १५—१८ पंक्तिः ॥

॥३१॥ यो यजाति यजात इत्सुनवच्च पचाति च। ब्रह्मे-



Digitized by Google

तथा इत् असत् तत् एषां नकिः आ मिनत् अरावा चन मर्त्यः ॥४॥ सप्तानां सप्त ऋष्टयः सप्त द्युम्नानि एषां सप्तो अधि श्रियः धिरे ॥५॥३५॥

---

॥२९॥ बभ्रुः एकः विषुणः सूनरः युवा अंजि अंक्ते हिरण्ययं ॥१॥ योनिं एकः आ ससाद द्योतनः अंतः देवेषु मेधिरः ॥२॥ वाशीं एकः बिभर्ति हस्ते आयसीं अंतः देवेषु निऽध्रुविः ॥३॥ वज्रं एकः बिभर्ति हस्ते आऽहितं तेन वृत्राणि जिघ्नते ॥४॥ तिग्मं एकः बिभर्ति हस्ते आयुधं शुचिः उग्रः जलाषऽभेषजः ॥५॥ पथः एकः पीपाय तस्करः यथा एषः वेद निऽधीनां ॥६॥ त्रीणि एकः उरुऽगायः वि चक्रमे यत्र देवासः मदंति ॥७॥ विऽभिः द्वा चरतः एकया सह प्र प्रवासाऽइव वसतः ॥८॥ सदः द्वा चक्राते उपऽमा दिवि संऽराजा सर्पिःऽआसुती॰ ॥९॥ अर्चंतः एके महि साम मन्वत तेन सूर्यं अरोचयन् ॥१०॥३६॥

---

॥३०॥ नहि वः अस्ति अर्भकः देवासः न कुमारकः विश्वे सतःऽमहांतः इत् ॥१॥ इति स्तुतासः असथ रिशादसः ये स्थ त्रयः च त्रिंशत् च मनोः देवाः यज्ञियासः ॥२॥ ते नः त्राध्वं ते अवत ते ऊं नः अधि वोचत मा नः पथः पित्र्यात् मानवात् अधि दूरं नैष्ट पराऽवतः ॥३॥ ये देवासः इह स्थन विश्वे वैश्वानराः उत अस्मभ्यं शर्म सऽप्रथः गवे अश्वाय यच्छत ॥४॥३७॥४॥

---

॥३१॥ यः यजाति यजाते इत् सुनवत् च पचाति च ब्रह्मा इत्



Digitized by Google

दिंद्रस्य चाकनत् ॥१॥ पुरोळाशं यो अस्मै सोमं ररत आशिरं। पादित्तं शक्रो अंहसः ॥२॥ तस्य द्युमाँ असद्रथो देवजूतः स शूशुवत्। विश्वा वन्वन्नमित्रिया ॥३॥ अस्य प्रजावती गृहेऽसश्चंती दिवेदिवे। इळा धेनुमती दुहे ॥४॥ या दंपती समनसा सुनुत आ च धावतः। देवासो नित्ययाशिरा ॥५॥३८॥ प्रति प्राशव्याँ इतः सम्यंचा बर्हिराशाते। न ता वाजेषु वायतः ॥६॥ न देवानामपि ह्नुतः सुमतिं न जुगुक्षतः। श्रवो बृहद्विवासतः ॥७॥ पुत्रिणा ता कुमारिणा विश्वमायुर्व्यश्नुतः। उभा हिरण्यपेशसा ॥८॥ वीतिहोत्रा कृतद्वसू दशस्यंतामृताय कं। समूधो रोमशं हतो देवेषु कृणुतो दुवः ॥९॥ आ शर्म पर्वतानां वृणीमहे नदीनां। आ विष्णोः सचाभुवः ॥१०॥३९॥ ऐतु पूषा रयिर्भगः स्वस्ति सर्वधातमः। उरुरध्वा स्वस्तये ॥११॥ अरमतिरनर्वणो विश्वो देवस्य मनसा। आदित्यानामनेह इत् ॥१२॥ यथा नो मित्रो अर्यमा वरुणः संति गोपाः। सुगा ऋतस्य पंथाः ॥१३॥ अग्निं वः पूर्व्यं गिरा देवमीळे वसूनां। सपर्यंतः पुरुप्रियं मित्रं न क्षेत्रसाधसं ॥१४॥ मक्षू देववतो रथः शूरो वा पृत्सु कासु चित्। देवानां य इन्मनो यजमान इयक्षत्यभीदयज्वनो भुवत् ॥१५॥ न यजमान रिष्यसि न सुन्वान न देवयो। देवानां य इन्मनो यजमान इयक्षत्यभीदयज्वनो भुवत् ॥१६॥ नकिष्टं कर्मणा नशन्न प्र योषन्न योषति। देवानां य इन्मनो यजमान इयक्षत्यभीदयज्वनो भुवत् ॥१७॥ असदत्र सुवीर्यमुत त्यदाश्वश्व्यं। देवानां य इन्मनो यजमान इयक्षत्यभीदयज्वनो भुवत् ॥१८॥४०॥२॥



Digitized by Google

इंद्रस्य चाकनत् ॥१॥ पुरोळाशं यः अस्मै सोमं ररते आऽशिरं
पात् इत् तं शक्रः अंहसः ॥२॥ तस्य द्युऽमान् असत् रथः देवऽजूतः
सः शूशुवत् विश्वा वन्वन् अमित्रिया ॥३॥ अस्य प्रजाऽवती गृहे
असश्चंती दिवेऽदिवे इळा धेनुऽमती दुहे ॥४॥ या दंऽपती°
सऽमनसा सुनुतः आ च धावतः देवासः नित्यया आऽशिरा
॥५॥३८॥ प्रति प्राशव्यान् इतः सम्यंचा बर्हिः आशाते न ता
वाजेषु वायतः ॥६॥ न देवानां अपि ह्नुतः सुऽमतिं न जुगुक्षतः
श्रवः बृहत् विवासतः ॥७॥ पुत्रिणा ता कुमारिणा विश्वं आयुः
वि अश्नुतः उभा हिरण्यऽपेशसा ॥८॥ वीतिऽहोत्रा कृतद्ऽवसू°
दशस्यंता अमृताय कं सं ऊधः रोमशं हतः देवेषु कृणुतः दुवः
॥९॥ आ शर्म पर्वतानां वृणीमहे नदीनां आ विष्णोः सचाऽभुवः
॥१०॥३९॥ आ एतु पूषा रयिः भगः स्वस्ति सर्वऽधातमः उरुः
अध्वा स्वस्तये ॥११॥ अरमतिः अनर्वणः विश्वः देवस्य मनसा
आदित्यानां अनेहः इत् ॥१२॥ यथा नः मित्रः अर्यमा वरुणः संति
गोपाः सुऽगाः ऋतस्य पंथाः ॥१३॥ अग्निं वः पूर्व्यं गिरा देवं ईळे
वसूनां सपर्यंतः पुरुऽप्रियं मित्रं न क्षेत्रऽसाधसं ॥१४॥ मक्षु देव-
ऽवतः रथः शूरः वा पृत्ऽसु कासु चित् देवानां यः इत् मनः यज-
मानः इयक्षति अभि इत् अयज्वनः भुवत् ॥१५॥ न यजमान रि-
ष्यसि न सुन्वान न देवऽयो° देवानां यः इत् मनः यजमानः इय-
क्षति अभि इत् अयज्वनः भुवत् ॥१६॥ नकिः तं कर्मणा नशत्
न प्र योषत् न योषति देवानां यः इत् मनः यजमानः इयक्षति
अभि इत् अयज्वनः भुवत् ॥१७॥ असत् अत्र सुऽवीर्यं उत त्यत्
आशुऽअश्व्यं देवानां यः इत् मनः यजमानः इयक्षति अभि इत्
अयज्वनः भुवत् ॥१८॥४०॥२॥



Digitized by Google

॥ ३२ ॥ १–३० मेधातिथिः काण्वः ॥ इंद्रः ॥ गायत्री ॥

॥३२॥ प्र कृतान्यृजीषिणः कण्वा इंद्रस्य गाथया। मदे सोमस्य
वोचत ॥१॥ यः सृबिंदमनर्शनिं पिप्रुं दासमहीशुवं। वधीदुग्रो
रिणन्नपः ॥२॥ न्यर्बुदस्य विष्टपं वर्ष्माणं बृहतस्तिर। कृषे तदिंद्र
पौंस्यं ॥३॥ प्रति श्रुताय वो धृषत्तूर्णाशं न गिरेरधि। हुवे सुशि-
प्रमूतये ॥४॥ स गोरश्वस्य वि व्रजं मंदानः सोम्येभ्यः। पुरं न शूर
दर्षसि ॥५॥१॥ यदि मे रारणः सुत उक्थे वा दधसे चनः। आरा-
दुप स्वधा गहि ॥६॥ वयं घा ते अपि ष्मसि स्तोतार इंद्र गिर्वणः।
त्वं नो जिन्व सोमपाः ॥७॥ उत नः पितुमा भर संरराणो अवि-
क्षितं। मघवन्भूरि ते वसु ॥८॥ उत नो गोमतस्कृधि हिरण्यवतो
अश्विनः। इळाभिः सं रभेमहि ॥९॥ बृबदुक्थं हवामहे सृप्रक-
रस्नमूतये। साधु कृण्वंतमवसे ॥१०॥२॥ यः संस्थे चिच्छतक्रतु-
रादीं कृणोति वृत्रहा। जरितृभ्यः पुरूवसुः ॥११॥ स नः शक्र-
श्चिदा शकद्दानवाँ अंतराभरः। इंद्रो विश्वाभिरूतिभिः ॥१२॥
यो रायो ३ वनिर्महान्त्सुपारः सुन्वतः सखा। तमिंद्रमभि गायत
॥१३॥ आयंतारं महि स्थिरं पृतनासु श्रवोजितं। भूरेरीशान-
मोजसा ॥१४॥ नकिरस्य शचीनां नियंता सूनृतानां। नकिर्व-
क्ता न दादिति ॥१५॥३॥ न नूनं ब्रह्मणामृणं प्राशूनामस्ति सुन्व-
तां। न सोमो अप्रता पपे ॥१६॥ पन्य इदुप गायत पन्य उक्थानि
शंसत। ब्रह्मा कृणोत पन्य इत् ॥१७॥ पन्य आ दर्दिरच्छता सहस्रा
वाज्यवृतः। इंद्रो यो यज्वनो वृधः ॥१८॥ वि षू चर स्वधा अनु
कृष्टीनामन्वाहुवः। इंद्र पिब सुतानां ॥१९॥ पिब स्वधैनवा-
नामुत यस्तुग्र्ये सचा। उतायमिंद्र यस्तव ॥२०॥४॥ अतीहि
मन्युषाविणं सुषुवांसमुपारणे। इमं रातं सुतं पिब ॥२१॥ इहि



Digitized by Google

॥३२॥ प्र कृतानि ऋजीषिणः कण्वाः इंद्रस्य गाथया मदे सो-
मस्य वोचत॥१॥ यः सृबिंदं अनर्शनिं पिप्रुं दासं अहीशुवं वधीत्
उग्रः रिणन् अपः॥२॥ नि अर्बुदस्य विष्टपं वर्ष्माणं बृहतः तिर
कृषे तत् इंद्र पौंस्यं॥३॥ प्रति श्रुताय वः धृषत् तूर्णाशं न गिरेः
अधि हुवे सुऽशिप्रं ऊतये॥४॥ सः गोः अश्वस्य वि व्रजं मंदानः
सोम्येभ्यः पुरं न शूर दर्षसि॥५॥१॥ यदि मे ररणः सुते उक्थे वा
दधसे चनः आरात् उप स्वधा आ गहि॥६॥ वयं घ ते अपि स्मसि
स्तोतारः इंद्र गिर्वणः त्वं नः जिन्व सोमऽपाः॥७॥ उत नः पितुं
आ भर संऽरराणः अविऽक्षितं मघऽवन् भूरि ते वसु॥८॥ उत नः
गोऽमतः कृधि हिरण्यऽवतः अश्विनः इळाभिः सं रभेमहि॥९॥
बृबत्ऽउक्थं हवामहे सृप्रऽकरस्नं ऊतये साधु कृण्वंतं अवसे
॥१०॥२॥ यः संऽस्थे चित् शतऽक्रतुः आत् ईं कृणोति वृत्रऽहा
जरितृऽभ्यः पुरुऽवसुः॥११॥ सः नः शक्रः चित् आ शकत् दान-
ऽवान् अंतरऽआभरः इंद्रः विश्वाभिः ऊतिऽभिः॥१२॥ यः रायः
अवनिः महान् सुऽपारः सुन्वतः सखा तं इंद्रं अभि गायत॥१३॥
आऽयंतारं महिं स्थिरं पृतनासु श्रवःऽजितं भूरेः ईशानं ओजसा
॥१४॥ नकिः अस्य शचीनां निऽयंता सूनृतानां नकिः वक्ता न
दात् इति॥१५॥३॥ न नूनं ब्रह्मणां ऋणं प्राशूनां अस्ति सुन्वतां न
सोमः अप्रता पपे॥१६॥ पन्ये इत् उप गायत पन्ये उक्थानि शंसत
ब्रह्म कृणोत पन्ये इत्॥१७॥ पन्यः आ दर्दिरत् शता सहस्रा वाजी
अवृतः इंद्रः यः यज्वनः वृधः॥१८॥ वि सु चर स्वधाः अनु कृष्टी-
नां अनु आऽहुवः इंद्र पिब सुतानां॥१९॥ पिब स्वऽधैनवानां
उत यः तुग्र्ये सचा उत अयं इंद्र यः तव॥२०॥४॥ अति इहि मन्यु-
ऽसाविनं सुसुऽवांसं उपऽअरणे इमं रातं सुतं पिब॥२१॥ इहि



Digitized by Google

तिस्रः परावतं इहि पंच जनाँ अति। धेना इंद्रावचाकशत्॥२२॥
सूर्यो रश्मिं यथा सृजा त्वा यच्छंतु मे गिरः। निम्नमापो न स-
ध्र्यक्॥२३॥ अध्वर्यवा तु हि षिंच सोमं वीराय शिप्रिणे। भरा
सुतस्य पीतये॥२४॥ य उद्नः फलिगं भिनन्न्य१क्सिंधूँरवासृ-
जत्। यो गोषु पक्वं धारयत्॥२५॥५॥ अहन्वृत्रमृचीषम और्ण-
वाभमहीशुवं। हिमेनाविध्यदर्बुदं॥२६॥ प्र व उग्राय निष्टुरे-
ऽषाळ्हाय प्रसक्षिणे। देवत्तं ब्रह्म गायत॥२७॥ यो विश्वान्यभि
व्रता सोमस्य मदे अंधसः। इंद्रो देवेषु चेतति॥२८॥ इह त्या सध-
माद्या हरी हिरण्यकेश्या। वोळ्हामभि प्रयो हितं॥२९॥ अर्वांचं
त्वा पुरुष्टुत प्रियमेधस्तुता हरी। सोमपेयाय वक्षतः॥३०॥६॥

---

॥३३॥ १—१९ मेध्यातिथिः काण्वः॥ इंद्रः॥ १—१५ बृहती। १६—१८ गायत्री। १९ अनुष्टुप्॥

॥३३॥ वयं घ त्वा सुतावंत आपो न वृक्तबर्हिषः। पवित्रस्य
प्रस्रवणेषु वृत्रहन्परि स्तोतार आसते॥१॥ स्वरंति त्वा सुते
नरो वसो निरेक उक्थिनः। कदा सुतं तृषाण ओक आ गम
इंद्र स्वब्दीव वंसगः॥२॥ कण्वेभिर्धृष्णवा धृषद्वाजं दर्षि
सहस्रिणं। पिशंगरूपं मघवन्विचर्षणे मक्षू गोमंतमीमहे
॥३॥ पाहि गायांधसो मद इंद्राय मेध्यातिथे। यः संमिश्लो
हर्योर्यः सुते सचा वज्री रथो हिरण्ययः॥४॥ यः सुषव्यः सु-
दक्षिण इनो यः सुक्रतुर्गृणे। य आकरः सहस्रा यः शता-
मघ इंद्रो यः पूर्भिदारितः॥५॥७॥ यो धृषितो योऽवृतो
यो अस्ति श्मश्रुषु श्रितः। विभूतद्युम्नश्च्यवनः पुरुष्टुतः क्रत्वा
गौरिव शाकिनः॥६॥ क ईं वेद सुते सचा पिबंतं कद्वयो
दधे। अयं यः पुरो विभिनत्त्योजसा मंदानः शिप्र्यंधसः॥७॥



Digitized by Google

तिस्रः पराऽवतः इहि पंच जनान् अति धेनाः इंद्र अवऽचाकशत् ॥२२॥ सूर्यः रश्मिं यथा सृज आ त्वा यच्छंतु मे गिरः निम्नं आपः न सध्र्यक् ॥२३॥ अध्वर्यो आ तु हि सिंच सोमं वीराय शिप्रिणे भर सुतस्य पीतये ॥२४॥ यः उद्नः फलिऽगं भिनत् न्यक् सिंधून् अवऽअसृजत् यः गोषु पक्वं धारयत् ॥२५॥५॥ अहन् वृत्रं ऋचीषमः और्णऽवाभं अहीशुवं हिमेन अविध्यत् अर्बुदं ॥२६॥ प्र वः उग्राय निःऽतुरे अषाळ्हाय प्रऽसक्षिणे देवत्तं ब्रह्म गायत ॥२७॥ यः विश्वानि अभि व्रता सोमस्य मदे अंधसः इंद्रः देवेषु चेतति ॥२८॥ इह त्या सधऽमाद्या हरी हिरण्यऽकेश्या वोळ्हां अभि प्रयः हितं ॥२९॥ अर्वांचं त्वा पुरुऽस्तुत प्रियमेधऽस्तुता हरी सोमऽपेयाय वक्षतः ॥३०॥६॥

---

॥३३॥ वयं घ त्वा सुतऽवंतः आपः न वृक्तऽबर्हिषः पवित्रस्य प्रऽस्रवणेषु वृत्रऽहन् परि स्तोतारः आसते ॥१॥ स्वरंति त्वा सुते नरः वसो निरेके उक्थिनः कदा सुतं तृषाणः ओकः आ गमः इंद्र स्वब्दीऽइव वंसगः ॥२॥ कण्वेभिः धृष्णो आ धृषत् वाजं दर्षि सहस्रिणं पिशंगऽरूपं मघऽवन् विऽचर्षणे मक्षु गोऽमंतं ईमहे ॥३॥ पाहि गायं अंधसः मदे इंद्राय मेध्यऽअतिथे यः संऽमिश्लः हर्योः यः सुते सचा वज्री रथः हिरण्ययः ॥४॥ यः सुऽसव्यः सुऽदक्षिणः इनः यः सुऽक्रतुः गृणे यः आऽकरः सहस्रा यः शतऽमघः इंद्रः यः पूःऽभित् आरितः ॥५॥७॥ यः धृषितः यः अवृतः यः अस्ति श्मश्रुषु श्रितः विभूतऽद्युम्नः च्यवनः पुरुऽस्तुतः क्रत्वा गौःऽइव शाकिनः ॥६॥ कः ईं वेद सुते सचा पिबंतं कत् वयः दधे अयं यः पुरः विऽभिनत्ति ओजसा मंदानः शिप्री अंधसः ॥७॥



Digitized by Google

दाना मृगो न वारणः पुरुत्रा चरथं दधे। नकिष्ट्वा नि यमदा सुते
गमो महांश्चरस्योजसा ॥८॥ य उग्रः सन्ननिष्टृतः स्थिरो रणाय
संस्कृतः। यदि स्तोतुर्मघवा शृणवद्धवं नेंद्रो योषत्या गमत् ॥९॥
सत्यमित्था वृषेदसि वृषजूतिर्नोऽवृतः। वृषा ह्युग्र शृण्विषे परा-
वति वृषो अर्वावति श्रुतः ॥१०॥८॥ वृषणस्ते अभीशवो वृषा
कशा हिरण्ययी। वृषा रथो मघवन्वृषणा हरी वृषा त्वं शतक्रतो
॥११॥ वृषा सोता सुनोतु ते वृषन्नृजीपिन्ना भर। वृषा दधन्वे
वृषणं नदीष्वा तुभ्यं स्थातर्हरीणां ॥१२॥ एंद्र याहि पीतये मधु
शविष्ठ सोम्यं। नायमच्छा मघवा शृणवद्गिरो ब्रह्मोक्था च
सुक्रतुः ॥१३॥ वहंतु त्वा रथेष्ठामा हरयो रथयुजः। तिरश्चिदर्य
सवनानि वृत्रहन्नन्येषां या शतक्रतो ॥१४॥ अस्माकमद्यांतमं
स्तोमं धिष्व महामह। अस्माकं ते सवना संतु शंतमा मदाय
द्युक्ष सोमपाः ॥१५॥९॥ नहि षस्तव नो मम शास्त्रे अन्यस्य
रण्यति। यो अस्मान्वीर आनयत् ॥१६॥ इंद्रश्चिद्घा तदब्रवी-
त्स्त्रिया अशास्यं मनः। उतो अह क्रतुं रघुं ॥१७॥ सप्ती चिद्घा
मदच्युता मिथुना वहतो रथं। एवेद्धूर्वृष्ण उत्तरा ॥१८॥ अधः
पश्यस्व मोपरि संतरां पादकौ हर। मा ते कशप्लकौ दृशन् स्त्री
हि ब्रह्मा बभूविथ ॥१९॥१०॥

---

॥३४॥ १–१५ नीपातिथिः काण्वः। १६–१८ सहस्रं वसुरोचिषो ऽंगिरसः॥
इंद्रः॥ १–१५ अनुष्टुप्। १६–१८ गायत्री॥

॥३४॥ एंद्र याहि हरिभिरुप कण्वस्य सुष्टुतिं। दिवो अमुष्य
शासतो दिवं यय दिवावसो ॥१॥ आ त्वा ग्रावा वदन्निह
सोमी घोषेण यच्छतु। दिवो अमुष्य शासतो दिवं यय दिवा-
वसो ॥२॥ अत्रा वि नेमिरेषामुरां न धूनुते वृकः। दिवो अ-



Digitized by Google

दाना मृगः न वारणः पुरुऽत्रा चरथं दधे नकिः त्वा नि यमत् आ सुते गमः महान् चरसि ओजसा ॥ ८ ॥ यः उग्रः सन् अनिऽस्तृतः स्थिरः रणाय संस्कृतः यदि स्तोतुः मघऽवा शृणवत् हवं न इंद्रः योषति आ गमत् ॥ ९ ॥ सत्यं इत्था वृषा इत् असि वृषऽजूतिः नः अवृतः वृषा हि उग्र शृण्विषे पराऽवति वृषो॑ अर्वाऽवति श्रुतः ॥ १० ॥ ८ ॥ वृषणः ते अभीशवः वृषा कशा हिरण्ययी वृषा रथः मघऽवन् वृषणा हरी॑ वृषा त्वं शतऽक्रतो॰ ॥ ११ ॥ वृषा सोता सुनोतु ते वृषन् ऋजीपिन् आ भर वृषा दधन्वे वृषणं नदीषु आ तुभ्यं स्थातः हरीणां ॥ १२ ॥ आ इंद्र याहि पीतये मधु शविष्ठ सोम्यं न अयं अच्छ मघऽवा शृणवत् गिरः ब्रह्म उक्था च सुऽक्रतुः ॥ १३ ॥ वहंतु त्वा रथेऽस्थां आ हरयः रथऽयुजः तिरः चित् अर्यं सवनानि वृत्रऽहन् अन्येषां या शतऽक्रतो॰ ॥ १४ ॥ अस्माकं अद्य अंतमं स्तोमं धिष्व महाऽमह अस्माकं ते सवना संतु शंऽतमा मदाय द्युक्ष सोमऽपाः ॥ १५ ॥ ९ ॥ नहि सः तव नो॑ मम शास्त्रे अन्यस्य रण्यंति यः अस्मान् वीरः आ अनयत् ॥ १६ ॥ इंद्रः चित् घ तत् अब्रवीत् स्त्रियाः अशास्यं मनः उतो॑ अह क्रतुं रघुं ॥ १७ ॥ सप्ती॑ चित् घ मदऽच्युता मिथुना वहतः रथं एव इत् धूः वृष्णः उत्ऽतरा ॥ १८ ॥ अधः पश्यस्व मा उपरि संऽतरां पादकौ हर मा ते कशऽप्लकौ दृशन् स्त्री हि ब्रह्मा बभूविथ ॥ १९ ॥ १० ॥

---

॥ ३४ ॥ आ इंद्र याहि हरिऽभिः उप कण्वस्य सुऽस्तुतिं दिवः अमुष्य शासतः दिवं यय दिवाऽवसो॰ ॥ १ ॥ आ त्वा ग्रावा वदन् इह सोमी घोषेण यच्छतु दिवः अमुष्य शासतः दिवं यय दिवाऽवसो॰ ॥ २ ॥ अत्र वि नेमिः एषां उरां न धूनुते वृकः दिवः अ-



Digitized by Google

मुष्य शासतो दिवं यय दिवावसो ॥ ३ ॥ आ त्वा कण्वा इहा-
वसे हवंते वाजसातये । दिवो अमुष्य शासतो दिवं यय दिवा-
वसो ॥ ४ ॥ दधामि ते सुतानां वृष्णे न पूर्वपाय्यं । दिवो अमुष्य
शासतो दिवं यय दिवावसो ॥ ५ ॥ ११ ॥ स्मत्पुरंधिर्न आ गहि
विश्वतोधीर्न ऊतये । दिवो अमुष्य शासतो दिवं यय दि-
वावसो ॥ ६ ॥ आ नो याहि महेमते सहस्रोते शतामघ ।
दिवो अमुष्य शासतो दिवं यय दिवावसो ॥ ७ ॥ आ त्वा होता
मनुर्हितो देवत्रा वक्षदीड्यः । दिवो अमुष्य शासतो दिवं यय
दिवावसो ॥ ८ ॥ आ त्वा मदच्युता हरी श्येनं पक्षेव वक्ष-
तः । दिवो अमुष्य शासतो दिवं यय दिवावसो ॥ ९ ॥ आ या-
ह्यर्य आ परि स्वाहा सोमस्य पीतये । दिवो अमुष्य शासतो
दिवं यय दिवावसो ॥ १० ॥ १२ ॥ आ नो याह्युपश्रुत्युक्थेषु
रणया इह । दिवो अमुष्य शासतो दिवं यय दिवावसो ॥ ११ ॥
सरूपैरा सु नो गहि संभृतैः संभृताश्वः । दिवो अमुष्य शासतो
दिवं यय दिवावसो ॥ १२ ॥ आ याहि पर्वतेभ्यः समुद्रस्या-
धि विष्टपः । दिवो अमुष्य शासतो दिवं यय दिवावसो ॥ १३ ॥
आ नो गव्यान्यश्व्या सहस्रा शूर दर्दृहि । दिवो अमुष्य शासतो
दिवं यय दिवावसो ॥ १४ ॥ आ नः सहस्रशो भरायुतानि श-
तानि च । दिवो अमुष्य शासतो दिवं यय दिवावसो ॥ १५ ॥ आ
यदिंद्रश्च दद्वहे सहस्रं वसुरोचिषः । ओजिष्ठमश्व्यं पशुं ॥ १६ ॥
य ऋज्रा वातरंहसोऽरुषासो रघुष्यदः । भ्राजंते सूर्या इव
॥ १७ ॥ पारावतस्य रातिषु द्रवच्चक्रेष्वाशुषु । तिष्ठं वनस्य
मध्य आ ॥ १८ ॥ १३ ॥



Digitized by Google

मुष्य शासतः दिवं यय दिवाऽवसो॰ ॥३॥ आ त्वा कण्वाः इह अ-
वसे हवंते वाजऽसातये दिवः अमुष्य शासतः दिवं यय दिवा-
ऽवसो॰ ॥४॥ दधामि ते सुतानां वृष्णे न पूर्वऽपाय्यं दिवः अमुष्य
शासतः दिवं यय दिवाऽवसो॰ ॥५॥११॥ स्मत्ऽपुरंधिः नः आ
गहि विश्वतःऽधीः नः ऊतये दिवः अमुष्य शासतः दिवं यय दि-
वाऽवसो॰ ॥६॥ आ नः याहि महेऽमते सहस्रऽऊते शतऽमघ
दिवः अमुष्य शासतः दिवं यय दिवाऽवसो॰ ॥७॥ आ त्वा होता
मनुःऽहितः देवऽत्रा वक्षत् ईड्यः दिवः अमुष्य शासतः दिवं यय
दिवाऽवसो॰ ॥८॥ आ त्वा मदऽच्युता हरी श्येनं पक्षाऽइव व-
क्षतः दिवः अमुष्य शासतः दिवं यय दिवाऽवसो॰ ॥९॥ आ याहि
अर्यः आ परि स्वाहा सोमस्य पीतये दिवः अमुष्य शासतः दिवं
यय दिवाऽवसो॰ ॥१०॥१२॥ आ नः याहि उपऽश्रुति उक्थेषु
रणय इह दिवः अमुष्य शासतः दिवं यय दिवाऽवसो॰ ॥११॥ स-
ऽरूपैः आ सु नः गहि संऽभृतैः संभृतऽअश्वः दिवः अमुष्य शास-
तः दिवं यय दिवाऽवसो॰ ॥१२॥ आ याहि पर्वतेभ्यः समुद्रस्य
अधि विष्टपः दिवः अमुष्य शासतः दिवं यय दिवाऽवसो॰ ॥१३॥
आ नः गव्यानि अश्व्या सहस्रा शूर दर्हहि दिवः अमुष्य शासतः
दिवं यय दिवाऽवसो॰ ॥१४॥ आ नः सहस्रऽशः भर अयुतानि श-
तानि च दिवः अमुष्य शासतः दिवं यय दिवाऽवसो॰ ॥१५॥ आ
यत् इंद्रः च दद्वहे सहस्रं वसुऽरोचिषः ओजिष्ठं अश्व्यं पशुं ॥१६॥
ये ऋज्राः वातऽरंहसः अरुषासः रघुऽस्यदः भ्राजंते सूर्याःऽइव
॥१७॥ पारावतस्य रातिषु द्रवत्ऽचक्रेषु आशुषु तिष्ठं वनस्य
मध्ये आ ॥१८॥१३॥



Digitized by Google

॥३५॥ १–२४ श्यावाश्वः ॥ अश्विनौ ॥ १–२१ उपरिष्टाज्ज्योतिः । २२.२४ पंक्तिः ।
२३ महाबृहती ॥

॥३५॥ अग्निनेंद्रेण वरुणेन विष्णुनादित्यै रुद्रैर्वसुभिः सचा-
भुवा। सजोषसा उषसा सूर्येण च सोमं पिबतमश्विना ॥१॥ वि-
श्वाभिर्धीभिर्भुवनेन वाजिना दिवा पृथिव्याद्रिभिः सचाभुवा।
सजोषसा उषसा सूर्येण च सोमं पिबतमश्विना ॥२॥ विश्वैर्देवै-
स्त्रिभिरेकादशैरिहाद्भिर्मरुद्भिर्भृगुभिः सचाभुवा। सजोषसा उ-
षसा सूर्येण च सोमं पिबतमश्विना ॥३॥ जुषेथां यज्ञं बोधतं
हवस्य मे विश्वेह देवौ सवनाव गच्छतं। सजोषसा उषसा सूर्येण
चेषं नो वोळ्हमश्विना ॥४॥ स्तोमं जुषेथां युवशेव कन्यनां वि-
श्वेह देवौ सवनाव गच्छतं। सजोषसा उषसा सूर्येण चेषं नो
वोळ्हमश्विना ॥५॥ गिरो जुषेथामध्वरं जुषेथां विश्वेह देवौ
सवनाव गच्छतं। सजोषसा उषसा सूर्येण चेषं नो वोळ्हम-
श्विना ॥६॥१४॥ हारिद्रवेव पतथो वनेदुप सोमं सुतं महिषेवाव
गच्छथः। सजोषसा उषसा सूर्येण च त्रिर्वर्तिर्यातमश्विना ॥७॥
हंसाविव पतथो अध्वगाविव सोमं सुतं महिषेवाव गच्छथः।
सजोषसा उषसा सूर्येण च त्रिर्वर्तिर्यातमश्विना ॥८॥ श्येनाविव
पतथो हव्यदातये सोमं सुतं महिषेवाव गच्छथः। सजोषसा
उषसा सूर्येण च त्रिर्वर्तिर्यातमश्विना ॥९॥ पिबतं च तृप्णुतं चा
च गच्छतं प्रजां च धत्तं द्रविणं च धत्तं। सजोषसा उषसा सूर्येण
चोर्जं नो धत्तमश्विना ॥१०॥ जयतं च प्र स्तुतं च प्र चावतं प्रजां
च धत्तं द्रविणं च धत्तं। सजोषसा उषसा सूर्येण चोर्जं नो धत्तम-
श्विना ॥११॥ हतं च शत्रून्यततं च मित्रिणः प्रजां च धत्तं द्रविणं च
धत्तं। सजोषसा उषसा सूर्येण चोर्जं नो धत्तमश्विना ॥१२॥१५॥



Digitized by Google

॥३५॥ अग्निना इंद्रेण वरुणेन विष्णुना आदित्यैः रुद्रैः वसुऽभिः सचाऽभुवा सऽजोषसौ उषसा सूर्येण च सोमं पिबतं अश्विना ॥१॥ विश्वाभिः धीभिः भुवनेन वाजिना दिवा पृथिव्या अद्रिऽभिः सचाऽभुवा सऽजोषसौ उषसा सूर्येण च सोमं पिबतं अश्विना ॥२॥ विश्वैः देवैः त्रिऽभिः एकादशैः इह अत्ऽभिः मरुत्ऽभिः भृगुऽभिः सचाऽभुवा सऽजोषसौ उषसा सूर्येण च सोमं पिबतं अश्विना ॥३॥ जुषेथां यज्ञं बोधतं हवस्य मे विश्वा इह देवौ सवना अव गच्छतं सऽजोषसौ उषसा सूर्येण च आ इषं नः वोळ्हं अश्विना ॥४॥ स्तोमं जुषेथां युवशाऽइव कन्यनां विश्वा इह देवौ सवना अव गच्छतं सऽजोषसौ उषसा सूर्येण च आ इषं नः वोळ्हं अश्विना ॥५॥ गिरः जुषेथां अध्वरं जुषेथां विश्वा इह देवौ सवना अव गच्छतं सऽजोषसौ उषसा सूर्येण च आ इषं नः वोळ्हं अश्विना ॥६॥१४॥ हारिद्रवाऽइव पतथः वना इत् उप सोमं सुतं महिषाऽइव अव गच्छथः सऽजोषसौ उषसा सूर्येण च त्रिः वर्तिः यातं अश्विना ॥७॥ हंसौऽइव पतथः अध्वगौऽइव सोमं सुतं महिषाऽइव अव गच्छथः सऽजोषसौ उषसा सूर्येण च त्रिः वर्तिः यातं अश्विना ॥८॥ श्येनौऽइव पतथः हव्यऽदातये सोमं सुतं महिषाऽइव अव गच्छथः सऽजोषसौ उषसा सूर्येण च त्रिः वर्तिः यातं अश्विना ॥९॥ पिबतं च तृप्णुतं च आ च गच्छतं प्रऽजां च धत्तं द्रविणं च धत्तं सऽजोषसौ उषसा सूर्येण च ऊर्जं नः धत्तं अश्विना ॥१०॥ जयतं च प्र स्तुतं च प्र च अवतं प्रऽजां च धत्तं द्रविणं च धत्तं सऽजोषसौ उषसा सूर्येण च ऊर्जं नः धत्तं अश्विना ॥११॥ हतं च शत्रून् यततं च मित्रिणः प्रऽजां च धत्तं द्रविणं च धत्तं सऽजोषसौ उषसा सूर्येण च ऊर्जं नः धत्तं अश्विना ॥१२॥१५॥



Digitized by Google

मित्रावरुणवंता उत धर्मवंता मरुत्वंता जरितुर्गच्छथो हवं। सजोषसा उषसा सूर्येण चादित्यैर्यातमश्विना ॥ १३ ॥ अंगिरस्वंता उत विष्णुवंता मरुत्वंता जरितुर्गच्छथो हवं। सजोषसा उषसा सूर्येण चादित्यैर्यातमश्विना ॥ १४ ॥ ऋभुमंता वृषणा वाजवंता मरुत्वंता जरितुर्गच्छथो हवं। सजोषसा उषसा सूर्येण चादित्यैर्यातमश्विना ॥ १५ ॥ ब्रह्म जिन्वतमुत जिन्वतं धियो हतं रक्षांसि सेधतममीवाः। सजोषसा उषसा सूर्येण च सोमं सुन्वतो अश्विना ॥ १६ ॥ क्षत्रं जिन्वतमुत जिन्वतं नॄन्हतं रक्षांसि सेधतममीवाः। सजोषसा उषसा सूर्येण च सोमं सुन्वतो अश्विना ॥ १७ ॥ धेनूर्जिन्वतमुत जिन्वतं विशो हतं रक्षांसि सेधतममीवाः। सजोषसा उषसा सूर्येण च सोमं सुन्वतो अश्विना ॥ १८ ॥ १६ ॥ अत्रेरिव शृणुतं पूर्व्यस्तुतिं श्यावाश्वस्य सुन्वतो मदच्युता। सजोषसा उषसा सूर्येण चाश्विना तिरोअह्न्यं ॥ १९ ॥ सर्गाँ इव सृजतं सुष्टुतीरुप श्यावाश्वस्य सुन्वतो मदच्युता। सजोषसा उषसा सूर्येण चाश्विना तिरोअह्न्यं ॥ २० ॥ रश्मीँरिव यच्छतमध्वराँ उप श्यावाश्वस्य सुन्वतो मदच्युता। सजोषसा उषसा सूर्येण चाश्विना तिरोअह्न्यं ॥ २१ ॥ अर्वाग्रथं नि यच्छतं पिबतं सोम्यं मधु। आ यातमश्विना गतमवस्युर्वामहं हुवे धत्तं रत्नानि दाशुषे ॥ २२ ॥ नमोवाके प्रस्थिते अध्वरे नरा विवक्षणस्य पीतये। आ यातमश्विना गतमवस्युर्वामहं हुवे धत्तं रत्नानि दाशुषे ॥ २३ ॥ स्वाहाकृतस्य तृंपतं सुतस्य देवावंधसः। आ यातमश्विना गतमवस्युर्वामहं हुवे धत्तं रत्नानि दाशुषे ॥ २४ ॥ १७ ॥



Digitized by Google

मित्रावरुणाऽवंता उत धर्मऽवंता मरुत्वंता जरितुः गच्छथः हवं सऽजोषसौ उषसा सूर्येण च आदित्यैः यातं अश्विना ॥१३॥ अंगिरस्वंतौ उत विष्णुऽवंता मरुत्वंता जरितुः गच्छथः हवं सऽजोषसौ उषसा सूर्येण च आदित्यैः यातं अश्विना ॥१४॥ ऋभुऽमंता वृषणा वाजऽवंता मरुत्वंता जरितुः गच्छथः हवं सऽजोषसौ उषसा सूर्येण च आदित्यैः यातं अश्विना ॥१५॥ ब्रह्म जिन्वतं उत जिन्वतं धियः हतं रक्षांसि सेधतं अमीवाः सऽजोषसौ उषसा सूर्येण च सोमं सुन्वतः अश्विना ॥१६॥ क्षत्रं जिन्वतं उत जिन्वतं नॄन् हतं रक्षांसि सेधतं अमीवाः सऽजोषसौ उषसा सूर्येण च सोमं सुन्वतः अश्विना ॥१७॥ धेनूः जिन्वतं उत जिन्वतं विशः हतं रक्षांसि सेधतं अमीवाः सऽजोषसौ उषसा सूर्येण च सोमं सुन्वतः अश्विना ॥१८॥१६॥ अत्रेःऽइव शृणुतं पूर्व्यऽस्तुतिं श्यावऽअश्वस्य सुन्वतः मदऽच्युता सऽजोषसौ उषसा सूर्येण च अश्विना तिरःऽअह्न्यं ॥१९॥ सर्गान्ऽइव सृजतं सुऽस्तुतीः उप श्यावऽअश्वस्य सुन्वतः मदऽच्युता सऽजोषसौ उषसा सूर्येण च अश्विना तिरःऽअह्न्यं ॥२०॥ रश्मीन्ऽइव यच्छतं अध्वरान् उप श्यावऽअश्वस्य सुन्वतः मदऽच्युता सऽजोषसौ उषसा सूर्येण च अश्विना तिरःऽअह्न्यं ॥२१॥ अर्वाक् रथं नि यच्छतं पिबतं सोम्यं मधु आ यातं अश्विना आ गतं अवस्युः वां अहं हुवे धत्तं रत्नानि दाशुषे ॥२२॥ नमःऽवाके प्रऽस्थिते अध्वरे नरा विवक्षणस्य पीतये आ यातं अश्विना आ गतं अवस्युः वां अहं हुवे धत्तं रत्नानि दाशुषे ॥२३॥ स्वाहाऽकृतस्य तृंपतं सुतस्य देवौ अंधसः आ यातं अश्विना आ गतं अवस्युः वां अहं हुवे धत्तं रत्नानि दाशुषे ॥ २४॥१७॥



Digitized by Google

॥ ३६ ॥ १–७ श्यावाश्वः ॥ इंद्रः ॥ १–६ शक्वरी । ७ महापंक्तिः ॥

॥३६॥ अवितासि सुन्वतो वृक्तबर्हिषः पिबा सोमं मदाय कं शतक्रतो। यं ते भागमधारयन्विश्वाः सेहानः पृतना उरु ज्रयः समप्सुजिन्मरुत्वाँ इंद्र सत्पते ॥१॥ प्राव स्तोतारं मघवन्नव त्वां पिबा सोमं मदाय कं शतक्रतो। यं ते भागमधारयन्विश्वाः सेहानः पृतना उरु ज्रयः समप्सुजिन्मरुत्वाँ इंद्र सत्पते ॥२॥ ऊर्जा देवाँ अवस्योजसा त्वां पिबा सोमं मदाय कं शतक्रतो। यं ते भागमधारयन्विश्वाः सेहानः पृतना उरु ज्रयः समप्सुजिन्मरुत्वाँ इंद्र सत्पते ॥३॥ जनिता दिवो जनिता पृथिव्याः पिबा सोमं मदाय कं शतक्रतो। यं ते भागमधारयन्विश्वाः सेहानः पृतना उरु ज्रयः समप्सुजिन्मरुत्वाँ इंद्र सत्पते ॥४॥ जनिताश्वानां जनिता गवामसि पिबा सोमं मदाय कं शतक्रतो। यं ते भागमधारयन्विश्वाः सेहानः पृतना उरु ज्रयः समप्सुजिन्मरुत्वाँ इंद्र सत्पते ॥५॥ अत्रीणां स्तोममद्रिवो महस्कृधि पिबा सोमं मदाय कं शतक्रतो। यं ते भागमधारयन्विश्वाः सेहानः पृतना उरु ज्रयः समप्सुजिन्मरुत्वाँ इंद्र सत्पते ॥६॥ श्यावाश्वस्य सुन्वतस्तथा शृणु यथाशृणोरत्रेः कर्माणि कृण्वतः। प्र त्रसदस्युमाविथ त्वमेक इन्नृषाह्य इंद्र ब्रह्माणि वर्धयन् ॥७॥१८॥

---

॥ ३७ ॥ १–७ श्यावाश्वः ॥ इंद्रः ॥ १ अतिजगती । २–७ महापंक्तिः ॥

॥३७॥ प्रेदं ब्रह्म वृत्रतूर्येष्वाविथ प्र सुन्वतः शचीपत इंद्र विश्वाभिरूतिभिः। माध्यंदिनस्य सवनस्य वृत्रहन्ननेद्य पिबा सोमस्य वज्रिवः ॥१॥ सेहान उग्र पृतना अभि द्रुहः शचीपत इंद्र विश्वाभिरूतिभिः। माध्यंदिनस्य सवनस्य वृत्रहन्-



Digitized by Google

॥३६॥ अविता असि सुन्वतः वृक्तऽबर्हिषः पिब सोमं मदाय कं शतऽक्रतो॰ यं ते भागं अधारयन् विश्वाः सेहानः पृतनाः उरु ज्रयः सं अप्सुऽजित् मरुत्वान् इंद्र सत्ऽपते ॥१॥ प्र अव स्तोतारं मघऽवन् अव त्वां पिब सोमं मदाय कं शतऽक्रतो॰ यं ते भागं अधारयन् विश्वाः सेहानः पृतनाः उरु ज्रयः सं अप्सुऽजित् मरुत्वान् इंद्र सत्ऽपते ॥२॥ ऊर्जा देवान् अवसि ओजसा त्वां पिब सोमं मदाय कं शतऽक्रतो॰ यं ते भागं अधारयन् विश्वाः सेहानः पृतनाः उरु ज्रयः सं अप्सुऽजित् मरुत्वान् इंद्र सत्ऽपते ॥३॥ जनिता दिवः जनिता पृथिव्याः पिब सोमं मदाय कं शतऽक्रतो॰ यं ते भागं अधारयन् विश्वाः सेहानः पृतनाः उरु ज्रयः सं अप्सुऽजित् मरुत्वान् इंद्र सत्ऽपते ॥४॥ जनिता अश्वानां जनिता गवां असि पिब सोमं मदाय कं शतऽक्रतो॰ यं ते भागं अधारयन् विश्वाः सेहानः पृतनाः उरु ज्रयः सं अप्सुऽजित् मरुत्वान् इंद्र सत्ऽपते ॥५॥ अत्रीणां स्तोमं अद्रिऽवः महः कृधि पिब सोमं मदाय कं शतऽक्रतो॰ यं ते भागं अधारयन् विश्वाः सेहानः पृतनाः उरु ज्रयः सं अप्सुऽजित् मरुत्वान् इंद्र सत्ऽपते ॥६॥ श्यावऽअश्वस्य सुन्वतः तथा शृणु यथा अशृणोः अत्रेः कर्माणि कृण्वतः प्र त्रसदस्युं आविथ त्वं एकः इत् नृऽसह्ये इंद्र ब्रह्माणि वर्धयन् ॥७॥१८॥

---

॥३७॥ प्र इदं ब्रह्म वृत्रऽतूर्येषु आविथ प्र सुन्वतः शचीऽपते इंद्र विश्वाभिः ऊतिऽभिः माध्यंदिनस्य सवनस्य वृत्रऽहन् अनेद्य पिब सोमस्य वज्रिऽवः ॥१॥ सेहानः उग्र पृतनाः अभि द्रुहः शचीऽपते इंद्र विश्वाभिः ऊतिऽभिः माध्यंदिनस्य सवनस्य वृत्रऽहन्



Digitized by Google

नेद्य पिबा सोमस्य वज्रिवः ॥२॥ एकराळस्य भुवनस्य राजसि शचीपत इंद्र विश्वाभिरूतिभिः । माध्यंदिनस्य सवनस्य वृत्रहन्ननेद्य पिबा सोमस्य वज्रिवः ॥३॥ सस्थावाना यवयसि त्वमेक इच्छचीपत इंद्र विश्वाभिरूतिभिः । माध्यंदिनस्य सवनस्य वृत्रहन्ननेद्य पिबा सोमस्य वज्रिवः ॥४॥ क्षेमस्य च प्रयुजश्च त्वमीशिषे शचीपत इंद्र विश्वाभिरूतिभिः । माध्यंदिनस्य सवनस्य वृत्रहन्ननेद्य पिबा सोमस्य वज्रिवः ॥५॥ क्षत्राय त्वमवसि न त्वमाविथ शचीपत इंद्र विश्वाभिरूतिभिः । माध्यंदिनस्य सवनस्य वृत्रहन्ननेद्य पिबा सोमस्य वज्रिवः ॥६॥ श्यावाश्वस्य रेभतस्तथा शृणु यथाशृणोरत्रेः कर्माणि कृण्वतः । प्र त्रसदस्युमाविथ त्वमेक इन्नृषाह्य इंद्र क्षत्राणि वर्धयन् ॥७॥१९॥

---

॥ ३८ ॥ १—१० श्यावाश्वः ॥ इंद्राग्नी ॥ गायत्री ॥

॥३८॥ यज्ञस्य हि स्थ ऋत्विजा सस्नी वाजेषु कर्मसु । इंद्राग्नी तस्य बोधतं ॥१॥ तोशासा रथयावाना वृत्रहणापराजिता । इंद्राग्नी तस्य बोधतं ॥२॥ इदं वां मदिरं मध्वधुक्षन्नद्रिभिर्नरः । इंद्राग्नी तस्य बोधतं ॥३॥ जुषेथां यज्ञमिष्टये सुतं सोमं सधस्तुती । इंद्राग्नी आ गतं नरा ॥४॥ इमा जुषेथां सवना येभिर्हव्यान्यूहथुः । इंद्राग्नी आ गतं नरा ॥५॥ इमां गायत्रवर्तनिं जुषेथां सुष्टुतिं मम । इंद्राग्नी आ गतं नरा ॥६॥२०॥ प्रातर्यावभिरा गतं देवेभिर्जेन्यावसू । इंद्राग्नी सोमपीतये ॥७॥ श्यावाश्वस्य सुन्वतोऽत्रीणां शृणुतं हवं । इंद्राग्नी सोमपीतये ॥८॥ एवा वामह्व ऊतये यथाहुवंत मेधिराः । इंद्राग्नी सोम-



Digitized by Google

अनेद्य पिबं सोमस्य वज्रिऽवः ॥२॥ एकऽराट् अस्य भुवनस्य राजसि शचीऽपते इंद्र विश्वाभिः ऊतिऽभिः माध्यंदिनस्य सवनस्य वृत्रऽहन् अनेद्य पिबं सोमस्य वज्रिऽवः ॥३॥ सः स्यावाना यवयसि त्वं एकः इत् शचीऽपते इंद्र विश्वाभिः ऊतिऽभिः माध्यंदिनस्य सवनस्य वृत्रऽहन् अनेद्य पिबं सोमस्य वज्रिऽवः ॥४॥ क्षेमस्य च प्रऽयुजः च त्वं ईशिषे शचीऽपते इंद्र विश्वाभिः ऊतिऽभिः माध्यंदिनस्य सवनस्य वृत्रऽहन् अनेद्य पिबं सोमस्य वज्रिऽवः ॥५॥ क्षत्राय त्वं अवसि न त्वं आविथ शचीऽपते इंद्र विश्वाभिः ऊतिऽभिः माध्यंदिनस्य सवनस्य वृत्रऽहन् अनेद्य पिबं सोमस्य वज्रिऽवः ॥६॥ श्यावऽअश्वस्य रेभंतः तथा शृणु यथा अशृणोः अत्रेः कर्माणि कृण्वतः प्र त्रसदस्युं आविथ त्वं एकः इत् नृऽसह्ये इंद्र क्षत्राणि वर्धयन् ॥७॥ १९॥

---

॥३८॥ यज्ञस्य हि स्थः ऋत्विजा सस्नी वाजेषु कर्मऽसु इंद्राग्नी इति तस्य बोधतं ॥१॥ तोशासा रथऽयावाना वृत्रऽहना अपराऽजिता इंद्राग्नी इति तस्य बोधतं ॥२॥ इदं वां मदिरं मधु अधुक्षन् अद्रिऽभिः नरः इंद्राग्नी इति तस्य बोधतं ॥३॥ जुषेथां यज्ञं इष्टये सुतं सोमं सधऽस्तुती इति इंद्राग्नी इति आ गतं नरा ॥४॥ इमा जुषेथां सवना येभिः हव्यानि ऊहथुः इंद्राग्नी इति आ गतं नरा ॥५॥ इमां गायत्रऽवर्तनिं जुषेथां सुऽस्तुतिं मम इंद्राग्नी इति आ गतं नरा ॥६॥ २०॥ प्रातर्यावऽभिः आ गतं देवेभिः जेन्यावसू इति इंद्राग्नी इति सोमऽपीतये ॥७॥ श्यावऽअश्वस्य सुन्वतः अत्रीणां शृणुतं हवं इंद्राग्नी इति सोमऽपीतये ॥८॥ एव वां अह्वे ऊतये यथा अहुवंत मेधिराः इंद्राग्नी इति सोम-



Digitized by Google

पीतये ॥ ९ ॥ आहं सरस्वतीवतोरिंद्राग्न्योरवो वृणे । याभ्यां गायत्रमृच्यते ॥ १० ॥ २१ ॥

---

॥ ३९ ॥ १–१० नाभाकः काण्वः ॥ अग्निः ॥ महापंक्तिः ॥

॥ ३९ ॥ अग्निमस्तोष्यृग्मियमग्निमीळा यजध्यै । अग्निर्देवाँ अनक्तु न उभे हि विदथे कविरंतश्चरति दूत्यं१ नभंतामन्यके समे ॥ १ ॥ न्यग्ने नव्यसा वचस्तनूषु शंसमेषां । न्यराती ररात्णां विश्वा अर्यो अरातीरितो युच्छंत्वामुरो नभंतामन्यके समे ॥ २ ॥ अग्ने मन्मानि तुभ्यं कं घृतं न जुह्व आसनि । स देवेषु प्र चिकिद्धि त्वं ह्यसि पूर्व्यः शिवो दूतो विवस्वतो नभंतामन्यके समे ॥ ३ ॥ तत्तदग्निर्वयो दधे यथायथा कृपण्यति । ऊर्जाहुतिर्वसूनां शं च योश्च मयो दधे विश्वस्यै देवहूत्यै नभंतामन्यके समे ॥ ४ ॥ स चिकेत सहीयसाग्निश्चित्रेण कर्मणा । स होता शश्वतीनां दक्षिणाभिरभीवृत इनोति च प्रतीव्यं१ नभंतामन्यके समे ॥ ५ ॥ २२ ॥ अग्निर्जाता देवानामग्निर्वेद मर्तानामपीच्यं । अग्निः स द्रविणोदा अग्निर्द्वारा व्यूर्णुते स्वाहुतो नवीयसा नभंतामन्यके समे ॥ ६ ॥ अग्निर्देवेषु संवसुः स विक्षु यज्ञियास्वा । स मुदा काव्या पुरु विश्वं भूमेव पुष्यति देवो देवेषु यज्ञियो नभंतामन्यके समे ॥ ७ ॥ यो अग्निः सप्तमानुषः श्रितो विश्वेषु सिंधुषु । तमागन्म त्रिपस्त्यं मंधातुर्दस्युहंतममग्निं यज्ञेषु पूर्व्यं नभंतामन्यके समे ॥ ८ ॥ अग्निस्त्रीणि त्रिधातून्या क्षेति विदथा कविः । स त्रीँरेकादशाँ इह यक्षच्च पिप्रयच्च नो विप्रो दूतः परिष्कृतो नभंतामन्यके समे ॥ ९ ॥ त्वं नो अग्न आयुषु त्वं देवेषु पूर्व्य वस्व



Digitized by Google

ऽपीतये॥९॥ आ अहं सरस्वतीऽवतोः इंद्राग्न्योः अवः वृणे याभ्यां गायत्रं ऋच्यते॥१०॥२१॥

---

॥३९॥ अग्निं अस्तोषि ऋग्मियं अग्निं ईळा यजध्यै अग्निः देवान् अनक्तु नः उभे हि विदथे कविः अंतः चरति दूत्यं नभंतां अन्यके समे॥१॥ नि अग्ने नव्यसा वचः तनूषु शंसं एषां नि अराती: रराव्णां विश्वाः अर्यः अरातीः इतः युच्छंतु आऽमुरः नभंतां अन्यके समे॥२॥ अग्ने मन्मानि तुभ्यं कं घृतं न जुह्वे आसनि सः देवेषु प्र चिकिद्धि त्वं हि असि पूर्व्यः शिवः दूतः विवस्वतः नभंतां अन्यके समे॥३॥ तत्ऽतत् अग्निः वयः दधे यथाऽयथा कृपण्यति ऊर्जाऽआहुतिः वसूनां शं च योः च मयः दधे विश्वस्यै देवऽहूत्यै नभंतां अन्यके समे॥४॥ सः चिकेत सहीयसा अग्निः चित्रेण कर्मणा सः होता शश्वतीनां दक्षिणाभिः अभिऽवृतः इनोति च प्रतीव्यं नभंतां अन्यके समे॥५॥२२॥ अग्निः जाता देवानां अग्निः वेद मर्तानां अपीच्यं अग्निः सः द्रविणःऽदाः अग्निः द्वारा वि ऊर्णुते सुऽआहुतः नवीयसा नभंतां अन्यके समे॥६॥ अग्निः देवेषु संऽवसुः सः विक्षु यज्ञियासु आ सः मुदा काव्या पुरु विश्वं भूमऽइव पुष्यति देवः देवेषु यज्ञियः नभंतां अन्यके समे॥७॥ यः अग्निः सप्तऽमानुषः श्रितः विश्वेषु सिंधुषु तं आ अगन्म त्रिऽपस्त्यं मंधातुः दस्युहन्ऽतमं अग्निं यज्ञेषु पूर्व्यं नभंतां अन्यके समे॥८॥ अग्निः त्रीणि त्रिऽधातूनि आ क्षेति विदथा कविः सः त्रीन् एकादशान् इह यक्षत् च पिप्रयत् च नः विप्रः दूतः परिऽकृतः नभंतां अन्यके समे॥९॥ त्वं नः अग्ने आयुषु त्वं देवेषु पूर्व्य वस्वः



Digitized by Google

एक इरज्यसि । त्वामापः परिस्रुतः परि यंति स्वसेतवो नभं-
तामन्यके समे ॥ १० ॥ २३ ॥

---

॥ ४० ॥ १–१२ नाभाकः काण्वः ॥ इंद्राग्नी ॥ १. ३–११ महापंक्तिः । २ शक्वरी । १२ त्रिष्टुप् ॥

॥४०॥ इंद्राग्नी युवं सु नः सहंता दासथो रयिं । येन दृळ्हा
समत्स्वा वीळु चित्साहिषीमह्यग्निर्वनेव वात इन्नभंतामन्यके
समे ॥ १ ॥ नहि वां वव्रयामहेऽथेंद्रमिद्यजामहे शविष्ठं नृणां
नरं । स नः कदा चिदर्वता गमदा वाजसातये गमदा मेधसातये
नभंतामन्यके समे ॥ २ ॥ ता हि मध्यं भराणामिंद्राग्नी अधिक्षि-
तः । ता उ कवित्वना कवी पृच्छ्यमाना सखीयते सं धीतमश्नुतं
नरा नभंतामन्यके समे ॥ ३ ॥ अभ्यर्च नभाकवदिंद्राग्नी यजसा
गिरा । ययोर्विश्वमिदं जगदियं द्यौः पृथिवी मह्युपस्थे बिभृ-
तो वसु नभंतामन्यके समे ॥ ४ ॥ प्र ब्रह्माणि नभाकवदिंद्राग्नि-
भ्यामिरज्यत । या सप्तबुध्नमर्णवं जिह्मबारमपोर्णुत इंद्र ईशान
ओजसा नभंतामन्यके समे ॥ ५ ॥ अपि वृश्च पुराणवद्व्रततेरिव
गुष्पितमोजो दासस्य दंभय । वयं तदस्य संभृतं वस्विंद्रेण वि
भजेमहि नभंतामन्यके समे ॥ ६ ॥ २४ ॥ यदिंद्राग्नी जना इमे
विह्वयंते तना गिरा । अस्माकेभिर्नृभिर्वयं सासह्याम पृतन्यतो
वनुयाम वनुष्यतो नभंतामन्यके समे ॥ ७ ॥ या नु श्वेताववो
दिव उच्चरात उप द्युभिः । इंद्राग्न्योरनु व्रतमुहाना यंति
सिंधवो यान्सीं बंधादमुंचतां नभंतामन्यके समे ॥ ८ ॥ पूर्वीष्ट
इंद्रोपमातयः पूर्वीरुत प्रशस्तयः सूनो हिन्वस्य हरिवः ।
वस्वो वीरस्यापृचो या नु साधंत नो धियो नभंतामन्यके
समे ॥ ९ ॥ तं शिशीता सुवृक्तिभिस्त्वेषं सत्वानमृग्मियं ।



Digitized by Google

एकः इरज्यसि त्वां आपः परिऽस्रुतः परि यंति स्वऽसेतवः नभंतां अन्यके समे ॥ १० ॥ २३ ॥

---

॥ ४० ॥ इंद्राग्नी युवं सु नः सहंता दासथः रयिं येन दृळ्हा समत्ऽसु आ वीळु चित् सहिषीमहि अग्निः वनाऽइव वाते इत् नभंतां अन्यके समे ॥ १ ॥ नहि वां वव्रयामहे अथ इंद्रं इत् यजामहे शविष्ठं नृणां नरं सः नः कदा चित् अर्वता गमत् आ वाजऽसातये गमत् आ मेधऽसातये नभंतां अन्यके समे ॥ २ ॥ ता हि मध्यं भराणां इंद्राग्नी अधिऽक्षितः ता ऊं कविऽत्वना कवी पृच्छ्यमाना सखिऽयते सं धीतं अश्नुतं नरा नभंतां अन्यके समे ॥ ३ ॥ अभि अर्च नभाकऽवत् इंद्राग्नी यजसा गिरा ययोः विश्वं इदं जगत् इयं द्यौः पृथिवी मही उपऽस्थे बिभृतः वसु नभंतां अन्यके समे ॥ ४ ॥ प्र ब्रह्माणि नभाकऽवत् इंद्राग्निऽभ्यां इरज्यत या सप्तऽबुध्नं अर्णवं जिह्मऽबारं अपऽऊर्णुतः इंद्रः ईशानः ओजसा नभंतां अन्यके समे ॥ ५ ॥ अपि वृश्च पुराणऽवत् व्रततेःऽइव गुष्पितं ओजः दासस्य दंभय वयं तत् अस्य संऽभृतं वसु इंद्रेण वि भजेमहि नभंतां अन्यके समे ॥ ६ ॥ २४ ॥ यत् इंद्राग्नी जनाः इमे विऽह्वयंते तना गिरा अस्माकेभिः नृऽभिः वयं ससह्याम पृतन्यतः वनुयाम वनुष्यतः नभंतां अन्यके समे ॥ ७ ॥ या नु श्वेतौ अवः दिवः उत्ऽचरातः उप द्युऽभिः इंद्राग्न्योः अनु व्रतं उहानाः यंति सिंधवः यान् सीं बंधात् अमुंचतां नभंतां अन्यके समे ॥ ८ ॥ पूर्वीः ते इंद्र उपऽमातयः पूर्वीः उत प्रऽशस्तयः सूनो हिन्वस्य हरिऽवः वस्वः वीरस्य आऽपृचः याः नु साधंत नः धियः नभंतां अन्यके समे ॥ ९ ॥ तं शिशीत सुवृक्तिऽभिः त्वेषं सत्वानं ऋग्मियं



Digitized by Google

उतो नु चिद्य ओजसा शुष्णस्यांडानि भेदति जेषत्स्ववतीरपो नभंतामन्यके समे ॥१०॥ तं शिशीता स्वध्वरं सत्यं सत्वानमृत्वियं । उतो नु चिद्य ओहत आंडा शुष्णस्य भेदत्यजैः स्ववतीरपो नभंतामन्यके समे ॥११॥ एवेंद्राग्निभ्यां पितृवन्नवीयो मंधातृवदंगिरस्वदवाचि । त्रिधातुना शर्मणा पातमस्मान्वयं स्याम पतयो रयीणां ॥१२॥२५॥

---

॥ ४१ ॥ १–१० नाभाकः काण्वः ॥ वरुणः ॥ महापंक्तिः ॥

॥४१॥ अस्मा ऊ षु प्रभूतये वरुणाय मरुद्भ्योऽर्चा विदुष्टरेभ्यः । यो धीता मानुषाणां पश्वो गा इव रक्षति नभंतामन्यके समे ॥१॥ तमू षु समना गिरा पितॄणां च मन्मभिः । नाभाकस्य प्रशस्तिभिर्यः सिंधूनामुपोदये सप्तस्वसा स मध्यमो नभंतामन्यके समे ॥२॥ स क्षपः परि षस्वजे न्यु१स्रो मायया दधे स विश्वं परि दर्शतः । तस्य वेनीरनु व्रतमुषस्तिस्रो अवर्धयन्नभंतामन्यके समे ॥३॥ यः ककुभो निधारयः पृथिव्यामधि दर्शतः । स माता पूर्व्यं पदं तद्वरुणस्य सप्त्यं स हि गोपा इवेर्यो नभंतामन्यके समे ॥४॥ यो धर्ता भुवनानां य उस्राणामपीच्या३ वेद नामानि गुह्या । स कविः काव्या पुरु रूपं द्यौरिव पुष्यति नभंतामन्यके समे ॥५॥२६॥ यस्मिन्विश्वानि काव्या चक्रे नाभिरिव श्रिता । त्रितं जूती सपर्यत व्रजे गावो न संयुजे युजे अश्वाँ अयुक्षत नभंतामन्यके समे ॥६॥ य आस्वत्क आशये विश्वा जातान्येषां । परि धामानि मर्मृशद्वरुणस्य पुरो गये विश्वे देवा अनु व्रतं नभंतामन्यके समे ॥७॥ स समुद्रो अपीच्यस्तुरो द्यामिव रोहति नि यदासु यजुर्दधे ।



Digitized by Google

उतो नु चित् यः ओजसा शुष्णस्य आंडानि भेदति जेषत् स्वः-ऽवतीः अपः नभंतां अन्यके समे ॥ १० ॥ तं शिशीत सुऽअध्वरं सत्यं सत्वानं ऋत्वियं उतो नु चित् यः ओहते आंडा शुष्णस्य भेदति अजैः स्वःऽवतीः अपः नभंतां अन्यके समे ॥ ११ ॥ एव इंद्राग्निऽभ्यां पितृऽवत् नवीयः मंधातृऽवत् अंगिरस्वत् अवाचि त्रिऽधातुना शर्मणा पातं अस्मान् वयं स्याम पतयः रयीणां ॥ १२ ॥ २५ ॥

---

॥ ४१ ॥ अस्मै ऊं सु प्रऽभूतये वरुणाय मरुत्ऽभ्यः अर्च विदुःऽतरेभ्यः यः धीता मानुषाणां पश्वः गाःऽइव रक्षति नभंतां अन्यके समे ॥ १ ॥ तं ऊं सु समना गिरा पितॄणां च मन्मऽभिः नाभाकस्य प्रशस्तिऽभिः यः सिंधूनां उप उत्ऽअये सप्तऽस्वसा सः मध्यमः नभंतां अन्यके समे ॥ २ ॥ सः क्षपः परि सस्वजे नि उस्रः मायया दधे सः विश्वं परि दर्शतः तस्य वेनीः अनु व्रतं उषः तिस्रः अवर्धयन् नभंतां अन्यके समे ॥ ३ ॥ यः ककुभः निऽधारयः पृथिव्यां अधि दर्शतः सः माता पूर्व्यं पदं तत् वरुणस्य सप्त्यं सः हि गोपाःऽइव इर्यः नभंतां अन्यके समे ॥ ४ ॥ यः धर्ता भुवनानां यः उस्राणां अपीच्या वेद नामानि गुह्या सः कविः काव्या पुरु रूपं द्यौःऽइव पुष्यति नभंतां अन्यके समे ॥ ५ ॥ २६ ॥ यस्मिन् विश्वानि काव्या चक्रे नाभिःऽइव श्रिता त्रितं जूती सपर्यत व्रजे गावः न संऽयुजे युजे अश्वान् अयुक्षत नभंतां अन्यके समे ॥ ६ ॥ यः आसु अत्कः आऽशये विश्वा जातानि एषां परि धामानि मर्मृशत् वरुणस्य पुरः गये विश्वे देवाः अनु व्रतं नभंतां अन्यके समे ॥ ७ ॥ सः समुद्रः अपीच्यः तुरः द्यांऽइव रोहति नि यत् आसु यजुः दधे



Digitized by Google

स माया अर्चिना पदास्तृणान्नाकमारुहन्नभँतामन्यके समे ॥८॥
यस्य श्वेता विचक्षणा तिस्रो भूमीरधिक्षितः। त्रिरुत्तराणि पप्र-
तुर्वरुणस्य ध्रुवं सदः स सप्तानामिरज्यति नभँतामन्यके समे ॥९॥
यः श्वेताँ अधिनिर्णिजश्चक्रे कृष्णाँ अनु व्रता। स धाम पूर्व्यं ममे
यः स्कंभेन वि रोदसी अजो न द्यामधारयन्नभँतामन्यके समे
॥१०॥२७॥

---

॥४२॥ १–६ नाभाकः काण्वः अर्चनाना वा। अथवा १–३ नाभाकः काण्वः। ४–६ नाभाकः काण्वः अर्चनाना वा ॥ १–३ वरुणः। ४–६ अश्विनौ ॥ १–३ त्रिष्टुप्। ४–६ अनुष्टुप् ॥

॥४२॥ अस्तभ्नाद्द्यामसुरो विश्ववेदा अमिमीत वरिमाणं
पृथिव्याः। आसीदद्विश्वा भुवनानि सम्राड्विश्वेत्तानि वरुणस्य
व्रतानि ॥१॥ एवा वंदस्व वरुणं बृहंतं नमस्या धीरममृतस्य गो-
पां। स नः शर्म त्रिवरूथं वि यंसत्पातं नो द्यावापृथिवी उपस्थे
॥२॥ इमां धियं शिक्षमाणस्य देव क्रतुं दक्षं वरुण सं शिशाधि।
ययाति विश्वा दुरिता तरेम सुतर्माणमधि नावं रुहेम ॥३॥ आ
वां ग्रावाणो अश्विना धीभिर्विप्रा अचुच्यवुः। नासत्या सोम-
पीतये नभँतामन्यके समे ॥४॥ यथा वामत्रिरश्विना गीर्भिर्विप्रो
अजोहवीत्। नासत्या सोमपीतये नभँतामन्यके समे ॥५॥ एवा
वामह्व ऊतये यथाहुवंत मेधिराः। नासत्या सोमपीतये नभँता-
मन्यके समे ॥६॥२८॥५॥

---

॥ ४३ ॥ १–३३ विरूप आंगिरसः ॥ अग्निः ॥ गायत्री ॥

॥४३॥ इमे विप्रस्य वेधसोऽग्नेरस्तृतयज्वनः। गिरः स्तो-
मास ईरते ॥१॥ अस्मै ते प्रतिहर्यते जातवेदो विचर्षणे। अग्ने
जनामि सुष्टुतिं ॥२॥ आरोका इव घेदह तिग्मा अग्ने तव
त्विषः। दद्भिर्वनानि बप्सति ॥३॥ हरयो धूमकेतवो वा-



Digitized by Google

सः मायाः अर्चिना पदा अस्तृणात् नाकं आ अरुहत् नभंतां अन्यके समे ॥ ८ ॥ यस्य श्वेता विऽचक्षणा तिस्रः भूमीः अधिऽक्षितः त्रिः उत्ऽतराणि पप्रतुः वरुणस्य ध्रुवं सदः सः सप्तानां इरज्यति नभंतां अन्यके समे ॥ ९ ॥ यः श्वेतान् अधिऽनिर्निजः चक्रे कृष्णान् अनु व्रता सः धाम पूर्व्यं ममे यः स्कंभेन वि रोदसी इति अजः न द्यां अधारयत् नभंतां अन्यके समे ॥ १० ॥ २७ ॥

---

॥ ४२ ॥ अस्तभ्नात् द्यां असुरः विश्वऽवेदाः अमिमीत वरिमाणं पृथिव्याः आ असीदत् विश्वा भुवनानि संऽराट् विश्वा इत् तानि वरुणस्य व्रतानि ॥ १ ॥ एव वंदस्व वरुणं बृहंतं नमस्य धीरं अमृतस्य गोपां सः नः शर्म त्रिऽवरूथं वि यंसत् पातं नः द्यावापृथिवी इति उपऽस्थे ॥ २ ॥ इमां धियं शिक्षमाणस्य देव क्रतुं दक्षं वरुण सं शिशाधि यया अति विश्वा दुःऽइता तरेम सुऽतर्माणं अधि नावं रुहेम ॥ ३ ॥ आ वां ग्रावाणः अश्विना धीभिः विप्राः अचुच्यवुः नासत्या सोमऽपीतये नभंतां अन्यके समे ॥ ४ ॥ यथा वां अत्रिः अश्विना गीःऽभिः विप्रः अजोहवीत् नासत्या सोमऽपीतये नभंतां अन्यके समे ॥ ५ ॥ एव वां अह्वे ऊतये यथा अहुवंत मेधिराः नासत्या सोमऽपीतये नभंतां अन्यके समे ॥ ६ ॥ २८ ॥ ५ ॥

---

॥ ४३ ॥ इमे विप्रस्य वेधसः अग्नेः अस्तृतऽयज्वनः गिरः स्तोमासः ईरते ॥ १ ॥ अस्मै ते प्रतिऽहर्यते जातऽवेदः विऽचर्षणे अग्ने जनामि सुऽस्तुतिं ॥ २ ॥ आरोकाःऽइव घ इत् अह तिग्माः अग्ने तव त्विषः दत्ऽभिः वनानि बप्सति ॥ ३ ॥ हरयः धूमऽकेतवः वा-



Digitized by Google

तजूता उप द्यवि । यतन्ते वृथगग्नयः ॥४॥ एते त्ये वृथगग्नय
इद्धासः समदृक्षत । उषसामिव केतवः ॥५॥२९॥ कृष्णा रजांसि
पत्सुतः प्रयाणे जातवेदसः । अग्निर्यद्रोधति क्षमि ॥६॥ धासिं
कृण्वान ओषधीर्बप्सदग्निर्न वायति । पुनर्यन्तरुणीरपि
॥७॥ जिह्वाभिरह नन्नमदर्चिषा जञ्जणाभवन् । अग्निर्वनेषु
रोचते ॥८॥ अप्स्वग्ने सधिष्टव सौषधीरनु रुध्यसे । गर्भे
सञ्जायसे पुनः ॥९॥ उदग्ने तव तद्घृतादर्ची रोचत आ-
हुतं । निंसानं जुह्वो३मुखे ॥१०॥३०॥ उक्षान्नाय वशा-
न्नाय सोमपृष्ठाय वेधसे । स्तोमैर्विधेमाग्नये ॥११॥ उत
त्वा नमसा वयं होतर्वरेण्यक्रतो । अग्ने समिद्भिरीमहे
॥१२॥ उत त्वा भृगुवच्छुचे मनुष्वदग्न आहुत । अंगिरस्वद्ध-
वामहे ॥१३॥ त्वं ह्यग्ने अग्निना विप्रो विप्रेण सन्सता । सखा
सख्या समिध्यसे ॥१४॥ स त्वं विप्राय दाशुषे रयिं देहि सह-
स्रिणं । अग्ने वीरवतीमिषं ॥१५॥३१॥ अग्ने भ्रातः सहस्कृत रो-
हिदश्व शुचिव्रत । इमं स्तोमं जुषस्व मे ॥१६॥ उत त्वाग्ने मम
स्तुतो वाश्राय प्रतिहर्यते । गोष्ठं गाव इवाशत ॥१७॥ तुभ्यं ता
अंगिरस्तम विश्वाः सुक्षितयः पृथक् । अग्ने कामाय येमिरे
॥१८॥ अग्निं धीभिर्मनीषिणो मेधिरासो विपश्चितः । अद्म-
सद्याय हिन्विरे ॥१९॥ तं त्वामज्मेषु वाजिनं तन्वाना अग्ने
अध्वरं । वह्निं होतारमीळते ॥२०॥३२॥ पुरुत्रा हि सदृङ्ङसि
विशो विश्वा अनु प्रभुः । समत्सु त्वा हवामहे ॥२१॥ तमी-
ळिष्व य आहुतोऽग्निर्विभ्राजते घृतैः । इमं नः शृणवद्धवं ॥२२॥
तं त्वा वयं हवामहे शृण्वन्तं जातवेदसं । अग्ने घ्नन्तमप द्विषः ॥२३॥
विशां राजानमद्भुतमध्यक्षं धर्मणामिमं । अग्निमीळे स उ



Digitized by Google

तःऽजूताः उप द्यवि यतन्ते वृथक् अग्नयः ॥४॥ एते त्ये वृथक् अग्नयः
इद्धासः सं अदृक्षत उषसांऽइव केतवः ॥५॥२९॥ कृष्णा रजांसि
पत्सुतः प्रऽयाने जातऽवेदसः अग्निः यत् रोधति क्षमि ॥६॥ धा-
सिं कृण्वानः ओषधीः बप्सत् अग्निः न वायति पुनः यन् तरुणीः
अपि ॥७॥ जिह्वाभिः अह नंनमत् अर्चिषा जंजणाऽभवन् अ-
ग्निः वनेषु रोचते ॥८॥ अप्ऽसु अग्ने सधिः तव सः ओषधीः अनु
रुध्यसे गर्भे सन् जायसे पुनः ॥९॥ उत् अग्ने तव तत् घृतात् अर्चिः
रोचते आऽहुतं निंसानं जुह्वः मुखे ॥१०॥३०॥ उक्षऽअन्नाय व-
शाऽअन्नाय सोमऽपृष्ठाय वेधसे स्तोमैः विधेम अग्नये ॥११॥
उत त्वा नमसा वयं होतः वरेण्यऽक्रतो॰ अग्ने समित्ऽभिः ईमहे
॥१२॥ उत त्वा भृगुऽवत् शुचे मनुष्वत् अग्ने आऽहुत अंगिरस्वत्
हवामहे ॥१३॥ त्वं हि अग्ने अग्निना विप्रः विप्रेण सन् सता सखा
सख्या संऽइध्यसे ॥१४॥ सः त्वं विप्राय दाशुषे रयिं देहि सहस्रिणं
अग्ने वीरऽवतीं इषं ॥१५॥३१॥ अग्ने भ्रातः सहःऽकृत रोहित्ऽअ-
श्व शुचिऽव्रत इमं स्तोमं जुषस्व मे ॥१६॥ उत त्वा अग्ने मम स्तुतः
वाश्राय प्रतिऽहर्यते गोऽस्थं गावःऽइव आशत ॥१७॥ तुभ्यं ताः
अंगिरःऽतम विश्वाः सुऽक्षितयः पृथक् अग्ने कामाय येमिरे
॥१८॥ अग्निं धीभिः मनीषिणः मेधिरासः विपःऽचितः अद्म-
ऽसद्याय हिन्विरे ॥१९॥ तं त्वां अज्मेषु वाजिनं तन्वानाः अग्ने
अध्वरं वह्निं होतारं ईळते ॥२०॥३२॥ पुरुऽत्रा हि सऽदृङ् असि
विशः विश्वाः अनु प्रऽभुः समत्ऽसु त्वा हवामहे ॥२१॥ तं ईळिष्व
यः आऽहुतः अग्निः विऽभ्राजते घृतैः इमं नः शृणवत् हवं ॥२२॥
तं त्वा वयं हवामहे शृण्वंतं जातऽवेदसं अग्ने घ्नंतं अप द्विषः ॥२३॥
विशां राजानं अद्भुतं अधिऽअक्षं धर्मणां इमं अग्निं ईळे सः ऊं



Digitized by Google

अवत् ॥ २४ ॥ अग्निं विश्वायुवेपसं मर्यं न वाजिनं हितं । सप्तिं न वाजयामसि ॥ २५ ॥ ३३ ॥ घ्नन्मृध्राण्यप द्विषो दहन्रक्षांसि विश्वहा । अग्ने तिग्मेन दीदिहि ॥ २६ ॥ यं त्वा जनास इंधते मनुष्वदंगिरस्तम । अग्ने स बोधि मे वचः ॥ २७ ॥ यदग्ने दिविजा अस्यप्सुजा वा सहस्कृत । तं त्वा गीर्भिर्हवामहे ॥ २८ ॥ तुभ्यं घेत्ते जना इमे विश्वाः सुक्षितयः पृथक् । धासिं हिन्वंत्यत्तवे ॥ २९ ॥ ते घेदग्ने स्वाध्योऽहा विश्वा नृचक्षसः । तरंतः स्याम दुर्गहा ॥ ३० ॥ ३४ ॥ अग्निं मंद्रं पुरुप्रियं शीरं पावकशोचिषं । हृद्भिर्मंद्रेभिरीमहे ॥ ३१ ॥ स त्वमग्ने विभावसुः सृजन्सूर्यो न रश्मिभिः । शर्धन्तमांसि जिघ्नसे ॥ ३२ ॥ तत्ते सहस्व ईमहे दात्रं यन्नोपदस्यति । त्वदग्ने वार्यं वसु ॥ ३३ ॥ ३५ ॥

---

॥ ४४ ॥ १–३० विरूप आंगिरसः ॥ अग्निः ॥ गायत्री ॥

॥ ४४ ॥ समिधाग्निं दुवस्यत घृतैर्बोधयतातिथिं । आस्मिन्हव्या जुहोतन ॥ १ ॥ अग्ने स्तोमं जुषस्व मे वर्धस्वानेन मन्मना । प्रति सूक्तानि हर्य नः ॥ २ ॥ अग्निं दूतं पुरो दधे हव्यवाहमुप ब्रुवे । देवाँ आ सादयादिह ॥ ३ ॥ उत्ते बृहंतो अर्चयः समिधानस्य दीदिवः । अग्ने शुक्रास ईरते ॥ ४ ॥ उप त्वा जुह्वो३ मम घृताचीर्यंतु हर्यत । अग्ने हव्या जुषस्व नः ॥ ५ ॥ ३६ ॥ मंद्रं होतारमृत्विजं चित्रभानुं विभावसुं । अग्निमीळे स उ श्रवत् ॥ ६ ॥ प्रत्नं होतारमीड्यं जुष्टमग्निं कविक्रतुं । अध्वराणामभिश्रियं ॥ ७ ॥ जुषाणो अंगिरस्तमेमा हव्यान्यानुषक् । अग्ने यज्ञं नय ऋतुथा ॥ ८ ॥ समिधान उ संत्य शुक्रशोच इहा वह । चिकित्वान्दैव्यं जनं ॥ ९ ॥ विप्रं होतारमद्रुहं धूमकेतुं



Digitized by Google

अवत् ॥ २४ ॥ अग्निं विश्वायुऽवेपसं मर्यं न वाजिनं हितं सप्तिं न वाजयामसि ॥ २५ ॥ ३३ ॥ घ्नन् मृध्राणि अप द्विषः दहन् रक्षांसि विश्वहा अग्ने तिग्मेन दीदिहि ॥ २६ ॥ यं त्वा जनासः इंधते मनुष्वत् अंगिरःऽतम अग्ने सः बोधि मे वचः ॥ २७ ॥ यत् अग्ने दिविऽजाः असि अप्सुऽजाः वा सहःऽकृत तं त्वा गीःऽभिः हवामहे ॥ २८ ॥ तुभ्यं घ इत् ते जनाः इमे विश्वाः सुऽक्षितयः पृथक् धासिं हिन्वंति अत्तवे ॥ २९ ॥ ते घ इत् अग्ने सुऽआध्यः अहा विश्वा नृऽचक्षसः तरंतः स्याम दुःऽगहा ॥ ३० ॥ ३४ ॥ अग्निं मंद्रं पुरुऽप्रियं शीरं पावकऽशोचिषं हृत्ऽभिः मंद्रेभिः ईमहे ॥ ३१ ॥ सः त्वं अग्ने विभाऽवसुः सृजन् सूर्यः न रश्मिऽभिः शर्धन् तमांसि जिघ्नसे ॥ ३२ ॥ तत् ते सहस्वः ईमहे दात्रं यत् न उपऽदस्यति त्वत् अग्ने वार्यं वसु ॥ ३३ ॥ ३५ ॥

---

॥ ४४ ॥ संऽइधा अग्निं दुवस्यत घृतैः बोधयत अतिथिं आ अस्मिन् हव्या जुहोतन ॥ १ ॥ अग्ने स्तोमं जुषस्व मे वर्धस्व अनेन मन्मना प्रति सुऽउक्तानि हर्य नः ॥ २ ॥ अग्निं दूतं पुरः दधे हव्यऽवाहं उप ब्रुवे देवान् आ सादयात् इह ॥ ३ ॥ उत् ते बृहंतः अर्चयः संऽइधानस्य दीदिऽवः अग्ने शुक्रासः ईरते ॥ ४ ॥ उप त्वा जुह्वः मम घृताचीः यंतु हर्यत अग्ने हव्या जुषस्व नः ॥ ५ ॥ ३६ ॥ मंद्रं होतारं ऋत्विजं चित्रऽभानुं विभाऽवसुं अग्निं ईळे सः ऊं इति श्रवत् ॥ ६ ॥ प्रत्नं होतारं ईड्यं जुष्टं अग्निं कविऽक्रतुं अध्वराणां अभिऽश्रियं ॥ ७ ॥ जुषाणः अंगिरःऽतम इमा हव्यानि आनुषक् अग्ने यज्ञं नय ऋतुऽथा ॥ ८ ॥ संऽइधानः ऊं इति संत्य शुक्रऽशोचे इह आ वह चिकित्वान् दैव्यं जनं ॥ ९ ॥ विप्रं होतारं अद्रुहं धूमऽकेतुं

विभावसुं । यज्ञानां केतुमीमहे ॥१०॥३७॥ अग्ने नि पाहि नस्त्वं प्रति ष्म देव रीषतः । भिंधि द्वेषः सहस्कृत ॥११॥ अग्निः प्रत्नेन मन्मना शुंभानस्तन्वं१स्वां । कविर्विप्रेण वावृधे ॥१२॥ ऊर्जो नपातमा हुवेऽग्निं पावकशोचिषं । अस्मिन्यज्ञे स्वध्वरे ॥१३॥ स नो मित्रमहस्त्वमग्ने शुक्रेण शोचिषा । देवैरा सत्सि बर्हिषि ॥१४॥ यो अग्निं तन्वो३दमे देवं मर्तः सपर्यति । तस्मा इद्दीदयद्वसु ॥१५॥३८॥ अग्निर्मूर्धा दिवः ककुत्पतिः पृथिव्या अयं । अपां रेतांसि जिन्वति ॥१६॥ उदग्ने शुचयस्तव शुक्रा भ्राजंत ईरते । तव ज्योतींष्यर्चयः ॥१७॥ ईशिषे वार्यस्य हि दात्रस्याग्ने स्वर्पतिः । स्तोता स्यां तव शर्मणि ॥१८॥ त्वामग्ने मनीषिणस्त्वां हिन्वंति चित्तिभिः । त्वां वर्धंतु नो गिरः ॥१९॥ अदब्धस्य स्वधावतो दूतस्य रेभतः सदा । अग्नेः सख्यं वृणीमहे ॥२०॥३९॥ अग्निः शुचिव्रततमः शुचिर्विप्रः शुचिः कविः । शुची रोचत आहुतः ॥२१॥ उत त्वा धीतयो मम गिरो वर्धंतु विश्वहा । अग्ने सख्यस्य बोधि नः ॥२२॥ यदग्ने स्यामहं त्वं त्वं वा घा स्या अहं । स्युष्टे सत्या इहाशिषः ॥२३॥ वसुर्वसुपतिर्हि कमस्यग्ने विभावसुः । स्याम ते सुमतावपि ॥२४॥ अग्ने धृतव्रताय ते समुद्रायेव सिंधवः । गिरो वाश्रास ईरते ॥२५॥४०॥ युवानं विश्पतिं कविं विश्वादं पुरुवेपसं । अग्निं शुंभामि मन्मभिः ॥२६॥ यज्ञानां रथ्ये वयं तिग्मजंभाय वीळवे । स्तोमैरिषेमाग्नये ॥२७॥ अयमग्ने त्वे अपि जरिता भूतु संत्य । तस्मै पावक मृळय ॥२८॥ धीरो ह्यस्यद्मसद्विप्रो न जागृविः सदा । अग्ने दीदयसि द्यवि ॥२९॥ पुराग्ने दुरितेभ्यः पुरा मृध्रेभ्यः कवे । प्र ण आयुर्वसो तिर ॥३०॥४१॥



Digitized by Google

विभाऽवसुं यज्ञानां केतुं ईमहे ॥१०॥३७॥ अग्ने नि पाहि नः त्वं प्रति स्म देव रिषतः भिंधि द्वेषः सहःऽकृत ॥११॥ अग्निः प्रत्नेन मन्मना शुंभानः तन्वं स्वां कविः विप्रेण ववृधे ॥१२॥ ऊर्जः नपातं आ हुवे अग्निं पावकऽशोचिषं अस्मिन् यज्ञे सुऽअध्वरे ॥१३॥ सः नः मित्रऽमहः त्वं अग्ने शुक्रेण शोचिषा देवैः आ सत्सि बर्हिषि ॥१४॥ यः अग्निं तन्वः दमे देवं मर्तः सपर्यति तस्मै इत् दीदयत् वसु ॥१५॥३८॥ अग्निः मूर्धा दिवः ककुत् पतिः पृथिव्याः अयं अपां रेतांसि जिन्वति ॥१६॥ उत् अग्ने शुचयः तव शुक्राः भ्राजंतः ईरते तव ज्योतींषि अर्चयः ॥१७॥ ईशिषे वार्यस्य हि दात्रस्य अग्ने स्वःऽपतिः स्तोता स्यां तव शर्मणि ॥१८॥ त्वां अग्ने मनीषिणः त्वां हिन्वंति चित्तिऽभिः त्वां वर्धंतु नः गिरः ॥१९॥ अदब्धस्य स्वधाऽवतः दूतस्य रेभतः सदा अग्नेः सख्यं वृणीमहे ॥२०॥३९॥ अग्निः शुचिव्रतऽतमः शुचिः विप्रः शुचिः कविः शुचिः रोचते आऽहुतः ॥२१॥ उत त्वा धीतयः मम गिरः वर्धंतु विश्वहा अग्ने सख्यस्य बोधि नः ॥२२॥ यत् अग्ने स्यां अहं त्वं त्वं वा घ स्याः अहं स्युः ते सत्याः इह आऽशिषः ॥२३॥ वसुः वसुऽपतिः हि कं असि अग्ने विभाऽवसुः स्याम ते सुऽमतौ अपि ॥२४॥ अग्ने धृतऽव्रताय ते समुद्रायऽइव सिंधवः गिरः वाश्रासः ईरते ॥२५॥४०॥ युवानं विश्पतिं कविं विश्वऽअदं पुरुऽवेपसं अग्निं शुंभामि मन्मऽभिः ॥२६॥ यज्ञानां रथ्ये वयं तिग्मऽजंभाय वीळवे स्तोमैः इषेम अग्नये ॥२७॥ अयं अग्ने त्वे अपि जरिता भूतु संत्य तस्मै पावक मृळय ॥२८॥ धीरः हि असि अद्मऽसत् विप्रः न जागृविः सदा अग्ने दीदयसि द्यवि ॥२९॥ पुरा अग्ने दुःऽइतेभ्यः पुरा मृध्रेभ्यः कवे प्र नः आयुः वसो तिर ॥३०॥४१॥



Digitized by Google

॥ ४५ ॥ १—४२ त्रिशोकः काण्वः ॥ १ इंद्राग्नी । २—४२ इंद्रः ॥ गायत्री ॥

॥४५॥ आ घा ये अग्निमिंधते स्तृणंति बर्हिरानुषक् । येषा-
मिंद्रो युवा सखा ॥१॥ बृहन्निदिध्म एषां भूरि शस्तं पृथुः स्वरुः ।
येषामिंद्रो युवा सखा ॥२॥ अयुद्ध इद्युधा वृतं शूर आजति सत्व-
भिः । येषामिंद्रो युवा सखा ॥३॥ आ बुंदं वृत्रहा ददे जातः पृच्छद्वि
मातरं । क उग्राः के ह शृण्विरे ॥४॥ प्रति त्वा शवसी वदद्गिराव-
प्सो न योधिषत् । यस्ते शत्रुत्वमाचके ॥५॥४२॥ उत त्वं मघवञ्छृणु
यस्ते वष्टि ववक्षि तत् । यद्वीळयासि वीळु तत् ॥६॥ यदाजिं या-
त्याजिकृदिंद्रः स्वश्वयुरुप । रथीतमो रथीनां ॥७॥ वि षु विश्वा अ-
भियुजो वज्रिन्विष्वग्यथा वृह । भवा नः सुश्रवस्तमः ॥८॥ अस्माकं
सु रथं पुर इंद्रः कृणोतु सातये । न यं धूर्वंति धूर्तयः ॥९॥ वृज्याम
ते परि द्विषोऽरं ते शक्र दावने । गमेमेदिंद्र गोमतः ॥१०॥४३॥
शनैश्चिद्यंतो अद्रिवोऽश्वावंतः शतग्विनः । विवक्षणा अनेहसः
॥११॥ ऊर्ध्वा हि ते दिवेदिवे सहस्रा सूनृता शता । जरितृभ्यो वि-
मंहते ॥१२॥ विद्मा हि त्वा धनंजयमिंद्र दृळ्हा चिदारुजं । आ-
दारिणं यथा गयं ॥१३॥ ककुहं चित्त्वा कवे मंदंतु धृष्णविंदवः ।
आ त्वा पणिं यदीमहे ॥१४॥ यस्ते रेवाँ अदाशुरिः प्रममर्ष म-
घत्तये । तस्य नो वेद आ भर ॥१५॥४४॥ इम उ त्वा वि चक्षते स-
खाय इंद्र सोमिनः । पुष्टावंतो यथा पशुं ॥१६॥ उत त्वाबधिरं वयं
श्रुत्कर्णं संतमूतये । दूरादिह हवामहे ॥१७॥ यच्छुश्रूया इमं हवं
दुर्मर्षं चक्रिया उत । भवेरापिर्नो अंतमः ॥१८॥ यच्चिद्धि ते अपि
व्यथिर्जगन्वांसो अमन्महि । गोदा इदिंद्र बोधि नः ॥१९॥ आ
त्वा रंभं न जिव्रयो ररभ्मा शवसस्पते । उश्मसि त्वा सधस्थ आ
॥२०॥४५॥ स्तोत्रमिंद्राय गायत पुरुनृम्णाय सत्वने । नकिर्यं वृ-



Digitized by Google

॥४५॥ आ घ ये अग्निं इंधते स्तृणंति बर्हिः आनुषक् येषां इंद्रः युवा सखा ॥१॥ बृहन् इत् इध्मः एषां भूरि शस्तं पृथुः स्वरुः येषां इंद्रः युवा सखा ॥२॥ अयुद्धः इत् युधा वृतं शूरः आ अजति सत्वऽभिः येषां इंद्रः युवा सखा ॥३॥ आ बुंदं वृत्रऽहा ददे जातः पृच्छत् वि मातरं के उग्राः के ह शृण्विरे ॥४॥ प्रति त्वा शवसी वदत् गिरौ अप्सः न योधिषत् यः ते शत्रुऽत्वं आऽचके ॥५॥४२॥ उत त्वं मघऽवन् शृणु यः ते वष्टि ववक्षि तत् यत् वीळयासि वीळु तत् ॥६॥ यत् आजिं याति आजिऽकृत् इंद्रः स्वश्वऽयुः उप रथिऽतमः रथिनां ॥७॥ वि सु विश्वाः अभिऽयुजः वज्रिन् विष्वक् यथा वृह भव नः सुश्रवःऽतमः ॥८॥ अस्माकं सु रथं पुरः इंद्रः कृणोतु सातये न यं धूर्वंति धूर्तयः ॥९॥ वृज्याम ते परि द्विषः अरं ते शक्र दावने गमेम इत् इंद्र गोऽमतः ॥१०॥४३॥ शनैः चित् यंतः अद्रिऽवः अश्वऽवंतः शतऽग्विनः विवक्षणाः अनेहसः ॥११॥ ऊर्ध्वा हि ते दिवेऽदिवे सहस्रा सूनृता शता जरितृऽभ्यः विऽमंहते ॥१२॥ विद्म हि त्वा धनंऽजयं इंद्र दृळ्हा चित् आऽरुजं आऽदारिणं यथा गयं ॥१३॥ ककुहं चित् त्वा कवे मंदंतु धृष्णो इंदवः आ त्वा पणिं यत् ईमहे ॥१४॥ यः ते रेवान् अदाशुरिः प्रऽममर्ष मघत्तये तस्य नः वेदः आ भर ॥१५॥४४॥ इमे ऊं त्वा वि चक्षते सखायः इंद्र सोमिनः पुष्टऽवंतः यथा पशुं ॥१६॥ उत त्वा अबधिरं वयं श्रुत्ऽकर्णं संतं ऊतये दूरात् इह हवामहे ॥१७॥ यत् शुश्रुयाः इमं हवं दुःऽमर्षं चक्रियाः उत भवेः आपिः नः अंतमः ॥१८॥ यत् चित् हि ते अपि व्यथिः जगन्वांसः अमन्महि गोऽदाः इत् इंद्र बोधि नः ॥१९॥ आ त्वा रंभं न जिव्रयः ररभ्म शवसः पते उश्मसि त्वा सधऽस्थे आ ॥२०॥४५॥ स्तोत्रं इंद्राय गायत पुरुऽनृम्णाय सत्वने नकिः यं वृ-



Digitized by Google

यत्ते युधि ॥२१॥ अभि त्वा वृषभा सुते सुतं सृजामि पीतये। तृंपा व्यश्नुही मदं ॥२२॥ मा त्वा मूरा अविष्यवो मोपहस्वान आ दंभन्। माकीं ब्रह्मद्विषो वनः ॥२३॥ इह त्वा गोपरीणसा महे मंदंतु राधसे। सरो गौरो यथा पिब ॥२४॥ या वृत्रहा परावति सना नवा च चुच्युवे। ता संसत्सु प्र वोचत ॥२५॥४६॥ अपिबत्कद्रुवः सुतमिंद्रः सहस्रबाह्वे। अत्रादेदिष्ट पौंस्यं ॥२६॥ सत्यं तत्तुर्वशे यदौ विदानो अह्नवाय्यं। व्यानट् तुर्वणे शमि ॥२७॥ तरणिं वो जनानां त्रदं वाजस्य गोमतः। समानमु प्र शंसिषं ॥२८॥ ऋभुक्षणं न वर्तव उक्थेषु तुग्र्यावृधं। इंद्रं सोमे सचा सुते ॥२९॥ यः कृंतदिद्वि योन्यं त्रिशोकाय गिरिं पृथुं। गोभ्यो गातुं निरेतवे ॥३०॥४७॥ यद्दधिषे मनस्यसि मंदानः प्रेदियक्षसि। मा तत्करिंद्र मृळय ॥३१॥ दभ्रं चिद्धि त्वावतः कृतं शृण्वे अधि क्षमि। जिगात्विंद्र ते मनः ॥३२॥ तवेदु ताः सुकीर्तयोऽसन्नुत प्रशस्तयः। यदिंद्र मृळयासि नः ॥३३॥ मा न एकस्मिन्नागसि मा द्वयोरुत त्रिषु। वधीर्मा शूर भूरिषु ॥३४॥ बिभया हि त्वावत उग्रादभिप्रभंगिणः। दस्मादहमृतीषहः ॥३५॥४८॥ मा सख्युः शूनमा विदे मा पुत्रस्य प्रभूवसो। आवृत्वद्भूतु ते मनः ॥३६॥ को नु मर्या अमिथितः सखा सखायमब्रवीत्। जहा को अस्मदीषते ॥३७॥ एवारे वृषभा सुतेऽसिन्वन्भूर्यावयः। श्वघ्नीव निवता चरन् ॥३८॥ आ त एता वचोयुजा हरी गृभ्णे सुमद्रथा। यदीं ब्रह्मभ्य इद्ददः ॥३९॥ भिंधि विश्वा अप द्विषः परि बाधो जही मृधः। वसु स्पार्हं तदा भर ॥४०॥ यद्वीळाविंद्र यत्स्थिरे यत्पर्शाने पराभृतं। वसु स्पार्हं तदा भर ॥४१॥ यस्य ते



Digitized by Google

रणते युधि ॥२१॥ अभि त्वा वृषभ सुते सुतं सृजामि पीतये तृंप वि
अश्नुहि मदं ॥२२॥ मा त्वा मूराः अविष्यवः मा उपऽहस्वानः
आ दभन् माकीं ब्रह्मऽद्विषः वनः ॥२३॥ इह त्वा गोऽपरीणसा
महे मंदंतु राधसे सरः गौरः यथा पिब ॥२४॥ या वृत्रऽहा परा-
ऽवति सना नवा च चुच्युवे ता संसत्ऽसु प्र वोचत ॥२५॥४६॥
अपिबत् कद्रुवः सुतं इंद्रः सहस्रऽबाह्वे अत्र अदेदिष्ट पौंस्यं ॥२६॥
सत्यं तत् तुर्वशे यदौ विदानः अह्नवाय्यं वि आनट् तुर्वणे शमि
॥२७॥ तरणिं वः जनानां त्रदं वाजस्य गोऽमतः समानं ऊं॰ प्र
शंसिषं ॥२८॥ ऋभुक्षणं न वर्तवे उक्थेषु तुग्र्यऽवृधं इंद्रं सोमे स-
चा सुते ॥२९॥ यः कृंतत् इत् वि योन्यं त्रिऽशोकाय गिरिं पृथुं गो-
भ्यः गातुं निःऽएतवे ॥३०॥४७॥ यत् दधिषे मनस्यसि मंदानः
प्र इत् इयक्षसि मा तत् कः इंद्र मृळय ॥३१॥ दभ्रं चित् हि त्वाऽवतः
कृतं शृण्वे अधि क्षमि जिगातु इंद्र ते मनः ॥३२॥ तव इत् ऊं॰ ताः
सुऽकीर्तयः असन् उत प्रऽशस्तयः यत् इंद्र मृळयासि नः ॥३३॥
मा नः एकस्मिन् आगसि मा द्वयोः उत त्रिषु वधीः मा शूर
भूरिषु ॥३४॥ बिभय हि त्वाऽवतः उग्रात् अभिऽप्रभंगिनः द-
स्मात् अहं ऋतिऽसहः ॥३५॥४८॥ मा सख्युः शूनं आ विदे मा
पुत्रस्य प्रभुऽवसो॰ आऽवृत्वत् भूतु ते मनः ॥३६॥ कः नु मर्याः
अमिथितः सखा सखायं अब्रवीत् जहा कः अस्मत् ईषते ॥३७॥
एवारे वृषभ सुते असिन्वन् भूरि आवयः श्वघ्नीऽइव निऽवता
चरन् ॥३८॥ आ ते एता वचःऽयुजा हरी॰ गृभ्णे सुमत्ऽरथा यत्
ईं ब्रह्मऽभ्यः इत् ददः ॥३९॥ भिंधि विश्वाः अप द्विषः परि बाधः
जहि मृधः वसु स्पार्हं तत् आ भर ॥४०॥ यत् वीळौ इंद्र यत्
स्थिरे यत् पर्शाने पराऽभृतं वसु स्पार्हं तत् आ भर ॥४१॥ यस्य ते



Digitized by Google

विश्वमानुषो भूरेर्दत्रस्य वेदति। वसु स्पार्हं तदा भर ॥४२॥४९॥३॥

---

॥ ४६ ॥ १—३३ वशोऽश्व्यः ॥ १—२०. २९—३१. ३३ इंद्रः । २१—२४ पृथुश्रवसः कानीतस्य दानस्तुतिः । २५—२८. ३२ वायुः ॥ १ पादनिचृत् । २—४. ६. १०. २३. २९. ३३ गायत्री । ५ ककुप् । ७. ११. १९. २५. २७ बृहती । ८ अनुष्टुप् । ९. २६. २८ सतोबृहती । १२ विपरीता । १३ द्विपदा । १४ बृहती पिपीलिकमध्या । १५ ककुम्न्यंकुशिरा । १६ विराट् । १७ जगती । १८ उपरिष्टाद्बृहती । २० विषमपदा । २१. २२. २४. ३२ पंक्तिः । ३० द्विपदा विराट् । ३१ उष्णिक् ॥

॥४६॥ त्वावतः पुरूवसो वयमिंद्र प्रणेतः। स्मसि स्थातर्हरीणां ॥१॥ त्वां हि सत्यमद्रिवो विद्म दातारमिषां। विद्म दातारं रयीणां ॥२॥ आ यस्य ते महिमानं शतमूते शतक्रतो। गीर्भिर्गृणंति कारवः ॥३॥ सुनीथो घा स मर्त्यो यं मरुतो यमर्यमा। मित्रः पांत्यद्रुहः ॥४॥ दधानो गोमदश्ववत्सुवीर्यमादित्यजूत एधते। सदा राया पुरुस्पृहा ॥५॥१॥ तमिंद्रं दानमीमहे शवसानमभीर्वं। ईशानं राय ईमहे ॥६॥ तस्मिन्हि संत्यूतयो विश्वा अभीरवः सचा। तमा वहंतु सप्तयः पुरूवसुं मदाय हरयः सुतं ॥७॥ यस्ते मदो वरेण्यो य इंद्र वृत्रहंतमः। य आददिः स्व१र्नृभिर्यः पृतनासु दुष्टरः ॥८॥ यो दुष्टरो विश्ववार श्रवाय्यो वाजेष्वस्ति तरुता। स नः शविष्ठ सवना वसो गहि गमेम गोमति व्रजे ॥९॥ गव्यो षु णो यथा पुराश्वयोत रथया। वरिवस्य महामह ॥१०॥२॥ नहि ते शूर राधसोऽंतं विंदामि सत्रा। दशस्या नो मघवन्नू चिदद्रिवो धियो वाजेभिराविथ ॥११॥ य ऋष्वः श्रावयत्सखा विश्वेत्स वेद जनिमा पुरुष्टुतः। तं विश्वे मानुषा युगेंद्रं हवंते तविषं यतस्रुचः ॥१२॥ स नो वाजेष्वविता पुरूवसुः पुरःस्थाता। मघवा वृत्रहा भुवत् ॥१३॥ अभि वो वीरमंधसो मदेषु गाय गिरा महा विचेतसं। इंद्रं नाम श्रुत्यं शाकिनं वचो यथा ॥१४॥ ददी रेक्णस्तन्वे ददिर्वसु ददिर्वाजेषु पुरुहूत वाजिनं।



Digitized by Google

विश्वऽमानुषः भूरैः दृत्रस्य वेदति वसु स्पार्हे तत् आ भर ॥४२॥
॥४१॥ ३ ॥

---

॥४६॥ त्वाऽवतः पुरुऽवसो॰ वयं इंद्र प्रऽनेतः॰ स्मसि स्थातः हरीणां ॥१॥ त्वां हि सत्यं अद्रिऽवः विद्म दातारं इषां विद्म दातारं रयीणां ॥२॥ आ यस्य ते महिमानं शतंऽऊते शतंऽक्रतो॰ गीःऽभिः गृणंति कारवः ॥३॥ सुऽनीथः घ सः मर्त्यः यं मरुतः यं अर्यमा मित्रः पांति अद्रुहः ॥४॥ दधानः गोऽमत् अश्वऽवत् सुऽवीर्यं आदित्यऽजूतः एधते सदा राया पुरुऽस्पृहा ॥५॥१॥ तं इंद्रं दानं ईमहे शवसानं अभीर्वं ईशानं रायः ईमहे ॥६॥ तस्मिन् हि संति ऊतयः विश्वाः अभीरवः सचा तं आ वहंतु सप्तयः पुरुऽवसुं मदाय हरयः सुतं ॥७॥ यः ते मदः वरेण्यः यः इंद्र वृत्रहन्ऽतमः यः आऽददिः स्वः नृऽभिः यः पृतनासु दुस्तरः ॥८॥ यः दुस्तरः विश्वऽवार श्रवाय्यः वाजेषु अस्ति तरुता सः नः शविष्ठ सवना आ वसो॰ गहि गमेम गोऽमति व्रजे ॥९॥ गव्योः सु नः यथा पुरा अश्वऽया उत रथऽया वरिवस्य महाऽमह ॥१०॥२॥ नहि ते शूर राधसः अंतं विंदामि सत्रा दशस्य नः मघऽवन् नु चित् अद्रिऽवः धियः वाजेभिः आविथ ॥११॥ यः ऋष्वः श्रवयत्ऽसखा विश्वा इत् सः वेद जनिम पुरुऽस्तुतः तं विश्वे मानुषा युगा इंद्रं हवंते तविषं यतऽस्रुचः ॥१२॥ सः नः वाजेषु अविता पुरुऽवसुः पुरःऽस्थाता मघऽवा वृत्रऽहा भुवत् ॥१३॥ अभि वः वीरं अंधसः मदेषु गाय गिरा महा विऽचेतसं इंद्रं नाम श्रुत्यं शाकिनं वचः यथा ॥१४॥ ददिः रेक्णः तन्वे ददिः वसु ददिः वाजेषु पुरुऽहूत वाजिनं



Digitized by Google

मूनमर्थ॥१५॥३॥ विश्वेषामिरज्यंतं वसूनां सासह्वांसं चिदस्य
वर्पसः। कृपयतो नूनमत्यर्थ॥१६॥ महः सु वो अरमिषे स्त-
वामहे मीळ्हुषे अरंगमाय जग्मये। यज्ञेभिर्गीर्भिर्विश्वमनुषां
मरुतामियक्षसि गाये त्वा नमसा गिरा॥१७॥ ये पातयंते
अज्मभिर्गिरीणां स्नुभिरेषां। यज्ञं महिष्वणीनां सुम्नं तु-
विष्वणीनां प्राध्वरे॥१८॥ प्रभंगं दुर्मतीनामिंद्र शविष्ठा
भर। रयिमस्मभ्यं युज्यं चोदयन्मते ज्येष्ठं चोदयन्मते॥१९॥
सनितः सुसनितरुग्र चित्र चेतिष्ठ सूनृत। प्रासहा सम्राट्
सहुरिं सहंतं भुज्युं वाजेषु पूर्व्यं॥२०॥४॥ आ स एतु य ईवदाँ
अदेवः पूर्तमाददे। यथा चित्वशो अश्व्यः पृथुश्रवसि कानी-
ते३स्या व्युष्याददे॥२१॥ षष्टिं सहस्राश्व्यस्यायुतासनमुष्ट्रा-
नां विंशतिं शता। दश श्यावीनां शता दश त्र्यरुषीणां
दश गवां सहस्रा॥२२॥ दश श्यावा ऋधद्रयो वीतवारास
आशवः। मथ्रा नेमिं नि वावृतुः॥२३॥ दानासः पृथु-
श्रवसः कानीतस्य सुराधसः। रथं हिरण्ययं ददन्मंहिष्ठः सूरि-
रभूद्वर्षिष्ठमकृत श्रवः॥२४॥ आ नो वायो महे तने याहि
मखाय पाजसे। वयं हि ते चकृमा भूरि दावने सद्य-
श्चिन्महि दावने॥२५॥५॥ यो अश्वेभिर्वहते वस्त उस्रा-
स्त्रिः सप्त सप्ततीनां। एभिः सोमेभिः सोमसुद्भिः सोमपा
दानाय शुक्रपूतपाः॥२६॥ यो म इमं चिदु त्मनामंदच्चित्रं
दावने। अरट्वे अक्षे नहुषे सुकृत्वनि सुकृत्तराय सुक्रतुः॥२७॥
उचथ्ये३वपुषि यः स्वराळुत वायो घृतस्नाः। अश्वेषितं
रजेषितं शुनेषितं प्राज्म तदिदं नु तत्॥२८॥ अध प्रि-
यमिषिराय षष्टिं सहस्रासनं। अश्वानामिन्न वृष्णां॥२९॥



Digitized by Google

नूनं अर्थ ॥१५॥३॥ विश्वेषां इरज्यंतं वसूनां ससह्वांसं चित् अस्य वर्पसः कृपऽयतः नूनं अति अर्थ ॥१६॥ महः सु वः अरं इषे स्तवामहे मीळ्हुषे अरंऽगमाय जग्मये यज्ञेभिः गीःऽभिः विश्वऽमनुषां मरुतां इयक्षसि गाये त्वा नमसा गिरा ॥१७॥ ये पातयंते अज्मऽभिः गिरीणां स्नुऽभिः एषां यज्ञं महिऽस्वनीनां सुम्नं तुविऽस्वनीनां प्र अध्वरे ॥१८॥ प्रऽभंगं दुःऽमतीनां इंद्र शविष्ठ आ भर रयिं अस्मभ्यं युज्यं चोदयत्ऽमते ज्येष्ठं चोदयत्ऽमते ॥१९॥ सनितः सुऽसनितः उग्र चित्र चेतिष्ठ सूनृत प्रऽसहा संऽराट् सहुरिं सहंतं भुज्युं वाजेषु पूर्व्यं ॥२०॥४॥ आ सः एतु यः ईवत् आ अदेवः पूर्तं आऽददे यथा चित् वशः अश्व्यः पृथुऽश्रवसि कानीते अस्याः विऽउषि आऽददे ॥२१॥ षष्टिं सहस्रा अश्व्यस्य अयुता असनं उष्ट्रानां विंशतिं शता दश श्यावीनां शता दश त्रिऽअरुषीणां दश गवां सहस्रा ॥२२॥ दश श्यावाः ऋधत्ऽरयः वीतऽवारासः आशवः मथ्राः नेमिं नि ववृतुः ॥२३॥ दानासः पृथुऽश्रवसः कानीतस्य सुऽराधसः रथं हिरण्ययं ददत् मंहिष्ठः सूरिः अभूत् वर्षिष्ठं अकृत श्रवः ॥२४॥ आ नः वायो इति महे तने याहि मखाय पाजसे वयं हि ते चकृम भूरि दावने सद्यः चित् महि दावने ॥२५॥५॥ यः अश्वेभिः वहते वस्ते उस्राः त्रिः सप्त सप्ततीनां एभिः सोमेभिः सोमसुत्ऽभिः सोमऽपाः दानाय शुक्रपूतऽपाः ॥२६॥ यः मे इमं चित् ऊं इति त्मना अमंदत् चित्रं दावने अरट्वे अक्षे नहुषे सुऽकृत्वनि सुकृत्ऽतराय सुऽक्रतुः ॥२७॥ उचथ्ये वपुषि यः स्वऽराट् उत वायो इति घृतऽस्नाः अश्वऽइषितं रजःऽइषितं शुनाऽइषितं प्र अज्म तत् इदं नु तत् ॥२८॥ अध प्रियं इषिराय षष्टिं सहस्रा असनं अश्वानां इत् न वृष्णां ॥२९॥



Digitized by Google

गावो न यूथमुप यंति वध्रय उप मा यंति वध्रयः ॥ ३० ॥ अध
यच्चारथे गणे शतमुष्ट्राँ अचिक्रदत् । अध श्वित्नेषु विंशतिं शता
॥ ३१ ॥ शतं दासे बल्बूथे विप्रस्तरुक्ष आ ददे । ते ते वायविमे जना
मदंतींद्रगोपा मदंति देवगोपाः ॥ ३२ ॥ अध स्या योषणा मही
प्रतीची वशमश्व्यं । अधिरुक्मा वि नीयते ॥ ३३ ॥ ६ ॥

---

॥ ४७ ॥ १—१८ त्रित आप्त्यः ॥ १—१३ आदित्याः । १४—१८ आदित्या उषाश्च ॥ महापंक्तिः ॥

॥ ४७ ॥ महि वो महतामवो वरुण मित्र दाशुषे । यमादित्या
अभि द्रुहो रक्षथा नेमघं नशदनेहसो व ऊतयः सुऊतयो व
ऊतयः ॥ १ ॥ विदा देवा अघानामादित्यासो अपाकृतिं । पक्षा
वयो यथोपरि व्य१स्मे शर्म यच्छतानेहसो व ऊतयः सुऊतयो
व ऊतयः ॥ २ ॥ व्य१स्मे अधि शर्म तत्पक्षा वयो न यंतन । वि-
श्वानि विश्ववेदसो वरूथ्या मनामहेऽनेहसो व ऊतयः सुऊतयो
व ऊतयः ॥ ३ ॥ यस्मा अरासत क्षयं जीवातुं च प्रचेतसः । मनो-
र्विश्वस्य घेदिम आदित्या राय ईशतेऽनेहसो व ऊतयः सुऊतयो
व ऊतयः ॥ ४ ॥ परि णो वृणजन्नघा दुर्गाणि रथ्यो यथा । स्यामे-
दिंद्रस्य शर्मण्यादित्यानामुतावस्यनेहसो व ऊतयः सुऊतयो व
ऊतयः ॥ ५ ॥ ७ ॥ परिह्वृतेदना जनो युष्मादत्तस्य वायति । देवा
अदभ्रमाश वो यमादित्या अहेतनानेहसो व ऊतयः सुऊतयो
व ऊतयः ॥ ६ ॥ न तं तिग्मं चन त्यजो न द्रासदभि तं गुरु । यस्मा
उ शर्म सप्रथ आदित्यासो अराध्वमनेहसो व ऊतयः सुऊतयो
व ऊतयः ॥ ७ ॥ युष्मे देवा अपि ष्मसि युध्यंत इव वर्मसु ।
यूयं महो न एनसो यूयमर्भादुरुष्यतानेहसो व ऊतयः सु-
ऊतयो व ऊतयः ॥ ८ ॥ अदितिर्न उरुष्यत्वदितिः शर्म य-

गावः न यूथं उप यंति वध्रयः उप मा आ यंति वध्रयः॥३०॥ अध यत् चारथे गणे शतं उष्ट्रान् अचिक्रदत् अध श्वित्नेषु विंशतिं शता॥३१॥ शतं दासे बल्बूथे विप्रः तरुक्षे आ ददे ते ते वायो इमे जनाः मदंति इंद्रऽगोपाः मदंति देवऽगोपाः॥३२॥ अध स्या योषणा मही प्रतीची वशं अश्व्यं अधिऽरुक्मा वि नीयते॥३३॥६॥

---

॥४७॥ महि वः महतां अवः वरुण मित्र दाशुषे यं आदित्याः अभि द्रुहः रक्षथ न ईं अघं नशत् अनेहसः वः ऊतयः सुऽऊतयः वः ऊतयः॥१॥ विद देवाः अघानां आदित्यासः अपऽआकृतिं पक्षा वयः यथा उपरि वि अस्मे शर्म यच्छत अनेहसः वः ऊतयः सुऽऊतयः वः ऊतयः॥२॥ वि अस्मे अधि शर्म तत् पक्षा वयः न यंतन विश्वानि विश्वऽवेदसः वरूथ्या मनामहे अनेहसः वः ऊतयः सुऽऊतयः वः ऊतयः॥३॥ यस्मै अरासत क्षयं जीवातुं च प्रऽचेतसः मनोः विश्वस्य घ इत् इमे आदित्याः रायः ईशते अनेहसः वः ऊतयः सुऽऊतयः वः ऊतयः॥४॥ परि नः वृणजन् अघा दुःऽगानि रथ्यः यथा स्याम इत् इंद्रस्य शर्मणि आदित्यानां उत अवसि अनेहसः वः ऊतयः सुऽऊतयः वः ऊतयः॥५॥७॥ परिऽह्वृता इत् अना जनः युष्माऽदत्तस्य वायति देवाः अदभ्रं आश वः यं आदित्याः अहेतन अनेहसः वः ऊतयः सुऽऊतयः वः ऊतयः॥६॥ न तं तिग्मं चन त्यजः न द्रासत् अभि तं गुरु यस्मै ऊं शर्म सऽप्रथः आदित्यासः अराध्वं अनेहसः वः ऊतयः सुऽऊतयः वः ऊतयः॥७॥ युष्मे देवाः अपि स्मसि युध्यंतःऽइव वर्मऽसु यूयं महः नः एनसः यूयं अर्भात् उरुष्यत अनेहसः वः ऊतयः सुऽऊतयः वः ऊतयः॥८॥ अदितिः नः उरुष्यतु अदितिः शर्म य-



Digitized by Google

च्छतु। माता मित्रस्य रेवतोऽर्यम्णो वरुणस्य चानेहसो व ऊतयः सुऊतयो व ऊतयः॥९॥ यद्देवाः शर्म शरणं यद्भद्रं यदनातुरं। त्रिधातु यद्वरूथ्यं१ तदस्मासु वि यंतनानेहसो व ऊतयः सुऊतयो व ऊतयः॥१०॥८॥ आदित्या अव हि ख्यताधि कूलादिव स्पशः। सुतीर्थमर्वतो यथानु नो नेषथा सुगमनेहसो व ऊतयः सुऊतयो व ऊतयः॥११॥ नेह भद्रं रक्षस्विने नावयै नोपया उत। गवे च भद्रं धेनवे वीराय च श्रवस्यतेऽनेहसो व ऊतयः सुऊतयो व ऊतयः॥१२॥ यदाविर्यदपीच्यं१ देवासो अस्ति दुष्कृतं। त्रिते तद्विश्वमाप्त्य आरे अस्मद्दधातनानेहसो व ऊतयः सुऊतयो व ऊतयः॥१३॥ यच्च गोषु दुःष्वप्न्यं यच्चास्मे दुहितर्दिवः। त्रिताय तद्विभावर्याप्त्याय परा वहानेहसो व ऊतयः सुऊतयो व ऊतयः॥१४॥ निष्कं वा घा कृणवते स्रजं वा दुहितर्दिवः। त्रिते दुःष्वप्न्यं सर्वमाप्त्ये परि दद्मस्यनेहसो व ऊतयः सुऊतयो व ऊतयः॥१५॥९॥ तदन्नाय तदपसे तं भागमुपसेदुषे। त्रिताय च द्विताय चोषो दुःष्वप्न्यं वहानेहसो व ऊतयः सुऊतयो व ऊतयः॥१६॥ यथा कलां यथा शफं यथ ऋणं संनयामसि। एवा दुःष्वप्न्यं सर्वमाप्त्ये सं नयामस्यनेहसो व ऊतयः सुऊतयो व ऊतयः॥१७॥ अजैष्माद्यासनाम चाभूमानागसो वयं। उषो यस्माद्दुःष्वप्न्यादभैष्माप तदुच्छत्वनेहसो व ऊतयः सुऊतयो व ऊतयः॥१८॥१०॥

---

॥ ४८ ॥ १–१५ प्रगाथः काण्वः ॥ सोमः ॥ १–४. ६–१५ त्रिष्टुप्। ५ जगती ॥

॥४८॥ स्वादोरभक्षि वयसः सुमेधाः स्वाध्यो वरिवोवित्तरस्य। विश्वे यं देवा उत मर्त्यासो मधु ब्रुवंतो अभि सं-



Digitized by Google

ऋतु माता मित्रस्य रेवतः अर्यम्णः वरुणस्य च अनेहसः वः ऊतयः सुऽऊतयः वः ऊतयः ॥ ९ ॥ यत् देवाः शर्म शरणं यत् भद्रं यत् अनातुरं त्रिऽधातु यत् वरूथ्यं तत् अस्मासु वि यंतन अनेहसः वः ऊतयः सुऽऊतयः वः ऊतयः ॥ १० ॥ ८ ॥ आदित्याः अव हि ख्यत अधि कूलात्ऽइव स्पशः सुऽतीर्थं अर्वतः यथा अनु नः नेषथ सुऽगं अनेहसः वः ऊतयः सुऽऊतयः वः ऊतयः ॥ ११ ॥ न इह भद्रं रक्षस्विने न अवऽयै न उपऽयै उत गवे च भद्रं धेनवे वीराय च श्रवस्यते अनेहसः वः ऊतयः सुऽऊतयः वः ऊतयः ॥ १२ ॥ यत् आविः यत् अपीच्यं देवासः अस्ति दुःऽकृतं त्रिते तत् विश्वं आप्ते आरे अस्मत् दधातन अनेहसः वः ऊतयः सुऽऊतयः वः ऊतयः ॥ १३ ॥ यत् च गोषु दुःऽस्वप्न्यं यत् च अस्मे दुहितः दिवः त्रिताय तत् विभाऽवरि आप्त्याय परा वह अनेहसः वः ऊतयः सुऽऊतयः वः ऊतयः ॥ १४ ॥ निष्कं वा घ कृणवते स्रजं वा दुहितः दिवः त्रिते दुःऽस्वप्न्यं सर्वं आप्त्ये परि दद्मसि अनेहसः वः ऊतयः सुऽऊतयः वः ऊतयः ॥ १५ ॥ ९ ॥ तत्ऽअन्नाय तत्ऽअपसे तं भागं उपऽसेदुषे त्रिताय च द्विताय च उषः दुःऽस्वप्न्यं वह अनेहसः वः ऊतयः सुऽऊतयः वः ऊतयः ॥ १६ ॥ यथा कलां यथा शफं यथा ऋणं संऽनयामसि एव दुःऽस्वप्न्यं सर्वं आप्त्ये सं नयामसि अनेहसः वः ऊतयः सुऽऊतयः वः ऊतयः ॥ १७ ॥ अजैष्म अद्य असनाम च अभूम अनागसः वयं उषः यस्मात् दुःऽस्वप्न्यात् अभैष्म अप तत् उच्छतु अनेहसः वः ऊतयः सुऽऊतयः वः ऊतयः ॥ १८ ॥ १० ॥

---

॥ ४८ ॥ स्वादोः अभक्षि वयसः सुऽमेधाः सुऽआध्यः वरिवोवित्ऽतरस्य विश्वे यं देवाः उत मर्त्यासः मधु ब्रुवंतः अभि सं-



Digitized by Google

चरंति ॥ १ ॥ अंतश्च प्रागा अदितिर्भवास्यवयाता हरसो दैव्यस्य । इंदविंदस्य सख्यं जुषाणः श्रौष्टीव धुरमनु राय ऋध्याः ॥ २ ॥ अपाम सोममममृता अभूमागन्म ज्योतिरविदाम देवान् । किं नूनमस्मान्कृणवदरातिः किमु धूर्तिरमृत मर्त्यस्य ॥ ३ ॥ शं नो भव हृद आ पीत इंदो पितेव सोम सूनवे सुशेवः । सखेव सख्य उरुशंस धीरः प्र ण आयुर्जीवसे सोम तारीः ॥ ४ ॥ इमे मा पीता यशसं उरुष्यवो रथं न गावः समनाह पर्वसु । ते मा रक्षंतु विस्रसश्चरित्रादुत मा स्रामाद्यवयंत्विंदवः ॥ ५ ॥ ११ ॥ अग्निं न मा मथितं सं दिदीपः प्र चक्षय कृणुहि वस्यसो नः । अथा हि ते मद आ सोम मन्ये रेवाँ इव प्र चरा पुष्टिमच्छ ॥ ६ ॥ इषिरेण ते मनसा सुतस्य भक्षीमहि पित्र्यस्येव रायः । सोम राजन्प्र ण आयूंषि तारीरहानीव सूर्यो वासराणि ॥ ७ ॥ सोम राजन्मृळया नः स्वस्ति तव स्मसि व्रत्या३स्तस्य विद्धि । अलर्ति दक्ष उत मन्युरिंदो मा नो अर्यो अनुकामं परा दाः ॥ ८ ॥ त्वं हि नस्तन्वः सोम गोपा गात्रेगात्रे निषसत्था नृचक्षाः । यत्ते वयं प्रमिनाम व्रतानि स नो मृळ सुषखा देव वस्यः ॥ ९ ॥ ऋदूदरेण सख्या सचेय यो मा न रिष्येद्धर्यश्व पीतः । अयं यः सोमो न्यधाय्यस्मे तस्मा इंद्रं प्रतिरमेम्यायुः ॥ १० ॥ १२ ॥ अप त्या अस्थुरनिरा अमीवा निरत्रसन्तमिषीचीरभैषुः । आ सोमो अस्माँ अरुहद्विहाया अगन्म यत्र प्रतिरंत आयुः ॥ ११ ॥ यो न इंदुः पितरो हृत्सु पीतोऽमर्त्यो मर्त्याँ आविवेश । तस्मै सोमाय हविषा विधेम मृळीके अस्य सुमतौ स्याम ॥ १२ ॥ त्वं सोम पितृभिः संविदानोऽनु द्यावापृथिवी आ ततंथ । तस्मै



Digitized by Google

ऽचरंति॥१॥ अंतरिति च प्र अगाः अदितिः भवासि अवऽयाता हरसः दैव्यस्य इंदो इंद्रस्य सख्यं जुषाणः श्रौष्टीऽइव धुरं अनु राये ऋध्याः॥२॥ अपाम सोमं अमृताः अभूम अगन्म ज्योतिः अविदाम देवान् किं नूनं अस्मान् कृणवत् अरातिः किं ऊं इति धूर्तिः अमृत मर्त्यस्य॥३॥ शं नः भव हृदे आ पीतः इंदो इति पिताऽइव सोम सूनवे सुऽशेवः सखाऽइव सख्ये उरुऽशंस धीरः प्र नः आयुः जीवसे सोम तारीः॥४॥ इमे मा पीताः यशसः उरुष्यवः रथं न गावः सं अनाह पर्वऽसु ते मा रक्षंतु विऽस्रसः चरित्रात् उत मा स्रामात् यवयंतु इंदवः॥५॥११॥ अग्निं न मा मथितं सं दिदीपः प्र चक्षय कृणुहि वस्यसः नः अथ हि ते मदे आ सोम मन्ये रेवान्ऽइव प्र चर पुष्टिं अच्छ॥६॥ इषिरेण ते मनसा सुतस्य भक्षीमहि पित्र्यस्यऽइव रायः सोम राजन् प्र नः आयूंषि तारीः अहानिऽइव सूर्यः वासराणि॥७॥ सोम राजन् मृळय नः स्वस्ति तव स्मसि व्रत्याः तस्य विद्धि अलर्ति दक्षः उत मन्युः इंदो इति मा नः अर्यः अनुऽकामं परा दाः॥८॥ त्वं हि नः तन्वः सोम गोपाः गात्रेऽगात्रे निऽससत्थ नृऽचक्षाः यत् ते वयं प्रऽमिनाम व्रतानि सः नः मृळ सुऽसखा देव वस्यः॥९॥ ऋदूदरेण सख्या सचेय यः मा न रिष्येत् हरिऽअश्व पीतः अयं यः सोमः नि अधायि अस्मे इति तस्मै इंद्रं प्रऽतिरं एमि आयुः॥१०॥१२॥ अप त्याः अस्थुः अनिराः अमीवाः निः अत्रसन् तमिषीचीः अभैषुः आ सोमः अस्मान् अरुहत् विऽहायाः अगन्म यत्र प्रऽतिरंते आयुः॥११॥ यः नः इंदुः पितरः हृत्ऽसु पीतः अमर्त्यः मर्त्यान् आऽविवेश तस्मै सोमाय हविषा विधेम मृळीके अस्य सुऽमतौ स्याम॥१२॥ त्वं सोम पितृऽभिः संऽविदानः अनु द्यावापृथिवी इति आ ततंथ तस्मै



Digitized by Google

त इंद्रो हविषा विधेम वयं स्याम पतयो रयीणां ॥१३॥ चातारो देवा अधि वोचता नो मा नो निद्रा ईशत मोत जल्पिः। वयं सोमस्य विश्वह प्रियासः सुवीरासो विदथमा वदेम ॥१४॥ त्वं नः सोम विश्वतो वयोधास्त्वं स्वर्विदा विशा नृचक्षाः। त्वं न इंद्र ऊतिभिः सजोषाः पाहि पश्चातादुत वा पुरस्तात् ॥१५॥१३॥६॥

---

## ॥ अथ वालखिल्यं ॥

॥ ४९ ॥ १—१० प्रस्कण्वः काण्वः ॥ इंद्रः ॥ प्रागाथं ॥

॥४९॥ अभि प्र वः सुराधसमिंद्रमर्च यथा विदे। यो जरितृभ्यो मघवा पुरूवसुः सहस्रेणेव शिक्षति ॥१॥ शतानीकेव प्र जिगाति धृष्णुया हंति वृत्राणि दाशुषे। गिरेरिव प्र रसा अस्य पिन्विरे दत्राणि पुरुभोजसः ॥२॥ आ त्वा सुतास इंदवो मदा य इंद्र गिर्वणः। आपो नु वज्रिन्नन्वोक्यं सरः पृणंति शूर राधसे ॥३॥ अनेहसं प्रतरणं विवक्षणं मध्वः स्वादिष्ठमीं पिब। आ यथा मंदसानः किरासि नः प्र क्षुद्रेव त्मना धृषत् ॥४॥ आ नः स्तोममुप द्रवद्धियानो अश्वो न सोतृभिः। यं ते स्वधावन्स्वदयंति धेनव इंद्र कण्वेषु रातयः ॥५॥१४॥ उग्रं न वीरं नमसोप सेदिम विभूतिमक्षितावसुं। उद्रीव वज्रिन्नवतो न सिंचते क्षरंतींद्र धीतयः ॥६॥ यद्ध नूनं यद्वा यज्ञे यद्वा पृथिव्यामधि। अतो नो यज्ञमाशुभिर्महेमत उग्र उग्रेभिरा गहि ॥७॥ अजिरासो हरयो ये त आशवो वाता इव प्रसक्षिणः। येभिरपत्यं मनुषः परीयसे येभिर्विश्वं स्वर्दृशे ॥८॥ एतावतस्त ईमह इंद्र सुम्नस्य गोमतः। यथा प्रावो मघवन्मेध्यातिथिं यथा नीपातिथिं



Digitized by Google

ते इंदो॒ ह॒विषा॑ वि॒धेम व॒यं स्या॑म॒ पत॑यः र॒यी॒णां ॥१३॥ त्रातारः देवाः अधि॑ वोचत॒ नः मा नः नि॒ऽद्रा ई॒शत॒ मा उ॒त जल्पिः व॒यं सोम॑स्य विश्वह प्रि॒यासः॑ सु॒ऽवीरा॑सः वि॒दथं॑ आ व॒देम ॥१४॥ त्वं नः सोम॒ वि॒श्वतः॑ व॒यः॒ऽधाः त्वं स्वः॒ऽवित् आ वि॒श नृ॒ऽचक्षाः त्वं नः इं॒दो॒ ऊ॒तिऽभिः स॒ऽजोषाः पा॒हि प॒श्चातात् उ॒त वा॒ पु॒रस्तात् ॥१५॥१३॥६॥

---

॥ अथ वालखिल्यं ॥

॥४९॥ अ॒भि प्र व॒ः सु॒ऽराधसं इंद्रं॑ अ॒र्च॒ यथा॑ वि॒दे यः ज॒रि॒तृ॒ऽभ्यः म॒घऽवा पु॒रु॒ऽवसुः स॒हस्रे॑णऽइव शिक्षति ॥१॥ श॒तानी॑काऽइव प्र जि॒गा॒ति धृ॒ष्णु॒ऽया हंति॑ वृ॒त्राणि॑ दा॒शुषे॑ गि॒रेः॑ऽइव प्र रसाः अस्य पि॒न्वि॒रे॒ दत्रा॑णि पु॒रु॒ऽभोज॑सः ॥२॥ आ त्वा॒ सु॒तासः इंद॑वः मदाः ये इं॒द्र गि॒र्व॒णः आपः नु व॒ज्रि॒न् अनु ओक्यं सरः पृ॒णंति॑ शूर राधसे ॥३॥ अ॒ने॒हसं॑ प्र॒ऽतर॑णं वि॒वक्ष॑णं मध्वः स्वादि॑ष्ठं ई॒ पि॒ब॒ आ यथा॑ मं॒द॒सा॒नः कि॒रासि॑ न॒ः प्र क्षु॒द्राऽइव त्मना॑ धृ॒षत् ॥४॥ आ नः॒ स्तोमं॑ उप॑ द्र॒वत् हि॒या॒नः अश्वः न सोतृ॒ऽभिः यं ते॒ स्व॒धा॒ऽव॒न् स्व॒दयं॑ति धे॒नवः इंद्र॑ कण्वे॑षु रा॒तयः ॥५॥१४॥ उ॒ग्रं न वी॒रं नम॑सा उप॑ से॒दि॒म वि॒ऽभूतिं॑ अक्षि॑तऽवसुं उ॒द्रीऽइ॑व व॒ज्रि॒न् अव॒तः न सिं॒चते॒ क्षरं॑ति इं॒द्र धी॒तयः ॥६॥ यत् ह॒ नूनं यत् वा॒ य॒ज्ञे यत् वा॒ पृ॒थि॒व्यां अधि॑ अतः नः य॒ज्ञं आ॒शु॒ऽभिः म॒हे॒ऽम॒ते॒ उ॒ग्रः उ॒ग्रेभिः आ ग॒हि॒ ॥७॥ अ॒जि॒रासः हर॑यः ये ते॒ आ॒शवः वाताः॑ऽइव प्र॒ऽस॒क्षि॒णः येभिः अप॑त्यं मनु॑षः प॒रि॒ऽईय॑से येभिः विश्वं॑ स्वः दृ॒शे ॥८॥ ए॒तावतः ते॒ ई॒म॒हे॒ इंद्र॑ सु॒म्नस्य॑ गोऽमतः यथा॑ प्र आवः म॒घ॒ऽव॒न् मेध्य॑ऽअतिथिं यथा॑ नीप॑ऽअतिथिं



Digitized by Google

धने ॥ ९ ॥ यथा कण्वे मघवन्त्रसदस्यवि यथा पक्थे दशव्रजे । यथा गोशर्ये असनोर्ऋजिश्वनींद्र गोमद्धिरण्यवत् ॥ १० ॥ १५ ॥

॥ ५० ॥ १–१० पुष्टिगुः काण्वः ॥ इंद्रः ॥ प्रागाथं ॥

॥ ५० ॥ प्र सु श्रुतं सुराधसमर्चा शक्रमभिष्टये । यः सुन्वते स्तुवते काम्यं वसु सहस्रेणेव मंहते ॥ १ ॥ शतानीका हेतयो अस्य दुष्टरा इंद्रस्य समिषो महीः । गिरिर्न भुज्मा मघवत्सु पिन्वते यदीं सुता अमंदिषुः ॥ २ ॥ यदीं सुतास इंदवोऽभि प्रियममंदिषुः । आपो न धायि सवनं म आ वसो दुघा इवोप दाशुषे ॥ ३ ॥ अनेहसं वो हवमानमूतये मध्वः क्षरंति धीतयः । आ त्वा वसो हवमानास इंदव उप स्तोत्रेषु दधिरे ॥ ४ ॥ आ नः सोमे स्वध्वर इयानो अत्यो न तोशते । यं ते स्वदावन्त्स्वदंति गूर्तयः पौरे छंदयसे हवं ॥ ५ ॥ १६ ॥ प्र वीरमुग्रं विविचिं धनस्पृतं विभूतिं राधसो महः । उद्रीव वज्रिन्नवतो वसुत्वना सदा पीपेथ दाशुषे ॥ ६ ॥ यद्ध नूनं परावति यद्वा पृथिव्यां दिवि । युजान इंद्र हरिभिर्महेमत ऋष्व ऋष्वेभिरा गहि ॥ ७ ॥ रथिरासो हरयो ये ते अस्रिध ओजो वातस्य पिप्रति । येभिर्नि दस्युं मनुषो निघोषयो येभिः स्वः परीयसे ॥ ८ ॥ एतावतस्ते वसो विद्याम शूर नव्यसः । यथा प्राव एतशं कृत्व्ये धने यथा वशं दशव्रजे ॥ ९ ॥ यथा कण्वे मघवन्मेधे अध्वरे दीर्घनीथे दमूनसि । यथा गोशर्ये असिषासो अद्रिवो मयि गोत्रं हरिश्रियं ॥ १० ॥ १७ ॥

॥ ५१ ॥ १–१० पुष्टिगुः काण्वः ॥ इंद्रः ॥ प्रागाथं ॥

॥ ५१ ॥ यथा मनौ सांवरणौ सोममिंद्रापिबः सुतं । नीपा-



Digitized by Google

धने ॥९॥ यथा कण्वे मघऽवन् त्रसदस्यवि यथा पक्थे दश-ऽव्रजे यथा गोऽशर्ये असनोः ऋजिश्वनि इंद्र गोऽमत् हिरण्य-ऽवत् ॥१०॥१५॥

---

॥५०॥ प्र सु श्रुतं सुऽराधसं अर्च शक्रं अभिष्टये यः सुन्वते स्तु-वते काम्यं वसु सहस्रेणऽइव मंहते ॥१॥ शतऽअनीकाः हेतयः अस्य दुस्तराः इंद्रस्य संऽइषः महीः गिरिः न भुज्मा मघवत्ऽसु पिन्वते यत् ईं सुताः अमंदिषुः ॥२॥ यत् ईं सुतासः इंदवः अभि प्रियं अमंदिषुः आपः न धायि सवनं मे आ वसो दुघाःऽइव उप दाशुषे ॥३॥ अनेहसं वः हवमानं ऊतये मध्वः क्षरंति धीतयः आ त्वा वसो हवमानासः इंदवः उप स्तोत्रेषु दधिरे ॥४॥ आ नः सोमे सुऽअध्वरे इयानः अत्यः न तोशते यं ते स्वदाऽवन् स्वदंति गूर्तयः पौरे छंदयसे हवं ॥५॥१६॥ प्र वीरं उग्रं विविचिं धनऽस्पृतं वि-ऽभूतिं राधसः महः उद्रीऽइव वज्रिन् अवतः वसुऽत्वना सदा पीपेथ दाशुषे ॥६॥ यत् ह नूनं पराऽवति यत् वा पृथिव्यां दिवि युजानः इंद्र हरिऽभिः महेऽमते ऋष्वः ऋष्वेभिः आ गहि ॥७॥ रथिरासः हरयः ये ते अस्रिधः ओजः वातस्य पिप्रति येभिः नि दस्युं मनुषः निऽघोषयः येभिः स्वः॰ परिऽईयसे ॥८॥ एतावतः ते वसो विद्याम शूर नव्यसः यथा प्र आवः एतशं कृत्व्ये धने य-था वशं दशऽव्रजे ॥९॥ यथा कण्वे मघऽवन् मेधे अध्वरे दीर्घ-ऽनीथे दमूनसि यथा गोऽशर्ये असिसासः अद्रिऽवः मयि गोत्रं हरिऽश्रियं ॥१०॥१७॥

---

॥५१॥ यथा मनौ सांऽवरणौ सोमं इंद्र अपिबः सुतं नीप-



Digitized by Google

तिथौ मघवन्मेध्यातिथौ पुष्टिगौ श्रुष्टिगौ सचा ॥ १ ॥ पार्षद्वाणः प्रस्कण्वं समसादयच्छयानं जिव्रिमुद्धितं । सहस्राण्यसिषासद्गवामृषिस्त्वोतो दस्यवे वृकः ॥ २ ॥ य उक्थेभिर्न विंधते चिकिद्य ऋषिचोदनः । इंद्रं तमच्छा वद नव्यस्या मत्यरिष्यंतं न भोजसे ॥ ३ ॥ यस्मा अर्कं सप्तशीर्षाणमानृचुस्त्रिधातुमुत्तमे पदे । स त्व१मा विश्वा भुवनानि चिक्रददादिज्जनिष्ट पौंस्यं ॥ ४ ॥ यो नो दाता वसूनामिंद्रं तं हूमहे वयं । विद्मा ह्यस्य सुमतिं नवीयसीं गमेम गोमति व्रजे ॥ ५ ॥ १८ ॥ यस्मै त्वं वसो दानाय शिक्षसि स रायस्पोषमश्नुते । तं त्वा वयं मघवन्निंद्र गिर्वणः सुतावंतो हवामहे ॥ ६ ॥ कदा चन स्तरीरसि नेंद्र सश्चसि दाशुषे । उपोपेन्नु मघवन्भूय इन्नु ते दानं देवस्य पृच्यते ॥ ७ ॥ प्र यो ननक्षे अभ्योजसा क्रिविं वधैः शुष्णं निघोषयन् । यदेदस्तंभीत्प्रथयन्नमूं दिवमादिज्जनिष्ट पार्थिवः ॥ ८ ॥ यस्यायं विश्व आर्यो दासः शेवधिपा अरिः । तिरश्चिदर्ये रुशमे पवीरवि तुभ्येत्सो अज्यते रयिः ॥ ९ ॥ तुरण्यवो मधुमंतं घृतश्चुतं विप्रासो अर्कमानृचुः । अस्मे रयिः पप्रथे वृष्ण्यं शवोऽस्मे सुवानास इंदवः ॥ १० ॥ १९ ॥

---

॥ ५२ ॥ १—१० आयुः काण्वः ॥ इंद्रः ॥ प्रागाथं ॥

॥ ५२ ॥ यथा मनौ विवस्वति सोमं शक्रापिबः सुतं । यथा त्रिते छंद इंद्र जुजोषस्यायौ मादयसे सचा ॥ १ ॥ पृषध्रे मेध्ये मातरिश्वनींद्र सुवाने अमंदथाः । यथा सोमं दशशिप्रे दशोण्ये स्यूमरश्मावृजूनसि ॥ २ ॥ य उक्था केवला दधे यः सोमं धृषितापिबत् । यस्मै विष्णुस्त्रीणि पदा विचक्रम उप मित्रस्य धर्मभिः ॥ ३ ॥ यस्य त्वमिंद्र स्तोमेषु चाकनो वाजे वाजिञ्छतक्रतो ।



Digitized by Google

ऽअतिथौ मघऽवन् मेध्येऽअतिथौ पुष्टिऽगौ श्रुष्टिऽगौ सचा॥१॥
पार्षद्वाणः प्रस्कण्वं सं असादयत् शयानं जिव्रिं उद्धितं सहस्राणि
असिसासत् गवां ऋषिः त्वाऽऊतः दस्यवे वृकः॥२॥ यः उक्थे-
भिः न विंधते चिकित् यः ऋषिऽचोदनः इंद्रं तं अच्छ वद नव्यस्या
मती अरिष्यंतं न भोजसे॥३॥ यस्मै अर्कं सप्तऽशीर्षाणं आनृचुः
त्रिऽधातुं उत्ऽतमे पदे सः तु इमा विश्वा भुवनानि चिक्रदत् आत्
इत् जनिष्ट पौंस्यं॥४॥ यः नः दाता वसूनां इंद्रं तं हूमहे वयं विद्म
हि अस्य सुऽमतिं नवीयसीं गमेम गोऽमति व्रजे॥५॥१८॥ यस्मै
त्वं वसो' दानाय शिक्षसि सः रायः पोषं अश्नुते तं त्वा वयं मघ-
ऽवन् इंद्र गिर्वणः सुतऽवंतः हवामहे॥६॥ कदा चन स्तरीः असि
न इंद्र सश्चसि दाशुषे उपऽउप इत् नु मघऽवन् भूयः इत् नु ते दा-
नं देवस्य पृच्यते॥७॥ प्र यः ननक्षे अभि ओजसा क्रिविं वधैः शु-
ष्णं निऽघोषयन् यदा इत् अस्तभीत् प्रथयन् अमूं दिवं आत् इत्
जनिष्ट पार्थिवः॥८॥ यस्य अयं विश्वः आर्यः दासः शेवधिऽपाः
अरिः तिरः चित् अर्ये रुशमे पवीरवि तुभ्य इत् सः अज्यते रयिः
॥९॥ तुरण्यवः मधुऽमंतं घृतऽश्चुतं विप्रासः अर्कं आनृचुः अ-
स्मे' रयिः पप्रथे वृष्ण्यं शवः अस्मे' सुवानासः इंदवः॥१०॥१९॥

---

॥५२॥ यथा मनौ विवस्वति सोमं शक्र अपिबः सुतं यथा त्रिते
छंदः इंद्र जुजोषसि आयौ मादयसे सचा॥१॥ पृषध्रे मेध्ये मातरि-
श्वनि इंद्र सुवाने अमंदथाः यथा सोमं दशऽशिप्रे दशऽओण्ये स्यू-
मऽरश्मौ ऋजूनसि॥२॥ यः उक्था केवला दधे यः सोमं धृषिता
अपिबत् यस्मै विष्णुः त्रीणि पदा विऽचक्रमे उप मित्रस्य धर्म-
ऽभिः॥३॥ यस्य त्वं इंद्र स्तोमेषु चाकनः वाजे वाजिन् शतऽक्रतो॰



Digitized by Google

तं त्वा वयं सुदुघामिव गोदुहो जुहूमसि श्रवस्यवः ॥४॥ यो नो
दाता स नः पिता महाँ उग्र ईशानकृत् । अयामन्नुग्रो मघवा पु-
रूवसुर्गोरश्वस्य प्र दातु नः ॥५॥२०॥ यस्मै त्वं वसो दानाय मंहसे
स रायस्पोषमिन्वति । वसूयवो वसुपतिं शतक्रतुं स्तोमैरिंद्रं ह-
वामहे ॥६॥ कदा चन प्र युच्छस्युभे नि पासि जन्मनी । तुरीया-
दित्य हवनं त इंद्रियमा तस्थावमृतं दिवि ॥७॥ यस्मै त्वं मघ-
वन्निंद्र गिर्वणः शिक्षो शिक्षसि दाशुषे । अस्माकं गिर उत सुष्टु-
तिं वसो कण्ववच्छृणुधी हवं ॥८॥ अस्तावि मन्म पूर्व्यं ब्रह्मेंद्राय
वोचत । पूर्वीर्ऋतस्य बृहतीरनूषत स्तोतुर्मेधा असृक्षत ॥९॥
समिंद्रो रायो बृहतीरधूनुत सं क्षोणी समु सूर्यं । सं शुक्रासः
शुचयः सं गवाशिरः सोमा इंद्रममंदिषुः ॥१०॥२१॥

---

॥ ५३ ॥ १-८ मेध्यः काण्वः ॥ इंद्रः ॥ प्रागाथं ॥

॥५३॥ उपमं त्वा मघोनां ज्येष्ठं च वृषभाणां । पूर्भित्तमं
मघवन्निंद्र गोविदमीशानं राय ईमहे ॥१॥ य आयुं कुत्सम-
तिथिग्वमर्दयो वावृधानो दिवेदिवे । तं त्वा वयं हर्यश्वं शत-
क्रतुं वाजयंतो हवामहे ॥२॥ आ नो विश्वेषां रसं मध्वः सिं-
चंत्वद्रयः । ये परावति सुन्विरे जनेष्वा ये अर्वावतींदवः ॥३॥
विश्वा द्वेषांसि जहि चाव चा कृधि विश्वे सन्वंत्वा वसु ।
शीर्ष्टेषु चित्ते मदिरासो अंशवो यत्रा सोमस्य तृंपसि ॥४॥२२॥
इंद्र नेदीय एदिहि मितमेधाभिरूतिभिः । आ शंतम शंत-
माभिरभिष्टिभिरा स्वापे स्वापिभिः ॥५॥ आजितुरं सत्प-
तिं विश्वचर्षणिं कृधि प्रजास्वाभगं । प्र सू तिरा शची-
भिर्ये त उक्थिनः क्रतुं पुनत आनुषक् ॥६॥ यस्ते सा-



Digitized by Google

तं त्वा वयं सुदुघांऽइव गोऽदुहः जुहूमसि श्रवस्यवः ॥४॥ यः नः दाता सः नः पिता महान् उग्रः ईशानऽकृत् अयामन् उग्रः मघऽवा पुरुऽवसुः गोः अश्वस्य प्र दातु नः ॥५॥२०॥ यस्मै त्वं वसो दानाय मंहसे सः रायः पोषं इन्वति वसुऽयवः वसुऽपतिं शतऽक्रतुं स्तोमैः इंद्रं हवामहे ॥६॥ कदा चन प्र युच्छसि उभे नि पासि जन्मनी तुरीय आदित्य हवनं ते इंद्रियं आ तस्थौ अमृतं दिवि ॥७॥ यस्मै त्वं मघऽवन् इंद्र गिर्वणः शिक्षो शिक्षसि दाशुषे अस्माकं गिरः उत सुऽस्तुतिं वसो कण्वऽवत् शृणुधि हवं ॥८॥ अस्तावि मन्म पूर्व्यं ब्रह्म इंद्राय वोचत पूर्वीः ऋतस्य बृहतीः अनूषत स्तोतुः मेधाः असृक्षत ॥९॥ सं इंद्रः रायः बृहतीः अधूनुत सं क्षोणी सं ऊं सूर्यं सं शुक्रासः शुचयः सं गोऽआशिरः सोमाः इंद्रं अमंदिषुः ॥१०॥२१॥

---

॥५३॥ उपऽमं त्वा मघोनां ज्येष्ठं च वृषभाणां पूर्भित्ऽतमं मघऽवन् इंद्र गोऽविदं ईशानं रायः ईमहे ॥१॥ यः आयुं कुत्सं अतिथिऽग्वं अर्दयः ववृधानः दिवेऽदिवे तं त्वा वयं हरिऽअश्वं शतऽक्रतुं वाजऽयंतः हवामहे ॥२॥ आ नः विश्वेषां रसं मध्वः सिंचंतु अद्रयः ये पराऽवति सुन्विरे जनेषु आ ये अर्वाऽवति इंदवः ॥३॥ विश्वा द्वेषांसि जहि च अव च आ कृधि विश्वे सन्वंतु आ वसु शीर्ष्टेषु चित् ते मदिरासः अंशवः यत्र सोमस्य तृंपसि ॥४॥२२॥ इंद्र नेदीयः आ इत् इहि मितऽमेधाभिः ऊतिऽभिः आ शंऽतम शंऽतमाभिः अभिष्टिऽभिः आ सुऽआपे स्वापिऽभिः ॥५॥ आजिऽतुरं सत्ऽपतिं विश्वऽचर्षणिं कृधि प्रऽजासु आऽभगं प्र सु तिर शचीभिः ये ते उक्थिनः क्रतुं पुनते आनुषक् ॥६॥ यः ते सा-



Digitized by Google

धिष्ठोऽवसे ते स्याम भरेषु ते। वयं होत्राभिरुत देवहूतिभिः ससवांसो मनामहे ॥७॥ अहं हि ते हरिवो ब्रह्म वाजयुराजिं यामि सदोतिभिः। त्वामिदेव तममे समश्वयुर्गव्युरग्रे मथीनां ॥८॥२३॥

---

॥५४॥ १–८ मातरिश्वा काण्वः ॥ १.२.५–८ इंद्रः । ३.४ विश्वे देवाः ॥ प्रागाथं ॥

॥५४॥ एतत्त इंद्र वीर्यं गीर्भिर्गृणंति कारवः। ते स्तोभंत ऊर्जमावन्घृतश्चुतं पौरासो नक्षन्धीतिभिः ॥१॥ नक्षंत इंद्रमवसे सुकृत्यया येषां सुतेषु मंदसे। यथा संवर्ते अमदो यथा कृश एवास्मे इंद्र मत्स्व ॥२॥ आ नो विश्वे सजोषसो देवासो गंतनोप नः। वसवो रुद्रा अवसे न आ गमञ्छृण्वंतु मरुतो हवं ॥३॥ पूषा विष्णुर्हवनं मे सरस्वत्यवंतु सप्त सिंधवः। आपो वातः पर्वतासो वनस्पतिः शृणोतु पृथिवी हवं ॥४॥२४॥ यदिंद्र राधो अस्ति ते माघोनं मघवत्तम। तेन नो बोधि सधमाद्यो वृधे भगो दानाय वृत्रहन् ॥५॥ आजिपते नृपते त्वमिद्धि नो वाज आ वक्षि सुक्रतो। वीती होत्राभिरुत देववीतिभिः ससवांसो वि शृण्विरे ॥६॥ संति ह्य१र्य आशिष इंद्र आयुर्जनानां। अस्मान्नक्षस्व मघवन्नुपावसे धुक्षस्व पिप्युषीमिषं ॥७॥ वयं त इंद्र स्तोमेभिर्विधेम त्वमस्माकं शतक्रतो। महि स्थूरं शशयं राधो अह्रयं प्रस्कण्वाय नि तोशय ॥८॥२५॥

---

॥५५॥ १–५ कृशः काण्वः ॥ प्रस्कण्वस्य दानस्तुतिः ॥ १.२.४ गायत्री । ३.५ अनुष्टुप् ॥

॥५५॥ भूरीदिंद्रस्य वीर्य१ं व्यख्यमभ्यायति। राधस्ते दस्यवे वृक ॥१॥ शतं श्वेतास उक्षणो दिवि तारो न रोचंते। मह्ना दिवं न तस्तभुः ॥२॥ शतं वेणूञ्छतं शुनः शतं चर्माणि म्ला-



Digitized by Google

धिष्ठः अवसे ते स्याम भरेषु ते वयं होत्राभिः उत देवहूतिऽभिः ससऽवांसः मनामहे॥७॥ अहं हि ते हरिऽवः ब्रह्म वाजऽयुः आजिं यामि सदा ऊतिऽभिः त्वां इत् एव तं अमे सं अश्वऽयुः गव्युः अग्रे मथीनां ॥८॥२३॥

---

॥५४॥ एतत् ते इंद्र वीर्यं गीःऽभिः गृणंति कारवः ते स्तोभंतः ऊर्जं आवन् घृतऽश्रुतं पौरासः नक्षन् धीतिऽभिः ॥१॥ नक्षंते इंद्रं अवसे सुऽकृत्यया येषां सुतेषु मंदसे यथा संऽवर्ते अमदः यथा कृशे एव अस्मे इंद्र मत्स्व ॥२॥ आ नः विश्वे सऽजोषसः देवासः गंतन उप नः वसवः रुद्राः अवसे नः आ गमन् शृण्वंतु मरुतः हवं॥३॥ पूषा विष्णुः हवनं मे सरस्वती अवंतु सप्त सिंधवः आपः वातः पर्वतासः वनस्पतिः शृणोतु पृथिवी हवं ॥४॥२४॥ यत् इंद्र राधः अस्ति ते माघोनं मघवत्ऽतम तेन नः बोधि सधऽमाद्यः वृधे भगः दानाय वृत्रऽहन् ॥५॥ आजिऽपते नृऽपते त्वं इत् हि नः वाजे आ वक्षि सुऽक्रतो॰ वीती होत्राभिः उत देववीतिऽभिः ससऽवांसः वि शृण्विरे॥६॥ संति हि अर्ये आऽशिषः इंद्रे आयुः जनानां अस्मान् नक्षस्व मघऽवन् उप अवसे धुक्षस्व पिप्युषीं इषं॥७॥ वयं ते इंद्र स्तोमेभिः विधेम त्वं अस्माकं शतऽक्रतो॰ महि स्थूरं शशयं राधः अह्रयं प्रस्कण्वाय नि तोशय ॥८॥२५॥

---

॥५५॥ भूरि इत् इंद्रस्य वीर्यं वि अख्यं अभि आ अयति राधः ते दस्यवे वृक॥१॥ शतं श्वेतासः उक्षणः दिवि तारः न रोचंते मह्ना दिवं न तस्तभुः॥२॥ शतं वेणून् शतं शुनः शतं चर्माणि म्ला-



Digitized by Google

तानि॑। श॒तं मे॑ बल्बजस्तु॒का अरु॑षीणां चतुः॒शतं॑॥३॥ सु॒दे॒वाः स्थ॑ काण्वायना॒ वयो॑वयो विच॒रन्तः॑। अश्वा॑सो॒ न च॑ङ्क्रमत॥४॥ आदित्सा॒प्तस्य॑ चर्कि॒रन्नानू॑नस्य॒ महि॒ श्रवः॑। श्या॒वीर॑तिध्व॒सन्प॒थश्चक्षु॑षा च॒न सं॒नशे॑ ॥५॥२६॥

॥५६॥ १–५ पृषध्रः काण्वः ॥ १–४ प्रस्कण्वस्य दानस्तुतिः । ५ अग्निसूर्यौ ॥
१–४ गायत्री । ५ पंक्तिः ॥

॥५६॥ प्रति॑ ते दस्यवे वृक॒ राधो॑ अद॒र्श्यह्र॑यं। द्यौर्न प्र॑थि॒ना शवः॑॥१॥ द॒श॒ मह्यं॑ पौतक्र॒तः स॒हस्रा॒ दस्य॑वे॒ वृकः॑। नित्या॑द्रा॒यो अ॑मंहत ॥२॥ श॒तं मे॑ गर्द॒भानां॑ श॒तमूर्णा॑वतीनां। श॒तं दा॒साँ अति॒ स्रजः॑ ॥३॥ तत्रो॒ अपि॒ प्राणी॑यत पू॒तक्र॑तायै॒ व्य॑क्ता। अश्वा॑नामि॒न्न यू॒थ्यां॑॥४॥ अचे॑त्य॒ग्निश्चि॑कि॒तुर्ह॑व्य॒वाट् स सु॒मद्र॑थः। अ॒ग्निः शु॒क्रेण॑ शो॒चिषा॑ बृ॒हत्सूरो॑ अरोचत दि॒वि सूर्यो॑ अरोचत॥५॥२७॥

॥ ५७ ॥ १–४ मेध्यः काण्वः ॥ अश्विनौ ॥ त्रिष्टुप् ॥

॥५७॥ यु॒वं दे॑वा॒ क्रतु॑ना पू॒र्व्येण॑ यु॒क्ता रथे॑न तवि॒षं य॑जत्रा। आग॑च्छतं नासत्या॒ शची॑भिरि॒दं तृ॒तीयं॒ सव॑नं पिबाथः॥१॥ यु॒वां दे॒वास्त्रय॑ एकाद॒शासः॑ स॒त्याः स॒त्यस्य॑ ददृशे पु॒रस्ता॑त्। अ॒स्माकं॑ य॒ज्ञं सव॑नं जुषा॒णा पा॒तं सोम॑मश्विना॒ दीद्य॑ग्नी ॥२॥ प॒नाय्यं॒ तद॑श्विना कृ॒तं वां॑ वृष॒भो दि॒वो रज॑सः पृथि॒व्याः। स॒हस्रं॒ शंसा॑ उ॒त ये गवि॑ष्टौ॒ सर्वाँ॒ इत्ताँ उप॑ याता॒ पिब॑ध्यै ॥३॥ अ॒यं वां॑ भा॒गो निहि॑तो यजत्रे॒मा गिरो॑ नासत्योप॑ यातं। पिब॑तं॒ सोमं॒ मधु॑मन्तमस्मे॒ प्र दा॒श्वांस॑मवतं॒ शची॑भिः ॥४॥२८॥

॥ ५८ ॥ १–३ मेध्यः काण्वः ॥ १ विश्वे देवा ऋत्विजो वा । २, ३ विश्वे देवाः ॥ त्रिष्टुप् ॥

॥५८॥ यमृ॒त्विजो॑ बहु॒धा क॒ल्पय॑न्तः॒ सचे॑तसो य॒ज्ञमि॒मं वह॑-



Digitized by Google

तानि शतं मे बल्बजऽस्तुकाः अरुषीणां चतुःऽशतं ॥३॥ सुऽदेवाः स्थ काण्वायनाः वयःऽवयः विऽचरंतः अश्वासः न चंक्रमत ॥४॥ आत् इत् साप्तस्य चर्किरन् न अनूनस्य महि श्रवः श्यावीः अतिऽध्वसन् पथः चक्षुषा चन संऽनशे॥५॥२६॥

---

॥५६॥ प्रति ते दस्यवे वृक राधः अदर्शि अह्रयं द्यौः न प्रथिना शवः ॥१॥ दश मह्यं पौतऽक्रतः सहस्रा दस्यवे वृकः नित्यात् रायः अमंहत ॥२॥ शतं मे गर्दभानां शतं ऊर्णाऽवतीनां शतं दासान् अति स्रजः ॥३॥ तत्रो इति अपि प्र अनीयत पूतऽक्रतायै विऽअक्ता अश्वानां इत् न यूथ्यां ॥४॥ अचेति अग्निः चिकितुः हव्यऽवाट् सः सुमत्ऽरथः अग्निः शुक्रेण शोचिषा बृहत् सूरः अरोचत दिवि सूर्यः अरोचत ॥५॥२७॥

---

॥५७॥ युवं देवा क्रतुना पूर्व्येण युक्ता रथेन तविषं यजत्रा आ अगच्छतं नासत्या शचीभिः इदं तृतीयं सवनं पिबाथः ॥१॥ युवां देवाः त्रयः एकादशासः सत्याः सत्यस्य ददृशे पुरस्तात् अस्माकं यज्ञं सवनं जुषाणा पातं सोमं अश्विना दीदिऽअग्नी इति ॥२॥ पनाय्यं तत् अश्विना कृतं वां वृषभः दिवः रजसः पृथिव्याः सहस्रं शंसाः उत ये गोऽइष्टौ सर्वान् इत् तान् उप यात पिबध्यै ॥३॥ अयं वां भागः निऽहितः यजत्रा इमाः गिरः नासत्या उप यातं पिबतं सोमं मधुऽमंतं अस्मे इति प्र दाश्वांसं अवतं शचीभिः ॥४॥२८॥

---

॥५८॥ यं ऋत्विजः बहुधा कल्पयंतः सऽचेतसः यज्ञं इमं वहं-



Digitized by Google

ति। यो अ॑नूचा॒नो ब्रा॑ह्म॒णो यु॒क्त आ॑सी॒त्का स्वि॒त्तत्र॒ यज॑मानस्य संवित्॥१॥ एक॑ ए॒वाग्निर्ब॑हु॒धा समि॑द्ध॒ एकः॒ सूर्यो॒ विश्व॒मनु॒ प्रभूतः। एकै॒वोषाः सर्व॑मि॒दं वि भा॒त्येकं॒ वा इ॒दं वि ब॑भूव॒ सर्वं॑ ॥२॥ ज्योति॑ष्मंतं के॒तुमं॑तं त्रिच॒क्रं सु॒खं रथं॑ सु॒षदं॒ भूरि॑वारं। चि॒त्राम॑घा॒ यस्य॒ योगे॑ऽधिज॒ज्ञे तं वां॒ हु॒वे अति॑ रिक्तं॒ पिब॑ध्यै ॥३॥२९॥

॥ ५९ ॥ १–७ सुपर्णः काण्वः ॥ इंद्रावरुणौ ॥ जगती ॥

॥५९॥ इ॒मानि॑ वां भाग॒धेया॑नि सिस्रत॒ इंद्रा॑वरुणा॒ प्र म॒हे सु॒तेषु॑ वां। य॒ज्ञेय॑ज्ञे ह॒ सव॑ना भु॒रण्य॒थो॒ यत्सु॒न्व॒ते यज॑मानाय॒ शिक्ष॑थः ॥१॥ निः॒षि॒ध्वरी॒रोष॑धी॒राप॑ आस्ता॒मिंद्रा॑वरुणा महि॒मान॑माशत। या सिस्र॑तू॒ रज॑सः पा॒रे अध्व॑नो॒ ययोः॒ शत्रु॒र्नकि॒रादे॑व॒ ओह॑ते॥२॥ स॒त्यं तदिं॑द्रावरुणा कृ॒शस्य॑ वां॒ मध्व॑ ऊ॒र्मिं दु॑हते स॒प्त वाणीः। ताभि॑र्दा॒श्वांस॑मवतं शुभस्पती॒ यो वा॒मद॑ब्धो अ॒भि पा॒ति चित्ति॑भिः ॥३॥ घृ॒त॒प्रुषः॒ सौम्या॑ जी॒रदा॑नवः स॒प्त स्वसा॑रः॒ सद॑न ऋ॒तस्य॑। या ह॑ वा॒मिंद्रावरुणा घृत॒श्चुत॒स्ताभि॑र्धत्तं॒ यज॑मानाय शिक्षतं ॥४॥३०॥ अवो॑चाम मह॒ते सौभ॑गाय स॒त्यं त्वे॒षाभ्यां॑ महि॒मान॑मिंद्रि॒यं। अ॒स्मान्स्वि॑ंद्रावरुणा घृत॒श्चुत॒स्त्रिभिः॑ सा॒प्तेभि॑रवतं शुभस्पती ॥५॥ इंद्रा॑वरुणा॒ यदृ॒षिभ्यो॑ मनी॒षां वा॒चो म॒तिं श्रु॒तम॑दत्त॒मग्रे॑। यानि॒ स्थाना॑न्यसृजं॒त धीरा॑ य॒ज्ञं त॑न्वा॒नास्तप॑सा॒भ्य॑पश्यं॥६॥ इंद्रा॑वरुणा सौमन॒समदृ॑प्तं रा॒यस्पोषं॒ यज॑मानेषु धत्तं। प्र॒जां पु॒ष्टिं भू॑तिम॒स्मासु॑ धत्तं दीर्घायु॒त्वाय॒ प्र ति॑रतं न॒ आयुः॑ ॥७॥३१॥

॥ इति वालखिल्यं समाप्तं ॥

॥ ६० ॥ १–२० भर्गः प्रागाथः ॥ अग्निः ॥ प्रागाथं ॥

॥६०॥ अग्न॒ आ या॑ह्य॒ग्निभि॒र्होता॑रं त्वा वृणीमहे। आ त्वाम॑-



Digitized by Google

ति यः अनूचानः ब्राह्मणः युक्तः आसीत् का स्वित् तत्र यजमानस्य संऽवित् ॥ १ ॥ एकः एव अग्निः बहुधा संऽइद्धः एकः सूर्यः विश्वं अनु प्रऽभूतः एका एव उषाः सर्वं इदं वि भाति एकं वै इदं वि बभूव सर्वं ॥ २ ॥ ज्योतिष्मंतं केतुऽमंतं त्रिऽचक्रं सुऽखं रथं सुऽसदं भूरिऽवारं चित्रऽमघा यस्य योगे अधिऽजज्ञे तं वां हुवे अति रिक्तं पिबध्यै ॥ ३ ॥ २९ ॥

॥ ५९ ॥ इमानि वां भागऽधेयानि सिस्रते इंद्रावरुणा प्र महे सुतेषु वां यज्ञेऽयज्ञे ह सवना भुरण्यथः यत् सुन्वते यजमानाय शिक्षथः ॥ १ ॥ निःऽसिध्वरीः ओषधीः आपः आस्तां इंद्रावरुणा महिमानं आशत या सिस्रतुः रजसः पारे अध्वनः ययोः शत्रुः नकिः अदेवः ओहते ॥ २ ॥ सत्यं तत् इंद्रावरुणा कृशस्य वां मध्वः ऊर्मिं दुहते सप्त वाणीः ताभिः दाश्वांसं अवतं शुभः पती यः वां अदब्धः अभि पाति चित्तिऽभिः ॥ ३ ॥ घृतऽप्रुषः सौम्याः जीरऽदानवः सप्त स्वसारः सदने ऋतस्य याः ह वां इंद्रावरुणा घृतऽश्चुतः ताभिः धत्तं यजमानाय शिक्षतं ॥ ४ ॥ ३० ॥ अवोचाम महते सौभगाय सत्यं त्वेषाभ्यां महिमानं इंद्रियं अस्मान् सु इंद्रावरुणा घृतऽश्चुतः त्रिऽभिः साप्तेभिः अवतं शुभः पती ॥ ५ ॥ इंद्रावरुणा यत् ऋषिऽभ्यः मनीषां वाचः मतिं श्रुतं अदत्तं अग्रे यानि स्थानानि असृजंत धीराः यज्ञं तन्वानाः तपसा अभि अपश्यं ॥ ६ ॥ इंद्रावरुणा सौमनसं अदृप्तं रायः पोषं यजमानेषु धत्तं प्रऽजां पुष्टिं भूतिं अस्मासु धत्तं दीर्घायुऽत्वाय प्र तिरतं नः आयुः ॥ ७ ॥ ३१ ॥

॥ इति वालखिल्यं समाप्तं ॥

---

॥ ६० ॥ अग्ने आ याहि अग्निऽभिः होतारं त्वा वृणीमहे आ त्वां



Digitized by Google

नक्तु प्रयता हविष्मती यजिष्ठं बर्हिरासदे ॥ १ ॥ अच्छा हि त्वा सहसः सूनो अंगिरः स्रुचश्चरंत्यध्वरे । ऊर्जो नपातं घृतकेशमीमहेऽग्निं यज्ञेषु पूर्व्यं ॥ २ ॥ अग्ने कविर्वेधा असि होता पावक यक्ष्यः । मंद्रो यजिष्ठो अध्वरेष्वीड्यो विप्रेभिः शुक्र मन्मभिः ॥ ३ ॥ अद्रोघमा वहोशतो यविष्ठ्य देवाँ अजस्र वीतये । अभि प्रयांसि सुधिता वसो गहि मंदस्व धीतिभिर्हितः ॥ ४ ॥ त्वमित्सप्रथा अस्यग्ने त्रातर्ऋतस्कविः । त्वां विप्रासः समिधान दीदिव आ विवासंति वेधसः ॥ ५ ॥ ३२ ॥ शोचा शोचिष्ठ दीदिहि विशे मयो रास्व स्तोत्रे महाँ असि । देवानां शर्मन्मम संतु सूरयः शत्रूषाहः स्वग्नयः ॥ ६ ॥ यथा चिद्वृद्धमतसमग्ने संजूर्वसि क्षमि । एवा दह मित्रमहो यो अस्मध्रुग्दुर्मन्मा कश्च वेनति ॥ ७ ॥ मा नो मर्ताय रिपवे रक्षस्विने माघशंसाय रीरधः । अस्रेधद्भिस्तरणिभिर्यविष्ठ्य शिवेभिः पाहि पायुभिः ॥ ८ ॥ पाहि नो अग्न एकया पाह्युत द्वितीयया । पाहि गीर्भिस्तिसृभिरूर्जां पते पाहि चतसृभिर्वसो ॥ ९ ॥ पाहि विश्वस्माद्रक्षसो अराव्णः प्र स्म वाजेषु नोऽव । त्वामिद्धि नेदिष्ठं देवतातय आपिं नक्षामहे वृधे ॥ १० ॥ ३३ ॥ आ नो अग्ने वयोवृधं रयिं पावक शंस्यं । रास्वा च न उपमाते पुरुस्पृहं सुनीती स्वयशस्तरं ॥ ११ ॥ येन वंसाम पृतनासु शर्धतस्तरंतो अर्य आदिशः । स त्वं नो वर्ध प्रयसा शचीवसो जिन्वा धियो वसुविदः ॥ १२ ॥ शिशानो वृषभो यथाग्निः शृंगे दविध्वत् । तिग्मा अस्य हनवो न प्रतिधृषे सुजंभः सहसो यहुः ॥ १३ ॥ नहि ते अग्ने वृषभ प्रतिधृषे जंभासो यद्वितिष्ठसे । स त्वं नो होतः सुहुतं हविष्कृधि वंस्वा नो वार्या पुरु ॥ १४ ॥ शेषे



Digitized by Google

अनक्तु प्रऽयंता हविष्मंती यजिष्ठं बर्हिः आऽसदे ॥ १ ॥ अच्छ हि
त्वा सहसः सूनो अंगिरः स्रुचः चरंति अध्वरे ऊर्जः नपातं घृत-
ऽकेशं ईमहे अग्निं यज्ञेषु पूर्व्यं ॥ २ ॥ अग्ने कविः वेधाः असि होता
पावक यक्ष्यः मंद्रः यजिष्ठः अध्वरेषु ईड्यः विप्रेभिः शुक्र मन्म-
ऽभिः ॥ ३ ॥ अद्रोघं आ वह उशतः यविष्ठ्य देवान् अजस्र वीतये
अभि प्रयांसि सुऽधिता आ वसो गहि मंदस्व धीतिऽभिः हितः
॥ ४ ॥ त्वं इत् सऽप्रथाः असि अग्ने त्रातः ऋतः कविः त्वां विप्रासः
संऽइधान दीदिऽवः आ विवासंति वेधसः ॥ ५ ॥ ३२ ॥ शोच शो-
चिष्ठ दीदिहि विशे मयः रास्व स्तोत्रे महान् असि देवानां शर्मन्
मम संतु सूरयः शत्रुऽसहः सुऽअग्नयः ॥ ६ ॥ यथा चित् वृद्धं अतसं
अग्ने संऽजूर्वसि क्षमि एव दह मित्रऽमहः यः अस्मऽध्रुक् दुःऽम-
न्मा कः च वेनति ॥ ७ ॥ मा नः मर्ताय रिपवे रक्षस्विने मा अघ-
ऽशंसाय रीरधः अस्रेधत्ऽभिः तरणिऽभिः यविष्ठ्य शिवेभिः पा-
हि पायुऽभिः ॥ ८ ॥ पाहि नः अग्ने एकया पाहि उत द्वितीयया पा-
हि गीःऽभिः तिसृऽभिः ऊर्जां पते पाहि चतसृऽभिः वसो ॥ ९ ॥
पाहि विश्वस्मात् रक्षसः अराव्णः प्र स्म वाजेषु नः अव त्वां इत्
हि नेदिष्ठं देवऽतातये आपिं नक्षामहे वृधे ॥ १० ॥ ३३ ॥ आ नः अग्ने
वयःऽवृधं रयिं पावक शंस्यं रास्व च नः उपऽमाते पुरुऽस्पृहं सु-
ऽनीती स्वयशःऽतरं ॥ ११ ॥ येन वंसाम पृतनासु शर्धतः तरंतः
अर्यः आऽदिशः सः त्वं नः वर्ध प्रयसा शचीऽवसो॰ जिन्व
धियः वसुऽविदः ॥ १२ ॥ शिशानः वृषभः यथा अग्निः शृंगे द-
विध्वत् तिग्माः अस्य हनवः न प्रतिऽधृषे सुऽजंभः सहसः यहुः
॥ १३ ॥ नहि ते अग्ने वृषभ प्रतिऽधृषे जंभासः यत् विऽतिष्ठसे सः
त्वं नः होतः सुऽहुतं हविः कृधि वंस्व नः वार्या पुरु ॥ १४ ॥ शेषे



Digitized by Google

वनेषु मायोः सं त्वा मर्तास इंधते। अतंद्रो हव्या वहसि हविष्कृत आदिद्देवेषु राजसि॥१५॥३४॥ सप्त होतारस्तमिदीळते त्वाग्ने सुत्यजमह्रयं। भिनत्स्यद्रिं तपसा वि शोचिषा प्राग्ने तिष्ठ जनाँ अति ॥१६॥ अग्निमग्निं वो अध्रिगुं हुवेम वृक्तबर्हिषः। अग्निं हितप्रयसः शश्वतीष्वा होतारं चर्षणीनां॥१७॥ केतेन शर्मन्त्सचते सुषामण्यग्ने तुभ्यं चिकित्वना। इषण्यया नः पुरुरूपमा भर वाजं नेदिष्ठमूतये ॥१८॥ अग्ने जरितर्विश्पतिस्तेपानो देव रक्षसः। अप्रोषिवान्गृहपतिर्महाँ असि दिवस्पायुर्दुरोणयुः ॥१९॥ मा नो रक्ष आ वेशीदाघृणीवसो मा यातुर्यातुमावतां। परोगव्यूत्यनिरामप क्षुधमग्ने सेध रक्षस्विनः ॥२०॥३५॥

---

॥ ६१ ॥ १–१८ भर्गः प्रागाथः ॥ इंद्रः ॥ प्रागाथं ॥

॥६१॥ उभयं शृणवच्च न इंद्रो अर्वागिदं वचः। सत्राच्या मघवा सोमपीतये धिया शविष्ठ आ गमत् ॥१॥ तं हि स्वराजं वृषभं तमोजसे धिषणे निष्टतक्षतुः। उतोपमानां प्रथमो नि षीदसि सोमकामं हि ते मनः ॥२॥ आ वृषस्व पुरूवसो सुतस्येंद्रांधसः। विद्मा हि त्वा हरिवः पृत्सु सासहिमधृष्टं चिद्दधृष्वणिं ॥३॥ अप्रामिसत्य मघवन्तथेदसदिंद्र क्रत्वा यथा वशः। सनेम वाजं तव शिप्रिन्नवसा मक्षू चिद्यंतो अद्रिवः ॥४॥ शग्ध्यू३षु शचीपत इंद्र विश्वाभिरूतिभिः। भगं न हि त्वा यशसं वसुविदमनु शूर चरामसि ॥५॥३६॥ पौरो अश्वस्य पुरुकृद्गवामस्युत्सो देव हिरण्ययः। नकिर्हि दानं परिमर्धिषत्त्वे यद्यद्यामि तदा भर ॥६॥ त्वं ह्येहि चेरवे विदा भगं वसुत्तये। उद्वावृषस्व मघव-



Digitized by Google

वनेषु मायोः सं त्वा मर्तासः इंधते अतंद्रः हव्या वहसि हविःऽकृतः
आत् इत् देवेषु राजसि ॥ १५ ॥ ३४ ॥ सप्त होतारः तं इत् ईळते त्वा
अग्ने सुऽत्यजं अह्रयं भिनत्सि अद्रिं तपसा वि शोचिषा प्र अग्ने
तिष्ठ जनान् अति ॥ १६ ॥ अग्निंऽअग्निं वः अध्रिऽगुं हुवेम वृक्त-
ऽबर्हिषः अग्निं हितऽप्रयसः शश्वतीषु आ होतारं चर्षणीनां ॥ १७ ॥
केतेन शर्मन् सचते सुऽसामनि अग्ने तुभ्यं चिकित्वना इषण्यया
नः पुरुऽरूपं आ भर वाजं नेदिष्ठं ऊतये ॥ १८ ॥ अग्ने जरितः वि-
श्पतिः तेपानः देव रक्षसः अप्रोषिऽवान् गृहऽपतिः महान्
असि दिवः पायुः दुरोणऽयुः ॥ १९ ॥ मा नः रक्षः आ वेशीत् आ-
घृणिऽवसो॰ मा यातुः यातुऽमावतां परःऽगव्यूति अनिरां अप
क्षुधं अग्ने सेध रक्षस्विनः ॥ २० ॥ ३५ ॥

---

॥ ६१ ॥ उभयं शृणवत् च नः इंद्रः अर्वाक् इदं वचः सत्राच्या
मघऽवा सोमऽपीतये धिया शविष्ठः आ गमत् ॥ १ ॥ तं हि स्व-
ऽराजं वृषभं तं ओजसे धिषणे निःऽततक्षतुः उत उपऽमानां
प्रथमः नि सीदसि सोमऽकामं हि ते मनः ॥ २ ॥ आ वृषस्व पुरु-
ऽवसो॰ सुतस्य इंद्र अंधसः विद्म हि त्वा हरिऽवः पृत्ऽसु ससहिं
अधृष्टं चित् दधृष्वणिं ॥ ३ ॥ अप्रामिऽसत्य मघऽवन् तथा इत् अ-
सत् इंद्र क्रत्वा यथा वशः सनेम वाजं तव शिप्रिन् अवसा मक्षु
चित् यंतः अद्रिऽवः ॥ ४ ॥ शग्धि ऊं इति सु शचीऽपते इंद्र विश्वाभिः
ऊतिऽभिः भगं न हि त्वा यशसं वसुऽविदं अनु शूर चरामसि
॥ ५ ॥ ३६ ॥ पौरः अश्वस्य पुरुऽकृत् गवां असि उत्सः देव हिरण्ययः
नकिः हि दानं परिऽमर्धिषत् त्वे इति यत्ऽयत् यामि तत् आ भर ॥ ६ ॥
त्वं हि आ इहि चेरवे विदाः भगं वसुत्तये उत् ववृषस्व मघऽवन्



Digitized by Google

ग्गविष्टय उदिंद्राश्वमिष्टये ॥७॥ त्वं पुरू सहस्राणि शतानि च यूथा दानाय मंहसे । आ पुरंदरं चकृम विप्रवचस इंद्रं गायंतोऽवसे ॥८॥ अविप्रो वा यदविधद्विप्रो वेंद्र ते वचः । स प्र ममंदत्त्वाया शतक्रतो प्राचामन्यो अहंसन ॥९॥ उग्रबाहुर्म्रक्षकृत्वा पुरंदरो यदि मे शृणवद्धवं । वसूयवो वसुपतिं शतक्रतुं स्तोमैरिंद्रं हवामहे ॥१०॥३७॥ न पापासो मनामहे नारायासो न जळ्हवः । यदिन्न्विंद्रं वृषणं सचा सुते सखायं कृणवामहे ॥११॥ उग्रं युयुज्म पृतनासु सासहिमृणकातिमदाभ्यं । वेदा भृमं चित्सनिता रथीतमो वाजिनं यमिदू नशत् ॥१२॥ यत इंद्र भयामहे ततो नो अभयं कृधि । मघवञ्छग्धि तव तन्न ऊतिभिर्वि द्विषो वि मृधो जहि ॥१३॥ त्वं हि राधस्पते राधसो महः क्षयस्यासि विधतः । तं त्वा वयं मघवन्निंद्र गिर्वणः सुतावंतो हवामहे ॥१४॥ इंद्रः स्पळुत वृत्रहा परस्पा नो वरेण्यः । स नो रक्षिषच्चरमं स मध्यमं स पश्चात्पातु नः पुरः ॥१५॥३८॥ त्वं नः पश्चादधरादुत्तरात्पुर इंद्र नि पाहि विश्वतः । आरे अस्मत्कृणुहि दैव्यं भयमारे हेतीरदेवीः ॥१६॥ अद्याद्या श्वःश्व इंद्र त्रास्व परे च नः । विश्वा च नो जरितॄन्त्सत्पते अहा दिवा नक्तं च रक्षिषः ॥१७॥ प्रभंगी शूरो मघवा तुवीमघः संमिश्लो वीर्याय कं । उभा ते बाहू वृषणा शतक्रतो नि या वज्रं मिमिक्षतुः ॥१८॥३९॥

---

॥ ६२ ॥ १–१२ प्रगाथः काण्वः ॥ इंद्रः ॥ १–६. १०–१२ पंक्तिः । ७–९ बृहती ॥

॥६२॥ प्रो अस्मा उपस्तुतिं भरता यज्जुजोषति । उक्थैरिंद्रस्य माहिनं वयो वर्धंति सोमिनो भद्रा इंद्रस्य रातयः ॥१॥ अयुजो असमो नृभिरेकः कृष्टीरयास्यः । पूर्वीरति प्र वावृधे



Digitized by Google

गोऽइष्टये उत इंद्र अश्वऽइष्टये ॥७॥ त्वं पुरु सहस्राणि शतानि च
यूथा दानाय मंहसे आ पुरंऽदरं चकृम विप्रऽवचसः इंद्रं गायंतः
अवसे ॥८॥ अविप्रः वा यत् अविधत् विप्रः वा इंद्र ते वचः सः प्र
ममंदत् त्वाऽया शतऽक्रतो॰ प्राचाऽमन्यो॰ अहंऽसन ॥९॥ उग्र-
ऽबाहुः म्रक्षऽकृत्वा पुरंऽदरः यदि मे शृणवत् हवं वसुऽयवः वसु-
ऽपतिं शतऽक्रतुं स्तोमैः इंद्रं हवामहे ॥१०॥३७॥ न पापासः म-
नामहे न अरायासः न जल्हवः यत् इत् नु इंद्रं वृषणं सचा सुते
सखायं कृणवामहै ॥११॥ उग्रं युयुज्म पृतनासु सासहिं ऋणऽका-
तिं अदाभ्यं वेद भृमं चित् सनिता रथिऽतमः वाजिनं यं इत् ऊं
नशत् ॥१२॥ यतः इंद्र भयामहे ततः नः अभयं कृधि मघऽवन् श-
ग्धि तव तत् नः ऊतिऽभिः वि द्विषः वि मृधः जहि ॥१३॥ त्वं हि
राधःऽपते राधसः महः क्षयस्य असि विधतः तं त्वा वयं मघऽवन्
इंद्र गिर्वणः सुतऽवंतः हवामहे ॥१४॥ इंद्रः स्पट् उत वृत्रऽहा प-
रःऽपाः नः वरेण्यः सः नः रक्षिषत् चरमं सः मध्यमं सः पश्चात्
पातु नः पुरः ॥१५॥३८॥ त्वं नः पश्चात् अधरात् उत्तरात् पुरः इंद्र
नि पाहि विश्वतः आरे अस्मत् कृणुहि दैव्यं भयं आरे हेतीः अदे-
वीः ॥१६॥ अद्यऽअद्य श्वःऽश्वः इंद्र त्रास्व परे च नः विश्वा च नः
जरितॄन् सत्ऽपते अहा दिवा नक्तं च रक्षिषः ॥१७॥ प्रऽभंगी
शूरः मघऽवा तुविऽमघः संऽमिश्लः वीर्याय कं उभा ते बाहू'
वृषणा शतऽक्रतो॰ नि या वज्रं मिमिक्षतुः ॥१८॥३९॥

---

॥६२॥ प्रो' अस्मै उपऽस्तुतिं भरत यत् जुजोषति उक्थैः इंद्र-
स्य माहिनं वयः वर्धंति सोमिनः भद्राः इंद्रस्य रातयः ॥१॥ अयु-
जः असमः नृऽभिः एकः कृष्टीः अयास्यः पूर्वीः अति प्र ववृधे



Digitized by Google

विश्वा जातान्योजसा भद्रा इंद्रस्य रातयः ॥२॥ अहितेन चिदर्वता
जीरदानुः सिषासति । प्रवाच्यमिंद्र तत्तव वीर्याणि करिष्यतो
भद्रा इंद्रस्य रातयः ॥३॥ आ याहि कृणवाम त इंद्र ब्रह्माणि वर्ध-
ना । येभिः शविष्ठ चाकनो भद्रमिह श्रवस्यते भद्रा इंद्रस्य रातयः
॥४॥ धृषतश्चिद्धृषन्मनः कृणोषींद्र यत्त्वं । तीव्रैः सोमैः सपर्यतो
नमोभिः प्रतिभूषतो भद्रा इंद्रस्य रातयः ॥५॥ अव चष्ट ऋचीष-
मोऽवताँ इव मानुषः । जुष्ट्वी दक्षस्य सोमिनः सखायं कृणुते युजं
भद्रा इंद्रस्य रातयः ॥६॥४०॥ विश्वे त इंद्र वीर्यं देवा अनु क्रतुं ददुः ।
भुवो विश्वस्य गोपतिः पुरुष्टुत भद्रा इंद्रस्य रातयः ॥७॥ गृणे
तदिंद्र ते शव उपमं देवतातये । यद्धंसि वृत्रमोजसा शचीपते भद्रा
इंद्रस्य रातयः ॥८॥ समनेव वपुष्यतः कृणवन्मानुषा युगा । विदे
तदिंद्रश्चेतनमध श्रुतो भद्रा इंद्रस्य रातयः ॥९॥ उज्जातमिंद्र ते
शव उत्त्वामुत्तव क्रतुं । भूरिगो भूरि वावृधुर्मघवन्तव शर्मणि
भद्रा इंद्रस्य रातयः ॥१०॥ अहं च त्वं च वृत्रहन्त्सं युज्याव सनिभ्य
आ । अरातीवा चिदद्रिवोऽनु नौ शूर मंसते भद्रा इंद्रस्य रातयः
॥११॥ सत्यमिद्वा उ तं वयमिंद्रं स्तवाम नानृतं । महाँ असुन्वतो
वधो भूरि ज्योतींषि सुन्वतो भद्रा इंद्रस्य रातयः ॥१२॥४१॥

---

॥ ६३ ॥ १—१२ प्रगाथः काण्वः ॥ १—११ इंद्रः । १२ देवाः ॥ १.४.५.७ अनुष्टुप् ।
२.३.६.८—११ गायत्री । १२ त्रिष्टुप् ॥

॥६३॥ स पूर्व्यो महानां वेनः क्रतुभिरानजे । यस्य द्वारा
मनुष्पिता देवेषु धिय आनजे ॥१॥ दिवो मानं नोत्सदन्त्सो-
मपृष्ठासो अद्रयः । उक्था ब्रह्म च शंस्या ॥२॥ स विद्वाँ अंगि-
रोभ्य इंद्रो गा अवृणोदप । स्तुषे तदस्य पौंस्यं ॥३॥ स प्र-



Digitized by Google

विश्वा जातानि ओजसा भद्राः इंद्रस्य रातयः ॥ २॥ अहितेन चित् अर्वता जीरऽदानुः सिसासति प्रऽवाच्यं इंद्र तत् तव वीर्याणि करिष्यतः भद्राः इंद्रस्य रातयः ॥ ३॥ आ याहि कृणवाम ते इंद्र ब्रह्माणि वर्धना येभिः शविष्ठ चाकनः भद्रं इह श्रवस्यते भद्राः इंद्रस्य रातयः ॥४॥ धृषतः चित् धृषत् मनः कृणोषि इंद्र यत् त्वं तीव्रैः सोमैः सपर्यतः नमःऽभिः प्रतिऽभूषतः भद्राः इंद्रस्य रातयः ॥५॥ अव चष्टे ऋचीषमः अवतान्ऽइव मानुषः जुष्ट्वी दक्षस्य सोमिनः सखायं कृणुते युजं भद्राः इंद्रस्य रातयः ॥ ६॥४०॥ विश्वे ते इंद्र वीर्यं देवाः अनु क्रतुं ददुः भुवः विश्वस्य गोऽपतिः पुरुऽस्तुत भद्राः इंद्रस्य रातयः ॥७॥ गृणे तत् इंद्र ते शवः उपऽमं देवऽतातये यत् हंसि वृत्रं ओजसा शचीऽपते भद्राः इंद्रस्य रातयः ॥ ८॥ समनाऽइव वपुष्यतः कृणवत् मानुषा युगा विदे तत् इंद्रः चेतनं अध श्रुतः भद्राः इंद्रस्य रातयः ॥ ९॥ उत् जातं इंद्र ते शवः उत् त्वां उत् तव क्रतुं भूरिऽगो॰ भूरि ववृधुः मघऽवन् तव शर्मणि भद्राः इंद्रस्य रातयः ॥ १०॥ अहं च त्वं च वृत्रऽहन् सं युज्याव सनिऽभ्यः आ अरातिऽवा चित् अद्रिऽवः अनु नौ शूर मंसते भद्राः इंद्रस्य रातयः ॥ ११॥ सत्यं इत् वै ऊं॰ तं वयं इंद्रं स्तवाम न अनृतं महान् असुन्वतः वधः भूरि ज्योतींषि सुन्वतः भद्राः इंद्रस्य रातयः ॥ १२ ॥ ४१ ॥

---

॥ ६३॥ सः पूर्व्यः महानां वेनः क्रतुऽभिः आनजे यस्य द्वारा मनुः पिता देवेषु धियः आनजे॥ १॥ दिवः मानं न उत् सदन् सोमऽपृष्ठासः अद्रयः उक्था ब्रह्म च शंस्या ॥ २॥ सः विद्वान् अंगिरःऽभ्यः इंद्रः गाः अवृणोत् अप स्तुषे तत् अस्य पौंस्यं ॥ ३॥ सः प्र-



Digitized by Google

त्नथा कविवृध इंद्रो वाकस्य वक्षणिः। शिवो अर्कस्य होमन्यस्मत्रा गंत्ववसे॥४॥ आदू नु ते अनु क्रतुं स्वाहा वरस्य यज्यवः। श्वात्रमर्का अनूषतेंद्र गोत्रस्य दावने॥५॥ इंद्रे विश्वानि वीर्या कृतानि कर्त्वानि च। यमर्का अध्वरं विदुः॥६॥४२॥ यत्पांचजन्यया विशेंद्रे घोषा असृक्षत। अस्तृणाद्बर्हणा विपो३ऽर्यो मानस्य स क्षयः॥७॥ इयमु ते अनुष्टुतिश्चकृषे तानि पौंस्या। प्रावश्चक्रस्य वर्तनिं॥८॥ अस्य वृष्णो व्योदन उरु क्रमिष्ट जीवसे। यवं न पश्व आ ददे॥९॥ तद्दधाना अवस्यवो युष्माभिर्दक्षपितरः। स्याम मरुत्वतो वृधे॥१०॥ बळृत्वियाय धाम्न ऋक्वभिः शूर नोनुमः। जेषामेंद्र त्वया युजा॥११॥ अस्मे रुद्रा मेहना पर्वतासो वृत्रहत्ये भरहूतौ सजोषाः। यः शंसते स्तुवते धायि पज्र इंद्रज्येष्ठा अस्माँ अवंतु देवाः॥१२॥४३॥

---

॥ ६४ ॥ १–१२ प्रगाथः काण्वः ॥ इंद्रः ॥ गायत्री ॥

॥६४॥ उत्त्वा मंदंतु स्तोमाः कृणुष्व राधो अद्रिवः। अव ब्रह्मद्विषो जहि ॥१॥ पदा पणीँरराधसो नि बाधस्व महाँ असि। नहि त्वा कश्चन प्रति ॥२॥ त्वमीशिषे सुतानामिंद्र त्वमसुतानां। त्वं राजा जनानां॥३॥ एहि प्रेहि क्षयो दिव्या३घोषञ्चर्षणीनां। ओभे पृणासि रोदसी ॥४॥ त्यं चित्पर्वतं गिरिं शतवंतं सहस्रिणं। वि स्तोतृभ्यो रुरोजिथ ॥५॥ वयमु त्वा दिवा सुते वयं नक्तं हवामहे। अस्माकं काममा पृण॥६॥४४॥ क्व१स्य वृषभो युवा तुविग्रीवो अनानतः। ब्रह्मा कस्तं सपर्यति ॥७॥ कस्य स्वित्सवनं वृषा जुजुष्वाँ अव गच्छति। इंद्रं क उ स्विदा चके ॥८॥ कं ते दाना असक्षत वृत्रहन्कं सुवीर्या। उक्थे क उ स्विदंतमः॥९॥ अयं ते मानुषे जने सोमः पूरुषु सूयते। तस्ये-



Digitized by Google

त्वाऽया कविऽवृधः इंद्रः वाकस्य वक्षणिः शिवः अर्कस्य होमनि अस्मऽत्रा गंतु अवसे॥४॥ आत् ऊं नु ते अनु क्रतुं स्वाहा वरस्य यज्यवः श्वात्रं अर्काः अनूषत इंद्रं गोत्रस्य दावने॥५॥ इंद्रे विश्वानि वीर्या कृतानि कर्त्वानि च यं अर्काः अध्वरं विदुः॥६॥४२॥ यत् पांचऽजन्यया विशा इंद्रे घोषाः असृक्षत अस्तृणात् बर्हणा विपः अर्यः मानस्य सः क्षयः॥७॥ इयं ऊं ते अनुऽस्तुतिः चकृषे तानि पौंस्या प्र आवः चक्रस्य वर्तनिं॥८॥ अस्य वृष्णः विऽओदने उरु क्रमिष्ट जीवसे यवं न पश्वः आ ददे॥९॥ तत् दधानाः अवस्यवः युष्माभिः दक्षऽपितरः स्याम मरुत्वतः वृधे॥१०॥ बट् ऋत्वियाय धाम्ने ऋक्वऽभिः शूर नोनुमः जेषाम इंद्र त्वया युजा॥११॥ अस्मे रुद्राः मेहना पर्वतासः वृत्रऽहत्ये भरऽहूतौ सऽजोषाः यः शंसते स्तुवते धायि पज्रः इंद्रऽज्येष्ठाः अस्मान् अवंतु देवाः॥१२॥४३॥

---

॥६४॥ उत् त्वा मंदंतु स्तोमाः कृणुष्व राधः अद्रिऽवः अव ब्रह्मऽद्विषः जहि॥१॥ पदा पणीन् अराधसः नि बाधस्व महान् असि नहि त्वा कः चन प्रति॥२॥ त्वं ईशिषे सुतानां इंद्र त्वं असुतानां त्वं राजा जनानां॥३॥ आ इहि प्र इहि क्षयः दिवि आऽघोषन् चर्षणीनां आ उभे पृणासि रोदसी॥४॥ त्यं चित् पर्वतं गिरिं शतऽवंतं सहस्रिणं वि स्तोतृऽभ्यः रुरोजिथ॥५॥ वयं ऊं त्वा दिवा सुते वयं नक्तं हवामहे अस्माकं कामं आ पृण॥६॥४४॥ क्व स्यः वृषभः युवा तुविऽग्रीवः अनानतः ब्रह्मा कः तं सपर्यति॥७॥ कस्य स्वित् सवनं वृषा जुजुष्वान् अव गच्छति इंद्रं कः ऊं स्वित् आ चके॥८॥ कं ते दानाः असक्षत वृत्रऽहन् कं सुऽवीर्या उक्थे कः ऊं स्वित् अंतमः॥९॥ अयं ते मानुषे जने सोमः पूरुषु सूयते तस्य



Digitized by Google

हि प्र द्रवा पिब ॥१०॥ अयं ते शर्यणावति सुषोमायामधि प्रियः । आर्जीकीये मदिंतमः ॥११॥ तमद्य राधसे महे चारुं मदाय घृष्वये । एहीमिंद्र द्रवा पिब ॥१२॥४५॥

॥६५॥ १—१२ प्रगाथः काण्वः ॥ इंद्रः ॥ गायत्री ॥

॥६५॥ यदिंद्र प्रागपागुदङ्न्यग्वा हूयसे नृभिः । आ याहि तूर्यमाशुभिः ॥१॥ यद्वा प्रस्रवणे दिवो मादयासे स्वर्णरे । यद्वा समुद्रे अंधसः ॥२॥ आ त्वा गीर्भिर्महामुरुं हुवे गामिव भोजसे । इंद्र सोमस्य पीतये ॥३॥ आ त इंद्र महिमानं हरयो देव ते महः । रथे वहंतु बिभ्रतः ॥४॥ इंद्र गृणीष उ स्तुषे महाँ उग्र ईशानकृत् । एहि नः सुतं पिब ॥५॥ सुतावंतस्त्वा वयं प्रयस्वंतो हवामहे । इदं नो बर्हिरासदे ॥६॥४६॥ यच्चिद्धि शश्वतामसींद्र साधारणस्त्वं । तं त्वा वयं हवामहे ॥७॥ इदं ते सोम्यं मध्वधुक्षन्नद्रिभिर्नरः । जुषाण इंद्र तत्पिब ॥८॥ विश्वाँ अर्यो विपश्चितोऽति ख्यस्तूयमा गहि । अस्मे धेहि श्रवो बृहत् ॥९॥ दाता मे पृषतीनां राजा हिरण्यवीनां । मा देवा मघवा रिषत् ॥१०॥ सहस्रे पृषतीनामधि श्चंद्रं बृहत्पृथु । शुक्रं हिरण्यमा ददे ॥११॥ नपातो दुर्गहस्य मे सहस्रेण सुराधसः । श्रवो देवेष्वक्रत ॥१२॥४७॥

॥६६॥ १—१५ कलिः प्रागाथः ॥ इंद्रः ॥ १—१४ प्रागाथं । १५ अनुष्टुप् ॥

॥६६॥ तरोभिर्वो विदद्वसुमिंद्रं सबाध ऊतये । बृहद्गायंतः सुतसोमे अध्वरे हुवे भरं न कारिणं ॥१॥ न यं दुध्रा वरंते न स्थिरा मुरो मदे सुशिप्रमंधसः । य आदृत्या शशमानाय सुन्वते दाता जरित्र उक्थ्यं ॥२॥ यः शक्रो मृक्षो अश्व्यो यो वा कीजो हिरण्ययः । स ऊर्वस्य रेजयत्यपावृतिमिंद्रो गव्यस्य वृत्रहा



Digitized by Google

आ इहि प्र द्रव पिब॥१०॥ अयं ते शर्यणाऽवति सुऽसोमायां अधि प्रियः आर्जीकीये मदिन्ऽतमः॥११॥ तं अद्य राधसे महे चारुं मदाय घृष्वये आ इहि ईं इंद्र द्रवं पिब॥१२॥४५॥

॥६५॥ यत् इंद्र प्राक् अपाक् उदक् न्यक् वा हूयसे नृऽभिः आ याहि तूयं आशुऽभिः॥१॥ यत् वा प्रऽस्रवणे दिवः मादयासे स्वःऽनरे यत् वा समुद्रे अंधसः॥२॥ आ त्वा गीःऽभिः महां उरुं हुवे गांऽइव भोजसे इंद्र सोमस्य पीतये॥३॥ आ ते इंद्र महिमानं हरयः देव ते महः रथे वहंतु बिभ्रतः॥४॥ इंद्र गृणीषे ऊं स्तुषे महान् उग्रः ईशानऽकृत् आ इहि नः सुतं पिब॥५॥ सुतऽवंतः त्वा वयं प्रयस्वंतः हवामहे इदं नः बर्हिः आऽसदे॥६॥४६॥ यत् चित् हि शश्वतां असि इंद्र साधारणः त्वं तं त्वा वयं हवामहे॥७॥ इदं ते सोम्यं मधु अधुक्षन् अद्रिऽभिः नरः जुषाणः इंद्र तत् पिब॥८॥ विश्वान् अर्यः विपःऽचितः अति ख्यः तूयं आ गहि अस्मे धेहि श्रवः बृहत्॥९॥ दाता मे पृषतीनां राजा हिरण्यऽवीनां मा देवाः मघऽवा रिषत्॥१०॥ सहस्रे पृषतीनां अधि चंद्रं बृहत् पृथु शुक्रं हिरण्यं आ ददे॥११॥ नपातः दुःऽगहस्य मे सहस्रेण सुऽराधसः श्रवः देवेषु अक्रत॥१२॥४७॥

॥६६॥ तरःऽभिः वः विदत्ऽवसुं इंद्रं सऽबाधः ऊतये बृहत् गायंतः सुतऽसोमे अध्वरे हुवे भरं न कारिणं॥१॥ न यं दुध्राः वरंते न स्थिराः मुरः मदे सुऽशिप्रं अंधसः यः आऽहत्य शशमानाय सुन्वते दाता जरित्रे उक्थ्यं॥२॥ यः शक्रः मृक्षः अश्व्यः यः वा कीजः हिरण्ययः सः ऊर्वस्य रेजयति अपऽवृतिं इंद्रः गव्यस्य वृत्रऽहा

॥३॥ निखातं चिद्यः पुरुसंभृतं वसूदिद्वपति दाशुषे। वज्री सु-
शिप्रो हर्यश्व इत्करदिंद्रः क्रत्वा यथा वशत्॥४॥ यद्वावंथ पुरुष्टुत
पुरा चिच्छूर नृणां। वयं तत्त इंद्र सं भरामसि यज्ञमुक्थं तुरं वचः
॥५॥४८॥ सचा सोमेषु पुरुहूत वज्रिवो मदाय द्युक्ष सोमपाः।
त्वमिद्धि ब्रह्मकृते काम्यं वसु देष्ठः सुन्वते भुवः॥६॥ वयमेनमिदा
ह्योऽपीपेमेह वज्रिणं। तस्मा उ अद्य समना सुतं भरा नूनं भूषत
श्रुते॥७॥ वृकश्चिदस्य वारण उरामथिरा वयुनेषु भूषति। सेमं
नः स्तोमं जुजुषाण आ गहींद्र प्र चित्रया धिया॥८॥ कदू
न्व१स्याकृतमिंद्रस्यास्ति पौंस्यं। केनो नु कं श्रोमतेन न शुश्रुवे
जनुषः परि वृत्रहा॥९॥ कदू महीरधृष्टा अस्य तविषीः कदु वृ-
त्रघ्नो अस्तृतं। इंद्रो विश्वान्बेकनाटाँ अहर्दृश उत क्रत्वा पणीँर-
भि॥१०॥४९॥ वयं घा ते अपूर्व्येंद्र ब्रह्माणि वृत्रहन्। पुरूतमासः
पुरुहूत वज्रिवो भृतिं न प्र भरामसि॥११॥ पूर्वीश्चिद्धि त्वे तु-
विकूर्मिन्नाशसो हवंत इंद्रोतयः। तिरश्चिदर्यः सवना वसो गहि
शविष्ठ श्रुधि मे हवं॥१२॥ वयं घा ते त्वे इद्विंद्र विप्रा अपि ष्म-
सि। नहि त्वदन्यः पुरुहूत कश्चन मघवन्नस्ति मर्डिता॥१३॥ त्वं
नो अस्या अमतेरुत क्षुधो३ऽभिशस्तेरव स्पृधि। त्वं न ऊती
तव चित्रया धिया शिक्षा शचिष्ठ गातुवित्॥१४॥ सोम इद्वः
सुतो अस्तु कलयो मा बिभीतन। अपेदेष ध्वस्मायति स्वयं
घैषो अपायति॥१५॥५०॥

---

॥ ६७ ॥ १—२१ मत्स्यः सामदो मान्यो वा मैत्रावरुणिर्बहवो वा मत्स्या जालनद्धाः ॥
आदित्याः ॥ गायत्री ॥

॥६७॥ त्यान्नु क्षत्रियाँ अव आदित्यान्याचिषामहे। सु-
मृळीकाँ अभिष्टये॥१॥ मित्रो नो अत्यंहतिं वरुणः पर्षद-



Digitized by Google

॥३॥ निऽखातं चित् यः पुरुऽसंभृतं वसु उत् इत् वपति दाशुषे
वज्री सुऽशिप्रः हरिऽअश्वः इत् करत् इंद्रः क्रत्वा यथा वशत् ॥४॥
यत् ववंथ पुरुऽस्तुत पुरा चित् शूर नृणां वयं तत् ते इंद्र संभरामसि
यज्ञं उक्थं तुरं वचः ॥५॥४८॥ सचा सोमेषु पुरुऽहूत वज्रिऽवः
मदाय द्युक्ष सोमऽपाः त्वं इत् हि ब्रह्मऽकृते काम्यं वसु देष्ठः सुन्वते
भुवः ॥६॥ वयं एनं इदा ह्यः अपीपेम इह वज्रिणं तस्मै ऊं अद्य
समना सुतं भर आ नूनं भूषत श्रुते ॥७॥ वृकः चित् अस्य वारणः
उराऽमथिः आ वयुनेषु भूषति सः इमं नः स्तोमं जुजुषाणः आ
गहि इंद्र प्र चित्रया धिया ॥८॥ कत् ऊं नु अस्य अकृतं इंद्रस्य अस्ति
पौंस्यं केनो नु कं श्रोमतेन न शुश्रुवे जनुषः परि वृत्रऽहा ॥९॥
कत् ऊं महीः अधृष्टाः अस्य तविषीः कत् ऊं वृत्रऽघ्नः अस्तृतं
इंद्रः विश्वान् बेकऽनाटान् अहःऽदृशः उत क्रत्वा पणीन् अभि
॥१०॥४९॥ वयं घ ते अपूर्व्या इंद्र ब्रह्माणि वृत्रऽहन् पुरुऽतमासः
पुरुऽहूत वज्रिऽवः भृतिं न प्र भरामसि ॥११॥ पूर्वीः चित् हि त्वे
तुविऽकूर्मिन् आऽशसः हवंते इंद्र ऊतयः तिरः चित् अर्यः सवना
आ वसो गहि शविष्ठ श्रुधि मे हवं ॥१२॥ वयं घ ते त्वे इत् ऊं इंद्र
विप्राः अपि स्मसि नहि त्वत् अन्यः पुरुऽहूत कः चन मघऽवन्
अस्ति मर्डिता ॥१३॥ त्वं नः अस्याः अमतेः उत क्षुधः अभिऽशस्तेः
अव स्पृधि त्वं नः ऊती तव चित्रया धिया शिक्ष शचिष्ठ गातुऽवित्
॥१४॥ सोमः इत् वः सुतः अस्तु कलयः मा बिभीतन अप
इत् एषः ध्वस्मा अयति स्वयं घ एषः अप अयति ॥१५॥५०॥

---

॥६७॥ त्यान् नु क्षत्रियान् अवः आदित्यान् याचिषामहे सुऽमृळीकान् अभिष्टये ॥१॥ मित्रः नः अति अंहतिं वरुणः पर्षत्



Digitized by Google

र्येमा । आदित्यासो यथा विदुः ॥२॥ तेषां हि चित्रमुक्थ्यं१ व-
रूथमस्ति दाशुषे । आदित्यानामरंकृते ॥३॥ महि वो मह-
तामवो वरुण मित्रार्यमन् । अवांस्या वृणीमहे ॥४॥ जीवान्नो
अभि धेतनादित्यासः पुरा हथात् । कद्ध स्थ हवनश्रुतः
॥५॥५१॥ यद्वः श्रांताय सुन्वते वरूथमस्ति यच्छर्दिः । तेना
नो अधि वोचत ॥६॥ अस्ति देवा अंहोरुर्वस्ति रत्नमना-
गसः । आदित्या अद्भुतैनसः ॥७॥ मा नः सेतुः सिषेदयं
महे वृणक्तु नस्परि । इंद्र इद्धि श्रुतो वशी ॥८॥ मा नो
मृचा रिपूणां वृजिनानामविष्यवः । देवा अभि प्र मृ-
क्षत ॥९॥ उत त्वामदिते मह्यहं देव्युप ब्रुवे । सुमृळीकाम-
भिष्टये ॥१०॥५२॥ पर्षि दीने गभीर आँ उग्रपुत्रे जिघांसतः ।
माकिस्तोकस्य नो रिषत् ॥११॥ अनेहो नं उरुव्रज उरूचि
वि प्रसर्तवे । कृधि तोकाय जीवसे ॥१२॥ ये मूर्धानः क्षितीना-
मदब्धासः स्वयशसः । व्रता रक्षंते अद्रुहः ॥१३॥ ते नं आस्नो
वृकाणामादित्यासो मुमोचत । स्तेनं बद्धमिवादिते ॥१४॥ अपो
षु ण इयं शरुरादित्या अप दुर्मतिः । अस्मदेत्वजघ्नुषी ॥१५॥५३॥
शश्वद्धि वः सुदानव आदित्या ऊतिभिर्वयं । पुरा नूनं बुभु-
ज्महे ॥१६॥ शश्वंतं हि प्रचेतसः प्रतियंतं चिदेनसः । देवाः
कृणुथ जीवसे ॥१७॥ तत्सु नो नव्यं सन्यस आदित्या यन्मु-
मोचति । बंधाद्बद्धमिवादिते ॥१८॥ नास्माकमस्ति तत्तर
आदित्यासो अतिष्कदे । यूयमस्मभ्यं मृळत ॥१९॥ मा नो हे-
तिर्विवस्वत आदित्याः कृत्रिमा शरुः । पुरा नु जरसो वधीत्
॥२०॥ वि षु द्वेषो व्यंहतिमादित्यासो वि संहितं । विष्वग्वि
वृहता रपः ॥२१॥५४॥४॥



Digitized by Google

अर्यमा आदित्यासः यथा विदुः ॥२॥ तेषां हि चित्रं उक्थ्यं वरूथं
अस्ति दाशुषे आदित्यानां अरंऽकृते ॥३॥ महि वः महतां अवः
वरुण मित्र अर्यऽमन् अवांसि आ वृणीमहे ॥४॥ जीवान् नः
अभि धेतन आदित्यासः पुरा हथात् कत् ह स्थ हवनऽश्रुतः ॥५॥
॥५१॥ यत् वः श्रांताय सुन्वते वरूथं अस्ति यत् छर्दिः तेन नः अ-
धि वोचत ॥६॥ अस्ति देवाः अंहोः उरु अस्ति रत्नं अनागसः
आदित्याः अद्भुतऽएनसः ॥७॥ मा नः सेतुः सिसेत् अयं महे वृ-
णक्तु नः परि इंद्रः इत् हि श्रुतः वशी ॥८॥ मा नः मृचा रिपूणां
वृजिनानां अविष्यवः देवाः अभि प्र मृक्षत ॥९॥ उत त्वां अदिते
महि अहं देवि उप ब्रुवे सुऽमृळीकां अभिष्टये ॥१०॥५२॥ पर्षि
दीने गभीरे आ उग्रऽपुत्रे जिघांसतः माकिः तोकस्य नः रिषत्
॥११॥ अनेहः नः उरुऽव्रजे उरूचि वि प्रऽसर्तवे कृधि तोकाय
जीवसे ॥१२॥ ये मूर्धानः क्षितीनां अदब्धासः स्वऽयशसः व्रता
रक्षंते अद्रुहः ॥१३॥ ते नः आस्नः वृकाणां आदित्यासः मुमोचत
स्तेनं बद्धंऽइव अदिते ॥१४॥ अपो' सु नः इयं शरुः आदित्याः अप
दुःऽमतिः अस्मत् एतु अजघ्नुषी ॥१५॥५३॥ शश्वत् हि वः सुऽदा-
नवः आदित्याः ऊतिऽभिः वयं पुरा नूनं बुभुज्महे ॥१६॥ शश्वंतं
हि प्रऽचेतसः प्रतिऽयंतं चित् एनसः देवाः कृणुथ जीवसे ॥१७॥
तत् सु नः नव्यं सन्यसे आदित्याः यत् मुमोचति बंधात् बद्धंऽइव
अदिते ॥१८॥ न अस्माकं अस्ति तत् तरः आदित्यासः अतिऽस्कदे
यूयं अस्मभ्यं मृळत ॥१९॥ मा नः हेतिः विवस्वतः आदित्याः
कृत्रिमा शरुः पुरा नु जरसः वधीत् ॥२०॥ वि सु द्वेषः वि अं-
हतिं आदित्यासः वि संऽहितं विष्वक् वि वृहत रपः ॥२१॥
॥५४॥४॥



Digitized by Google

॥ ६८ ॥ १—१९ प्रियमेधः ॥ १—१३ इंद्रः। १४—१९ ऋक्षाश्वमेधयोर्दानस्तुतिः ॥
१. ४. ७. १० अनुष्टुप्। २. ३. ५. ६. ८. ९. ११—१९ गायत्री ॥

॥६८॥ आ त्वा रथं यथोतये सुम्नाय वर्तयामसि। तुविकूर्मि-
मृतीषहमिंद्र शविष्ठ सत्पते ॥१॥ तुविशुष्म तुविक्रतो शचीवो
विश्वया मते। आ पप्राथ महित्वना ॥२॥ यस्य ते महिना महः
परि ज्मायंतमीयतुः। हस्ता वज्रं हिरण्ययं ॥३॥ विश्वानरस्य
वस्पतिमनानतस्य शवसः। एवैश्च चर्षणीनामूती हुवे रथानां
॥४॥ अभिष्टये सदावृधं स्वर्मीळ्हेषु यं नरः। नाना हवंत ऊत-
ये ॥५॥१॥ परोमात्रमृचीषममिंद्रमुग्रं सुराधसं। ईशानं चिद्वसू-
नां ॥६॥ तंतमिद्राधसे मह इंद्रं चोदामि पीतये। यः पूर्व्यामनुष्टु-
तिमीशे कृष्टीनां नृतुः ॥७॥ न यस्य ते शवसान सख्यमानंश
मर्त्यः। नकिः शवांसि ते नशत् ॥८॥ त्वोतासस्त्वा युजाप्सु सूर्ये
महद्धनं। जयेम पृत्सु वज्रिवः ॥९॥ तं त्वा यज्ञेभिरीमहे तं गी-
र्भिर्गिर्वणस्तम। इंद्र यथा चिदाविथ वाजेषु पुरुमाय्यं ॥१०॥२॥
यस्य ते स्वादु सख्यं स्वाद्वी प्रणीतिरद्रिवः। यज्ञो वितंतसाय्यः
॥११॥ उरु णस्तन्वे३ तन उरु क्षयाय नस्कृधि। उरु णो यंधि जी-
वसे ॥१२॥ उरुं नृभ्य उरुं गव उरुं रथाय पंथां। देववीतिं मना-
महे ॥१३॥ उप मा षड् द्वाद्वा नरः सोमस्य हर्ष्या। तिष्ठंति स्वादु-
रातयः ॥१४॥ ऋज्राविंद्रोत आ ददे हरी ऋक्षस्य सूनवि। आ-
श्वमेधस्य रोहिता ॥१५॥३॥ सुरथाँ आतिथिग्वे स्वभीशूँरार्क्षे।
आश्वमेधे सुपेशसः ॥१६॥ षळश्वाँ आतिथिग्व इंद्रोते वधूमतः।
सचा पूतक्रतौ सनं ॥१७॥ ऐषु चेतद्वृषण्वत्यंतर्ऋज्रेष्वरुषी। स्व-
भीशुः कशावती ॥१८॥ न युष्मे वाजबंधवो निनित्सुश्चन
मर्त्यः। अवद्यमधि दीधरत् ॥१९॥४॥



Digitized by Google

॥६८॥ आ त्वा रथं यथा ऊतये सुम्नाय वर्तयामसि तुविऽकूर्मिं ऋतिऽसहं इंद्र शविष्ठ सत्ऽपते ॥१॥ तुविऽशुष्म तुविऽक्रतो॰ शचीऽवः विश्वया मते आ पप्राथ महिऽत्वना ॥२॥ यस्य ते महिना महः परि ज्मायंतं ईयतुः हस्ता वज्रं हिरण्ययं ॥३॥ विश्वानरस्य वः पतिं अनानतस्य शवसः एवैः च चर्षणीनां ऊती हुवे रथानां ॥४॥ अभिष्टये सदाऽवृधं स्वःऽमीळ्हेषु यं नरः नाना हवंते ऊतये ॥५॥१॥ परःऽमात्रं ऋचीषमं इंद्रं उग्रं सुऽराधसं ईशानं चित् वसूनां ॥६॥ तंऽतं इत् राधसे महे इंद्रं चोदामि पीतये यः पूर्व्यां अनुऽस्तुतिं ईशे कृष्टीनां नृतुः ॥७॥ न यस्य ते शवसान सख्यं आनंश मर्त्यः नकिः शवांसि ते नशत् ॥८॥ त्वाऽऊतासः त्वा युजा अप्ऽसु सूर्ये महत् धनं जयेम पृत्ऽसु वज्रिऽवः ॥९॥ तं त्वा यज्ञेभिः ईमहे तं गीःऽभिः गिर्वणःऽतम इंद्र यथा चित् आविथ वाजेषु पुरुऽमाय्यं ॥१०॥२॥ यस्य ते स्वादु सख्यं स्वाद्वी प्रऽनीतिः अद्रिऽवः यज्ञः वितंतसाय्यः ॥११॥ उरु नः तन्वे तने उरु क्षयाय नः कृधि उरु नः यंधि जीवसे ॥१२॥ उरुं नृऽभ्यः उरुं गवे उरुं रथाय पंथां देवऽवीतिं मनामहे ॥१३॥ उप मा षट् द्वाऽद्वा नरः सोमस्य हर्ष्या तिष्ठंति स्वादुऽरातयः ॥१४॥ ऋज्रौ इंद्रोते आ ददे हरी ऋक्षस्य सूनवि आश्वऽमेधस्य रोहिता ॥१५॥३॥ सुऽरथान् आतिथिऽग्वे सुऽअभीशून् आर्क्षे आश्वऽमेधे सुऽपेशसः ॥१६॥ षट् अश्वान् आतिथिऽग्वे इंद्रोते वधूऽमतः सचा पूतऽक्रतौ सनं ॥१७॥ आ एषु चेतत् वृषणऽवती अंतः ऋज्रेषु अरुषी सुऽअभीशुः कशाऽवती ॥१८॥ न युष्मे वाजऽबंधवः निनित्सुः चन मर्त्यः अवद्यं अधि दीधरत् ॥१९॥४॥



Digitized by Google

॥ ६९ ॥ १–१८ प्रियमेधः ॥ १–१०. १३–१८ इंद्रः । ११¹ विश्वे देवाः । ११². १२ वरुणः ॥ १. ३. ७–१०. १२–१५ अनुष्टुप् । २ उष्णिक् । ४–६ गायत्री । ११. १६ पंक्तिः । १७. १८ बृहती ॥

॥६९॥ प्रप्र वस्त्रिष्टुभमिषं मंदद्वीरायेंदवे। धिया वो मेधसातये
पुरंध्या विवासति॥१॥ नदं व ओदतीनां नदं योयुवतीनां। पतिं
वो अघ्न्यानां धेनूनामिषुध्यसि॥२॥ ता अस्य सूददोहसः सोमं
श्रीणंति पृश्नयः। जन्मन्देवानां विशस्त्रिष्वा रोचने दिवः॥३॥ अ-
भि प्र गोपतिं गिरेंद्रमर्च यथा विदे। सूनुं सत्यस्य सत्पतिं॥४॥ आ
हरयः ससृज्रिरेऽरुषीरधि बर्हिषि। यत्राभि संनवामहे ॥५॥५॥
इंद्राय गाव आशिरं दुदुह्रे वज्रिणे मधु। यत्सीमुपह्वरे विदत्॥६॥
उद्यद्ब्रध्नस्य विष्टपं गृहमिंद्रश्च गन्वहि। मध्वः पीत्वा सचेवहि त्रिः
सप्त सख्युः पदे॥७॥ अर्चत प्रार्चत प्रियमेधासो अर्चत। अर्चंतु
पुत्रका उत पुरं न धृष्ण्वर्चत॥८॥ अव स्वराति गर्गरो गोधा परि
सनिष्वणत्। पिंगा परि चनिष्कददिंद्राय ब्रह्मोद्यतं॥९॥ आ यत्प-
तंत्येन्यः सुदुघा अनपस्फुरः। अपस्फुरं गृभायत सोममिंद्राय पा-
तवे॥१०॥६॥ अपादिंद्रो अपादग्निर्विश्वे देवा अमत्सत। वरुण
इदिह क्षयत्तमापो अभ्यनूषत वत्सं संशिश्वरीरिव॥११॥ सुदेवो
असि वरुण यस्य ते सप्त सिंधवः। अनुक्षरंति काकुदं सूर्म्यं सुषि-
रामिव॥१२॥ यो व्यतीँरफाणयत्सुयुक्ताँ उप दाशुषे। तक्वो नेता
तदिद्वपुरुपमा यो अमुच्यत॥१३॥ अतीदु शक्र ओहत इंद्रो वि-
श्वा अति द्विषः। भिनत्कनीन ओदनं पच्यमानं परो गिरा॥१४॥
अर्भको न कुमारकोऽधि तिष्ठन्नवं रथं। स पक्षन्महिषं मृगं पित्रे
मात्रे विभुक्रतुं॥१५॥ आ तू सुशिप्र दंपते रथं तिष्ठा हिरण्ययं।
अध द्युक्षं सचेवहि सहस्रपादमरुषं स्वस्तिगामनेहसं॥१६॥
तं घेमित्था नमस्विन उप स्वराजमासते। अर्थं चिदस्य



Digitized by Google

॥ ६९ ॥ प्रऽप्र वः त्रिऽस्तुभं इषं मंदत्ऽवीराय इंदवे धिया वः मेधऽसातये पुरंऽध्या आ विवासति ॥ १ ॥ नदं वः ओदतीनां नदं योयुवतीनां पतिं वः अघ्न्यानां धेनूनां इषुध्यसि ॥ २ ॥ ताः अस्य सूदऽदोहसः सोमं श्रीणंति पृश्नयः जन्मन् देवानां विशः त्रिषु आ रोचने दिवः ॥ ३ ॥ अभि प्र गोऽपतिं गिरा इंद्रं अर्च यथा विदे सूनुं सत्यस्य सत्ऽपतिं ॥ ४ ॥ आ हरयः ससृज्रिरे अरुषीः अधि बर्हिषि यत्र अभि संऽनवामहे ॥ ५ ॥ ५ ॥ इंद्राय गावः आऽशिरं दुदुह्रे वज्रिणे मधु यत् सीं उपऽह्वरे विदत् ॥ ६ ॥ उत् यत् ब्रध्नस्य विष्टपं गृहं इंद्रः च गन्वहि मध्वः पीत्वा सचेवहि त्रिः सप्त सख्युः पदे ॥ ७ ॥ अर्चत प्र अर्चत प्रियऽमेधासः अर्चत अर्चंतु पुत्रकाः उत पुरं न धृष्णु अर्चत ॥ ८ ॥ अव स्वराति गर्गरः गोधा परि सनिस्वनत् पिंगा परि चनिस्कदत् इंद्राय ब्रह्म उत्ऽयतं ॥ ९ ॥ आ यत् पतंति एन्यः सुऽदुघाः अनपऽस्फुरः अपऽस्फुरं गृभायत सोमं इंद्राय पातवे ॥ १० ॥ ६ ॥ अपात् इंद्रः अपात् अग्निः विश्वे देवाः अमत्सत वरुणः इत् इह क्षयत् तं आपः अभि अनूषत वत्सं संशिश्वरीःऽइव ॥ ११ ॥ सुऽदेवः असि वरुण यस्य ते सप्त सिंधवः अनुऽक्षरंति काकुदं सूर्म्यं सुषिरांऽइव ॥ १२ ॥ यः व्यतीन् अफाणयत् सुऽयुक्तान् उप दाशुषे तक्वः नेता तत् इत् वपुः उपऽमा यः अमुच्यत ॥ १३ ॥ अति इत् ऊं इति शक्रः ओहते इंद्रः विश्वाः अति द्विषः भिनत् कनीनः ओदनं पच्यमानं परः गिरा ॥ १४ ॥ अर्भकः न कुमारकः अधि तिष्ठत् नवं रथं सः पक्षत् महिषं मृगं पित्रे मात्रे विभुऽक्रतुं ॥ १५ ॥ आ तु सुऽशिप्र दंऽपते रथं तिष्ठ हिरण्ययं अध द्युक्षं सचेवहि सहस्रऽपादं अरुषं स्वस्तिऽगां अनेहसं ॥ १६ ॥ तं घ ईं इत्था नमस्विनः उप स्वऽराजं आसते अर्थं चित् अस्य



Digitized by Google

सुधितं यदेतव आवर्तयंति दावने ॥१७॥ अनु प्रत्नस्यौकसः
प्रियमेधास एषां । पूर्वामनु प्रयतिं वृक्तबर्हिषो हितप्रयस
आशत ॥१८॥७॥७॥

---

॥ ७० ॥ १–१५ पुरुहन्मा ॥ इंद्रः ॥ १–६ प्रागाथं । ७–१२ बृहती । १३ उष्णिक् ।
१४ अनुष्टुप् । १५ पुरउष्णिक् ॥

॥७०॥ यो राजा चर्षणीनां याता रथेभिरध्रिगुः । विश्वासां
तरुता पृतनानां ज्येष्ठो यो वृत्रहा गृणे ॥१॥ इंद्रं तं शुंभ पुरुह-
न्मन्नवसे यस्य द्विता विधर्तरि । हस्ताय वज्रः प्रति धायि दर्शतो
महो दिवे न सूर्यः ॥२॥ नकिष्टं कर्मणा नशद्यश्चकार सदावृधं ।
इंद्रं न यज्ञैर्विश्वगूर्तमृभ्वसमधृष्टं धृष्ण्वोजसं ॥३॥ अषाळ्हमुग्रं
पृतनासु सासहिं यस्मिन्महीरुरुज्रयः । सं धेनवो जायमाने अ-
नोनवुर्द्यावः क्षामो अनोनवुः ॥४॥ यद्द्याव इंद्र ते शतं शतं भू-
मीरुत स्युः । न त्वा वज्रिन्सहस्रं सूर्या अनु न जातमष्ट रोदसी
॥५॥८॥ आ पप्राथ महिना वृष्ण्या वृषन्विश्वा शविष्ठ शवसा ।
अस्माँ अव मघवन्गोमति व्रजे वज्रिंश्चित्राभिरूतिभिः ॥६॥ न
सीमदेव आपदिषं दीर्घायो मर्त्यः । एतग्वा चिद्य एतशा युयोजते
हरी इंद्रो युयोजते ॥७॥ तं वो महो महाय्यमिंद्रं दानाय सक्ष-
णिं । यो गाधेषु य आरणेषु हव्यो वाजेष्वस्ति हव्यः ॥८॥ उदू षु
णो वसो महे मृशस्व शूर राधसे । उदू षु मह्यै मघवन्मघत्तय उ-
दिंद्र श्रवसे महे ॥९॥ त्वं न इंद्र ऋतयुस्त्वानिदो नि तृंपसि । मध्ये
वसिष्व तुविनृम्णोर्वोर्नि दासं शिश्नथो हथैः ॥१०॥९॥ अन्यव्र-
तममानुषमयज्वानमदेवयुं । अव स्वः सखा दुधुवीत पर्वतः सु-
घ्नाय दस्युं पर्वतः ॥११॥ त्वं न इंद्रासां हस्ते शविष्ठ दावने । धानानां
न सं गृभायास्मयुर्द्विः सं गृभायास्मयुः ॥१२॥ सखायः क्रतुमि-



Digitized by Google

सुऽधितं यत् एतवे आऽवर्तयंति दावने ॥ १७ ॥ अनु प्रत्नस्य ओ-
कसः प्रियऽमेधासः एषां पूर्वां अनु प्रऽयतिं वृक्तऽबर्हिषः हि-
तऽप्रयसः आशत ॥ १८ ॥ ७ ॥ ७ ॥

---

॥ ७० ॥ यः राजा चर्षणीनां याता रथेभिः अध्रिऽगुः विश्वासां
तरुता पृतनानां ज्येष्ठः यः वृत्रऽहा गृणे ॥ १ ॥ इंद्रं तं शुंभ पुरुऽहु-
न्मन् अवसे यस्य द्विता विऽधर्तरि हस्ताय वज्रः प्रति धायि दर्श-
तः महः दिवे न सूर्यः ॥ २ ॥ नकिः तं कर्मणा नशत् यः चकार स-
दाऽवृधं इंद्रं न यज्ञैः विश्वऽगूर्तं ऋभ्वसं अधृष्टं धृष्णुऽओजसं ॥ ३ ॥
अषाळ्हं उग्रं पृतनासु ससहिं यस्मिन् महीः उरुऽज्रयः सं धेन-
वः जायमाने अनोनवुः द्यावः क्षामः अनोनवुः ॥ ४ ॥ यत् द्यावः
इंद्र ते शतं शतं भूमीः उत स्युः ॰ न त्वा वज्रिन् सहस्रं सूर्याः अनु न
जातं अष्ट रोदसी ॥ ५ ॥ ८ ॥ आ पप्राथ महिना वृष्ण्या वृषन् वि-
श्वा शविष्ठ शवसा अस्मान् अव मघऽवन् गोऽमति व्रजे वज्रिन्
चित्राभिः ऊतिऽभिः ॥ ६ ॥ न सीं अदेवः आपत् इषं दीर्घऽआयो॰
मर्त्यः एतऽग्वा चित् यः एतशा युयोजते हरी इंद्रः युयोजते ॥ ७ ॥
तं वः महः महाय्यं इंद्रं दानाय सक्षणिं यः गाधेषु यः आऽअरणेषु
हव्यः वाजेषु अस्ति हव्यः ॥ ८ ॥ उत् ऊं सु नः वसो महे मृशस्व शूर
राधसे उत् ऊं सु मह्यै मघऽवन् मघत्तये उत् इंद्र श्रवसे महे ॥ ९ ॥
त्वं नः इंद्र ऋतऽयुः त्वाऽनिदः नि तृंपसि मध्ये वसिष्व तुविऽनृम्ण
ऊर्वोः नि दासं शिश्नथः हथैः ॥ १० ॥ ९ ॥ अन्यऽव्रतं अमानुषं अ-
यज्वानं अदेवऽयुं अव स्वः सखा दुधुवीत पर्वतः सुऽघ्नाय दस्युं
पर्वतः ॥ ११ ॥ त्वं नः इंद्र आसां हस्ते शविष्ठ दावने धानानां न सं
गृभाय अस्मऽयुः द्विः सं गृभाय अस्मऽयुः ॥ १२ ॥ सखायः क्रतुं इ-

उत कथा राधाम शरस्य । उपस्तुतिं भोजः सूरिर्यो अह्रयः ॥१३॥ भूरिभिः समह ऋषिभिर्बर्हिष्मद्भिः स्तविष्यसे । यदित्थमेकमेकमिच्छर वत्सान्पराददः ॥१४॥ कर्णगृह्या मघवा शौरदेव्यो वत्सं नस्त्रिभ्य आनयत् । अजां सूरिर्न धातवे ॥१५॥१०॥

---

॥७१॥ १—१५ सुदीतिपुरुमीळ्हौ तयोर्वान्यतरः ॥ अग्निः ॥ १—९ गायत्री । १०—१५ प्रागाथं ॥

॥७१॥ त्वं नो अग्ने महोभिः पाहि विश्वस्या अरातेः । उत द्विषो मर्त्यस्य ॥१॥ नहि मन्युः पौरुषेय ईशे हि वः प्रियजात । त्वमिदसि क्षपावान् ॥२॥ स नो विश्वेभिर्देवेभिरूर्जो नपाद्भद्रशोचे । रयिं देहि विश्ववारं ॥३॥ न तमग्ने अरातयो मर्तं युवन्त रायः । यं त्रायसे दाश्वांसं ॥४॥ यं त्वं विप्र मेधसातावग्ने हिनोषि धनाय । स तवोती गोषु गन्ता ॥५॥११॥ त्वं रयिं पुरुवीरमग्ने दाशुषे मर्ताय । प्र णो नय वस्यो अच्छ ॥६॥ उरुष्या णो मा परा दा अघायते जातवेदः । दुराध्ये३ मर्ताय ॥७॥ अग्ने माकिष्टे देवस्य रातिमदेवो युयोत । त्वमीशिषे वसूनां ॥८॥ स नो वस्व उप मास्यूर्जो नपान्माहिनस्य । सखे वसो जरितृभ्यः ॥९॥ अच्छा नः शीरशोचिषं गिरो यन्तु दर्शतं । अच्छा यज्ञासो नमसा पुरूवसुं पुरुप्रशस्तमूतये ॥१०॥१२॥ अग्निं सूनुं सहसो जातवेदसं दानाय वार्याणां । द्विता यो भूदमृतो मर्त्येष्वा होता मन्द्रतमो विशि ॥११॥ अग्निं वो देवयज्ययाग्निं प्रयत्यध्वरे । अग्निं धीषु प्रथममग्निमर्वत्यग्निं क्षैत्राय साधसे ॥१२॥ अग्निरिषां सख्ये ददातु न ईशे यो वार्याणां । अग्निं तोके तनये शश्वदीमहे वसुं सन्तं तनूपां ॥१३॥ अग्निमीळिष्वावसे गाथाभिः शीरशोचिषं । अग्निं राये पुरुमीळ्ह श्रुतं नरोऽग्निं सुदीतये



Digitized by Google

च्छत कया राधाम शरस्य उपऽस्तुतिं भोजः सूरिः यः अह्रयः ॥ १३ ॥ भूरिऽभिः समह ऋषिऽभिः बर्हिष्मत्ऽभिः स्तविष्यसे यत् इत्थं एकंऽएकं इत् शर वत्सान् पराऽददः ॥ १४ ॥ कर्णऽगृह्य मघऽवा शौरऽदेव्यः वत्सं नः त्रिऽभ्यः आ अनयत् अजां सूरिः न धातवे ॥ १५ ॥ १० ॥

---

॥ ७१ ॥ त्वं नः अग्ने महःऽभिः पाहि विश्वस्याः अरातेः उत द्विषः मर्त्यस्य ॥ १ ॥ नहि मन्युः पौरुषेयः ईशे हि वः प्रियऽजात त्वं इत् असि क्षपाऽवान् ॥ २ ॥ सः नः विश्वेभिः देवेभिः ऊर्जः नपात् भद्रऽशोचे रयिं देहि विश्वऽवारं ॥ ३ ॥ न तं अग्ने अरातयः मर्तं युवंत रायः यं त्रायसे दाश्वांसं ॥ ४ ॥ यं त्वं विप्र मेधऽसातौ अग्ने हिनोषि धनाय सः तव ऊती गोषु गंता ॥ ५ ॥ ११ ॥ त्वं रयिं पुरुऽवीरं अग्ने दाशुषे मर्ताय प्र नः नय वस्यः अच्छ ॥ ६ ॥ उरुष्य नः मा परा दाः अघऽयते जातऽवेदः दुःऽआध्ये मर्ताय ॥ ७ ॥ अग्ने माकिः ते देवस्य रातिं अदेवः युयोत त्वं ईशिषे वसूनां ॥ ८ ॥ सः नः वस्वः उप मासि ऊर्जः नपात् माहिनस्य सखे वसो इति जरितृऽभ्यः ॥ ९ ॥ अच्छ नः शीरऽशोचिषं गिरः यंतु दर्शतं अच्छ यज्ञासः नमसा पुरुऽवसुं पुरुऽप्रशस्तं ऊतये ॥ १० ॥ १२ ॥ अग्निं सूनुं सहसः जातऽवेदसं दानाय वार्याणां द्विता यः भूत् अमृतः मर्त्येषु आ होता मंद्रऽतमः विशि ॥ ११ ॥ अग्निं वः देवऽयज्यया अग्निं प्रऽयति अध्वरे अग्निं धीषु प्रथमं अग्निं अर्वति अग्निं क्षैत्राय साधसे ॥ १२ ॥ अग्निः इषां सख्ये ददातु नः ईशे यः वार्याणां अग्निं तोके तनये शश्वत् ईमहे वसुं संतं तनूऽपां ॥ १३ ॥ अग्निं ईळिष्व अवसे गाथाभिः शीरऽशोचिषं अग्निं राये पुरुऽमीळ्ह श्रुतं नरः अग्निं सुऽदीतये



Digitized by Google

छर्दिः ॥१४॥ अग्निं द्वेषो योतवै नो गृणीमस्यग्निं शं योश्च दातवे। विश्वासु विक्ष्ववितेव हव्यो भुवद्वस्तुर्ऋषूणां ॥१५॥१३॥

---

॥ ७२ ॥ १—१८ हर्यतः प्रागाथः ॥ अग्निर्हवींषि वा ॥ गायत्री ॥

॥७२॥ हविष्कृणुध्वमा गमदध्वर्युर्वनते पुनः। विद्वाँ अस्य प्रशासनं ॥१॥ नि तिग्ममभ्यंशुं सीदद्धोता मनावधि। जुषाणो अस्य सख्यं ॥२॥ अंतरिच्छंति तं जने रुद्रं परो मनीषया। गृभ्णंति जिह्वया ससं ॥३॥ जाम्यतीतपे धनुर्वयोधा अरुहद्वनं। दृषदं जिह्वयावधीत् ॥४॥ चरन्वत्सो रुशन्निह निदातारं न विंदते। वेति स्तोतव अंब्यं ॥५॥१४॥ उतो न्वस्य यन्महदश्वावद्योजनं बृहत्। दामा रथस्य ददृशे ॥६॥ दुहंति सप्तैकामुप द्वा पंच सृजतः। तीर्थे सिंधोरधि स्वरे ॥७॥ आ दशभिर्विवस्वत इंद्रः कोशमचुच्यवीत्। खेदया त्रिवृता दिवः ॥८॥ परि त्रिधातुरध्वरं जूर्णिरेति नवीयसी। मध्वा होतारो अंजते ॥९॥ सिंचंति नमसावतमुच्चाचक्रं परिज्मानं। नीचीनबारमक्षितं ॥१०॥१५॥ अभ्यारमिदद्रयो निषिक्तं पुष्करे मधु। अवतस्य विसर्जने ॥११॥ गाव उपावतावतं मही यज्ञस्य रप्सुदा। उभा कर्णा हिरण्यया ॥१२॥ आ सुते सिंचत श्रियं रोदस्योरभिश्रियं। रसा दधीत वृषभं ॥१३॥ ते जानत स्वमोक्यं सं वत्सासो न मातृभिः। मिथो नसंत जामिभिः ॥१४॥ उप स्रक्वेषु बप्सतः कृण्वते धरुणं दिवि। इंद्रे अग्ना नमः स्वः ॥१५॥१६॥ अधुक्षत्पिप्युषीमिषमूर्जं सप्तपदीमरिः। सूर्यस्य सप्त रश्मिभिः ॥१६॥ सोमस्य मित्रावरुणोदिता सूर आ ददे। तदातुरस्य भेषजं ॥१७॥ उतो न्वस्य यत्पदं हर्यतस्य निधान्यं। परि द्यां जिह्वयातनत् ॥१८॥१७॥



Digitized by Google

छर्दिः ॥ १४ ॥ अग्निं द्वेषः योतवै नः गृणीमसि अग्निं शं योः च दातवे विश्वासु विक्षु अविताऽइव हव्यः भुवत् वस्तुः ऋषूणां ॥ १५ ॥ १३ ॥

---

॥ ७२ ॥ हविः कृणुध्वं आ गमत् अध्वर्युः वनते पुनः विद्वान् अस्य प्रऽशासनं ॥ १ ॥ नि तिग्मं अभि अंशुं सीदत् होता मनौ अधि जुषाणः अस्य सख्यं ॥ २ ॥ अंतः इच्छंति तं जने रुद्रं परः मनीषया गृभ्णंति जिह्वया ससं ॥ ३ ॥ जामि अतीतपे धनुः वयःऽधाः अरुहत् वनं हषदं जिह्वया आ अवधीत् ॥ ४ ॥ चरन् वत्सः रुशन् इह निऽदातारं न विंदते वेति स्तोतवे अंब्यं ॥ ५ ॥ १४ ॥ उतो नु अस्य यत् महत् अश्वऽवत् योजनं बृहत् दामा रथस्य दहशे ॥ ६ ॥ दुहंति सप्त एकां उप द्वा पंच सृजतः तीर्थे सिंधोः अधि स्वरे ॥ ७ ॥ आ दशऽभिः विवस्वतः इंद्रः कोशं अचुच्यवीत् खेदया त्रिऽवृता दिवः ॥ ८ ॥ परि त्रिऽधातुः अध्वरं जूर्णिः एति नवीयसी मध्वा होतारः अंजते ॥ ९ ॥ सिंचंति नमसा अवतं उच्चाऽचक्रं परिऽज्मानं नीचीनऽबारं अक्षितं ॥ १० ॥ १५ ॥ अभिऽआरं इत् अद्रयः निऽसिक्तं पुष्करे मधु अवतस्य विऽसर्जने ॥ ११ ॥ गावः उप अवत अवतं मही यज्ञस्य रप्सुदा उभा कर्णा हिरण्यया ॥ १२ ॥ आ सुते सिंचत श्रियं रोदस्योः अभिऽश्रियं रसा दधीत वृषभं ॥ १३ ॥ ते जानत स्वं ओक्यं सं वत्सासः न मातृऽभिः मिथः नसंत जामिऽभिः ॥ १४ ॥ उप स्रक्वेषु बप्सतः कृण्वते धरुणं दिवि इंद्रे अग्ना नमः स्वः० ॥ १५ ॥ १६ ॥ अधुक्षत् पिप्युषीं इषं ऊर्जं सप्तऽपदीं अरिः सूर्यस्य सप्त रश्मिऽभिः ॥ १६ ॥ सोमस्य मित्रावरुणा उत्ऽइता सूरे आ ददे तत् आतुरस्य भेषजं ॥ १७ ॥ उतो नु अस्य यत् पदं हर्यतस्य निऽधान्यं परि द्यां जिह्वया अतनत् ॥ १८ ॥ १७ ॥



Digitized by Google

॥ ७३ ॥ १–१८ गोपवन आत्रेयः सप्तवध्रिर्वा ॥ अश्विनौ ॥ गायत्री ॥

॥७३॥ उदीराथामृतायते युंजाथामश्विना रथं। अंति षद्भूतु वामवः॥१॥ निमिषश्चिज्जवीयसा रथेना यातमश्विना। अंति षद्भूतु वामवः॥२॥ उप स्तृणीतमत्रये हिमेन घर्ममश्विना। अंति षद्भूतु वामवः॥३॥ कुह स्थः कुह जग्मथुः कुह श्येनेव पेतथुः। अंति षद्भूतु वामवः॥४॥ यदद्य कर्हि कर्हि चिच्छुश्रूयातमिमं हवं। अंति षद्भूतु वामवः॥५॥१८॥ अश्विना यामहूतमा नेदिष्ठं याम्याप्यं। अंति षद्भूतु वामवः॥६॥ अवंतमत्रये गृहं कृणुतं युवमश्विना। अंति षद्भूतु वामवः॥७॥ वरेथे अग्निमातपो वदते वल्ग्वत्रये। अंति षद्भूतु वामवः॥८॥ प्र सप्तवध्रिराशसा धारामग्नेरशायत। अंति षद्भूतु वामवः॥९॥ इहा गतं वृषण्वसू शृणुतं म इमं हवं। अंति षद्भूतु वामवः॥१०॥१९॥ किमिदं वां पुराणवज्जरतोरिव शस्यते। अंति षद्भूतु वामवः॥११॥ समानं वां सजात्यं समानो बंधुरश्विना। अंति षद्भूतु वामवः॥१२॥ यो वां रजांस्यश्विना रथो वियाति रोदसी। अंति षद्भूतु वामवः॥१३॥ आ नो गव्येभिरश्व्यैः सहस्रैरुप गच्छतं। अंति षद्भूतु वामवः॥१४॥ मा नो गव्येभिरश्व्यैः सहस्रेभिरति ख्यतं। अंति षद्भूतु वामवः॥१५॥ अरुणप्सुरुषा अभूदकर्ज्योतिर्ऋतावरी। अंति षद्भूतु वामवः॥१६॥ अश्विना सु विचाकशद्वृक्षं परशुमाँ इव। अंति षद्भूतु वामवः॥१७॥ पुरं न धृष्णवा रुज कृष्णया बाधितो विशा। अंति षद्भूतु वामवः॥१८॥२०॥

---

॥ ७४ ॥ १–१५ गोपवन आत्रेयः ॥ १–१२ अग्निः। १३–१५ श्रुतर्वण आर्क्ष्यस्य दानस्तुतिः ॥ १. ४. ७. १०. १३–१५ अनुष्टुप्। २. ३. ५. ६. ८. ९. ११. १२ गायत्री ॥

॥७४॥ विशोविशो वो अतिथिं वाजयंतः पुरुप्रियं। अ-



Digitized by Google

॥७३॥ उत् ईराथां ऋतऽयते युंजाथाँ अश्विना रथँ अंति सत्
भूतु वां अवः ॥१॥ निऽमिषः चित् जवीयसा रथेन आ यातं अ-
श्विना अंति सत् भूतु वां अवः ॥२॥ उप स्तृणीतं अत्रये हिमेन घ-
र्मं अश्विना अंति सत् भूतु वां अवः ॥३॥ कुहं स्थः कुहं जग्मथुः कुहं
श्येनाःऽइव पेतथुः अंति सत् भूतु वां अवः ॥४॥ यत् अद्य कहिं
कहिं चित् शुश्रुयातं इमं हवं अंति सत् भूतु वां अवः ॥५॥१८॥
अश्विना यामऽहूतमा नेदिष्ठं यामि आप्यं अंति सत् भूतु वां अवः
॥६॥ अवंतं अत्रये गृहं कृणुतं युवं अश्विना अंति सत् भूतु वां अ-
वः ॥७॥ वरेथे अग्निं आऽतपः वदते वल्गु अत्रये अंति सत् भूतु
वां अवः ॥८॥ प्र सप्तऽवध्रिः आऽशसा धारां अग्नेः अशायत अं-
ति सत् भूतु वां अवः ॥९॥ इह आ गतं वृषण्ऽवसू॰ शृणुतं मे इमं
हवं अंति सत् भूतु वां अवः ॥१०॥१९॥ किं इदं वां पुराणऽवत् ज-
रतोःऽइव शस्यते अंति सत् भूतु वां अवः ॥११॥ समानं वां स-
ऽजात्यं समानः बंधुः अश्विना अंति सत् भूतु वां अवः ॥१२॥ यः
वां रजांसि अश्विना रथः विऽयाति रोदसी अंति सत् भूतु वां
अवः ॥१३॥ आ नः गव्येभिः अश्व्यैः सहस्रैः उप गच्छतं अंति सत्
भूतु वां अवः ॥१४॥ मा नः गव्येभिः अश्व्यैः सहस्रेभिः अति ख्यतं
अंति सत् भूतु वां अवः ॥१५॥ अरुणऽप्सुः उषाः अभूत् अकः
ज्योतिः ऋतऽवरी अंति सत् भूतु वां अवः ॥१६॥ अश्विना सु
विऽचाकशत् वृक्षं परशुमान्ऽइव अंति सत् भूतु वां अवः ॥१७॥
पुरं न धृष्णो आ रुज कृष्णया बाधितः विशा अंति सत् भूतु वां
अवः ॥१८॥२०॥

---

॥७४॥ विशःऽविशः वः अतिथिं वाजऽयंतः पुरुऽप्रियं अ-

मिं वो दुर्ये वचः स्तुषे शूषस्य मन्मभिः ॥१॥ यं जनासो हविष्मंतो मित्रं न सर्पिरासुतिं। प्रशंसंति प्रशस्तिभिः ॥२॥ पन्यांसं जातवेदसं यो देवतात्युद्यता। हव्यान्यैरयद्दिवि ॥३॥ आगन्म वृत्रहंतमं ज्येष्ठमग्निमानवं। यस्य श्रुतर्वा बृहन्नार्क्षो अनीक एधते ॥४॥ अमृतं जातवेदसं तिरस्तमांसि दर्शतं। घृताहवनमीड्यं ॥५॥२१॥ सबाधो यं जना इमे३ऽग्निं हव्येभिरीळते। जुह्वानासो यतस्रुचः ॥६॥ इयं ते नव्यसी मतिरग्ने अधाय्यस्मदा। मंद्र सुजात सुक्रतोऽमूर दस्मातिथे ॥७॥ सा ते अग्ने शंतमा चनिष्ठा भवतु प्रिया। तया वर्धस्व सुष्टुतः ॥८॥ सा द्युम्नैर्द्युम्निनी बृहदुपोप श्रवसि श्रवः। दधीत वृत्रतूर्ये ॥९॥ अश्वमिद्गां रथप्रां त्वेषमिंद्रं न सत्पतिं। यस्य श्रवांसि तूर्वथ पन्यंपन्यं च कृष्टयः ॥१०॥२२॥ यं त्वा गोपवनो गिरा चनिष्ठदग्ने अंगिरः। स पावक श्रुधी हवं ॥११॥ यं त्वा जनास ईळते सबाधो वाजसातये। स बोधि वृत्रतूर्ये ॥१२॥ अहं हुवान आर्क्षे श्रुतर्वणि मदच्युति। शर्धांसीव स्तुकाविनां मृक्षा शीर्षा चतुर्णां ॥१३॥ मां चत्वार आशवः शविष्ठस्य द्रवित्नवः। सुरथासो अभि प्रयो वक्षन्वयो न तुग्र्यं ॥१४॥ सत्यमित्त्वा महेनदि परुष्ण्यव देदिशं। नेमापो अश्वदातरः शविष्ठादस्ति मर्त्यः ॥१५॥२३॥

---

॥ ७५ ॥ १–१६ विरूपः ॥ अग्निः ॥ गायत्री ॥

॥७५॥ युक्ष्वा हि देवहूतमाँ अश्वाँ अग्ने रथीरिव। नि होता पूर्व्यः सदः ॥१॥ उत नो देव देवाँ अच्छा वोचो विदुष्टरः। श्रद्विश्वा वार्या कृधि ॥२॥ त्वं ह यद्यविष्ठ्य सहसः सूनवाहुत। ऋतावा यज्ञियो भुवः ॥३॥ अयमग्निः सहस्रिणो वाजस्य



Digitized by Google

ग्निं वः दुर्यं वचः स्तुषे शूषस्य मन्मऽभिः ॥१॥ यं जनासः हृवि-
ष्मंतः मित्रं न सर्पिःऽआसुतिं प्रऽशंसंति प्रशस्तिऽभिः ॥२॥ प-
न्यांसं जातऽवेदसं यः देवऽताति उतऽयंता हृव्यानि ऐरयत् दिवि
॥३॥ आ अगन्म वृत्रहन्ऽतमं ज्येष्ठं अग्निं आनवं यस्य श्रुतर्वा
बृहन् आर्क्षः अनीके एधते ॥४॥ अमृतं जातऽवेदसं तिरः तमां-
सि दर्शतं घृतऽआहवनं ईड्यं ॥५॥२१॥ सऽबाधः यं जनाः इमे
अग्निं हृव्येभिः ईळते जुह्वानासः यतऽस्रुचः ॥६॥ इयं ते नव्यसी
मतिः अग्ने अधायि अस्मत् आ मंद्र सुऽजात सुऽक्रतो॰ अमूर
दस्म अतिथे ॥७॥ सा ते अग्ने शंऽतमा चनिष्ठा भवतु प्रिया तया
वर्धस्व सुऽस्तुतः ॥८॥ सा द्युम्नैः द्युम्निनी बृहत् उपऽउप श्रवसि
श्रवः दधीत वृत्रऽतूर्ये ॥९॥ अश्वं इत् गां रथऽप्रां त्वेषं इंद्रं न सत्-
ऽपतिं यस्य श्रवांसि तूर्वथ पन्यंऽपन्यं च कृष्टयः ॥१०॥२२॥ यं त्वा
गोपवनः गिरा चनिष्ठत् अग्ने अंगिरः सः पावक श्रुधि हवं ॥११॥
यं त्वा जनासः ईळते सऽबाधः वाजऽसातये सः बोधि वृत्रऽतूर्ये
॥१२॥ अहं हुवानः आर्क्षे श्रुतर्वणि मदऽच्युति शर्धांसिऽइव स्तु-
काऽविनां मृक्षा शीर्षा चतुर्णां ॥१३॥ मां चत्वारः आशवः शवि-
ष्ठस्य द्रवित्नवः सुऽरथासः अभि प्रयः वक्षन् वयः न तुग्र्यं ॥१४॥
सत्यं इत् त्वा महेऽनदि परुष्णि अव देदिशं न ईं आपः अश्वऽदा-
तरः शविष्ठात् अस्ति मर्त्यः ॥१५॥२३॥

---

॥७५॥ युक्ष्व हि देवऽहूतमान् अश्वान् अग्ने रथीःऽइव नि होता
पूर्व्यः सदः ॥१॥ उत नः देव देवान् अच्छ वोचः विदुःऽतरः
श्रत् विश्वा वार्या कृधि ॥२॥ त्वं ह यत् यविष्ठ्य सहसः सूनो आ-
ऽहुत ऋतऽवा यज्ञियः भुवः ॥३॥ अयं अग्निः सहस्रिणः वाजस्य



Digitized by Google

शतिनस्पतिः। मूर्धा कवी रयीणां॥४॥ तं नेमिमृभवो यथा नमस्व सहूतिभिः। नेदीयो यज्ञमंगिरः॥५॥२४॥ तस्मै नूनमभिद्यवे वाचा विरूप नित्यया। वृष्णे चोदस्व सुष्टुतिं॥६॥ कमु ष्विदस्य सेनयाग्नेरपाकचक्षसः। पणिं गोषु स्तरामहे॥७॥ मा नो देवानां विशः प्रस्नातीरिवोस्राः। कृशं न हासुरघ्न्याः॥८॥ मा नः समस्य दूढ्य१ः परिद्वेषसो अंहतिः। ऊर्मिर्न नावमा वधीत्॥९॥ नमस्ते अग्न ओजसे गृणंति देव कृष्टयः। अमैरमित्रमर्दय॥१०॥२५॥ कुवित्सु नो गविष्टयेऽग्ने संवेषिषो रयिं। उरुकृदुरु णस्कृधि॥११॥ मा नो अस्मिन्महाधने परा वर्ग्भारभृद्यथा। संवर्गं सं रयिं जय॥१२॥ अन्यमस्मद्भिया इयमग्ने सिषक्तु दुच्छुना। वर्धा नो अमवच्छवः॥१३॥ यस्याजुषन्नमस्विनः शमीमदुर्मखस्य वा। तं घेदग्निर्वृधावति॥१४॥ परस्या अधि संवतोऽवराँ अभ्या तर। यत्राहमस्मि ताँ अव॥१५॥ विद्मा हि ते पुरा वयमग्ने पितुर्यथावसः। अधा ते सुम्नमीमहे॥१६॥२६॥

---

॥ ७६ ॥ १—१२ कुरुसुतिः काण्वः ॥ इंद्रः ॥ गायत्री ॥

॥७६॥ इमं नु मायिनं हुव इंद्रमीशानमोजसा। मरुत्वंतं न वृंजसे॥१॥ अयमिंद्रो मरुत्सखा वि वृत्रस्याभिनच्छिरः। वज्रेण शतपर्वणा॥२॥ वावृधानो मरुत्सखेंद्रो वि वृत्रमैरयत्। सृजन्त्समुद्रिया अपः॥३॥ अयं ह येन वा इदं स्वर्मरुत्वता जितं। इंद्रेण सोमपीतये॥४॥ मरुत्वंतमृजीषिणमोजस्वंतं विरप्शिनं। इंद्रं गीर्भिर्हवामहे॥५॥ इंद्रं प्रत्नेन मन्मना मरुत्वंतं हवामहे। अस्य सोमस्य पीतये॥६॥२७॥ मरुत्वाँ इंद्र मीढ्वः पिबा सोमं शतक्रतो। अस्मिन्यज्ञे पुरुष्टुत॥७॥ तुभ्येदिंद्र म-



Digitized by Google

शतिनः पतिः मूर्धा कविः रयीणां ॥४॥ तं नेमिं ऋभवः यथा आ
नमस्व सहूतिऽभिः नेदीयः यज्ञं अंगिरः ॥५॥२४॥ तस्मै नूनं अ-
भिऽद्यवे वाचा विऽरूप नित्यया वृष्णे चोदस्व सुऽस्तुतिं ॥६॥ कं
ऊं॰ स्वित् अस्य सेनया अग्नेः अपाकऽचक्षसः पणिं गोषु स्तरा-
महे ॥७॥ मा नः देवानां विशः प्रस्नातीःऽइव उस्राः कृशं न हासुः
अघ्न्याः ॥८॥ मा नः समस्य दुःऽध्यः परिऽद्वेषसः अंहतिः ऊर्मिः
न नावं आ वधीत् ॥९॥ नमः ते अग्ने ओजसे गृणंति देव कृष्टयः
अमैः अमित्रं अर्दय ॥१०॥२५॥ कुवित् सु नः गोऽइष्टये अग्ने सं-
ऽवेषिषः रयिं उरुऽकृत् उरु नः कृधि ॥११॥ मा नः अस्मिन् म-
हाऽधने परा वर्क् भारऽभृत् यथा संऽवर्गं सं रयिं जय ॥१२॥ अन्यं
अस्मत् भियै इयं अग्ने सिसक्तु दुच्छुना वर्ध नः अमऽवत् शवः
॥१३॥ यस्य अजुषत् नमस्विनः शमीं अदुःऽमखस्य वा तं घ इत्
अग्निः वृधा अवति ॥१४॥ परस्याः अधि संऽवतः अवरान् अभि
आ तर यत्र अहं अस्मि तान् अव ॥१५॥ विद्म हि ते पुरा वयं अग्ने
पितुः यथा अवसः अध ते सुम्नं ईमहे ॥१६॥२६॥

---

॥७६॥ इमं नु मायिनं हुवे इंद्रं ईशानं ओजसा मरुत्वंतं न वृं-
जसे ॥१॥ अयं इंद्रः मरुत्ऽसखा वि वृत्रस्य अभिनत् शिरः वज्रेण
शतऽपर्वणा ॥२॥ ववृधानः मरुत्ऽसखा इंद्रः वि वृत्रं ऐरयत् सृ-
जन् समुद्रियाः अपः ॥३॥ अयं ह येन वै इदं स्वः मरुत्वता जितं
इंद्रेण सोमऽपीतये ॥४॥ मरुत्वंतं ऋजीषिणं ओजस्वंतं विऽर-
प्शिनं इंद्रं गीःऽभिः हवामहे ॥५॥ इंद्रं प्रत्नेन मन्मना मरुत्वंतं ह-
वामहे अस्य सोमस्य पीतये ॥६॥२७॥ मरुत्वान् इंद्र मीढ्वः पिब
सोमं शतऽक्रतो॰ अस्मिन् यज्ञे पुरुऽस्तुत ॥७॥ तुभ्य इत् इंद्र म-



Digitized by Google

रुत्वंते सुताः सोमासो अद्रिवः। हृदा हूयंत उक्थिनः॥८॥ पिबे-
दिंद्र मरुत्सखा सुतं सोमं दिविष्टिषु। वज्रं शिशान ओजसा
॥९॥ उत्तिष्ठन्नोजसा सह पीत्वी शिप्रे अवेपयः। सोममिंद्र चमू
सुतं॥१०॥ अनु त्वा रोदसी उभे क्रक्षमाणमकृपेतां। इंद्र यद्द-
स्युहाभवः॥११॥ वाचमष्टापदीमहं नवस्रक्तिमृतस्पृशं। इंद्रात्प-
रि तन्वं ममे॥१२॥२८॥

---

॥ ७७ ॥ १–११ कुरुसुतिः काण्वः ॥ इंद्रः ॥ १–९ गायत्री। १० बृहती। ११ सतोबृहती ॥

॥७७॥ जज्ञानो नु शतक्रतुर्वि पृच्छदिति मातरं। क उग्राः के
ह शृण्विरे॥१॥ आदीं शवस्यब्रवीदौर्णवाभमहीशुवं। ते पुत्र संतु
निष्टुरः॥२॥ समित्तान्वृत्रहाखिदत्खे अराँ इव खेदया। प्रवृद्धो
दस्युहाभवत्॥३॥ एकया प्रतिधापिबत्साकं सरांसि त्रिंशतं।
इंद्रः सोमस्य काणुका॥४॥ अभि गंधर्वमतृणदबुध्नेषु रजःस्वा।
इंद्रो ब्रह्मभ्य इद्वृधे॥५॥२९॥ निराविध्यद्गिरिभ्य आ धारयत्प-
क्वमोदनं। इंद्रो बुंदं स्वाततं॥६॥ शतब्रध्न इषुस्तव सहस्रपर्ण
एक इत्। यमिंद्र चकृषे युजं॥७॥ तेन स्तोतृभ्य आ भर नृभ्यो
नारिभ्यो अत्तवे। सद्यो जात ऋभुष्ठिर॥८॥ एता च्यौत्नानि ते
कृता वर्षिष्ठानि परीणसा। हृदा वीड्वधारयः॥९॥ विश्वेत्ता वि-
ष्णुराभरदुरुक्रमस्त्वेषितः। शतं महिषान्क्षीरपाकमोदनं वराह-
मिंद्र एमुषं॥१०॥ तुविक्षं ते सुकृतं सूमयं धनुः साधुर्बुंदो
हिरण्ययः। उभा ते बाहू रण्या सुसंस्कृत ऋदूपे चिदृदूवृ-
धा॥११॥३०॥

---

॥ ७८ ॥ १–१० कुरुसुतिः काण्वः ॥ इंद्रः ॥ १–९ गायत्री। १० बृहती ॥

॥७८॥ पुरोळाशं नो अंधस इंद्र सहस्रमा भर। शता च शूर



Digitized by Google

स्वंते सुताः सोमासः अद्रिऽवः हृदा हूयंते उक्थिनः ॥८॥ पिब इत् इंद्र मरुत्ऽसखा सुतं सोमं दिविष्टिषु वज्रं शिशानः ओजसा ॥९॥ उत्ऽतिष्ठन् ओजसा सह पीत्वी शिप्रे अवेपयः सोमं इंद्र चमू सुतं ॥१०॥ अनु त्वा रोदसी उभे क्रक्षमाणं अकृपेतां इंद्र यत् दस्युऽहा अभवः ॥११॥ वाचं अष्टाऽपदीं अहं नवऽस्रक्तिं ऋतऽस्पृशं इंद्रात् परि तन्वं ममे ॥१२॥२८॥

---

॥७७॥ जज्ञानः नु शतऽक्रतुः वि पृच्छत् इति मातरं के उग्राः के ह शृण्विरे ॥१॥ आत् ईं शवसी अब्रवीत् और्णऽवाभं अहीशुवं ते पुत्र संतु निःऽतुरः ॥२॥ सं इत् तान् वृत्रऽहा अखिदत् खे अराऽन्ऽइव खेदया प्रऽवृद्धः दस्युऽहा अभवत् ॥३॥ एकया प्रतिऽधा अपिबत् साकं सरांसि त्रिंशतं इंद्रः सोमस्य काणुका ॥४॥ अभि गंधर्वं अतृणत् अबुध्नेषु रजःऽसु आ इंद्रः ब्रह्मऽभ्यः इत् वृधे ॥५॥२९॥ निः अविध्यत् गिरिऽभ्यः आ धारयत् पक्वं ओदनं इंद्रः बुंदं सुऽआततं ॥६॥ शतऽब्रध्नः इषुः तव सहस्रऽपर्णः एकः इत् यं इंद्र चकृषे युजं ॥७॥ तेन स्तोतृऽभ्यः आ भर नृऽभ्यः नारिऽभ्यः अत्तवे सद्यः जातः ऋभुऽस्थिर ॥८॥ एता च्यौत्नानि ते कृता वर्षिष्ठानि परीणसा हृदा वीळु अधारयः ॥९॥ विश्वा इत् ता विष्णुः आ अभरत् उरुऽक्रमः त्वाऽइषितः शतं महिषान् क्षीरऽपाकं ओदनं वराहं इंद्रः एमुषं ॥१०॥ तुविऽक्षं ते सुऽकृतं सुऽमयं धनुः साधुः बुंदः हिरण्ययः उभा ते बाहू रण्या सुऽसंस्कृता ऋदुऽपे चित् ऋदुऽवृधा ॥११॥३०॥

---

॥७८॥ पुरोळाशं नः अंधसः इंद्र सहस्रं आ भर शता च शूर



Digitized by Google

गोनां ॥१॥ आ नो भर व्यंजनं गामश्वमभ्यंजनं। सचा मना हिरण्यया ॥२॥ उत नः कर्णशोभना पुरूणि धृष्णवा भर। त्वं हि शृण्विषे वसो ॥३॥ नकीं वृधीक इंद्र ते न सुषा न सुदा उत। नान्यस्त्वच्छूर वाघतः ॥४॥ नकीमिंद्रो निकर्तवे न शक्रः परिशक्तवे। विश्वं शृणोति पश्यति ॥५॥३१॥ स मन्युं मर्त्यानामदब्धो नि चिकीषते। पुरा निदश्चिकीषते ॥६॥ क्रत्व इत्पूर्णमुदरं तुरस्यास्ति विधतः। वृत्रघ्नः सोमपाव्नः ॥७॥ त्वे वसूनि संगता विश्वा च सोम सौभगा। सुदात्वपरिह्वृता ॥८॥ त्वामिद्यवयुर्मम कामो गव्युर्हिरण्ययुः। त्वामश्वयुरेषते ॥९॥ तवेदिंद्राहमाशसा हस्ते दात्रं चना ददे। दिनस्य वा मघवन्त्संभृतस्य वा पूर्धि यवस्य काशिना ॥१०॥३२॥

---

॥ ७९ ॥ १–९ कृत्नुर्भार्गवः ॥ सोमः ॥ १–८ गायत्री। ९ अनुष्टुप् ॥

॥७९॥ अयं कृत्नुरगृभीतो विश्वजिदुद्भिदित्सोमः। ऋषिर्विप्रः काव्येन ॥१॥ अभ्यूर्णोति यन्नग्नं भिषक्ति विश्वं यत्तुरं। प्रेमंधः ख्यन्निः श्रोणो भूत् ॥२॥ त्वं सोम तनूकृद्भ्यो द्वेषोभ्योऽन्यकृतेभ्यः। उरु यंतासि वरूथं ॥३॥ त्वं चित्ती तव दक्षैर्दिव आ पृथिव्या ऋजीषिन्। यावीरघस्य चिद्द्वेषः ॥४॥ अर्थिनो यंति चेदर्थं गच्छानिद्ददुषो रातिं। ववृज्युस्तृष्यतः कामं ॥५॥३३॥ विदद्यत्पूर्व्यं नष्टमुदीमृतायुमीरयत्। प्रेमायुस्तारीदतीर्णं ॥६॥ सुशेवो नो मृळयाकुरदृप्तक्रतुरवातः। भवा नः सोम शं हृदे ॥७॥ मा नः सोम सं वीविजो मा वि बीभिषथा राजन्। मा नो हार्दि त्विषा वधीः ॥८॥ अव यत्स्वे सधस्थे देवानां दुर्मतीरीक्षे। राजन्नप द्विषः सेध मीढ्वो अप स्रिधः सेध ॥९॥३४॥



Digitized by Google

गोनाँ॥१॥ आ नः भर विऽअंजनं गां अश्वं अभिऽअंजनं सचा
मना हिरण्यया॥२॥ उत नः कर्णऽशोभना पुरूणि धृष्णो आ
भर त्वं हि शृण्विषे वसो॥३॥ नकीं वृधीकः इंद्र ते न सुऽसाः न
सुऽदाः उत न अन्यः त्वत् शूर वाघतः॥४॥ नकीं इंद्रः निऽकर्तवे
न शक्रः परिऽशक्तवे विश्वं शृणोति पश्यति॥५॥३१॥ सः मन्युं
मर्त्यानां अदब्धः नि चिकीषते पुरा निदः चिकीषते॥६॥ क्रत्वः
इत् पूर्णं उदरं तुरस्य अस्ति विधतः वृत्रऽघ्नः सोमऽपाव्नः॥७॥ त्वे
वसूनि संऽगता विश्वा च सोम सौभगा सुऽदातु अपरिऽह्वृता॥८॥
त्वां इत् यवऽयुः मम कामः गव्युः हिरण्यऽयुः त्वां अश्वऽयुः आ
ईषते॥९॥ तव इत् इंद्र अहं आऽशसा हस्ते दात्रं चन आ ददे दिन-
स्य वा मघऽवन् संऽभृतस्य वा पूर्धि यवस्य काशिना॥१०॥३२॥

---

॥७९॥ अयं कृत्नुः अगृभीतः विश्वऽजित् उत्ऽभित् इत् सोमः
ऋषिः विप्रः काव्येन॥१॥ अभि ऊर्णोति यत् नग्नं भिषक्ति विश्वं
यत् तुरं प्र ईं अंधः ख्यत् निः श्रोणः भूत्॥२॥ त्वं सोम तनूकृत्ऽभ्यः
द्वेषःऽभ्यः अन्यऽकृतेभ्यः उरु यंता असि वरूथं॥३॥ त्वं चित्ती तव
दक्षैः दिवः आ पृथिव्याः ऋजीषिन् यावीः अघस्य चित् द्वेषः
॥४॥ अर्थिनः यंति च इत् अर्थं गच्छान् इत् ददुषः रातिं ववृज्युः
तृष्यतः कामं॥५॥३३॥ विदत् यत् पूर्व्यं नष्टं उत् ईं ऋतऽयुं ईरयत्
प्र ईं आयुः तारीत् अतीर्णं॥६॥ सुऽशेवः नः मृळयाकुः अदृप्त-
ऽक्रतुः अवातः भव नः सोम शं हृदे॥७॥ मा नः सोम सं वीविजः
मा वि बीभिषथाः राजन् मा नः हार्दि त्विषा वधीः॥८॥ अव यत्
स्वे सधऽस्थे देवानां दुःऽमतीः ईक्षे राजन् अप द्विषः सेध मीढ्वः
अप स्रिधः सेध॥९॥३४॥



Digitized by Google

॥ ८० ॥ १–१० एकद्यूर्नौधसः ॥ १–९ इंद्रः । १० देवाः ॥ १–९ गायत्री । १० त्रिष्टुप् ॥

॥ ८० ॥ नह्य१न्यं बळाकरं मर्डितारं शतक्रतो। त्वं न इंद्र मृळय ॥ १ ॥ यो नः शश्वत्पुराविथामृध्रो वाजसातये। स त्वं न इंद्र मृळय ॥ २ ॥ किमंग रध्रचोदनः सुन्वानस्यावितेदसि। कुवित्स्विंद्र णः शकः ॥ ३ ॥ इंद्र प्र णो रथमव पश्चाच्चित्संतमद्रिवः। पुरस्तादेनं मे कृधि ॥ ४ ॥ हंतो नु किमाससे प्रथमं नो रथं कृधि। उपमं वाजयु श्रवः ॥ ५ ॥ ३५ ॥ अवा नो वाजयुं रथं सुकरं ते किमित्परि। अस्मान्सु जिग्युषस्कृधि ॥ ६ ॥ इंद्र दृह्यस्व पूरसि भद्रा त एति निष्कृतं। इयं धीर्ऋत्वियावती ॥ ७ ॥ मा सीमवद्य आ भागुर्वी काष्ठा हितं धनं। अपावृक्ता अरत्नयः ॥ ८ ॥ तुरीयं नाम यज्ञियं यदा करस्तदुश्मसि। आदित्पतिर्न ओहसे ॥ ९ ॥ अवीवृधद्वो अमृता अमंदीदेकद्यूर्देवा उत याश्च देवीः। तस्मा उ राधः कृणुत प्रशस्तं प्रातर्मक्षू धियावसुर्जगम्यात् ॥ १० ॥ ३६ ॥ ८ ॥

---

॥ ८१ ॥ १–९ कुसीदी काण्वः ॥ इंद्रः ॥ गायत्री ॥

॥ ८१ ॥ आ तू न इंद्र क्षुमंतं चित्रं ग्राभं सं गृभाय। महाहस्ती दक्षिणेन ॥ १ ॥ विद्मा हि त्वा तुविकूर्मिं तुविदेष्णं तुवीमघं। तुविमात्रमवोभिः ॥ २ ॥ नहि त्वा शूर देवा न मर्तासो दित्संतं। भीमं न गां वारयंते ॥ ३ ॥ एतो न्विंद्रं स्तवामेशानं वस्वः स्वराजं। न राधसा मर्धिषन्नः ॥ ४ ॥ प्र स्तोषदुप गासिषच्छ्रवत्साम गीयमानं। अभि राधसा जुगुरत् ॥ ५ ॥ ३७ ॥ आ नो भर दक्षिणेनाभि सव्येन प्र मृश। इंद्र मा नो वसोर्निर्भाक् ॥ ६ ॥ उप क्रमस्वा भर धृषता धृष्णो जनानां। अदाशूष्टरस्य वेदः ॥ ७ ॥ इंद्र य उ नु ते अस्ति वाजो विप्रेभिः सनित्वः। अस्मा-



Digitized by Google

॥८०॥ नहि अन्यं बळा अकरं मर्डितारं शतऽक्रतो॰ त्वं नः इंद्र मृळय॥१॥ यः नः शश्वत् पुरा आविथ अमृध्रः वाजऽसातये सः त्वं नः इंद्र मृळय॥२॥ किं अंग रध्रऽचोदनः सुन्वानस्य अविता इत् असि कुवित् सु इंद्र नः शकः॥३॥ इंद्रं प्र नः रथं अव पश्चात् चित् संतं अद्रिऽवः पुरस्तात् एनं मे कृधि॥४॥ हंतो॰ नु किं आससे प्रथमं नः रथं कृधि उपऽमं वाजऽयु श्रवः॥५॥३५॥ अव नः वाजऽयुं रथं सुऽकरं ते किं इत् परि अस्मान् सु जिग्युषः कृधि॥६॥ इंद्र दृह्यस्व पूः असि भद्रा ते एति निःऽकृतं इयं धीः ऋत्वियऽवती ॥७॥ मा सीं अवद्ये आ भाक् उर्वी काष्ठा हितं धनं अपऽआवृक्ताः अरत्नयः॥८॥ तुरीयं नाम यज्ञियं यदा करः तत् उश्मसि आत् इत् पतिः नः ओहसे॥९॥ अवीवृधत् वः अमृताः अमंदीत् एकऽद्यूः देवाः उत याः च देवीः तस्मैं ऊं॰ राधः कृणुत प्रऽशस्तं प्रातः मक्षु धियाऽवसुः जगम्यात्॥१०॥३६॥८॥

---

॥८१॥ आ तु नः इंद्र क्षुऽमंतं चित्रं ग्राभं सं गृभाय महाऽहस्ती दक्षिणेन॥१॥ विद्म हि त्वा तुविऽकूर्मिं तुविऽदेष्णं तुविऽमघं तुविऽमात्रं अवःऽभिः॥२॥ नहि त्वा शूर देवाः न मर्तासः दित्संतं भीमं न गां वारयंते॥३॥ आ इत ऊं॰ नु इंद्रं स्तवाम ईशानं वस्वः स्वऽराजं न राधसा मर्धिषत् नः॥४॥ प्र स्तोषत् उप गासिषत् श्रवत् साम गीयमानं अभि राधसा जुगुरत्॥५॥३७॥ आ नः भर दक्षिणेन अभि सव्येन प्र मृश इंद्र मा नः वसोः निः भाक् ॥६॥ उप क्रमस्व आ भर धृषता धृष्णो॰ जनानां अदाशूःऽतरस्य वेदः॥७॥ इंद्र यः ऊं॰ नु ते अस्ति वाजः विप्रेभिः सनित्वः अस्मा-



Digitized by Google

भिः सु तं सनुहि ॥ ८॥ सद्योजुवस्ते वाजा अस्मभ्यं विश्वश्चंद्राः । वशैश्च मक्षू जरंते ॥ ९॥ ३८॥ ५॥

॥ ८२ ॥ १—९ कुसीदी काण्वः ॥ इंद्रः ॥ गायत्री ॥

॥ ८२॥ आ प्र द्रव परावतोऽर्वावतश्च वृत्रहन् । मध्वः प्रति प्रभर्मणि ॥ १॥ तीव्राः सोमास आ गहि सुतासो मादयिष्णवः । पिबा दधृग्यथोचिषे ॥ २॥ इषा मंदस्वादु तेऽरं वराय मन्यवे । भुवत्त इंद्र शं हृदे ॥ ३॥ आ त्वशत्रवा गहि न्युक्थानि च हूयसे । उपमे रोचने दिवः ॥ ४॥ तुभ्यायमद्रिभिः सुतो गोभिः श्रीतो मदाय कं । प्र सोम इंद्र हूयते ॥ ५॥ १॥ इंद्र श्रुधि सु मे हवमस्मे सुतस्य गोमतः । वि पीतिं तृप्तिमश्नुहि ॥ ६॥ य इंद्र चमसेष्वा सोमश्चमूषु ते सुतः । पिबेदस्य त्वमीशिषे ॥ ७॥ यो अप्सु चंद्रमा इव सोमश्चमूषु ददृशे । पिबेदस्य त्वमीशिषे ॥ ८॥ यं ते श्येनः पदाभरत्तिरो रजांस्यस्पृतं । पिबेदस्य त्वमीशिषे ॥ ९॥ २॥

॥ ८३ ॥ १—९ कुसीदी काण्वः ॥ विश्वे देवाः ॥ गायत्री ॥

॥ ८३॥ देवानामिदवो महत्तदा वृणीमहे वयं । वृष्णामस्मभ्यमूतये ॥ १॥ ते नः संतु युजः सदा वरुणो मित्रो अर्यमा । वृधासश्च प्रचेतसः ॥ २॥ अति नो विष्पिता पुरु नौभिरपो न पर्षथ । यूयमृतस्य रथ्यः ॥ ३॥ वामं नो अस्त्वर्यमन्वामं वरुण शंस्यं । वामं ह्यावृणीमहे ॥ ४॥ वामस्य हि प्रचेतस ईशानासो रिशादसः । नेमादित्या अघस्य यत् ॥ ५॥ ३॥ वयमिद्वः सुदानवः क्षियंतो यांतो अध्वन्ना । देवा वृधाय हूमहे ॥ ६॥ अधि न इंद्रैषां विष्णो सजात्यानां । इता मरुतो अश्विना ॥ ७॥ प्र भ्रातृत्वं सुदानवोऽध द्विता समान्या । मातुर्गर्भे भरा-



Digitized by Google

भिः सु तं सनुहि॥८॥ सद्यः ऽजुवः ते वाजाः अस्मभ्यं विश्वऽचंद्राः वशैः च मक्षु जरंते ॥९॥३८॥५॥

---

॥८२॥ आ प्र द्रव पराऽवतः अर्वाऽवतः च वृत्रऽहन् मध्वः प्रति प्रऽभर्मणि॥१॥ तीव्राः सोमासः आ गहि सुतासः मादयिष्णवः पिब दधृक् यथा ओचिषे॥२॥ इषा मंदस्व आत् ऊं ते अरं वराय मन्यवे भुवत् ते इंद्र शं हृदे॥३॥ आ तु अशत्रो आ गहि नि उक्थानि च हूयसे उपऽमे रोचने दिवः॥४॥ तुभ्यं अयं अद्रिऽभिः सुतः गोभिः श्रीतः मदाय कं प्र सोमः इंद्र हूयते॥५॥१॥ इंद्र श्रुधि सु मे हवं अस्मे सुतस्य गोऽमतः वि पीतिं तृप्तिं अश्नुहि॥६॥ यः इंद्र चमसेषु आ सोमः चमूषु ते सुतः पिब इत् अस्य त्वं ईशिषे॥७॥ यः अप्ऽसु चंद्रमाःऽइव सोमः चमूषु ददृशे पिब इत् अस्य त्वं ईशिषे॥८॥ यं ते श्येनः पदा आ अभरत् तिरः रजांसि अस्पृतं पिब इत् अस्य त्वं ईशिषे॥९॥२॥

---

॥८३॥ देवानां इत् अवः महत् तत् आ वृणीमहे वयं वृष्णां अस्मभ्यं ऊतये॥१॥ ते नः संतु युजः सदा वरुणः मित्रः अर्यमा वृधासः च प्रऽचेतसः॥२॥ अति नः विष्पिता पुरु नौभिः अपः न पर्षथ यूयं ऋतस्य रथ्यः॥३॥ वामं नः अस्तु अर्यमन् वामं वरुण शंस्यं वामं हि आऽवृणीमहे॥४॥ वामस्य हि प्रऽचेतसः ईशानासः रिशादसः न ई आदित्याः अघस्य यत्॥५॥३॥ वयं इत् वः सुऽदानवः क्षियंतः यांतः अध्वन् आ देवाः वृधाय हूमहे॥६॥ अधि नः इंद्र एषां विष्णो सऽजात्यानां इत मरुतः अश्विना॥७॥ प्र भ्रातृऽत्वं सुऽदानवः अध द्विता समान्या मातुः गर्भे भरा-



Digitized by Google

महे ॥८॥ यूयं हि ष्ठा सुदानव इंद्रज्येष्ठा अभिद्यवः। अधा चिद्व उत ब्रुवे ॥९॥४॥

॥ ८४ ॥ १–९ उशना काव्यः ॥ अग्निः ॥ गायत्री ॥

॥८४॥ प्रेष्ठं वो अतिथिं स्तुषे मित्रमिव प्रियं। अग्निं रथं न वेद्यं ॥१॥ कविमिव प्रचेतसं यं देवासो अध द्विता। नि मर्त्येष्वादधुः ॥२॥ त्वं यविष्ठ दाशुषो नॄँः पाहि शृणुधी गिरः। रक्षा तोकमुत त्मना ॥३॥ कया ते अग्ने अंगिर ऊर्जो नपादुपस्तुतिं। वराय देव मन्यवे ॥४॥ दाशेम कस्य मनसा यज्ञस्य सहसो यहो। कदु वोच इदं नमः ॥५॥५॥ अधा त्वं हि नस्करो विश्वा अस्मभ्यं सुक्षितीः। वाजद्रविणसो गिरः ॥६॥ कस्य नूनं परीणसो धियो जिन्वसि दंपते। गोषाता यस्य ते गिरः ॥७॥ तं मर्जयंत सुक्रतुं पुरोयावानमाजिषु। स्वेषु क्षयेषु वाजिनं ॥८॥ क्षेति क्षेमेभिः साधुभिर्नकिर्यं घ्नंति हंति यः। अग्ने सुवीर एधते ॥९॥६॥

॥ ८५ ॥ १–९ कृष्णः ॥ अश्विनौ ॥ गायत्री ॥

॥८५॥ आ मे हवं नासत्याश्विना गच्छतं युवं। मध्वः सोमस्य पीतये ॥१॥ इमं मे स्तोममश्विनेमं मे शृणुतं हवं। मध्वः सोमस्य पीतये ॥२॥ अयं वां कृष्णो अश्विना हवते वाजिनीवसू। मध्वः सोमस्य पीतये ॥३॥ शृणुतं जरितुर्हवं कृष्णस्य स्तुवतो नरा। मध्वः सोमस्य पीतये ॥४॥ छर्दिर्यंतमदाभ्यं विप्राय स्तुवते नरा। मध्वः सोमस्य पीतये ॥५॥७॥ गच्छतं दाशुषो गृहमित्था स्तुवतो अश्विना। मध्वः सोमस्य पीतये ॥६॥ युंजाथां रासभं रथे वीड्वंगे वृषण्वसू। मध्वः सोमस्य पीतये ॥७॥ त्रिवंधुरेण त्रिवृता रथेना यातमश्विना। मध्वः सोमस्य पीतये ॥८॥ नू



Digitized by Google

महे॥८॥ यूयं हि स्थ सुऽदानवः इंद्रऽज्येष्ठाः अभिऽद्यवः अधं चित् वः उत ब्रुवे ॥९॥४॥

---

॥८४॥ प्रेष्ठं वः अतिथिं स्तुषे मित्रंऽइंव प्रियं अग्निं रथं न वेद्यं ॥१॥ कविंऽइंव प्रऽचेतसं यं देवासः अधं द्विता नि मर्त्येषु आऽदधुः ॥२॥ त्वं यविष्ठ दाशुषः नॄन् पाहि शृणुधि गिरः रक्ष तोकं उत त्मना॥३॥ कया ते अग्ने अंगिरः ऊर्जः नपात् उपंऽस्तुतिं वरांय देव मन्यवे॥४॥ दाशेम कस्यं मनसा यज्ञस्यं सहसः यहो कत् ऊं वोचे इदं नमः॥५॥५॥ अधं त्वं हि नः करः विश्वाः अस्मभ्यं सुऽक्षितीः वाजंऽद्रविणसः गिरः॥६॥ कस्यं नूनं परीणसः धियः जिन्वसि दंऽपते गोऽसाता यस्यं ते गिरः॥७॥ तं मर्जयंत सुऽक्रतुं पुरःऽयावानं आजिषु स्वेषु क्षयेषु वाजिनं॥८॥ क्षेति क्षेमेभिः साधुऽभिः नकिः यं घ्नंति हंति यः अग्ने सुऽवीरः एधते॥९॥६॥

---

॥८५॥ आ मे हवं नासत्या अश्विना गच्छतं युवं मध्वः सोमस्य पीतये॥१॥ इमं मे स्तोमं अश्विना इमं मे शृणुतं हवं मध्वः सोमस्य पीतये॥२॥ अयं वां कृष्णः अश्विना हवते वाजिनीऽवसू॰ मध्वः सोमस्य पीतये॥३॥ शृणुतं जरितुः हवं कृष्णस्य स्तुवतः नरा मध्वः सोमस्य पीतये॥४॥ छर्दिः यंतं अदाभ्यं विप्राय स्तुवते नरा मध्वः सोमस्य पीतये॥५॥७॥ गच्छतं दाशुषः गृहं इत्था स्तुवतः अश्विना मध्वः सोमस्य पीतये॥६॥ युंजाथां रासभं रथे वीडुऽअंगे वृषण्ऽवसू॰ मध्वः सोमस्य पीतये॥७॥ त्रिऽवंधुरेण त्रिऽवृता रथेन आ यातं अश्विना मध्वः सोमस्य पीतये॥८॥ नु



Digitized by Google

मे गिरो नासत्याश्विना प्रावतं युवं। मध्वः सोमस्य पीतये ॥९॥८॥

॥ ८६ ॥ १-५ कृष्णो विश्वको वा कार्ष्णिः ॥ अश्विनौ ॥ जगती ॥

॥८६॥ उभा हि दस्रा भिषजा मयोभुवोभा दक्षस्य वचसो बभूवथुः। ता वां विश्वको हवते तनूकृथे मा नो वि यौष्टं सख्या मुमोचतं॥१॥ कथा नूनं वां विमना उप स्तवद्युवं धियं ददथुर्वस्यइष्टये। ता वां विश्वको हवते तनूकृथे मा नो वि यौष्टं सख्या मुमोचतं॥२॥ युवं हि ष्मा पुरुभुजेममेधतुं विष्णाप्वे ददथुर्वस्यइष्टये। ता वां विश्वको हवते तनूकृथे मा नो वि यौष्टं सख्या मुमोचतं॥३॥ उत त्यं वीरं धनसामृजीषिणं दूरे चित्संतमवसे हवामहे। यस्य स्वादिष्ठा सुमतिः पितुर्यथा मा नो वि यौष्टं सख्या मुमोचतं॥४॥ ऋतेन देवः सविता शमायत ऋतस्य शृंगमुर्विया वि पप्रथे। ऋतं सासाह महि चित्पृतन्यतो मा नो वि यौष्टं सख्या मुमोचतं॥५॥९॥

॥ ८७ ॥ १-६ कृष्णो द्युम्नीको वा वासिष्ठः प्रियमेधो वा ॥ अश्विनौ ॥ प्रागाथं ॥

॥८७॥ द्युम्नी वां स्तोमो अश्विना क्रिविर्न सेक आ गतं। मध्वः सुतस्य स दिवि प्रियो नरा पातं गौराविवेरिणे॥१॥ पिबतं घर्मं मधुमंतमश्विना बर्हिः सीदतं नरा। ता मंदसाना मनुषो दुरोण आ नि पातं वेदसा वयः॥२॥ आ वां विश्वाभिरूतिभिः प्रियमेधा अहूषत। ता वर्तिर्यातमुप वृक्तबर्हिषो जुष्टं यज्ञं दिविष्टिषु॥३॥ पिबतं सोमं मधुमंतमश्विना बर्हिः सीदतं सुमत्। ता वावृधाना उप सुष्टुतिं दिवो गंतं गौराविवेरिणं॥४॥ आ नूनं यातमश्विनाश्वेभिः प्रुषितप्सुभिः। दस्रा हिरण्यवर्तनी शुभस्पती पातं सोम-



Digitized by Google

मे गिरः नासत्या अश्विना प्र अवतं युवं मध्वः सोमस्य पीतये ॥९॥८॥

---

॥८६॥ उभा हि दस्रा भिषजा मयःऽभुवा उभा दक्षस्य वचसः बभूवथुः ता वां विश्वकः हवते तनूऽकृथे मा नः वि यौष्टं सख्या मुमोचतं ॥१॥ कथा नूनं वां विऽमनाः उप स्तवत् युवं धियं ददथुः वस्यःऽइष्टये ता वां विश्वकः हवते तनूऽकृथे मा नः वि यौष्टं सख्या मुमोचतं ॥२॥ युवं हि स्म पुरुऽभुजा इमं एधतुं विष्णाप्वे ददथुः वस्यःऽइष्टये ता वां विश्वकः हवते तनूऽकृथे मा नः वि यौष्टं सख्या मुमोचतं ॥३॥ उत त्यं वीरं धनऽसां ऋजीषिणं दूरे चित् संतं अवसे हवामहे यस्य स्वादिष्ठा सुऽमतिः पितुः यथा मा नः वि यौष्टं सख्या मुमोचतं ॥४॥ ऋतेन देवः सविता शंऽआयते ऋतस्य शृंगं उर्विया वि पप्रथे ऋतं ससाह महि चित् पृतन्यतः मा नः वि यौष्टं सख्या मुमोचतं ॥५॥९॥

---

॥८७॥ द्युम्नी वां स्तोमः अश्विना क्रिविः न सेके आ गतं मध्वः सुतस्य सः दिवि प्रियः नरा पातं गौरौऽइव इरिणे ॥१॥ पिबतं घर्मं मधुऽमंतं अश्विना आ बर्हिः सीदतं नरा ता मंदसाना मनुषः दुरोणे आ नि पातं वेदसा वयः ॥२॥ आ वां विश्वाभिः ऊतिऽभिः प्रियऽमेधाः अहूषत ता वर्तिः यातं उप वृक्तऽबर्हिषः जुष्टं यज्ञं दिविष्टिषु ॥३॥ पिबतं सोमं मधुऽमंतं अश्विना आ बर्हिः सीदतं सुऽमत् ता ववृधाना उप सुऽस्तुतिं दिवः गंतं गौरौऽइव इरिणं ॥४॥ आ नूनं यातं अश्विना अश्वेभिः प्रुषितप्सुऽभिः दस्रा हिरण्यऽवर्तनी॰ शुभः पती॰ पातं सोमं



Digitized by Google

ऋतावृधा ॥५॥ वयं हि वां हवामहे विपन्यवो विप्रासो वाजसा-
तये । ता वल्गू दस्रा पुरुदंससा धियाश्विना श्रुष्ट्या गतं ॥६॥१०॥

---

॥ ८८ ॥ १–६ नोधाः ॥ इंद्रः ॥ प्रागाथं ॥

॥८८॥ तं वो दस्ममृतीषहं वसोर्मंदानमंधसः । अभि वत्सं न
स्वसरेषु धेनव इंद्रं गीर्भिर्नवामहे ॥१॥ द्युक्षं सुदानुं तविषीभि-
रावृतं गिरिं न पुरुभोजसं । क्षुमंतं वाजं शतिनं सहस्रिणं मक्षू
गोमंतमीमहे ॥२॥ न त्वा बृहंतो अद्रयो वरंत इंद्र वीळवः ।
यद्दित्ससि स्तुवते मावते वसु नकिष्टदा मिनाति ते ॥३॥ योद्धा-
सि क्रत्वा शवसोत दंसना विश्वा जाताभि मज्मना । आ त्वाय-
मर्क ऊतये ववर्तति यं गोतमा अजीजनन् ॥४॥ प्र हि रिरिक्ष
ओजसा दिवो अंतेभ्यस्परि । न त्वा विव्याच रज इंद्र पार्थिवमनु
स्वधां ववक्षिथ ॥५॥ नकिः परिष्टिर्मघवन्मघस्य ते यद्दाशुषे
दशस्यसि । अस्माकं बोध्युचथस्य चोदिता मंहिष्ठो वाजसा-
तये ॥६॥११॥

---

॥ ८९ ॥ १–७ नृमेधपुरुमेधौ ॥ इंद्रः ॥ १–४ प्रागाथं । ५.६ अनुष्टुप् । ७ बृहती ॥

॥८९॥ बृहदिंद्राय गायत मरुतो वृत्रहंतमं । येन ज्योति-
रजनयन्नृतावृधो देवं देवाय जागृवि ॥१॥ अपाधमदभि-
शस्तीरशस्तिहाथेंद्रो द्युम्न्याभवत् । देवास्त इंद्र सख्याय ये-
मिरे बृहद्भानो मरुद्गण ॥२॥ प्र व इंद्राय बृहते मरुतो
ब्रह्मार्चत । वृत्रं हनति वृत्रहा शतक्रतुर्वज्रेण शतपर्व-
णा ॥३॥ अभि प्र भर धृषता धृषन्मनः श्रवश्चित्ते असद्बृ-
हत् । अर्षंत्वापो जवसा वि मातरो हनो वृत्रं जया स्वः
॥४॥ यज्जायथा अपूर्व्य मघवन्वृत्रहत्याय । तत्पृथिवीम-



Digitized by Google

ऋत्ऽवृधा ॥ ५ ॥ वयं हि वां हवामहे विपन्यवः विप्रासः वाज॑ऽसातये ता वल्गू दस्रा पुरुऽदंससा धिया अश्विना श्रुष्टी आ गतं ॥ ६ ॥ १० ॥

॥ ८८ ॥ तं वः दस्मं ऋतिऽसहं वसोः मंदानं अंधसः अभि वत्सं न स्वसरेषु धेनवः इंद्रं गीःऽभिः नवामहे ॥ १ ॥ द्युक्षं सुऽदानुं तविषीभिः आऽवृतं गिरिं न पुरुऽभोजसं क्षुऽमंतं वाजं शतिनं सहस्रिणं मक्षु गोऽमंतं ईमहे ॥ २ ॥ न त्वा बृहंतः अद्रयः वरंते इंद्र वीळवः यत् दित्ससि स्तुवते माऽवते वसु नकिः तत् आ मिनाति ते ॥ ३ ॥ योद्धा असि क्रत्वा शवसा उत दंसना विश्वा जाता अभि मज्मना आ त्वा अयं अर्कः ऊतये ववर्तति यं गोतमाः अजीजनन् ॥ ४ ॥ प्र हि रिरिक्षे ओजसा दिवः अंतेभ्यः परि न त्वा विव्याच रजः इंद्र पार्थिवं अनु स्वधां ववक्षिथ ॥ ५ ॥ नकिः परिष्टिः मघऽवन् मघस्य ते यत् दाशुषे दशस्यसि अस्माकं बोधि उचथस्य चोदिता मंहिष्ठः वाजऽसातये ॥ ६ ॥ ११ ॥

॥ ८९ ॥ बृहत् इंद्राय गायत मरुतः वृत्रहंऽतमं येन ज्योतिः अजनयन् ऋतऽवृधः देवं देवाय जागृवि ॥ १ ॥ अप अधमत् अभिऽशस्तीः अशस्तिऽहा अथ इंद्रः द्युम्नी आ अभवत् देवाः ते इंद्र सख्याय येमिरे बृहत्ऽभानो॰ मरुत्ऽगण ॥ २ ॥ प्र वः इंद्राय बृहते मरुतः ब्रह्म अर्चत वृत्रं हनति वृत्रऽहा शतऽक्रतुः वज्रेण शतऽपर्वणा ॥ ३ ॥ अभि प्र भर धृषता धृषत्ऽमनः श्रवः चित् ते असत् बृहत् अर्षंतु आपः जवसा वि मातरः हनः वृत्रं जय स्वः॰ ॥ ४ ॥ यत् जायथाः अपूर्व्य मघऽवन् वृत्रऽहत्याय तत् पृथिवीं



Digitized by Google

प्रथयस्तदस्तभ्ना उत द्यां ॥५॥ तते यज्ञो अंजायत तदर्क उत हस्कृतिः । तद्विश्वमभिभूरसि यज्जातं यच्च जंत्वं ॥६॥ आमासु पक्कमैरय आ सूर्यं रोहयो दिवि । घर्मं न सामन्तपता सुवृक्तिभिर्जुष्टं गिर्वणसे बृहत् ॥७॥१२॥

---

॥९०॥ १–६ नृमेधपुरुमेधौ ॥ इंद्रः ॥ प्रागाथं ॥

॥९०॥ आ नो विश्वासु हव्य इंद्रः समत्सु भूषतु । उप ब्रह्माणि सवनानि वृत्रहा परमज्या ऋचीषमः ॥१॥ त्वं दाता प्रथमो राधसामस्यसि सत्य ईशानकृत् । तुविद्युम्नस्य युज्या वृणीमहे पुत्रस्य शवसो महः ॥२॥ ब्रह्मा त इंद्र गिर्वणः क्रियंते अनतिद्भुता । इमा जुषस्व हर्यश्व योजनेंद्र या ते अमन्महि ॥३॥ त्वं हि सत्यो मघवन्नानतो वृत्रा भूरि न्यृंजसे । स त्वं शविष्ठ वज्रहस्त दाशुषेऽर्वाचं रयिमा कृधि ॥४॥ त्वमिंद्र यशा अस्यृजीषी शवसस्पते । त्वं वृत्राणि हंस्यप्रतीन्येक इदनुत्ता चर्षणीधृता ॥५॥ तमु त्वा नूनमसुर प्रचेतसं राधो भागमिवेमहे । महीव कृत्तिः शरणा त इंद्र प्र ते सुम्ना नो अश्नवन् ॥६॥१३॥

---

॥९१॥ १–७ अपालात्रेयी ॥ इंद्रः ॥ १. २ पंक्तिः । ३–७ अनुष्टुप् ॥

॥९१॥ कन्या३ वारवायती सोममपि स्रुताविदत् । अस्तं भरंत्यब्रवीदिंद्राय सुनवै त्वा शक्राय सुनवै त्वा ॥१॥ असौ य एषि वीरको गृहंगृहं विचाकशत् । इमं जंभसुतं पिब धानावंतं करंभिणमपूपवंतमुक्थिनं ॥२॥ आ चन त्वा चिकित्सामोऽधि चन त्वा नेमसि । शनैरिव शनकैरिवेंद्रायेंदो परि स्रव ॥३॥ कुविच्छकत्कुवित्करत्कुविन्नो वस्यसस्करत् । कुवित्पतिद्विषो यतीरिंद्रेण संगमामहै ॥४॥ इमानि त्रीणि



Digitized by Google

अप्रथयः तत् अस्तभाः उत द्यां ॥५॥ तत् ते यज्ञः अजायत तत् अर्कः उत हस्कृतिः तत् विश्वं अभिऽभूः असि यत् जातं यत् च जंत्वं ॥६॥ आमासु पक्वं ऐरयः आ सूर्यं रोहयः दिवि घर्मं न सामन् तपत सुवृक्तिऽभिः जुष्टं गिर्वणसे बृहत् ॥७॥१२॥

॥९०॥ आ नः विश्वासु हव्यः इंद्रः समत्ऽसु भूषतु उप ब्रह्माणि सवनानि वृत्रऽहा परमऽज्याः ऋचीषमः ॥१॥ त्वं दाता प्रथमः राधसां असि असि सत्यः ईशानऽकृत् तुविऽद्युम्नस्य युज्या आ वृणीमहे पुत्रस्य शवसः महः ॥२॥ ब्रह्म ते इंद्र गिर्वणः क्रियंते अनंतिह्नुता इमा जुषस्व हरिऽअश्व योजना इंद्र या ते अमन्महि ॥३॥ त्वं हि सत्यः मघऽवन् अनानतः वृत्रा भूरि निऽऋंजसे सः त्वं शविष्ठ वज्रऽहस्त दाशुषे अर्वांचं रयिं आ कृधि ॥४॥ त्वं इंद्र यशाः असि ऋजीषी शवसः पते त्वं वृत्राणि हंसि अप्रतीनि एकः इत् अनुंत्ता चर्षणिऽधृता ॥५॥ तं ऊं त्वा नूनं असुर प्रऽचेतसं राधः भागंऽइव ईमहे महीऽइव कृत्तिः शरणा ते इंद्र प्र ते सुम्ना नः अश्नवन् ॥६॥१३॥

॥९१॥ कन्या वाः अवऽयती सोमं अपि स्रुता अविदत् अस्तं भरंती अब्रवीत् इंद्राय सुनवै त्वा शक्राय सुनवै त्वा ॥१॥ असौ यः एषि वीरकः गृहंऽगृहं विऽचाकशत् इमं जंभऽसुतं पिब धानाऽवंतं करंभिणं अपूपऽवंतं उक्थिनं ॥२॥ आ चन त्वा चिकित्सामः अधि चन त्वा न इमसि शनैःऽइव शनकैःऽइव इंद्राय इंदो परि स्रव ॥३॥ कुवित् शकत् कुवित् करत् कुवित् नः वस्यसः करत् कुवित् पतिऽद्विषः यतीः इंद्रेण संऽगमामहै ॥४॥ इमानि त्रीणि

विष्टपा तानींद्र वि रोहय। शिरस्ततस्योर्वरामादिदं म उपोदरे ॥५॥ असौ च या न उर्वरादिमां तन्वं१ मम। अथो ततस्य यच्छिरः सर्वा ता रोमशा कृधि॥६॥ खे रथस्य खेऽनसः खे युगस्य शतक्रतो। अपालामिंद्र त्रिष्पूत्व्यकृणोः सूर्यत्वचं ॥७॥१४॥

---

॥ ९२ ॥ १–३३ श्रुतकक्षः सुकक्षो वा ॥ इंद्रः ॥ १ अनुष्टुप्। २–३३ गायत्री ॥

॥९२॥ पांतमा वो अंधस इंद्रमभि प्र गायत। विश्वासाहं शतक्रतुं मंहिष्ठं चर्षणीनां ॥१॥ पुरुहूतं पुरुष्टुतं गाथान्यं१ सनश्रुतं। इंद्र इति ब्रवीतन॥२॥ इंद्र इन्नो महानां दाता वाजानां नृतुः। महाँ अभिज्ञ्वा यमत् ॥३॥ अपादु शिप्र्यंधसः सुदक्षस्य प्रहोषिणः। इंदोरिंद्रो यवाशिरः ॥४॥ तम्वभि प्रार्चतेंद्रं सोमस्य पीतये। तदिद्ध्यस्य वर्धनं ॥५॥१५॥ अस्य पीत्वा मदानां देवो देवस्यौजसा। विश्वाभि भुवना भुवत् ॥६॥ त्यमु वः सत्रासाहं विश्वासु गीर्ष्वायतं। आ च्यावयस्यूतये॥७॥ युध्मं संतमनर्वाणं सोमपामनपच्युतं। नरमवार्यक्रतुं॥८॥ शिक्षा ण इंद्र राय आ पुरु विद्वाँ ऋचीषम। अवा नः पार्ये धने॥९॥ अतश्चिदिंद्र ण उपा याहि शतवाजया। इषा सहस्रवाजया॥१०॥१६॥ अयाम धीवतो धियोऽर्वद्भिः शक्र गोदरे। जयेम पृत्सु वज्रिवः॥११॥ वयमु त्वा शतक्रतो गावो न यवसेष्वा। उक्थेषु रणयामसि ॥१२॥ विश्वा हि मर्त्यत्वनानुकामा शतक्रतो। अगन्म वज्रिन्नाशसः ॥१३॥ त्वे सु पुत्र शवसोऽवृत्रन्कामकातयः। न त्वामिंद्राति रिच्यते॥१४॥ स नो वृषन्त्सनिष्ठया सं घोरया द्रवित्न्वा। धियाविड्ढि पुरंध्या ॥१५॥१७॥ यस्ते नूनं शतक्रतविंद्र द्युम्नितमो मदः। तेन नूनं मदे मदेः॥१६॥ यस्ते चित्रश्र-



Digitized by Google

विऽरूपा तानि इंद्र वि रोहय शिरः ततस्य उर्वरां आत् इदं मे उप उदरे ॥५॥ असौ च या नः उर्वरा आत् इमां तन्वं मम अथो इति ततस्य यत् शिरः सर्वा ता रोमशा कृधि ॥६॥ खे रथस्य खे अनसः खे युगस्य शतऽक्रतो इति अपालां इंद्र त्रिः पूत्वी अकृणोः सूर्यऽत्वचं ॥७॥१४॥

---

॥ ९२ ॥ पांतं आ वः अंधसः इंद्रं अभि प्र गायत विश्वऽसहं शतऽक्रतुं मंहिष्ठं चर्षणीनां ॥१॥ पुरुऽहूतं पुरुऽस्तुतं गाथान्यं सनऽश्रुतं इंद्रः इति ब्रवीतन ॥२॥ इंद्रः इत् नः महानां दाता वाजानां नृतुः महान् अभिऽज्ञु आ यमत् ॥३॥ अपात् ऊं इति शिप्री अंधसः सुऽदक्षस्य प्रऽहोषिणः इंदोः इंद्रः यवऽआशिरः ॥४॥ तं ऊं इति अभि प्र अर्चत इंद्रं सोमस्य पीतये तत् इत् हि अस्य वर्धनं ॥५॥१५॥ अस्य पीत्वा मदानां देवः देवस्य ओजसा विश्वा अभि भुवना भुवत् ॥६॥ त्यं ऊं इति वः सत्राऽसहं विश्वासु गीर्षु आऽयतं आ च्यवयसि ऊतये ॥७॥ युध्मं संतं अनर्वाणं सोमऽपां अनपऽच्युतं नरं अवार्यऽक्रतुं ॥८॥ शिक्ष नः इंद्र रायः आ पुरु विद्वान् ऋचीषम अव नः पार्ये धने ॥९॥ अतः चित् इंद्र नः उप आ याहि शतऽवाजया इषा सहस्रऽवाजया ॥१०॥१६॥ अयाम धीऽवतः धियः अर्वत्ऽभिः शक्र गोऽदरे जयेम पृत्ऽसु वज्रिऽवः ॥११॥ वयं ऊं इति त्वा शतऽक्रतो इति गावः न यवसेषु आ उक्थेषु रणयामसि ॥१२॥ विश्वा हि मर्त्यऽत्वना अनुऽकामा शतऽक्रतो इति अगन्म वज्रिन् आऽशसः ॥१३॥ त्वे इति सु पुत्र शवसः अवृत्रन् कामऽकातयः न त्वां इंद्र अति रिच्यते ॥१४॥ सः नः वृषन् सनिष्ठया सं घोरया द्रविन्त्वा धिया अविड्ढि पुरंऽध्या ॥१५॥१७॥ यः ते नूनं शतऽक्रतो इति इंद्र द्युम्निऽतमः मदः तेन नूनं मदे मदेः ॥१६॥ यः ते चित्रश्र-



Digitized by Google

वस्तमो य इंद्र वृत्रहंतमः। य ओजोदातमो मदः॥१७॥ विद्मा हि यस्ते अद्रिवस्त्वादत्तः सत्य सोमपाः। विश्वासु दस्म कृष्टिषु॥१८॥ इंद्राय मद्वने सुतं परि ष्टोभंतु नो गिरः। अर्कमर्चंतु कारवः॥१९॥ यस्मिन्विश्वा अधि श्रियो रणंति सप्त संसदः। इंद्रं सुते हवामहे ॥२०॥१८॥ त्रिकद्रुकेषु चेतनं देवासो यज्ञमत्नत। तमिद्वर्धंतु नो गिरः॥२१॥ आ त्वा विशंत्विंदवः समुद्रमिव सिंधवः। न त्वामिंद्राति रिच्यते॥२२॥ विव्यक्थ महिना वृषन्भक्षं सोमस्य जागृवे। य इंद्र जठरेषु ते ॥२३॥ अरं त इंद्र कुक्षये सोमो भवतु वृत्रहन्। अरं धामभ्य इंदवः॥२४॥ अरमश्वाय गायति श्रुतकक्षो अरं गवे। अरमिंद्रस्य धाम्ने॥२५॥ अरं हि ष्मा सुतेषु णः सोमेष्विंद्र भूषसि। अरं ते शक्र दावने ॥२६॥१९॥ पराकात्ताच्चिदद्रिवस्त्वां नक्षंत नो गिरः। अरं गमाम ते वयं॥२७॥ एवा ह्यसि वीरयुरेवा शूर उत स्थिरः। एवा ते राध्यं मनः॥२८॥ एवा रातिस्तुवीमघ विश्वेभिर्धायि धातृभिः। अधा चिदिंद्र मे सचा॥२९॥ मो षु ब्रह्मेव तंद्रयुर्भुवो वाजानां पते। मत्स्वा सुतस्य गोमतः॥३०॥ मा न इंद्राभ्या३ दिशः सूरो अक्तुष्वा यमन्। त्वा युजा वनेम तत्॥३१॥ त्वयेदिंद्र युजा वयं प्रति ब्रुवीमहि स्पृधः। त्वमस्माकं तव स्मसि ॥३२॥ त्वामिद्धि त्वायवोऽनुनोनुवतश्चरान्। सखाय इंद्र कारवः ॥३३॥२०॥

---

॥९३॥ १–३४ सुकक्षः ॥ १–३३ इंद्रः । ३४ इंद्र ऋभवश्च ॥ गायत्री ॥

॥९३॥ उद्घेदभि श्रुतामघं वृषभं नर्यापसं। अस्तारमेषि सूर्य ॥१॥ नव यो नवतिं पुरो बिभेद बाह्वोजसा। अहिं च वृत्रहावधीत् ॥२॥ स न इंद्रः शिवः सखाश्वावद्गोमद्यवमत्। उरुधारेव दोहते ॥३॥ यदद्य कच्च वृत्रहन्नु-



Digitized by Google

वः॑ऽतमः यः इं॒द्र वृ॒त्र॒ह॒न्ऽतमः यः ओ॒जः॑ऽदातमः मदः॑ ॥१७॥ वि॒द्म हि यः ते॒ अ॒द्रि॒ऽव॒ः त्वाऽदत्तः सत्य सो॒म॒ऽपा॒ः विश्वासु द॒स्म कृष्टिषु ॥१८॥ इंद्राय मद्वने सु॒तं परि॑ स्तो॒भं॒तु न॒ः गिरः॑ अ॒र्कं अ॒र्चं॒तु का॒रवः॑ ॥१९॥ यस्मिन् विश्वाः अधि श्रियः रणंति स॒प्त सं॒ऽसदः॑ इंद्रं सु॒ते ह॒वा॒म॒हे॒ ॥२०॥१८॥ त्रि॒ऽकद्रुकेषु चेतनं दे॒वासः यज्ञं अ॒त्न॒त तं इत् व॒र्धं॒तु न॒ः गिरः॑ ॥२१॥ आ त्वा॒ वि॒शं॒तु इंदवः स॒मु॒द्रंऽइ॑व सिंधवः न त्वां इं॒द्र अति॑ रि॒च्य॒ते ॥२२॥ वि॒व्यक्थ म॒हि॒ना वृ॒ष॒न् भ॒क्षं सोमस्य जा॒गृ॒वे॒ यः इं॒द्र ज॒ठरेषु ते॒ ॥२३॥ अरं ते॒ इं॒द्र कुक्षये सोमः भ॒व॒तु वृ॒त्र॒ऽह॒न् अरं धामऽभ्यः इंदवः ॥२४॥ अरं अश्वाय गा॒य॒ति॒ श्रु॒त॒ऽकक्षः अरं गवे अरं इंद्रस्य धाम्ने ॥२५॥ अरं हि स्म सु॒तेषु न॒ः सोमेषु इं॒द्र भू॒षसि अरं ते॒ श॒क्र दा॒वने ॥२६॥१९॥ प॒रा॒कात्तात् चित् अ॒द्रि॒ऽव॒ः त्वां न॒क्षं॒त न॒ः गिरः॑ अरं ग॒मा॒म॒ ते॒ व॒यं ॥२७॥ ए॒व हि असि वी॒र॒ऽयुः ए॒व शूरः उ॒त स्थि॒रः ए॒व ते॒ राध्यं मनः॑ ॥२८॥ ए॒व रा॒तिः तु॒वि॒ऽम॒घ विश्वेभिः धा॒यि॒ धा॒तृ॒ऽभिः अध चि॒त् इं॒द्र मे॒ सचा॑ ॥२९॥ मो सु ब्र॒ह्माऽइ॑व तं॒द्रयुः भुवः॑ वा॒जा॒नां॒ प॒ते॒ मत्स्व सु॒तस्य गोऽमतः ॥३०॥ मा न॒ः इं॒द्र॒ अ॒भि आ॒ऽदिशः सू॒रः अ॒क्रुषु आ यमन् त्वा॒ यु॒जा व॒ने॒म॒ तत् ॥३१॥ त्वया॑ इत् इं॒द्र यु॒जा व॒यं प्रति॑ ब्रु॒वी॒म॒हि॒ स्पृधः॑ त्वं अस्माकं तव स्मसि॒ ॥३२॥ त्वां इत् हि त्वा॒ऽयवः॑ अ॒नु॒ऽनोनुवतः च॒रान् स॒खायः इं॒द्र का॒रवः॑ ॥३३॥२०॥

---

॥९३॥ उत् घ इत् अ॒भि श्रु॒तऽम॑घं वृ॒ष॒भं नर्यऽअपसं अस्तारं ए॒षि॒ सू॒र्य॒ ॥१॥ नव यः न॒व॒तिं पुरः॑ बि॒भेद॑ बा॒हु॒ऽओजसा अहिं च॒ वृ॒त्र॒ऽहा अवधीत् ॥२॥ सः न॒ः इंद्रः शि॒वः सखा अश्वऽवत् गोऽमत् यवऽमत् उ॒रुधा॑राऽइ॑व दो॒ह॒ते॒ ॥३॥ यत् अ॒द्य कत् च॒ वृ॒त्र॒ऽह॒न्



Digitized by Google

दृगा अभि सूर्य। सर्वं तदिंद्र ते वशे ॥४॥ यद्वा प्रवृद्ध सत्पते न मरा इति मन्यसे। उतो तत्सत्यमित्तव ॥५॥२१॥ ये सोमासः परावति ये अर्वावति सुन्विरे। सर्वांस्ताँ इंद्र गच्छसि ॥६॥ तमिंद्रं वाजयामसि महे वृत्राय हंतवे। स वृषा वृषभो भुवत् ॥७॥ इंद्रः स दामने कृत ओजिष्ठः स मदे हितः। द्युम्नी श्लोकी स सोम्यः ॥८॥ गिरा वज्रो न संभृतः सबलो अनपच्युतः। ववक्ष ऋष्वो अस्तृतः ॥९॥ दुर्गे चिन्नः सुगं कृधि गृणान इंद्र गिर्वणः। त्वं च मघवन्वशः ॥१०॥२२॥ यस्य ते नू चिदादिशं न मिनंति स्वराज्यं। न देवो नाध्रिगुर्जनः ॥११॥ अधा ते अप्रतिष्कुतं देवी शुष्मं सपर्यतः। उभे सुशिप्र रोदसी ॥१२॥ त्वमेतदधारयः कृष्णासु रोहिणीषु च। परुष्णीषु रुशत्पयः ॥१३॥ वि यदहेरध त्विषो विश्वे देवासो अक्रमुः। विदन्मृगस्य ताँ अमः ॥१४॥ आदु मे निवरो भुवद्वृत्रहादिष्ट पौंस्यं। अजातशत्रुरस्तृतः ॥१५॥२३॥ श्रुतं वो वृत्रहंतमं प्र शर्धं चर्षणीनां। आ शुषे राधसे महे ॥१६॥ अया धिया च गव्यया पुरुणामन्पुरुष्टुत। यत्सोमेसोम आभवः ॥१७॥ बोधिन्मना इदस्तु नो वृत्रहा भूर्यासुतिः। शृणोतु शक्र आशिषं ॥१८॥ कया त्वं न ऊत्याभि प्र मंदसे वृषन्। कया स्तोतृभ्य आ भर ॥१९॥ कस्य वृषा सुते सचा नियुत्वान्वृषभो रणत्। वृत्रहा सोमपीतये ॥२०॥२४॥ अभी षु णस्त्वं रयिं मंदसानः सहस्रिणं। प्रयंता बोधि दाशुषे ॥२१॥ पत्नीवंतः सुता इम उशंतो यंति वीतये। अपां जग्मिर्निचुंपुणः ॥२२॥ इष्टा होत्रा असृक्षतेंद्रं वृधासो अध्वरे। अच्छावभृथमोजसा ॥२३॥ इह त्या सधमाद्या हरी हिरण्यकेश्या। वोळ्हामभि प्रयो



Digitized by Google

उत्ऽअगाः अभि सूर्य सर्वं तत् इंद्र ते वशे ॥४॥ यत् वा प्रऽवृद्ध सत्ऽपते न मरै इति मन्यसे उतो इति तत् सत्यं इत् तव ॥५॥२१॥ ये सोमासः पराऽवति ये अर्वाऽवति सुन्विरे सर्वान् तान् इंद्र गच्छसि ॥६॥ तं इंद्रं वाजयामसि महे वृत्राय हंतवे सः वृषा वृषभः भुवत् ॥७॥ इंद्रः सः दामने कृतः ओजिष्ठः सः मदे हितः द्युम्नी श्लोकी सः सोम्यः ॥८॥ गिरा वज्रः न संऽभृतः सऽबलः अनपऽच्युतः ववक्षे ऋष्वः अस्तृतः ॥९॥ दुःऽगे चित् नः सुऽगं कृधि गृणानः इंद्र गिर्वणः त्वं च मघऽवन् वशः ॥१०॥२२॥ यस्य ते नु चित् आऽदिशं न मिनंति स्वऽराज्यं न देवः न अधिऽगुः जनः ॥११॥ अध ते अप्रतिऽस्कुतं देवी इति शुष्मं सपर्यतः उभे इति सुऽशिप्र रोदसी इति ॥१२॥ त्वं एतत् अधारयः कृष्णासु रोहिणीषु च परुष्णीषु रुशत् पयः ॥१३॥ वि यत् अहेः अध त्विषः विश्वे देवासः अक्रमुः विदत् मृगस्य तान् अमः ॥१४॥ आत् ऊं इति मे निऽवरः भुवत् वृत्रऽहा अदिष्ट पौंस्यं अजातऽशत्रुः अस्तृतः ॥१५॥२३॥ श्रुतं वः वृत्रहन्ऽतमं प्र शर्धं चर्षणीनां आ शुषे राधसे महे ॥१६॥ अया धिया च गव्यऽया पुरुऽनामन् पुरुऽस्तुत यत् सोमेऽसोमे आ अभवः ॥१७॥ बोधित्ऽमनाः इत् अस्तु नः वृत्रऽहा भूरिऽआसुतिः शृणोतु शक्रः आऽशिषं ॥१८॥ कया त्वं नः ऊत्या अभि प्र मंदसे वृषन् कया स्तोतृऽभ्यः आ भर ॥१९॥ कस्य वृषा सुते सचा नियुत्वान् वृषभः रणत् वृत्रऽहा सोमऽपीतये ॥२०॥२४॥ अभि सु नः त्वं रयिं मंदसानः सहस्रिणं प्रऽयंता बोधि दाशुषे ॥२१॥ पत्नीऽवंतः सुताः इमे उशंतः यंति वीतये अपां जग्मिः निऽचुंपुणः ॥२२॥ इष्टाः होत्राः असृक्षत इंद्रं वृधासः अध्वरे अच्छ अवऽभृथं ओजसा ॥२३॥ इह त्या सधऽमाद्या हरी इति हिरण्यऽकेश्या वोळ्हां अभि प्रयः



Digitized by Google

हितं॥२४॥ तुभ्यं सोमाः सुता इमे स्तीर्णं बर्हिर्विभावसो। स्तोतृभ्य इंद्रमा वह॥२५॥२५॥ आ ते दक्षं वि रोचना दधद्रत्ना वि दाशुषे। स्तोतृभ्य इंद्रमर्चत॥२६॥ आ ते दधामींद्रियमुक्था विश्वा शतक्रतो। स्तोतृभ्य इंद्र मृळय॥२७॥ भद्रंभद्रं न आ भरेषमूर्जं शतक्रतो। यदिंद्र मृळयासि नः॥२८॥ स नो विश्वान्या भर सुवितानि शतक्रतो। यदिंद्र मृळयासि नः॥२९॥ त्वामिद्वृत्रहंतम सुतावंतो हवामहे। यदिंद्र मृळयासि नः॥३०॥२६॥ उप नो हरिभिः सुतं याहि मदानां पते। उप नो हरिभिः सुतं॥३१॥ द्विता यो वृत्रहंतमो विद इंद्रः शतक्रतुः। उप नो हरिभिः सुतं॥३२॥ त्वं हि वृत्रहन्नेषां पाता सोमानामसि। उप नो हरिभिः सुतं॥३३॥ इंद्र इषे ददातु न ऋभुक्षणमृभुं रयिं। वाजी ददातु वाजिनं॥३४॥२७॥९॥

---

॥ ९४ ॥ १–१२ बिंदुः पूतदक्षो वा ॥ मरुतः ॥ गायत्री ॥

॥९४॥ गौर्धयति मरुतां श्रवस्युर्माता मघोनां। युक्ता वह्नी रथानां॥१॥ यस्या देवा उपस्थे व्रता विश्वे धारयंते। सूर्यामासा दृशे कं॥२॥ तत्सु नो विश्वे अर्य आ सदा गृणंति कारवः। मरुतः सोमपीतये॥३॥ अस्ति सोमो अयं सुतः पिबंत्यस्य मरुतः। उत स्वराजो अश्विना॥४॥ पिबंति मित्रो अर्यमा तना पूतस्य वरुणः। त्रिषधस्थस्य जावतः॥५॥ उतो न्वस्य जोषमाँ इंद्रः सुतस्य गोमतः। प्रातर्होतेव मत्सति॥६॥२८॥ कदत्विषंत सूरयस्तिर आप इव स्रिधः। अर्षंति पूतदक्षसः॥७॥ कद्वो अद्य महानां देवानामवो वृणे। त्मना च दस्मवर्चसां॥८॥ आ ये विश्वा पार्थिवानि पप्रथन्रोचना दिवः। मरुतः सोमपीतये॥९॥ त्यान्नु पूतदक्षसो दिवो वो मरुतो हुवे। अस्य सोमस्य पी-



Digitized by Google

हितं ॥ २४ ॥ तुभ्यं सोमाः सुताः इमे स्तीर्णं बर्हिः विभाऽवसो इति विभाऽवसो स्तोतृऽभ्यः इंद्रं आ वह ॥ २५ ॥ २५ ॥ आ ते दक्षं वि रोचना दधत् रत्ना वि दाशुषे स्तोतृऽभ्यः इंद्रं अर्चत ॥ २६ ॥ आ ते दधामि इंद्रियं उक्था विश्वा शतऽक्रतो इति शतऽक्रतो स्तोतृऽभ्यः इंद्र मृळय ॥ २७ ॥ भद्रंऽभद्रं नः आ भर इषं ऊर्जं शतऽक्रतो इति शतऽक्रतो यत् इंद्र मृळयासि नः ॥ २८ ॥ सः नः विश्वानि आ भर सुवितानि शतऽक्रतो इति शतऽक्रतो यत् इंद्र मृळयासि नः ॥ २९ ॥ त्वां इत् वृत्रहन्ऽतम सुतऽवंतः हवामहे यत् इंद्र मृळयासि नः ॥ ३० ॥ २६ ॥ उप नः हरिऽभिः सुतं याहि मदानां पते उप नः हरिऽभिः सुतं ॥ ३१ ॥ द्विता यः वृत्रहन्ऽतमः विदे इंद्रः शतऽक्रतुः उप नः हरिऽभिः सुतं ॥ ३२ ॥ त्वं हि वृत्रऽहन् एषां पाता सोमानां असि उप नः हरिऽभिः सुतं ॥ ३३ ॥ इंद्रः इषे ददातु नः ऋभुक्षणं ऋभुं रयिं वाजी ददातु वाजिनं ॥ ३४ ॥ २७ ॥ ९ ॥

---

॥ ९४ ॥ गौः धयति मरुतां श्रवस्युः माता मघोनां युक्ता वह्निः रथानां ॥ १ ॥ यस्याः देवाः उपऽस्थे व्रता विश्वे धारयंते सूर्यामासा दृशे कं ॥ २ ॥ तत् सु नः विश्वे अर्यः आ सदा गृणंति कारवः मरुतः सोमऽपीतये ॥ ३ ॥ अस्ति सोमः अयं सुतः पिबंति अस्य मरुतः उत स्वऽराजः अश्विना ॥ ४ ॥ पिबंति मित्रः अर्यमा तना पूतस्य वरुणः त्रिऽसधस्थस्य जाऽवतः ॥ ५ ॥ उतो इति नु अस्य जोषं आ इंद्रः सुतस्य गोऽमतः प्रातः होताऽइव मत्सति ॥ ६ ॥ २८ ॥ कत् अत्विषंत सूरयः तिरः आपःऽइव स्रिधः अर्षंति पूतऽदक्षसः ॥ ७ ॥ कत् वः अद्य महानां देवानां अवः वृणे त्मना च दस्मऽवर्चसां ॥ ८ ॥ आ ये विश्वा पार्थिवानि पप्रथन् रोचना दिवः मरुतः सोमऽपीतये ॥ ९ ॥ त्यान् नु पूतऽदक्षसः दिवः वः मरुतः हुवे अस्य सोमस्य पी-



Digitized by Google

तये ॥१०॥ त्यान्नु ये वि रोदसी तस्तभुर्मरुतो हुवे। अस्य सोमस्य पीतये ॥११॥ त्यं नु मारुतं गणं गिरिष्ठां वृषणं हुवे। अस्य सोमस्य पीतये ॥१२॥२९॥

---

॥ ९५ ॥ १-७ तिरश्चीः ॥ इंद्रः ॥ अनुष्टुप् ॥

॥९५॥ आ त्वा गिरो रथीरिवास्थुः सुतेषु गिर्वणः। अभि त्वा समनूषतेंद्र वत्सं न मातरः ॥१॥ आ त्वा शुक्रा अचुच्यवुः सुतास इंद्र गिर्वणः। पिबा त्व१स्यांधस इंद्र विश्वासु ते हितं ॥२॥ पिबा सोमं मदाय कमिंद्र श्येनाभृतं सुतं। त्वं हि शश्वतीनां पती राजा विशामसि ॥३॥ श्रुधी हवं तिरश्च्या इंद्र यस्त्वा सपर्यति। सुवीर्यस्य गोमतो रायस्पूर्धि महाँ असि ॥४॥ इंद्र यस्ते नवीयसीं गिरं मंद्रामजीजनत्। चिकित्विन्मनसं धियं प्रत्नामृतस्य पिप्युषीं ॥५॥३०॥ तमु ष्टवाम यं गिर इंद्रमुक्थानि वावृधुः। पुरूण्यस्य पौंस्या सिषासंतो वनामहे ॥६॥ एतो न्विंद्रं स्तवाम शुद्धं शुद्धेन साम्ना। शुद्धैरुक्थैर्वावृध्वांसं शुद्ध आशीर्वान्ममत्तु ॥७॥ इंद्र शुद्धो न आ गहि शुद्धः शुद्धाभिरूतिभिः। शुद्धो रयिं नि धारय शुद्धो ममद्धि सोम्यः ॥८॥ इंद्र शुद्धो हि नो रयिं शुद्धो रत्नानि दाशुषे। शुद्धो वृत्राणि जिघ्नसे शुद्धो वाजं सिषाससि ॥९॥३१॥

---

॥ ९६ ॥ १-२१ तिरश्चीर्द्युतानो वा मारुतः ॥ १-१४¹.१६-२१ इंद्रः। १४² मरुतः। १५ इंद्राबृहस्पती ॥ १-३.५-२१ त्रिष्टुप्। ४ विराट् ॥

॥९६॥ अस्मा उषास आतिरंत याममिंद्राय नक्तमूर्म्याः सुवाचः। अस्मा आपो मातरः सप्त तस्थुर्नृभ्यस्तराय सिंधवः सुपाराः ॥१॥ अतिविद्धा विथुरेणा चिदस्त्रा त्रिः सप्त सानु संहिता गिरीणां। न तद्देवो न मर्त्यस्तुतुर्याद्यानि प्रवृद्धो वृषभश्चकार ॥२॥ इंद्रस्य वज्र आयसो निमिश्ल इंद्रस्य बाह्वो-



Digitized by Google

तये ॥ १० ॥ त्यान् नु ये वि रोदसी तस्तभुः मरुतः हुवे अस्य सोमस्य पीतये ॥ ११ ॥ त्यं नु मारुतं गणं गिरिऽस्थां वृषणं हुवे अस्य सोमस्य पीतये ॥ १२ ॥ २९ ॥

---

॥ ९५ ॥ आ त्वा गिरः रथीःऽइव अस्थुः सुतेषु गिर्वणः अभि त्वा सं अनूषत इंद्र वत्सं न मातरः ॥ १ ॥ आ त्वा शुक्राः अचुच्यवुः सुतासः इंद्र गिर्वणः पिब तु अस्य अंधसः इंद्र विश्वासु ते हितं ॥ २ ॥ पिब सोमं मदाय कं इंद्र श्येनऽआभृतं सुतं त्वं हि शश्वतीनां पतिः राजा विशां असि ॥ ३ ॥ श्रुधि हवं तिरश्च्याः इंद्र यः त्वा सपर्यति सुऽवीर्यस्य गोऽमतः रायः पूर्धि महान् असि ॥ ४ ॥ इंद्र यः ते नवीयसीं गिरं मंद्रां अजीजनत् चिकित्वित्ऽमनसं धियं प्रत्नां ऋतस्य पिप्युषीं ॥ ५ ॥ ३० ॥ तं ऊं स्तवाम यं गिरः इंद्रं उक्थानि ववृधुः पुरूणि अस्य पौंस्या सिसासंतः वनामहे ॥ ६ ॥ एतो नु इंद्रं स्तवाम शुद्धं शुद्धेन साम्ना शुद्धैः उक्थैः ववृध्वांसं शुद्धः आशीःऽवान् ममत्तु ॥ ७ ॥ इंद्र शुद्धः नः आ गहि शुद्धः शुद्धाभिः ऊतिऽभिः शुद्धः रयिं नि धारय शुद्धः ममद्धि सोम्यः ॥ ८ ॥ इंद्र शुद्धः हि नः रयिं शुद्धः रत्नानि दाशुषे शुद्धः वृत्राणि जिघ्नसे शुद्धः वाजं सिसाससि ॥ ९ ॥ ३१ ॥

---

॥ ९६ ॥ अस्मै उषसः आ अतिरंत यामं इंद्राय नक्तं ऊर्म्याः सुऽवाचः अस्मै आपः मातरः सप्त तस्थुः नृऽभ्यः तराय सिंधवः सुऽपाराः ॥ १ ॥ अतिऽविद्धा विथुरेण चित् अस्त्रा त्रिः सप्त सानु संऽहिता गिरीणां न तत् देवः न मर्त्यः तुतुर्यात् यानि प्रऽवृद्धः वृषभः चकार ॥ २ ॥ इंद्रस्य वज्रः आयसः निऽमिश्लः इंद्रस्य बाह्वोः



Digitized by Google

भूयिष्ठमोजः। शीर्षन्निंद्रस्य क्रतवो निरेक आसन्नेषंत श्रुत्या उपाके ॥३॥ मन्ये त्वा यज्ञियं यज्ञियानां मन्ये त्वा च्यवनमच्युतानां। मन्ये त्वा सत्वनामिंद्र केतुं मन्ये त्वा वृषभं चर्षणीनां ॥४॥ आ यद्वज्रं बाह्वोरिंद्र धत्से मदच्युतमहये हंतवा उ। प्र पर्वता अनवंत प्र गावः प्र ब्रह्माणो अभिनक्षंत इंद्रं ॥५॥३२॥ तमु ष्टवाम य इमा जजान विश्वा जातान्यवराण्यस्मात्। इंद्रेण मित्रं दिधिषेम गीर्भिरुपो नमोभिर्वृषभं विशेम ॥६॥ वृत्रस्य त्वा श्वसथादीषमाणा विश्वे देवा अजहुर्ये सखायः। मरुद्भिरिंद्र सख्यं ते अस्त्वथेमा विश्वाः पृतना जयासि ॥७॥ त्रिः षष्टिस्त्वा मरुतो वावृधाना उस्रा इव राशयो यज्ञियासः। उप त्वेमः कृधि नो भागधेयं शुष्मं त एना हविषा विधेम ॥८॥ तिग्ममायुधं मरुतामनीकं कस्त इंद्र प्रति वज्रं दधर्ष। अनायुधासो असुरा अदेवाश्चक्रेण ताँ अप वप ऋजीषिन् ॥९॥ मह उग्राय तवसे सुवृक्तिं प्रेरय शिवतमाय पश्वः। गिर्वाहसे गिर इंद्राय पूर्वीर्धेहि तन्वे कुविदंग वेदत् ॥१०॥३३॥ उक्थवाहसे विभ्वे मनीषां द्रुणा न पारमीरया नदीनां। नि स्पृश धिया तन्वि श्रुतस्य जुष्टतरस्य कुविदंग वेदत् ॥११॥ तद्विविड्ढि यत्त इंद्रो जुजोषत्स्तुहि सुष्टुतिं नमसा विवास। उप भूष जरितर्मा रुवण्यः श्रावया वाचं कुविदंग वेदत् ॥१२॥ अव द्रप्सो अंशुमतीमतिष्ठदियानः कृष्णो दशभिः सहस्रैः। आवत्तमिंद्रः शच्या धमंतमप स्नेहितीर्नृमणा अधत्त ॥१३॥ द्रप्समपश्यं विषुणे चरंतमुपह्वरे नद्यो अंशुमत्याः। नभो न कृष्णमवतस्थिवांसमिष्यामि वो वृषणो युध्यताजौ ॥१४॥ अध द्रप्सो अंशुमत्या उपस्थेऽधारयत्तन्वं तित्विषाणः। विशो



Digitized by Google

भूयिष्ठं ओजः शीर्षन् इंद्रस्य क्रतवः निरेके आसन् आ ईषंत श्रुत्यै उपाके॥३॥ मन्ये त्वा यज्ञियं यज्ञियानां मन्ये त्वा च्यवनं अच्युतानां मन्ये त्वा सत्वनां इंद्र केतुं मन्ये त्वा वृषभं चर्षणीनां॥४॥ आ यत् वज्रं बाह्वोः इंद्र धत्से मदऽच्युतं अहये हंतवै ऊं इति प्र पर्वताः अनवंत प्र गावः प्र ब्रह्माणः अभिऽनक्षंतः इंद्रं॥५॥३२॥ तं ऊं इति स्तवाम यः इमा जजान विश्वा जातानि अवराणि अस्मात् इंद्रेण मित्रं दिधिषेम गीःऽभिः उपो इति नमःऽभिः वृषभं विशेम॥६॥ वृत्रस्य त्वा श्वसथात् ईषमाणाः विश्वे देवाः अजहुः ये सखायः मरुत्ऽभिः इंद्र सख्यं ते अस्तु अथ इमाः विश्वाः पृतनाः जयासि॥७॥ त्रिः षष्टिः त्वा मरुतः ववृधानाः उस्राःऽइव राशयः यज्ञियासः उप त्वा आ इमः कृधि नः भागऽधेयं शुष्मं ते एना हविषा विधेम ॥८॥ तिग्मं आयुधं मरुतां अनीकं कः ते इंद्र प्रति वज्रं दधर्ष अनायुधासः असुराः अदेवाः चक्रेण तान् अप वप ऋजीषिन् ॥९॥ महे उग्राय तवसे सुऽवृक्तिं प्र ईरय शिवऽतमाय पश्वः गिर्वाहसे गिरः इंद्राय पूर्वीः धेहि तन्वे कुवित् अंग वेदत्॥१०॥३३॥ उक्थऽवाहसे विऽभ्वे मनीषां द्रुणा न पारं ईरय नदीनां नि स्पृश धिया तन्वि श्रुतस्य जुष्टऽतरस्य कुवित् अंग वेदत्॥११॥ तत् विविड्डि यत् ते इंद्रः जुजोषत् स्तुहि सुऽस्तुतिं नमसा आ विवास उप भूष जरितः मा रुवण्यः श्रवय वाचं कुवित् अंग वेदत्॥१२॥ अव द्रप्सः अंशुऽमतीं अतिष्ठत् इयानः कृष्णः दशऽभिः सहस्रैः आवत् तं इंद्रः शच्या धमंतं अप स्नेहितीः नृऽमनाः अधत्त॥१३॥ द्रप्सं अपश्यं विषुणे चरंतं उपऽह्वरे नद्यः अंशुऽमत्याः नभः न कृष्णं अवतस्थिऽवांसं इष्यामि वः वृषणः युध्यत आजौ॥१४॥ अध द्रप्सः अंशुऽमत्याः उपऽस्थे अधारयत् तन्वं तित्विषाणः विशः

अदेवीरभ्याचरंतीर्बृहस्पतिना युजेंद्रः ससाहे ॥१५॥३४॥ त्वं
ह त्यत्सप्तभ्यो जायमानोऽशत्रुभ्यो अभवः शत्रुरिंद्र। गूळ्हे द्या-
वापृथिवी अन्वविंदो विभुमद्भ्यो भुवनेभ्यो रणं धाः॥१६॥ त्वं ह
त्यदप्रतिमानमोजो वज्रेण वज्रिन्धृषितो जघंथ। त्वं शुष्णस्या-
वातिरो वधत्रैस्त्वं गा इंद्र शच्येदविंदः॥१७॥ त्वं ह त्यद्वृषभ चर्ष-
णीनां घनो वृत्राणां तविषो बभूथ। त्वं सिंधूँरसृजस्तस्तभानान्
त्वमपो अजयो दासपत्नीः॥१८॥ स सुक्रतू रणिता यः सुतेष्व-
नुत्तमन्युर्यो अहेव रेवान्। य एक इन्नर्यपांसि कर्ता स वृत्रहा
प्रतीदन्यमाहुः॥१९॥ स वृत्रहेंद्रश्चर्षणीधृत्तं सुष्टुत्या हव्यं हुवेम।
स प्राविता मघवा नोऽधिवक्ता स वाजस्य श्रवस्यस्य दाता
॥२०॥ स वृत्रहेंद्र ऋभुक्षाः सद्यो जज्ञानो हव्यो बभूव। कृण्वन्न-
पांसि नर्या पुरूणि सोमो न पीतो हव्यः सखिभ्यः॥२१॥३५॥

---

॥९७॥ १–१५ रेभः काश्यपः ॥ इंद्रः ॥ १–९ बृहती। १०. १३ अतिजगती।
११. १२ उपरिष्टाद्बृहती। १४ त्रिष्टुप्। १५ जगती ॥

॥९७॥ या इंद्र भुज आभरः स्वर्वाँ असुरेभ्यः। स्तोतार-
मिन्मघवन्नस्य वर्धय ये च त्वे वृक्तबर्हिषः॥१॥ यमिंद्र दधिषे
त्वमश्वं गां भागमव्ययं। यजमाने सुन्वति दक्षिणावति तस्मिन्
तं धेहि मा पणौ॥२॥ य इंद्र सस्त्यव्रतोऽनुष्वापमदेवयुः।
स्वैः ष एवैर्मुमुरत्पोष्यं रयिं सनुतर्धेहि तं ततः॥३॥ यच्छ-
क्रासि परावति यदर्वावति वृत्रहन्। अतस्त्वा गीर्भिर्द्यु-
गदिंद्र केशिभिः सुतावाँ आ विवासति॥४॥ यद्वासि
रोचने दिवः समुद्रस्याधि विष्टपि। यत्पार्थिवे सदने वृत्र-
हंतम यदंतरिक्ष आ गहि॥५॥३६॥ स नः सोमेषु सोम-



Digitized by Google

चऽदेवीः अभि आऽचरंतीः बृहस्पतिना युजा इंद्रः ससहे ॥१५॥३४॥ त्वं ह त्यत् सप्तऽभ्यः जायमानः अशत्रुऽभ्यः अभवः शत्रुः इंद्र गूळ्हे द्यावापृथिवी अनु अविंदः विभुमतऽभ्यः भुवनेभ्यः रणं धाः ॥१६॥ त्वं ह त्यत् अप्रतिऽमानं ओजः वज्रेण वज्रिन् धृषितः जघंथ त्वं शुष्णस्य अव अतिरः वधत्रैः त्वं गाः इंद्र शच्या इत् अविंदः ॥१७॥ त्वं ह त्यत् वृषभ चर्षणीनां घनः वृत्राणां तविषः बभूथ त्वं सिंधून् असृजः तस्तभानान् त्वं अपः अजयः दासऽपत्नीः ॥१८॥ सः सुऽक्रतुः रणिता यः सुतेषु अनुत्तऽमन्युः यः अहाऽइव रेवान् यः एकः इत् नरि अपांसि कर्ता सः वृत्रऽहा प्रति इत् अन्यं आहुः ॥१९॥ सः वृत्रऽहा इंद्रः चर्षणिऽधृत् तं सुऽस्तुत्या हव्यं हुवेम सः प्रऽअविता मघऽवा नः अधिऽवक्ता सः वाजस्य श्रवस्यस्य दाता ॥२०॥ सः वृत्रऽहा इंद्रः ऋभुक्षाः सद्यः जज्ञानः हव्यः बभूव कृण्वन् अपांसि नर्या पुरूणि सोमः न पीतः हव्यः सखिऽभ्यः ॥२१॥३५॥

---

॥९७॥ याः इंद्र भुजः आ अभरः स्वःऽवान् असुरेभ्यः स्तोतारं इत् मघऽवन् अस्य वर्धय ये च त्वे वृक्तऽबर्हिषः ॥१॥ यं इंद्र दधिषे त्वं अश्वं गां भागं अव्ययं यजमाने सुन्वति दक्षिणाऽवति तस्मिन् तं धेहि मा पणौ ॥२॥ यः इंद्र सस्ति अव्रतः अनुऽस्वापं अदेवऽयुः स्वैः सः एवैः मुमुरत् पोष्यं रयिं सनुतः धेहि तं ततः ॥३॥ यत् शक्र असि पराऽवति यत् अर्वाऽवति वृत्रऽहन् अतः त्वा गीःऽभिः द्युऽगत् इंद्र केशिऽभिः सुतऽवान् आ विवासति ॥४॥ यत् वा असि रोचने दिवः समुद्रस्य अधि विष्टपि यत् पार्थिवे सदने वृत्रऽहन्ऽतम यत् अंतरिक्षे आ गहि ॥५॥३६॥ सः नः सोमेषु सोम-



Digitized by Google

पाः सुतेषु शवसस्पते। मादयस्व राधसा सूनृतावतेंद्र राया परी-
णसा ॥६॥ मा न इंद्र परा वृणग्भवा नः सधमाद्यः। त्वं न ऊती
त्वमिन्न आप्यं मा न इंद्र परा वृणक् ॥७॥ अस्मे इंद्र सचा सुते नि
षदा पीतये मधु। कृधी जरित्रे मघवन्नवो महदस्मे इंद्र सचा सुते
॥८॥ न त्वा देवास आशत न मर्त्यासो अद्रिवः। विश्वा जातानि
शवसाभिभूरसि न त्वा देवास आशत ॥९॥ विश्वाः पृतना अभि-
भूतरं नरं सजूस्ततक्षुरिंद्रं जजनुश्च राजसे। क्रत्वा वरिष्ठं वर आ-
मुरिमुतोग्रमोजिष्ठं तवसं तरस्विनं ॥१०॥३७॥ समीं रेभासो
अस्वरन्निंद्रं सोमस्य पीतये। स्वर्पतिं यदीं वृधे धृतव्रतो ह्योजसा
समूतिभिः ॥११॥ नेमिं नमंति चक्षसा मेषं विप्रा अभिस्वरा।
सुदीतयो वो अद्रुहोऽपि कर्णे तरस्विनः समृक्वभिः ॥१२॥ तमिंद्रं
जोहवीमि मघवानमुग्रं सत्रा दधानमप्रतिष्कुतं शवांसि। मं-
हिष्ठो गीर्भिरा च यज्ञियो ववर्तद्राये नो विश्वा सुपथा कृणोतु
वज्री ॥१३॥ त्वं पुर इंद्र चिकिदेना व्योजसा शविष्ठ शक्र नाश-
यध्यै। त्वद्विश्वानि भुवनानि वज्रिन्द्यावा रेजेते पृथिवी च भीषा
॥१४॥ तन्म ऋतमिंद्र शूर चित्र पात्वपो न वज्रिन्दुरिताति पर्षि
भूरि। कदा न इंद्र राय आ दशस्येर्विश्वप्स्न्यस्य स्पृहयाय्यस्य रा-
जन् ॥१५॥३८॥६॥

---

॥९८॥ १—१२ नृमेधः ॥ इंद्रः ॥ १—६. ८ उष्णिक्। ७. १०. ११ ककुप्। ९. १२ पुरउष्णिक् ॥

॥९८॥ इंद्राय साम गायत विप्राय बृहते बृहत्। धर्मकृते
विपश्चिते पनस्यवे ॥१॥ त्वमिंद्राभिभूरसि त्वं सूर्यमरोचयः।
विश्वकर्मा विश्वदेवो महाँ असि ॥२॥ विभ्राजञ्ज्योतिषा
स्व१रगच्छो रोचनं दिवः। देवास्त इंद्र सख्याय येमिरे ॥३॥



Digitized by Google

ऽपाः सुतेषु शवसः पते मादयस्व राधसा सूनृताऽवता इंद्र राया परीणसा ॥ ६ ॥ मा नः इंद्र परा वृणक् भव नः सधऽमाद्यः त्वं नः ऊती त्वं इत् नः आप्यं मा नः इंद्र परा वृणक् ॥ ७ ॥ अस्मे इंद्र सचा सुते नि सद पीतये मधु कृधि जरित्रे मघऽवन् अवः महत् अस्मे इंद्र सचा सुते ॥ ८ ॥ न त्वा देवासः आशत न मर्त्यासः अद्रिऽवः विश्वा जातानि शवसा अभिऽभूः असि न त्वा देवासः आशत ॥ ९ ॥ विश्वाः पृतनाः अभिऽभूतरं नरं सऽजूः ततक्षुः इंद्रं जजनुः च राजसे क्रत्वा वरिष्ठं वरे आऽमुरिं उत उग्रं ओजिष्ठं तवसं तरस्विनं ॥ १० ॥ ३७ ॥ सं ईं रेभासः अस्वरन् इंद्रं सोमस्य पीतये स्वःऽपतिं यत् ईं वृधे धृतऽव्रतः हि ओजसा सं ऊतिऽभिः ॥ ११ ॥ नेमिं नमंति चक्षसा मेषं विप्राः अभिऽस्वरा सुऽदीतयः वः अद्रुहः अपि कर्णे तरस्विनः सं ऋक्वऽभिः ॥ १२ ॥ तं इंद्रं जोहवीमि मघऽवानं उग्रं सत्रा दधानं अप्रतिऽस्कुतं शवांसि मंहिष्ठः गीःऽभिः आ च यज्ञियः ववर्तत् राये नः विश्वा सुऽपथा कृणोतु वज्री ॥ १३ ॥ त्वं पुरः इंद्र चिकित् एनाः वि ओजसा शविष्ठ शक्र नाशयध्यै त्वत् विश्वानि भुवनानि वज्रिन् द्यावा रेजेते पृथिवी च भीषा ॥ १४ ॥ तत् मा ऋतं इंद्र शूर चित्र पातु अपः न वज्रिन् दुःऽइता अति पर्षि भूरि कदा नः इंद्र रायः आ दशस्येः विश्वऽप्स्न्यस्य स्पृहयाय्यस्य राजन् ॥ १५ ॥ ३८ ॥ ६ ॥

---

॥ ९८ ॥ इंद्राय साम गायत विप्राय बृहते बृहत् धर्मऽकृते विपःऽचिते पनस्यवे ॥ १ ॥ त्वं इंद्र अभिऽभूः असि त्वं सूर्यं अरोचयः विश्वऽकर्मा विश्वऽदेवः महान् असि ॥ २ ॥ विऽभ्राजन् ज्योतिषा स्वः अगच्छः रोचनं दिवः देवाः ते इंद्र सख्याय येमिरे ॥ ३ ॥

एंद्र नो गधि प्रियः सत्राजिदगोह्यः। गिरिर्न विश्वतस्पृथुः पति-र्दिवः ॥४॥ अभि हि सत्य सोमपा उभे बभूथ रोदसी। इंद्रासि सुन्वतो वृधः पतिर्दिवः॥५॥ त्वं हि शश्वतीनामिंद्र दर्ता पुरामसि। हंता दस्योर्मनोर्वृधः पतिर्दिवः॥६॥१॥ अधा हींद्र गिर्वण उप त्वा कामान्महः ससृज्महे। उदेव यंत उदभिः॥७॥ वार्ण त्वा यव्याभिर्वर्धंति शूर ब्रह्माणि। वावृध्वांसं चिदद्रिवो दिवेदिवे॥८॥ युंजंति हरी इषिरस्य गाथयोरौ रथ उरुयुगे। इंद्रवाहा वचोयुजा ॥९॥ त्वं न इंद्रा भरँ ओजो नृम्णं शतक्रतो विचर्षणे। आ वीरं पृतनाषहं॥१०॥ त्वं हि नः पिता वसो त्वं माता शतक्रतो बभूविथ। अधा ते सुम्नमीमहे॥११॥ त्वां शुष्मिन्पुरुहूत वाजयंतमुप ब्रुवे शतक्रतो। स नो रास्व सुवीर्यं॥१२॥२॥

---

॥ ९९ ॥ १–८ नृमेधः ॥ इंद्रः ॥ प्रागाथं ॥

॥९९॥ त्वामिदा ह्यो नरोऽपीप्यन्वज्रिन्भूर्णयः। स इंद्र स्तोमवाहसामिह श्रुध्युप स्वसरमा गहि॥१॥ मत्स्वा सुशिप्र हरिवस्तदीमहे त्वे आ भूषंति वेधसः। तव श्रवांस्युपमान्युक्थ्या सुतेष्विंद्र गिर्वणः ॥२॥ श्रायंत इव सूर्यं विश्वेदिंद्रस्य भक्षत। वसूनि जाते जनमान ओजसा प्रति भागं न दीधिम ॥३॥ अनर्शरातिं वसुदामुप स्तुहि भद्रा इंद्रस्य रातयः। सो अस्य कामं विधतो न रोषति मनो दानाय चोदयन्॥४॥ त्वमिंद्र प्रतूर्तिष्वभि विश्वा असि स्पृधः। अशस्तिहा जनिता विश्वतूरसि त्वं तूर्य तरुष्यतः॥५॥ अनु ते शुष्मं तुरयंतमीयतुः क्षोणी शिशुं न मातरा। विश्वास्ते स्पृधः श्नथयंत मन्यवे वृत्रं यदिंद्र तूर्वसि ॥६॥ इत ऊती वो अजरं प्रहेतारमप्रहितं। आशुं जेतारं



Digitized by Google

आ इंद्र नः गधि प्रियः सत्राऽजित् अगोह्यः गिरिः न विश्वतः पृथुः पतिः दिवः ॥४॥ अभि हि सत्य सोमऽपाः उभे बभूथ रोदसी इंद्र असि सुन्वतः वृधः पतिः दिवः ॥५॥ त्वं हि शश्वतीनां इंद्र दर्ता पुरां असि हंता दस्योः मनोः वृधः पतिः दिवः ॥६॥१॥ अध हि इंद्र गिर्वणः उप त्वा कामान् महः ससृज्महे उदाऽइव यंतः उदऽभिः ॥७॥ वाः न त्वा यव्याभिः वर्धंति शूर ब्रह्माणि ववृध्वांसं चित् अद्रिऽवः दिवेऽदिवे ॥८॥ युंजंति हरी इषिरस्य गाथया उरौ रथे उरुऽयुगे इंद्रऽवाहा वचःऽयुजा ॥९॥ त्वं नः इंद्र आ भर ओजः नृम्णं शतऽक्रतो इति शतऽक्रतो विऽचर्षणे आ वीरं पृतनाऽसहं ॥१०॥ त्वं हि नः पिता वसो त्वं माता शतऽक्रतो इति शतऽक्रतो बभूविथ अध ते सुम्नं ईमहे ॥११॥ त्वां शुष्मिन् पुरुऽहूत वाजऽयंतं उप ब्रुवे शतऽक्रतो इति शतऽक्रतो सः नः रास्व सुऽवीर्यं ॥१२॥२॥

---

॥९९॥ त्वां इदा ह्यः नरः अपीप्यन् वज्रिन् भूर्णयः सः इंद्र स्तोमऽवाहसां इह श्रुधि उप स्वसरं आ गहि ॥१॥ मत्स्व सुऽशिप्र हरिऽवः तत् ईमहे त्वे आ भूषंति वेधसः तव श्रवांसि उपऽमानि उक्थ्या सुतेषु इंद्र गिर्वणः ॥२॥ श्रायंतःऽइव सूर्यं विश्वा इत् इंद्रस्य भक्षत वसूनि जाते जनमाने ओजसा प्रति भागं न दीधिम ॥३॥ अनर्शऽरातिं वसुऽदां उप स्तुहि भद्राः इंद्रस्य रातयः सः अस्य कामं विधतः न रोषति मनः दानाय चोदयन् ॥४॥ त्वं इंद्र प्रऽतूर्तिषु अभि विश्वाः असि स्पृधः अशस्तिऽहा जनिता विश्वऽतूः असि त्वं तूर्य तरुष्यतः ॥५॥ अनु ते शुष्मं तुरयंतं ईयतुः क्षोणी इति शिशुं न मातरा विश्वाः ते स्पृधः श्नथयंत मन्यवे वृत्रं यत् इंद्र तूर्वसि ॥६॥ इतः ऊती वः अजरं प्रऽहेतारं अप्रऽहितं आशुं जेतारं



Digitized by Google

हेतारं रथीतममतूर्तं तुग्र्यावृधं ॥७॥ इष्कर्तारमनिष्कृतं सहस्कृतं शतमूतिं शतक्रतुं। समानमिंद्रमवसे हवामहे वसवानं वसूजुवं ॥८॥३॥

---

॥१००॥ १–३. ६–१२ नेमो भार्गवः। ४. ५ इंद्रः ॥ १–८. १२ इंद्रः। १०. ११ वाक् ॥
१–५. १०–१२ त्रिष्टुप्। ६ जगती। ७–९ अनुष्टुप् ॥

॥१००॥ अयं त एमि तन्वा पुरस्ताद्विश्वे देवा अभि मा यंति पश्चात्। यदा मह्यं दीधरो भागमिंद्रादिन्मया कृणवो वीर्याणि ॥१॥ दधामि ते मधुनो भक्षमग्रे हितस्ते भागः सुतो अस्तु सोमः। असश्च त्वं दक्षिणतः सखा मेऽधा वृत्राणि जंघनाव भूरि॥२॥ प्र सु स्तोमं भरत वाजयंत इंद्राय सत्यं यदि सत्यमस्ति। नेंद्रो अस्तीति नेम उ त्व आह क ईं ददर्श कमभि ष्टवाम॥३॥ अयमस्मि जरितः पश्य मेह विश्वा जातान्यभ्यस्मि मह्ना। ऋतस्य मा प्रदिशो वर्धयंत्यादर्दिरो भुवना दर्दरीमि॥४॥ आ यन्मा वेना अरुहन्नृतस्यँ एकमासीनं हर्यतस्य पृष्ठे। मनश्चिन्मे हृद आ प्रत्यवोचदचिक्रदञ्छिशुमंतः सखायः ॥५॥ विश्वेत्ता ते सवनेषु प्रवाच्या या चकर्थ मघवन्निंद्र सुन्वते। पारावतं यत्पुरुसंभृतं वस्वपावृणोः शरभाय ऋषिबंधवे ॥६॥४॥ प्र नूनं धावता पृथङ्नेह यो वो अवावरीत्। नि षीं वृत्रस्य मर्मणि वज्रमिंद्रो अपीपतत्॥७॥ मनोजवा अयमान आयसीमतरत्पुरं। दिवं सुपर्णो गत्वाय सोमं वज्रिण आभरत् ॥८॥ समुद्रे अंतः शयत उद्ना वज्रो अभीवृतः। भरंत्यस्मै संयतः पुरःप्रस्रवणा बलिं ॥९॥ यद्वाग्वदंत्यविचेतनानि राष्ट्री देवानां निषसाद मंद्रा। चतस्र ऊर्जं दुदुहे पयांसि क्व स्विदस्याः परमं जगाम ॥१०॥ देवीं वाचमजनयंत देवास्तां विश्वरूपाः पशवो वदंति।सा नो



Digitized by Google

हेतारं रयिऽतमं अतूर्तं तुग्र्यऽवृधं ॥७॥ इष्कर्तारं अनिःऽकृतं सहःऽकृतं शतंऽऊतिं शतऽक्रतुं समानं इंद्रं अवसे हवामहे वसंवानं वसुऽजुवं ॥८॥३॥

---

॥१००॥ अयं ते एमि तन्वा पुरस्तात् विश्वे देवाः अभि मा यंति पश्चात् यदा मह्यं दीधरः भागं इंद्र आत् इत् मया कृणवः वीर्याणि ॥१॥ दधामि ते मधुनः भक्षं अग्रे हितः ते भागः सुतः अस्तु सोमः असः च त्वं दक्षिणतः सखा मे अध वृत्राणि जंघनाव भूरि ॥२॥ प्र सु स्तोमं भरत वाजऽयंतः इंद्राय सत्यं यदि सत्यं अस्ति न इंद्रः अस्ति इति नेमः ऊं त्वः आह कः ईं ददर्श कं अभि स्तवाम ॥३॥ अयं अस्मि जरितः पश्य मा इह विश्वा जातानि अभि अस्मि मह्ना ऋतस्य मा प्रऽदिशः वर्धयंति आऽदर्दिरः भुवना दर्दरीमि ॥४॥ आ यत् मा वेनाः अरुहन् ऋतस्य एकं आसीनं हर्यतस्य पृष्ठे मनः चित् मे हृदे आ प्रति अवोचत् अचिक्रदन् शिशुऽमंतः सखायः ॥५॥ विश्वा इत् ता ते सवनेषु प्रऽवाच्या या चकर्थ मघऽवन् इंद्र सुन्वते पारावतं यत् पुरुऽसंभृतं वसु अपऽअवृणोः शरभाय ऋषिऽबंधवे ॥६॥४॥ प्र नूनं धावत पृथक् न इह यः वः अवावरीत् नि सीं वृत्रस्य मर्मणि वज्रं इंद्रः अपीपतत् ॥७॥ मनःऽजवाः अयमानः आयसीं अतरत् पुरं दिवं सुऽपर्णः गत्वाय सोमं वज्रिणे आ अभरत् ॥८॥ समुद्रे अंतः शयते उद्ना वज्रः अभिऽवृतः भरंति अस्मै संऽयतः पुरःऽप्रस्रवणाः बलिं ॥९॥ यत् वाक् वदंती अविऽचेतनानि राष्ट्री देवानां निऽससाद मंद्रा चतस्रः ऊर्जं दुदुहे पयांसि क्व स्वित् अस्याः परमं जगाम ॥१०॥ देवीं वाचं अजनयंत देवाः तां विश्वऽरूपाः पशवः वदंति सा नः



Digitized by Google

मंद्रेषमूर्जं दुहाना धेनुर्वागस्मानुप सुष्टुतैतु ॥११॥ सखे विष्णो
वितरं वि क्रमस्व द्यौर्देहि लोकं वज्राय विष्कभे। हनाव वृत्रं
रिणचाव सिंधूनिंद्रस्य यंतु प्रसवे विसृष्टाः ॥१२॥५॥

---

॥१०१॥ १–१६ जमदग्निर्भार्गवः ॥ १–५^१ मित्रावरुणौ । ५^२. ६ आदित्याः । ७. ८ अश्विनौ ।
९. १० वायुः । ११. १२ सूर्यः । १३ उषाः सूर्यप्रभा वा । १४ पवमानः । १५. १६ गौः ॥
१. ५. ७. ९. ११. १३ बृहती । २. ४. ६. ८. १०. १२ सतोबृहती । ३ गायत्री । १४–१६ त्रिष्टुप् ॥

॥१०१॥ ऋधगित्था स मर्त्यः शशमे देवतातये। यो नूनं मि-
त्रावरुणावभिष्टय आचक्रे हव्यदातये ॥१॥ वर्षिष्ठक्षत्रा उरुच-
क्षसा नरा राजाना दीर्घश्रुत्तमा। ता बाहुता न दंसना रथर्यतः
साकं सूर्यस्य रश्मिभिः ॥२॥ प्र यो वां मित्रावरुणाजिरो दूतो
अद्रवत्। अयःशीर्षा मदेरघुः ॥३॥ न यः संपृच्छे न पुनर्हवीतवे न
संवादाय रमते। तस्मान्नो अद्य समृतेरुरुष्यतं बाहुभ्यां न उरु-
ष्यतं ॥४॥ प्र मित्राय प्रार्यम्णे सचथ्यमृतावसो। वरूथ्यं१ वरुणे
छंद्यं वचः स्तोत्रं राजसु गायत ॥५॥६॥ ते हिन्विरे अरुणं जेन्यं
वस्वेकं पुत्रं तिसृणां। ते धामान्यमृता मर्त्यानामदब्धा अभि च-
क्षते ॥६॥ आ मे वचांस्युद्यता द्युमत्तमानि कर्त्वा। उभा यातं ना-
सत्या सजोषसा प्रति हव्यानि वीतये ॥७॥ रातिं यद्वामरक्षसं
हवामहे युवाभ्यां वाजिनीवसू। प्राचीं होत्रां प्रतिरंतावितं नरा
गृणाना जमदग्निना ॥८॥ आ नो यज्ञं दिविस्पृशं वायो याहि
सुमन्मभिः। अंतः पवित्र उपरि श्रीणानो३ऽयं शुक्रो अयामि
ते ॥९॥ वेत्यध्वर्युः पथिभी रजिष्ठैः प्रति हव्यानि वीतये। अधा
नियुत्व उभयस्य नः पिब शुचिं सोमं गवाशिरं ॥१०॥७॥ बण्म-
हाँ असि सूर्य बळादित्य महाँ असि। महस्ते सतो महिमा पन-
स्यतेऽद्धा देव महाँ असि ॥११॥ बट् सूर्य श्रवसा महाँ असि



Digitized by Google

मंद्रा इषं ऊर्जं दुहाना धेनुः वाक् अस्मान् उप सुऽस्तुता आ एतु ॥ ११ ॥ सखे विष्णो वितऽतरं वि क्रमस्व द्यौः देहि लोकं वज्राय विऽस्कभे हनाव वृत्रं रिणचाव सिंधून् इंद्रस्य यंतु प्रऽसवे विऽसृष्टाः ॥ १२ ॥ ५ ॥

---

॥ १०१ ॥ ऋधक् इत्था सः मर्त्यः शशमे देवऽतातये यः नूनं मित्रावरुणौ अभिष्टये आऽचक्रे हव्यऽदातये ॥ १ ॥ वर्षिष्ठऽक्षत्रा उरुऽचक्षसा नरा राजाना दीर्घश्रुत्ऽतमा ता बाहुता न दंसना रथयतः साकं सूर्यस्य रश्मिऽभिः ॥ २ ॥ प्र यः वां मित्रावरुणा अजिरः दूतः अद्रवत् अयःऽशीर्षा मदेऽरघुः ॥ ३ ॥ न यः संऽपृच्छे न पुनः हवीतवे न संऽवादाय रमते तस्मात् नः अद्य संऽऋतेः उरुष्यतं बाहुऽभ्यां नः उरुष्यतं ॥ ४ ॥ प्र मित्राय प्र अर्यम्णे सचथ्यं ऋतऽवसो वरूथ्यं वरुणे छंद्यं वचः स्तोत्रं राजऽसु गायत ॥ ५ ॥ ६ ॥ ते हिन्विरे अरुणं जेन्यं वसु एकं पुत्रं तिसृणां ते धामानि अमृताः मर्त्यानां अदब्धाः अभि चक्षते ॥ ६ ॥ आ मे वचांसि उत्ऽयता द्युमत्ऽतमानि कर्त्वा उभा यातं नासत्या सऽजोषसा प्रति हव्यानि वीतये ॥ ७ ॥ रातिं यत् वां अरक्षसं हवामहे युवाभ्यां वाजिनीऽवसू प्राचीं होत्रां प्रऽतिरंता इतं नरा गृणाना जमत्ऽअग्निना ॥ ८ ॥ आ नः यज्ञं दिविऽस्पृशं वायो याहि सुमन्मऽभिः अंतः पवित्रे उपरि श्रीणानः अयं शुक्रः अयामि ते ॥ ९ ॥ वेति अध्वर्युः पथिऽभिः रजिष्ठैः प्रति हव्यानि वीतये अध नियुत्वः उभयस्य नः पिब शुचिं सोमं गोऽआशिरं ॥ १० ॥ ७ ॥ बट् महान् असि सूर्य बट् आदित्य महान् असि महः ते सतः महिमा पनस्यते अद्धा देव महान् असि ॥ ११ ॥ बट् सूर्य श्रवसा महान् असि

सचा देव महाँ असि। मह्ना देवानामसुर्यः पुरोहितो विभु ज्योतिरदाभ्यं॥१२॥ इयं या नीच्यर्किणी रूपा रोहिण्या कृता। चित्रेव प्रत्यदर्श्यायत्य१ंतर्दशसु बाहुषु॥१३॥ प्रजा ह तिस्रो अत्यायमीयुर्न्य१न्या अर्कमभितो विविश्रे। बृहद्ध तस्थौ भुवनेष्वंतः पवमानो हरित आ विवेश॥१४॥ माता रुद्राणां दुहिता वसूनां स्वसादित्यानाममृतस्य नाभिः। प्र नु वोचं चिकितुषे जनाय मा गामनागामदितिं वधिष्ट॥१५॥ वचोविदं वाचमुदीरयंतीं विश्वाभिर्धीभिरुपतिष्ठमानां। देवीं देवेभ्यः पर्येयुषीं गामा मावृक्त मर्त्यो दभ्रचेताः॥१६॥८॥

---

॥१०२॥ १—२२ प्रयोगो भार्गव अग्निर्वा पावको बार्हस्पत्यः। अथवाग्नी गृहपतियविष्ठौ सहसः सुतौ तयोर्वान्यतरः॥ अग्निः॥ गायत्री॥

॥१०२॥ त्वमग्ने बृहद्वयो दधासि देव दाशुषे। कविर्गृहपतिर्युवा॥१॥ स न ईळानया सह देवाँ अग्ने दुवस्युवा। चिकिद्विभानवा वह॥२॥ त्वया ह स्विद्युजा वयं चोदिष्ठेन यविष्ठ्य। अभि ष्मो वाजसातये॥३॥ और्वभृगुवच्छुचिमप्रवानवदा हुवे। अग्निं समुद्रवाससं॥४॥ हुवे वातस्वनं कविं पर्जन्यक्रंद्यं सहः। अग्निं समुद्रवाससं॥५॥९॥ आ सवं सवितुर्यथा भगस्येव भुजिं हुवे। अग्निं समुद्रवाससं॥६॥ अग्निं वो वृधंतमध्वराणां पुरूतमं। अच्छा नप्त्रे सहस्वते॥७॥ अयं यथा न आभुवत्त्वष्टा रूपेव तक्ष्या। अस्य क्रत्वा यशस्वतः॥८॥ अयं विश्वा अभि श्रियोऽग्निर्देवेषु पत्यते। आ वाजैरुप नो गमत्॥९॥ विश्वेषामिह स्तुहि होतॄणां यशस्तमं। अग्निं यज्ञेषु पूर्व्यं॥१०॥१०॥ शीरं पावकशोचिषं ज्येष्ठो यो दमेष्वा। दीदाय दीर्घश्रुत्तमः॥११॥ तमर्वंतं न सानसिं गृणीहि विप्र शुष्मिणं।



Digitized by Google

सत्रा देव महान् असि मह्ना देवानां असुर्यः पुरःऽहितः विऽभु ज्योतिः अदाभ्यं ॥ १२ ॥ इयं या नीची अर्किणी रूपा रोहिण्या कृता चित्राऽइव प्रति अदर्शि आऽयती अंतः दशऽसु बाहुषु ॥ १३ ॥ प्रऽजाः ह तिस्रः अतिऽआयं ईयुः नि अन्याः अर्कं अभितः विविश्रे बृहत् ह तस्थौ भुवनेषु अंतः पवमानः हरितः आ विवेश ॥ १४ ॥ माता रुद्राणां दुहिता वसूनां स्वसा आदित्यानां अमृतस्य नाभिः प्र नु वोचं चिकितुषे जनाय मा गां अनागां अदितिं वधिष्ट ॥ १५ ॥ वचःऽविदं वाचं उत्ऽईरयंतीं विश्वाभिः धीभिः उपऽतिष्ठमानां देवीं देवेभ्यः परि आऽईयुषीं गां आ मा अवृक्त मर्त्यः दभ्रऽचेताः ॥ १६ ॥ ८ ॥

---

॥ १०२ ॥ त्वं अग्ने बृहत् वयः दधासि देव दाशुषे कविः गृहऽपतिः युवा ॥ १ ॥ सः नः ईळानया सह देवान् अग्ने दुवस्युवा चिकित् विऽभानो इति विऽभानो आ वह ॥ २ ॥ त्वया ह स्वित् युजा वयं चोदिष्ठेन यविष्ठ्य अभि स्मः वाजऽसातये ॥ ३ ॥ और्वऽभृगुऽवत् शुचिं अप्नवानऽवत् आ हुवे अग्निं समुद्रऽवाससं ॥ ४ ॥ हुवे वातऽस्वनं कविं पर्जन्यऽक्रंद्यं सहः अग्निं समुद्रऽवाससं ॥ ५ ॥ ९ ॥ आ सवं सवितुः यथा भगस्यऽइव भुजिं हुवे अग्निं समुद्रऽवाससं ॥ ६ ॥ अग्निं वः वृधंतं अध्वराणां पुरुऽतमं अच्छ नप्त्रे सहस्वते ॥ ७ ॥ अयं यथा नः आऽभुवत् त्वष्टा रूपाऽइव तक्ष्या अस्य क्रत्वा यशस्वतः ॥ ८ ॥ अयं विश्वाः अभि श्रियः अग्निः देवेषु पत्यते आ वाजैः उप नः गमत् ॥ ९ ॥ विश्वेषां इह स्तुहि होतॄणां यशःऽतमं अग्निं यज्ञेषु पूर्व्यं ॥ १० ॥ ॥ १० ॥ शीरं पावकऽशोचिषं ज्येष्ठः यः दमेषु आ दीदाय दीर्घश्रुत्ऽतमः ॥ ११ ॥ तं अर्वंतं न सानसिं गृणीहि विप्र शुष्मिणं



Digitized by Google

भिषं न यातयज्जनं ॥ १२ ॥ उप त्वा जामयो गिरो देदिशतीर्ह-
विष्कृतः । वायोरनीके अस्थिरन् ॥ १३ ॥ यस्य त्रिधात्ववृतं बर्हि-
स्तस्थावसंदिनं । आपश्चिन्नि दधा पदं ॥ १४ ॥ पदं देवस्य मीळ्हु-
षोऽनाधृष्टाभिरूतिभिः । भद्रा सूर्य इवोपदृक् ॥ १५ ॥ ११ ॥ अग्ने
घृतस्य धीतिभिस्तेपानो देव शोचिषा । आ देवान्वक्षि यक्षि
च ॥ १६ ॥ तं त्वाजनंत मातरः कविं देवासो अंगिरः । हव्यवाह-
ममर्त्यं ॥ १७ ॥ प्रचेतसं त्वा कवेऽग्ने दूतं वरेण्यं । हव्यवाहं नि
षेदिरे ॥ १८ ॥ नहि मे अस्त्यघ्न्या न स्वधितिर्वनन्वति । अथैता-
दृग्भरामि ते ॥ १९ ॥ यदग्ने कानि कानि चिदा ते दारूणि दध्म-
सि । ता जुषस्व यविष्ठ्य ॥ २० ॥ यदत्त्युपजिह्विका यद्वम्रो अति-
सर्पति । सर्वं तदस्तु ते घृतं ॥ २१ ॥ अग्निमिंधानो मनसा धियं
सचेत मर्त्यः । अग्निमीधे विवस्वभिः ॥ २२ ॥ १२ ॥

॥ १०२ ॥ १–२२ सोभरिः काण्वः ॥ १–२२ अग्निः । २२ अग्निर्मरुतश्च ॥ १–३. ६ बृहती ।
४ विराड्रूपा । ७. ९. ११. १३ सतोबृहती । ८. १२ ककुप् । १० हसीयसी । १४ अनुष्टुप् ॥

॥ १०३ ॥ अदर्शि गातुवित्तमो यस्मिन्व्रतान्यादधुः । उपो
षु जातमार्यस्य वर्धनमग्निं नक्षंत नो गिरः ॥ १ ॥ प्र दैवो-
दासो अग्निर्देवाँ अच्छा न मज्मना । अनु मातरं पृथिवीं वि
वावृते तस्थौ नाकस्य सानवि ॥ २ ॥ यस्माद्रेजंत कृष्टयश्चर्कृत्यानि
कृण्वतः । सहस्रसां मेधसाताविव त्मनाग्निं धीभिः सपर्यत ॥ ३ ॥
प्र यं राये निनीषसि मर्तो यस्ते वसो दाशत् । स वीरं धत्ते
अग्न उक्थशंसिनं त्मना सहस्रपोषिणं ॥ ४ ॥ स दृळ्हे चिदभि
तृणत्ति वाजमर्वता स धत्ते अक्षिति श्रवः । त्वे देवत्रा सदा
पुरूवसो विश्वा वामानि धीमहि ॥ ५ ॥ १३ ॥ यो विश्वा दयते
वसु होता मंद्रो जनानां । मधोर्न पात्रा प्रथमान्यस्मै प्र



Digitized by Google

मित्रं न यातयत्ऽजनं ॥१२॥ उप त्वा जामयः गिरः देदिशतीः हविःऽकृतः वायोः अनीके अस्थिरन् ॥१३॥ यस्य त्रिऽधातु अवृतं बर्हिः तस्थौ असंऽदिनं आपः चित् नि दध पदं ॥१४॥ पदं देवस्य मीळ्हुषः अनाधृष्टाभिः ऊतिऽभिः भद्रा सूर्यःऽइव उपऽदृक् ॥१५॥११॥ अग्ने घृतस्य धीतिऽभिः तेपानः देव शोचिषा आ देवान् वक्षि यक्षि च ॥१६॥ तं त्वा अजनंत मातरः कविं देवासः अंगिरः हव्यऽवाहं अमर्त्यं ॥१७॥ प्रऽचेतसं त्वा कवे अग्ने दूतं वरेण्यं हव्यऽवाहं नि सेदिरे ॥१८॥ नहि मे अस्ति अघ्न्या न स्वऽधितिः वनन्ऽवति अथ एतादृक् भरामि ते ॥१९॥ यत् अग्ने कानि कानि चित् आ ते दारूणि दध्मसि ता जुषस्व यविष्ठ्य ॥२०॥ यत् अत्ति उपऽजिह्विका यत् वम्रः अतिऽसर्पति सर्वं तत् अस्तु ते घृतं ॥२१॥ अग्निं इंधानः मनसा धियं सचेत मर्त्यः अग्निं ईधे विवस्वत्ऽभिः ॥२२॥१२॥

---

॥१०३॥ अदर्शि गातुवित्ऽतमः यस्मिन् व्रतानि आऽदधुः उपो सु जातं आर्यस्य वर्धनं अग्निं नक्षंत नः गिरः ॥१॥ प्र दैवःऽदासः अग्निः देवान् अच्छ न मज्मना अनु मातरं पृथिवीं वि वावृते तस्थौ नाकस्य सानवि ॥२॥ यस्मात् रेजंत कृष्टयः चर्कृत्यानि कृण्वतः सहस्रऽसां मेधसातौऽइव त्मना अग्निं धीभिः सपर्यत ॥३॥ प्र यं राये निनीषसि मर्तः यः ते वसो दाशत् सः वीरं धत्ते अग्ने उक्थऽशंसिनं त्मना सहस्रऽपोषिणं ॥४॥ सः दृळ्हे चित् अभि तृणत्ति वाजं अर्वता सः धत्ते अक्षिति श्रवः त्वे देवऽत्रा सदा पुरुवसो विश्वा वामानि धीमहि ॥५॥१३॥ यः विश्वा दयते वसु होता मंद्रः जनानां मधोः न पात्रा प्रथमानि अस्मै प्र

स्तोमा यंत्यग्नये ॥६॥ अश्वं न गीर्भी रथ्यं सुदानवो मर्मृज्यंते देवयवः। उभे तोके तनये दस्म विश्पते पर्षि राधो मघोनां ॥७॥ प्र मंहिष्ठाय गायत ऋताव्ने बृहते शुक्रशोचिषे। उपस्तुतासो अग्नये ॥८॥ आ वंसते मघवा वीरवद्यशः समिद्धो द्युम्न्याहुतः। कुविन्नो अस्य सुमतिर्नवीयस्यच्छा वाजेभिरागमत् ॥९॥ प्रेष्ठमु प्रियाणां स्तुह्यासावातिथिं। अग्निं रथानां यमं ॥१०॥१४॥ उदिता यो निदिता वेदिता वस्वा यज्ञियो ववर्तति। दुष्टरा यस्य प्रवणे नोर्मयो धिया वाजं सिषासतः ॥११॥ मा नो हृणीतामतिथिर्वसुरग्निः पुरुप्रशस्त एषः। यः सुहोता स्वध्वरः ॥१२॥ मो ते रिषन्ये अच्छोक्तिभिर्वसोऽग्ने केभिश्चिदेवैः। कीरिश्चिद्धि त्वामीट्टे दूत्याय रातहव्यः स्वध्वरः ॥१३॥ आग्ने याहि मरुत्सखा रुद्रेभिः सोमपीतये। सोभर्या उप सुष्टुतिं मादयस्व स्वर्णरे ॥१४॥१५॥१०॥८॥

॥ इत्यष्टमं मंडलं समाप्तं ॥

---

॥१॥ १–१० मधुच्छंदाः ॥ पवमानः सोमः ॥ गायत्री ॥

॥१॥ स्वादिष्ठया मदिष्ठया पवस्व सोम धारया। इंद्राय पातवे सुतः ॥१॥ रक्षोहा विश्वचर्षणिरभि योनिमयोहतं। द्रुणा सधस्थमासदत् ॥२॥ वरिवोधातमो भव मंहिष्ठो वृत्रहंतमः। पर्षि राधो मघोनां ॥३॥ अभ्यर्ष महानां देवानां वीतिमंधसा। अभि वाजमुत श्रवः ॥४॥ त्वामच्छा चरामसि तदिदर्थं दिवेदिवे। इंदो त्वे न आशसः ॥५॥१६॥ पुनाति ते परिस्रुतं सोमं सूर्यस्य दुहिता। वारेण शश्वता तना ॥६॥ तमीम-



Digitized by Google

स्तोमाः यंति अग्नये॥६॥ अश्वं न गीःऽभिः रथ्यं सुऽदानवः म-
र्मृज्यंते देवऽयवः उभे तोके तनये दस्म विश्पते पर्षि राधः म-
घोनां॥७॥ प्र मंहिष्ठाय गायत ऋतऽव्ने बृहते शुक्रऽशोचिषे
उपऽस्तुतासः अग्नये॥८॥ आ वंसते मघऽवा वीरऽवत् यशः सं-
ऽइद्धः द्युम्नी आऽहुतः कुवित् नः अस्य सुऽमतिः नवीयसी अच्छ
वाजेभिः आऽगमत्॥९॥ प्रेष्ठं ऊं प्रियाणां स्तुहि आऽसाव अ-
तिथिं अग्निं रथानां यमं॥१०॥१४॥ उत्ऽइता यः निऽदिता वे-
दिता वसु आ यज्ञियः ववर्तति दुस्तराः यस्य प्रवणे न ऊर्मयः
धिया वाजं सिसासतः॥११॥ मा नः हृणीतां अतिथिः वसुः अ-
ग्निः पुरुऽप्रशस्तः एषः यः सुऽहोता सुऽअध्वरः॥१२॥ मो ते रि-
षन् ये अच्छोक्तिऽभिः वसो अग्ने केभिः चित् एवैः कीरिः चित्
हि त्वां ईट्टे दूत्याय रातऽहव्यः सुऽअध्वरः॥१३॥ आ अग्ने याहि
मरुत्ऽसखा रुद्रेभिः सोमऽपीतये सोभर्याः उप सुऽस्तुतिं माद-
यस्व स्वःऽनरे॥१४॥१५॥१०॥८॥

॥ इत्यष्टमं मंडलं समाप्तं॥

---

॥१॥ स्वादिष्ठया मदिष्ठया पवस्व सोम धारया इंद्राय पा-
तवे सुतः॥१॥ रक्षःऽहा विश्वऽचर्षणिः अभि योनिं अयःऽहतं
द्रुणा सधऽस्थं आ असदत्॥२॥ वरिवःऽधातमः भव मंहिष्ठः वृ-
त्रहन्ऽतमः पर्षि राधः मघोनां॥३॥ अभि अर्ष महानां देवानां
वीतिं अंधसा अभि वाजं उत श्रवः॥४॥ त्वां अच्छ चरामसि तत्
इत् अर्थं दिवेऽदिवे इंदो त्वे नः आऽशसः॥५॥१६॥ पुनाति ते
परिऽस्रुतं सोमं सूर्यस्य दुहिता वारेण शश्वता तना॥६॥ तं ईं अ-



Digitized by Google

ण्वीः समर्य आ गृभ्णंति योषणो दश। स्वसारः पार्ये दिवि ॥७॥
तमीं हिन्वंत्यग्रुवो धमंति बाकुरं दृतिं। त्रिधातु वारणं मधु॥८॥
अभी३ममघ्न्या उत श्रीणंति धेनवः शिशुं। सोममिंद्राय पा-
तवे ॥९॥ अस्येदिंद्रो मदेष्वा विश्वा वृत्राणि जिघ्नते। शूरो मघा
च मंहते ॥१०॥१७॥

---

॥ २ ॥ १—१० मेधातिथिः ॥ पवमानः सोमः ॥ गायत्री ॥

॥२॥ पवस्व देववीरति पवित्रं सोम रंह्या। इंद्रमिंदो वृषा
विश ॥१॥ आ वच्यस्व महि प्सरो वृषेंदो द्युम्नवत्तमः। आ योनिं
धर्णसिः सदः ॥२॥ अधुक्षत प्रियं मधु धारा सुतस्य वेधसः। अपो
वसिष्ट सुक्रतुः ॥३॥ महांतं त्वा महीरन्वापो अर्षंति सिंधवः। य-
द्गोभिर्वासयिष्यसे ॥४॥ समुद्रो अप्सु मामृजे विष्टंभो धरुणो दि-
वः। सोमः पवित्रे अस्मयुः ॥५॥१८॥ अचिक्रदद्वृषा हरिर्महान्मि-
त्रो न दर्शतः। सं सूर्येण रोचते ॥६॥ गिरस्त इंद ओजसा मर्मृज्यंते
अपस्युवः। याभिर्मदाय शुंभसे ॥७॥ तं त्वा मदाय घृष्वय उ लोकी-
कृत्नुमीमहे। तव प्रशस्तयो महीः ॥८॥ अस्मभ्यमिंदविंद्रयुर्म-
ध्वः पवस्व धारया। पर्जन्यो वृष्टिमाँ इव ॥९॥ गोषा इंदो नृषा
अस्यश्वसा वाजसा उत। आत्मा यज्ञस्य पूर्व्यः ॥१०॥१९॥

---

॥ ३ ॥ १—१० शुनःशेपः ॥ पवमानः सोमः ॥ गायत्री ॥

॥३॥ एष देवो अमर्त्यः पर्णवीरिव दीयति। अभि द्रोणा-
न्यासदं ॥१॥ एष देवो विपा कृतोऽति ह्वरांसि धावति। पव-
मानो अदाभ्यः ॥२॥ एष देवो विपन्युभिः पवमान ऋतायु-
भिः। हरिर्वाजाय मृज्यते ॥३॥ एष विश्वानि वार्या शूरो यन्निव
सत्वभिः। पवमानः सिषासति ॥४॥ एष देवो रथर्यति प-



Digitized by Google

ण्वीः सऽमर्ये आ गृभ्णंति योषणः दश स्वसारः पार्ये दिवि ॥७॥
तं ईं हिन्वंति अग्रुवः धमंति बाकुरं दृतिं त्रिऽधातु वारणं मधु
॥८॥ अभि इमं अघ्न्याः उत श्रीणंति धेनवः शिशुं सोमं इंद्राय
पातवे ॥९॥ अस्य इत् इंद्रः मदेषु आ विश्वा वृत्राणि जिघ्नते शूरः
मघा च मंहते ॥१०॥१७॥

---

॥२॥ पवस्व देवऽवीः अति पवित्रं सोम रंह्या इंद्रं इंदो वृषा
आ विश ॥१॥ आ वच्यस्व महि प्सरः वृषा इंदो द्युम्नवत्ऽतमः
आ योनिं धर्णसिः सदः ॥२॥ अधुक्षत प्रियं मधु धारा सुतस्य वे-
धसः अपः वसिष्ट सुऽक्रतुः ॥३॥ महांतं त्वा महीः अनु आपः अ-
र्षंति सिंधवः यत् गोभिः वासयिष्यसे ॥४॥ समुद्रः अप्ऽसु ममृजे
विष्टंभः धरुणः दिवः सोमः पवित्रे अस्मऽयुः ॥५॥१८॥ अचि-
क्रदत् वृषा हरिः महान् मित्रः न दर्शतः सं सूर्येण रोचते ॥६॥
गिरः ते इंदो ओजसा मर्मृज्यंते अपस्युवः याभिः मदाय शुंभसे
॥७॥ तं त्वा मदाय घृष्वये ऊं लोकऽकृत्नुं ईमहे तव प्रऽशस्तयः
महीः ॥८॥ अस्मभ्यं इंदो इंद्रऽयुः मध्वः पवस्व धारया पर्जन्यः
वृष्टिमान्ऽइव ॥९॥ गोऽसाः इंदो नृऽसाः असि अश्वऽसाः वा-
जऽसाः उत आत्मा यज्ञस्य पूर्व्यः ॥१०॥१९॥

---

॥३॥ एषः देवः अमर्त्यः पर्णवीःऽइव दीयति अभि द्रोणानि
आऽसदं ॥१॥ एषः देवः विपा कृतः अति ह्वरांसि धावति पव-
मानः अदाभ्यः ॥२॥ एषः देवः विपन्युऽभिः पवमानः ऋतयु-
ऽभिः हरिः वाजाय मृज्यते ॥३॥ एषः विश्वानि वार्या शूरः यन्-
ऽइव सत्वऽभिः पवमानः सिसासति ॥४॥ एषः देवः रथर्यति प-

वमानो दशस्यति। आविष्कृणोति वग्वनुं॥५॥२०॥ एष वि-
प्रैरभिष्टुतोऽपो देवो वि गाहते। दधद्रत्नानि दाशुषे॥६॥ एष
दिवं वि धावति तिरो रजांसि धारया। पवमानः कनिक्रदत्
॥७॥ एष दिवं व्यासरत्तिरो रजांस्यस्पृतः। पवमानः स्वध्वरः॥८॥
एष प्रत्नेन जन्मना देवो देवेभ्यः सुतः। हरिः पवित्रे अर्षति॥९॥
एष उ स्य पुरुव्रतो जज्ञानो जनयन्निषः। धारया पवते सुतः
॥१०॥२१॥

---

॥ ४ ॥ १–१० हिरण्यस्तूपः ॥ पवमानः सोमः ॥ गायत्री ॥

॥४॥ सना च सोम जेषि च पवमान महि श्रवः। अथा नो
वस्यसस्कृधि॥१॥ सना ज्योतिः सना स्व१र्विश्वा च सोम सौ-
भगा। अथा नो वस्यसस्कृधि॥२॥ सना दक्षमुत क्रतुमप सोम
मृधो जहि। अथा नो वस्यसस्कृधि॥३॥ पवीतारः पुनीतन सो-
ममिंद्राय पातवे। अथा नो वस्यसस्कृधि॥४॥ त्वं सूर्ये न आ भज
तव क्रत्वा तवोतिभिः। अथा नो वस्यसस्कृधि॥५॥२२॥ तव क्रत्वा
तवोतिभिर्ज्योक्पश्येम सूर्यं। अथा नो वस्यसस्कृधि॥६॥ अभ्यर्ष
स्वायुध सोम द्विबर्हसं रयिं। अथा नो वस्यसस्कृधि॥७॥ अभ्य१-
र्षानपच्युतो रयिं समत्सु सासहिः। अथा नो वस्यसस्कृधि॥८॥
त्वां यज्ञैरवीवृधन्पवमान विधर्मणि। अथा नो वस्यसस्कृधि॥९॥
रयिं नश्चित्रमश्विनमिंदो विश्वायुमा भर। अथा नो वस्यसस्कृधि
॥१०॥२३॥

---

॥ ५ ॥ १–११ असितः काश्यपो देवलो वा ॥ आप्रियः ॥ १–७ गायत्री । ८–११ अनुष्टुप् ॥

॥ ५ ॥ समिद्धो विश्वतस्पतिः पवमानो वि राजति। प्रीण-
न्वृषा कनिक्रदत्॥१॥ तनूनपात्पवमानः शृंगे शिशानो अर्ष-



Digitized by Google

वंमानः दृशस्यति आविः कृणोति वग्वनुं ॥५॥२०॥ एषः विप्रैः अभिऽस्तुतः अपः देवः वि गाहते दधत् रत्नानि दाशुषे ॥६॥ एषः दिवं वि धावति तिरः रजांसि धारया पवमानः कनिक्रदत् ॥७॥ एषः दिवं वि आ असरत् तिरः रजांसि अस्पृतः पवमानः सुऽअध्वरः ॥८॥ एषः प्रत्नेन जन्मना देवः देवेभ्यः सुतः हरिः पवित्रे अर्षति ॥९॥ एषः ऊं स्यः पुरुऽव्रतः जज्ञानः जनयन् इषः धारया पवते सुतः ॥१०॥२१॥

---

॥४॥ सनं च सोम जेषि च पवमान महि श्रवः अथ नः वस्यसः कृधि ॥१॥ सनं ज्योतिः सनं स्वः विश्वा च सोम सौभगा अथ नः वस्यसः कृधि ॥२॥ सनं दक्षं उत क्रतुं अप सोम मृधः जहि अथ नः वस्यसः कृधि ॥३॥ पवितारः पुनीतन सोमं इंद्राय पातवे अथ नः वस्यसः कृधि ॥४॥ त्वं सूर्ये नः आ भज तव क्रत्वा तव ऊतिऽभिः अथ नः वस्यसः कृधि ॥५॥२२॥ तव क्रत्वा तव ऊतिऽभिः ज्योक् पश्येम सूर्यं अथ नः वस्यसः कृधि ॥६॥ अभि अर्ष सुऽआयुध सोम द्विऽबर्हसं रयिं अथ नः वस्यसः कृधि ॥७॥ अभि अर्ष अनपऽच्युतः रयिं समत्ऽसु ससहिः अथ नः वस्यसः कृधि ॥८॥ त्वां यज्ञैः अवीवृधन् पवमान विऽधर्मणि अथ नः वस्यसः कृधि ॥९॥ रयिं नः चित्रं अश्विनं इंदो इति विश्वऽआयुं आ भर अथ नः वस्यसः कृधि ॥१०॥२३॥

---

॥५॥ संऽइद्धः विश्वतः पतिः पवमानः वि राजति प्रीणन् वृषा कनिक्रदत् ॥१॥ तनूऽनपात् पवमानः शृंगे शिशानः अर्ष-



Digitized by Google

सि। अंतरिक्षेण रारजत्॥२॥ ईळेन्यः पर्वमानो रयिर्वि राजति द्युमान्। मधोर्धारांभिरोजसा॥३॥ बर्हिः प्राचीनमोजसा पर्वमानः स्तृणन्हरिः। देवेषु देव ईयते॥४॥ उदातैर्जिहते बृहद्द्वारो देवीर्हिरण्ययीः। पर्वमानेन सुष्टुताः॥५॥२४॥ सुशिल्पे बृहती मही पर्वमानो वृषण्यति। नक्तोषासा न दर्शते॥६॥ उभा देवा नृचक्षसा होतारा दैव्या हुवे। पर्वमान इंद्रो वृषा॥७॥ भारती पर्वमानस्य सरस्वतीळा मही। इमं नो यज्ञमा गमन्तिस्रो देवीः सुपेशसः॥८॥ त्वष्टारमग्रजां गोपां पुरोयावानमा हुवे। इंदुरिंद्रो वृषा हरिः पर्वमानः प्रजापतिः॥९॥ वनस्पतिं पवमान मध्वा समँग्धि धारया। सहस्रवल्शं हरितं भ्राजमानं हिरण्ययं॥१०॥ विश्वे देवाः स्वाहाकृतिं पर्वमानस्या गत। वायुर्बृहस्पतिः सूर्योऽग्निरिंद्रः सजोषसः॥११॥२५॥

---

॥ ६ ॥ १–९ असितः काश्यपो देवलो वा ॥ पवमानः सोमः ॥ गायत्री ॥

॥६॥ मंद्रया सोम धारया वृषा पवस्व देवयुः। अव्यो वारेष्वस्मयुः॥१॥ अभि त्यं मद्यं मदमिंदविंद्र इति क्षर। अभि वाजिनो अर्वतः॥२॥ अभि त्यं पूर्व्यं मदं सुवानो अर्ष पवित्र आ। अभि वाजमुत श्रवः॥३॥ अनु द्रप्सास इंदव आपो न प्रवतासरन्। पुनाना इंद्रमाशत॥४॥ यमत्यमिव वाजिनं मृजंति योषणो दश। वने क्रीळंतमत्यविं॥५॥२६॥ तं गोभिर्वृषणं रसं मदाय देववीतये। सुतं भराय सं सृज॥६॥ देवो देवाय धारयेंद्राय पवते सुतः। पयो यदस्य पीपयत्॥७॥ आत्मा यज्ञस्य रंह्या सुष्वाणः पवते सुतः। प्रत्नं नि पाति काव्यं॥८॥ एवा पुनान इंद्रयुर्मदं मदिष्ठ वीतये। गुहा चिद्दधिषे गिरः॥९॥२७॥



Digitized by Google

ति अंतरिक्षेण रारंजत् ॥२॥ ईळेन्यः पवमानः रयिः वि राज-
ति द्युऽमान् मधोः धाराभिः ओजसा ॥३॥ बर्हिः प्राचीनं ओ-
जसा पवमानः स्तृणन् हरिः देवेषु देवः ईयते ॥४॥ उत् आतैः
जिहते बृहत् द्वारः देवीः हिरण्ययीः पवमानेन सुऽस्तुताः ॥५॥
॥२४॥ सुऽशिल्पे॰ बृहती॰ मही॰ पवमानः वृषण्यति नक्तोषसा
न दर्शते॰ ॥६॥ उभा देवा नृऽचक्षसा होतारा दैव्या हुवे पवमानः
इंद्रः वृषा ॥७॥ भारती पवमानस्य सरस्वती इळा मही इमं नः
यज्ञं आ गमन् तिस्रः देवीः सुऽपेशसः ॥८॥ त्वष्टारं अग्रऽजां गो-
पां पुरःऽयावानं आ हुवे इंदुः इंद्रः वृषा हरिः पवमानः प्रजाऽप-
तिः ॥९॥ वनस्पतिं पवमान मध्वा सं अंग्धि धारया सहस्रऽव-
ल्शं हरितं भ्राजमानं हिरण्ययं ॥१०॥ विश्वे देवाः स्वाहाऽकृतिं
पवमानस्य आ गत वायुः बृहस्पतिः सूर्यः अग्निः इंद्रः सऽजो-
षसः ॥११॥२५॥

---

॥६॥ मंद्रया सोम धारया वृषा पवस्व देवऽयुः अव्यः वारेषु
अस्मऽयुः ॥१॥ अभि त्यं मद्यं मदं इंदो॰ इंद्रः इति क्षर अभि वाजि-
नः अर्वतः ॥२॥ अभि त्यं पूर्व्यं मदं सुवानः अर्ष पवित्रे आ अभि
वाजं उत श्रवः ॥३॥ अनु द्रप्सासः इंदवः आपः न प्रऽवता असरन्
पुनानाः इंद्रं आशत ॥४॥ यं अत्यंऽइव वाजिनं मृजंति योषणः
दश वने क्रीळंतं अतिऽअविं ॥५॥२६॥ तं गोभिः वृषणं रसं म-
दाय देवऽवीतये सुतं भराय सं सृज ॥६॥ देवः देवाय धारया इंद्राय
पवते सुतः पयः यत् अस्य पीपयत् ॥७॥ आत्मा यज्ञस्य रंह्या सु-
स्वानः पवते सुतः प्रत्नं नि पाति काव्यं ॥८॥ एव पुनानः इंद्रऽयुः
मदं मदिष्ठ वीतये गुहा चित् दधिषे गिरः ॥९॥२७॥



Digitized by Google

॥ ७ ॥ १–९ असितः काश्यपो देवलो वा ॥ पवमानः सोमः ॥ गायत्री ॥

॥ ७ ॥ असृग्रमिंदवः पथा धर्मन्नृतस्य सुश्रियः। विदाना
अस्य योजनं॥ १॥ प्र धारा मध्वो अग्रियो महीरपो वि गाहते।
हविर्हविष्षु वंद्यः॥ २॥ प्र युजो वाचो अग्रियो वृषाव चक्रदद्वने।
सद्माभि सत्यो अध्वरः॥ ३॥ परि यत्काव्या कविर्नृम्णा वसानो
अर्षति। स्वर्वाजी सिषासति॥ ४॥ पवमानो अभि स्पृधो विशो
राजेव सीदति। यदीमृण्वंति वेधसः॥ ५॥ २८॥ अव्यो वारे परि
प्रियो हरिर्वनेषु सीदति। रेभो वनुष्यते मती॥ ६॥ स वायु-
मिंद्रमश्विना साकं मदेन गच्छति। रणा यो अस्य धर्मभिः॥ ७॥
आ मित्रावरुणा भगं मध्वः पवंत ऊर्मयः। विदाना अस्य श-
क्मभिः॥ ८॥ अस्मभ्यं रोदसी रयिं मध्वो वाजस्य सातये। श्रवो
वसूनि सं जितं॥ ९॥ २९॥

---

॥ ८ ॥ १–९ असितः काश्यपो देवलो वा ॥ पवमानः सोमः ॥ गायत्री ॥

॥ ८ ॥ एते सोमा अभि प्रियमिंद्रस्य काममक्षरन्। वर्धंतो अ-
स्य वीर्यं॥ १॥ पुनानासश्चमूषदो गच्छंतो वायुमश्विना। ते नो
धांतु सुवीर्यं॥ २॥ इंद्रस्य सोम राधसे पुनानो हार्दि चोदय। ऋत-
स्य योनिमासदं॥ ३॥ मृजंति त्वा दश क्षिपो हिन्वंति सप्त धीतयः।
अनु विप्रा अमादिषुः॥ ४॥ देवेभ्यस्त्वा मदाय कं सृजानमति
मेष्यः। सं गोभिर्वासयामसि॥ ५॥ ३०॥ पुनानः कलशेष्वा वस्त्रा-
ण्यरुषो हरिः। परि गव्यान्यव्यत॥ ६॥ मघोन आ पवस्व नो जहि
विश्वा अप द्विषः। इंदो सखायमा विश॥ ७॥ वृष्टिं दिवः परि स्रव
द्युम्नं पृथिव्या अधि। सहो नः सोम पृत्सु धाः॥ ८॥ नृचक्षसं त्वा
वयमिंद्रपीतं स्वर्विदं। भक्षीमहि प्रजामिषं॥ ९॥ ३१॥



Digitized by Google

॥७॥ असृग्रं इंदवः पथा धर्मन् ऋतस्य सुऽश्रियः विदानाः अस्य योजनं ॥१॥ प्र धारा मध्वः अग्रियः महीः अपः वि गाहते हविः हविष्षु वंद्यः ॥२॥ प्र युजः वाचः अग्रियः वृषा अव चक्रदत् वने सद्म अभि सत्यः अध्वरः ॥३॥ परि यत् काव्या कविः नृम्णा वसानः अर्षति स्वः वाजी सिसासति ॥४॥ पवमानः अभि स्पृधः विशः राजाऽइव सीदति यत् ईं ऋण्वंति वेधसः ॥५॥२८॥ अव्यः वारे परि प्रियः हरिः वनेषु सीदति रेभः वनुष्यते मती ॥६॥ सः वायुं इंद्रं अश्विना साकं मदेन गच्छति रण यः अस्य धर्मऽभिः ॥७॥ आ मित्रावरुणा भगं मध्वः पवंते ऊर्मयः विदानाः अस्य शक्मऽभिः ॥८॥ अस्मभ्यं रोदसी रयिं मध्वः वाजस्य सातये श्रवः वसूनि सं जितं ॥९॥२९॥

---

॥८॥ एते सोमाः अभि प्रियं इंद्रस्य कामं अक्षरन् वर्धंतः अस्य वीर्यं ॥१॥ पुनानासः चमूऽसदः गच्छंतः वायुं अश्विना ते नः धांतु सुऽवीर्यं ॥२॥ इंद्रस्य सोम राधसे पुनानः हार्दि चोदय ऋतस्य योनिं आऽसदं ॥३॥ मृजंति त्वा दश क्षिपः हिन्वंति सप्त धीतयः अनु विप्राः अमादिषुः ॥४॥ देवेभ्यः त्वा मदाय कं सृजानं अति मेष्यः सं गोभिः वासयामसि ॥५॥३०॥ पुनानः कलशेषु आ वस्त्राणि अरुषः हरिः परि गव्यानि अव्यत ॥६॥ मघोनः आ पवस्व नः जहि विश्वाः अप द्विषः इंदो इति सखायं आ विश ॥७॥ वृष्टिं दिवः परि स्रव द्युम्नं पृथिव्याः अधि सहः नः सोम पृत्ऽसु धाः ॥८॥ नृऽचक्षसं त्वा वयं इंद्रऽपीतं स्वःऽविदं भक्षीमहि प्रऽजां इषं ॥९॥३१॥



Digitized by Google

॥ ९ ॥ १–९ असितः काश्यपो देवलो वा ॥ पवमानः सोमः ॥ गायत्री ॥

॥९॥ परि प्रिया दिवः कविर्वयांसि नप्त्योर्हितः। सुवानो या-
ति कविक्रतुः ॥१॥ प्रप्र क्षयाय पन्यसे जनाय जुष्टो अद्रुहे। वीत्यर्ष
चनिष्ठया ॥२॥ स सूनुर्मातरा शुचिर्जातो जाते अरोचयत्। म-
हान्मही ऋतावृधा ॥३॥ स सप्त धीतिभिर्हितो नद्यो अजिन्व-
दद्रुहः। या एकमक्षि वावृधुः ॥४॥ ता अभि संतमस्तृतं महे युवा-
नमा दधुः। इंदुमिंद्र तव व्रते ॥५॥३२॥ अभि वह्निरमर्त्यः सप्त
पश्यति वावहिः। क्रिविर्देवीरतर्पयत् ॥६॥ अवा कल्पेषु नः पुम-
स्तमांसि सोम योध्या। तानि पुनान जंघनः ॥७॥ नू नव्यसे नवी-
यसे सूक्ताय साधया पथः। प्रत्नवद्रोचया रुचः ॥८॥ पवमान
महि श्रवो गाममश्वं रासि वीरवत्। सना मेधां सना स्वः ॥९॥३३॥

---

॥ १० ॥ १–९ असितः काश्यपो देवलो वा ॥ पवमानः सोमः ॥ गायत्री ॥

॥१०॥ प्र स्वानासो रथा इवार्वंतो न श्रवस्यवः। सोमासो
राये अक्रमुः ॥१॥ हिन्वानासो रथा इव दधन्विरे गभस्त्योः।
भरासः कारिणामिव ॥२॥ राजानो न प्रशस्तिभिः सोमासो
गोभिरंजते। यज्ञो न सप्त धातृभिः ॥३॥ परि सुवानास इंदवो म-
दाय बर्हणा गिरा। सुता अर्षंति धारया ॥४॥ आपानासो विव-
स्वतो जनंत उषसो भगं। सूरा अण्वं वि तन्वते ॥५॥३४॥ अप
द्वारा मतीनां प्रत्ना ऋण्वंति कारवः। वृष्णो हरस आयवः ॥६॥
समीचीनास आसते होतारः सप्तजामयः। पदमेकस्य पिप्रतः
॥७॥ नाभा नाभिं न आ ददे चक्षुश्चित्सूर्ये सचा। कवेरपत्यमा
दुहे ॥८॥ अभि प्रिया दिवस्पदमध्वर्युभिर्गुहा हितं। सूरः पश्यति
चक्षसा ॥९॥३५॥



Digitized by Google

॥९॥ परि प्रिया दिवः कविः वयांसि नप्त्योः हितः सुवानः याति कविऽक्रतुः ॥१॥ प्रऽप्र क्षयाय पन्यसे जनाय जुष्टः अद्रुहे वीती अर्ष चनिष्ठया ॥२॥ सः सूनुः मातरा शुचिः जातः जाते अरोचयत् महान् मही ऋतऽवृधा ॥३॥ सः सप्त धीतिऽभिः हितः नद्यः अजिन्वत् अद्रुहः याः एकं अक्षि ववृधुः ॥४॥ ताः अभि संतं अस्तृतं महे युवानं आ दधुः इंदुं इंद्र तव व्रते ॥५॥३२॥ अभि वह्निः अमर्त्यः सप्त पश्यति वावहिः क्रिविः देवीः अतर्पयत् ॥६॥ अव कल्पेषु नः पुमः तमांसि सोम योध्या तानि पुनान जंघनः ॥७॥ नु नव्यसे नवीयसे सुऽउक्ताय साधय पथः प्रत्नऽवत् रोचय रुचः ॥८॥ पवमान महि श्रवः गां अश्वं रासि वीरऽवत् सन मेधां सन स्वः ॥९॥३३॥

---

॥१०॥ प्र स्वानासः रथाःऽइव अर्वंतः न श्रवस्यवः सोमासः राये अक्रमुः ॥१॥ हिन्वानासः रथाःऽइव दधन्विरे गभस्त्योः भरासः कारिणांऽइव ॥२॥ राजानः न प्रशस्तिऽभिः सोमासः गोभिः अंजते यज्ञः न सप्त धातृऽभिः ॥३॥ परि सुवानासः इंदवः मदाय बर्हणा गिरा सुताः अर्षंति धारया ॥४॥ आपानासः विवस्वतः जनंत उषसः भगं सूराः अण्वं वि तन्वते ॥५॥३४॥ अप द्वारा मतीनां प्रत्नाः ऋण्वंति कारवः वृष्णः हरसे आयवः ॥६॥ संऽईचीनासः आसते होतारः सप्तऽजामयः पदं एकस्य पिप्रतः ॥७॥ नाभा नाभिं नः आ ददे चक्षुः चित् सूर्ये सचा कवेः अपत्यं आ दुहे ॥८॥ अभि प्रिया दिवः पदं अध्वर्युऽभिः गुहा हितं सूरः पश्यति चक्षसा ॥९॥३५॥



Digitized by Google

॥ ११ ॥ १-९ असितः काश्यपो देवलो वा ॥ पवमानः सोमः ॥ गायत्री ॥

॥११॥ उपा॑स्मै गायता नरः॒ पव॑माना॒येंद॑वे । अ॒भि दे॒वाँ इय॑क्षते ॥१॥ अ॒भि ते मधु॑ना॒ पयोऽथ॑र्वाणो अशिश्रयुः । दे॒वं दे॒वाय॑ देव॒यु ॥२॥ स नः॑ पवस्व॒ शं गवे॒ शं जना॑य॒ शमर्व॑ते । शं रा॑जन्नोष॑धीभ्यः ॥३॥ ब॒भ्रवे॒ नु स्वत॑वसेऽरु॒णाय॑ दिवि॒स्पृशे॑ । सोमा॑य गा॒थम॑र्चत ॥४॥ हस्त॑च्युतेभि॒रद्रि॑भिः सु॒तं सोमं॑ पुनीतन । मधा॒वा धा॑वता॒ मधु॑ ॥५॥३६॥ नम॒सेदुप॑ सीदत द॒ध्नेद॒भि श्री॑णीतन । इंदु॒मिंद्रे॑ दधातन ॥६॥ अ॒मि॒त्र॒हा विच॑र्षणिः॒ पव॑स्व सोम॒ शं गवे॑ । दे॒वेभ्यो॑ अनुकाम॒कृत् ॥७॥ इंद्रा॑य सोम॒ पात॑वे॒ मदा॑य॒ परि॑ षिच्यसे । म॒न॒श्चिन्मन॑स॒स्पतिः॑ ॥८॥ पव॑मान सु॒वीर्यं॑ र॒यिं सो॑म रिरीहि नः । इंद॒विंद्रे॑ण नो यु॒जा ॥९॥३७॥

---

॥ १२ ॥ १-९ असितः काश्यपो देवलो वा ॥ पवमानः सोमः ॥ गायत्री ॥

॥१२॥ सोमा॑ असृग्र॒मिंद॑वः सु॒ता ऋ॒तस्य॒ साद॑ने । इंद्रा॑य॒ मधु॑मत्तमाः ॥१॥ अ॒भि विप्रा॑ अनूषत॒ गावो॑ व॒त्सं न मा॒तरः॑ । इंद्रं॒ सोम॑स्य पी॒तये॑ ॥२॥ म॒द॒च्युत्क्षे॑ति॒ साद॑ने॒ सिंधो॑रू॒र्मा वि॑प॒श्चित् । सोमो॑ गौ॒री अधि॑ श्रि॒तः ॥३॥ दि॒वो नाभा॑ विचक्ष॒णोऽव्यो॒ वारे॑ महीयते । सोमो॒ यः सु॒क्रतुः॑ क॒विः ॥४॥ यः सोमः॑ क॒लशे॒ष्वाँ अं॒तः प॒वित्र॒ आहि॑तः । तमिंदुः॒ परि॑ षस्वजे ॥५॥३८॥ प्र वाच॒मिंदु॑रिष्यति समु॒द्रस्याधि॑ वि॒ष्टपि॑ । जिन्व॒न्कोशं॑ मधु॒श्चुतं॑ ॥६॥ नित्य॑स्तोत्रो॒ वन॒स्पति॑र्धी॒नाम॒ंतः स॑ब॒र्दुघः॑ । हि॒न्वा॒नो मानु॑षा यु॒गा ॥७॥ अ॒भि प्रि॒या दि॒वस्प॒दा सोमो॑ हि॒न्वा॒नो अ॑र्षति । विप्र॑स्य॒ धार॑या क॒विः ॥८॥ आ प॑वमान धारय र॒यिं स॒हस्र॑वर्चसं । अ॒स्मे इं॑दो स्वा॒भुवं॑ ॥९॥३९॥७॥



Digitized by Google

॥११॥ उप॑ अ॒स्मै गा॒य॒त॒ न॒रः॒ पव॑मानाय इंद॑वे अ॒भि दे॒वान्
इय॑क्षते ॥१॥ अ॒भि ते॒ मधु॑ना पयः॑ अथ॑र्वाणः अ॒शि॒श्र॒युः दे॒वं दे॒-
वाय॑ दे॒व॒ऽयु ॥२॥ सः नः॒ प॒व॒स्व॒ शं गवे॑ शं जना॑य शं अर्व॑ते शं रा॒-
ज॒न् ओष॑धीभ्यः ॥३॥ ब॒भ्रवे॑ नु स्वऽत॑वसे अ॒रु॒णाय॑ दि॒वि॒ऽस्पृशे॑
सोमा॑य गा॒थं अ॒र्च॒त॒ ॥४॥ हस्त॑ऽच्युतेभिः अद्रि॑ऽभिः सु॒तं सोमं॑
पु॒नी॒त॒न॒ मधौ॑ आ धा॒व॒त॒ मधु॑ ॥५॥३६॥ नम॑सा इत् उप॑ सी॒द॒त॒
द॒ध्ना इत् अ॒भि श्री॒णी॒त॒न॒ इंदुं॑ इंद्रे॑ द॒धा॒त॒न॒ ॥६॥ अ॒मि॒त्र॒ऽहा वि-
ऽचर्ष॑णिः पव॑स्व सो॒म॒ शं गवे॑ दे॒वेभ्यः॑ अ॒नु॒का॒म॒ऽकृत् ॥७॥ इंद्रा॑य
सो॒म॒ पात॑वे मदा॑य परि॑ सि॒च्य॒से॒ म॒नः॒ऽचित् मन॑सः पतिः॑ ॥८॥
पव॑मान सु॒ऽवीर्यं॑ र॒यिं सो॒म॒ रि॒री॒हि॒ नः॒ इंदो॒ इंद्रे॑ण नः॒ यु॒जा
॥९॥३७॥

---

॥१२॥ सोमाः॑ अ॒सृ॒ग्रं॒ इंद॑वः सु॒ताः ऋ॒तस्य॑ सद॑ने इंद्रा॑य मधु॑-
मत्ऽतमाः ॥१॥ अ॒भि विप्राः॑ अ॒नू॒ष॒त॒ गावः॑ व॒त्सं न मा॒तरः॑ इंद्रं॑
सोम॑स्य पी॒तये॑ ॥२॥ म॒द॒ऽच्युत् क्षे॒ति॒ सद॑ने सिंधोः॑ ऊ॒र्मा वि॒पः॒-
ऽचित् सोमः॑ गौ॒री॒ अधि॑ श्रि॒तः ॥३॥ दि॒वः नाभा॑ वि॒ऽच॒क्ष॒णः
अव्यः॑ वारे॑ म॒ही॒य॒ते॒ सोमः॑ यः सु॒ऽक्रतुः॑ क॒विः ॥४॥ यः सोमः॑ क॒-
लशे॑षु आ अं॒तः प॒वित्रे॑ आऽहि॑तः तं इंदुः॑ परि॑ स॒स्व॒जे॒ ॥५॥३८॥
प्र वाचं॑ इंदुः॑ इ॒ष्य॒ति॒ स॒मु॒द्रस्य॑ अधि॑ वि॒ष्टपि॑ जिन्व॑न् कोशं॑ म॒धु॒-
ऽश्चुतं॑ ॥६॥ नित्य॑ऽस्तोत्रः वन॒स्पतिः॑ धी॒नां अं॒तः स॒ब॒ःऽदुघः॑
हि॒न्वा॒नः मानु॑षा यु॒गा ॥७॥ अ॒भि प्रि॒या दि॒वः प॒दा सोमः॑ हि॒-
न्वा॒नः अ॒र्ष॒ति॒ विप्र॑स्य धार॑या क॒विः ॥८॥ आ प॒व॒मा॒न॒ धा॒र॒य॒
र॒यिं स॒ह॒स्र॒ऽव॒र्च॒सं अ॒स्मे इं॒दो॒ सु॒ऽआ॒भुवं॑ ॥९॥३९॥७॥



Digitized by Google

॥ १३ ॥ १–९ असितः काश्यपो देवलो वा ॥ पवमानः सोमः ॥ गायत्री ॥

॥१३॥ सोमः पुनानो अर्षति सहस्रधारो अत्यविः। वायो-
रिंद्रस्य निष्कृतं ॥१॥ पवमानमवस्यवो विप्रमभि प्र गायत।
सुष्वाणं देववीतये॥२॥ पवंते वाजसातये सोमाः सहस्रपाजसः।
गृणाना देववीतये॥३॥ उत नो वाजसातये पवस्व बृहतीरिषः।
द्युमदिंदो सुवीर्यं॥४॥ ते नः सहस्रिणं रयिं पवंतामा सुवीर्यं। सु-
वाना देवास इंदवः॥५॥१॥ अत्या हियाना न हेतृभिरसृग्रं वा-
जसातये। वि वारमव्यमाशवः॥६॥ वाश्रा अर्षंतींदवोऽभि
वत्सं न धेनवः। दधन्विरे गभस्त्योः॥७॥ जुष्ट इंद्राय मत्सरः पव-
मान कनिक्रदत्। विश्वा अप द्विषो जहि॥८॥ अपघ्नंतो अ-
राव्णः पवमानाः स्वर्दृशः। योनावृतस्य सीदत॥९॥२॥

॥ १४ ॥ १–८ असितः काश्यपो देवलो वा ॥ पवमानः सोमः ॥ गायत्री ॥

॥१४॥ परि प्रासिष्यदत्कविः सिंधोरूर्मावधि श्रितः। कारं
बिभ्रत्पुरुस्पृहं॥१॥ गिरा यदी सबंधवः पंच व्राता अपस्यवः। प-
रिष्कृण्वंति धर्णसिं॥२॥ आदस्य शुष्मिणो रसे विश्वे देवा अम-
त्सत। यदी गोभिर्वसायते॥३॥ निरिणानो वि धावति जहच्छ-
र्याणि तान्वा। अत्रा सं जिघ्नते युजा॥४॥ नप्तीभिर्यो विवस्वतः
शुभ्रो न मामृजे युवा। गाः कृण्वानो न निर्णिजं॥५॥३॥ अति
श्रिती तिरश्चता गव्या जिगात्यण्व्या। वग्नुमियर्ति यं विदे॥६॥
अभि क्षिपः समग्मत मर्जयंतीरिषस्पतिं। पृष्ठा गृभ्णत वाजिनः
॥७॥ परि दिव्यानि मर्मृशद्विश्वानि सोम पार्थिवा। वसूनि या-
ह्यस्मयुः॥८॥४॥

॥ १५ ॥ १–८ असितः काश्यपो देवलो वा ॥ पवमानः सोमः ॥ गायत्री ॥

॥१५॥ एष धिया यात्यण्व्या शूरो रथेभिराशुभिः।



Digitized by Google

॥१३॥ सोमः पुनानः अर्षति सहस्रऽधारः अतिऽअविः वायोः इंद्रस्य निःऽकृतं ॥१॥ पवमानं अवस्यवः विप्रं अभि प्र गायत सुस्वानं देवऽवीतये ॥२॥ पवंते वाजऽसातये सोमाः सहस्रऽपाजसः गृणानाः देवऽवीतये ॥३॥ उत नः वाजऽसातये पवस्व बृहतीः इषः द्युऽमत् इंदो इति सुऽवीर्यं ॥४॥ ते नः सहस्रिणं रयिं पवंतां आ सुऽवीर्यं सुवानाः देवासः इंदवः ॥५॥१॥ अत्याः हियानाः न हेतृऽभिः असृग्रं वाजऽसातये वि वारं अव्यं आशवः ॥६॥ वाश्राः अर्षंति इंदवः अभि वत्सं न धेनवः दधन्विरे गभस्त्योः ॥७॥ जुष्टः इंद्राय मत्सरः पवमान कनिक्रदत् विश्वाः अप द्विषः जहि ॥८॥ अपऽघ्नंतः अराव्णः पवमानाः स्वःऽदृशः योनौ ऋतस्य सीदत ॥९॥२॥

---

॥१४॥ परि प्र असिस्यदत् कविः सिंधोः ऊर्मौ अधि श्रितः कारं बिभ्रत् पुरुऽस्पृहं ॥१॥ गिरा यदि सऽबंधवः पंच व्राताः अपस्यवः परिऽकृण्वंति धर्णसिं ॥२॥ आत् अस्य शुष्मिणः रसे विश्वे देवाः अमत्सत यदि गोभिः वसायते ॥३॥ निःऽरिणानः वि धावति जहत् शर्याणि तान्वा अत्र सं जिघ्नते युजा ॥४॥ नप्तीभिः यः विवस्वतः शुभ्रः न ममृजे युवा गाः कृण्वानः न निःऽनिजं ॥५॥३॥ अति श्रिती तिरश्चता गव्या जिगाति अण्व्या वग्नुं इयर्ति यं विदे ॥६॥ अभि क्षिपः सं अग्मत मर्जयंतीः इषः पतिं पृष्ठा गृभ्णत वाजिनः ॥७॥ परि दिव्यानि मर्मृशत् विश्वानि सोम पार्थिवा वसूनि याहि अस्मऽयुः ॥८॥४॥

---

॥१५॥ एषः धिया याति अण्व्या शूरः रथेभिः आशुऽभिः



Digitized by Google

गच्छन्निंद्रस्य निष्कृतं ॥१॥ एष पुरू धियायते बृहते देवतातये। यत्रामृतास आसते ॥२॥ एष हितो वि नीयतेऽन्तः शुभ्रावता पथा। यदी तुंजंति भूर्णयः ॥३॥ एष शृंगाणि दोधुवच्छिशीते यूथ्यो३ वृषा। नृम्णा दधान ओजसा ॥४॥ एष रुक्मिभिरीयते वाजी शुभ्रेभिरंशुभिः। पतिः सिंधूनां भवन् ॥५॥ एष वसूनि पिब्दना परुषा ययिवाँ अति। अव शादेषु गच्छति ॥६॥ एतं मृजंति मर्ज्यमुप द्रोणेष्वायवः। प्रचक्राणं महीरिषः ॥७॥ एतमु त्यं दश क्षिपो मृजंति सप्त धीतयः। स्वायुधं मदिंतमं ॥८॥५॥

॥ १६ ॥ १–८ असितः काश्यपो देवलो वा ॥ पवमानः सोमः ॥ गायत्री ॥

॥१६॥ प्र ते सोतार ओण्यो३ रसं मदाय घृष्वये। सर्गो न तक्त्येतशः ॥१॥ क्रत्वा दक्षस्य रथ्यमपो वसानमंधसा। गोषामण्वेषु सश्चिम ॥२॥ अनप्तमप्सु दुष्टरं सोमं पवित्र आ सृज। पुनीहींद्राय पातवे ॥३॥ प्र पुनानस्य चेतसा सोमः पवित्रे अर्षति। क्रत्वा सधस्थमासदत् ॥४॥ प्र त्वा नमोभिरिंदव इंद्र सोमा असृक्षत। महे भराय कारिणः ॥५॥ पुनानो रूपे अव्यये विश्वा अर्षन्नभि श्रियः। शूरो न गोषु तिष्ठति ॥६॥ दिवो न सानु पिप्युषी धारा सुतस्य वेधसः। वृथा पवित्रे अर्षति ॥७॥ त्वं सोम विपश्चितं तना पुनान आयुषु। अव्यो वारं वि धावसि ॥८॥६॥

॥ १७ ॥ १–८ असितः काश्यपो देवलो वा ॥ पवमानः सोमः ॥ गायत्री ॥

॥१७॥ प्र निम्नेनेव सिंधवो घ्नंतो वृत्राणि भूर्णयः। सोमा असृग्रमाशवः ॥१॥ अभि सुवानास इंदवो वृष्टयः पृथिवीमिव। इंद्रं सोमासो अक्षरन् ॥२॥ अत्यूर्मिर्मत्सरो मदः सोमः प-



Digitized by Google

गच्छन् इंद्रस्य निःऽकृतं ॥ १॥ एषः पुरु धियाऽयते बृहते देवऽता-
तये यत्र अमृतासः आसते ॥ २॥ एषः हितः वि नीयते अंतः शु-
भ्रऽवंता पथा यदि तुंजंति भूर्णयः ॥ ३॥ एषः शृंगाणि दोधुवत्
शिशीते यूथ्यः वृषा नृम्णा दधानः ओजसा ॥ ४॥ एषः रुक्मिऽभिः
ईयते वाजी शुभ्रेभिः अंशुऽभिः पतिः सिंधूनां भवन् ॥ ५॥ एषः
वसूनि पिब्दना परुषा ययिऽवान् अति अव शादेषु गच्छति
॥ ६॥ एतं मृजंति मर्ज्यं उप द्रोणेषु आयवः प्रऽचक्राणं महीः इषः
॥ ७॥ एतं ऊं इति त्यं दश क्षिपः मृजंति सप्त धीतयः सुऽआयुधं मदिन्-
ऽतमं ॥ ८॥ ५॥

---

॥ १६॥ प्र ते सोतारः ओण्योः रसं मदाय घृष्वये सर्गः न तक्ति
एतशः ॥ १॥ क्रत्वा दक्षस्य रथ्यं अपः वसानं अंधसा गोऽसां अ-
ण्वेषु सश्चिम ॥ २॥ अनप्तं अप्ऽसु दुस्तरं सोमं पवित्रे आ सृज पु-
नीहि इंद्राय पातवे ॥ ३॥ प्र पुनानस्य चेतसा सोमः पवित्रे अर्ष-
ति क्रत्वा सधऽस्थं आ असदत् ॥ ४॥ प्र त्वा नमःऽभिः इंदवः इंद्र
सोमाः असृक्षत महे भराय कारिणः ॥ ५॥ पुनानः रूपे अव्यये
विश्वाः अर्षन् अभि श्रियः शूरः न गोषु तिष्ठति ॥ ६॥ दिवः न
सानु पिप्युषी धारा सुतस्य वेधसः वृथा पवित्रे अर्षति ॥ ७॥ त्वं
सोम विपःऽचितं तना पुनानः आयुषु अव्यः वारं वि धावसि
॥ ८॥ ६॥

---

॥ १७॥ प्र निम्नेनऽइव सिंधवः घ्नंतः वृत्राणि भूर्णयः सोमाः
असृग्रं आशवः ॥ १॥ अभि सुवानासः इंदवः वृष्टयः पृथिवींऽइव
इंद्रं सोमासः अक्षरन् ॥ २॥ अति ऽऊर्मिः मत्सरः मदः सोमः प-



Digitized by Google

थिवे अर्षति। विघ्नन्रक्षांसि देवयुः ॥३॥ आ कलशेषु धावति प-
वित्रे परि षिच्यते। उक्थैर्यज्ञेषु वर्धते ॥४॥ अति त्री सोम रोचना
रोहन्न भ्राजसे दिवं। इष्णन्त्सूर्यं न चोदयः ॥५॥ अभि विप्रा अनूषत
मूर्धन्यज्ञस्य कारवः। दधाना चक्षसि प्रियं ॥६॥ तमु त्वा वाजिनं
नरो धीभिर्विप्रा अवस्यवः। मृजंति देवतातये ॥७॥ मधोर्धारा-
मनु क्षर तीव्रः सधस्थमासदः। चारुर्ऋताय पीतये ॥८॥७॥

॥ १८ ॥ १-७ असितः काश्यपो देवलो वा ॥ पवमानः सोमः ॥ गायत्री ॥

॥१८॥ परि सुवानो गिरिष्ठाः पवित्रे सोमो अक्षाः। मदेषु स-
र्वधा असि ॥१॥ त्वं विप्रस्त्वं कविर्मधु प्र जातमंधसः। मदेषु सर्वधा
असि ॥२॥ तव विश्वे सजोषसो देवासः पीतिमाशत। मदेषु सर्व-
धा असि ॥३॥ आ यो विश्वानि वार्या वसूनि हस्तयोर्दधे। मदेषु
सर्वधा असि ॥४॥ य इमे रोदसी मही सं मातरेव दोहते। मदेषु
सर्वधा असि ॥५॥ परि यो रोदसी उभे सद्यो वाजेभिरर्षति। मदेषु
सर्वधा असि ॥६॥ स शुष्मी कलशेष्वा पुनानो अचिक्रदत्। मदेषु
सर्वधा असि ॥७॥८॥

॥ १९ ॥ १-७ असितः काश्यपो देवलो वा ॥ पवमानः सोमः ॥ गायत्री ॥

॥१९॥ यत्सोम चित्रमुक्थ्यं दिव्यं पार्थिवं वसु। तन्नः पु-
नान आ भर ॥१॥ युवं हि स्थः स्वर्पती इंद्रश्च सोम गोपती।
ईशाना पिप्यतं धियः ॥२॥ वृषा पुनान आयुषु स्तनयन्नधि
बर्हिषि। हरिः सन्योनिमासदत् ॥३॥ अवावशंत धीतयो वृ-
षभस्याधि रेतसि। सूनोर्वत्सस्य मातरः ॥४॥ कुविद्वृषण्यं-
तीभ्यः पुनानो गर्भमादधत्। याः शुक्रं दुहते पयः ॥५॥ उप
शिक्षापतस्थुषो भियसमा धेहि शत्रुषु। पवमान विदा रयिं ॥६॥



Digitized by Google

विषे अर्षति विऽघ्नन् रक्षांसि देवऽयुः ॥३॥ आ कलशेषु धावति पवित्रे परि सिच्यते उक्थैः यज्ञेषु वर्धते ॥४॥ अति त्री सोम रोचना रोहन् न भ्राजसे दिवं इष्णन् सूर्यं न चोदयः ॥५॥ अभि विप्राः अनूषत मूर्धन् यज्ञस्य कारवः दधानाः चक्षसि प्रियं ॥६॥ तं ऊं त्वा वाजिनं नरः धीभिः विप्राः अवस्यवः मृजंति देवऽतातये ॥७॥ मधोः धारां अनु क्षर तीव्रः सधऽस्थं आ असदः चारुः ऋताय पीतये ॥८॥७॥

---

॥१८॥ परि सुवानः गिरिऽस्थाः पवित्रे सोमः अक्षाः मदेषु सर्वऽधाः असि ॥१॥ त्वं विप्रः त्वं कविः मधु प्र जातं अंधसः मदेषु सर्वऽधाः असि ॥२॥ तव विश्वे सऽजोषसः देवासः पीतिं आशत मदेषु सर्वऽधाः असि ॥३॥ आ यः विश्वानि वार्या वसूनि हस्तयोः दधे मदेषु सर्वऽधाः असि ॥४॥ यः इमे रोदसी मही सं मातराऽइव दोहते मदेषु सर्वऽधाः असि ॥५॥ परि यः रोदसी उभे सद्यः वाजेभिः अर्षति मदेषु सर्वऽधाः असि ॥६॥ सः शुष्मी कलशेषु आ पुनानः अचिक्रदत् मदेषु सर्वऽधाः असि ॥७॥८॥

---

॥१९॥ यत् सोम चित्रं उक्थ्यं दिव्यं पार्थिवं वसु तत् नः पुनानः आ भर ॥१॥ युवं हि स्थः स्वःऽपती इंद्रः च सोम गोऽपती ईशाना पिप्यतं धियः ॥२॥ वृषा पुनानः आयुषु स्तनयन् अधि बर्हिषि हरिः सन् योनिं आ असदत् ॥३॥ अवावशंत धीतयः वृषभस्य अधि रेतसि सूनोः वत्सस्य मातरः ॥४॥ कुवित् वृषण्यंतीभ्यः पुनानः गर्भं आऽदधत् याः शुक्रं दुहते पयः ॥५॥ उप शिक्ष अपऽतस्थुषः भियसं आ धेहि शत्रुषु पवमान विदाः रयिं ॥६॥

नि शत्रोः सोम वृष्ण्यं नि शुष्मं नि वयस्तिर। दूरे वा सतो अंति वा ॥७॥९॥

---

॥ २० ॥ १–७ असितः काश्यपो देवलो वा ॥ पवमानः सोमः ॥ गायत्री ॥

॥२०॥ प्र कविर्देववीतयेऽव्यो वारेभिरर्षति। साह्वान्विश्वा अभि स्पृधः ॥१॥ स हि ष्मा जरितृभ्य आ वाजं गोमंतमिन्वति। पवमानः सहस्रिणं॥२॥ परि विश्वानि चेतसा मृशसे पवसे मती। स नः सोम श्रवो विदः ॥३॥ अभ्यर्ष बृहद्यशो मघवद्भ्यो ध्रुवं रयिं। इषं स्तोतृभ्य आ भर ॥४॥ त्वं राजेव सुव्रतो गिरः सोमा विवेशिथ। पुनानो वह्ने अद्भुत ॥५॥ स वह्निरप्सु दुष्टरो मृज्यमानो गभस्त्योः। सोमश्चमूषु सीदति ॥६॥ क्रीळुर्मखो न मंहयुः पवित्रं सोम गच्छसि। दधत्स्तोत्रे सुवीर्यं ॥७॥१०॥

---

॥ २१ ॥ १–७ असितः काश्यपो देवलो वा ॥ पवमानः सोमः ॥ गायत्री ॥

॥२१॥ एते धावंतींदवः सोमा इंद्राय घृष्वयः। मत्सरासः स्वर्विदः ॥१॥ प्रवृण्वंतो अभियुजः सुष्वये वरिवोविदः। स्वयं स्तोत्रे वयस्कृतः ॥२॥ वृथा क्रीळंत इंदवः सधस्थमभ्येकमित्। सिंधोरूर्मा व्यक्षरन् ॥३॥ एते विश्वानि वार्या पवमानास आशत। हिता न सप्तयो रथे ॥४॥ आस्मिन्पिशंगमिंदवो दधाता वेनमादिशे। यो अस्मभ्यमरावा ॥५॥ ऋभुर्न रथ्यं नवं दधाता केतमादिशे। शुक्राः पवध्वमर्णसा ॥६॥ एत उ त्ये अवीवशन्काष्ठां वाजिनो अक्रत। सतः प्रासाविषुर्मतिं ॥७॥११॥

---

॥ २२ ॥ १–७ असितः काश्यपो देवलो वा ॥ पवमानः सोमः ॥ गायत्री ॥

॥२२॥ एते सोमास आशवो रथा इव प्र वाजिनः। सर्गाः



Digitized by Google

नि शत्रोः सोम वृष्ण्यं नि शुष्मं नि वयः तिर दूरे वा सतः अंति वा ॥ ७ ॥ ९ ॥

---

॥२०॥ प्र कविः देवऽवीतये अव्यः वारेभिः अर्षति सह्वान् विश्वाः अभि स्पृधः ॥१॥ सः हि स्म जरितृऽभ्यः आ वाजं गोऽमंतं इन्वति पवमानः सहस्रिणं ॥२॥ परि विश्वानि चेतसा मृशसे पवसे मती सः नः सोम श्रवः विदः ॥३॥ अभि अर्ष बृहत् यशः मघवत्ऽभ्यः ध्रुवं रयिं इषं स्तोतृऽभ्यः आ भर ॥४॥ त्वं राजाऽइव सुऽव्रतः गिरः सोम आ विवेशिथ पुनानः वह्ने अद्भुत ॥५॥ सः वह्निः अप्ऽसु दुस्तरः मृज्यमानः गभस्त्योः सोमः चमूषु सीदति ॥६॥ क्रीळुः मखः न मंहयुः पवित्रं सोम गच्छसि दधत् स्तोत्रे सुऽवीर्यं ॥ ७ ॥ १० ॥

---

॥२१॥ एते धावंति इंदवः सोमाः इंद्राय घृष्वयः मत्सरासः स्वःऽविदः ॥१॥ प्रऽवृण्वंतः अभिऽयुजः सुस्वये वरिवःऽविदः स्वयं स्तोत्रे वयःऽकृतः ॥२॥ वृथा क्रीळंतः इंदवः सधऽस्थं अभि एकं इत् सिंधोः ऊर्मा वि अक्षरन् ॥३॥ एते विश्वानि वार्या पवमानासः आशत हिताः न सप्तयः रथे ॥४॥ आ अस्मिन् पिशंगं इंदवः दधात वेनं आऽदिशे यः अस्मभ्यं अरावा ॥५॥ ऋभुः न रथ्यं नवं दधात केतं आऽदिशे शुक्राः पवध्वं अर्णसा ॥६॥ एते ऊं इति त्ये अवीवशन् काष्ठां वाजिनः अक्रत सतः प्र असाविषुः मतिं ॥ ७ ॥ ११ ॥

---

॥२२॥ एते सोमासः आशवः रथाःऽइव प्र वाजिनः सर्गाः



Digitized by Google

सृष्टा अहेषत ॥१॥ एते वाता इवोरवः पर्जन्यस्येव वृष्टयः। अग्नेरिव भ्रमा वृथा ॥२॥ एते पूता विपश्चितः सोमासो दध्याशिरः। विपा व्यानशुर्धियः ॥३॥ एते मृष्टा अमर्त्याः ससृवांसो न शश्रमुः। इयक्षंतः पथो रजः ॥४॥ एते पृष्ठानि रोदसोर्विप्रयंतो व्यानशुः। उतेदमुत्तमं रजः ॥५॥ तंतुं तन्वानमुत्तममनु प्रवत आशत। उतेदमुत्तमाय्यं ॥६॥ त्वं सोम पणिभ्य आ वसु गव्यानि धारयः। ततं तंतुमचिक्रदः ॥७॥१२॥

॥२३॥ १—७ असितः काश्यपो देवलो वा ॥ पवमानः सोमः ॥ गायत्री ॥

॥२३॥ सोमा असृग्रमाशवो मधोर्मदस्य धारया। अभि विश्वानि काव्या ॥१॥ अनु प्रत्नास आयवः पदं नवीयो अक्रमुः। रुचे जनंत सूर्यं ॥२॥ आ पवमान नो भरार्यो अदाशुषो गयं। कृधि प्रजावतीरिषः ॥३॥ अभि सोमास आयवः पवंते मद्यं मदं। अभि कोशं मधुश्चुतं ॥४॥ सोमो अर्षति धर्णसिर्दधान इंद्रियं रसं। सुवीरो अभिशस्तिपाः ॥५॥ इंद्राय सोम पवसे देवेभ्यः सधमाद्यः। इंदो वाजं सिषाससि ॥६॥ अस्य पीत्वा मदानामिंद्रो वृत्राण्यप्रति। जघान जघनच्च नु ॥७॥१३॥

॥२४॥ १—७ असितः काश्यपो देवलो वा ॥ पवमानः सोमः ॥ गायत्री ॥

॥२४॥ प्र सोमासो अधन्विषुः पवमानास इंदवः। श्रीणाना अप्सु मृंजत ॥१॥ अभि गावो अधन्विषुरापो न प्रवता यतीः। पुनाना इंद्रमाशत ॥२॥ प्र पवमान धन्वसि सोमेंद्राय पातवे। नृभिर्यतो वि नीयसे ॥३॥ त्वं सोम नृमादनः पवस्व चर्षणीसहे। सस्निर्यो अनुमाद्यः ॥४॥ इंदो यदद्रिभिः सुतः पवित्रं परिधावसि। अरमिंद्रस्य धाम्ने ॥५॥ पवस्व वृत्रहं-



Digitized by Google

सृष्टाः अहेषत ॥ १ ॥ एते वाताःऽइव उरवः पर्जन्यस्यऽइव वृष्टयः अग्नेःऽइव भ्रमाः वृथा ॥ २ ॥ एते पूताः विपःऽचितः सोमासः दधिऽआशिरः विपा वि आनशुः धियः ॥ ३ ॥ एते मृष्टाः अमर्त्याः ससृऽवांसः न शश्रमुः इयक्षंतः पथः रजः ॥ ४ ॥ एते पृष्ठानि रोदसोः विऽप्रयंतः वि आनशुः उत इदं उत्ऽतमं रजः ॥ ५ ॥ तंतुं तन्वानं उत्ऽतमं अनु प्रऽवतः आशत उत इदं उत्ऽतमाय्यं ॥ ६ ॥ त्वं सोम पणिऽभ्यः आ वसु गव्यानि धारयः ततं तंतुं अचिक्रदः ॥ ७ ॥ १२ ॥

---

॥ २३ ॥ सोमाः असृग्रं आशवः मधोः मदस्य धारया अभि विश्वानि काव्या ॥ १ ॥ अनु प्रत्नासः आयवः पदं नवीयः अक्रमुः रुचे जनंत सूर्यं ॥ २ ॥ आ पवमान नः भर अर्यः अदाशुषः गयं कृधि प्रजाऽवतीः इषः ॥ ३ ॥ अभि सोमासः आयवः पवंते मद्यं मदं अभि कोशं मधुऽश्चुतं ॥ ४ ॥ सोमः अर्षति धर्णसिः दधानः इंद्रियं रसं सुऽवीरः अभिशस्तिऽपाः ॥ ५ ॥ इंद्राय सोम पवसे देवेभ्यः सधऽमाद्यः इंदो इति वाजं सिसाससि ॥ ६ ॥ अस्य पीत्वा मदानां इंद्रः वृत्राणि अप्रति जघान जघनत् च नु ॥ ७ ॥ १३ ॥

---

॥ २४ ॥ प्र सोमासः अधन्विषुः पवमानासः इंदवः श्रीणानाः अप्ऽसु मृंजत ॥ १ ॥ अभि गावः अधन्विषुः आपः न प्रऽवता यतीः पुनानाः इंद्रं आशत ॥ २ ॥ प्र पवमान धन्वसि सोम इंद्राय पातवे नृऽभिः यतः वि नीयसे ॥ ३ ॥ त्वं सोम नृऽमादनः पवस्व चर्षणिऽसहे सस्निः यः अनुऽमाद्यः ॥ ४ ॥ इंदो इति यत् अद्रिऽभिः सुतः पवित्रं परिऽधावसि अरं इंद्रस्य धाम्ने ॥ ५ ॥ पवस्व वृत्रहन्-



Digitized by Google

तमो॒क्थेभि॑रनु॒माद्यः॑ । शुचिः॑ पाव॒को अद्भु॑तः ॥ ६ ॥ शुचिः॑ पाव॒क उ॑च्यते॒ सोमः॑ सु॒तस्य॒ मध्वः॑ । दे॒वा॒वीर॑घशंस॒हा ॥ ७ ॥ १४ ॥ १ ॥

॥ २५ ॥ १—६ दृळ्हच्युत आगस्त्यः ॥ पवमानः सोमः ॥ गायत्री ॥

॥ २५ ॥ पव॑स्व दक्ष॒साध॑नो दे॒वेभ्यः॑ पी॒तये॑ हरे । म॒रुद्भ्यो॑ वा॒यवे॒ मदः॑ ॥ १ ॥ पव॑मान धि॒या हि॒तो॒३॒॑ऽभि योनिं॒ कनि॑क्रदत् । धर्म॑णा वा॒युमा वि॑श ॥ २ ॥ सं दे॒वैः शो॑भते॒ वृषा॑ क॒विर्योना॑व॒धि प्रि॒यः । वृ॒त्र॒हा दे॑व॒वीत॑मः ॥ ३ ॥ विश्वा॑ रू॒पाण्या॑वि॒शन्पु॑ना॒नो या॑ति हर्य॒तः । यत्रा॒मृता॑स॒ आस॑ते ॥ ४ ॥ अ॒रु॒षो ज॒नय॒न्गिरः॒ सोमः॑ पवत आयु॒षक् । इंद्रं॒ गच्छ॑न्क॒विक्र॑तुः ॥ ५ ॥ आ प॑वस्व मदिंतम प॒वित्रं॒ धार॑या कवे । अ॒र्कस्य॒ योनि॑मा॒सदं॑ ॥ ६ ॥ १५ ॥

॥ २६ ॥ १—६ इध्मवाहो दार्ढच्युतः ॥ पवमानः सोमः ॥ गायत्री ॥

॥ २६ ॥ तम॑मृक्षंत वा॒जिन॑मु॒पस्थे॒ अदि॑ते॒रधि॑ । विप्रा॑सो॒ अण्व्या॑ धि॒या ॥ १ ॥ तं गावो॑ अ॒भ्य॑नूषत स॒हस्र॑धार॒मक्षि॑तं । इंदुं॑ ध॒र्तार॒मा दि॒वः ॥ २ ॥ तं वे॒धां मे॒धया॑ह्य॒न्पव॑मान॒मधि॒ द्यवि॑ । ध॒र्णसिं॑ भू॒रिधा॑यसं ॥ ३ ॥ तम॑ह्य॒न्भु॒रिजो॑र्धि॒या सं॒वसा॑नं वि॒वस्व॑तः । पतिं॑ वा॒चो अदा॑भ्यं ॥ ४ ॥ तं साना॒वधि॑ जा॒मयो॒ हरिं॑ हिन्वं॒त्यद्रि॑भिः । ह॒र्य॒तं भूरि॑चक्षसं ॥ ५ ॥ तं त्वा॑ हिन्वंति वे॒धसः॒ पव॑मान गिरा॒वृधं॑ । इंदु॒विंद्रा॑य मत्स॒रं ॥ ६ ॥ १६ ॥

॥ २७ ॥ १—६ नृमेधः ॥ पवमानः सोमः ॥ गायत्री ॥

॥ २७ ॥ ए॒ष क॒विर॒भिष्टु॑तः प॒वित्रे॒ अधि॑ तोशते । पु॒ना॒नो घ्नन्नप॒ स्रिधः॑ ॥ १ ॥ ए॒ष इंद्रा॑य वा॒यवे॑ स्व॒र्जित्परि॑ षिच्यते । प॒वित्रे॑ दक्ष॒साध॑नः ॥ २ ॥ ए॒ष नृभि॒र्वि नी॑यते दि॒वो मू॒र्धा



Digitized by Google

ऽतम उक्थेभिः अनुऽमाद्यः शुचिः पावकः अद्भुतः ॥ ६ ॥ शुचिः पावकः उच्यते सोमः सुतस्य मध्वः देवऽअवीः अघशंसऽहा ॥ ७ ॥ १४ ॥ १ ॥

---

॥ २५ ॥ पवस्व दक्षऽसाधनः देवेभ्यः पीतये हरे मरुत्ऽभ्यः वायवे मदः ॥ १ ॥ पवमान धिया हितः अभि योनिं कनिक्रदत् धर्मणा वायुं आ विश ॥ २ ॥ सं देवैः शोभते वृषा कविः योनौ अधि प्रियः वृत्रऽहा देवऽवीतमः ॥ ३ ॥ विश्वा रूपाणि आऽविशन् पुनानः याति हर्यतः यत्र अमृतासः आसते ॥ ४ ॥ अरुषः जनयन् गिरः सोमः पवते आयुषक् इंद्रं गच्छन् कविऽक्रतुः ॥ ५ ॥ आ पवस्व मदिन्ऽतम पवित्रं धारया कवे अर्कस्य योनिं आऽसदं ॥ ६ ॥ १५ ॥

---

॥ २६ ॥ तं अमृक्षंत वाजिनं उपऽस्थे अदितेः अधि विप्रासः अण्व्या धिया ॥ १ ॥ तं गावः अभि अनूषत सहस्रऽधारं अक्षितं इंदुं धर्तारं आ दिवः ॥ २ ॥ तं वेधां मेधया अह्यन् पवमानं अधि द्यवि धर्णसिं भूरिऽधायसं ॥ ३ ॥ तं अह्यन् भुरिजोः धिया संऽवसानं विवस्वतः पतिं वाचः अदाभ्यं ॥ ४ ॥ तं सानौ अधि जामयः हरिं हिन्वंति अद्रिऽभिः हर्यतं भूरिऽचक्षसं ॥ ५ ॥ तं त्वा हिन्वंति वेधसः पवमान गिराऽवृधं इंदो इंद्राय मत्सरं ॥ ६ ॥ १६ ॥

---

॥ २७ ॥ एषः कविः अभिऽस्तुतः पवित्रे अधि तोशते पुनानः घ्नन् अप स्रिधः ॥ १ ॥ एषः इंद्राय वायवे स्वःऽजित् परि सिच्यते पवित्रे दक्षऽसाधनः ॥ २ ॥ एषः नृऽभिः वि नीयते दिवः मूर्धा



Digitized by Google

वृषा सुतः। सोमो वनेषु विश्ववित् ॥३॥ एष गव्युरचिक्रदत्पवमानो हिरण्ययुः। इंदुः सत्राजिदस्तृतः ॥४॥ एष सूर्येण हासते पवमानो अधि द्यवि। पवित्रे मत्सरो मदः ॥५॥ एष शुष्म्यसिष्यददंतरिक्षे वृषा हरिः। पुनान इंदुरिंद्रमा ॥६॥१७॥

॥ २८ ॥ १-६ प्रियमेधः ॥ पवमानः सोमः ॥ गायत्री ॥

॥२८॥ एष वाजी हितो नृभिर्विश्वविन्मनसस्पतिः। अव्यो वारं वि धावति ॥१॥ एष पवित्रे अक्षरत्सोमो देवेभ्यः सुतः। विश्वा धामान्याविशन् ॥२॥ एष देवः शुभायतेऽधि योनावमर्त्यः। वृत्रहा देववीतमः ॥३॥ एष वृषा कनिक्रदद्दशभिर्जामिभिर्यतः। अभि द्रोणानि धावति ॥४॥ एष सूर्यमरोचयत्पवमानो विचर्षणिः। विश्वा धामानि विश्ववित् ॥५॥ एष शुष्म्यदाभ्यः सोमः पुनानो अर्षति। देवावीरघशंसहा ॥६॥१८॥

॥ २९ ॥ १-६ नृमेधः ॥ पवमानः सोमः ॥ गायत्री ॥

॥२९॥ प्रास्य धारा अक्षरन्वृष्णः सुतस्यौजसा। देवाँ अनु प्रभूषतः ॥१॥ सप्तिं मृजंति वेधसो गृणंतः कारवो गिरा। ज्योतिर्जज्ञानमुक्थ्यं ॥२॥ सुषहा सोम तानि ते पुनानाय प्रभूवसो। वर्धा समुद्रमुक्थ्यं ॥३॥ विश्वा वसूनि संजयन्पवस्व सोम धारया। इनु द्वेषांसि सध्र्यक् ॥४॥ रक्षा सु नो अररुषः स्वनात्समस्य कस्य चित्। निदो यत्र मुमुच्महे ॥५॥ एंदो पार्थिवं रयिं दिव्यं पवस्व धारया। द्युमंतं शुष्ममा भर ॥६॥१९॥

॥ ३० ॥ १-६ बिंदुः ॥ पवमानः सोमः ॥ गायत्री ॥

॥३०॥ प्र धारा अस्य शुष्मिणो वृथा पवित्रे अक्षरन्। पुनानो



Digitized by Google

वृषा सुतः सोमः वनेषु विश्वऽवित् ॥३॥ एषः गव्युः अचिक्रदत् पवमानः हिरण्यऽयुः इंदुः सत्राऽजित् अस्तृतः ॥४॥ एषः सूर्येण हासते पवमानः अधि द्यवि पवित्रे मत्सरः मदः ॥५॥ एषः शुष्मी असिस्यदत् अंतरिक्षे वृषा हरिः पुनानः इंदुः इंद्रं आ ॥६॥१७॥

॥२८॥ एषः वाजी हितः नृऽभिः विश्वऽवित् मनसः पतिः अव्यः वारं वि धावति ॥१॥ एषः पवित्रे अक्षरत् सोमः देवेभ्यः सुतः विश्वा धामानि आऽविशन् ॥२॥ एषः देवः शुभायते अधि योनौ अमर्त्यः वृत्रऽहा देवऽवीतमः ॥३॥ एषः वृषा कनिक्रदत् दशऽभिः जामिऽभिः यतः अभि द्रोणानि धावति ॥४॥ एषः सूर्यं अरोचयत् पवमानः विऽचर्षणिः विश्वा धामानि विश्वऽवित् ॥५॥ एषः शुष्मी अदाभ्यः सोमः पुनानः अर्षति देवऽअवीः अघशंसऽहा ॥६॥१८॥

॥२९॥ प्र अस्य धाराः अक्षरन् वृष्णः सुतस्य ओजसा देवान् अनु प्रऽभूषतः ॥१॥ सप्तिं मृजंति वेधसः गृणंतः कारवः गिरा ज्योतिः जज्ञानं उक्थ्यं ॥२॥ सुऽसहा सोम तानि ते पुनानाय प्रभुऽवसो इति प्रभुऽवसो वर्ध समुद्रं उक्थ्यं ॥३॥ विश्वा वसूनि संऽजयन् पवस्व सोम धारया इनु द्वेषांसि सध्र्यक् ॥४॥ रक्ष सु नः अररुषः स्वनात् समस्य कस्य चित् निदः यत्र मुमुच्महे ॥५॥ आ इंदो इति पार्थिवं रयिं दिव्यं पवस्व धारया द्युऽमंतं शुष्मं आ भर ॥६॥१९॥

॥३०॥ प्र धाराः अस्य शुष्मिणः वृथा पवित्रे अक्षरन् पुनानः



Digitized by Google

वाचमिष्यति ॥१॥ इंदुर्हियानः सोतृभिर्मृज्यमानः कनिक्रदत् । इयर्ति वग्नुमिंद्रियं ॥२॥ आ नः शुष्मं नृषाह्यं वीरवंतं पुरुस्पृहं । पवस्व सोम धारया ॥३॥ प्र सोमो अति धारया पवमानो असिष्यदत् । अभि द्रोणान्यासदं ॥४॥ अप्सु त्वा मधुमत्तमं हरिं हिन्वंत्यद्रिभिः । इंदविंद्राय पीतये ॥५॥ सुनोता मधुमत्तमं सोममिंद्राय वज्रिणे । चारुं शर्धाय मत्सरं ॥६॥२०॥

---

॥३१॥ १—६ गोतमः ॥ पवमानः सोमः ॥ गायत्री ॥

॥३१॥ प्र सोमासः स्वाध्य१ः पवमानासो अक्रमुः । रयिं कृण्वंति चेतनं ॥१॥ दिवस्पृथिव्या अधि भवेंदो द्युम्नवर्धनः । भवा वाजानां पतिः ॥२॥ तुभ्यं वाता अभिप्रियस्तुभ्यमर्षंति सिंधवः । सोम वर्धंति ते महः ॥३॥ आ प्यायस्व समेतु ते विश्वतः सोम वृष्ण्यं । भवा वाजस्य संगथे ॥४॥ तुभ्यं गावो घृतं पयो बभ्रो दुदुह्रे अक्षितं । वर्षिष्ठे अधि सानवि ॥५॥ स्वायुधस्य ते सतो भुवनस्य पते वयं । इंदो सखित्वमुश्मसि ॥६॥२१॥

---

॥३२॥ १—६ श्यावाश्वः ॥ पवमानः सोमः ॥ गायत्री ॥

॥३२॥ प्र सोमासो मदच्युतः श्रवसे नो मघोनः । सुता विदथे अक्रमुः ॥१॥ आदीं त्रितस्य योषणो हरिं हिन्वंत्यद्रिभिः । इंदुमिंद्राय पीतये ॥२॥ आदीं हंसो यथा गणं विश्वस्यावीवशन्मतिं । अत्यो न गोभिरज्यते ॥३॥ उभे सोमावचाकशन्मृगो न तक्तो अर्षसि । सीदन्नृतस्य योनिमा ॥४॥ अभि गावो अनूषत योषा जारमिव प्रियं । अगन्नाजिं यथा हितं ॥५॥ अस्मे धेहि द्युमद्यशो मघवद्भ्यश्च मह्यं च । सनिं मेधामुत श्रवः ॥६॥२२॥



Digitized by Google

वाचं इष्यति ॥ १ ॥ इंदुः हियानः सोतृऽभिः मृज्यमानः कनिक्रदत् इयर्ति वग्नुं इंद्रियं ॥ २ ॥ आ नः शुष्मं नृऽसह्यं वीरऽवंतं पुरुऽस्पृहं पवस्व सोम धारया ॥ ३ ॥ प्र सोमः अति धारया पवमानः असिस्यदत् अभि द्रोणानि आऽसदं ॥ ४ ॥ अप्ऽसु त्वा मधुमत्ऽतमं हरिं हिन्वंति अद्रिऽभिः इंदो इंद्राय पीतये ॥ ५ ॥ सुनोत मधुमत्ऽतमं सोमं इंद्राय वज्रिणे चारुं शर्धाय मत्सरं ॥ ६ ॥ २० ॥

---

॥ ३१ ॥ प्र सोमासः सुऽआध्यः पवमानासः अक्रमुः रयिं कृण्वंति चेतनं ॥ १ ॥ दिवः पृथिव्याः अधि भव इंदो द्युम्नऽवर्धनः भव वाजानां पतिः ॥ २ ॥ तुभ्यं वाताः अभिऽप्रियः तुभ्यं अर्षंति सिंधवः सोम वर्धंति ते महः ॥ ३ ॥ आ प्यायस्व सं एतु ते विश्वतः सोम वृष्ण्यं भव वाजस्य संऽगथे ॥ ४ ॥ तुभ्यं गावः घृतं पयः बभ्रो दुदुह्रे अक्षितं वर्षिष्ठे अधि सानवि ॥ ५ ॥ सुऽआयुधस्य ते सतः भुवनस्य पते वयं इंदो सखिऽत्वं उश्मसि ॥ ६ ॥ २१ ॥

---

॥ ३२ ॥ प्र सोमासः मदऽच्युतः श्रवसे नः मघोनः सुताः विदथे अक्रमुः ॥ १ ॥ आत् ईं त्रितस्य योषणः हरिं हिन्वंति अद्रिऽभिः इंदुं इंद्राय पीतये ॥ २ ॥ आत् ईं हंसः यथा गणं विश्वस्य अवीवशत् मतिं अत्यः न गोभिः अज्यते ॥ ३ ॥ उभे सोम अवऽचाकशत् मृगः न तक्तः अर्षसि सीदन् ऋतस्य योनिं आ ॥ ४ ॥ अभि गावः अनूषत योषा जारंऽइव प्रियं अगन् आजिं यथा हितं ॥ ५ ॥ अस्मे धेहि द्युऽमत् यशः मघवत्ऽभ्यः च मह्यं च सनिं मेधां उत श्रवः ॥ ६ ॥ २२ ॥



Digitized by Google

॥ ३३ ॥ १—६ त्रितः ॥ पवमानः सोमः ॥ गायत्री ॥

॥३३॥ प्र सोमा॑सो विप॒श्चितो॒ऽपां न य॑न्त्यू॒र्मय॑ः। वना॑नि म॒हिषा॑ इव ॥१॥ अ॒भि द्रोणा॑नि ब॒भ्रव॑ः शु॒क्रा ऋ॒तस्य॒ धार॑या। वाजं॒ गोम॑न्तमक्षरन् ॥२॥ सु॒ता इन्द्रा॑य वा॒यवे॒ वरु॑णाय म॒रुद्भ्य॑ः। सोमा॑ अर्षन्ति॒ विष्ण॑वे ॥३॥ ति॒स्रो वाच॒ उदी॑रते॒ गावो॑ मिमन्ति धे॒नव॑ः। हरि॑रेति॒ कनि॑क्रदत् ॥४॥ अ॒भि ब्रह्मी॑रनूषत य॒ह्वीर्ऋ॒तस्य॑ मा॒तर॑ः। म॒र्मृ॒ज्यन्ते॑ दि॒वः शिशु॑म् ॥५॥ रा॒यः स॑मु॒द्रांश्च॒तुरो॒ऽस्मभ्यं॑ सोम वि॒श्वत॑ः। आ प॑वस्व सह॒स्रिण॑ः ॥६॥२३॥

॥ ३४ ॥ १—६ त्रितः ॥ पवमानः सोमः ॥ गायत्री ॥

॥३४॥ प्र सु॑वा॒नो धार॑या॒ तनेन्दु॑र्हिन्वा॒नो अ॑र्षति। रु॒जद्दृ॒ळ्हा व्योज॑सा ॥१॥ सु॒त इन्द्रा॑य वा॒यवे॒ वरु॑णाय म॒रुद्भ्य॑ः। सोमो॑ अर्षति॒ विष्ण॑वे ॥२॥ वृषा॑णं॒ वृष॑भिर्य॒तं सु॒न्वन्ति॒ सोम॒मद्रि॑भिः। दु॒हन्ति॒ शक्म॑ना॒ पय॑ः ॥३॥ भुव॑त्त्रि॒तस्य॒ मर्ज्यो॒ भुव॒दिन्द्रा॑य मत्स॒रः। सं रू॒पैर॑ज्यते॒ हरि॑ः ॥४॥ अ॒भीमृ॒तस्य॑ वि॒ष्टपं॑ दु॒हते॒ पृश्नि॑मातरः। चारु॑ प्रि॒यत॑मं ह॒विः ॥५॥ समे॑न॒मह्रु॑ता इ॒मा गिरो॑ अर्षन्ति स॒स्रुत॑ः। धे॒नूर्वा॒श्रो अ॑वीवशत् ॥६॥२४॥

॥ ३५ ॥ १—६ प्रभूवसुः ॥ पवमानः सोमः ॥ गायत्री ॥

॥३५॥ आ न॑ः पवस्व॒ धार॑या॒ पव॑मान र॒यिं पृ॒थुम्। यया॒ ज्योति॑र्वि॒दासि॑ नः ॥१॥ इन्दो॑ समुद्रमीङ्खय॒ पव॑स्व विश्वमेजय। रा॒यो ध॒र्ता न॒ ओज॑सा ॥२॥ त्वया॑ वी॒रेण॑ वीरवो॒ऽभि ष्या॑म पृतन्य॒तः। क्षरा॑ णो अ॒भि वार्य॑म् ॥३॥ प्र वाज॒मिन्दु॑रिष्यति॒ सिषा॑सन्वाज॒सा ऋषि॑ः। व्र॒ता वि॒दान॒ आयु॑धा ॥४॥ तं गी॒र्भिर्वा॑च॒मीङ्ख॒यं पु॑ना॒नं वा॑सयामसि। सोम॒ं जन॑स्य॒ गोप॑तिम् ॥५॥ विश्वो॒ यस्य॑ व्र॒ते जनो॑ दा॒धार॒ धर्म॑ण॒स्पते॑ः। पु॒ना॒नस्य॑ प्र॒भूव॑सोः ॥६॥२५॥



Digitized by Google

॥३३॥ प्र सोमा॑सः वि॒प॒ऽचित॑ः अ॒पां न य॑न्ति॒ ऊ॒र्मय॑ः वना॑-
नि म॒हि॒षाःऽइ॑व ॥१॥ अ॒भि द्रोणा॑नि ब॒भ्रव॑ः शु॒क्राः ऋ॒तस्य॑
धार॑या वाजं॑ गोऽम॑न्तं अ॒क्ष॒र॒न् ॥२॥ सु॒ताः इन्द्रा॑य वा॒यवे॑ वरु॑णाय
म॒रुत्ऽभ्यः॑ सोमा॑ः अ॒र्ष॒न्ति॒ विष्ण॑वे ॥३॥ ति॒स्रः वाच॑ः उत् ई॒र॒ते
गाव॑ः मि॒म॒न्ति॒ धे॒नव॑ः हरि॑ः ए॒ति॒ कनि॑क्रदत् ॥४॥ अ॒भि ब्रह्मी॑ः
अ॒नू॒ष॒त य॒ह्वीः ऋ॒तस्य॑ मा॒तर॑ः म॒र्मृ॒ज्यन्ते॑ दि॒वः शिशु॑म् ॥५॥ रा॒यः
स॒मु॒द्रान् च॒तुर॑ः अ॒स्मभ्यं॑ सो॒म॒ वि॒श्वत॑ः आ प॒व॒स्व॒ स॒ह॒स्रिण॑ः ॥६॥
॥२३॥

---

॥३४॥ प्र सु॒वा॒नः धार॑या तना॑ इन्दु॑ः हि॒न्वा॒नः अ॒र्ष॒ति॒ रु॒जत्
दृ॒ळ्हा वि ओज॑सा ॥१॥ सु॒तः इन्द्रा॑य वा॒यवे॑ वरु॑णाय म॒रुत्ऽभ्यः॑
सोम॑ः अ॒र्ष॒ति॒ विष्ण॑वे ॥२॥ वृषा॑णं वृष॑ऽभिः य॒तं सु॒न्वन्ति॑ सोमं॑
अद्रि॑ऽभिः दु॒हन्ति॑ शक्म॑ना पय॑ः ॥३॥ भुव॑त् त्रि॒तस्य॑ मर्ज्य॑ः भुव॑त्
इन्द्रा॑य म॒त्स॒रः सं रू॒पैः अ॒ज्य॒ते॒ हरि॑ः ॥४॥ अ॒भि ई॒म् ऋ॒तस्य॑ वि॒ष्टपं॑
दु॒ह॒ते पृश्नि॑ऽमातरः चारु॑ प्रि॒यऽत॑मं ह॒विः ॥५॥ सं ए॒न॒म् अह्रु॑ताः
इ॒माः गिर॑ः अ॒र्ष॒न्ति॒ स॒ऽसु॒त॑ः धे॒नूः वा॒श्रः अ॒वी॒व॒श॒त् ॥६॥२४॥

---

॥३५॥ आ नः॒ प॒व॒स्व॒ धार॑या पव॑मान र॒यिं पृ॒थुं यया॑ ज्योति॑ः
वि॒दासि॑ नः ॥१॥ इन्दो॒ इति॑ स॒मु॒द्र॒ऽई॒ङ्ख॒य॒ पव॑स्व वि॒श्व॒ऽए॒ज॒य॒ रा॒यः
ध॒र्ता नः॒ ओज॑सा ॥२॥ त्वया॑ वी॒रेण॑ वी॒र॒ऽव॒ः अ॒भि स्या॒म॒ पृ॒त॒न्य॒तः
क्षर॑ नः॒ अ॒भि वार्य॑म् ॥३॥ प्र वाजं॑ इन्दु॑ः इ॒ष्य॒ति॒ सिसा॑सन् वा॒ज॒ऽसाः
ऋषि॑ः व्र॒ता वि॒दा॒नः आयु॑धा ॥४॥ तं गोः॒ऽभिः॑ वा॒चं॒ऽई॒ङ्ख॒यं॑ पु॒-
ना॒नं वा॒स॒या॒म॒सि॒ सोमं॑ जन॑स्य गोऽप॑तिम् ॥५॥ विश्व॑ः यस्य॑ व्र॒ते
जन॑ः दा॒धार॑ धर्म॑णः पते॑ः पु॒ना॒नस्य॑ प्र॒भु॒ऽवसो॑ः ॥६॥२५॥



Digitized by Google

॥ ३६ ॥ १-६ प्रभूवसुः ॥ पवमानः सोमः ॥ गायत्री ॥

॥३६॥ असर्जि रथ्यो यथा पवित्रे चम्वोः सुतः। कार्ष्मन्वाजी न्यक्रमीत्॥१॥ स वह्निः सोम जागृविः पवस्व देववीरति। अभि कोशं मधुश्चुतं॥२॥ स नो ज्योतींषि पूर्व्य पवमान वि रोचय। क्रत्वे दक्षाय नो हिनु॥३॥ शुंभमान ऋतायुभिर्मृज्यमानो गभस्त्योः। पवते वारे अव्यये॥४॥ स विश्वा दाशुषे वसु सोमो दिव्यानि पार्थिवा। पवतामांतरिक्ष्या॥५॥ आ दिवस्पृष्ठमश्वयुर्गव्ययुः सोम रोहसि। वीरयुः शवसस्पते॥६॥२६॥

---

॥ ३७ ॥ १-६ रहूगणः ॥ पवमानः सोमः ॥ गायत्री ॥

॥३७॥ स सुतः पीतये वृषा सोमः पवित्रे अर्षति। विघ्नन्रक्षांसि देवयुः॥१॥ स पवित्रे विचक्षणो हरिरर्षति धर्णसिः। अभि योनिं कनिक्रदत्॥२॥ स वाजी रोचना दिवः पवमानो वि धावति। रक्षोहा वारमव्ययं॥३॥ स त्रितस्याधि सानवि पवमानो अरोचयत्। जामिभिः सूर्यं सह॥४॥ स वृत्रहा वृषा सुतो वरिवोविददाभ्यः। सोमो वाजमिवासरत्॥५॥ स देवः कविनेषितो३ऽभि द्रोणानि धावति। इंदुरिंद्राय मंहना॥६॥२७॥

---

॥ ३८ ॥ १-६ रहूगणः ॥ पवमानः सोमः ॥ गायत्री ॥

॥३८॥ एष उ स्य वृषा रथोऽव्यो वारेभिरर्षति। गच्छन्वाजं सहस्रिणं॥१॥ एतं त्रितस्य योषणो हरिं हिन्वंत्यद्रिभिः। इंदुमिंद्राय पीतये॥२॥ एतं त्यं हरितो दश मर्मृज्यंते अपस्युवः। याभिर्मदाय शुंभते॥३॥ एष स्य मानुषीष्वा श्येनो न विक्षु सीदति। गच्छंजारो न योषितं॥४॥ एष स्य मद्यो रसोऽव चष्टे दिवः शिशुः। य इंदुर्वारमाविशत्॥५॥ एष स्य पीतये सुतो हरिरर्षति धर्णसिः। क्रंदन्योनिमभि प्रियं॥६॥२८॥



Digitized by Google

॥३६॥ असर्जि रथ्यः यथा पवित्रे चम्वोः सुतः कार्ष्मन् वाजी नि अक्रमीत् ॥१॥ सः वह्निः सोम जागृविः पवस्व देवऽवीः अति अभि कोशं मधुऽश्चुतं ॥२॥ सः नः ज्योतींषि पूर्व्य पवमान वि रोचय क्रत्वे दक्षाय नः हिनु ॥३॥ शुंभमानः ऋतयुऽभिः मृज्यमानः गभस्त्योः पवते वारे अव्यये ॥४॥ सः विश्वा दाशुषे वसु सोमः दिव्यानि पार्थिवा पवतां आ अंतरिक्ष्या ॥५॥ आ दिवः पृष्ठं अश्वऽयुः गव्यऽयुः सोम रोहसि वीरऽयुः शवसः पते ॥६॥२६॥

---

॥३७॥ सः सुतः पीतये वृषा सोमः पवित्रे अर्षति विऽघ्नन् रक्षांसि देवऽयुः ॥१॥ सः पवित्रे विऽचक्षणः हरिः अर्षति धर्णसिः अभि योनिं कनिक्रदत् ॥२॥ सः वाजी रोचना दिवः पवमानः वि धावति रक्षःऽहा वारं अव्ययं ॥३॥ सः त्रितस्य अधि सानवि पवमानः अरोचयत् जामिऽभिः सूर्यं सह ॥४॥ सः वृत्रऽहा वृषा सुतः वरिवःऽवित् अदाभ्यः सोमः वाजंऽइव असरत् ॥५॥ सः देवः कविना इषितः अभि द्रोणानि धावति इंदुः इंद्राय मंहना ॥६॥२७॥

---

॥३८॥ एषः ऊं इति स्यः वृषा रथः अव्यः वारेभिः अर्षति गच्छन् वाजं सहस्रिणं ॥१॥ एतं त्रितस्य योषणः हरिं हिन्वंति अद्रिऽभिः इंदुं इंद्राय पीतये ॥२॥ एतं त्यं हरितः दश मर्मृज्यंते अपस्युवः याभिः मदाय शुंभते ॥३॥ एषः स्यः मानुषीषु आ श्येनः न विक्षु सीदति गच्छन् जारः न योषितं ॥४॥ एषः स्यः मद्यः रसः अव चष्टे दिवः शिशुः यः इंदुः वारं आ अविशत् ॥५॥ एषः स्यः पीतये सुतः हरिः अर्षति धर्णसिः क्रंदन् योनिं अभि प्रियं ॥६॥२८॥



Digitized by Google

॥ ३९ ॥ १—६ बृहन्मतिः ॥ पवमानः सोमः ॥ गायत्री ॥

॥३९॥ आशुरर्ष बृहन्मते परि प्रियेण धाम्ना। यत्र देवा इति ब्रवन्॥१॥ परिष्कृण्वन्ननिष्कृतं जनाय यातयन्निषः। वृष्टिं दिवः परि स्रव ॥२॥ सुत एति पवित्र आ त्विषिं दधान ओजसा। विचक्षाणो विरोचयन्॥३॥ अयं स यो दिवस्परि रघुयामा पवित्र आ। सिंधोरूर्मा व्यक्षरत् ॥४॥ आविवासन्परावतो अथो अर्वावतः सुतः। इंद्राय सिच्यते मधु ॥५॥ समीचीना अनूषत हरिं हिन्वंत्यद्रिभिः। योनावृतस्य सीदत ॥६॥२९॥

---

॥ ४० ॥ १—६ बृहन्मतिः ॥ पवमानः सोमः ॥ गायत्री ॥

॥४०॥ पुनानो अक्रमीदभि विश्वा मृधो विचर्षणिः। शुंभंति विप्रं धीतिभिः॥१॥ आ योनिमरुणो रुहद्गमदिंद्रं वृषा सुतः। ध्रुवे सदसि सीदति ॥२॥ नू नो रयिं महामिंदोऽस्मभ्यं सोम विश्वतः। आ पवस्व सहस्रिणं॥३॥ विश्वा सोम पवमान द्युम्नानींदवा भर। विदाः सहस्रिणीरिषः॥४॥ स नः पुनान आ भर रयिं स्तोत्रे सुवीर्यं। जरितुर्वर्धया गिरः॥५॥ पुनान इंदवा भर सोम द्विबर्हसं रयिं। वृषन्निंदो न उक्थ्यं ॥६॥३०॥

---

॥ ४१ ॥ १—६ मेध्यातिथिः ॥ पवमानः सोमः ॥ गायत्री ॥

॥४१॥ प्र ये गावो न भूर्णयस्त्वेषा अयासो अक्रमुः। घ्नंतः कृष्णामप त्वचं ॥१॥ सुवितस्य मनामहेऽति सेतुं दुराव्यं। साह्वांसो दस्युमव्रतं ॥२॥ शृण्वे वृष्टेरिव स्वनः पवमानस्य शुष्मिणः। चरंति विद्युतो दिवि॥३॥ आ पवस्व महीमिषं गोमदिंदो हिरण्यवत्। अश्वावद्वाजवत्सुतः ॥४॥ स पवस्व विचर्षण आ मही रोदसी पृण। उषाः सूर्यो न रश्मिभिः ॥५॥



Digitized by Google

॥३९॥ आशुः अर्ष बृहत्ऽमते परि प्रियेण धाम्ना यत्र देवाः इति ब्रवन् ॥१॥ परिऽकृण्वन् अनिःऽकृतं जनाय यातयन् इषः वृष्टिं दिवः परि स्रव ॥२॥ सुतः एति पवित्रे आ त्विषिं दधानः ओजसा विऽचक्षाणः विऽरोचयन् ॥३॥ अयं सः यः दिवः परि रघुऽयामा पवित्रे आ सिंधोः ऊर्मा वि अक्षरत् ॥४॥ आऽविवासन् पराऽवतः अथो इति अर्वाऽवतः सुतः इंद्राय सिच्यते मधु ॥५॥ संऽईचीनाः अनूषत हरिं हिन्वंति अद्रिऽभिः योनौ ऋतस्य सीदत ॥६॥२९॥

---

॥४०॥ पुनानः अक्रमीत् अभि विश्वाः मृधः विऽचर्षणिः शुंभंति विप्रं धीतिऽभिः ॥१॥ आ योनिं अरुणः रुहत् गमत् इंद्रं वृषा सुतः ध्रुवे सदसि सीदति ॥२॥ नु नः रयिं महां इंदो इति अस्मभ्यं सोम विश्वतः आ पवस्व सहस्रिणं ॥३॥ विश्वा सोम पवमान द्युम्नानि इंदो इति आ भर विदाः सहस्रिणीः इषः ॥४॥ सः नः पुनानः आ भर रयिं स्तोत्रे सुऽवीर्यं जरितुः वर्धय गिरः ॥५॥ पुनानः इंदो इति आ भर सोम द्विऽबर्हसं रयिं वृषन् इंदो इति नः उक्थ्यं ॥६॥३०॥

---

॥४१॥ प्र ये गावः न भूर्णयः त्वेषाः अयासः अक्रमुः घ्नंतः कृष्णां अप त्वचं ॥१॥ सुवितस्य मनामहे अति सेतुं दुःऽआव्यं सह्वांसः दस्युं अव्रतं ॥२॥ शृण्वे वृष्टेःऽइव स्वनः पवमानस्य शुष्मिणः चरंति विऽद्युतः दिवि ॥३॥ आ पवस्व महीं इषं गोऽमत् इंदो इति हिरण्यऽवत् अश्वऽवत् वाजऽवत् सुतः ॥४॥ सः पवस्व विऽचर्षणे आ मही इति रोदसी इति पृण उषाः सूर्यः न रश्मिऽभिः ॥५॥



Digitized by Google

परि णः शर्मयंत्या धारया सोम विश्वतः। सरा रसेव विष्टपं ॥ ६ ॥ ३१ ॥

॥ ४२ ॥ १—६ मेध्यातिथिः ॥ पवमानः सोमः ॥ गायत्री ॥

॥४२॥ जनयन्रोचना दिवो जनयन्नप्सु सूर्यं। वसानो गा अपो हरिः ॥१॥ एष प्रत्नेन मन्मना देवो देवेभ्यस्परि। धारया पवते सुतः ॥२॥ वावृधानाय तूर्वये पवंते वाजसातये। सोमाः सहस्रपाजसः ॥३॥ दुहानः प्रत्नमित्पयः पवित्रे परि षिच्यते। क्रंदन्देवाँ अजीजनत् ॥४॥ अभि विश्वानि वार्याभि देवाँ ऋतावृधः। सोमः पुनानो अर्षति ॥५॥ गोमन्नः सोम वीरवदश्वावद्वाजवत्सुतः। पवस्व बृहतीरिषः ॥६॥ ३२ ॥

॥ ४३ ॥ १—६ मेध्यातिथिः ॥ पवमानः सोमः ॥ गायत्री ॥

॥४३॥ यो अत्य इव मृज्यते गोभिर्मदाय हर्यतः। तं गीर्भिर्वासयामसि ॥१॥ तं नो विश्वा अवस्युवो गिरः शुंभंति पूर्वथा। इंदुमिंद्राय पीतये ॥२॥ पुनानो याति हर्यतः सोमो गीर्भिः परिष्कृतः। विप्रस्य मेध्यातिथेः ॥३॥ पवमान विदा रयिमस्मभ्यं सोम सुश्रियं। इंदो सहस्रवर्चसं ॥४॥ इंदुरत्यो न वाजसृत्कनिक्रंति पवित्र आ। यदक्षारति देवयुः ॥५॥ पवस्व वाजसातये विप्रस्य गृणतो वृधे। सोम रास्व सुवीर्यं ॥६॥ ३३ ॥ ८ ॥ ६ ॥

॥ ४४ ॥ १—६ अयास्यः ॥ पवमानः सोमः ॥ गायत्री ॥

॥४४॥ प्र ण इंदो महे तन ऊर्मिं न बिभ्रदर्षसि। अभि देवाँ अयास्यः ॥१॥ मती जुष्टो धिया हितः सोमो हिन्वे परावति। विप्रस्य धारया कविः ॥२॥ अयं देवेषु जागृविः सुत एति पवित्र आ। सोमो याति विचर्षणिः ॥३॥ स नः पवस्व वा-



Digitized by Google

परि॑ नः॒ शर्म॒ऽयंत्या॒ धार॑या सो॒म॒ वि॒श्वतः॑ सर॑ र॒साऽइ॑व वि॒ष्टपं॑ ॥६॥३१॥

॥४२॥ ज॒नय॑न् रो॒च॒ना दि॒वः ज॒नय॑न् अ॒प्ऽसु सूर्यं॑ वसा॑नः गाः अ॒पः हरि॑ः ॥१॥ ए॒षः प्र॒त्नेन॑ मन्म॑ना दे॒वः दे॒वेभ्यः॑ परि॑ धार॑या पवते सु॒तः ॥२॥ व॒वृ॒धा॒नाय॑ तूर्व॑ये पव॑ते वाज॑ऽसातये सोमः॑ स॒हस्र॑ऽपाजसः ॥३॥ दु॒हा॒नः प्र॒त्नं इत् पयः॑ प॒वित्रे॑ परि॑ सि॒च्य॒ते क्रंद॑न् दे॒वान् अ॒जी॒ज॒न॒त् ॥४॥ अ॒भि विश्वा॑नि वार्या॑ अ॒भि दे॒वान् ऋ॒त॒ऽवृधः॑ सोमः॑ पु॒ना॒नः अ॒र्ष॒ति॒ ॥५॥ गोऽम॑त् नः॒ सो॒म॒ वी॒र॒ऽव॑त् अश्व॑ऽवत् वाज॑ऽवत् सु॒तः पव॑स्व बृ॒ह॒तीः इषः॑ ॥६॥३२॥

॥४३॥ यः अत्यः॑ऽइव मृ॒ज्यते॑ गोभिः॑ मदा॑य ह॒र्य॒तः तं गीः॒ऽभिः वा॒स॒या॒म॒सि॒ ॥१॥ तं नः॒ विश्वाः॑ अ॒व॒स्युवः॑ गिरः॑ शुं॒भं॒ति॒ पू॒र्व॒ऽथा इंदु॑ इंद्रा॑य पी॒तये॑ ॥२॥ पु॒ना॒नः या॒ति॒ ह॒र्य॒तः सोमः॑ गीः॒ऽभिः परि॑ऽकृतः विप्र॑स्य मेध्य॑ऽअतिथेः ॥३॥ पव॑मान वि॒दाः र॒यिं अ॒स्मभ्यं॑ सो॒म॒ सु॒ऽश्रियं॑ इंदो॒ इति॑ स॒हस्र॑ऽवर्चसं ॥४॥ इंदुः॑ अत्यः॑ न वा॒ज॒ऽसृत् कनि॑क्रंति प॒वित्रे॑ आ यत् अक्षाः॑ अति॑ दे॒व॒ऽयुः ॥५॥ पव॑स्व वाज॑ऽसातये विप्र॑स्य गृ॒ण॒तः वृ॒धे सोम॑ रास्व॑ सु॒ऽवीर्यं॑ ॥६॥३३॥८॥६॥

॥४४॥ प्र नः॒ इं॒दो॒ इति॑ म॒हे तने॑ ऊ॒र्मिं न बिभ्र॑त् अ॒र्ष॒सि॒ अ॒भि दे॒वान् अ॒यास्यः॑ ॥१॥ म॒ती जु॒ष्टः धि॒या हि॒तः सोमः॑ हि॒न्वे॒ प॒रा॒ऽवति॑ विप्र॑स्य धार॑या क॒विः ॥२॥ अ॒यं दे॒वेषु॑ जागृ॑विः सु॒तः ए॒ति॒ प॒वित्रे॑ आ सोमः॑ या॒ति॒ वि॒ऽच॑र्षणिः ॥३॥ सः नः॒ पव॒स्व॒ वा॒-



Digitized by Google

जयुर्यंक्राणयारमध्वरं। बर्हिष्मौं आ विवासति॥४॥ स नो भगाय वायवे विप्रवीरः सदावृधः। सोमो देवेष्वा यमत्॥५॥ स नो अद्य वसुत्तये क्रतुविद्गातुवित्तमः। वाजं जेषि श्रवो बृहत्॥६॥१॥

॥ ४५ ॥ १—६ अयास्यः ॥ पवमानः सोमः ॥ गायत्री ॥

॥४५॥ स पवस्व मदाय कं नृचक्षा देववीतये। इंदविंद्राय पीतये॥१॥ स नो अर्षाभि दूत्यं१ त्वमिंद्राय तोशसे। देवांत्सखिभ्य आ वरं॥२॥ उत त्वामरुणं वयं गोभिरंज्मो मदाय कं। वि नो राये दुरो वृधि॥३॥ अत्यू पवित्रमक्रमीद्वाजी धुरं न यामनि। इंदुर्देवेषु पत्यते॥४॥ समी सखायो अस्वरन्वने क्रीळंतमत्यविं। इंदुं नावा अनूषत॥५॥ तया पवस्व धारया यया पीतो विचक्षसे। इंदो स्तोत्रे सुवीर्यं॥६॥२॥

॥ ४६ ॥ १—६ अयास्यः ॥ पवमानः सोमः ॥ गायत्री ॥

॥४६॥ असृग्रन्देववीतयेऽत्यासः कृत्व्या इव। क्षरंतः पर्वतावृधः॥१॥ परिष्कृतास इंदवो योषेव पित्र्यावती। वायुं सोमा असृक्षत॥२॥ एते सोमास इंदवः प्रयस्वंतश्चमू सुताः। इंद्रं वर्धंति कर्मभिः॥३॥ आ धावता सुहस्त्यः शुक्रा गृभ्णीत मंथिना। गोभिः श्रीणीत मत्सरं॥४॥ स पवस्व धनंजय प्रयंता राधसो महः। अस्मभ्यं सोम गातुवित्॥५॥ एतं मृजंति मर्ज्यं पवमानं दश क्षिपः। इंद्राय मत्सरं मदं॥६॥३॥

॥ ४७ ॥ १—५ कविर्भार्गवः ॥ पवमानः सोमः ॥ गायत्री ॥

॥४७॥ अया सोमः सुकृत्यया महश्चिदभ्यवर्धत। मंदान उद्वृषायते॥१॥ कृतानीदस्य कर्त्वा चेतंते दस्युतर्हे-



Digitized by Google

जऽयुः चक्राणः चारुं अध्वरं बर्हिष्मान् आ विवासति ॥४॥ सः नः भगाय वायवे विप्रऽवीरः सदाऽवृधः सोमः देवेषु आ यमत् ॥५॥ सः नः अद्य वसुत्तये क्रतुऽवित् गातुवित्ऽतमः वाजं जेषि श्रवः बृहत् ॥६॥१॥

---

॥४५॥ सः पवस्व मदाय कं नृऽचक्षाः देवऽवीतये इंदो इंद्राय पीतये ॥१॥ सः नः अर्ष अभि दूत्यं त्वं इंद्राय तोशसे देवान् सखिऽभ्यः आ वरं ॥२॥ उत त्वां अरुणं वयं गोभिः अंज्मः मदाय कं वि नः राये दुरः वृधि ॥३॥ अति ऊं पवित्रं अक्रमीत् वाजी धुरं न यामनि इंदुः देवेषु पत्यते ॥४॥ सं ईं सखायः अस्वरन् वने क्रीळंतं अतिऽअविं इंदुं नावाः अनूषत ॥५॥ तया पवस्व धारया यया पीतः विऽचक्षसे इंदो स्तोत्रे सुऽवीर्यं ॥६॥२॥

---

॥४६॥ असृग्रन् देवऽवीतये अत्यासः कृत्व्याःऽइव क्षरंतः पर्वतऽवृधः ॥१॥ परिऽकृतासः इंदवः योषाऽइव पित्र्यऽवती वायुं सोमाः असृक्षत ॥२॥ एते सोमासः इंदवः प्रयस्वंतः चमू इति सुताः इंद्रं वर्धंति कर्मऽभिः ॥३॥ आ धावत सुऽहस्त्यः शुक्रा गृभ्णीत मंथिना गोभिः श्रीणीत मत्सरं ॥४॥ सः पवस्व धनंऽजय प्रऽयंता राधसः महः अस्मभ्यं सोम गातुऽवित् ॥५॥ एतं मृजंति मर्ज्यं पवमानं दश क्षिपः इंद्राय मत्सरं मदं ॥६॥३॥

---

॥४७॥ अया सोमः सुऽकृत्यया महः चित् अभि अवर्धत मंदानः उत् वृषऽयते ॥१॥ कृतानि इत् अस्य कर्त्वा चेतंते दस्युऽतर्हे-



Digitized by Google

णा। कृणा च धृष्णुश्चयते ॥ २॥ आत्सोमं इंद्रियो रसो वज्रः सहस्रसा भुवत्। उक्थं यदस्य जायते ॥ ३॥ स्वयं कविर्विधर्तरि विप्राय रत्नमिच्छति। यदी मर्मृज्यते धियः ॥ ४॥ सिषासतू रयीणां वाजेष्ववंतामिव। भरेषु जिग्युषामसि ॥ ५॥ ४॥

॥ ४८ ॥ १—५ कविर्भार्गवः ॥ पवमानः सोमः ॥ गायत्री ॥

॥ ४८॥ तं त्वा नृम्णानि बिभ्रतं सधस्थेषु महो दिवः। चारुं सुकृत्ययेमहे ॥ १॥ संवृक्तधृष्णुमुक्थ्यं महामहिव्रतं मदं। शतं पुरो रुरुक्षणिं ॥ २॥ अतस्त्वा रयिमभि राजानं सुक्रतो दिवः। सुपर्णो अव्यथिर्भरत् ॥ ३॥ विश्वस्मा इत्स्वर्दृशे साधारणं रजस्तुरं। गोपामृतस्य विर्भरत् ॥ ४॥ अधा हिन्वान इंद्रियं ज्यायो महित्वमानशे। अभिष्टिकृद्विचर्षणिः ॥ ५॥ ५॥

॥ ४९ ॥ १—५ कविर्भार्गवः ॥ पवमानः सोमः ॥ गायत्री ॥

॥ ४९॥ पवस्व वृष्टिमा सु नोऽपामूर्मिं दिवस्परि। अयक्ष्मा बृहतीरिषः ॥ १॥ तया पवस्व धारया यया गाव इहागमन्। जन्यास उप नो गृहं ॥ २॥ घृतं पवस्व धारया यज्ञेषु देववीतमः। अस्मभ्यं वृष्टिमा पव ॥ ३॥ स न ऊर्जे व्य१व्ययं पवित्रं धाव धारया। देवासः शृणवन्हि कं ॥ ४॥ पवमानो असिष्यद्रक्षांस्यपजंघनत्। प्रत्नवद्रोचयन्रुचः ॥ ५॥ ६॥

॥ ५० ॥ १—५ उचथ्यः ॥ पवमानः सोमः ॥ गायत्री ॥

॥ ५०॥ उत्ते शुष्मास ईरते सिंधोरूर्मेरिव स्वनः। वाणस्य चोदया पविं ॥ १॥ प्रसवे त उदीरते तिस्रो वाचो मखस्युवः। यदव्य एषि सानवि ॥ २॥ अव्यो वारे परि प्रियं हरिं हिन्वंत्यद्रिभिः। पवमानं मधुश्चुतं ॥ ३॥ आ पवस्व मदिं-



Digitized by Google

णा कृणा च धृष्णुः चयते ॥२॥ आत् सोमः इंद्रियः रसः वज्रः स-
हस्रऽसाः भुवत् उक्थं यत् अस्य जायते ॥३॥ स्वयं कविः वि-
ऽधर्तरि विप्राय रत्नं इच्छति यदि मर्मृज्यते धियः ॥४॥ सिसासतुः
रयीणां वाजेषु अर्वतांऽइव भरेषु जिग्युषां असि ॥५॥४॥

---

॥४८॥ तं त्वा नृम्णानि बिभ्रतं सधऽस्थेषु महः दिवः चारुं
सुऽकृत्यया ईमहे ॥१॥ संवृक्तऽधृष्णुं उक्थ्यं महाऽमहिव्रतं मदं
शतं पुरः रुरुक्षणिं ॥२॥ अतः त्वा रयिं अभि राजानं सुऽक्रतो॰
दिवः सुऽपर्णः अव्यथिः भरत् ॥३॥ विश्वस्मै इत् स्वः दृशे सा-
धारणं रजःऽतुरं गोपां ऋतस्य विः भरत् ॥४॥ अध हिन्वा-
नः इंद्रियं ज्यायः महिऽत्वं आनशे अभिष्टिऽकृत् विऽचर्षणिः
॥५॥५॥

---

॥४९॥ पवस्व वृष्टिं आ सु नः अपां ऊर्मिं दिवः परि अयक्ष्माः
बृहतीः इषः ॥१॥ तया पवस्व धारया यया गावः इह आऽगमन्
जन्यासः उप नः गृहं ॥२॥ घृतं पवस्व धारया यज्ञेषु देवऽवीतमः
अस्मभ्यं वृष्टिं आ पव ॥३॥ सः नः ऊर्जे वि अव्ययं पवित्रं धाव
धारया देवासः शृणवन् हि कं ॥४॥ पवमानः असिस्यदत् रक्षां-
सि अपऽजंघनत् प्रत्नऽवत् रोचयन् रुचः ॥५॥६॥

---

॥५०॥ उत् ते शुष्मासः ईरते सिंधोः ऊर्मेःऽइव स्वनः वा-
णस्य चोदय पविं ॥१॥ प्रऽसवे ते उत् ईरते तिस्रः वाचः मख-
स्युवः यत् अव्ये एषि सानवि ॥२॥ अव्यः वारे परि प्रियं हरिं
हिन्वंति अद्रिऽभिः पवमानं मधुऽश्चुतं ॥३॥ आ पवस्व मदिन्-



Digitized by Google

तम पवित्रं धारया कवे। अर्कस्य योनिमासदं ॥४॥ स पवस्व मदिंतम गोभिरंजानो अक्तुभिः। इंदविंद्राय पीतये ॥५॥७॥

॥ ५१ ॥ १–५ उचथ्यः ॥ पवमानः सोमः ॥ गायत्री ॥

॥५१॥ अध्वर्यो अद्रिभिः सुतं सोमं पवित्र आ सृज। पुनीहींद्राय पातवे ॥१॥ दिवः पीयूषमुत्तमं सोममिंद्राय वज्रिणे। सुनोता मधुमत्तमं ॥२॥ तव त्य इंदो अंधसो देवा मधोर्व्यश्नते। पवमानस्य मरुतः ॥३॥ त्वं हि सोम वर्धयन्सुतो मदाय भूर्णये। वृषन्स्तोतारमूतये ॥४॥ अभ्यर्ष विचक्षण पवित्रं धारया सुतः। अभि वाजमुत श्रवः ॥५॥८॥

॥ ५२ ॥ १–५ उचथ्यः ॥ पवमानः सोमः ॥ गायत्री ॥

॥५२॥ परि द्युक्षः सनद्रयिर्भरद्वाजं नो अंधसा। सुवानो अर्ष पवित्र आ ॥१॥ तव प्रत्नेभिरध्वभिरव्यो वारे परि प्रियः। सहस्रधारो यात्तना ॥२॥ चरुर्न यस्तमींखयेंदो न दानमींखय। वधैर्वधस्नवींखय ॥३॥ नि शुष्ममिंदवेषां पुरुहूत जनानां। यो अस्माँ आदिदेशति ॥४॥ शतं न इंद ऊतिभिः सहस्रं वा शुचीनां। पवस्व मंहयद्रयिः ॥५॥९॥

॥ ५३ ॥ १–४ अवत्सारः ॥ पवमानः सोमः ॥ गायत्री ॥

॥५३॥ उत्ते शुष्मासो अस्थू रक्षो भिंदंतो अद्रिवः। नुदस्व याः परिस्पृधः ॥१॥ अया निजघ्निरोजसा रथसंगे धने हिते। स्तवा अबिभ्युषा हृदा ॥२॥ अस्य व्रतानि नाधृषे पवमानस्य दूढ्या। रुज यस्त्वा पृतन्यति ॥३॥ तं हिन्वंति मदच्युतं हरिं नदीषु वाजिनं। इंदुमिंद्राय मत्सरं ॥४॥१०॥



Digitized by Google

ऽतम पवित्रे धारया कवे अर्कस्य योनिं आऽसदं ॥४॥ सः पवस्व मदिन्ऽतम गोभिः अंजानः अक्तुऽभिः इंदो इंद्राय पीतये ॥५॥७॥

॥५१॥ अध्वर्यो इति अद्रिऽभिः सुतं सोमं पवित्रे आ सृज पुनीहि इंद्राय पातवे ॥१॥ दिवः पीयूषं उत्ऽतमं सोमं इंद्राय वज्रिणे सुनोत मधुमत्ऽतमं ॥२॥ तव त्ये इंदो इति अंधसः देवाः मधोः वि अश्नते पवमानस्य मरुतः ॥३॥ त्वं हि सोम वर्धयन् सुतः मदाय भूर्णये वृषन् स्तोतारं ऊतये ॥४॥ अभि अर्ष विऽचक्षण पवित्रं धारया सुतः अभि वाजं उत श्रवः ॥५॥८॥

॥५२॥ परि द्युक्षः सनत्ऽरयिः भरत् वाजं नः अंधसा सुवानः अर्ष पवित्रे आ ॥१॥ तव प्रत्नेभिः अध्वऽभिः अव्यः वारे परि प्रियः सहस्रऽधारः यात् तना ॥२॥ चरुः न यः तं ईंखय इंदो इति न दानं ईंखय वधैः वधऽस्नो इति वधऽस्नो ईंखय ॥३॥ नि शुष्मं इंदो इति एषां पुरुऽहूत जनानां यः अस्मान् आऽदिदेशति ॥४॥ शतं नः इंदो इति ऊतिऽभिः सहस्रं वा शुचीनां पवस्व मंहयत्ऽरयिः ॥५॥९॥

॥५३॥ उत् ते शुष्मासः अस्थुः रक्षः भिंदंतः अद्रिऽवः नुदस्व याः परिऽस्पृधः ॥१॥ अया निऽजघ्निः ओजसा रथऽसंगे धने हिते स्तवै अबिभ्युषा हृदा ॥२॥ अस्य व्रतानि न आऽधृषे पवमानस्य दुःऽध्या रुज यः त्वा पृतन्यति ॥३॥ तं हिन्वंति मदऽच्युतं हरिं नदीषु वाजिनं इंदुं इंद्राय मत्सरं ॥४॥१०॥



Digitized by Google

॥ ५४ ॥ १-४ अवत्सारः ॥ पवमानः सोमः ॥ गायत्री ॥

॥५४॥ अस्य प्रत्नामनु द्युतं शुक्रं दुदुह्रे अह्रयः। पयः सहस्र-
सामृषिं ॥१॥ अयं सूर्यं इवोपदृगयं सरांसि धावति। सप्त प्रवत
आ दिवं॥२॥ अयं विश्वानि तिष्ठति पुनानो भुवनोपरि। सोमो
देवो न सूर्यः ॥३॥ परि णो देववीतये वाजाँ अर्षसि गोमतः।
पुनान इंदविंद्रयुः ॥४॥११॥

॥ ५५ ॥ १-४ अवत्सारः ॥ पवमानः सोमः ॥ गायत्री ॥

॥५५॥ यवंयवं नो अंधसा पुष्टंपुष्टं परि स्रव। सोम विश्वा च
सौभगा॥१॥ इंदो यथा तव स्तवो यथा ते जातमंधसः। नि बर्हिषि
प्रिये सदः ॥२॥ उत नो गोविदश्वविस्पवस्व सोमांधसा। मक्षू-
तमेभिरहभिः ॥३॥ यो जिनाति न जीयते हंति शत्रुमभीत्य। स
पवस्व सहस्रजित् ॥४॥१२॥

॥ ५६ ॥ १-४ अवत्सारः ॥ पवमानः सोमः ॥ गायत्री ॥

॥५६॥ परि सोम ऋतं बृहदाशुः पवित्रे अर्षति। विघ्नन्रक्षां-
सि देवयुः॥१॥ यत्सोमो वाजमर्षति शतं धारा अपस्युवः। इंद्रस्य
सख्यमाविशन् ॥२॥ अभि त्वा योषणो दश जारं न कन्यानूषत।
मृज्यसे सोम सातये॥३॥ त्वमिंद्राय विष्णवे स्वादुरिंदो परि स्रव।
नृंस्तोतॄन्पाह्यंहसः ॥४॥१३॥

॥ ५७ ॥ १-४ अवत्सारः ॥ पवमानः सोमः ॥ गायत्री ॥

॥५७॥ प्र ते धारा असश्चतो दिवो न यंति वृष्टयः। अच्छा
वाजं सहस्रिणं॥१॥ अभि प्रियाणि काव्या विश्वा चक्षाणो अ-
र्षति। हरिस्तुंजान आयुधा॥२॥ स मर्मृजान आयुभिरिभो राजेव
सुव्रतः। श्येनो न वंसु षीदति ॥३॥ स नो विश्वा दिवो वसूतो
पृथिव्या अधि। पुनान इंदवा भर ॥४॥१४॥



Digitized by Google

॥५४॥ अस्य प्रत्नां अनु द्युतं शुक्रं दुदुह्रे अह्रयः पयः सहस्र-ऽसां ऋषिं ॥१॥ अयं सूर्यःऽइव उपऽदृक् अयं सरांसि धावति सप्त प्रऽवतः आ दिवं ॥२॥ अयं विश्वानि तिष्ठति पुनानः भुवना उपरि सोमः देवः न सूर्यः ॥३॥ परि नः देवऽवीतये वाजान् अर्षसि गोऽमंतः पुनानः इंदो इंद्रऽयुः ॥४॥११॥

---

॥५५॥ यवंऽयवं नः अंधसा पुष्टंऽपुष्टं परि स्रव सोम विश्वा च सौभगा ॥१॥ इंदो यथा तव स्तवः यथा ते जातं अंधसः नि बर्हिषि प्रिये सदः ॥२॥ उत नः गोऽवित् अश्वऽवित् पवस्व सोम अंधसा मक्षुऽतमेभिः अहऽभिः ॥३॥ यः जिनाति न जीयते हंति शत्रुं अभिऽइत्य सः पवस्व सहस्रऽजित् ॥४॥१२॥

---

॥५६॥ परि सोमः ऋतं बृहत् आशुः पवित्रे अर्षति विऽघ्नन् रक्षांसि देवऽयुः ॥१॥ यत् सोमः वाजं अर्षति शतं धाराः अपस्युवः इंद्रस्य सख्यं आऽविशन् ॥२॥ अभि त्वा योषणः दश जारं न कन्या अनूषत मृज्यसे सोम सातये ॥३॥ त्वं इंद्राय विष्णवे स्वादुः इंदो परि स्रव नॄन् स्तोतॄन् पाहि अंहसः ॥४॥१३॥

---

॥५७॥ प्र ते धाराः असश्चतः दिवः न यंति वृष्टयः अच्छ वाजं सहस्रिणं ॥१॥ अभि प्रियाणि काव्या विश्वा चक्षाणः अर्षति हरिः तुंजानः आयुधा ॥२॥ सः मर्मृजानः आयुऽभिः इभः राजाऽइव सुऽव्रतः श्येनः न वंसु सीदति ॥३॥ सः नः विश्वा दिवः वसु उतो पृथिव्याः अधि पुनानः इंदो आ भर ॥४॥१४॥



Digitized by Google

॥ ५८ ॥ १-४ अवत्सारः ॥ पवमानः सोमः ॥ गायत्री ॥

॥५८॥ तरत्स मंदी धावति धारा सुतस्यांधसः। तरत्स मंदी
धावति॥१॥ उस्रा वेद वसूनां मर्तस्य देव्यवसः। तरत्स मंदी धा-
वति ॥२॥ ध्वस्रयोः पुरुषंत्योरा सहस्राणि दद्महे। तरत्स मंदी
धावति ॥३॥ आ ययोस्त्रिंशतं तना सहस्राणि च दद्महे। तरत्स
मंदी धावति ॥४॥१५॥

---

॥ ५९ ॥ १-४ अवत्सारः ॥ पवमानः सोमः ॥ गायत्री ॥

॥५९॥ पवस्व गोजिदश्वजिद्विश्वजित्सोम रण्यजित्। प्रजा-
वद्रत्नमा भर॥१॥ पवस्वाद्भ्यो अदाभ्यः पवस्वौषधीभ्यः। पव-
स्व धिषणाभ्यः॥२॥ त्वं सोम पवमानो विश्वानि दुरिता तर।
कविः सीद नि बर्हिषि॥३॥ पवमान स्वर्विदो जायमानोऽभ-
वो महान्। इंदो विश्वाँ अभीदसि ॥४॥१६॥

---

॥ ६० ॥ १-४ अवत्सारः ॥ पवमानः सोमः ॥ १.२.४ गायत्री । ३ पुरउष्णिक् ॥

॥६०॥ प्र गायत्रेण गायत पवमानं विचर्षणिं। इंदुं सहस्र-
चक्षसं ॥१॥ तं त्वा सहस्रचक्षसमथो सहस्रभर्णसं। अति वार-
मपाविषुः॥२॥ अति वारान्पवमानो असिष्यदत्कलशाँ अभि
धावति। इंद्रस्य हार्द्याविशन्॥३॥ इंद्रस्य सोम राधसे शं पवस्व
विचर्षणे। प्रजावद्रेत आ भर॥४॥१७॥२॥

---

॥ ६१ ॥ १-३० अमहीयुः ॥ पवमानः सोमः ॥ गायत्री ॥

॥६१॥ अया वीती परि स्रव यस्त इंदो मदेष्वा। अवा-
हन्नवतीर्नव ॥१॥ पुरः सद्य इत्थाधिये दिवोदासाय शंबरं।
अध त्यं तुर्वशं यदुं॥२॥ परि णो अश्वमश्वविद्गोमदिंदो हिर-
ण्यवत्। क्षरा सहस्रिणीरिषः॥३॥ पवमानस्य ते वयं पवित्रम-



Digitized by Google

॥५८॥ तरत् सः मंदी धावति धारा सुतस्य अंधसः तरत् सः मंदी धावति ॥१॥ उस्रा वेद वसूनां मर्तस्य देवी अवसः तरत् सः मंदी धावति ॥२॥ ध्वस्रयोः पुरुऽसंत्योः आ सहस्राणि दद्महे तरत् सः मंदी धावति ॥३॥ आ ययोः त्रिंशतं तना सहस्राणि च दद्महे तरत् सः मंदी धावति ॥४॥१५॥

---

॥५९॥ पवस्व गोऽजित् अश्वऽजित् विश्वऽजित् सोम रण्यऽजित् प्रजाऽवत् रत्नं आ भर ॥१॥ पवस्व अत्ऽभ्यः अदाभ्यः पवस्व ओषधीभ्यः पवस्व धिषणाभ्यः ॥२॥ त्वं सोम पवमानः विश्वानि दुःऽइता तर कविः सीद नि बर्हिषि ॥३॥ पवमान स्वः विदः जायमानः अभवः महान् इंदो विश्वान् अभि इत् असि ॥४॥१६॥

---

॥६०॥ प्र गायत्रेण गायत पवमानं विऽचर्षणिं इंदुं सहस्रऽचक्षसं ॥१॥ तं त्वा सहस्रऽचक्षसं अथो सहस्रऽभर्णसं अति वारं अपाविषुः ॥२॥ अति वारान् पवमानः असिस्यदत् कलशान् अभि धावति इंद्रस्य हार्दि आऽविशन् ॥३॥ इंद्रस्य सोम राधसे शं पवस्व विऽचर्षणे प्रजाऽवत् रेतः आ भर ॥४॥१७॥२॥

---

॥६१॥ अया वीती परि स्रव यः ते इंदो मदेषु आ अवऽअहन् नवतीः नव ॥१॥ पुरः सद्यः इत्थाऽधिये दिवःऽदासाय शंबरं अध त्यं तुर्वशं यदुं ॥२॥ परि नः अश्वं अश्वऽवित् गोऽमत् इंदो हिरण्यऽवत् क्षरं सहस्रिणीः इषः ॥३॥ पवमानस्य ते वयं पवित्रं



Digitized by Google

भ्युंदृतः । सखित्वमा वृणीमहे ॥४॥ ये ते पवित्रमूर्मयोऽभि-
क्षरंति धारया । तेभिर्नः सोम मृळय ॥५॥१८॥ स नः पुनान
आ भर रयिं वीरवतीमिषं । ईशानः सोम विश्वतः ॥६॥ एतमु
त्यं दश क्षिपो मृजंति सिंधुमातरं । समादित्येभिरख्यत ॥७॥
समिंद्रेणोत वायुना सुत एति पवित्र आ । सं सूर्यस्य रश्मिभिः
॥८॥ स नो भगाय वायवे पूष्णे पवस्व मधुमान् । चारुर्मित्रे
वरुणे च ॥९॥ उच्चा ते जातमंधसो दिवि षद्भूम्या ददे । उग्रं
शर्म महि श्रवः ॥१०॥१९॥ एना विश्वान्यर्य आ द्युम्नानि मा-
नुषाणां । सिषासंतो वनामहे ॥११॥ स न इंद्राय यज्यवे वरु-
णाय मरुद्भ्यः । वरिवोवित्परि स्रव ॥१२॥ उपो षु जातमप्तुरं
गोभिर्भंगं परिष्कृतं । इंदुं देवा अयासिषुः ॥१३॥ तमिद्वर्धंतु
नो गिरो वत्सं संशिश्वरीरिव । य इंद्रस्य हृदंसनिः ॥१४॥ अर्षा
णः सोम शं गवे धुक्षस्व पिप्युषीमिषं । वर्धा समुद्रमुक्थ्यं
॥१५॥२०॥ पवमानो अजीजनद्दिवश्चित्रं न तन्यतुं । ज्योति-
र्वैश्वानरं बृहत् ॥१६॥ पवमानस्य ते रसो मदो राजन्नदुच्छुनः ।
वि वारमव्यमर्षति ॥१७॥ पवमान रसस्तव दक्षो वि राजति
द्युमान् । ज्योतिर्विश्वं स्वर्दृशे ॥१८॥ यस्ते मदो वरेण्यस्तेना
पवस्वांधसा । देवावीरघशंसहा ॥१९॥ जघ्निर्वृत्रममित्रियं स-
स्निर्वाजं दिवेदिवे । गोषा उ अश्वसा असि ॥२०॥२१॥
संमिश्लो अरुषो भव सूपस्थाभिर्न धेनुभिः । सीदञ्छ्येनो
न योनिमा ॥२१॥ स पवस्व य आविथेंद्रं वृत्राय हंतवे ।
वव्रिवांसं महीरपः ॥२२॥ सुवीरासो वयं धना जयेम सोम
मीढ्वः । पुनानो वर्ध नो गिरः ॥२३॥ त्वोतासस्तवावसा
स्याम वन्वंत आमुरः । सोम व्रतेषु जागृहि ॥२४॥ अपघ्नन्प-



Digitized by Google

अभिऽउंदतः सखिऽत्वं आ वृणीमहे ॥४॥ ये ते पवित्रं ऊर्मयः अ-
भिऽक्षरंति धारया तेभिः नः सोम मृळय ॥५॥१८॥ सः नः पुनानः
आ भर रयिं वीरऽवतीं इषं ईशानः सोम विश्वतः ॥६॥ एतं ऊं'
त्यं दश क्षिपः मृजंति सिंधुऽमातरं सं आदित्येभिः अख्यत ॥७॥
सं इंद्रेण उत वायुना सुतः एति पवित्रे आ सं सूर्यस्य रश्मिऽभिः
॥८॥ सः नः भगाय वायवे पूष्णे पवस्व मधुऽमान् चारुः मित्रे
वरुणे च ॥९॥ उच्चा ते जातं अंधसः दिवि सत् भूमिः आ ददे उग्रं
शर्म महि श्रवः ॥१०॥१९॥ एना विश्वानि अर्यः आ द्युम्नानि
मानुषाणां सिसासंतः वनामहे ॥११॥ सः नः इंद्राय यज्यवे व-
रुणाय मरुत्ऽभ्यः वरिवःऽवित् परि स्रव ॥१२॥ उपो' सु जातं
अप्ऽतुरं गोभिः भंगं परिऽकृतं इंदुं देवाः अयासिषुः ॥१३॥ तं
इत् वर्धंतु नः गिरः वत्सं संऽशिश्वरीःऽइव यः इंद्रस्य हृदंऽसनिः
॥१४॥ अर्ष नः सोम शं गवे धुक्षस्व पिप्युषीं इषं वर्ध समुद्रं उक्थ्यं
॥१५॥२०॥ पवमानः अजीजनत् दिवः चित्रं न तन्यतुं ज्योतिः
वैश्वानरं बृहत् ॥१६॥ पवमानस्य ते रसः मदः राजन् अदुच्छुनः
वि वारं अव्यं अर्षति ॥१७॥ पवमान रसः तव दक्षः वि राजति
द्युऽमान् ज्योतिः विश्वं स्वः दृशे ॥१८॥ यः ते मदः वरेण्यः तेन प-
वस्व अंधसा देवऽअवीः अघशंसऽहा ॥१९॥ जघ्निः वृत्रं अमि-
त्रियं सस्निः वाजं दिवेऽदिवे गोऽसाः ऊं' अश्वऽसाः असि ॥२०॥
॥२१॥ संऽमिश्लः अरुषः भव सुऽउपस्थाभिः न धेनुऽभिः सीदन्
श्येनः न योनिं आ ॥२१॥ सः पवस्व यः आविथ इंद्रं वृत्राय हंतवे
वव्रिऽवांसं महीः अपः ॥२२॥ सुऽवीरासः वयं धना जयेम सोम
मीढ्वः पुनानः वर्ध नः गिरः ॥२३॥ त्वाऽऊतासः तव अवसा
स्याम वन्वंतः आऽमुरः सोम व्रतेषु जागृहि ॥२४॥ अपऽघ्नन् प-

वते मृधोऽप सोमो अराव्णः। गच्छन्निंद्रस्य निष्कृतं॥२५॥२२॥ महो नो राय आ भर पवमान जही मृधः। रास्वेंदो वीरवद्यशः॥२६॥ न त्वा शतं चन ह्रुतो राधो दित्संतमा मिनन्। यत्पुनानो मखस्यसे॥२७॥ पवस्वेंदो वृषा सुतः कृधी नो यशसो जने। विश्वा अप द्विषो जहि॥२८॥ अस्य ते सख्ये वयं तवेंदो द्युम्न उत्तमे। सासह्याम पृतन्यतः॥२९॥ या ते भीमान्यायुधा तिग्मानि संति धूर्वणे। रक्षा समस्य नो निदः॥३०॥२३॥

---

॥ ६२ ॥ १–३० जमदग्निः ॥ पवमानः सोमः ॥ गायत्री ॥

॥६२॥ एते असृग्रमिंदवस्तिरः पवित्रमाशवः। विश्वान्यभि सौभगा॥१॥ विघ्नंतो दुरिता पुरु सुगा तोकाय वाजिनः। तना कृण्वंतो अर्वते॥२॥ कृण्वंतो वरिवो गवेऽभ्यर्षंति सुष्टुतिं। इळामस्मभ्यं संयतं॥३॥ असाव्यंशुर्मदायाप्सु दक्षो गिरिष्ठाः। श्येनो न योनिमासदत्॥४॥ शुभ्रमंधो देववातमप्सु धूतो नृभिः सुतः। स्वदंति गावः पयोभिः॥५॥२४॥ आदीमश्वं न हेतारोऽशूशुभन्नमृताय। मध्वो रसं सधमादे॥६॥ यास्ते धारा मधुश्चुतोऽसृग्रमिंद ऊतये। ताभिः पवित्रमासदः॥७॥ सो अर्षेंद्राय पीतये तिरो रोमाण्यव्यया। सीदन्योना वनेष्वा॥८॥ त्वमिंदो परि स्रव स्वादिष्ठो अंगिरोभ्यः। वरिवोविद्घृतं पयः॥९॥ अयं विचर्षणिर्हितः पवमानः स चेतति। हिन्वान आप्यं बृहत्॥१०॥२५॥ एष वृषा वृषव्रतः पवमानो अशस्तिहा। करद्वसूनि दाशुषे॥११॥ आ पवस्व सहस्रिणं रयिं गोमंतमश्विनं। पुरुश्चंद्रं पुरुस्पृहं॥१२॥ एष स्य परि षिच्यते मर्मृज्यमान आयुभिः। उरुगायः कविक्रतुः॥१३॥ सहस्रोतिः शतामघो विमानो रजसः



Digitized by Google

वते मृधः अप सोम अराव्णः गच्छन् इंद्रस्य निःऽकृतं ॥२५॥
॥२२॥ महः नः रायः आ भर पवमान जहि मृधः रास्व इंदो इति वी-
रऽवंत् यशः ॥२६॥ न त्वा शतं चन ह्रुतः राधः दित्संतं आ मिनन्
यत् पुनानः मखस्यसे ॥२७॥ पवस्व इंदो इति वृषा सुतः कृधि नः
यशसः जने विश्वाः अप द्विषः जहि ॥२८॥ अस्य ते सख्ये वयं तव
इंदो इति द्युम्ने उत्ऽतमे ससह्याम पृतन्यतः ॥२९॥ या ते भीमानि आ-
युधा तिग्मानि संति धूर्वणे रक्ष समस्य नः निदः ॥३०॥२३॥

---

॥६२॥ एते असृग्रं इंदवः तिरः पवित्रं आशवः विश्वानि अ-
भि सौभगा ॥१॥ विऽघ्नंतः दुःऽइता पुरु सुऽगा तोकाय वाजिनः
तना कृण्वंतः अर्वते ॥२॥ कृण्वंतः वरिवः गवे अभि अर्षंति सु-
ऽस्तुतिं इळां अस्मभ्यं संऽयतं ॥३॥ असावि अंशुः मदाय अप्-
ऽसु दक्षः गिरिऽस्थाः श्येनः न योनिं आ असदत् ॥४॥ शुभ्रं अंधः
देवऽवातं अप्ऽसु धूतः नृऽभिः सुतः स्वदंति गावः पयःऽभिः
॥५॥२४॥ आत् ईं अश्वं न हेतारः अशूशुभन् अमृताय मध्वः रसं
सधऽमादे ॥६॥ याः ते धाराः मधुऽश्चुतः असृग्रं इंदो इति ऊतये ता-
भिः पवित्रं आ असदः ॥७॥ सः अर्ष इंद्राय पीतये तिरः रोमाणि
अव्यया सीदन् योना वनेषु आ ॥८॥ त्वं इंदो इति परि स्रव स्वादिष्ठः
अंगिरःऽभ्यः वरिवःऽवित् घृतं पयः ॥९॥ अयं विऽचर्षणिः
हितः पवमानः सः चेतति हिन्वानः आप्यं बृहत् ॥१०॥२५॥ एषः
वृषा वृषऽव्रतः पवमानः अशस्तिऽहा करत् वसूनि दाशुषे ॥११॥
आ पवस्व सहस्रिणं रयिं गोऽमंतं अश्विनं पुरुऽचंद्रं पुरुऽस्पृहं
॥१२॥ एषः स्यः परि सिच्यते मर्मृज्यमानः आयुऽभिः उरुऽगायः
कविऽक्रतुः ॥१३॥ सहस्रऽऊतिः शतऽमघः विऽमानः रजसः



Digitized by Google

कविः। इंद्राय पवते मदः ॥१४॥ गिरा जात इह स्तुत इंदुरिंद्राय धीयते। विर्योना वसताविव॥१५॥२६॥ पवमानः सुतो नृभिः सोमो वाजमिवासरत्। चमूषु शक्मनासदं॥१६॥ तं त्रिपृष्ठे त्रिवंधुरे रथे युंजंति यातवे। ऋषीणां सप्त धीतिभिः ॥१७॥ तं सोतारो धनस्पृतमाशुं वाजाय यातवे। हरिं हिनोत वाजिनं॥१८॥ आविशन्कलशं सुतो विश्वा अर्षन्नभि श्रियः। शूरो न गोषु तिष्ठति ॥१९॥ आ त इंदो मदाय कं पयो दुहंत्यायवः। देवा देवेभ्यो मधु ॥२०॥२७॥ आ नः सोमं पवित्र आ सृजता मधुमत्तमं। देवेभ्यो देवश्रुत्तमं ॥२१॥ एते सोमा असृक्षत गृणानाः श्रवसे महे। मदिंतमस्य धारया ॥२२॥ अभि गव्यानि वीतये नृम्णा पुनानो अर्षसि। सनद्वाजः परि स्रव॥२३॥ उत नो गोमतीरिषो विश्वा अर्ष परिष्टुभः। गृणानो जमदग्निना ॥२४॥ पवस्व वाचो अग्रियः सोम चित्राभिरूतिभिः। अभि विश्वानि काव्या ॥२५॥ ॥२८॥ त्वं समुद्रिया अपोऽग्रियो वाच ईरयन्। पवस्व विश्वमेजय॥२६॥ तुभ्येमा भुवना कवे महिम्ने सोम तस्थिरे। तुभ्यमर्षंति सिंधवः ॥२७॥ प्र ते दिवो न वृष्टयो धारा यंत्यसश्चतः। अभि शुक्रामुपस्तिरं॥२८॥ इंद्रायेंदुं पुनीतनोग्रं दक्षाय साधनं। ईशानं वीतिराधसं॥२९॥ पवमान ऋतः कविः सोमः पवित्रमासदत्। दधत्स्तोत्रे सुवीर्यं ॥३०॥२९॥

---

॥ ६३ ॥ १–३० निध्रुविः काश्यपः ॥ पवमानः सोमः ॥ गायत्री ॥

॥६३॥ आ पवस्व सहस्रिणं रयिं सोम सुवीर्यं। अस्मे श्रवांसि धारय ॥१॥ इषमूर्जं च पिन्वस इंद्राय मत्सरिंतमः। चमूष्वा नि षीदसि ॥२॥ सुत इंद्राय विष्णवे सोमः कलशे अक्षरत्।



Digitized by Google

कविः इंद्राय पवते मदः ॥१४॥ गिरा जातः इह स्तुतः इंदुः इंद्राय धीयते विः योनौ वसतौऽइव ॥१५॥२६॥ पवमानः सुतः नृऽभिः सोमः वाजंऽइव असरत् चमूषु शक्मना आऽसदं ॥१६॥ तं त्रि-ऽपृष्ठे त्रिऽवंधुरे रथे युंजंति यातवे ऋषीणां सप्त धीतिऽभिः ॥१७॥ तं सोतारः धनऽस्पृतं आशुं वाजाय यातवे हरिं हिनोत वाजिनं ॥१८॥ आऽविशन् कलशं सुतः विश्वाः अर्षन् अभि श्रियः शूरः न गोषु तिष्ठति ॥१९॥ आ ते इंदो मदाय कं पयः दुहंति आयवः देवाः देवेभ्यः मधु ॥२०॥२७॥ आ नः सोमं पवित्रे आ सृजत मधुमत्ऽतमं देवेभ्यः देवश्रुत्ऽतमं ॥२१॥ एते सोमाः असृक्षत गृणानाः श्रवसे महे मदिन्ऽतमस्य धारया ॥२२॥ अभि गव्यानि वीतये नृम्णा पुनानः अर्षसि सनत्ऽवाजः परि स्रव ॥२३॥ उत नः गोऽमतीः इषः विश्वाः अर्ष परिऽस्तुभः गृणानः जमत्ऽअग्निना ॥२४॥ पवस्व वाचः अग्रियः सोम चित्राभिः ऊतिऽभिः अभि विश्वानि काव्या ॥२५॥२८॥ त्वं समुद्रियाः अपः अग्रियः वाचः ईरयन् पवस्व विश्वंऽएजय ॥२६॥ तुभ्य इमा भुवना कवे महिम्ने सोम तस्थिरे तुभ्यं अर्षंति सिंधवः ॥२७॥ प्र ते दिवः न वृष्टयः धाराः यंति असश्चतः अभि शुक्रां उपऽस्तिरं ॥२८॥ इंद्राय इंदुं पुनीतन उग्रं दक्षाय साधनं ईशानं वीतिऽराधसं ॥२९॥ पवमानः ऋतः कविः सोमः पवित्रं आ असदत् दधत् स्तोत्रे सुऽवीर्यं ॥३०॥२९॥

---

॥६३॥ आ पवस्व सहस्रिणं रयिं सोम सुऽवीर्यं अस्मे श्रवांसि धारय ॥१॥ इषं ऊर्जं च पिन्वसे इंद्राय मत्सरिन्ऽतमः चमूषु आ नि सीदसि ॥२॥ सुतः इंद्राय विष्णवे सोमः कलशे अक्षरत्



Digitized by Google

मधुमाँ अस्तु वायवे ॥३॥ एते असृग्रमाशवोऽति ह्वरांसि बभ्रवः। सोमा ऋतस्य धारया ॥४॥ इंद्रं वर्धंतो अप्तुरः कृण्वंतो विश्वमार्यं। अपघ्नंतो अराव्णः ॥५॥३०॥ सुता अनु स्वमा रजोऽभ्यर्षंति बभ्रवः। इंद्रं गच्छंत इंदवः ॥६॥ अया पवस्व धारया यया सूर्यमरोचयः। हिन्वानो मानुषीरपः ॥७॥ अयुक्त सूर एतशं पवमानो मनावधि। अंतरिक्षेण यातवे ॥८॥ उत त्या हरितो दश सूरो अयुक्त यातवे। इंदुरिंद्र इति ब्रुवन् ॥९॥ परीतो वायवे सुतं गिर इंद्राय मत्सरं। अव्यो वारेषु सिंचत ॥१०॥ ॥३१॥ पवमान विदा रयिमस्मभ्यं सोम दुष्टरं। यो दूणाशो वनुष्यता ॥११॥ अभ्यर्ष सहस्रिणं रयिं गोमंतमश्विनं। अभि वाजमुत श्रवः ॥१२॥ सोमो देवो न सूर्योऽद्रिभिः पवते सुतः। दधानः कलशे रसं ॥१३॥ एते धामान्यार्या शुक्रा ऋतस्य धारया। वाजं गोमंतमक्षरन् ॥१४॥ सुता इंद्राय वज्रिणे सोमासो दध्याशिरः। पवित्रमत्यक्षरन् ॥१५॥३२॥ प्र सोम मधुमत्तमो राये अर्ष पवित्र आ। मदो यो देववीतमः ॥१६॥ तमीं मृजंत्यायवो हरिं नदीषु वाजिनं। इंदुमिंद्राय मत्सरं ॥१७॥ आ पवस्व हिरण्यवदश्वावत्सोम वीरवत्। वाजं गोमंतमा भर ॥१८॥ परि वाजे न वाजयुमव्यो वारेषु सिंचत। इंद्राय मधुमत्तमं ॥१९॥ कविं मृजंति मर्ज्यं धीभिर्विप्रा अवस्यवः। वृषा कनिक्रदर्षति ॥२०॥३३॥ वृषणं धीभिरप्तुरं सोममृतस्य धारया। मती विप्राः समस्वरन् ॥२१॥ पवस्व देवायुषगिंद्रं गच्छतु ते मदः। वायुमा रोह धर्मणा ॥२२॥ पवमान नि तोशसे रयिं सोम श्रवाय्यं। प्रियः समुद्रमा विश ॥२३॥ अपघ्नन्पवसे मृधः क्रतुवित्सोम मत्सरः। नुदस्वादेवयुं जनं ॥२४॥



Digitized by Google

मधुऽमान् अस्तु वायवे ॥ ३ ॥ एते असृग्रं आशवः अति ह्वरांसि बभ्रवः सोमाः ऋतस्य धारया ॥ ४ ॥ इंद्रं वर्धंतः अप्ऽतुरः कृण्वंतः विश्वं आर्यं अपऽघ्नंतः अराव्णः ॥ ५ ॥ ३० ॥ सुताः अनु स्वं आ रजः अभि अर्षंति बभ्रवः इंद्रं गच्छंतः इंदवः ॥ ६ ॥ अया पवस्व धारया यया सूर्यं अरोचयः हिन्वानः मानुषीः अपः ॥ ७ ॥ अयुक्त सूरः एतशं पवमानः मनौ अधि अंतरिक्षेण यातवे ॥ ८ ॥ उत त्याः हरितः दश सूरः अयुक्त यातवे इंदुः इंद्रः इति ब्रुवन् ॥ ९ ॥ परि इतः वायवे सुतं गिरः इंद्राय मत्सरं अव्यः वारेषु सिंचत ॥ १० ॥ ॥ ३१ ॥ पवमान विदाः रयिं अस्मभ्यं सोम दुस्तरं यः दुःऽनशः वनुष्यता ॥ ११ ॥ अभि अर्ष सहस्रिणं रयिं गोऽमंतं अश्विनं अभि वाजं उत श्रवः ॥ १२ ॥ सोमः देवः न सूर्यः अद्रिऽभिः पवते सुतः दधानः कलशे रसं ॥ १३ ॥ एते धामानि आर्या शुक्राः ऋतस्य धारया वाजं गोऽमंतं अक्षरन् ॥ १४ ॥ सुताः इंद्राय वज्रिणे सोमासः दधिऽआशिरः पवित्रं अति अक्षरन् ॥ १५ ॥ ३२ ॥ प्र सोम मधुमत्ऽतमः राये अर्ष पवित्रे आ मदः यः देवऽवीतमः ॥ १६ ॥ तं ईं मृजंति आयवः हरिं नदीषु वाजिनं इंदुं इंद्राय मत्सरं ॥ १७ ॥ आ पवस्व हिरण्यऽवत् अश्वऽवत् सोम वीरऽवत् वाजं गोऽमंतं आ भर ॥ १८ ॥ परि वाजे न वाजऽयुं अव्यः वारेषु सिंचत इंद्राय मधुमत्ऽतमं ॥ १९ ॥ कविं मृजंति मर्ज्यं धीभिः विप्राः अवस्यवः वृषा कनिक्रत् अर्षति ॥ २० ॥ ३३ ॥ वृषणं धीभिः अप्ऽतुरं सोमं ऋतस्य धारया मती विप्राः सं अस्वरन् ॥ २१ ॥ पवस्व देव आयुषक् इंद्रं गच्छतु ते मदः वायुं आ रोह धर्मणा ॥ २२ ॥ पवमान नि तोशसे रयिं सोम श्रवाय्यं प्रियः समुद्रं आ विश ॥ २३ ॥ अप ऽघ्नन् पवसे मृधः क्रतुऽवित् सोम मत्सरः नुदस्व अदेवऽयुं जनं ॥ २४ ॥



Digitized by Google

पवमाना असृक्षत सोमाः शुक्रास इंदवः। अभि विश्वानि काव्या ॥२५॥३४॥ पवमानास आशवः शुभ्रा असृग्रमिंदवः। घ्नंतो विश्वा अप द्विषः ॥२६॥ पवमाना दिवस्पर्यंतरिक्षादसृक्षत। पृथिव्या अधि सानवि ॥२७॥ पुनानः सोम धारयेंदो विश्वा अप स्रिधः। जहि रक्षांसि सुक्रतो ॥२८॥ अपघ्नन्त्सोम रक्षसोऽभ्यर्षं कनिक्रदत्। द्युमंतं शुष्ममुत्तमं ॥२९॥ अस्मे वसूनि धारय सोम दिव्यानि पार्थिवा। इंदो विश्वानि वार्या ॥३०॥३५॥

---

॥ ६४ ॥ १–३० कश्यपः ॥ पवमानः सोमः ॥ गायत्री ॥

॥६४॥ वृषा सोम द्युमाँ असि वृषा देव वृषव्रतः। वृषा धर्माणि दधिषे ॥१॥ वृष्णस्ते वृष्ण्यं शवो वृषा वनं वृषा मदः। सत्यं वृषन्वृषेदसि ॥२॥ अश्वो न चक्रदो वृषा सं गा इंदो समर्वतः। वि नो राये दुरो वृधि ॥३॥ असृक्षत प्र वाजिनो गव्या सोमासो अश्वया। शुक्रासो वीरयाशवः ॥४॥ शुंभमाना ऋतायुभिर्मृज्यमाना गभस्त्योः। पवंते वारे अव्यये ॥५॥३६॥ ते विश्वा दाशुषे वसु सोमा दिव्यानि पार्थिवा। पवंतामांतरिक्ष्या ॥६॥ पवमानस्य विश्ववित्प्र ते सर्गा असृक्षत। सूर्यस्येव न रश्मयः ॥७॥ केतुं कृण्वन्दिवस्परि विश्वा रूपाभ्यर्षसि। समुद्रः सोम पिन्वसे ॥८॥ हिन्वानो वाचमिष्यसि पवमान विधर्मणि। अक्रान्देवो न सूर्यः ॥९॥ इंदुः पविष्ट चेतनः प्रियः कवीनां मती। सृजदश्वं रथीरिव ॥१०॥३७॥ ऊर्मिर्यस्ते पवित्र आ देवावीः पर्यक्षरत्। सीदन्नृतस्य योनिमा ॥११॥ स नो अर्ष पवित्र आ मदो यो देववीतमः। इंदविंद्राय पीतये ॥१२॥ इषे पवस्व धारया मृज्यमानो मनीषिभिः। इंदो



Digitized by Google

पवमानाः असृक्षत सोमाः शुक्रासः इंदवः अभि विश्वानि काव्या ॥२५॥३४॥ पवमानासः आशवः शुभ्राः असृग्रं इंदवः घ्नंतः विश्वाः अप द्विषः ॥२६॥ पवमानाः दिवः परि अंतरिक्षात् असृक्षत पृथिव्याः अधि सानवि ॥२७॥ पुनानः सोम धारया इंदो इति विश्वाः अप स्रिधः जहि रक्षांसि सुऽक्रतो इति ॥२८॥ अपऽघ्नन् सोम रक्षसः अभि अर्ष कनिक्रदत् द्युऽमंतं शुष्मं उत्ऽतमं ॥२९॥ अस्मे इति वसूनि धारय सोम दिव्यानि पार्थिवा इंदो इति विश्वानि वार्या ॥३०॥३५॥

---

॥६४॥ वृषा सोम द्युऽमान् असि वृषा देव वृषऽव्रतः वृषा धर्माणि दधिषे ॥१॥ वृष्णः ते वृष्ण्यं शवः वृषा वनं वृषा मदः सत्यं वृषन् वृषा इत् असि ॥२॥ अश्वः न चक्रदः वृषा सं गाः इंदो इति सं अर्वतः वि नः राये दुरः वृधि ॥३॥ असृक्षत प्र वाजिनः गव्या सोमासः अश्वऽया शुक्रासः वीरऽया आशवः ॥४॥ शुंभमानाः ऋतयुऽभिः मृज्यमानाः गभस्त्योः पवंते वारे अव्यये ॥५॥३६॥ ते विश्वा दाशुषे वसु सोमाः दिव्यानि पार्थिवा पवंतां आ अंतरिक्ष्या ॥६॥ पवमानस्य विश्वऽवित् प्र ते सर्गाः असृक्षत सूर्यस्यऽइव न रश्मयः ॥७॥ केतुं कृण्वन् दिवः परि विश्वा रूपा अभि अर्षसि समुद्रः सोम पिन्वसे ॥८॥ हिन्वानः वाचं इष्यसि पवमान विऽधर्मणि अक्रान् देवः न सूर्यः ॥९॥ इंदुः पविष्ट चेतनः प्रियः कवीनां मती सृजत् अश्वं रथीःऽइव ॥१०॥३७॥ ऊर्मिः यः ते पवित्रे आ देवऽअवीः परिऽअक्षरत् सीदन् ऋतस्य योनिं आ ॥११॥ सः नः अर्ष पवित्रे आ मदः यः देवऽवीतमः इंदो इति इंद्राय पीतये ॥१२॥ इषे पवस्व धारया मृज्यमानः मनीषिऽभिः इंदो इति



Digitized by Google

रुचाभि गा इहि ॥१३॥ पुनानो वरिवस्कृध्यूर्जं जनाय गिर्वणः।
हरे सृजान आशिरं॥१४॥ पुनानो देववीतय इंद्रस्य याहि नि-
ष्कृतं। द्युतानो वाजिभिर्यतः॥१५॥३८॥ प्र हिन्वानास इंदवो-
ऽच्छा समुद्रमाशवः। धिया जूता असृक्षत॥१६॥ मर्मृजानास
आयवो वृथा समुद्रमिंदवः। अग्मन्नृतस्य योनिमा॥१७॥ परि
णो याह्यस्मयुर्विश्वा वसून्योजसा। पाहि नः शर्म वीरवत्॥१८॥
मिमाति वह्निरेतशः पदं युजान ऋक्वभिः। प्र यत्समुद्र आहितः
॥१९॥ आ यद्योनिं हिरण्ययमाशुर्ऋतस्य सीदति। जहात्यप्रचे-
तसः॥२०॥३९॥ अभि वेना अनूषतेयक्षंति प्रचेतसः। मज्जंत्य-
विचेतसः॥२१॥ इंद्रायेंदो मरुत्वते पवस्व मधुमत्तमः। ऋतस्य
योनिमासदं॥२२॥ तं त्वा विप्रा वचोविदः परिष्कृण्वंति वेधसः।
सं त्वा मृजंत्यायवः॥२३॥ रसं ते मित्रो अर्यमा पिबंति वरुणः
कवे। पवमानस्य मरुतः॥२४॥ त्वं सोम विपश्चितं पुनानो
वाचमिष्यसि। इंदो सहस्रभर्णसं॥२५॥४०॥ उतो सहस्रभर्णसं
वाचं सोम मखस्युवं। पुनान इंदवा भर॥२६॥ पुनान इंदवेषां
पुरुहूत जनानां। प्रियः समुद्रमा विश॥२७॥ दविद्युतत्या रुचा
परिष्टोभंत्या कृपा। सोमाः शुक्रा गवाशिरः॥२८॥ हिन्वानो
हेतृभिर्यत आ वाजं वाज्यक्रमीत्। सीदंतो वनुषो यथा॥२९॥
ऋधक्सोम स्वस्तये संजग्मानो दिवः कविः। पवस्व सूर्यो
दृशे॥३०॥४१॥१॥

---

॥६५॥ १–३० भृगुर्वारुणिर्जमदग्निर्वा॥ पवमानः सोमः॥ गायत्री॥

॥६५॥ हिन्वंति सूरमुस्रयः स्वसारो जामयस्पतिं। महामिंदुं
महीयुवः॥१॥ पवमान रुचारुचा देवो देवेभ्यस्परि। विश्वा



Digitized by Google

रुचा अभि गाः इहि ॥१३॥ पुनानः वरिवः कृधि ऊर्जं जनाय गिर्वणः हरे सृजानः आऽशिरं ॥१४॥ पुनानः देवऽवीतये इंद्रस्य याहि निःऽकृतं द्युतानः वाजिऽभिः यतः ॥१५॥३८॥ प्र हिन्वानासः इंदवः अच्छ समुद्रं आशवः धिया जूताः असृक्षत ॥१६॥ मर्मृजानासः आयवः वृथा समुद्रं इंदवः अग्मन् ऋतस्य योनिं आ ॥१७॥ परि नः याहि अस्मऽयुः विश्वा वसूनि ओजसा पाहि नः शर्म वीरऽवत् ॥१८॥ मिमाति वह्निः एतशः पदं युजानः ऋक्वऽभिः प्र यत् समुद्रे आऽहितः ॥१९॥ आ यत् योनिं हिरण्ययं आशुः ऋतस्य सीदति जहाति अप्रऽचेतसः ॥२०॥३९॥ अभि वेनाः अनूषत इयक्षंति प्रऽचेतसः मज्जंति अविऽचेतसः ॥२१॥ इंद्राय इंदो इति मरुत्वते पवस्व मधुमत्ऽतमः ऋतस्य योनिं आऽसदं ॥२२॥ तं त्वा विप्राः वचःऽविदः परि कृण्वंति वेधसः सं त्वा मृजंति आयवः ॥२३॥ रसं ते मित्रः अर्यमा पिबंति वरुणः कवे पवमानस्य मरुतः ॥२४॥ त्वं सोम विपःऽचितं पुनानः वाचं इष्यसि इंदो इति सहस्रऽभर्णसं ॥२५॥४०॥ उतो इति सहस्रऽभर्णसं वाचं सोम मखस्युवं पुनानः इंदो इति आ भर ॥२६॥ पुनानः इंदो इति एषां पुरुऽहूत जनानां प्रियः समुद्रं आ विश ॥२७॥ दविद्युतत्या रुचा परिऽस्तोभंत्या कृपा सोमाः शुक्राः गोऽआशिरः ॥२८॥ हिन्वानः हेतृऽभिः यतः आ वाजं वाजी अक्रमीत् सीदंतः वनुषः यथा ॥२९॥ ऋधक् सोम स्वस्तये संऽजग्मानः दिवः कविः पवस्व सूर्यः दृशे ॥३०॥४१॥१॥

---

॥६५॥ हिन्वंति सूरं उस्रयः स्वसारः जामयः पतिं महां इंदुं महीयुवः ॥१॥ पवमान रुचाऽरुचा देवः देवेभ्यः परि विश्वा



Digitized by Google

वसून्या विंश ॥ २॥ आ पंवमान सुष्टुतिं वृष्टिं देवेभ्यो दुवंः।
इषे पंवस्व संयतं ॥ ३॥ वृषा ह्यसि भानुना द्युमंतं त्वा हवा-
महे। पवंमान स्वाध्यंः ॥ ४॥ आ पंवस्व सुवीर्यं मंदंमानः
स्वायुध। इहो ष्विंदवा गंहि ॥ ५॥ १॥ यदद्भिः परिषिच्यसे
मृज्यमानो गभंस्त्योः। द्रुणा सधस्थंमश्नुषे ॥ ६॥ प्र सोमाय
व्यश्ववत्पवंमानाय गायत। महे सहस्रंचक्षसे ॥ ७॥ यस्य वर्णं
मधुश्चुतं हरिं हिन्वंत्यद्रिंभिः। इंदुमिंद्राय पीतयें ॥ ८॥ तस्यं ते
वाजिनो वयं विश्वा धनानि जिग्युषंः। सखित्वमा वृणीमहे॥९॥
वृषा पवस्व धारया मरुत्वते च मत्सरः। विश्वा दधान ओजंसा
॥ १०॥ २॥ तं त्वा धर्तारमोण्योः३ः पवंमान स्वर्दृशं। हिन्वे वाजेषु
वाजिनं ॥ ११॥ अया चित्तो विपानया हरिः पवस्व धारया।
युजं वाजेषु चोदय॥ १२॥ आ नं इंदो महीमिषं पवंस्व विश्वदंर्श-
तः। अस्मभ्यं सोम गातुवित् ॥ १३॥ आ कलशा अनूषतेंदो
धाराभिरोजंसा। एंद्रस्य पीतयें विश ॥ १४॥ यस्यं ते मद्यं रसं
तीव्रं दुहंत्यद्रिंभिः। स पंवस्वाभिमातिहा ॥ १५॥ ३॥ राजा
मेधाभिरीयते पवंमानो मनावधि। अंतरिक्षेण यातवे ॥ १६॥
आ नं इंदो शतग्विनं गवां पोषं स्वश्व्यं। वहा भगत्तिमूतयें
॥ १७॥ आ नंः सोम सहो जुवो रूपं न वर्चसे भर। सुष्वाणो देव-
वीतये ॥ १८॥ अर्षा सोम द्युमत्तमोऽभि द्रोणानि रोरुवत्।
सीदंञ्छ्येनो न योनिमा ॥ १९॥ अप्सा इंद्राय वायवे वरुणाय
मरुद्भ्यः। सोमो अर्षति विष्णवे ॥ २०॥ ४॥ इषं तोकाय नो दध-
दस्मभ्यं सोम विश्वतः। आ पंवस्व सहस्रिणं ॥ २१॥ ये सोमासः
परावति ये अर्वावति सुन्विरे। ये वादः शर्यणावंति ॥ २२॥ य
आर्जीकेषु कृत्वसु ये मध्ये पस्त्यानां। ये वा जनेषु पंचसु ॥ २३॥



Digitized by Google

वसूनि आ विश ॥२॥ आ पवमान सुऽस्तुतिं वृष्टिं देवेभ्यः दुवः
इषे पवस्व संऽयतं ॥३॥ वृषा हि असि भानुना द्युऽमंतं त्वा हवा-
महे पवमान सुऽआध्यः ॥४॥ आ पवस्व सुऽवीर्यं मंदमानः सु-
ऽआयुध इहो सु इंदो आ गहि ॥५॥१॥ यत् अत्ऽभिः परिऽसि-
च्यसे मृज्यमानः गभस्त्योः द्रुणा सधऽस्थं अश्नुषे ॥६॥ प्र सोमाय
व्यश्वऽवत् पवमानाय गायत महे सहस्रऽचक्षसे ॥७॥ यस्य वर्णं
मधुऽश्चुतं हरिं हिन्वंति अद्रिऽभिः इंदुं इंद्राय पीतये ॥८॥ तस्य ते
वाजिनः वयं विश्वा धनानि जिग्युषः सखिऽत्वं आ वृणीमहे ॥९॥
वृषा पवस्व धारया मरुत्वते च मत्सरः विश्वा दधानः ओजसा
॥१०॥२॥ तं त्वा धर्तारं ओण्योः पवमान स्वःऽदृशं हिन्वे वाजेषु
वाजिनं ॥११॥ अया चित्तः विपा अनया हरिः पवस्व धारया
युजं वाजेषु चोदय ॥१२॥ आ नः इंदो महीं इषं पवस्व विश्वऽदर्श-
तः अस्मभ्यं सोम गातुऽवित् ॥१३॥ आ कलशाः अनूषत इंदो
धाराभिः ओजसा आ इंद्रस्य पीतये विश ॥१४॥ यस्य ते मद्यं रसं
तीव्रं दुहंति अद्रिऽभिः सः पवस्व अभिमातिऽहा ॥१५॥३॥ राजा
मेधाभिः ईयते पवमानः मनौ अधि अंतरिक्षेण यातवे ॥१६॥
आ नः इंदो शतऽग्विनं गवां पोषं सुऽअश्व्यं वह भगत्तिं ऊतये
॥१७॥ आ नः सोम सहः जुवः रूपं न वर्चसे भर सुस्वानः देव-
ऽवीतये ॥१८॥ अर्ष सोम द्युमत्ऽतमः अभि द्रोणानि रोरुवत्
सीदन् श्येनः न योनिं आ ॥१९॥ अप्साः इंद्राय वायवे वरुणाय
मरुत्ऽभ्यः सोमः अर्षति विष्णवे ॥२०॥४॥ इषं तोकाय नः दधत्
अस्मभ्यं सोम विश्वतः आ पवस्व सहस्रिणं ॥२१॥ ये सोमासः प-
राऽवति ये अर्वाऽवति सुन्विरे ये वा अदः शर्यणाऽवति ॥२२॥ ये
आर्जीकेषु कृत्वऽसु ये मध्ये पस्त्यानां ये वा जनेषु पंचऽसु ॥२३॥



Digitized by Google

ते नो वृष्टिं दिवस्परि पवंतामा सुवीर्यं। सुवाना देवास इंदवः
॥२४॥ पवते हर्यतो हरिर्गृणानो जमदग्निना। हिन्वानो गोरधि
त्वचि ॥२५॥५॥ प्र शुक्रासो वयोजुवो हिन्वानासो न सप्तयः।
श्रीणाना अप्सु मृंजत॥२६॥ तं त्वा सुतेष्वाभुवो हिन्विरे देवतातये।
स पवस्वानया रुचा॥२७॥ आ ते दक्षं मयोभुवं वह्निमद्या वृणी-
महे। पांतमा पुरुस्पृहं॥२८॥ आ मंद्रमा वरेण्यमा विप्रमा मनी-
षिणं। पांतमा पुरुस्पृहं ॥२९॥ आ रयिमा सुचेतुनमा सुक्रतो
तनूष्वा। पांतमा पुरुस्पृहं ॥३०॥६॥

---

॥ ६६ ॥ १–३० शतं वैखानसाः ॥ १–१८. २२–३० पवमानः सोमः। १९–२१ अग्निः ॥
१–१७. १९–३० गायत्री। १८ अनुष्टुप् ॥

॥ ६६ ॥ पवस्व विश्वचर्षणेऽभि विश्वानि काव्या। सखा स-
खिभ्य ईड्यः ॥१॥ ताभ्यां विश्वस्य राजसि ये पवमान धामनी।
प्रतीची सोम तस्थतुः ॥२॥ परि धामानि यानि ते त्वं सोमासि
विश्वतः। पवमान ऋतुभिः कवे ॥३॥ पवस्व जनयन्निषोऽभि
विश्वानि वार्या। सखा सखिभ्य ऊतये॥४॥ तव शुक्रासो अर्चयो
दिवस्पृष्ठे वि तन्वते। पवित्रं सोम धामभिः ॥५॥७॥ तवेमे सप्त
सिंधवः प्रशिषं सोम सिस्रते। तुभ्यं धावंति धेनवः ॥६॥ प्र सोम
याहि धारया सुत इंद्राय मत्सरः। दधानो अक्षिति श्रवः ॥७॥
समु त्वा धीभिरस्वरन्हिन्वतीः सप्त जामयः। विप्रमाजा विव-
स्वतः ॥८॥ मृजंति त्वा समग्रुवोऽव्ये जीरावधि ष्वणि। रेभो
यदज्यसे वने ॥९॥ पवमानस्य ते कवे वाजिन्सर्गा असृक्षत।
अर्वंतो न श्रवस्यवः॥१०॥८॥ अच्छा कोशं मधुश्चुतमसृग्रं वारे
अव्यये। अवावशंत धीतयः॥११॥ अच्छा समुद्रमिंदवोऽस्तं गावो
न धेनवः। अग्मन्नृतस्य योनिमा ॥१२॥ प्र ण इंदो महे रण



Digitized by Google

ते नः वृष्टिं दिवः परि पवंतां आ सुऽवीर्यं सुवानाः देवासः इंदवः
॥२४॥ पवते हर्यतः हरिः गृणानः जमत्ऽअग्निना हिन्वानः गोः
अधि त्वचि ॥२५॥५॥ प्र शुक्रासः वयःऽजुवः हिन्वानासः न सप्तयः
श्रीणानाः अप्ऽसु मृंजत ॥२६॥ तं त्वा सुतेषु आऽभुवः हिन्विरे
देवऽतातये सः पवस्व अनया रुचा ॥२७॥ आ ते दक्षं मयःऽभुवं
वह्निं अद्य वृणीमहे पांतं आ पुरुऽस्पृहं ॥२८॥ आ मंद्रं आ वरेण्यं
आ विप्रं आ मनीषिणं पांतं आ पुरुऽस्पृहं ॥२९॥ आ रयिं आ
सुऽचेतुनं आ सुऽक्रतो॰ तनूषु आ पांतं आ पुरुऽस्पृहं ॥३०॥६॥

---

॥६६॥ पवस्व विश्वऽचर्षणे अभि विश्वानि काव्या सखा स-
खिऽभ्यः ईड्यः ॥१॥ ताभ्यां विश्वस्य राजसि ये पवमान धामनी
प्रतीची सोम तस्थतुः ॥२॥ परि धामानि यानि ते त्वं सोम असि
विश्वतः पवमान ऋतुऽभिः कवे ॥३॥ पवस्व जनयन् इषः अभि
विश्वानि वार्या सखा सखिऽभ्यः ऊतये ॥४॥ तव शुक्रासः अर्चयः
दिवः पृष्ठे वि तन्वते पवित्रं सोम धामऽभिः ॥५॥७॥ तव इमे सप्त
सिंधवः प्रऽशिषं सोम सिस्रते तुभ्यं धावंति धेनवः ॥६॥ प्र सोम
याहि धारया सुतः इंद्राय मत्सरः दधानः अक्षिति श्रवः ॥७॥ सं
ऊं त्वा धीभिः अस्वरन् हिन्वतीः सप्त जामयः विप्रं आजा वि-
वस्वतः ॥८॥ मृजंति त्वा सं अग्रुवः अव्ये जीरौ अधि स्वनि रेभः
यत् अज्यसे वने ॥९॥ पवमानस्य ते कवे वाजिन् सर्गाः असृक्षत
अर्वंतः न श्रवस्यवः ॥१०॥८॥ अच्छ कोशं मधुऽश्चुतं असृग्रं वारे
अव्यये अवावशंत धीतयः ॥११॥ अच्छ समुद्रं इंदवः अस्तं गावः
न धेनवः अग्मन् ऋतस्य योनिं आ ॥१२॥ प्र नः इंदो महे रणे



Digitized by Google

आपो॑ अ॒र्षन्ति॒ सिन्ध॑वः। यद्गोभि॑र्वासयि॒ष्यसे॑ ॥१३॥ अ॒स्य ते॑
स॒ख्ये व॒यमि॑यक्षन्त॒स्त्वोत॑यः। इन्दो॑ सखि॒त्वमु॑श्मसि ॥१४॥
आ प॑वस्व गवि॒ष्टये॑ म॒हे सो॑म नृ॒चक्ष॑से। एन्द्र॑स्य ज॒ठरे॑ विश
॥१५॥९॥ म॒हाँ अ॑सि सोम॒ ज्येष्ठ॑ उ॒ग्राणा॑मिन्द॒ ओजि॑ष्ठः।
यु॒ध्वा सञ्छश्व॑ज्जिगेथ ॥१६॥ य उ॒ग्रेभ्य॑श्चि॒दोजी॑या॒ञ्छूरे॑भ्य-
श्चि॒च्छूर॑तरः। भू॒रि॒दाभ्य॑श्चि॒न्मंही॑यान् ॥१७॥ त्वं सो॑म॒ सूर॒
एष॑स्तो॒कस्य॑ सा॒ता त॒नूना॑म्। वृ॒णी॒महे॑ स॒ख्याय॑ वृ॒णी॒महे॒ यु-
ज्याय॑ ॥१८॥ अग्न॒ आयूं॑षि पवस॒ आ सु॒वोर्ज॒मिषं॑ च नः। आ॒रे
बा॑धस्व दु॒च्छुना॑म् ॥१९॥ अ॒ग्निरृषि॒ः पव॑मानः॒ पाञ्च॑जन्यः
पु॒रोहि॑तः। तमी॑महे महाग॒यम् ॥२०॥१०॥ अग्ने॒ पव॑स्व॒
स्वपा॑ अ॒स्मे वर्चः॑ सु॒वीर्य॑म्। दध॑द्र॒यिं मयि॒ पोष॑म् ॥२१॥
पव॑मानो॒ अति॒ स्रिधो॒ऽभ्य॑र्षति सुष्टु॒तिम्। सूरो॒ न वि॒श्व-
द॑र्शतः ॥२२॥ स म॑र्मृजा॒न आ॒युभि॒ः प्रय॑स्वा॒न्प्रय॑से हि॒-
तः। इन्दु॒रत्यो॑ विचक्ष॒णः ॥२३॥ पव॑मान ऋ॒तं बृ॒हच्छु॒क्रं
ज्योति॑रजीजनत्। कृ॒ष्णा तमां॑सि॒ जङ्घ॑नत् ॥२४॥ पव॑मानस्य॒
जङ्घ्न॑तो॒ हरे॑श्च॒न्द्रा अ॑सृक्षत। जी॒रा अ॑जि॒रशो॑चिषः ॥२५॥११॥
पव॑मानो र॒थीत॑मः शु॒भ्रेभि॑ः शु॒भ्रश॑स्तमः। हरि॑श्चन्द्रो म-
रु॒द्ग॑णः ॥२६॥ पव॑मानो॒ व्य॑श्नवद्र॒श्मिभि॑र्वाज॒सात॑मः। द-
ध॑त्स्तो॒त्रे सु॒वीर्य॑म् ॥२७॥ प्र सु॑वा॒न इन्दु॑रक्षाः प॒वित्र॒मत्य-
व्यय॑म्। पु॒ना॒न इन्दु॒रिन्द्र॒मा ॥२८॥ ए॒ष सोमो॒ अधि॑ त्व॒चि
गवां॑ क्रीळ॒त्यद्रि॑भिः। इन्द्रं॒ मदा॑य॒ जोहु॑वत् ॥२९॥ यस्य॑ ते
द्यु॒म्नव॒त्पय॒ः पव॑मा॒नाभृ॑तं दि॒वः। तेन॑ नो मृळ जी॒वसे॑
॥३०॥१२॥



Digitized by Google

आपः अर्षंति सिंधवः यत् गोभिः वासयिष्यसे ॥१३॥ अस्य ते सख्ये वयं इयक्षंतः त्वाऽऊतयः इंदो सखिऽत्वं उश्मसि ॥१४॥ आ पवस्व गोऽइष्टये महे सोम नृऽचक्षसे आ इंद्रस्य जठरे विश ॥१५॥९॥ महान् असि सोम ज्येष्ठः उग्राणां इंदो ओजिष्ठः युध्वा सन् शश्वत् जिगेथ ॥१६॥ यः उग्रेभ्यः चित् ओजीयान् शूरेभ्यः चित् शूरऽतरः भूरिऽदाभ्यः चित् मंहीयान् ॥१७॥ त्वं सोम सूरः आ इषः तोकस्य साता तनूनां वृणीमहे सख्याय वृणीमहे युज्याय ॥१८॥ अग्ने आयूंषि पवसे आ सुव ऊर्जं इषं च नः आरे बाधस्व दुच्छुनां ॥१९॥ अग्निः ऋषिः पवमानः पांचऽजन्यः पुरःऽहितः तं ईमहे महाऽगयं ॥२०॥१०॥ अग्ने पवस्व सुऽअपाः अस्मे वर्चः सुऽवीर्यं दधत् रयिं मयि पोषं ॥२१॥ पवमानः अति स्रिधः अभि अर्षति सुऽस्तुतिं सूरः न विश्वऽदर्शतः ॥२२॥ सः मर्मृजानः आयुऽभिः प्रयस्वान् प्रयसे हितः इंदुः अत्यः विऽचक्षणः ॥२३॥ पवमानः ऋतं बृहत् शुक्रं ज्योतिः अजीजनत् कृष्णा तमांसि जंघनत् ॥२४॥ पवमानस्य जंघ्नतः हरेः चंद्राः असृक्षत जीराः अजिरऽशोचिषः ॥२५॥११॥ पवमानः रथिऽतमः शुभ्रेभिः शुभ्रशःऽतमः हरिऽचंद्रः मरुत्ऽगणः ॥२६॥ पवमानः वि अश्नवत् रश्मिऽभिः वाजऽसातमः दधत् स्तोत्रे सुऽवीर्यं ॥२७॥ प्र सुवानः इंदुः अक्षाः पवित्रं अति अव्ययं पुनानः इंदुः इंद्रं आ ॥२८॥ एषः सोमः अधि त्वचि गवां क्रीळति अद्रिऽभिः इंद्रं मदाय जोहुवत् ॥२९॥ यस्य ते द्युम्नऽवत् पयः पवमान आऽभृतं दिवः तेन नः मृळ जीवसे ॥३०॥१२॥

॥ ६७ ॥ १–३ भरद्वाजः । ४–६ कश्यपः । ७–९ गोतमः । १०–१२ अत्रिः । १३–१५ विश्वामित्रः । १६–१८ जमदग्निः । १९–२१ वसिष्ठः । २२–३२ पवित्रो वसिष्ठो वोभौ वा ॥ १–९. १३–२२. २८–३० पवमानः सोमः । १०–१२ पवमानः सोमः पूषा वा । २३. २४ अग्निः । २५ अग्निः सविता वा । २६ अग्निरग्निर्वा सविता च । २७ अग्निर्विश्वे देवा वा । ३१. ३२ पावमान्यध्येतृस्तुतिः ॥ १–१५. १९–२६. २८. २९ गायत्री । १६–१८ द्विपदा गायत्री । २७. ३१. ३२ अनुष्टुप् । ३० पुरउष्णिक् ॥

॥६७॥ त्वं सोमासि धारयुर्मंद्र ओजिष्ठो अध्वरे । पवस्व मंह-
यद्रयिः ॥१॥ त्वं सुतो नृमादनो दधन्वान्मत्सरिंतमः । इंद्राय सूरि-
रंधसा ॥२॥ त्वं सुष्वाणो अद्रिभिरभ्यर्ष कनिक्रदत् । द्युमंतं शुष्म-
मुत्तमं ॥३॥ इंदुर्हिन्वानो अर्षति तिरो वाराण्यव्यया । हरिर्वाज-
मचिक्रदत् ॥४॥ इंदो व्यव्यमर्षसि वि श्रवांसि वि सौभगा । वि
वाजान्सोम गोमतः ॥५॥१३॥ आ न इंदो शतग्विनं रयिं गोमं-
तमश्विनं । भरा सोम सहस्रिणं ॥६॥ पवमानास इंदवस्तिरः प-
वित्रमाशवः । इंद्रं यामेभिराशत ॥७॥ ककुहः सोम्यो रस इंदुरिं-
द्राय पूर्व्यः । आयुः पवत आयवे ॥८॥ हिन्वंति सूरमुस्रयः पवमानं
मधुश्चुतं । अभि गिरा समस्वरन् ॥९॥ अविता नो अजाश्वः पूषा
यामनियामनि । आ भक्षत्कन्यासु नः ॥१०॥१४॥ अयं सोमः क-
पर्दिने घृतं न पवते मधु । आ भक्षत्कन्यासु नः ॥११॥ अयं त आ-
घृणे सुतो घृतं न पवते शुचि । आ भक्षत्कन्यासु नः ॥१२॥ वाचो
जंतुः कवीनां पवस्व सोम धारया । देवेषु रत्नधा असि ॥१३॥
आ कलशेषु धावति श्येनो वर्म वि गाहते । अभि द्रोणा क-
निक्रदत् ॥१४॥ परि प्र सोम ते रसोऽसर्जि कलशे सुतः । श्येनो
न तक्तो अर्षति ॥१५॥१५॥ पवस्व सोम मंद्यन्निंद्राय मधु-
मत्तमः ॥१६॥ असृग्रन्देववीतये वाजयंतो रथा इव ॥१७॥
ते सुतासो मदिंतमाः शुक्रा वायुमसृक्षत ॥१८॥ ग्राव्णा तुन्नो
अभिष्टुतः पवित्रं सोम गच्छसि । दधत्स्तोत्रे सुवीर्यं ॥१९॥



Digitized by Google

॥६७॥ त्वं सोम असि धारयुः मंद्रः ओजिष्ठः अध्वरे पवस्व
मंहयत्ऽरयिः ॥१॥ त्वं सुतः नृऽमादनः दधन्वान् मत्सरिन्-
ऽतमः इंद्राय सूरिः अंधसा ॥२॥ त्वं सुस्वानः अद्रिऽभिः अभि
अर्ष कनिक्रदत् द्युऽमंतं शुष्मं उत्ऽतमं ॥३॥ इंदुः हिन्वानः
अर्षति तिरः वाराणि अव्यया हरिः वाजं अचिक्रदत् ॥४॥
इंदो वि अव्यं अर्षसि वि श्रवांसि वि सौभगा वि वाजान् सोम
गोऽमतः ॥५॥१३॥ आ नः इंदो शतऽग्विनं रयिं गोऽमंतं
अश्विनं भर सोम सहस्रिणं ॥६॥ पवमानासः इंदवः तिरः
पवित्रं आशवः इंद्रं यामेभिः आशत ॥७॥ ककुहः सोम्यः रसः
इंदुः इंद्राय पूर्व्यः आयुः पवते आयवे ॥८॥ हिन्वंति सूरं उ-
स्रयः पवमानं मधुऽश्चुतं अभि गिरा सं अस्वरन् ॥९॥ अवि-
ता नः अजऽअश्वः पूषा यामनिऽयामनि आ भक्षत् कन्यासु
नः ॥१०॥१४॥ अयं सोमः कपर्दिने घृतं न पवते मधु आ भ-
क्षत् कन्यासु नः ॥११॥ अयं ते आघृणे सुतः घृतं न पवते शुचि
आ भक्षत् कन्यासु नः ॥१२॥ वाचः जंतुः कवीनां पवस्व सोम
धारया देवेषु रत्नऽधाः असि ॥१३॥ आ कलशेषु धावति श्ये-
नः वर्म वि गाहते अभि द्रोणा कनिक्रदत् ॥१४॥ परि प्र सोम
ते रसः असर्जि कलशे सुतः श्येनः न तक्तः अर्षति ॥१५॥
॥१५॥ पवस्व सोम मंदयन् इंद्राय मधुमत्ऽतमः ॥१६॥ अ-
सृग्रन् देवऽवीतये वाजऽयंतः रथाःऽइव ॥१७॥ ते सुतासः
मदिन्ऽतमाः शुक्राः वायुं असृक्षत ॥१८॥ ग्राव्णा तुन्नः
अभिऽस्तुतः पवित्रं सोम गच्छसि दधत् स्तोत्रे सुऽवीर्यं ॥१९॥



Digitized by Google

एष तुन्नो अभिष्टुतः पवित्रमति गाहते । रक्षोहा वारमव्ययं ॥२०॥१६॥ यदंति यच्च दूरके भयं विंदति मामिह । पवमान वि तज्जहि ॥२१॥ पवमानः सो अद्य नः पवित्रेण विचर्षणिः । यः पोता स पुनातु नः ॥२२॥ यत्ते पवित्रमर्चिष्यग्ने विततमंतरा । ब्रह्म तेन पुनीहि नः ॥२३॥ यत्ते पवित्रमर्चिवदग्ने तेन पुनीहि नः । ब्रह्मसवैः पुनीहि नः ॥२४॥ उभाभ्यां देव सवितः पवित्रेण सवेन च । मां पुनीहि विश्वतः ॥२५॥१७॥ त्रिभिष्ट्वं देव सवितर्वर्षिष्ठैः सोम धामभिः । अग्ने दक्षैः पुनीहि नः ॥२६॥ पुनंतु मां देवजनाः पुनंतु वसवो धिया । विश्वे देवाः पुनीत मा जातवेदः पुनीहि मा ॥२७॥ प्र प्यायस्व प्र स्यंदस्व सोम विश्वेभिरंशुभिः । देवेभ्य उत्तमं हविः ॥२८॥ उप प्रियं पनिप्नतं युवानमाहुतीवृधं । अगन्म बिभ्रतो नमः ॥२९॥ अलाय्यस्य परशुर्ननाश तमा पवस्व देव सोम । आखुं चिदेव देव सोम ॥३०॥ यः पावमानीरध्येत्यृषिभिः संभृतं रसं । सर्वं स पूतमश्नाति स्वदितं मातरिश्वना ॥३१॥ पावमानीर्यो अध्येत्यृषिभिः संभृतं रसं । तस्मै सरस्वती दुहे क्षीरं सर्पिर्मधूदकं ॥३२॥१८॥३॥

---

॥ ६८ ॥ १—१० वात्सप्रिर्भलंदनः ॥ पवमानः सोमः ॥ १—९ जगती । १० त्रिष्टुप् ॥

॥६८॥ प्र देवमच्छा मधुमंत इंदवोऽसिष्यदंत गाव आ न धेनवः । बर्हिषदो वचनावंत ऊधभिः परिस्रुतमुस्रिया निर्णिजं धिरे ॥१॥ स रोरुवदभि पूर्वा अचिक्रददुपारुहः श्रथयन्स्वादते हरिः । तिरः पवित्रं परियन्नुरु ज्रयो नि शर्याणि दधते देव आ वरं ॥२॥ वि यो ममे यम्या संयती मदः साकंवृधा पयसा पिन्वदक्षिता । मही अपारे रजसी



Digitized by Google

एषः तुवः अभिऽस्तुतः पवित्रं अति गाहते रक्षःऽहा वारं अव्ययं॥२०॥१६॥ यत् अंति यत् च दूरके भयं विंदति मां इह पवमान वि तत् जहि ॥२१॥ पवमानः सः अद्य नः पवित्रेण विचर्षणिः यः पोता सः पुनातु नः ॥२२॥ यत् ते पवित्रं अर्चिषि अग्ने विऽततं अंतः आ ब्रह्म तेन पुनीहि नः ॥२३॥ यत् ते पवित्रं अर्चिऽवत् अग्ने तेन पुनीहि नः ब्रह्मऽसवैः पुनीहि नः ॥२४॥ उभाभ्यां देव सवितः पवित्रेण सवेन च मां पुनीहि विश्वतः ॥२५॥ ॥१७॥ त्रिऽभिः त्वं देव सवितः वर्षिष्ठैः सोम धामऽभिः अग्ने दक्षैः पुनीहि नः ॥२६॥ पुनंतु मां देवऽजनाः पुनंतु वसवः धिया विश्वे देवाः पुनीत मा जातऽवेदः पुनीहि मा ॥२७॥ प्र प्यायस्व प्र स्यंदस्व सोम विश्वेभिः अंशुऽभिः देवेभ्यः उत्ऽतमं हविः ॥२८॥ उप प्रियं पनिप्नतं युवानं आहुतिऽवृधं अगन्म बिभ्रतः नमः ॥२९॥ अलाय्यस्य परशुः ननाश तं आ पवस्व देव सोम आखुं चित् एव देव सोम ॥३०॥ यः पावमानीः अधिऽएति ऋषिऽभिः संऽभृतं रसं सर्वं सः पूतं अश्नाति स्वदितं मातरिश्वना ॥३१॥ पावमानीः यः अधिऽएति ऋषिऽभिः संऽभृतं रसं तस्मै सरस्वती दुहे क्षीरं सर्पिः मधु उदकं ॥३२॥ १८ ॥ ३॥

---

॥६८॥ प्र देवं अच्छ मधुऽमंतः इंदवः असिस्यदंत गावः आ न धेनवः बर्हिऽसदः वचनाऽवंतः ऊधऽभिः परिऽस्रुतं उस्रियाः निःऽनिजं धिरे॥१॥ सः रोरुवत् अभि पूर्वाः अचिक्रदत् उपऽआरुहः श्रथयन् स्वादते हरिः तिरः पवित्रं परिऽयन् उरु ज्रयः नि शर्याणि दधते देवः आ वरं॥२॥ वि यः ममे यम्या संऽयती० मदः साकंऽवृधा पयसा पिन्वत् अक्षिता मही अपारे रजसी



Digitized by Google

विवेविददभिव्रजन्नक्षितं पाज आ ददे॥३॥ स मातरा विचरन्वाजयन्नपः प्र मेधिरः स्वधया पिन्वते पदं। अंशुर्यवेन पिपिशे यतो नृभिः सं जामिभिर्नसते रक्षते शिरः॥४॥ सं दक्षेण मनसा जायते कविरृतस्य गर्भो निहितो यमा परः। यूना ह संता प्रथमं वि जज्ञतुर्गुहा हितं जनिम नेममुद्यतं॥५॥१९॥ मंद्रस्य रूपं विविदुर्मनीषिणः श्येनो यदंधो अभरत्परावतः। तं मर्जयंत सुवृधं नदीष्वाँ उशंतमंशुं परियंतमृग्मियं॥६॥ त्वां मृजंति दश योषणः सुतं सोम ऋषिभिर्मतिभिर्धीतिभिर्हितं। अव्यो वारेभिरुत देवहूतिभिर्नृभिर्यतो वाजमा दर्षि सातये॥७॥ परिप्रयंतं वय्यं सुषंसदं सोमं मनीषा अभ्यनूषत स्तुभः। यो धारया मधुमाँ ऊर्मिणा दिव इयर्ति वाचं रयिषाळमर्त्यः॥८॥ अयं दिव इयर्ति विश्वमा रजः सोमः पुनानः कलशेषु सीदति। अद्भिर्गोभिर्मृज्यते अद्रिभिः सुतः पुनान इंदुर्वरिवो विदत्प्रियं॥९॥ एवा नः सोम परिषिच्यमानो वयो दधच्चित्रतमं पवस्व। अद्वेषे द्यावापृथिवी हुवेम देवा धत्त रयिमस्मे सुवीरं॥१०॥२०॥

---

॥ ६९ ॥ १—१० हिरण्यस्तूपः ॥ पवमानः सोमः ॥ १—८ जगती । ९. १० त्रिष्टुप् ॥

॥६९॥ इषुर्न धन्वन्प्रति धीयते मतिर्वत्सो न मातुरुप सर्ज्यूधनि। उरुधारेव दुहे अग्र आयत्यस्य व्रतेष्वपि सोम इष्यते॥१॥ उपो मतिः पृच्यते सिच्यते मधु मंद्राजनी चोदते अंतरासनि। पवमानः संतनिः प्रघ्नतामिव मधुमान्द्रप्सः परि वारमर्षति॥२॥ अव्ये वधूयुः पवते परि त्वचि श्रथ्नीते नप्तीरदितेरृतं यते। हरिरक्रान्यजतः संयतो मदो नृम्णा शिशानो महिषो न शोभते॥३॥ उक्षा मिमाति प्रति यंति धेनवो



Digitized by Google

विऽवेविदत् अभिऽव्रजन् अक्षितं पाजः आ दुदे ॥३॥ सः मातरा विऽचरन् वाजयन् अपः प्र मेधिरः स्वधया पिन्वते पदं अंशुः यवेन पिपिशे यतः नृऽभिः सं जामिऽभिः नसते रक्षते शिरः ॥४॥ सं दक्षेण मनसा जायते कविः ऋतस्य गर्भः निऽहितः यमा परः यूना ह संता प्रथमं वि जज्ञतुः गुहा हितं जनिम नेमं उत्ऽयतं ॥५॥१९॥ मंद्रस्य रूपं विविदुः मनीषिणः श्येनः यत् अंधः अभरत् पराऽवतः तं मर्जयंत सुऽवृधं नदीषु आ उशंतं अंशुं परिऽयंतं ऋग्मियं ॥६॥ त्वां मृजंति दश योषणः सुतं सोम ऋषिऽभिः मतिऽभिः धीतिऽभिः हितं अव्यः वारेभिः उत देवहूतिऽभिः नृऽभिः यतः वाजं आ दर्षि सातये ॥७॥ परिऽप्रयंतं वय्यं सुऽसंसदं सोमं मनीषाः अभि अनूषत स्तुभः यः धारया मधुऽमान् ऊर्मिणा दिवः इयर्ति वाचं रयिषाट् अमर्त्यः ॥८॥ अयं दिवः इयर्ति विश्वं आ रजः सोमः पुनानः कलशेषु सीदति अत्ऽभिः गोभिः मृज्यते अद्रिऽभिः सुतः पुनानः इंदुः वरिवः विदत् प्रियं ॥९॥ एव नः सोम परिऽसिच्यमानः वयः दधत् चित्रऽतमं पवस्व अद्वेषे द्यावापृथिवी हुवेम देवाः धत्त रयिं अस्मे सुऽवीरं ॥१०॥२०॥

---

॥६९॥ इषुः न धन्वन् प्रति धीयते मतिः वत्सः न मातुः उप सर्जि ऊधनि उरुधाराऽइव दुहे अग्रे आऽयती अस्य व्रतेषु अपि सोमः इष्यते ॥१॥ उपो मतिः पृच्यते सिच्यते मधु मंद्रऽअजनी चोदते अंतः आसनि पवमानः संऽतनिः प्रघ्नतांऽइव मधुऽमान् द्रप्सः परि वारं अर्षति ॥२॥ अव्ये वधूऽयुः पवते परि त्वचि श्रथ्नीते नप्तीः अदितेः ऋतं यते हरिः अक्रान् यजतः संऽयतः मदः नृम्णा शिशानः महिषः न शोभते ॥३॥ उक्षा मिमाति प्रति यंति धेनवः



Digitized by Google

देवस्य देवीरुप यंति निष्कृतं । अत्यक्रमीदर्जुनं वारमव्ययमत्कं
न निक्तं परि सोमो अव्यत ॥ ४ ॥ अमृक्तेन रुशता वाससा हरि-
रमर्त्यो निर्णिजानः परि व्यत । दिवस्पृष्ठं बर्हणा निर्णिजे कृतो-
पस्तरणं चम्वोर्नभस्मयं ॥ ५ ॥ २१ ॥ सूर्यस्येव रश्मयो द्रावयित्न-
वो मत्सरासः प्रसुपः साकमीरते । तंतुं ततं परि सर्गास आशवो
नेंद्रादृते पवते धाम किं चन ॥ ६ ॥ सिंधोरिव प्रवणे निम्न आश-
वो वृषच्युता मदासो गातुमाशत । शं नो निवेशे द्विपदे चतुष्प-
देऽस्मे वाजाः सोम तिष्ठंतु कृष्टयः ॥ ७ ॥ आ नः पवस्व वसु-
मद्धिरण्यवदश्वावद्गोमद्यवमत्सुवीर्यं । यूयं हि सोम पितरो मम
स्थन दिवो मूर्धानः प्रस्थिता वयस्कृतः ॥ ८ ॥ एते सोमाः पव-
मानास इंद्रं रथा इव प्र ययुः सातिमच्छ । सुताः पवित्रमति
यंत्यव्यं हित्वी वव्रिं हरितो वृष्टिमच्छ ॥ ९ ॥ इंदविंद्राय बृहते
पवस्व सुमृळीको अनवद्यो रिशादाः । भरा चंद्राणि गृणते
वसूनि देवैर्द्यावापृथिवी प्रावतं नः ॥ १० ॥ २२ ॥

---

॥ ७० ॥ १—१० रेणुर्वैश्वामित्रः ॥ पवमानः सोमः ॥ १—९ जगती । १० त्रिष्टुप् ॥

॥ ७० ॥ त्रिरस्मै सप्त धेनवो दुदुह्रे सत्यामाशिरं पूर्व्ये व्यो-
मनि । चत्वार्यन्या भुवनानि निर्णिजे चारूणि चक्रे यदृ-
तैरवर्धत ॥ १ ॥ स भिक्षमाणो अमृतस्य चारुण उभे द्यावा
काव्येना वि शश्रथे । तेजिष्ठा अपो मंहना परि व्यत यदी देवस्य
श्रवसा सदो विदुः ॥ २ ॥ ते अस्य संतु केतवोऽमृत्यवोऽदाभ्यासो
जनुषी उभे अनु । येभिर्नृम्णा च देव्या च पुनत आदिद्राजानं
मनना अगृभ्णत ॥ ३ ॥ स मृज्यमानो दशभिः सुकर्मभिः
प्र मध्यमासु मातृषु प्रमे सचा । व्रतानि पानो अमृतस्य



Digitized by Google

देवस्य देवीः उप यंति निःऽकृतं अति अक्रमीत् अर्जुनं वारं अव्ययं अत्कं न निक्तं परि सोमः अव्यत ॥ ४ ॥ अमृक्तेन रुशता वाससा हरिः अमर्त्यः निःऽनिजानः परि व्यत दिवः पृष्ठं बर्हणा निःऽनिजे कृत उपऽस्तरणं चम्वोः नभस्मयं ॥ ५ ॥ २१ ॥ सूर्यस्यऽइव रश्मयः द्रवयित्नवः मत्सरासः प्रऽसुपः साकं ईरते तंतुं ततं परि सर्गासः आशवः न इंद्रात् ऋते पवते धाम किं चन ॥ ६ ॥ सिंधोःऽइव प्रवणे निम्ने आशवः वृषऽच्युताः मदासः गातुं आशत शं नः निऽवेशे द्विऽपदे चतुःऽपदे अस्मे वाजाः सोम तिष्ठंतु कृष्टयः ॥ ७ ॥ आ नः पवस्व वसुऽमत् हिरण्यऽवत् अश्वऽवत् गोऽमत् यवऽमत् सुऽवीर्यं यूयं हि सोम पितरः मम स्थन दिवः मूर्धानः प्रऽस्थिताः वयःऽकृतः ॥ ८ ॥ एते सोमाः पवमानासः इंद्रं रथाःऽइव प्र ययुः सातिं अच्छ सुताः पवित्रं अति यंति अव्यं हित्वी वव्रिं हरितः वृष्टिं अच्छ ॥ ९ ॥ इंदो इंद्राय बृहते पवस्व सुऽमृळीकः अनवद्यः रिशादाः भर चंद्राणि गृणते वसूनि देवैः द्यावापृथिवी प्र अवतं नः ॥ १० ॥ २२ ॥

---

॥ ७० ॥ त्रिः अस्मै सप्त धेनवः दुदुह्रे सत्यां आऽशिरं पूर्व्ये विऽओमनि चत्वारि अन्या भुवनानि निःऽनिजे चारूणि चक्रे यत् ऋतैः अवर्धत ॥ १ ॥ सः भिक्षमाणः अमृतस्य चारुणः उभे द्यावा काव्येन वि शश्रथे तेजिष्ठाः अपः मंहना परि व्यत यदि देवस्य श्रवसा सदः विदुः ॥ २ ॥ ते अस्य संतु केतवः अमृत्यवः अदाभ्यासः जनुषी उभे अनु येभिः नृम्णा च देव्या च पुनते आत् इत् राजानं मननाः अगृभ्णत ॥ ३ ॥ सः मृज्यमानः दशऽभिः सुकर्मऽभिः प्र मध्यमासु मातृषु प्रऽमे सचा व्रतानि पानः अमृतस्य



Digitized by Google

चाख्य उभे नृचक्षा अनु पश्यते विशौ ॥४॥ स मर्मृजान इंद्रियाय
धायस ओभे अंता रोदसी हर्षते हितः । वृषा शुष्मेण बाधते वि
दुर्मतीरादेदिशानः शर्यहेव शुरुधः ॥५॥२३॥ स मातरा न ददृ-
शान उस्रियो नानददेति मरुतामिव स्वनः । जानन्नृतं प्रथमं
यत्स्वर्णरं प्रशस्तये कमवृणीत सुक्रतुः ॥६॥ रुवति भीमो वृष-
भस्तविष्यया शृंगे शिशानो हरिणी विचक्षणः । आ योनिं सोमः
सुकृतं नि षीदति गव्ययी त्वग्भवति निर्णिगव्ययी ॥७॥ शुचिः
पुनानस्तन्वमरेपसमव्ये हरिर्न्यधाविष्ट सानवि । जुष्टो मित्राय
वरुणाय वायवे त्रिधातु मधु क्रियते सुकर्मभिः ॥८॥ पवस्व
सोम देववीतये वृषेंद्रस्य हार्दि सोमधानमा विश । पुरा नो
बाधाद्दुरिताति पारय क्षेत्रविद्धि दिश आहा विपृच्छते ॥९॥
हितो न सप्तिरभि वाजमर्षेंद्रस्येंदो जठरमा पवस्व । नावा
न सिंधुमति पर्षि विद्वाञ्छूरो न युध्यन्नव नो निदः स्पः
॥१०॥२४॥

---

॥७१॥ १–९ ऋषभो वैश्वामित्रः ॥ पवमानः सोमः ॥ १–८ जगती । ९ त्रिष्टुप् ॥

॥७१॥ आ दक्षिणा सृज्यते शुष्म्या३सदं वेति द्रुहो रक्षसः
पाति जागृविः । हरिरोपशं कृणुते नभस्पय उपस्तिरे च-
म्वो३र्ब्रह्म निर्णिजे ॥१॥ प्र कृष्टिहेव शूष एति रोरुवदसुर्यं१ वर्णं
नि रिणीते अस्य तं । जहाति वव्रिं पितुरेति निष्कृतमुपप्रुतं
कृणुते निर्णिजं तना ॥२॥ अद्रिभिः सुतः पवते गभस्त्योर्वृ-
षायते नभसा वेपते मती । स मोदते नसते साधते गिरा ने-
निक्ते अप्सु यजते परीमणि ॥३॥ परि द्युक्षं सहसः पर्वतावृधं
मध्वः सिंचंति हर्म्यस्य सक्षणिं । आ यस्मिन्गावः सुहुताद



Digitized by Google

चारुणः उभे नृऽचक्षाः अनु पश्यते विशौ ॥४॥ सः मर्मृजानः
इंद्रियाय धायसे आ उभे अंतः रोदसी हर्षते हितः वृषा शुष्मेण
बाधते वि दुःऽमतीः आऽदेदिशानः शर्यहाऽइव शुरुधः ॥५॥
॥२३॥ सः मातरा न ददृशानः उस्रियः नानदत् एति मरुताम्ऽइव
स्वनः जानन् ऋतं प्रथमं यत् स्वःऽनरं प्रऽशस्तये कं अवृणीत
सुऽक्रतुः ॥६॥ रुवति भीमः वृषभः तविष्यया शृंगे शिशानः
हरिणी विऽचक्षणः आ योनिं सोमः सुऽकृतं नि सीदति ग-
व्ययी त्वक् भवति निःऽनिक् अव्ययी ॥७॥ शुचिः पुनानः तन्वं
अरेपसं अव्ये हरिः नि अधाविष्ट सानवि जुष्टः मित्राय वरुणाय
वायवे त्रिऽधातु मधु क्रियते सुकर्मऽभिः ॥८॥ पवस्व सोम देव-
ऽवीतये वृषा इंद्रस्य हार्दि सोमऽधानं आ विश पुरा नः बाधात्
दुःऽइता अति पारय क्षेत्रऽवित् हि दिशः आह विऽपृच्छते ॥९॥
हितः न सप्तिः अभि वाजं अर्ष इंद्रस्य इंदो जठरं आ पवस्व ना-
वा न सिंधुं अति पर्षि विद्वान् शूरः न युध्यन् अव नः निदः
स्पः॰ ॥१०॥२४॥

---

॥७१॥ आ दक्षिणा सृज्यते शुष्मी आऽसदं वेति द्रुहः रक्षसः
पाति जागृविः हरिः ओपशं कृणुते नभः पयः उपऽस्तिरे चम्वोः
ब्रह्म निःऽनिजे ॥१॥ प्र कृष्टिहाऽइव शूषः एति रोरुवत् असुर्यं
वर्णं नि रिणीते अस्य तं जहाति वव्रिं पितुः एति निःऽकृतं उप-
ऽप्रुतं कृणुते निःऽनिजं तना ॥२॥ अद्रिऽभिः सुतः पवते गभ-
स्त्योः वृषऽयते नभसा वेपते मती सः मोदते नसते साधते गिरा
नेनिक्ते अप्ऽसु यजते परीमणि ॥३॥ परि द्युक्षं सहसः पर्वतऽवृधं
मध्वः सिंचंति हर्म्यस्य सक्षणिं आ यस्मिन् गावः सुहुतऽअदः



Digitized by Google

ऊर्धनि मूर्धन्छ्रीणंत्यप्रियं वरीमभिः ॥४॥ समी रथं न भुरिजो-
रहेषत दश स्वसारो अदितेरुपस्थ आ। जिगादुप ज्ञयति गोर-
पीच्यं पदं यदस्य मतुथा अजीजनन् ॥५॥२५॥ श्येनो न योनिं
सदनं धिया कृतं हिरण्ययमासदं देव एषति। ए रिणंति बर्हिषि
प्रियं गिराश्वो न देवाँ अप्येति यज्ञियः॥६॥ परा व्यक्तो अरुषो
दिवः कविर्वृषा त्रिपृष्ठो अनविष्ट गा अभि। सहस्रणीतिर्यतिः
परायती रेभो न पूर्वीरुषसो वि राजति ॥७॥ त्वेषं रूपं कृणुते
वर्णो अस्य स यत्राशयत्समृता सेधति स्रिधः। अप्सा याति स्व-
धया दैव्यं जनं सं सुष्टुती नसते सं गोअग्रया ॥८॥ उक्षेव यूथा
परियन्नरावीदधि त्विषीरधित सूर्यस्य। दिव्यः सुपर्णोऽव चक्षत
क्षां सोमः परि क्रतुना पश्यते जाः ॥९॥२६॥

---

॥ ७२ ॥ १–९ हरिमंतः ॥ पवमानः सोमः ॥ जगती ॥

॥ ७२ ॥ हरिं मृजंत्यरुषो न युज्यते सं धेनुभिः कलशे
सोमो अज्यते। उद्वाचमीरयति हिन्वते मती पुरुष्टुतस्य कति
चित्परिप्रियः ॥१॥ साकं वदंति बहवो मनीषिण इंद्रस्य
सोमं जठरे यदादुहुः। यदी मृजंति सुगभस्तयो नरः सनी-
ळाभिर्दशभिः काम्यं मधु ॥२॥ अरममाणो अत्येति गा
अभि सूर्यस्य प्रियं दुहितुस्तिरो रवं। अन्वस्मै जोषमभ-
रद्विनंगृसः सं द्वयीभिः स्वसृभिः क्षेति जामिभिः ॥३॥ नृ-
धूतो अद्रिषुतो बर्हिषि प्रियः पतिर्गवां प्रदिव इंदुर्ऋत्वि-
यः। पुरंधिवान्मनुषो यज्ञसाधनः शुचिर्धिया पवते सोम
इंद्र ते ॥४॥ नृबाहुभ्यां चोदितो धारया सुतोऽनुष्वधं पवते
सोम इंद्र ते। आप्राः क्रतून्समजैरध्वरे मतीर्वेर्न द्रुषच्चम्वो३रा-



Digitized by Google

ऊर्धनि मूर्धन् श्रीणंति अप्रियं वरीमऽभिः ॥४॥ सं ईं रथं न भुरिजोः अहेषत दश स्वसारः अदितेः उपऽस्थे आ जिगात् उप जयति गोः अपीच्यं पदं यत् अस्य मतुथाः अजीजनन् ॥५॥२५॥ श्येनः न योनिं सदनं धिया कृतं हिरण्ययं आऽसदं देवः आ ईषति आ ईं रिणंति बर्हिषि प्रियं गिरा अश्वः न देवान् अपि एति यज्ञियः ॥६॥ परा विऽअक्तः अरुषः दिवः कविः वृषा त्रिऽपृष्ठः अनविष्ट गाः अभि सहस्रऽनीतिः यतिः पराऽयतिः रेभः न पूर्वीः उषसः वि राजति ॥७॥ त्वेषं रूपं कृणुते वर्णः अस्य सः यत्र अशयत् संऽऋता सेधति स्रिधः अप्साः याति स्वधया दैव्यं जनं सं सुऽस्तुती नसते सं गोऽअग्रया ॥८॥ उक्षाऽइव यूथा परिऽयन् अरावीत् अधि त्विषीः अधित सूर्यस्य दिव्यः सुऽपर्णः अव चक्षत क्षां सोमः परि क्रतुना पश्यते जाः ॥९॥२६॥

---

॥७२॥ हरिं मृजंति अरुषः न युज्यते सं धेनुऽभिः कलशे सोमः अज्यते उत् वाचं ईरयति हिन्वते मती पुरुऽस्तुतस्य कति चित् परिऽप्रियः ॥१॥ साकं वदंति बहवः मनीषिणः इंद्रस्य सोमं जठरे यत् आऽदुहुः यदि मृजंति सुऽगभस्तयः नरः सऽनीळाभिः दशऽभिः काम्यं मधु ॥२॥ अरममाणः अति एति गाः अभि सूर्यस्य प्रियं दुहितुः तिरः रवं अनु अस्मै जोषं अभरत् विनंऽगृसः सं द्वयीभिः स्वसृऽभिः क्षेति जामिऽभिः ॥३॥ नृऽधूतः अद्रिऽसुतः बर्हिषि प्रियः पतिः गवां प्रऽदिवः इंदुः ऋत्वियः पुरंधिऽवान् मनुषः यज्ञऽसाधनः शुचिः धिया पवते सोमः इंद्र ते ॥४॥ नृबाहुऽभ्यां चोदितः धारया सुतः अनुऽस्वधं पवते सोमः इंद्र ते आ अप्राः क्रतून् सं अजैः अध्वरे मतीः वेः न द्रुऽसत् चम्वोः आ अ-



Digitized by Google

सद्वरिः॥५॥२७॥ अंशुं दुहंति स्तनयंतमक्षितं कविं कवयोऽपसो मनीषिणः। समी गावो मतयो यंति संयत ऋतस्य योना सदने पुनर्भुवः॥६॥ नाभा पृथिव्या धरुणो महो दिवो३ऽपामूर्मौ सिंधुष्वंतरुक्षितः। इंद्रस्य वज्रो वृषभो विभूवसुः सोमो हृदे पवते चारु मत्सरः॥७॥ स तू पवस्व परि पार्थिवं रजः स्तोत्रे शिक्षन्नाधून्वते च सुक्रतो। मा नो निर्भाग्वसुनः सादनस्पृशो रयिं पिशंगं बहुलं वसीमहि॥८॥ आ तू न इंदो शतदात्वश्व्यं सहस्रदातु पशुमद्धिरण्यवत्। उप मास्व बृहती रेवतीरिषोऽधि स्तोत्रस्य पवमान नो गहि॥९॥२८॥

---

॥७३॥ १-९ पवित्रः॥ पवमानः सोमः॥ जगती॥

॥७३॥ स्रक्वे द्रप्सस्य धमतः समस्वरन्नृतस्य योना समरंत नाभयः। त्रीन्स मूर्ध्नो असुरश्चक्र आरभे सत्यस्य नावः सुकृतमपीपरन्॥१॥ सम्यक् सम्यंचो महिषा अहेषत सिंधोरूर्मावधि वेना अवीविपन्। मधोर्धाराभिर्जनयंतो अर्कमित्प्रियामिंद्रस्य तन्वमवीवृधन्॥२॥ पवित्रवंतः परि वाचमासते पितैषां प्रत्नो अभि रक्षति व्रतं। महः समुद्रं वरुणस्तिरो दधे धीरा इच्छेकुर्धरुणेष्वारभं॥३॥ सहस्रधारेऽव ते समस्वरन्दिवो नाके मधुजिह्वा असश्चतः। अस्य स्पशो न नि मिषंति भूर्णयः पदेपदे पाशिनः संति सेतवः॥४॥ पितुर्मातुरध्या ये समस्वरन्नृचा शोचंतः संदहंतो अव्रतान्। इंद्रद्विष्टामप धमंति मायया त्वचमसिक्नीं भूमनो दिवस्परि॥५॥२९॥ प्रत्नान्मानादध्या ये समस्वरञ्छ्लोकयंत्रासो रभसस्य मंतवः। अपानक्षासो बधिरा अहासत ऋतस्य पंथां न तरंति दुष्कृतः॥६॥ सहस्रधारे वितते पवित्र आ वाचं पु-



Digitized by Google

सदत् हरिः ॥ ५ ॥ २७ ॥ अंशुं दुहंति स्तनयंतं अक्षितं कविं कवयः अपसः मनीषिणः सं ईं गावः मतयः यंति संऽयतः ऋतस्य योना सदने पुनःऽभुवः ॥ ६ ॥ नाभा पृथिव्याः धरुणः महः दिवः अपां ऊर्मौ सिंधुषु अंतः उक्षितः इंद्रस्य वज्रः वृषभः विभुऽवसुः सोमः हृदे पवते चारु मत्सरः ॥ ७ ॥ सः तु पवस्व परि पार्थिवं रजः स्तोत्रे शिक्षन् आऽधून्वते च सुऽक्रतो इति सुऽक्रतो मा नः निः भाक् वसुनः सदनऽस्पृशः रयिं पिशंगं बहुलं वसीमहि ॥ ८ ॥ आ तु नः इंदो इति शतऽदातु अश्व्यं सहस्रऽदातु पशुऽमत् हिरण्यऽवत् उप मास्व बृहतीः रेवतीः इषः अधि स्तोत्रस्य पवमान नः गहि ॥ ९ ॥ २८ ॥

---

॥ ७३ ॥ स्रक्वे द्रप्सस्य धमतः सं अस्वरन् ऋतस्य योना सं अरंत नाभयः त्रीन् सः मूर्ध्नः असुरः चक्रे आऽरभे सत्यस्य नावः सुऽकृतं अपीपरन् ॥ १ ॥ सम्यक् सम्यंचः महिषाः अहेषत सिंधोः ऊर्मौ अधि वेनाः अवीविपन् मधोः धाराभिः जनयंतः अर्कं इत् प्रियां इंद्रस्य तन्वं अवीवृधन् ॥ २ ॥ पवित्रऽवंतः परि वाचं आसते पिता एषां प्रत्नः अभि रक्षति व्रतं महः समुद्रं वरुणः तिरः दधे धीराः इत् शेकुः धरुणेषु आऽरभं ॥ ३ ॥ सहस्रऽधारे अव ते सं अस्वरन् दिवः नाके मधुऽजिह्वाः असश्चतः अस्य स्पशः न नि मिषंति भूर्णयः पदेऽपदे पाशिनः संति सेतवः ॥ ४ ॥ पितुः मातुः अधि आ ये संऽअस्वरन् ऋचा शोचंतः संऽदहंतः अव्रतान् इंद्रऽद्विष्टां अप धमंति मायया त्वचं असिक्नीं भूमनः दिवः परि ॥ ५ ॥ २९ ॥ प्रत्नात् मानात् अधि आ ये संऽअस्वरन् श्लोकऽयंत्रासः रभसस्य मंतवः अप अनक्षासः बधिराः अहासत ऋतस्य पंथां न तरंति दुःऽकृतः ॥ ६ ॥ सहस्रऽधारे विऽतते पवित्रे आ वाचं पु-



Digitized by Google

नंति कवयो मनीषिणः। रुद्रास एषामिषिरासो अद्रुहः स्पशः
स्वंचः सुदृशो नृचक्षसः ॥७॥ ऋतस्य गोपा न दभाय सुक्रतुस्त्री
ष पवित्रा हृद्यं१तरा दधे। विद्वान्स विश्वा भुवनाभि पश्यत्य-
वाजुष्टान्विध्यति कर्ते अव्रतान् ॥८॥ ऋतस्य तंतुर्विततः पवित्र
आ जिह्वाया अग्रे वरुणस्य मायया। धीराश्चित्तत्समिनक्षंत
आशतात्रा कर्तमव पदात्यप्रभुः ॥९॥३०॥

---

॥७४॥ १–९ कक्षीवान् ॥ पवमानः सोमः ॥ १–७. ९ जगती। ८ त्रिष्टुप् ॥

॥७४॥ शिशुर्न जातोऽव चक्रदद्वने स्व१र्यद्वाज्यरुषः सि-
षासति। दिवो रेतसा सचते पयोवृधा तमीमहे सुमती शर्म
सप्रथः ॥१॥ दिवो यः स्कंभो धरुणः स्वातत आपूर्णो अंशुः
पर्येति विश्वतः। सेमे मही रोदसी यक्षदावृता समीचीने
दाधार समिषः कविः ॥२॥ महि प्सरः सुकृतं सोम्यं मधूर्वी
गव्यूतिरदितेर्ऋतं यते। ईशे यो वृष्टेरित उस्रियो वृषापां
नेता य इतऊतिर्ऋग्मियः ॥३॥ आत्मन्वन्नभो दुह्यते घृतं
पय ऋतस्य नाभिरमृतं वि जायते। समीचीनाः सुदानवः
प्रीणंति तं नरो हितमव मेहंति पेरवः ॥४॥ अरावीदंशुः
सचमान ऊर्मिणा देवाव्यं१मनुषे पिन्वति त्वचं। दधाति
गर्भमदितेरुपस्थ आ येन तोकं च तनयं च धामहे ॥५॥३१॥
सहस्रधारेऽव ता असश्चतस्तृतीये संतु रजसि प्रजावतीः।
चतस्रो नाभो निहिता अवो दिवो हविर्भरंत्यमृतं घृतश्चुतः
॥६॥ श्वेतं रूपं कृणुते यत्सिषासति सोमो मीढ्वां असुरो वेद
भूमनः। धिया शमी सचते सेमभि प्रवद्दिवस्कवंधमव दर्षदु-
द्रिणं ॥७॥ अध श्वेतं कलशं गोभिरक्तं कार्ष्मन्ना वाज्यक्र-



Digitized by Google

नंति कवयः मनीषिणः रुद्रासः एषां इषिरासः अद्रुहः स्पशः सुऽअंचः सुऽदृशः नृऽचक्षसः ॥७॥ ऋतस्य गोपाः न दभाय सुऽक्रतुः त्री सः पवित्रा हृदि अंतः आ दधे विद्वान् सः विश्वा भुवना अभि पश्यति अव अजुष्टान् विध्यति कर्ते अव्रतान् ॥८॥ ऋतस्य तंतुः विऽततः पवित्रे आ जिह्वायाः अग्रे वरुणस्य मायया धीराः चित् तत् सम्ऽइनक्षंतः आशत अत्र कर्ते अव पदाति अप्रऽभुः ॥९॥३०॥

---

॥७४॥ शिशुः न जातः अव चक्रदत् वने स्वः यत् वाजी अरुषः सिषासति दिवः रेतसा सचते पयःऽवृधा तं ईमहे सुऽमती शर्म सऽप्रथः ॥१॥ दिवः यः स्कंभः धरुणः सुऽआततः आऽपूर्णः अंशुः परिऽएति विश्वतः सः इमे मही रोदसी यक्षत् आऽवृता समीचीने दाधार सं इषः कविः ॥२॥ महि प्सरः सुऽकृतं सोम्यं मधु उर्वी गव्यूतिः अदितेः ऋतं यते ईशे यः वृष्टेः इतः उस्रियः वृषा अपां नेता यः इतःऽऊतिः ऋग्मियः ॥३॥ आत्मन्ऽवत् नभः दुह्यते घृतं पयः ऋतस्य नाभिः अमृतं वि जायते सम्ऽईचीनाः सुऽदानवः प्रीणंति तं नरः हितं अव मेहंति पेरवः ॥४॥ अरावीत् अंशुः सचमानः ऊर्मिणा देवऽअव्यं मनुषे पिन्वति त्वचं दधाति गर्भं अदितेः उपऽस्थे आ येन तोकं च तनयं च धामहे ॥५॥३१॥ सहस्रऽधारे अव ताः असश्चतः तृतीये संतु रजसि प्रजाऽवतीः चतस्रः नाभः निऽहिताः अवः दिवः हविः भरंति अमृतं घृतऽश्चुतः ॥६॥ श्वेतं रूपं कृणुते यत् सिषासति सोमः मीढ्वान् असुरः वेद भूमनः धिया शमी सचते सः ईं अभि प्रऽवत् दिवः कवंधं अव दर्षत् उद्रिणं ॥७॥ अध श्वेतं कलशं गोभिः अक्तं कार्ष्मन् आ वाजी अक्र-



Digitized by Google

मीत्ससवान्। आ हिंन्विरे मनसा देवयंतः कक्षीवते शतहिंमाय गोनां ॥ ८ ॥ अब्धिः सोम पपृचानस्य ते रसोऽव्यो वारं वि पवमान धावति। स मृज्यमानः कविभिर्मदिंतम स्वदस्वेंद्राय पवमान पीतये ॥ ९ ॥ ३२ ॥

॥ ७५ ॥ १–५ कविः ॥ पवमानः सोमः ॥ जगती ॥

॥ ७५ ॥ अभि प्रियाणि पवते चनोहितो नामानि यह्वो अधि येषु वर्धते। आ सूर्यस्य बृहतो बृहन्नधि रथं विष्वंचमरुहद्विचक्षणः ॥ १ ॥ ऋतस्य जिह्वा पवते मधु प्रियं वक्ता पतिर्धियो अस्या अदाभ्यः। दधाति पुत्रः पित्रोरपीच्यं१ नाम तृतीयमधि रोचने दिवः ॥ २ ॥ अव द्युतानः कलशाँ अचिक्रदन्नृभिर्येमानः कोश आ हिरण्यये। अभीमृतस्य दोहना अनूषताधि त्रिपृष्ठ उषसो वि राजति ॥ ३ ॥ अद्रिभिः सुतो मतिभिश्चनोहितः प्ररोचयन्रोदसी मातरा शुचिः। रोमाण्यव्या समया वि धावति मधोर्धारा पिन्वमाना दिवेदिवे ॥ ४ ॥ परि सोम प्र धन्वा स्वस्तये नृभिः पुनानो अभि वासयाशिरं। ये ते मदा आहनसो विहायसस्तेभिरिंद्रं चोदय दातवे मघं ॥ ५ ॥ ३३ ॥ २ ॥

॥ ७६ ॥ १–५ कविः ॥ पवमानः सोमः ॥ जगती ॥

॥ ७६ ॥ धर्ता दिवः पवते कृत्व्यो रसो दक्षो देवानामनुमाद्यो नृभिः। हरिः सृजानो अत्यो न सत्वभिर्वृथा पाजांसि कृणुते नदीष्वा ॥ १ ॥ शूरो न धत्त आयुधा गभस्त्योः स्वः१ सिषासन्रथिरो गविष्टिषु। इंद्रस्य शुष्ममीरयन्नपस्युभिरिंदुर्हिन्वानो अज्यते मनीषिभिः ॥ २ ॥ इंद्रस्य सोम पवमान ऊर्मिणा तविष्यमाणो जठरेष्वा विश। प्र णः पिन्व विद्युदभ्रेव रोदसी



Digitized by Google

मीत् सस्ऽवान् आ हिन्विरे मनसा देवऽयंतः कक्षीवते शतऽहिं-
माय गोनां ॥८॥ अतऽभिः सोम पपृचानस्य ते रसः अव्यः वारं
वि पवमान धावति सः मृज्यमानः कविऽभिः मदिन्ऽतम
स्वदस्व इंद्राय पवमान पीतये ॥९॥३२॥

---

॥७५॥ अभि प्रियाणि पवते चनःऽहितः नामानि यह्वः अधि
येषु वर्धते आ सूर्यस्य बृहतः बृहन् अधि रथं विष्वंचं अरुहत्
विऽचक्षणः ॥१॥ ऋतस्य जिह्वा पवते मधु प्रियं वक्ता पतिः
धियः अस्याः अदाभ्यः दधाति पुत्रः पित्रोः अपीच्यं नाम तृतीयं
अधि रोचने दिवः ॥२॥ अव द्युतानः कलशान् अचिक्रदत्
नृऽभिः येमानः कोशे आ हिरण्यये अभि ईं ऋतस्य दोहनाः अनू-
षत अधि त्रिऽपृष्ठः उषसः वि राजति ॥३॥ अद्रिऽभिः सुतः मति-
ऽभिः चनःऽहितः प्रऽरोचयन् रोदसी॰ मातरा शुचिः रोमाणि
अव्या समया वि धावति मधोः धारा पिन्वमाना दिवेऽदिवे ॥४॥
परि सोम प्र धन्व स्वस्तये नृऽभिः पुनानः अभि वासय आऽशिरं
ये ते मदाः आऽहनसः विऽहायसः तेभिः इंद्रं चोदय दातवे मघं
॥५॥३३॥२॥

---

॥७६॥ धर्ता दिवः पवते कृत्व्यः रसः दक्षः देवानां अनुऽमाद्यः
नृऽभिः हरिः सृजानः अत्यः न सत्वऽभिः वृथा पाजांसि कृणुते
नदीषु आ ॥१॥ शूरः न धत्ते आयुधा गभस्त्योः स्वः॰ सिसासन्
रथिरः गोऽइष्टिषु इंद्रस्य शुष्मं ईरयन् अपस्युऽभिः इंदुः हिन्वानः
अज्यते मनीषिऽभिः ॥२॥ इंद्रस्य सोम पवमानः ऊर्मिणा तवि-
ष्यमाणः जठरेषु आ विश प्र नः पिन्व विद्युत् अभ्राऽइव रोदसी॰



Digitized by Google

धिया न वाजाँ उप मासि शश्वतः ॥३॥ विश्वस्य राजा पवते स्वर्दृश ऋतस्य धीतिमृषिषाळवीवशत्। यः सूर्यस्यासिरेण मृज्यते पिता मतीनामसमष्टकाव्यः ॥४॥ वृषेव यूथा परि कोशमर्षस्यपामुपस्थे वृषभः कनिक्रदत्। स इंद्राय पवसे मत्सरिंतमो यथा जेषाम समिथे त्वोतयः ॥५॥१॥

॥ ७७ ॥ १–५ कविः ॥ पवमानः सोमः ॥ जगती ॥

॥७७॥ एष प्र कोशे मधुमाँ अचिक्रददिंद्रस्य वज्रो वपुषो वपुष्टरः। अभीमृतस्य सुदुघा घृतश्चुतो वाश्रा अर्षति पयसेव धेनवः ॥१॥ स पूर्व्यः पवते यं दिवस्परि श्येनो मथायदिषितस्तिरो रजः। स मध्व आ युवते वेविजान इत्कृशानोरस्तुर्मनसाह बिभ्युषा ॥२॥ ते नः पूर्वास उपरास इंदवो महे वाजाय धन्वंतु गोमते। ईक्षेण्यासो अह्यो३न चारवो ब्रह्मब्रह्म ये जुजुषुर्हविर्हविः ॥३॥ अयं नो विद्वान्वनवद्वनुष्यत इंदुः सत्राचा मनसा पुरुष्टुतः। इनस्य यः सदने गर्भमादधे गवामुरुब्जमभ्यर्षति व्रजं ॥४॥ चक्रिर्दिवः पवते कृत्व्यो रसो महाँ अदब्धो वरुणो हुरुग्यते। असावि मित्रो वृजनेषु यज्ञियोऽत्यो न यूथे वृषयुः कनिक्रदत् ॥५॥२॥

॥ ७८ ॥ १–५ कविः ॥ पवमानः सोमः ॥ जगती ॥

॥७८॥ प्र राजा वाचं जनयन्नसिष्यददपो वसानो अभि गा इयक्षति। गृभ्णाति रिप्रमविरस्य तान्वा शुद्धो देवानामुप याति निष्कृतं ॥१॥ इंद्राय सोम परि षिच्यसे नृभिर्नृचक्षा ऊर्मिः कविरज्यसे वने। पूर्वीर्हि ते स्रुतयः संति यातवे सहस्रमश्वा हरयश्चमूषदः ॥२॥ समुद्रिया अप्सरसो मनीषिणमासीना अंतरभि सोममक्षरन्। ता ईं हिन्वंति हर्म्यस्य सक्ष-



Digitized by Google

धिया न वाजान् उप मासि शश्वतः ॥३॥ विश्वस्य राजा पवते स्वःऽदृशः ऋतस्य धीतिं ऋषिषाट् अवीवशत् यः सूर्यस्य असिरेण मृज्यते पिता मतीनां असमष्टऽकाव्यः ॥४॥ वृषाऽइव यूथा परि कोशं अर्षसि अपां उपऽस्थे वृषभः कनिक्रदत् सः इंद्राय पवसे मत्सरिन्ऽतमः यथा जेषाम संऽइथे त्वाऽऊतयः ॥५॥१॥

---

॥७७॥ एषः प्र कोशे मधुऽमान् अचिक्रदत् इंद्रस्य वज्रः वपुषः वपुःऽतरः अभि ईं ऋतस्य सुऽदुघाः घृतऽश्चुतः वाश्राः अर्षंति पयसाऽइव धेनवः ॥१॥ सः पूर्व्यः पवते यं दिवः परि श्येनः मथायत् इषितः तिरः रजः सः मध्वः आ युवते वेविजानः इत् कृशानोः अस्तुः मनसा अह बिभ्युषा ॥२॥ ते नः पूर्वासः उपरासः इंदवः महे वाजाय धन्वंतु गोऽमंते ईक्षेण्यासः अह्यः न चारवः ब्रह्मऽब्रह्म ये जुजुषुः हविःऽहविः ॥३॥ अयं नः विद्वान् वनवत् वनुष्यतः इंदुः सत्राचा मनसा पुरुऽस्तुतः इनस्य यः सदने गर्भं आऽदधे गवां उरुब्जं अभि अर्षति व्रजं ॥४॥ चक्रिः दिवः पवते कृत्व्यः रसः महान् अदब्धः वरुणः हुरुक् यते असावि मित्रः वृजनेषु यज्ञियः अत्यः न यूथे वृषऽयुः कनिक्रदत् ॥५॥२॥

---

॥७८॥ प्र राजा वाचं जनयन् असिस्यदत् अपः वसानः अभि गाः इयक्षति गृभ्णाति रिप्रं अविः अस्य तान्वा शुद्धः देवानां उप याति निःऽकृतं ॥१॥ इंद्राय सोम परि सिच्यसे नृऽभिः नृऽचक्षाः ऊर्मिः कविः अज्यसे वने पूर्वीः हि ते स्रुतयः संति यातवे सहस्रं अश्वाः हरयः चमूऽसदः ॥२॥ समुद्रियाः अप्सरसः मनीषिणं आसीनाः अंतः अभि सोमं अक्षरन् ताः ईं हिन्वंति हर्म्यस्य सक्ष-



Digitized by Google

णिं याचंते सुम्नं पवमानमक्षितं ॥ ३ ॥ गोजिन्नः सोमो रथ-
जिद्धिरण्यजित्स्वर्जिदब्जित्पवते सहस्रजित् । यं देवासश्चक्रिरे
पीतये मदं स्वादिष्ठं द्रप्समरुणं मयोभुवं ॥ ४ ॥ एतानि सोम
पवमानो अस्मयुः सत्यानि कृण्वन्द्रविणान्यर्षसि । जहि शत्रु-
मंतिके दूरके च य उर्वीं गव्यूतिमभयं च नस्कृधि ॥ ५ ॥ ३ ॥

॥ ७९ ॥ १-५ कविः ॥ पवमानः सोमः ॥ जगती ॥

॥ ७९ ॥ अचोदसो नो धन्वंत्विंदवः प्र सुवानासो बृहद्दिवेषु
हरयः । वि च नशन्न इषो अरातयोऽर्यो नशंत सनिषंत नो
धियः ॥ १ ॥ प्र णो धन्वंत्विंदवो मदच्युतो धना वा येभिरर्वतो
जुनीमसि । तिरो मर्तस्य कस्य चित्परिह्वृतिं वयं धनानि वि-
श्वधा भरेमहि ॥ २ ॥ उत स्वस्या अरात्या अरिर्हि ष उतान्य-
स्या अरात्या वृको हि षः । धन्वन्न तृष्णा समरीत तां अभि
सोम जहि पवमान दुराध्यः ॥ ३ ॥ दिवि ते नाभा परमो य
आददे पृथिव्यास्ते रुरुहुः सानवि क्षिपः । अद्रयस्त्वा बप्सति
गोरधि त्वच्य१प्सु त्वा हस्तैर्दुदुहुर्मनीषिणः ॥ ४ ॥ एवा त इंदो
सुभ्वं सुपेशसं रसं तुंजंति प्रथमा अभिश्रियः । निदंनिदं पव-
मान नि तारिष आविस्ते शुष्मो भवतु प्रियो मदः ॥ ५ ॥ ४ ॥

॥ ८० ॥ १-५ वसुर्भारद्वाजः ॥ पवमानः सोमः ॥ जगती ॥

॥ ८० ॥ सोमस्य धारा पवते नृचक्षस ऋतेन देवान्हवते दि-
वस्परि । बृहस्पते रवथेना वि दिद्युते समुद्रासो न सवनानि
विव्यचुः ॥ १ ॥ यं त्वा वाजिन्नघ्न्या अभ्यनूषतायोहतं योनि-
मा रोहसि द्युमान् । मघोनामायुः प्रतिरन्महि श्रव इंद्राय
सोम पवसे वृषा मदः ॥ २ ॥ एंद्रस्य कुक्षा पवते मदिंतम



Digitized by Google

र्थ्रिं याचंते सुत्रं पवमानं अक्षितं ॥ ३ ॥ गोऽजित् नः सोमः रथ-ऽजित् हिरण्यऽजित् स्वःऽजित् अप्ऽजित् पवते सहस्रऽजित् यं देवासः चक्रिरे पीतये मदं स्वादिष्ठं द्रप्सं अरुणं मयःऽभुवं ॥ ४ ॥ एतानि सोम पवमानः असऽयुः सत्यानि कृण्वन् द्रविणानि अर्षसि जहि शत्रुं अंतिके दूरके च यः उर्वीं गव्यूतिं अभयं च नः कृधि ॥ ५ ॥ ३ ॥

---

॥ ७९ ॥ अचोदसः नः धन्वंतु इंदवः प्र सुवानासः बृहत्ऽदिवेषु हरयः वि च नशन् नः इषः अरातयः अर्यः नशंत सनिषंत नः धियः ॥ १ ॥ प्र नः धन्वंतु इंदवः मदऽच्युतः धना वा येभिः अर्वतः जुनी-मसि तिरः मर्तस्य कस्य चित् परिऽह्वृतिं वयं धनानि विश्वधा भरेमहि ॥ २ ॥ उत स्वस्याः अरात्याः अरिः हि सः उत अन्यस्याः अ-रात्याः वृकः हि सः धन्वन् न तृष्णा सं अरीत तान् अभि सोम जहि पवमान दुःऽआध्यः ॥ ३ ॥ दिवि ते नाभा परमः यः आऽददे पृथि-व्याः ते रुरुहुः सानवि क्षिपः अद्रयः त्वा बप्सति गोः अधि त्वचि अप्ऽसु त्वा हस्तैः दुदुहुः मनीषिणः ॥ ४ ॥ एव ते इंदो सुऽभ्वं सुऽपे-शसं रसं तुंजंति प्रथमाः अभिऽश्रियः निदंऽनिदं पवमान नि तारिषः आविः ते शुष्मः भवतु प्रियः मदः ॥ ५ ॥ ४ ॥

---

॥ ८० ॥ सोमस्य धारा पवते नृऽचक्षसः ऋतेन देवान् हवते दिवः परि बृहस्पतेः रवथेन वि दिद्युते समुद्रासः न सवनानि वि-व्यचुः ॥ १ ॥ यं त्वा वाजिन् अघ्न्याः अभि अनूषत अयःऽहतं योनिं आ रोहसि द्युऽमान् मघोनां आयुः प्रऽतिरन् महि श्रवः इंद्राय सोम पवसे वृषा मदः ॥ २ ॥ आ इंद्रस्य कुक्षा पवते मदिन्ऽतमः



Digitized by Google

ऊर्जं वसानः श्रवसे सुमंगलः । प्रत्यङ् स विश्वा भुवनाभि
पप्रथे क्रीळन्हरिरत्यः स्यंदते वृषा ॥३॥ तं त्वा देवेभ्यो मधु-
मत्तमं नरः सहस्रधारं दुहते दश क्षिपः । नृभिः सोम प्रच्युतो
ग्रावभिः सुतो विश्वान्देवाँ आ पवस्वा सहस्रजित् ॥ ४ ॥ तं
त्वा हस्तिनो मधुमंतमद्रिभिर्दुहंत्यप्सु वृषभं दश क्षिपः । इंद्रं
सोम मादयन्दैव्यं जनं सिंधोरिवोर्मिः पवमानो अर्षसि
॥ ५ ॥ ५ ॥

॥ ८१ ॥ १–५ वसुर्भारद्वाजः ॥ पवमानः सोमः ॥ १–४ जगती । ५ त्रिष्टुप् ॥

॥८१॥ प्र सोमस्य पवमानस्योर्मय इंद्रस्य यंति जठरं
सुपेशसः । दध्ना यदीमुन्नीता यशसा गवां दानाय शूरमुदमं-
दिषुः सुताः ॥१॥ अच्छा हि सोमः कलशाँ असिष्यदत्यो न
वोळ्हा रघुवर्तनिर्वृषा । अथा देवानामुभयस्य जन्मनो विद्वाँ
अश्नोत्यमुत इतश्च यत् ॥ २ ॥ आ नः सोम पवमानः किरा
वस्विंदो भव मघवा राधसो महः । शिक्षा वयोधो वसवे सु
चेतुना मा नो गयमारे अस्मत्परा सिचः ॥३॥ आ नः पूषा
पवमानः सुरातयो मित्रो गच्छंतु वरुणः सजोषसः । बृहस्प-
तिर्मरुतो वायुरश्विना त्वष्टा सविता सुयमा सरस्वती ॥ ४ ॥
उभे द्यावापृथिवी विश्वमिन्वे अर्यमा देवो अदितिर्विधाता ।
भगो नृशंस उर्व१ंतरिक्षं विश्वे देवाः पवमानं जुषंत ॥५॥६॥

॥ ८२ ॥ १–५ वसुर्भारद्वाजः ॥ पवमानः सोमः ॥ १–४ जगती । ५ त्रिष्टुप् ॥

॥८२॥ असावि सोमो अरुषो वृषा हरी राजेव दस्मो अभि
गा अचिक्रदत् । पुनानो वारं पर्येत्यव्ययं श्येनो न योनिं
घृतवंतमासदं ॥ १ ॥ कविर्वेधस्या पर्येषि माहिनमत्यो न
मृष्टो अभि वाजमर्षसि । अपसेधन्दुरिता सोम मृळय घृतं



Digitized by Google

ऊर्जं वसानः श्रवसे सुऽमंगलः प्रत्यङ् सः विश्वा भुवना अभि पप्रथे क्रीळन् हरिः अत्यः स्यंदते वृषा ॥३॥ तं त्वा देवेभ्यः मधुमत्ऽतमं नरः सहस्रऽधारं दुहते दश क्षिपः नृऽभिः सोम प्रऽच्युतः ग्रावऽभिः सुतः विश्वान् देवान् आ पवस्व सहस्रऽजित् ॥४॥ तं त्वा हस्तिनः मधुऽमंतं अद्रिऽभिः दुहंति अप्ऽसु वृषभं दश क्षिपः इंद्रं सोम मादयन् दैव्यं जनं सिंधोःऽइव ऊर्मिः पवमानः अर्षसि ॥ ५ ॥ ५ ॥

---

॥८१॥ प्र सोमस्य पवमानस्य ऊर्मयः इंद्रस्य यंति जठरं सुऽपेशसः दध्ना यत् ईं उत्ऽनीताः यशसा गवां दानाय शूरं उत्ऽअमंदिषुः सुताः ॥१॥ अच्छ हि सोमः कलशान् असिस्यदत् अत्यः न वोळ्हा रघुऽवर्तनिः वृषा अथ देवानां उभयस्य जन्मनः विद्वान् अश्नोति अमुतः इतः च यत् ॥२॥ आ नः सोम पवमानः किर वसु इंदो भव मघऽवा राधसः महः शिक्ष वयःऽधः वसवे सु चेतुना मा नः गयं आरे अस्मत् परा सिचः ॥३॥ आ नः पूषा पवमानः सुऽरातयः मित्रः गच्छंतु वरुणः सऽजोषसः बृहस्पतिः मरुतः वायुः अश्विना त्वष्टा सविता सुऽयमा सरस्वती ॥४॥ उभे द्यावापृथिवी विश्वंऽइन्वे अर्यमा देवः अदितिः विऽधाता भगः नृऽशंसः उरु अंतरिक्षं विश्वे देवाः पवमानं जुषंत ॥ ५ ॥ ६ ॥

---

॥८२॥ असावि सोमः अरुषः वृषा हरिः राजाऽइव दस्मः अभि गाः अचिक्रदत् पुनानः वारं परि एति अव्ययं श्येनः न योनिं घृतऽवंतं आऽसदं ॥१॥ कविः वेधस्या परि एषि माहिनं अत्यः न मृष्टः अभि वाजं अर्षसि अपऽसेधन् दुःऽइता सोम मृळय घृतं



Digitized by Google

वसा॑नः॒ परि॑ यासि नि॒र्णिज॑म् ॥ २ ॥ प॒र्जन्यः॑ पि॒ता म॑हि॒षस्य॑
प॒र्णिनो॒ नाभा॑ पृथि॒व्या गि॒रिषु॒ क्षयं॑ दधे। स्वसा॑र॒ आपो॑ अ॒-
भि गा उ॒तास॑रन्त्सं॒ ग्राव॑भिर्नसते वी॒ते अ॑ध्व॒रे ॥ ३ ॥ जा॒येव॒
पत्या॒वधि॒ शेव॑ मंहसे॒ पज्रा॑या गर्भ शृणु॒हि ब्रवी॑मि ते। अ॒-
न्तर्वाणी॑षु॒ प्र च॑रा॒ सु जी॒वसे॑ऽनि॒न्द्यो वृ॒जने॑ सोम जागृहि ॥ ४ ॥
यथा॒ पूर्वे॑भ्यः शत॒सा अमृ॑ध्रः सहस्र॒साः प॒र्यया॒ वाज॑मिन्दो।
ए॒वा प॑वस्व सुवि॒ताय॒ नव्य॑से॒ तव॑ व्र॒तमन्वापः॑ सचन्ते ॥ ५ ॥ ७ ॥

---

॥ ८३ ॥ १–५ पवित्रः ॥ पवमानः सोमः ॥ जगती ॥

॥ ८३ ॥ प॒वित्रं॑ ते॒ वित॑तं ब्रह्मणस्पते प्र॒भुर्गात्रा॑णि॒ पर्ये॑षि
वि॒श्वतः॑। अत॑प्ततनू॒र्न तदा॒मो अ॑श्नुते शृ॒तास॒ इद्वह॑न्त॒स्तत्स-
मा॑शत ॥ १ ॥ तपो॑ष्प॒वित्रं॒ वित॑तं दि॒वस्प॒दे शोच॑न्तो अस्य॒
तन्त॑वो॒ व्य॑स्थिरन्। अव॑न्त्यस्य पवी॒तार॑मा॒शवो॑ दि॒वस्पृ॒ष्ठमधि॑
तिष्ठन्ति॒ चेत॑सा ॥ २ ॥ अरू॑रुचदु॒षसः॒ पृश्नि॑रग्रि॒य उ॒क्षा बि॑भर्ति॒
भुव॑नानि वाज॒युः। मा॒या॒विनो॑ ममिरे अस्य मा॒यया॒ नृच॑-
क्षसः पि॒तरो॒ गर्भ॒मा द॑धुः ॥ ३ ॥ ग॒न्ध॒र्व इ॒त्था प॒दम॑स्य रक्षति॒
पाति॑ दे॒वानां॒ जनि॑मा॒न्यद्भु॑तः। गृ॒भ्णाति॑ रि॒पुं नि॒धया॒ नि॒-
धाप॑तिः सु॒कृत्त॑मा॒ मधु॑नो भ॒क्षमा॑शत ॥ ४ ॥ ह॒विर्ह॑विष्मो॒
महि॒ सद्म॒ दैव्यं॒ नभो॒ वसा॑नः॒ परि॑ यास्यध्व॒रम्। राजा॑ प॒वित्र॑-
रथो॒ वाज॒मारु॑हः स॒हस्र॑भृष्टिर्जयसि॒ श्रवो॑ बृ॒हत् ॥ ५ ॥ ८ ॥

---

॥ ८४ ॥ १–५ प्रजापतिर्वाच्यः ॥ पवमानः सोमः ॥ जगती ॥

॥ ८४ ॥ पव॑स्व देव॒माद॑नो॒ विच॑र्षणिर॒प्सा इन्द्रा॑य॒ वरु॑णाय
वा॒यवे॑। कृ॒धी नो॑ अ॒द्य वरि॑वः स्वस्ति॒मदु॑रुक्षि॒तौ गृ॑णी-
हि॒ दैव्यं॒ जन॑म् ॥ १ ॥ आ यस्त॒स्थौ भुव॑ना॒न्यम॑र्त्यो॒ विश्वा॑नि॒
सोमः॒ परि॒ तान्य॑र्षति। कृ॒ण्वन्त्सं॒चृतं॒ वि॒चृत॑म॒भिष्ट॑य॒ इन्दुः॑



Digitized by Google

वसा॑नः परि॑ यासि नि॒ःऽनि॒जं॥२॥ प॒र्जन्यः॑ पि॒ता म॑हि॒षस्य॑ प॒र्णिनः॑ नाभा॑ पृथि॒व्याः गि॒रिषु॑ क्षयं॑ द॒धे॒ स्वसा॑रः आप॑ः अ॒भि गाः उ॒त अ॒सर॒न् सं ग्रावऽभिः नसते वीते अ॒ध्वरे॥३॥ जा॒याऽइ॑व पत्यौ॑ अधि॑ शेवं॑ मंहसे पज्रा॑याः गर्भ शृणु॒हि ब्रवी॑मि ते अंतः वाणी॑षु प्र च॒र सु जी॒वसे॑ अनि॒न्द्यः वृ॒जने सो॑म जागृहि॥४॥ यथा॑ पूर्वे॑भ्यः शत॒ऽसाः अमृ॑ध्रः स॒ह॒स्र॒ऽसाः प॒रिऽअया॑ः वाजं॑ इं॒दो॒ ए॒व प॒वस्व सु॒वि॒ताय॑ नव्य॑से तव॑ व्र॒तं अनु॑ आप॑ः स॒चं॒ते ॥५॥७॥

---

॥८३॥ प॒वित्रं॑ ते वि॒ऽत॒तं ब्र॑ह्मणः पते प्र॒ऽभुः गात्रा॑णि परि॑ ए॒षि वि॒श्वतः॑ अत॑प्तऽतनूः न तत् आ॒मः अ॒श्नु॒ते शृ॒तासः॑ इत् वह॑न्तः तत् सं आ॒शत॥१॥ तपो॑ः प॒वित्रं वि॒ऽत॒तं दि॒वः प॒दे शोच॑न्तः अ॒स्य॒ तंत॑वः वि अ॒स्थि॒र॒न् अव॑न्ति अ॒स्य प॒वि॒तारं॑ आ॒शवः॑ दि॒वः पृ॒ष्ठं अधि॑ तिष्ठन्ति॒ चेत॑सा॥२॥ अरू॑रुचत् उ॒षसः॑ पृश्निः॑ अ॒ग्रि॒यः उ॒क्षा बि॒भ॒र्ति॒ भुव॑नानि वाज॒ऽयुः मा॒या॒ऽविनः॑ म॒मि॒रे॒ अ॒स्य॒ मा॒यया॑ नृ॒ऽचक्ष॑सः पि॒तरः॑ गर्भं॑ आ द॒धुः॥३॥ गं॒ध॒र्वः इ॒त्था प॒दं अ॒स्य॒ र॒क्ष॒ति॒ पाति॑ दे॒वानां॑ जनि॑मानि अद्भुतः॑ गृ॒भ्णाति॑ रि॒पुं नि॒ऽधया॑ नि॒धा॒ऽप॑तिः सु॒कृत्ऽत॑माः मधु॑नः भ॒क्षं आ॒शत॥४॥ ह॒विः ह॒वि॒ष्मः॒ महि॑ सद्म॑ दैव्यं॑ नभः॑ वसा॑नः परि॑ या॒सि॒ अ॒ध्व॒रं राजा॑ प॒वित्र॑ऽरथः वाजं॑ आ अ॒रु॒हः स॒हस्र॑ऽभृष्टिः जय॒सि॒ श्रवः॑ बृ॒हत् ॥५॥८॥

---

॥८४॥ पव॑स्व दे॒व॒ऽमाद॑नः वि॒ऽच॑र्षणिः अप्साः इ॒न्द्राय॑ वरु॑णाय वा॒यवे॑ कृ॒धि नः॒ अ॒द्य वरि॑वः स्व॒स्ति॒ऽमत् उ॒रु॒ऽक्षि॒तौ गृ॒णी॒हि॒ दैव्यं॑ जनं॑ ॥१॥ आ यः त॒स्थौ भुव॑नानि अम॑र्त्यः विश्वा॑नि सोम॑ः परि॑ तानि॑ अर्षति कृ॒ण्वन् सं॒ऽचृतं॑ वि॒ऽचृतं॑ अ॒भिष्ट॑ये इंदुः॑



Digitized by Google

सिषक्त्युषसं न सूर्यः ॥२॥ आ यो गोभिः सृज्यत ओषधीष्वा
देवानां सुम्न इषयन्नुपावसुः । आ विद्युता पवते धारया सुत
इंद्रं सोमो मादयन्दैव्यं जनं ॥३॥ एष स्य सोमः पवते सह-
स्रजिद्धिन्वानो वाचमिषिरामुषर्बुधं । इंदुः समुद्रमुदियर्ति
वायुभिरेंद्रस्य हार्दि कलशेषु सीदति ॥४॥ अभि त्यं गावः
पयसा पयोवृधं सोमं श्रीणंति मतिभिः स्वर्विदं । धनंजयः
पवते कृत्व्यो रसो विप्रः कविः काव्येना स्वर्चनाः ॥५॥९॥

---

॥ ८५ ॥ १–१२ वेनो भार्गवः ॥ पवमानः सोमः ॥ १–१० जगती । ११. १२ त्रिष्टुप् ॥

॥८५॥ इंद्राय सोम सुषुतः परि स्रवापामीवा भवतु रक्षसा
सह । मा ते रसस्य मत्सत द्वयाविनो द्रविणस्वंत इह संत्विं-
दवः ॥१॥ अस्मान्त्समर्ये पवमान चोदय दक्षो देवानामसि हि
प्रियो मदः । जहि शत्रूँरभ्या भंदनायतः पिबेंद्र सोममव नो
मृधो जहि ॥२॥ अदब्ध इंदो पवसे मदिंतम आत्मेंद्रस्य भवसि
धासिरुत्तमः । अभि स्वरंति बहवो मनीषिणो राजानमस्य
भुवनस्य निंसते ॥३॥ सहस्रणीथः शतधारो अद्भुत इंद्रायेंदुः
पवते काम्यं मधु । जयन्क्षेत्रमभ्यर्षा जयन्नप उरुं नो गातुं
कृणु सोम मीढ्वः ॥४॥ कनिक्रदत्कलशे गोभिरज्यसे व्य१व्ययं
समया वारमर्षसि । मर्मृज्यमानो अत्यो न सानसिरिंद्रस्य
सोम जठरे समक्षरः ॥५॥ स्वादुः पवस्व दिव्याय जन्मने स्वादु-
रिंद्राय सुहवीतुनाम्ने । स्वादुर्मित्राय वरुणाय वायवे बृहस्प-
तये मधुमाँ अदाभ्यः ॥६॥१०॥ अत्यं मृजंति कलशे दश क्षिपः
प्र विप्राणां मतयो वाच ईरते । पवमाना अभ्यर्षंति सुष्टुति-
मेंद्रं विशंति मदिरास इंदवः ॥७॥ पवमानो अभ्यर्षा सु-
वीर्यमुर्वीं गव्यूतिं महि शर्म सप्रथः । माकिर्नो अस्य परि-



Digitized by Google

सिसक्ति उषसं न सूर्यः ॥२॥ आ यः गोभिः सृज्यते ओषधीषु आ देवानां सुम्ने इषयन् उपऽवसुः आ विऽद्युता पवते धारया सुतः इंद्रं सोमः मादयन् दैव्यं जनं ॥३॥ एषः स्यः सोमः पवते सहस्रऽजित् हिन्वानः वाचं इषिरां उषःऽबुधं इंदुः समुद्रं उत् इयर्ति वायुऽभिः आ इंद्रस्य हार्दि कलशेषु सीदति ॥४॥ अभि त्यं गावः पयसा पयःऽवृधं सोमं श्रीणंति मतिऽभिः स्वःऽविदं धनंऽजयः पवते कृत्व्यः रसः विप्रः कविः काव्येन स्वःऽचनाः ॥५॥९॥

---

॥८५॥ इंद्राय सोम सुऽसुतः परि स्रव अप अमीवा भवतु रक्षसा सह मा ते रसस्य मत्सत द्वयाविनः द्रविणस्वंतः इह संतु इंदवः ॥१॥ अस्मान् सऽमर्ये पवमान चोदय दक्षः देवानां असि हि प्रियः मदः जहि शत्रून् अभि आ भंदनाऽयतः पिब इंद्र सोमं अव नः मृधः जहि ॥२॥ अदब्धः इंदो इति पवसे मदिन्ऽतमः आत्मा इंद्रस्य भवसि धासिः उत्ऽतमः अभि स्वरंति बहवः मनीषिणः राजानं अस्य भुवनस्य निंसते ॥३॥ सहस्रऽनीथः शतऽधारः अद्भुतः इंद्राय इंदुः पवते काम्यं मधु जयन् क्षेत्रं अभि अर्ष जयन् अपः उरुं नः गातुं कृणु सोम मीढ्वः ॥४॥ कनिक्रदत् कलशे गोभिः अज्यसे वि अव्ययं समया वारं अर्षसि मर्मृज्यमानः अत्यः न सानसिः इंद्रस्य सोम जठरे सं अक्षरः ॥५॥ स्वादुः पवस्व दिव्याय जन्मने स्वादुः इंद्राय सुऽहवीतुऽनाम्ने स्वादुः मित्राय वरुणाय वायवे बृहस्पतये मधुऽमान् अदाभ्यः ॥६॥१०॥ अत्यं मृजंति कलशे दश क्षिपः प्र विप्राणां मतयः वाचः ईरते पवमानाः अभि अर्षंति सुऽस्तुतिं आ इंद्रं विशंति मदिरासः इंदवः ॥७॥ पवमानः अभि अर्ष सुऽवीर्यं उर्वीं गव्यूतिं महि शर्म सऽप्रथः माकिः नः अस्य परि-



Digitized by Google

षूतिरीशतेंद्रो जयेम त्वया धनंधनं ॥८॥ अधि द्यामस्थाद्वृषभो वि-
चक्षणोऽरूरुचद्वि दिवो रोचना कविः। राजा पवित्रमत्येति
रोरुवद्दिवः पीयूषं दुहते नृचक्षसः ॥९॥ दिवो नाके मधुजिह्वा
असश्चतो वेना दुहंत्युक्षणं गिरिष्ठां। अप्सु द्रप्सं वावृधानं समुद्र
आ सिंधोरूर्मा मधुमंतं पवित्र आ ॥१०॥ नाके सुपर्णमुपपप्ति-
वांसं गिरो वेनानामकृपंत पूर्वीः। शिशुं रिहंति मतयः पनिप्नतं
हिरण्ययं शकुनं क्षामणि स्थां ॥११॥ ऊर्ध्वो गंधर्वो अधि नाके
अस्थाद्विश्वा रूपा प्रतिचक्षाणो अस्य। भानुः शुक्रेण शोचिषा
व्यद्यौत्प्रारूरुचद्रोदसी मातरा शुचिः ॥१२॥११॥४॥

---

॥ ८६ ॥ १–१० आकृष्टा माषाः। ११–२० सिकता निवावरी। २१–३० पृश्नयोऽजाः। ३१–४० त्रय ऋषिगणाः। ४१–४५ अत्रिः। ४६–४८ गृत्समदः॥ पवमानः सोमः॥ जगती॥

॥८६॥ प्र त आशवः पवमान धीजवो मदा अर्षंति रघुजा
इव त्मना। दिव्याः सुपर्णा मधुमंत इंदवो मदिंतमासः
परि कोशमासते ॥१॥ प्र ते मदासो मदिरास आशवोऽसृक्षत
रथ्यासो यथा पृथक्। धेनुर्न वत्सं पयसाभि वज्रिणमिंद्रमिंद-
वो मधुमंत ऊर्मयः ॥२॥ अत्यो न हियानो अभि वाजमर्ष स्व-
र्वित्कोशं दिवो अद्रिमातरं। वृषा पवित्रे अधि सानो अव्यये
सोमः पुनान इंद्रियाय धायसे ॥३॥ प्र त आश्विनीः पवमान
धीजुवो दिव्या असृग्रन्पयसा धरीमणि। प्रांतर्ऋषयः स्थावि-
रीरसृक्षत ये त्वा मृजंत्यृषिषाण वेधसः ॥४॥ विश्वा धामानि
विश्वचक्ष ऋभ्वसः प्रभोस्ते सतः परि यंति केतवः। व्यानशिः
पवसे सोम धर्मभिः पतिर्विश्वस्य भुवनस्य राजसि ॥५॥१२॥ उ-
भयतः पवमानस्य रश्मयो ध्रुवस्य सतः परि यंति केतवः। यदी प-
वित्रे अधि मृज्यते हरिः सत्ता नि योना कलशेषु सीदति ॥६॥



Digitized by Google

ऽसूतिः ईशत इंदो जयेम त्वया धनंऽधनं॥८॥ अधि द्यां अस्थात्
वृषभः विऽचक्षणः अरूरुचत् वि दिवः रोचना कविः राजा प-
वित्रं अति एति रोरुवत् दिवः पीयूषं दुहते नृऽचक्षसः॥९॥ दिवः
नाके मधुऽजिह्वाः असश्चतः वेनाः दुहंति उक्षणं गिरिऽस्थां अ-
प्ऽसु द्रप्सं ववृधानं समुद्रे आ सिंधोः ऊर्मा मधुऽमंतं पवित्रे
आ॥१०॥ नाके सुऽपर्णं उपपप्तिऽवांसं गिरः वेनानां अकृपंत
पूर्वीः शिशुं रिहंति मतयः पनिप्नतं हिरण्ययं शकुनं क्षामणि स्थां
॥११॥ ऊर्ध्वः गंधर्वः अधि नाके अस्थात् विश्वा रूपा प्रतिऽचक्षा-
णः अस्य भानुः शुक्रेण शोचिषा वि अद्यौत् प्र अरूरुचत् रोदसी
मातरा शुचिः ॥ १२ ॥ ११ ॥ ४ ॥

---

॥८६॥ प्र ते आशवः पवमान धीऽजवः मदाः अर्षंति रघुजाः-
ऽइव त्मना दिव्याः सुऽपर्णाः मधुऽमंतः इंदवः मदिन्ऽतमासः
परि कोशं आसते॥१॥ प्र ते मदासः मदिरासः आशवः असृक्षत
रथ्यासः यथा पृथक् धेनुः न वत्सं पयसा अभि वज्रिणं इंद्रं इंदवः
मधुऽमंतः ऊर्मयः॥२॥ अत्यः न हियानः अभि वाजं अर्ष स्वःऽवित्
कोशं दिवः अद्रिऽमातरं वृषा पवित्रे अधि सानौ अव्यये सोमः
पुनानः इंद्रियाय धायसे॥३॥ प्र ते आश्विनीः पवमान धीऽजुवः
दिव्याः असृग्रन् पयसा धरीमणि प्र अंतः ऋषयः स्थाविरीः असृ-
क्षत ये त्वा मृजंति ऋषिऽसान वेधसः॥४॥ विश्वा धामानि विश्व-
ऽचक्षः ऋभ्वसः प्रऽभोः ते सतः परि यंति केतवः विऽआनशिः
पवसे सोम धर्मऽभिः पतिः विश्वस्य भुवनस्य राजसि ॥५॥१२॥
उभयतः पवमानस्य रश्मयः ध्रुवस्य सतः परि यंति केतवः यदि
पवित्रे अधि मृज्यते हरिः सत्ता नि योना कलशेषु सीदति॥६॥



Digitized by Google

यज्ञस्य केतुः पवते स्वध्वरः सोमो देवानामुप याति निष्कृतं।
सहस्रधारः परि कोशमर्षति वृषा पवित्रमत्येति रोरुवत् ॥७॥
राजा समुद्रं नद्यो३ वि गाहतेऽपामूर्मिं सचते सिंधुषु श्रितः।
अध्यस्थात्सानु पवमानो अव्ययं नाभा पृथिव्या धरुणो म-
हो दिवः ॥८॥ दिवो न सानु स्तनयन्नचिक्रदद्द्यौश्च यस्य
पृथिवी च धर्मभिः। इंद्रस्य सख्यं पवते विवेविदत्सोमः पुना-
नः कलशेषु सीदति ॥९॥ ज्योतिर्यज्ञस्य पवते मधु प्रियं पिता
देवानां जनिता विभूवसुः। दधाति रत्नं स्वधयोरपीच्यं मदिं-
तमो मत्सर इंद्रियो रसः ॥१०॥१३॥ अभिक्रंदन्कलशं वाज्य-
र्षति पतिर्दिवः शतधारो विचक्षणः। हरिर्मित्रस्य सदनेषु
सीदति मर्मृजानोऽविभिः सिंधुभिर्वृषा ॥११॥ अग्रे सिंधूनां
पवमानो अर्षत्यग्रे वाचो अग्रियो गोषु गच्छति। अग्रे वा-
जस्य भजते महाधनं स्वायुधः सोतृभिः पूयते वृषा ॥१२॥
अयं मतवाञ्छकुनो यथा हितोऽव्ये ससार पवमान ऊर्मि-
णा। तव क्रत्वा रोदसी अंतरा कवे शुचिर्धिया पवते सोम
इंद्र ते ॥१३॥ द्रापिं वसानो यजतो दिविस्पृशमंतरिक्षप्रा
भुवनेष्वर्पितः। स्वर्जज्ञानो नभसाभ्यक्रमीत्प्रत्नमस्य पितर-
मा विवासति ॥१४॥ सो अस्य विशे महि शर्म यच्छति यो
अस्य धाम प्रथमं व्यानशे। पदं यदस्य परमे व्योमन्यतो विश्वा
अभि सं याति संयतः ॥१५॥१४॥ प्रो अयासीदिंदुरिंद्रस्य नि-
ष्कृतं सखा सख्युर्न प्र मिनाति संगिरं। मर्य इव युवतिभिः
समर्षति सोमः कलशे शतयाम्ना पथा ॥१६॥ प्र वो धियो मं-
द्रयुवो विपन्युवः पनस्युवः संवसनेष्वक्रमुः। सोमं मनीषा अ-
भ्यनूषत स्तुभोऽभि धेनवः पयसेमशिश्रयुः ॥१७॥ आ नः सोम



Digitized by Google

यज्ञस्य केतुः पवते सुऽअध्वरः सोमः देवानां उप याति निःऽकृतं सहस्रऽधारः परि कोशं अर्षति वृषा पवित्रं अति एति रोरुवत् ॥७॥ राजा समुद्रं नद्यः वि गाहते अपां ऊर्मिं सचते सिंधुषु श्रितः अधि अस्थात् सानु पवमानः अव्ययं नाभा पृथिव्याः धरुणः महः दिवः ॥८॥ दिवः न सानु स्तनयन् अचिक्रदत् द्यौः च यस्य पृथिवी च धर्मऽभिः इंद्रस्य सख्यं पवते विऽवेविदत् सोमः पुनानः कलशेषु सीदति ॥९॥ ज्योतिः यज्ञस्य पवते मधु प्रियं पिता देवानां जनिता विभुऽवसुः दधाति रत्नं स्वधयोः अपीच्यं मदिन्ऽतमः मत्सरः इंद्रियः रसः ॥१०॥१३॥ अभिऽक्रंदन् कलशं वाजी अर्षति पतिः दिवः शतऽधारः विऽचक्षणः हरिः मित्रस्य सदनेषु सीदति मर्मृजानः अविऽभिः सिंधुऽभिः वृषा ॥११॥ अग्रे सिंधूनां पवमानः अर्षति अग्रे वाचः अग्रियः गोषु गच्छति अग्रे वाजस्य भजते महाऽधनं सुऽआयुधः सोतृऽभिः पूयते वृषा ॥१२॥ अयं मतऽवान् शकुनः यथा हितः अव्ये ससार पवमानः ऊर्मिणा तव क्रत्वा रोदसी इति अंतरा कवे शुचिः धिया पवते सोमः इंद्र ते ॥१३॥ द्रापिं वसानः यजतः दिविऽस्पृशं अंतरिक्षऽप्राः भुवनेषु अर्पितः स्वः जज्ञानः नभसा अभि अक्रमीत् प्रत्नं अस्य पितरं आ विवासति ॥१४॥ सः अस्य विशे महि शर्म यच्छति यः अस्य धाम प्रथमं विऽआनशे पदं यत् अस्य परमे विऽओमनि अतः विश्वाः अभि सं याति संऽयतः ॥१५॥१४॥ प्रो इति अयासीत् इंदुः इंद्रस्य निःऽकृतं सखा सख्युः न प्र मिनाति संऽगिरं मर्यःऽइव युवतिऽभिः सं अर्षति सोमः कलशे शतऽयाम्ना पथा ॥१६॥ प्र वः धियः मंद्रऽयुवः विपन्युवः पनस्युवः संऽवसनेषु अक्रमुः सोमं मनीषाः अभि अनूषत स्तुभः अभि धेनवः पयसा ईं अशिश्रयुः ॥१७॥ आ नः सोम



Digitized by Google

संयतं पिप्युषीमिषमिंदो पवस्व पवमानो अस्रिधं । या नो दोहते त्रिरहन्नसंश्चुषी क्षुमद्वाजवन्मधुमत्सुवीर्यं ॥१८॥ वृषा मतीनां पवते विचक्षणः सोमो अह्नः प्रतरीतोषसो दिवः । क्राणा सिंधूनां कलशाँ अवीवशदिंद्रस्य हार्द्याविशन्मनीषिभिः ॥१९॥ मनीषिभिः पवते पूर्व्यः कविर्नृभिर्यतः परि कोशाँ अचिक्रदत् । त्रितस्य नाम जनयन्मधु क्षरदिंद्रस्य वायोः सख्याय कर्तवे ॥२०॥१५॥ अयं पुनान उषसो वि रोचयदयं सिंधुभ्यो अभवदु लोककृत् । अयं त्रिः सप्त दुदुहान आशिरं सोमो हृदे पवते चारु मत्सरः ॥२१॥ पवस्व सोम दिव्येषु धामसु सृजान इंदो कलशे पवित्र आ । सीदन्निंद्रस्य जठरे कनिक्रदन्नृभिर्यतः सूर्यमारोहयो दिवि ॥२२॥ अद्रिभिः सुतः पवसे पवित्र आँ इंदविंद्रस्य जठरेष्वाविशन् । त्वं नृचक्षा अभवो विचक्षण सोम गोत्रमंगिरोभ्योऽवृणोरप ॥२३॥ त्वां सोम पवमानं स्वाध्योऽनु विप्रासो अमदन्नवस्यवः । त्वां सुपर्ण आभरद्दिवस्परींदो विश्वाभिर्मतिभिः परिष्कृतं ॥२४॥ अव्ये पुनानं परि वार ऊर्मिणा हरिं नवंते अभि सप्त धेनवः । अपामुपस्थे अध्यायवः कविमृतस्य योना महिषा अहेषत ॥२५॥१६॥ इंदुः पुनानो अति गाहते मृधो विश्वानि कृण्वन्सुपथानि यज्यवे । गाः कृण्वानो निर्णिजं हर्यतः कविरत्यो न क्रीळन्परि वारमर्षति ॥२६॥ असश्चतः शतधारा अभिश्रियो हरिं नवंतेऽव ता उदन्युवः । क्षिपो मृजंति परि गोभिरावृतं तृतीये पृष्ठे अधि रोचने दिवः ॥२७॥ तवेमाः प्रजा दिव्यस्य रेतसस्त्वं विश्वस्य भुवनस्य राजसि । अथेदं विश्वं पवमान ते वशे त्वमिंदो प्रथमो धामधा असि ॥२८॥

संऽयतं पिप्युषीं इषं इंदो॰ पवस्व पवमानः अस्रिधं या नः दोहते
त्रिः अहन् असश्चुषी क्षुऽमत् वाजऽवत् मधुऽमत् सुऽवीर्यं ॥१८॥
वृषा मतीनां पवते विऽचक्षणः सोमः अह्नः प्रऽतरीता उषसः
दिवः क्राणा सिंधूनां कलशान् अवीवशत् इंद्रस्य हार्दि आऽवि-
शन् मनीषिऽभिः ॥१९॥ मनीषिऽभिः पवते पूर्व्यः कविः नृऽभिः
यतः परि कोशान् अचिक्रदत् त्रितस्य नाम जनयन् मधु क्षरत्
इंद्रस्य वायोः सख्याय कर्तवे ॥२०॥१५॥ अयं पुनानः उषसः वि
रोचयत् अयं सिंधुऽभ्यः अभवत् उं॰ लोकऽकृत् अयं त्रिः सप्त दु-
दुहानः आऽशिरं सोमः हृदे पवते चारु मत्सरः ॥२१॥ पवस्व सोम
दिव्येषु धामऽसु सृजानः इंदो॰ कलशे पवित्रे आ सीदन् इंद्रस्य
जठरे कनिक्रदत् नृऽभिः यतः सूर्यं आ अरोहयः दिवि ॥२२॥ अद्रि-
ऽभिः सुतः पवसे पवित्रे आ इंदो॰ इंद्रस्य जठरेषु आऽविशन् त्वं
नृऽचक्षाः अभवः विऽचक्षण सोम गोत्रं अंगिरःऽभ्यः अवृणोः
अप ॥२३॥ त्वां सोम पवमानं सुऽआध्यः अनु विप्रासः अमदन्
अवस्यवः त्वां सुऽपर्णः आ अभरत् दिवः परि इंदो॰ विश्वाभिः
मतिऽभिः परिऽकृतं ॥२४॥ अव्ये पुनानं परि वारे ऊर्मिणा हरिं
नवंते अभि सप्त धेनवः अपां उपऽस्थे अधि आयवः कविं ऋतस्य
योना महिषाः अहेषत ॥२५॥१६॥ इंदुः पुनानः अति गाहते मृधः
विश्वानि कृण्वन् सुऽपथानि यज्यवे गाः कृण्वानः निःऽनिजं
हर्यतः कविः अत्यः न क्रीळन् परि वारं अर्षति ॥२६॥ असश्चतः
शतऽधाराः अभिऽश्रियः हरिं नवंते अव ताः उदन्युवः क्षिपः मृ-
जंति परि गोभिः आऽवृतं तृतीये पृष्ठे अधि रोचने दिवः ॥२७॥
तव इमाः प्रऽजाः दिव्यस्य रेतसः त्वं विश्वस्य भुवनस्य राजसि अथ
इदं विश्वं पवमान ते वशे त्वं इंदो॰ प्रथमः धामऽधाः असि ॥२८॥

त्वं समुद्रो असि विश्ववित्कवे तवेमाः पंच प्रदिशो विधर्म-
णि। त्वं द्यां च पृथिवीं चाति जभ्रिषे तव ज्योतींषि पवमान
सूर्यः ॥२९॥ त्वं पवित्रे रजसो विधर्मणि देवेभ्यः सोम पवमान
पूयसे। त्वामुशिजः प्रथमा अगृभ्णत तुभ्येमा विश्वा भुवनानि
येमिरे ॥३०॥१७॥ प्र रेभ एत्यति वारमव्ययं वृषा वनेष्वव च-
क्रदद्धरिः। सं धीतयो वावशाना अनूषत शिशुं रिहंति मतयः
पनिप्नतं ॥३१॥ स सूर्यस्य रश्मिभिः परि व्यत तंतुं तन्वानस्त्रि-
वृतं यथा विदे। नयन्नृतस्य प्रशिषो नवीयसीः पतिर्जनीना-
मुप याति निष्कृतं ॥३२॥ राजा सिंधूनां पवते पतिर्दिव ऋ-
तस्य याति पथिभिः कनिक्रदत्। सहस्रधारः परि षिच्यते हरिः
पुनानो वाचं जनयन्नुपावसुः ॥३३॥ पवमान मह्यर्णो वि धा-
वसि सूरो न चित्रो अव्ययानि पव्यया। गभस्तिपूतो नृभिरद्रि-
भिः सुतो महे वाजाय धन्याय धन्वसि ॥३४॥ इषमूर्जं पवमा-
नाभ्यर्षसि श्येनो न वंसु कलशेषु सीदसि। इंद्राय मद्वा मद्यो
मदः सुतो दिवो विष्टंभ उपमो विचक्षणः ॥३५॥१८॥ सप्त
स्वसारो अभि मातरः शिशुं नवं जज्ञानं जेन्यं विपश्चितं।
अपां गंधर्वं दिव्यं नृचक्षसं सोमं विश्वस्य भुवनस्य राजसे ॥३६॥
ईशान इमा भुवनानि वीयसे युजान इंदो हरितः सुपर्ण्यः। ता-
स्ते क्षरंतु मधुमद्घृतं पयस्तव व्रते सोम तिष्ठंतु कृष्टयः ॥३७॥ त्वं
नृचक्षा असि सोम विश्वतः पवमान वृषभ ता वि धावसि।
स नः पवस्व वसुमद्धिरण्यवद्वयं स्याम भुवनेषु जीवसे ॥३८॥
गोवित्पवस्व वसुविद्धिरण्यविद्रेतोधा इंदो भुवनेष्वर्पितः।
त्वं सुवीरो असि सोम विश्ववित्तं त्वा विप्रा उप गिरेम
आसते ॥३९॥ उन्मध्व ऊर्मिर्वनना अतिष्ठिपदपो वसा-



Digitized by Google

त्वं समुद्रः असि विश्वऽवित् कवे तव इमाः पंच प्रऽदिशः विऽध-
र्मणि त्वं द्यां च पृथिवीं च अति जभ्रिषे तव ज्योतींषि पवमान
सूर्यः ॥२९॥ त्वं पवित्रे रजसः विऽधर्मणि देवेभ्यः सोम पवमान
पूयसे त्वां उशिजः प्रथमाः अगृभ्णत तुभ्य इमा विश्वा भुवनानि
येमिरे ॥३०॥१७॥ प्र रेभः एति अति वारं अव्ययं वृषा वनेषु अव
चक्रदत् हरिः सं धीतयः वावशानाः अनूषत शिशुं रिहंति मतयः
पनिप्रतं ॥३१॥ सः सूर्यस्य रश्मिऽभिः परि व्यत तंतुं तन्वानः त्रि-
ऽवृतं यथा विदे नयन् ऋतस्य प्रऽशिषः नवीयसीः पतिः जनीनां
उप याति निःऽकृतं ॥३२॥ राजा सिंधूनां पवते पतिः दिवः ऋतस्य
याति पथिऽभिः कनिक्रदत् सहस्रऽधारः परि सिच्यते हरिः पुना-
नः वाचं जनयन् उपऽवसुः ॥३३॥ पवमान महि अर्णः वि धावसि
सूरः न चित्रः अव्ययानि पव्यया गभस्तिऽपूतः नृऽभिः अद्रि-
ऽभिः सुतः महे वाजाय धन्याय धन्वसि ॥३४॥ इषं ऊर्जं पवमान
अभि अर्षसि श्येनः न वंसु कलशेषु सीदसि इंद्राय मद्वा मद्यः मदः
सुतः दिवः विष्टंभः उपऽमः विऽचक्षणः ॥३५॥१८॥ सप्त स्वसारः
अभि मातरः शिशुं नवं जज्ञानं जेन्यं विपःऽचितं अपां गंधर्वं
दिव्यं नृऽचक्षसं सोमं विश्वस्य भुवनस्य राजसे ॥३६॥ ईशानः इमा
भुवनानि वि ईयसे युजानः इंदो हरितः सुऽपर्ण्यः ताः ते क्षरंतु
मधुऽमत् घृतं पयः तव व्रते सोम तिष्ठंतु कृष्टयः ॥३७॥ त्वं नृऽचक्षाः
असि सोम विश्वतः पवमान वृषभ ता वि धावसि सः नः पवस्व
वसुऽमत् हिरण्यऽवत् वयं स्याम भुवनेषु जीवसे ॥३८॥ गोऽवित्
पवस्व वसुऽवित् हिरण्यऽवित् रेतःऽधाः इंदो भुवनेषु अर्पितः
त्वं सुऽवीरः असि सोम विश्वऽवित् तं त्वा विप्राः उप गिरा इमे
आसते ॥३९॥ उत् मध्वः ऊर्मिः वननाः अतिस्थिपत् अपः वसा-



Digitized by Google

नो महिषो वि गाहते। राजा पवित्ररथो वाजमारुहत्सहस्र-
भृष्टिर्जयति श्रवो बृहत् ॥४०॥१९॥ स भंदना उदियर्ति
प्रजावतीर्विश्वायुर्विश्वाः सुभरा अहर्दिवि। ब्रह्म प्रजावद्रयि-
मश्वपस्त्यं पीत इंदविंद्रमस्मभ्यं याचतात् ॥४१॥ सो अग्रे
अह्नां हरिर्हर्यतो मदः प्र चेतसा चेतयते अनु द्युभिः। द्वा
जना यातयन्नंतरीयते नरा च शंसं दैव्यं च धर्तरि॥४२॥ अंजते
व्यंजते समंजते क्रतुं रिहंति मधुनाभ्यंजते। सिंधोरुच्छ्वासे
पतयंतमुक्षणं हिरण्यपावाः पशुमासु गृभ्णते ॥४३॥ विप-
श्चिते पवमानाय गायत मही न धारात्यंधो अर्षति। अहिर्न
जूर्णामति सर्पति त्वचमत्यो न क्रीळन्नसरद्वृषा हरिः ॥४४॥
अग्रेगो राजाप्यस्तविष्यते विमानो अह्नां भुवनेष्वर्पितः।
हरिर्घृतस्नुः सुदृशीको अर्णवो ज्योतीरथः पवते राय ओक्यः
॥४५॥२०॥ असर्जि स्कंभो दिव उद्यतो मदः परि त्रिधातुर्भु-
वनान्यर्षति। अंशुं रिहंति मतयः पनिप्नतं गिरा यदि
निर्णिजमृग्मिणो ययुः ॥४६॥ प्र ते धारा अत्यण्वानि मेष्यः
पुनानस्य संयतो यंति रंहयः। यद्गोभिरिंदो चम्वोः समज्यस
आ सुवानः सोम कलशेषु सीदसि ॥४७॥ पवस्व सोम क्रतु-
विन्न उक्थ्योऽव्यो वारे परि धाव मधु प्रियं। जहि विश्वा-
न्रक्षस इंदो अत्रिणो बृहद्वदेम विदथे सुवीराः ॥४८॥२१॥

---

॥ ८७ ॥ १–९ उशनाः ॥ पवमानः सोमः ॥ त्रिष्टुप् ॥

॥८७॥ प्र तु द्रव परि कोशं नि षीद नृभिः पुनानो अभि वा-
जमर्ष। अश्वं न त्वा वाजिनं मर्जयंतोऽच्छा बर्हीं रशनाभिर्नयं-
ति ॥१॥ स्वायुधः पवते देव इंदुरशस्तिहा वृजनं रक्षमाणः। पि-
ता देवानां जनिता सुदक्षो विष्टंभो दिवो धरुणः पृथिव्याः॥२॥



Digitized by Google

नः महिषः वि गाहते राजा पविचंऽरथः वाजं आ अरुहत् सहस्रंऽभृष्टिः जयति श्रवः बृहत् ॥४०॥१९॥ सः भंदनाः उत् इयर्ति प्रजाऽवतीः विश्वऽआयुः विश्वाः सुऽभराः अहःऽदिवि ब्रह्म प्रजाऽवत् रयिं अश्वऽपस्त्यं पीतः इंदो इंद्रं अस्मभ्यं याचतात् ॥४१॥ सः अग्रे अह्नां हरिः हर्यतः मदः प्र चेतसा चेतयते अनु द्युऽभिः द्वा जना यातयन् अंतः ईयते नराशंसं च दैव्यं च धर्तरि ॥४२॥ अंजते वि अंजते सं अंजते क्रतुं रिहंति मधुना अभि अंजते सिंधोः उत्ऽश्वासे पतयंतं उक्षणं हिरण्यऽपावाः पशुं आसु गृभ्णते ॥४३॥ विपःऽचिते पवमानाय गायत मही न धारा अति अंधः अर्षति अहिः न जूर्णां अति सर्पति त्वचं अत्यः न क्रीळन् असरत् वृषा हरिः ॥४४॥ अग्रेऽगः राजा अप्यः तविष्यते विऽमानः अह्नां भुवनेषु अर्पितः हरिः घृतऽस्नुः सुऽदृशीकः अर्णवः ज्योतिःऽरथः पवते राये ओक्यः ॥४५॥२०॥ असर्जि स्कंभः दिवः उत्ऽयतः मदः परिऽधातुः भुवनानि अर्षति अंशुं रिहंति मतयः पनिप्नतं गिरा यदि निःऽनिजं ऋग्मिणः ययुः ॥४६॥ प्र ते धाराः अति अण्वानि मेष्यः पुनानस्य संऽयतः यंति रंहयः यत् गोभिः इंदो चम्वोः संऽअज्यसे आ सुवानः सोम कलशेषु सीदसि ॥४७॥ पवस्व सोम क्रतुऽवित् नः उक्थ्यः अव्यः वारे परि धाव मधु प्रियं जहि विश्वान् रक्षसः इंदो अत्रिणः बृहत् वदेम विदथे सुऽवीराः ॥४८॥२१॥

---

॥८७॥ प्र तु द्रव परि कोशं नि सीद नृऽभिः पुनानः अभि वाजं अर्ष अश्वं न त्वा वाजिनं मर्जयंतः अच्छ बर्हिः रशनाभिः नयंति ॥१॥ सुऽआयुधः पवते देवः इंदुः अशस्तिऽहा वृजनं रक्षमाणः पिता देवानां जनिता सुऽदक्षः विष्टंभः दिवः धरुणः पृथिव्याः ॥२॥



Digitized by Google

ऋषिर्विप्रः पुरएता जनानामृभुर्धीर उशना काव्येन । स
चिद्विवेद निहितं यदासामपीच्यं१गुह्यं नाम गोनां ॥ ३ ॥
एष स्य ते मधुमाँ इंद्र सोमो वृषा वृष्णे परि पवित्रे अक्षाः ।
सहस्रसाः शतसा भूरिदावा शश्वत्तमं बर्हिरा वाज्यस्थात् ॥ ४ ॥
एते सोमा अभि गव्या सहस्रा महे वाजायामृताय श्रवांसि ।
पवित्रेभिः पवमाना असृग्रञ्छ्रवस्यवो न पृतनाजो अत्याः
॥ ५ ॥ २२ ॥ परि हि ष्मा पुरुहूतो जनानां विश्वासरद्भोजना
पूयमानः । अथा भर श्येनभृत प्रयांसि रयिं तुंजानो अभि
वाजमर्ष ॥ ६ ॥ एष सुवानः परि सोमः पवित्रे सर्गो न सृष्टो
अदधावदर्वा । तिग्मे शिशानो महिषो न शृंगे गा गव्यन्नभि
शूरो न सत्वा ॥ ७ ॥ एषा ययौ परमादंतरद्रेः कूचित्सतीरूर्वे
गा विवेद । दिवो न विद्युत्स्तनयंत्यभ्रैः सोमस्य ते पवत इंद्र
धारा ॥ ८ ॥ उत स्म राशिं परि यासि गोनामिंद्रेण सोम सरथं
पुनानः । पूर्वीरिषो बृहतीर्जीरदानो शिक्षा शचीवस्तव ता
उपष्टुत् ॥ ९ ॥ २३ ॥

॥ ८८ ॥ १-८ उशनाः ॥ पवमानः सोमः ॥ त्रिष्टुप् ॥

॥ ८८ ॥ अयं सोम इंद्र तुभ्यं सुन्वे तुभ्यं पवते त्वमस्य पाहि ।
त्वं ह यं चकृषे त्वं ववृष इंदुं मदाय युज्याय सोमं ॥ १ ॥ स ई रथो
न भुरिषाळयोजि महः पुरूणि सातये वसूनि । आदीं विश्वा
नहुष्याणि जाता स्वर्षाता वन ऊर्ध्वा नवंत ॥ २ ॥ वायुर्न यो
नियुत्वाँ इष्टयामा नासत्येव हव आ शंभविष्ठः । विश्ववारो
द्रविणोदा इव त्मन्पूषेव धीजवनोऽसि सोम ॥ ३ ॥ इंद्रो न यो
महा कर्माणि चक्रिर्हंता वृत्राणामसि सोम पूर्भित् । पैद्वो न
हि त्वमहिनाम्नां हंता विश्वस्यासि सोम दस्योः ॥ ४ ॥ अग्निर्न



Digitized by Google

ऋषिः विप्रः पुरःऽएता जनानां ऋभुः धीरः उशना काव्येन सः
चित् विवेद निऽहितं यत् आसां अपीच्यं गुह्यं नाम गोनां ॥३॥
एषः स्यः ते मधुऽमान् इंद्र सोमः वृषा वृष्णे परि पवित्रे अक्षाः
सहस्रऽसाः शतऽसाः भूरिऽदावा शश्वत्ऽतमं बर्हिः आ वाजी
अस्थात् ॥४॥ एते सोमाः अभि गव्या सहस्रा महे वाजाय अमृ-
ताय श्रवांसि पवित्रेभिः पवमानाः असृग्रन् श्रवस्यवः न पृत-
नाजः अत्याः ॥५॥२२॥ परि हि स्म पुरुऽहूतः जनानां विश्वा असरत्
भोजना पूयमानः अथ आ भर श्येनऽभृत प्रयांसि रयिं तुंजानः
अभि वाजं अर्ष ॥६॥ एषः सुवानः परि सोमः पवित्रे सर्गः न सृष्टः
अदधावत् अर्वा तिग्मे शिशानः महिषः न शृंगे गाः गव्यन्
अभि शूरः न सत्वा ॥७॥ एषा आ ययौ परमात् अंतः अद्रेः कूऽचित्
सतीः ऊर्वे गाः विवेद दिवः न विऽद्युत् स्तनयंती अभ्रैः सोमस्य ते
पवते इंद्र धारा ॥८॥ उत स्म राशिं परि यासि गोनां इंद्रेण सोम
सऽरथं पुनानः पूर्वीः इषः बृहतीः जीरऽदानो इति शिक्ष शचीऽवः
तव ताः उपऽस्तुत ॥९॥२३॥

---

॥८८॥ अयं सोमः इंद्र तुभ्यं सुन्वे तुभ्यं पवते त्वं अस्य पाहि त्वं ह
यं चकृषे त्वं ववृषे इंदुं मदाय युज्याय सोमं ॥१॥ सः ईं रथः न भुरिषाट्
अयोजि महः पुरूणि सातये वसूनि आत् ईं विश्वा नहुष्याणि
जाता स्वःऽसाता वने ऊर्ध्वा नवंत ॥२॥ वायुः न यः नियुत्वान्
इष्टऽयामा नासत्याऽइव हवे आ शंऽभविष्ठः विश्वऽवारः द्रवि-
णोदाःऽइव त्मन् पूषाऽइव धीऽजवनः असि सोम ॥३॥ इंद्रः न यः
महा कर्माणि चक्रिः हंता वृत्राणां असि सोम पूःऽभित् पैद्वः न
हि त्वं अहिऽनाम्नां हंता विश्वस्य असि सोम दस्योः ॥४॥ अग्निः न



Digitized by Google

यो वन आ मृज्यमानो वृथा पाजांसि कृणुते नदीषु। जनो
न युध्वा महत उपब्दिरियर्ति सोमः पवमान ऊर्मिं ॥५॥ एते
सोमा अति वाराण्यव्या दिव्या न कोशासो अभ्रवर्षाः। वृथा
समुद्रं सिंधवो न नीचीः सुतासो अभि कलशाँ असृग्रन् ॥६॥
शुष्मी शर्धो न मारुतं पवस्वानभिशस्ता दिव्या यथा विट्। आ-
पो न मक्षू सुमतिर्भवा नः सहस्राप्साः पृतनाषाण्न यज्ञः ॥७॥
राज्ञो नु ते वरुणस्य व्रतानि बृहद्गभीरं तव सोम धाम। शुचि-
ष्ट्वमसि प्रियो न मित्रो दक्षाय्यो अर्यमेवासि सोम ॥८॥२४॥

---

॥८९॥ १–७ उशनाः ॥ पवमानः सोमः ॥ त्रिष्टुप् ॥

॥८९॥ प्रो स्य वह्निः पथ्याभिरस्यान्दिवो न वृष्टिः पवमानो
अक्षाः। सहस्रधारो असदन्न्य१स्मे मातुरुपस्थे वन आ च सोमः
॥१॥ राजा सिंधूनामवसिष्ट वास ऋतस्य नावमारुहद्रजिष्ठां।
अप्सु द्रप्सो वावृधे श्येनजूतो दुह ईं पिता दुह ईं पितुर्जां ॥२॥
सिंहं नसंत मध्वो अयासं हरिमरुषं दिवो अस्य पतिं। शूरो
युत्सु प्रथमः पृच्छते गा अस्य चक्षसा परि पात्युक्षा ॥३॥
मधुपृष्ठं घोरमयासमश्वं रथे युंजंत्युरुचक्र ऋष्वं। स्वसार ईं
जामयो मर्जयंति सनाभयो वाजिनमूर्जयंति ॥४॥ चतस्र
ईं घृतदुहः सचंते समाने अंतर्धरुणे निषत्ताः। ता ईमर्षति
नमसा पुनानास्ता ईं विश्वतः परि षंति पूर्वीः ॥५॥ वि-
ष्टंभो दिवो धरुणः पृथिव्या विश्वा उत क्षितयो हस्ते
अस्य। असत्त उत्सो गृणते नियुत्वान्मध्वो अंशुः पवत इंद्रि-
याय ॥६॥ वन्वन्नवातो अभि देववीतिमिंद्राय सोम वृत्रहा
पवस्व। शग्धि महः पुरुश्चंद्रस्य रायः सुवीर्यस्य पतयः
स्याम ॥७॥२५॥



Digitized by Google

यः वने आ मृज्यमानः वृषा पाजांसि कृणुते नदीषु जनः न युध्वा
महतः उपब्दिः इयर्ति सोमः पवमानः ऊर्मिं ॥५॥ एते सोमाः
अति वाराणि अव्या दिव्याः न कोशासः अभ्रऽवर्षाः वृथा समुद्रं
सिंधवः न नीचीः सुतासः अभि कलशान् असृग्रन् ॥६॥ शुष्मी
शर्धः न मारुतं पवस्व अनभिऽशस्ता दिव्या यथा विट् आपः न
मक्षु सुऽमतिः भव नः सहस्रऽअप्साः पृतनाषाट् न यज्ञः ॥७॥ राज्ञः
नु ते वरुणस्य व्रतानि बृहत् गभीरं तव सोम धाम शुचिः त्वं असि
प्रियः न मित्रः दक्षाय्यः अर्यमाऽइव असि सोम ॥ ८ ॥ २४ ॥

---

॥८९॥ प्रो॰ स्यः वह्निः पथ्याभिः अस्यान् दिवः न वृष्टिः पवमा-
नः अक्षाः सहस्रऽधारः असदत् नि असे मातुः उपऽस्थे वने आ
च सोमः ॥१॥ राजा सिंधूनां अवसिष्ट वासः ऋतस्य नावं आ अ-
रुहत् रजिष्ठां अप्ऽसु द्रप्सः ववृधे श्येनऽजूतः दुहे ईं पिता दुहे
ईं पितुः जां ॥२॥ सिंहं नसंत मध्वः अयासं हरिं अरुषं दिवः अस्य
पतिं शूरः युत्ऽसु प्रथमः पृच्छते गाः अस्य चक्षसा परि पाति
उक्षा ॥३॥ मधुऽपृष्ठं घोरं अयासं अश्वं रथे युंजंति उरुऽचक्रे
ऋष्वं स्वसारः ईं जामयः मर्जयंति सऽनाभयः वाजिनं ऊर्जयंति
॥४॥ चतस्रः ईं घृतऽदुहः सचंते समाने अंतः धरुणे निऽसत्ताः
ताः ईं अर्षंति नमसा पुनानाः ताः ईं विश्वतः परि संति पूर्वीः
॥५॥ विष्टंभः दिवः धरुणः पृथिव्याः विश्वाः उत क्षितयः हस्ते
अस्य असत् ते उत्सः गृणते नियुत्वान् मध्वः अंशुः पवते इंद्रि-
याय ॥६॥ वन्वन् अवातः अभि देवऽवीतिं इंद्राय सोम वृ-
त्रऽहा पवस्व शग्धि महः पुरुऽचंद्रस्य रायः सुऽवीर्यस्य पतयः
स्याम ॥ ७ ॥ २५ ॥



Digitized by Google

॥ ९० ॥ १–६ वसिष्ठः ॥ पवमानः सोमः ॥ त्रिष्टुप् ॥

॥९०॥ प्र हिन्वानो जनिता रोदस्यो रथो न वाजं सनिषन्नयासीत् । इंद्रं गच्छन्नायुधा संशिशानो विश्वा वसु हस्तयोरादधानः ॥१॥ अभि त्रिपृष्ठं वृषणं वयोधामांगूषाणामवावशंत वाणीः । वना वसानो वरुणो न सिंधून्वि रत्नधा दयते वार्याणि ॥२॥ शूरग्रामः सर्ववीरः सहावाञ्जेता पवस्व सनिता धनानि । तिग्मायुधः क्षिप्रधन्वा समत्स्वषाळ्हः साह्वान्पृतनासु शत्रून् ॥३॥ उरुगव्यूतिरभयानि कृण्वन्त्समीचीने आ पवस्वा पुरंधी । अपः सिषासन्नुषसः स्व१र्गाः सं चिक्रदो महो अस्मभ्यं वाजान् ॥४॥ मत्सि सोम वरुणं मत्सि मित्रं मत्सींद्रमिंदो पवमान विष्णुं । मत्सि शर्धो मारुतं मत्सि देवान्मत्सि महामिंद्रमिंदो मदाय ॥५॥ एवा राजेव क्रतुमाँ अमेन विश्वा घनिघ्नद्दुरिता पवस्व । इंदो सूक्ताय वचसे वयो धा यूयं पात स्वस्तिभिः सदा नः ॥६॥२६॥३॥

---

॥ ९१ ॥ १–६ कश्यपः ॥ पवमानः सोमः ॥ त्रिष्टुप् ॥

॥९१॥ असर्जि वक्वा रथ्ये यथाजौ धिया मनोता प्रथमो मनीषी । दश स्वसारो अधि सानो अव्येऽजंति वह्निं सदनान्यच्छ ॥१॥ वीती जनस्य दिव्यस्य कव्यैरधि सुवानो नहुष्येभिरिंदुः । प्र यो नृभिरमृतो मर्त्येभिर्मर्मृजानोऽविभिर्गोभिरद्भिः ॥२॥ वृषा वृष्णे रोरुवदंशुरस्मै पवमानो रुशदीर्ते पयो गोः । सहस्रमृक्वा पथिभिर्वचोविदध्वस्मभिः सूरो अण्वं वि याति ॥३॥ रुजा दृळ्हा चिद्रक्षसः सदांसि पुनान इंद ऊर्णुहि वि वाजान् । वृश्चोपरिष्टात्तुजता वधेन ये अंति दूरादुपनायमेषां ॥४॥ स प्रत्नवन्नव्यसे विश्ववार सूक्ताय पथः कृणुहि प्राचः । ये दुःषहासो वनुषा बृहंतस्तांस्ते अश्याम



Digitized by Google

॥ ९० ॥ प्र हिन्वानः जनिता रोदस्योः रथः न वाजं सनिष्यन् अयासीत् इंद्रं गच्छन् आयुधा सम्ऽशिशानः विश्वा वसु हस्तयोः आऽदधानः ॥ १ ॥ अभि त्रिऽपृष्ठं वृषणं वयःऽधां आंगूषाणां अवावशंत वाणीः वना वसानः वरुणः न सिंधून् वि रत्नऽधाः दयते वार्याणि ॥ २ ॥ शूरऽग्रामः सर्वऽवीरः सहावान् जेता पवस्व सनिता धनानि तिग्मऽआयुधः क्षिप्रऽधन्वा समत्ऽसु अषाळ्हः सह्वान् पृतनासु शत्रून् ॥ ३ ॥ उरुऽगव्यूतिः अभयानि कृण्वन् सम्ऽईचीने॰ आ पवस्व पुरंऽधी॰ अपः सिसासन् उषसः स्वः गाः सं चिक्रदः महः अस्मभ्यं वाजान् ॥ ४ ॥ मत्सि सोम वरुणं मत्सि मित्रं मत्सि इंद्रं इंदो॰ पवमान विष्णुं मत्सि शर्धः मारुतं मत्सि देवान् मत्सि महां इंद्रं इंदो॰ मदाय ॥ ५ ॥ एव राजाऽइव क्रतुऽमान् अमेन विश्वा घनिघ्नत् दुःऽइता पवस्व इंदो॰ सुऽउक्ताय वचसे वयः धाः यूयं पात स्वस्तिऽभिः सदा नः ॥ ६ ॥ २६ ॥ ३ ॥

---

॥ ९१ ॥ असर्जि वक्वा रथ्ये यथा आजौ धिया मनोता प्रथमः मनीषी दश स्वसारः अधि सानौ अव्ये अजंति वह्निं सदनानि अच्छ ॥ १ ॥ वीती जनस्य दिव्यस्य कव्यैः अधि सुवानः नहुष्येभिः इंदुः प्र यः नृऽभिः अमृतः मर्त्येभिः मर्मृजानः अविऽभिः गोऽभिः अत्ऽभिः ॥ २ ॥ वृषा वृष्णे रोरुवत् अंशुः अस्मै पवमानः रुशत् ईर्ते पयः गोः सहस्रं ऋक्वा पथिऽभिः वचःऽवित् अध्वस्मऽभिः सूरः अण्वं वि याति ॥ ३ ॥ रुज दृळ्हा चित् रक्षसः सदांसि पुनानः इंदो॰ ऊर्णुहि वि वाजान् वृश्च उपरिष्टात् तुजता वधेन ये अंति दूरात् उपऽनायं एषां ॥ ४ ॥ सः प्रत्नऽवत् नव्यसे विश्वऽवार सुऽउक्ताय पथः कृणुहि प्राचः ये दुःऽसहासः वनुषा बृहंतः तान् ते अश्याम



Digitized by Google

पुरुकृत्पुरुक्षो ॥५॥ एवा पुनानो अपः स्व१र्गा अस्मभ्यं तो-
का तनयानि भूरि। शं नः क्षेत्रमुरु ज्योतींषि सोम ज्योङ्नः
सूर्यं दृशये रिरीहि॥६॥१॥

---

॥ ९२ ॥ १–६ कश्यपः ॥ पवमानः सोमः ॥ त्रिष्टुप् ॥

॥९२॥ परि सुवानो हरिरंशुः पवित्रे रथो न सर्जि सनये
हियानः। आपच्छ्लोकमिंद्रियं पूयमानः प्रति देवाँ अजुषत
प्रयोभिः ॥१॥ अच्छा नृचक्षा असरत्पवित्रे नाम दधानः क-
विरस्य योनौ। सीदन्होतेव सदने चमूषूपेमग्मन्नृषयः सप्त
विप्राः ॥२॥ प्र सुमेधा गातुविद्विश्वदेवः सोमः पुनानः सद
एति नित्यं। भुवद्विश्वेषु काव्येषु रंतानु जनान्यतते पंच धीरः
॥३॥ तव त्ये सोम पवमान निण्ये विश्वे देवास्त्रय एकाद-
शासः। दश स्वधाभिरधि सानो अव्ये मृजंति त्वा नद्यः सप्त
यह्वीः ॥४॥ तन्नु सत्यं पवमानस्यास्तु यत्र विश्वे कारवः संन-
संत। ज्योतिर्यदह्ने अकृणोदु लोकं प्रावन्मनुं दस्यवे करभीकं
॥५॥ परि सद्मेव पशुमांति होता राजा न सत्यः समितीरि-
यानः। सोमः पुनानः कलशाँ अयासीत्सीदन्मृगो न महिषो
वनेषु ॥६॥२॥

---

॥ ९३ ॥ १–५ नोधाः ॥ पवमानः सोमः ॥ त्रिष्टुप् ॥

॥९३॥ साकमुक्षो मर्जयंत स्वसारो दश धीरस्य धीतयो धनु-
त्रीः। हरिः पर्यद्रवज्जाः सूर्यस्य द्रोणं ननक्षे अत्यो न वाजी॥१॥
सं मातृभिर्न शिशुर्वावशानो वृषा दधन्वे पुरुवारो अद्भिः।
मर्यो न योषामभि निष्कृतं यन्त्सं गच्छते कलश उस्रियाभिः
॥२॥ उत प्र पिप्य ऊधरघ्न्याया इंदुर्धाराभिः सचते सुमेधाः।
मूर्धानं गावः पयसा चमूष्वभि श्रीणंति वसुभिर्न निक्तैः



Digitized by Google

पुरुऽकृत् पुरुऽक्षो ॥५॥ एव पुनानः अपः स्वः गाः अस्मभ्यं तोका तनयानि भूरि शं नः क्षेत्रं उरु ज्योतींषि सोम ज्योक् नः सूर्यं दृशये रिरीहि ॥ ६ ॥ १ ॥

॥९२॥ परि सुवानः हरिः अंशुः पवित्रे रथः न सर्जि सनये हियानः आपत् श्लोकं इंद्रियं पूयमानः प्रति देवान् अजुषत प्रयःऽभिः ॥१॥ अच्छ नृऽचक्षाः असरत् पवित्रे नाम दधानः कविः अस्य योनौ सीदन् होताऽइव सदने चमूषु उप ईं अग्मन् ऋषयः सप्त विप्राः ॥२॥ प्र सुऽमेधाः गातुऽवित् विश्वऽदेवः सोमः पुनानः सदः एति नित्यं भुवत् विश्वेषु काव्येषु रंता अनु जनान् यतते पंच धीरः ॥३॥ तव त्ये सोम पवमान निण्ये विश्वे देवाः त्रयः एकादशासः दश स्वधाभिः अधि सानौ अव्ये मृजंति त्वा नद्यः सप्त यह्वीः ॥४॥ तत् नु सत्यं पवमानस्य अस्तु यत्र विश्वे कारवः संऽनसंत ज्योतिः यत् अह्ने अकृणोत् ऊं' लोकं प्र आवत् मनुं दस्यवे कः अभीकं ॥५॥ परि सद्मऽइव पशुऽमंति होता राजा न सत्यः संऽइतीः इयानः सोमः पुनानः कलशान् अयासीत् सीदत् मृगः न महिषः वनेषु ॥ ६ ॥ २ ॥

॥९३॥ साकंऽउक्षः मर्जयंत स्वसारः दश धीरस्य धीतयः धनुत्रीः हरिः परि अद्रवत् जाः सूर्यस्य द्रोणं ननक्षे अत्यः न वाजी ॥१॥ सं मातृऽभिः न शिशुः वावशानः वृषा दधन्वे पुरुऽवारः अत्ऽभिः मर्यः न योषां अभि निःऽकृतं यन् सं गच्छते कलशे उस्रियाभिः ॥२॥ उत प्र पिप्ये ऊधः अघ्न्यायाः इंदुः धाराभिः सचते सुऽमेधाः मूर्धानं गावः पयसा चमूषु अभि श्रीणंति वसुऽभिः न निक्तैः



Digitized by Google

॥३॥ स नो देवेभिः पवमान रदेंदो रयिमश्विनं वावशानः।
रथिरायतामुशती पुरंधिरस्मद्र्य१गा दावने वसूनां ॥४॥ नू नो
रयिमुप मास्व नृवंतं पुनानो वाताप्यं विश्वश्चंद्रं। प्र वंदितु-
रिंदो तार्यायुः प्रातर्मक्षू धियावसुर्जगम्यात् ॥५॥३॥

॥ ९४ ॥ १–५ कण्वः ॥ पवमानः सोमः ॥ त्रिष्टुप् ॥

॥९४॥ अधि यदस्मिन्वाजिनीव शुभः स्पर्धंते धियः सूर्ये न
विशः। अपो वृणानः पवते कवीयन्व्रजं न पशुवर्धनाय
मन्म ॥१॥ द्विता व्यूर्ण्वन्नमृतस्य धाम स्वर्विदे भुवनानि प्र-
थंत। धियः पिन्वानाः स्वसरे न गाव ऋतायंतीरभि वावश्र
इंदुं ॥२॥ परि यत्कविः काव्या भरते शूरो न रथो भुवनानि
विश्वा। देवेषु यशो मर्ताय भूषन्दक्षाय रायः पुरुभूषु नव्यः
॥३॥ श्रिये जातः श्रिय आ निरियाय श्रियं वयो जरितृभ्यो
दधाति। श्रियं वसाना अमृतत्वमायन्भवंति सत्या समिथा
मितद्रौ ॥४॥ इषमूर्जमभ्य१र्षाश्वं गामुरु ज्योतिः कृणुहि
मत्सि देवान्। विश्वानि हि सुषहा तानि तुभ्यं पवमान
बाधसे सोम शत्रून् ॥५॥४॥

॥ ९५ ॥ १–५ प्रस्कण्वः ॥ पवमानः सोमः ॥ त्रिष्टुप् ॥

॥९५॥ कनिक्रंति हरिरा सृज्यमानः सीदन्वनस्य जठरे
पुनानः। नृभिर्यतः कृणुते निर्णिजं गा अतो मतीर्जनयत
स्वधाभिः ॥१॥ हरिः सृजानः पथ्यामृतस्येयर्ति वाचमरितेव
नावं। देवो देवानां गुह्यानि नामाविष्कृणोति बर्हिषि
प्रवाचे ॥२॥ अपामिवेदूर्मयस्तर्तुराणाः प्र मनीषा ईरते
सोममच्छ। नमस्यंतीरुप च यंति सं चा च विशंत्युशतीरु-
शंतं ॥३॥ तं मर्मृजानं महिषं न सानावंशुं दुहंत्युक्षणं गि-



Digitized by Google

॥३॥ सः नः देवेभिः पवमान रद इंदो रयिं अश्विनं वावशानः रथि-
रायतां उशती पुरंऽधिः अस्मद्र्यक् आ दावने वसूनां ॥४॥ नु नः
रयिं उप मास्व नृऽवंतं पुनानः वाताप्यं विश्वऽचंद्रं प्र वंदितुः
इंदो तारि आयुः प्रातः मक्षु धियाऽवसुः जगम्यात् ॥५॥३॥

---

॥९४॥ अधि यत् अस्मिन् वाजिनिऽइव शुभः स्पर्धंते धियः सूर्ये
न विशः अपः वृणानः पवते कविऽयन् व्रजं न पशुऽवर्धनाय
मन्म ॥१॥ द्विता विऽऊर्ण्वन् अमृतस्य धाम स्वःऽविदे भुवनानि
प्रथंत धियः पिन्वानाः स्वसरे न गावः ऋतऽयंतीः अभि वावश्रे
इंदुं ॥२॥ परि यत् कविः काव्या भरते शूरः न रथः भुवनानि विश्वा
देवेषु यशः मर्ताय भूषन् दक्षाय रायः पुरुऽभूषु नव्यः ॥३॥ श्रिये
जातः श्रिये आ निः इयाय श्रियं वयः जरितृऽभ्यः दधाति श्रियं
वसानाः अमृतऽत्वं आयन् भवंति सत्या संऽइथा मितऽद्रौ ॥४॥
इषं ऊर्जं अभि अर्ष अश्वं गां उरु ज्योतिः कृणुहि मत्सि देवान्
विश्वानि हि सुऽसहा तानि तुभ्यं पवमान बाधसे सोम शत्रून्
॥ ५ ॥ ४ ॥

---

॥९५॥ कनिक्रंति हरिः आ सृज्यमानः सीदन् वनस्य जठरे पु-
नानः नृऽभिः यतः कृणुते निःऽनिजं गाः अतः मतीः जनयत
स्वधाभिः ॥१॥ हरिः सृजानः पथ्यां ऋतस्य इयर्ति वाचं अरिता-
ऽइव नावं देवः देवानां गुह्यानि नाम आविः कृणोति बर्हिषि
प्रऽवाचे ॥२॥ अपांऽइव इत् ऊर्मयः तर्तुराणाः प्र मनीषाः ईरते
सोमं अच्छ नमस्यंतीः उप च यंति सं च आ च विशंति उशतीः
उशंतं ॥३॥ तं मर्मृजानं महिषं न सानौ अंशुं दुहंति उक्षणं गि-

रिह्ाम्। तं वावशानं मतयः सचंते त्रितो बिभर्ति वरुणं समुद्रे ॥४॥ इष्यन्वाचमुपवक्तेव होतुः पुनान इंदो वि ष्या मनीषाम्। इंद्रश्च यत्क्षयथः सौभगाय सुवीर्यस्य पतयः स्याम ॥५॥५॥

॥ ९६ ॥ १–२४ प्रतर्दनो दैवोदासिः ॥ पवमानः सोमः ॥ त्रिष्टुप् ॥

॥९६॥ प्र सेनानीः शूरो अग्रे रथानां गव्यन्नेति हर्षते अस्य सेना। भद्रान्कृण्वन्निंद्रहवान्त्सखिभ्य आ सोमो वस्त्रा रभसानि दत्ते ॥१॥ समस्य हरिं हरयो मृजंत्यश्वहयैरनिशितं नमोभिः। आ तिष्ठति रथमिंद्रस्य सखा विद्वाँ एना सुमतिं यात्यच्छ ॥२॥ स नो देव देवताते पवस्व महे सोम प्सरस इंद्रपानः। कृण्वन्नपो वर्षयन्द्यामुतेमामुरोरा नो वरिवस्या पुनानः ॥३॥ अजीतयेऽहतये पवस्व स्वस्तये सर्वतातये बृहते। तदुशंति विश्व इमे सखायस्तदहं वश्मि पवमान सोम ॥४॥ सोमः पवते जनिता मतीनां जनिता दिवो जनिता पृथिव्याः। जनिताग्नेर्जनिता सूर्यस्य जनितेंद्रस्य जनितोत विष्णोः ॥५॥६॥ ब्रह्मा देवानां पदवीः कवीनामृषिर्विप्राणां महिषो मृगाणाम्। श्येनो गृध्राणां स्वधितिर्वनानां सोमः पवित्रमत्येति रेभन् ॥६॥ प्रावीविपद्वाच ऊर्मिं न सिंधुर्गिरः सोमः पवमानो मनीषाः। अंतः पश्यन्वृजनेमावराण्या तिष्ठति वृषभो गोषु जानन् ॥७॥ स मत्सरः पृत्सु वन्वन्नवातः सहस्ररेता अभि वाजमर्ष। इंद्रायेंदो पवमानो मनीष्यं१शोरूर्मिमीरय गा इषण्यन् ॥८॥ परि प्रियः कलशे देववात इंद्राय सोमो रण्यो मदाय। सहस्रधारः शतवाज इंदुर्वाजी न सप्तिः समना जिगाति ॥९॥ स पूर्व्यो वसुविज्जायमानो मृजानो अप्सु दुदुहानो अद्रौ। अभिशस्तिपा भुवनस्य राजा विदद्गातुं



Digitized by Google

रिऽस्थां तं वावशानं मतयः सचंते त्रितः बिभर्ति वरुणं समुद्रे ॥४॥ इष्यन् वाचं उपवक्ताऽइव होतुः पुनानः इंदो इति वि स्य मनीषां इंद्रः च यत् क्षयथः सौभगाय सुऽवीर्यस्य पतयः स्याम ॥५॥५॥

---

॥९६॥ प्र सेनाऽनीः शूरः अग्रे रथानां गव्यन् एति हर्षते अस्य सेना भद्रान् कृण्वन् इंद्रऽहवान् सखिऽभ्यः आ सोमः वस्त्रा रभसानि दत्ते ॥१॥ सं अस्य हरिं हरयः मृजंति अश्वऽहयैः अनिऽशितं नमःऽभिः आ तिष्ठति रथं इंद्रस्य सखा विद्वान् एन सुऽमतिं याति अच्छ ॥२॥ सः नः देव देवऽताते पवस्व महे सोम प्सरसे इंद्रऽपानः कृण्वन् अपः वर्षयन् द्यां उत इमां उरोः आ नः वरिवस्य पुनानः ॥३॥ अजीतये अहतये पवस्व स्वस्तये सर्वऽतातये बृहते तत् उशंति विश्वे इमे सखायः तत् अहं वश्मि पवमान सोम ॥४॥ सोमः पवते जनिता मतीनां जनिता दिवः जनिता पृथिव्याः जनिता अग्नेः जनिता सूर्यस्य जनिता इंद्रस्य जनिता उत विष्णोः ॥५॥६॥ ब्रह्मा देवानां पदऽवीः कवीनां ऋषिः विप्राणां महिषः मृगाणां श्येनः गृध्राणां स्वऽधितिः वनानां सोमः पवित्रं अति एति रेभन् ॥६॥ प्र अवीविपत् वाचः ऊर्मिं न सिंधुः गिरः सोमः पवमानः मनीषाः अंतः पश्यन् वृजना इमा अवराणि आ तिष्ठति वृषभः गोषु जानन् ॥७॥ सः मत्सरः पृत्ऽसु वन्वन् अवातः सहस्रऽरेताः अभि वाजं अर्ष इंद्राय इंदो इति पवमानः मनीषी अंशोः ऊर्मिं ईरय गाः इषण्यन् ॥८॥ परि प्रियः कलशे देवऽवातः इंद्राय सोमः रण्यः मदाय सहस्रऽधारः शतऽवाजः इंदुः वाजी न सप्तिः समना जिगाति ॥९॥ सः पूर्व्यः वसुऽवित् जायमानः मृजानः अप्ऽसु दुदुहानः अद्रौ अभिशस्तिऽपाः भुवनस्य राजा विदत् गातुं



Digitized by Google

ब्रह्मणो पूयमानः ॥१०॥७॥ त्वया हि नः पितरः सोम पूर्वे कर्माणि चक्रुः पवमान धीराः । वन्वन्नवातः परिधींरपोर्णु वीरेभिरश्वैर्मघवा भवा नः ॥११॥ यथापवथा मनवे वयोधा अमित्रहा वरिवोविद्धविष्मान् । एवा पवस्व द्रविणं दधान इंद्रे सं तिष्ठ जनयायुधानि ॥१२॥ पवस्व सोम मधुमाँ ऋतावापो वसानो अधि सानो अव्ये । अव द्रोणानि घृतवांति सीद मदिंतमो मत्सर इंद्रपानः ॥१३॥ वृष्टिं दिवः शतधारः पवस्व सहस्रसा वाजयुर्देववीतौ । सं सिंधुभिः कलशे वावशानः समुस्रियाभिः प्रतिरन्न आयुः ॥१४॥ एष स्य सोमो मतिभिः पुनानोऽत्यो न वाजी तरतीदरातीः । पयो न दुग्धमदितेरिषिरमुर्विव गातुः सुयमो न वोळ्हा ॥१५॥८॥ स्वायुधः सोतृभिः पूयमानोऽभ्यर्ष गुह्यं चारु नाम । अभि वाजं सप्तिरिव श्रवस्याभि वायुमभि गा देव सोम ॥१६॥ शिशुं जज्ञानं हर्यतं मृजंति शुंभंति वह्निं मरुतो गणेन । कविर्गीर्भिः काव्येना कविः सन्त्सोमः पवित्रमत्येति रेभन् ॥१७॥ ऋषिमना य ऋषिकृत्स्वर्षाः सहस्रणीथः पदवीः कवीनां । तृतीयं धाम महिषः सिषासन्त्सोमो विराजमनु राजति ष्टुप् ॥१८॥ चमूषच्छ्येनः शकुनो विभृत्वा गोविंदुर्द्रप्स आयुधानि बिभ्रत् । अपामूर्मिं सचमानः समुद्रं तुरीयं धाम महिषो विवक्ति ॥१९॥ मर्यो न शुभ्रस्तन्वं मृजानोऽत्यो न सृत्वा सनये धनानां । वृषेव यूथा परि कोशमर्षन्कनिक्रदच्चम्वो३रा विवेश ॥२०॥९॥ पवस्वेंदो पवमानो महोभिः कनिक्रदत्परि वाराण्यर्ष । क्रीळञ्चम्वो३रा विश पूयमान इंद्रं ते रसो मदिरो ममत्तु ॥२१॥ प्रास्य धारा बृहतीरसृग्रन्नक्तो गोभिः



Digitized by Google

अव्यये पूयमानः ॥ १० ॥ ७ ॥ त्वया हि नः पितरः सोम पूर्वे कर्माणि
चक्रुः पवमान धीराः वन्वन् अवातः परिऽधीन् अप ऊर्णु वीरे-
भिः अश्वैः मघऽवा भव नः ॥ ११ ॥ यथा अपवथाः मनवे वयःऽधाः
अमित्रऽहा वरिवःऽवित् हविष्मान् एव पवस्व द्रविणं दधानः
इंद्रे सं तिष्ठ जनय आयुधानि ॥ १२ ॥ पवस्व सोम मधुऽमान् ऋत-
ऽवा अपः वसानः अधि सानौ अव्ये अव द्रोणानि घृतऽवंति
सीद मदिन्ऽतमः मत्सरः इंद्रऽपानः ॥ १३ ॥ वृष्टिं दिवः शतऽधारः
पवस्व सहस्रऽसाः वाजऽयुः देवऽवीतौ सं सिंधुऽभिः कलशे वा-
वशानः सं उस्रियाभिः प्रऽतिरन् नः आयुः ॥ १४ ॥ एषः स्यः सोमः
मतिऽभिः पुनानः अत्यः न वाजी तरति इत् अरातीः पयः न दुग्धं
अदितेः इषिरं उरुऽइव गातुः सुऽयमः न वोळ्हा ॥ १५ ॥ ८ ॥ सुऽआ-
युधः सोतृऽभिः पूयमानः अभि अर्ष गुह्यं चारु नाम अभि वाजं
सप्तिःऽइव श्रवस्या अभि वायुं अभि गाः देव सोम ॥ १६ ॥ शिशुं
जज्ञानं हर्यतं मृजंति शुंभंति वह्निं मरुतः गणेन कविः गीःऽभिः
काव्येन कविः सन् सोमः पवित्रं अति एति रेभन् ॥ १७ ॥ ऋषि-
ऽमनाः यः ऋषिऽकृत् स्वःऽसाः सहस्रऽनीथः पदऽवीः कवीनां
तृतीयं धाम महिषः सिसासन् सोमः विऽराजं अनु राजति स्तुप्
॥ १८ ॥ चमूऽसत् श्येनः शकुनः विऽभृत्वा गोऽविंदुः द्रप्सः आयु-
धानि बिभ्रत् अपां ऊर्मिं सचमानः समुद्रं तुरीयं धाम महिषः
विवक्ति ॥ १९ ॥ मर्यः न शुभ्रः तन्वं मृजानः अत्यः न सृत्वा सनये
धनानां वृषाऽइव यूथा परि कोशं अर्षन् कनिक्रदत् चम्वोः आ
विवेश ॥ २० ॥ ९ ॥ पवस्व इंदो इति पवमानः महःऽभिः कनिक्रदत् परि
वाराणि अर्ष क्रीळन् चम्वोः आ विश पूयमानः इंद्रं ते रसः म-
दिरः ममत्तु ॥ २१ ॥ प्र अस्य धाराः बृहतीः असृग्रन् अक्तः गोभिः



Digitized by Google

कलशाँ आ विवेश। साम कृण्वन्त्सामन्यो विपश्चित्क्रंदन्नेत्यभि सख्युर्न जामिं ॥ २२ ॥ अपघ्नन्नेषि पवमान शत्रून्प्रियां न जारो अभिगीत इंदुः। सीदन्वनेषु शकुनो न पत्वा सोमः पुनानः कलशेषु सत्ता ॥२३॥ आ ते रुचः पवमानस्य सोम योषेव यंति सुदुघाः सुधाराः। हरिरानीतः पुरुवारो अप्स्वचिक्रदत्कलशे देवयूनां ॥ २४ ॥ १० ॥ ५ ॥

---

॥ ९७ ॥ १–३ वसिष्ठः । ४–६ इंद्रप्रमतिर्वासिष्ठः । ७–९ वृषगणो वासिष्ठः । १०–१२ मन्युर्वासिष्ठः । १३–१५ उपमन्युर्वासिष्ठः । १६–१८ व्याघ्रपाद्वासिष्ठः । १९–२१ शक्तिर्वासिष्ठः । २२–२४ कर्णश्रुद्वासिष्ठः । २५–२७ मृळीको वासिष्ठः । २८–३० वसुक्रो वासिष्ठः । ३१–४४ पराशरः । ४५–५८ कुत्सः ॥ पवमानः सोमः ॥ त्रिष्टुप् ॥

॥९७॥ अस्य प्रेषा हेमना पूयमानो देवो देवेभिः समपृक्त रसं। सुतः पवित्रं पर्येति रेभन्मितेव सद्म पशुमांति होता ॥१॥ भद्रा वस्त्रा समन्या३ वसानो महान्कविर्निवचनानि शंसन्। आ वच्यस्व चम्वोः पूयमानो विचक्षणो जागृविर्देववीतौ ॥२॥ समु प्रियो मृज्यते सानो अव्ये यशस्तरो यशसां क्षैतो अस्मे। अभि स्वर धन्वा पूयमानो यूयं पात स्वस्तिभिः सदा नः ॥३॥ प्र गायताभ्यर्चाम देवान्त्सोमं हिनोत महते धनाय। स्वादुः पवाते अति वारमव्यमा सीदाति कलशं देवयुर्नः ॥४॥ इंदुर्देवानामुप सख्यमायन्त्सहस्रधारः पवते मदाय। नृभिः स्तवानो अनु धाम पूर्वमगन्निंद्रं महते सौभगाय ॥५॥११॥ स्तोत्रे राये हरिरर्षा पुनान इंद्रं मदो गच्छतु ते भराय। देवैर्याहि सरथं राधो अच्छा यूयं पात स्वस्तिभिः सदा नः ॥६॥ प्र काव्यमुशनेव ब्रुवाणो देवो देवानां जनिमा विवक्ति। महिव्रतः शुचिबंधुः पावकः पदा वराहो अभ्येति रेभन् ॥७॥ प्र हंसासस्तृपलं मन्युमच्छामादस्तं वृषगणा अयासुः। आंगूष्यं पव-



Digitized by Google

कलशान् आ विवेश साम कृण्वन् सामन्यः विपःऽचित् क्रं-
दन् एति अभि सख्युः न जामिं ॥ २२ ॥ अपऽघ्नन् एषि पवमान
शत्रून् प्रियां न जारः अभिऽगीतः इंदुः सीदन् वनेषु शकुनः
न पत्वा सोमः पुनानः कलशेषु सत्ता ॥ २३ ॥ आ ते रुचः प-
वमानस्य सोम योषाःऽइव यंति सुऽदुघाः सुऽधाराः हरिः
आऽनीतः पुरुऽवारः अप्ऽसु अचिक्रदत् कलशे देवऽयूनां
॥ २४ ॥ १० ॥ ५ ॥

---

॥ ९७ ॥ अस्य प्रेषा हेमना पूयमानः देवः देवेभिः सं अपृक्त
रसं सुतः पवित्रं परि एति रेभन् मिताऽइव सद्म पशुऽमंति
होता ॥ १ ॥ भद्रा वस्त्रा समन्या वसानः महान् कविः निऽव-
चनानि शंसन् आ वच्यस्व चम्वोः पूयमानः विऽचक्षणः
जागृविः देवऽवीतौ ॥ २ ॥ सं ऊं इति प्रियः मृज्यते सानौ अव्ये य-
शःऽतरः यशसां क्षैतः अस्मे इति अभि स्वर धन्व पूयमानः यूयं
पात स्वस्तिभिः सदा नः ॥ ३ ॥ प्र गायत अभि अर्चाम देवान्
सोमं हिनोत महते धनाय स्वादुः पवाते अति वारं अव्यं आ
सीदाति कलशं देवऽयुः नः ॥ ४ ॥ इंदुः देवानां उप सख्यं आ-
ऽयन् सहस्रऽधारः पवते मदाय नृऽभिः स्तवानः अनु धाम
पूर्वं अगन् इंद्रं महते सौभगाय ॥ ५ ॥ ११ ॥ स्तोत्रे राये हरिः अर्ष
पुनानः इंद्रं मदः गच्छतु ते भराय देवैः याहि सऽरथं राधः
अच्छ यूयं पात स्वस्तिभिः सदा नः ॥ ६ ॥ प्र काव्यं उशनाऽइव
ब्रुवाणः देवः देवानां जनिम विवक्ति महिऽव्रतः शुचिऽबंधुः
पावकः पदा वराहः अभि एति रेभन् ॥ ७ ॥ प्र हंसासः तृपलं
मन्युं अच्छ अमात् अस्तं वृषऽगणाः अयासुः आंगूष्यं पव-



Digitized by Google

मानं सखायो दुर्मर्षं साकं प्र वंदंति वाणं ॥८॥ स रंहत उरु-
गायस्य जूतिं वृथा क्रीळंतं मिमते न गावः। परीणसं कृणुते
तिग्मशृंगो दिवा हरिर्ददृशे नक्तमृज्रः ॥९॥ इंदुर्वाजी पवते
गोन्योघा इंद्रे सोमः सह इन्वन्मदाय। हंति रक्षो बाधते पर्य-
रातीर्वरिवः कृण्वन्वृजनस्य राजा ॥१०॥१२॥ अध धारया
मध्वा पृचानस्तिरो रोम पवते अद्रिदुग्धः। इंदुरिंद्रस्य सख्यं
जुषाणो देवो देवस्य मत्सरो मदाय ॥११॥ अभि प्रियाणि प-
वते पुनानो देवो देवान्त्स्वेन रसेन पृंचन्। इंदुर्धर्माण्यृतुथा
वसानो दश क्षिपो अव्यत सानो अव्ये ॥१२॥ वृषा शोणो
अभिकनिक्रदद्गा नदयन्नेति पृथिवीमुत द्यां। इंद्रस्येव वग्नुरा
शृण्व आजौ प्रचेतयन्नर्षति वाचमेमां ॥१३॥ रसाय्यः पयसा
पिन्वमान ईरयन्नेषि मधुमंतमंशुं। पवमानः संतनिमेषि
कृण्वन्निंद्राय सोम परिषिच्यमानः ॥१४॥ एवा पवस्व म-
दिरो मदायोदग्राभस्य नमयन्वधस्नैः। परि वर्णं भरमाणो
रुशंतं गव्युर्नो अर्ष परि सोम सिक्तः ॥१५॥१३॥ जुष्ट्वी न इंदो
सुपथा सुगान्युरौ पवस्व वरिवांसि कृण्वन्। घनेव वि-
ष्वग्दुरितानि विघ्नन्नधि ष्णुना धन्व सानो अव्ये ॥१६॥ वृ-
ष्टिं नो अर्ष दिव्यां जिगत्नुमिळावतीं शंगयीं जीरदानुं।
स्तुकेव वीता धन्वा विचिन्वन्बंधूंरिमाँ अवराँ इंदो वायून्
॥१७॥ ग्रंथिं न वि ष्य ग्रथितं पुनान ऋजुं च गातुं वृजिनं च
सोम। अत्यो न क्रदो हरिरा सृजानो मर्यो देव धन्व पस्त्यावान्
॥१८॥ जुष्टो मदाय देवतात इंदो परि ष्णुना धन्व सानो अव्ये।
सहस्रधारः सुरभिरदब्धः परि स्रव वाजसातौ नृषह्ये ॥१९॥
अरश्मानो येऽरथा अयुक्ता अत्यासो न ससृजानास आजौ।



Digitized by Google

मानं सखायः दुःऽमर्षं साकं प्र वदंति वाणं ॥ ८ ॥ सः रंहते उरु-
ऽगायस्य जूतिं वृथा क्रीळंतं मिमते न गावः परीणसं कृणुते
तिग्मऽशृंगः दिवा हरिः ददृशे नक्तं ऋज्रः ॥ ९ ॥ इंदुः वाजी पवते
गोऽन्योघाः इंद्रे सोमः सहः इन्वन् मदाय हंति रक्षः बाधते परि
अरातीः वरिवः कृण्वन् वृजनस्य राजा ॥ १० ॥ १२ ॥ अध धारया
मध्वा पृचानः तिरः रोम पवते अद्रिऽदुग्धः इंदुः इंद्रस्य सख्यं जु-
षाणः देवः देवस्य मत्सरः मदाय ॥ ११ ॥ अभि प्रियाणि पवते
पुनानः देवः देवान् स्वेन रसेन पृंचन् इंदुः धर्माणि ऋतुऽथा
वसानः दश क्षिपः अव्यत सानौ अव्ये ॥ १२ ॥ वृषा शोणः अभिऽक-
निक्रदत् गाः नदयन् एति पृथिवीं उत द्यां इंद्रस्यऽइव वग्नुः आ
शृण्वे आजौ प्रऽचेतयन् अर्षति वाचं आ इमां ॥ १३ ॥ रसाय्यः पय-
सा पिन्वमानः ईरयन् एषि मधुऽमंतं अंशुं पवमानः संऽतनिं
एषि कृण्वन् इंद्राय सोम परिऽसिच्यमानः ॥ १४ ॥ एव पवस्व
मदिरः मदाय उदऽग्राभस्य नमयन् वधऽस्नैः परि वर्णं भरमाणः
रुशंतं गव्युः नः अर्ष परि सोम सिक्तः ॥ १५ ॥ १३ ॥ जुष्टी नः इंदो
सुऽपथा सुऽगानि उरौ पवस्व वरिवांसि कृण्वन् घनाऽइव वि-
ष्वक् दुःऽइतानि विऽघ्नन् अधि स्नुना धन्व सानौ अव्ये ॥ १६ ॥
वृष्टिं नः अर्ष दिव्यां जिगत्नुं इळाऽवतीं शंऽगयीं जीरऽदानुं
स्तुकाऽइव वीता धन्व विऽचिन्वन् बंधून् इमान् अवरान् इंदो
वायून् ॥ १७ ॥ ग्रंथिं न वि स्य ग्रथितं पुनानः ऋजुं च गातुं वृजिनं
च सोम अत्यः न क्रदः हरिः आ सृजानः मर्यः देव धन्व पस्त्यऽवान्
॥ १८ ॥ जुष्टः मदाय देवऽताते इंदो परि स्नुना धन्व सानौ अव्ये स-
हस्रऽधारः सुरभिः अदब्धः परि स्रव वाजऽसातौ नृऽसह्ये ॥ १९ ॥
अरश्मानः ये अरथाः अयुक्ताः अत्यासः न ससृजानासः आजौ



Digitized by Google

एते मुक्रासो धन्वंति सोमा देवासस्ताँ उप याता पिबध्यै ॥२०॥१४॥ एवा नं इंदो अभि देववीतिं परि स्रव नभो अर्णश्चमूषु। सोमो अस्मभ्यं काम्यं बृहंतं रयिं ददातु वीरवंतमुग्रं ॥२१॥ तक्षद्यदी मनसो वेनतो वाग्ज्येष्ठस्य वा धर्मणि क्षोरनीके। आदीमायन्वरमा वावशाना जुष्टं पतिं कलशे गाव इंदुं ॥२२॥ प्र दानुदो दिव्यो दानुपिन्व ऋतमृताय पवते सुमेधाः। धर्मा भुवद्वृजन्यस्य राजा प्र रश्मिभिर्दशभिर्भारि भूम ॥२३॥ पवित्रेभिः पवमानो नृचक्षा राजा देवानामुत मर्त्यानां। द्विता भुवद्रयिपती रयीणामृतं भरत्सुभृतं चार्विंदुः ॥२४॥ अर्वाँ इव श्रवसे सातिमच्छेंद्रस्य वायोरभि वीतिमर्ष। स नः सहस्रा बृहतीरिषो दा भवा सोम द्रविणोवित्पुनानः ॥२५॥१५॥ देवाव्यो नः परिषिच्यमानाः क्षयं सुवीरं धन्वंतु सोमाः। आयज्यवः सुमतिं विश्ववारा होतारो न दिवियजो मंद्रतमाः ॥२६॥ एवा देव देवताते पवस्व महे सोम प्सरसे देवपानः। महश्चिद्धि ष्मसि हिताः समर्ये कृधि सुष्ठाने रोदसी पुनानः ॥२७॥ अश्वो न क्रदो वृषभिर्युजानः सिंहो न भीमो मनसो जवीयान्। अर्वाचीनैः पथिभिर्ये रजिष्ठा आ पवस्व सौमनसं न इंदो ॥२८॥ शतं धारा देवजाता असृग्रन्सहस्रमेनाः कवयो मृजंति। इंदो सनित्रं दिव आ पवस्व पुरएतासि महतो धनस्य ॥२९॥ दिवो न सर्गा अससृग्रमह्नां राजा न मित्रं प्र मिनाति धीरः। पितुर्न पुत्रः क्रतुभिर्यतान आ पवस्व विशे अस्या अजीतिं ॥३०॥१६॥ प्र ते धारा मधुमतीरसृग्रन्वारान्यत्पूतो अत्येष्यव्यान्। पवमान पवसे धाम गोनां जज्ञानः सूर्यमपिन्वो अर्कैः ॥३१॥ कनिक्रददनु पंथा-



Digitized by Google

एते शुक्रासः धन्वंति सोमाः देवासः तान् उप यात पिबध्यै
॥२०॥१४॥ एव नः इंदो इति अभि देवऽवीतिं परि स्रव नभः अर्णः च-
मूषु सोमः अस्मभ्यं काम्यं बृहंतं रयिं ददातु वीरऽवंतं उग्रं ॥२१॥
तक्षत् यदि मनसः वेनतः वाक् ज्येष्ठस्य वा धर्मणि क्षोः अनीके
आत् ईं आयन् वरं आ वावशानाः जुष्टं पतिं कलशे गावः इंदुं
॥२२॥ प्र दानुऽदः दिव्यः दानुऽपिन्वः ऋतं ऋताय पवते सुऽमेधाः
धर्मा भुवत् वृजन्यस्य राजा प्र रश्मिऽभिः दशऽभिः भारि भूम
॥२३॥ पवित्रेभिः पवमानः नृऽचक्षाः राजा देवानां उत मर्त्यानां
द्विता भुवत् रयिऽपतिः रयीणां ऋतं भरत् सुऽभृतं चारु इंदुः
॥२४॥ अर्वान्ऽइव श्रवसे सातिं अच्छ इंद्रस्य वायोः अभि वीतिं
अर्ष सः नः सहस्रा बृहतीः इषः दाः भव सोम द्रविणःऽवित् पु-
नानः ॥२५॥१५॥ देवऽअव्यः नः परिऽसिच्यमानाः क्षयं सुऽवीरं
धन्वंतु सोमाः आऽयज्यवः सुऽमतिं विश्वऽवाराः होतारः न दि-
विऽयजः मंद्रऽतमाः ॥२६॥ एव देव देवऽताते पवस्व महे सोम
प्सरसे देवऽपानः महः चित् हि स्मसि हिताः सऽमर्ये कृधि सु-
ऽस्थाने॰ रोदसी इति पुनानः ॥२७॥ अश्वः न क्रदः वृषऽभिः युजानः
सिंहः न भीमः मनसः जवीयान् अर्वाचीनैः पथिऽभिः ये रजिष्ठाः
आ पवस्व सौमनसं नः इंदो इति ॥२८॥ शतं धाराः देवऽजाताः असृ-
ग्रन् सहस्रं एनाः कवयः मृजंति इंदो इति सनित्रं दिवः आ पवस्व पुरः-
ऽएता असि महतः धनस्य ॥२९॥ दिवः न सर्गाः असमृग्रं अह्नां रा-
जा न मित्रं प्र मिनाति धीरः पितुः न पुत्रः क्रतुऽभिः यतानः आ
पवस्व विशे अस्यै अजीतिं ॥३०॥१६॥ प्र ते धाराः मधुऽमतीः अ-
सृग्रन् वारान् यत् पूतः अतिऽएषि अव्यान् पवमान पवसे धाम
गोनां जज्ञानः सूर्यं अपिन्वः अर्कैः ॥३१॥ कनिक्रदत् अनु पंथां



Digitized by Google

मृतस्य शुक्रो वि भास्यमृतस्य धाम। स इंद्राय पवसे मत्स-
रवान्हिन्वानो वाचं मतिभिः कवीनां ॥३२॥ दिव्यः सुपर्णो-
ऽव चक्षि सोम पिन्वन्धाराः कर्मणा देववीतौ। एंदो विश
कलशं सोमधानं क्रंदन्निहि सूर्यस्योप रश्मिं ॥३३॥ तिस्रो
वाच ईरयति प्र वह्निर्ऋतस्य धीतिं ब्रह्मणो मनीषां। गावो
यंति गोपतिं पृच्छमानाः सोमं यंति मतयो वावशानाः॥३४॥
सोमं गावो धेनवो वावशानाः सोमं विप्रा मतिभिः पृच्छ-
मानाः। सोमः सुतः पूयते अज्यमानः सोमे अर्कास्त्रिष्टुभः सं
नवंते ॥३५॥१७॥ एवा नः सोम परिषिच्यमान आ पवस्व
पूयमानः स्वस्ति। इंद्रमा विश बृहता रवेण वर्धया वाचं
जनया पुरंधिं ॥३६॥ आ जागृविर्विप्र ऋता मतीनां सोमः
पुनानो असदच्चमूषु। सपंति यं मिथुनासो निकामा अध्व-
र्यवो रथिरासः सुहस्ताः ॥३७॥ स पुनान उप सूरे न धातोभे
अप्रा रोदसी वि ष आवः। प्रिया चिद्यस्य प्रियसास ऊती स
तू धनं कारिणे न प्र यंसत् ॥३८॥ स वर्धिता वर्धनः पूयमानः
सोमो मीढ्वाँ अभि नो ज्योतिषावीत्। येना नः पूर्वे पितरः पद-
ज्ञाः स्वर्विदो अभि गा अद्रिमुष्णन् ॥३९॥ अक्रान्त्समुद्रः प्रथमे
विधर्मञ्जनयन्प्रजा भुवनस्य राजा। वृषा पवित्रे अधि सानो
अव्ये बृहत्सोमो वावृधे सुवान इंदुः ॥४०॥१८॥ महत्तत्सोमो
महिषश्चकारापां यद्गर्भोऽवृणीत देवान्। अदधादिंद्रे पवमान
ओजोऽजनयत्सूर्ये ज्योतिरिंदुः ॥४१॥ मत्सि वायुमिष्टये राधसे
च मत्सि मित्रावरुणा पूयमानः। मत्सि शर्धो मारुतं मत्सि दे-
वान्मत्सि द्यावापृथिवी देव सोम ॥४२॥ ऋजुः पवस्व वृजिनस्य
हंतापामीवां बाधमानो मृधश्च। अभिश्रीणन्पयः पयसाभि



Digitized by Google

ऋतस्य शुक्रः विभासि अमृतस्य धाम सः इंद्राय पवसे मत्सर-
ऽवान् हिन्वानः वाचं मतिऽभिः कवीनां ॥३२॥ दिव्यः सुऽपर्णः
अव चक्षि सोम पिन्वन् धाराः कर्मणा देवऽवीतौ आ इंदो इति विश
कलशं सोमऽधानं क्रंदन् इहि सूर्यस्य उप रश्मिं ॥३३॥ तिस्रः वा-
चः ईरयति प्र वह्निः ऋतस्य धीतिं ब्रह्मणः मनीषां गावः यंति
गोऽपतिं पृच्छमानाः सोमं यंति मतयः वावशानाः ॥३४॥ सोमं
गावः धेनवः वावशानाः सोमं विप्राः मतिऽभिः पृच्छमानाः
सोमः सुतः पूयते अज्यमानः सोमे अर्काः त्रिऽस्तुभः सं नवंते
॥३५॥१७॥ एव नः सोम परिऽसिच्यमानः आ पवस्व पूयमानः
स्वस्ति इंद्रं आ विश बृहता रवेण वर्धय वाचं जनय पुरंऽधिं ॥३६॥
आ जागृविः विप्रः ऋता मतीनां सोमः पुनानः असदत् चमूषु
सपंति यं मिथुनासः निऽकामाः अध्वर्यवः रथिरासः सुऽहस्ताः
॥३७॥ सः पुनानः उप सूरे न धाता आ उभे इति अप्राः रोदसी इति वि सः
आवरित्यावः प्रिया चित् यस्य प्रियसासः ऊती सः तु धनं कारिणे न प्र
यंसत् ॥३८॥ सः वर्धिता वर्धनः पूयमानः सोमः मीढ्वान् अभि नः
ज्योतिषा आवीत् येन नः पूर्वे पितरः पदऽज्ञाः स्वःऽविदः अभि
गाः अद्रिं उष्णन् ॥३९॥ अक्रान् समुद्रः प्रथमे विऽधर्मन् जनयन्
प्रऽजाः भुवनस्य राजा वृषा पवित्रे अधि सानौ अव्ये बृहत् सोमः
ववृधे सुवानः इंदुः ॥४०॥१८॥ महत् तत् सोमः महिषः चकार अपां
यत् गर्भः अवृणीत देवान् अदधात् इंद्रे पवमानः ओजः अज-
नयत् सूर्ये ज्योतिः इंदुः ॥४१॥ मत्सि वायुं इष्टये राधसे च मत्सि
मित्रावरुणा पूयमानः मत्सि शर्धः मारुतं मत्सि देवान् मत्सि
द्यावापृथिवी इति देव सोम ॥४२॥ ऋजुः पवस्व वृजिनस्य हंता अप
अमीवां बाधमानः मृधः च अभिऽश्रीणन् पयः पयसा अभि



Digitized by Google

गोनामिंद्रस्य त्वं तव वयं सखायः ॥४३॥ मध्वः सूदं पवस्व वस्व उत्सं वीरं च न आ पवस्वा भगं च । स्वदस्वेंद्राय पवमान इंदो रयिं च न आ पवस्वा समुद्रात् ॥४४॥ सोमः सुतो धारयात्यो न हित्वा सिंधुर्न निम्नमभि वाज्यक्षाः । आ योनिं वन्यमसदत्पुनानः समिंदुर्गोभिरसरत्समद्भिः ॥४५॥१९॥ एष स्य ते पवत इंद्र सोमश्चमूषु धीर उशते तवस्वान् । स्वर्चक्षा रथिरः सत्यशुष्मः कामो न यो देवयतामसर्जि ॥४६॥ एष प्रत्नेन वयसा पुनानस्तिरो वर्पांसि दुहितुर्दधानः । वसानः शर्म त्रिवरूथमप्सु होतेव याति समनेषु रेभन् ॥४७॥ नू नस्त्वं रथिरो देव सोम परि स्रव चम्वोः पूयमानः । अप्सु स्वादिष्ठो मधुमाँ ऋतावा देवो न यः सविता सत्यमन्मा ॥४८॥ अभि वायुं वीत्यर्षा गृणानो३ऽभि मित्रावरुणा पूयमानः । अभी नरं धीजवनं रथेष्ठामभींद्रं वृषणं वज्रबाहुं ॥४९॥ अभि वस्त्रा सुवसनान्यर्षाभि धेनूः सुदुघाः पूयमानः । अभि चंद्रा भर्तवे नो हिरण्याभ्यश्वान्रथिनो देव सोम ॥५०॥२०॥ अभी नो अर्ष दिव्या वसून्यभि विश्वा पार्थिवा पूयमानः । अभि येन द्रविणमश्नवामाभ्यार्षेयं जमदग्निवन्नः ॥५१॥ अया पवा पवस्वैना वसूनि मांश्चत्व इंदो सरसि प्र धन्व । ब्रध्नश्चिदत्र वातो न जूतः पुरुमेधश्चित्तकवे नरं दात् ॥५२॥ उत न एना पवया पवस्वाधि श्रुते श्रवाय्यस्य तीर्थे । षष्टिं सहस्रा नैगुतो वसूनि वृक्षं न पक्वं धूनवद्रणाय ॥५३॥ महीमे अस्य वृषनाम शूषे मांश्चत्वे वा पृशने वा वधत्रे । अस्वापयन्निगुतः स्नेहयच्चापामित्राँ अपाचितो अचेतः ॥५४॥ सं त्री पवित्रा विततान्येष्यन्वेकं धावसि पूयमानः । असि भगो असि दात्रस्य दा-



Digitized by Google

गोनां इंद्रस्य त्वं तव वयं सखायः ॥४३॥ मध्वः सूदं पवस्व वस्वः
उत्सं वीरं च नः आ पवस्व भगं च स्वदस्व इंद्राय पवमानः इंदो इति
रयिं च नः आ पवस्व समुद्रात् ॥४४॥ सोमः सुतः धारया अत्यः न
हित्वा सिंधुः न निम्नं अभि वाजी अक्षारिति आ योनिं वन्यं असदत्
पुनानः सं इंदुः गोभिः असरत् सं अप्ऽभिः ॥४५॥१९॥ एषः स्यः ते
पवते इंद्र सोमः चमूषु धीरः उशते तवस्वान् स्वःऽचक्षाः रथिरः
सत्यऽशुष्मः कामः न यः देवऽयतां असर्जि ॥४६॥ एषः प्रत्नेन व-
यसा पुनानः तिरः वर्पांसि दुहितुः दधानः वसानः शर्म त्रिऽवरूथं
अप्ऽसु होताऽइव याति समनेषु रेभन् ॥४७॥ नु नः त्वं रथिरः देव
सोम परि स्रव चम्वोः पूयमानः अप्ऽसु स्वादिष्ठः मधुऽमान्
ऋतऽवा देवः न यः सविता सत्यऽमन्मा ॥४८॥ अभि वायुं वीती
अर्ष गृणानः अभि मित्रावरुणा पूयमानः अभि नरं धीऽजवनं
रथेऽस्थां अभि इंद्रं वृषणं वज्रऽबाहुं ॥४९॥ अभि वस्त्रा सुऽवस-
नानि अर्ष अभि धेनूः सुऽदुघाः पूयमानः अभि चंद्रा भर्तवे नः
हिरण्या अभि अश्वान् रथिनः देव सोम ॥५०॥२०॥ अभि नः अर्ष
दिव्या वसूनि अभि विश्वा पार्थिवा पूयमानः अभि येन द्रविणं
अश्नवाम अभि आर्षेयं जमदग्निऽवत् नः ॥५१॥ अया पवा पवस्व
एना वसूनि मांश्चत्वे इंदो इति सरसि प्र धन्व ब्रध्नः चित् अत्र वातः न
जूतः पुरुऽमेधः चित् तकवे नरं दात् ॥५२॥ उत नः एना पवया प-
वस्व अधि श्रुते श्रवाय्यस्य तीर्थे षष्टिं सहस्रा नैगुतः वसूनि वृक्षं
न पक्वं धूनवत् रणाय ॥५३॥ महि इमे अस्य वृषनाम शूषे मांश्चत्वे
वा पृशने वा वधत्रे अस्वापयत् निऽगुतः स्नेहयत् च अप अमि-
त्रान् अप अचितः अच इतः ॥५४॥ सं त्री पवित्रा विऽततानि
एषि अनु एकं धावसि पूयमानः असि भगः असि दात्रस्य दा-



Digitized by Google

तासिं मघवा मघवद्भ्य इंदो ॥५५॥२१॥ एष विश्ववित्पवते मनीषी सोमो विश्वस्य भुवनस्य राजा। द्रप्साँ ईरयन्विदथेष्विंदुर्वि वारमव्यं समयाति याति॥५६॥ इंदुं रिहंति महिषा अदब्धाः पदे रेभंति कवयो न गृध्राः। हिन्वंति धीरा दशभिः क्षिपाभिः समंजते रूपमपां रसेन॥५७॥ त्वया वयं पवमानेन सोम भरे कृतं वि चिनुयाम शश्वत्। तन्नो मित्रो वरुणो मामहंतामदितिः सिंधुः पृथिवी उत द्यौः॥५८॥२२॥

॥ ९८ ॥ १–१२ अंबरीष ऋजिश्वा च ॥ पवमानः सोमः ॥ १–१०. १२ अनुष्टुप् । ११ बृहती ॥

॥९८॥ अभि नो वाजसातमं रयिमर्ष पुरुस्पृहं। इंदो सहस्रभर्णसं तुविद्युम्नं विभ्वासहं ॥१॥ परि ष्य सुवानो अव्ययं रथे न वर्माव्यत। इंदुरभि द्रुणा हितो हियानो धाराभिरक्षाः ॥२॥ परि ष्य सुवानो अक्षा इंदुरव्ये मदच्युतः। धारा य ऊर्ध्वो अध्वरे भ्राजा नैति गव्ययुः ॥३॥ स हि त्वं देव शश्वते वसु मर्ताय दाशुषे। इंदो सहस्रिणं रयिं शतात्मानं विवाससि ॥४॥ वयं ते अस्य वृत्रहन्वसो वस्वः पुरुस्पृहः। नि नेदिष्ठतमा इषः स्याम सुम्नस्याध्रिगो ॥५॥ द्विर्यं पंच स्वयशसं स्वसारो अद्रिसंहतं। प्रियमिंद्रस्य काम्यं प्रस्नापयंत्यूर्मिणं ॥६॥२३॥ परि त्यं हर्यतं हरिं बभ्रुं पुनंति वारेण। यो देवान्विश्वाँ इत्परि मदेन सह गच्छति ॥७॥ अस्य वो ह्यवसा पांतो दक्षसाधनं। यः सूरिषु श्रवो बृहद्दधे स्व१र्ण हर्यतः ॥८॥ स वां यज्ञेषु मानवी इंदुर्जनिष्ट रोदसी। देवो देवी गिरिष्ठा अस्रेधन्तं तुविष्वणि ॥९॥ इंद्राय सोम पातवे वृत्रघ्ने परि षिच्यसे। नरे च दक्षिणावते देवाय सदनासदे ॥१०॥ ते प्रत्नासो व्युष्टिषु सोमाः पवित्रे अक्षरन्। अपप्रोथंतः सनुतर्हुरश्चितः प्रातस्ताँ अप्रचेतसः ॥११॥



Digitized by Google

ता असि मघऽवा मघवंतऽभ्यः इंदो ॥ ५५ ॥ २१ ॥ एषः विश्वऽवित पवते मनीषी सोमः विश्वस्य भुवनस्य राजा द्रप्सान् ईरयन् विदथेषु इंदुः वि वारं अव्यं समया अति याति ॥ ५६ ॥ इंदुं रिहंति महिषाः अदब्धाः पदे रेभंति कवयः न गृध्राः हिन्वंति धीराः दशऽभिः क्षिपाभिः सं अंजते रूपं अपां रसेन ॥ ५७ ॥ त्वया वयं पवमानेन सोम भरे कृतं वि चिनुयाम शश्वत् तत् नः मित्रः वरुणः ममहंतां अदितिः सिंधुः पृथिवी उत द्यौः ॥ ५८ ॥ २२ ॥

---

॥ ९८ ॥ अभि नः वाजऽसातमं रयिं अर्ष पुरुऽस्पृहं इंदो सहस्रऽभर्णसं तुविऽद्युम्नं विभ्वऽसहं ॥ १ ॥ परि स्यः सुवानः अव्ययं रथे न वर्म अव्यत इंदुः अभि द्रुणा हितः हियानः धाराभिः अक्षाः ॥ २ ॥ परि स्यः सुवानः अक्षाः इंदुः अव्ये मदऽच्युतः धारा यः ऊर्ध्वः अध्वरे भ्राजा न एति गव्यऽयुः ॥ ३ ॥ सः हि त्वं देव शश्वते वसु मर्ताय दाशुषे इंदो सहस्रिणं रयिं शतऽआत्मानं विवाससि ॥ ४ ॥ वयं ते अस्य वृत्रऽहन् वसो वस्वः पुरुऽस्पृहः नि नेदिष्ठऽतमाः इषः स्याम सुम्नस्य अध्रिऽगो ॥ ५ ॥ द्विः यं पंच स्वऽयशसं स्वसारः अद्रिऽसंहतं प्रियं इंद्रस्य काम्यं प्रऽस्नापयंति ऊर्मिणं ॥ ६ ॥ २३ ॥ परि त्यं हर्यतं हरिं बभ्रुं पुनंति वारेण यः देवान् विश्वान् इत् परि मदेन सह गच्छति ॥ ७ ॥ अस्य वः हि अवसा पांतः दक्षऽसाधनं यः सूरिषु श्रवः बृहत् दधे स्वः न हर्यतः ॥ ८ ॥ सः वां यज्ञेषु मानवी इंदुः जनिष्ट रोदसी देवः देवी गिरिऽस्थाः अस्रेधन् तं तुविऽस्वनि ॥ ९ ॥ इंद्राय सोम पातवे वृत्रऽघ्ने परि सिच्यसे नरे च दक्षिणाऽवते देवाय सदनऽसदे ॥ १० ॥ ते प्रत्नासः विऽउष्टिषु सोमाः पवित्रे अक्षरन् अपऽप्रोथंतः सनुतः हुरःऽचितः प्रातः तान् अप्रऽचेतसः ॥ ११ ॥



Digitized by Google

तं सखायः पुरोरुचं यूयं वयं च सूरयः । अश्याम वाजगंध्यं सनेम वाजपस्त्यं ॥ १२ ॥ २४ ॥

॥ ९९ ॥ १–८ रेभसूनू काश्यपौ ॥ पवमानः सोमः ॥ १ बृहती । २–८ अनुष्टुप् ॥

॥९९॥ आ हर्यताय धृष्णवे धनुस्तन्वंति पौंस्यं । शुक्रां वयंत्यसुराय निर्णिजं विपामग्रे महीयुवः ॥१॥ अध क्षपा परिष्कृतो वाजाँ अभि प्र गाहते । यदी विवस्वतो धियो हरिं हिन्वंति यातवे ॥२॥ तमस्य मर्जयामसि मदो य इंद्रपातमः । यं गाव आसभिर्दधुः पुरा नूनं च सूरयः ॥३॥ तं गाथया पुराण्या पुनानमभ्यनूषत । उतो कृपंत धीतयो देवानां नाम बिभ्रतीः ॥४॥ तमुक्षमाणमव्यये वारे पुनंति धर्णसिं । दूतं न पूर्वचित्तय आ शासते मनीषिणः ॥५॥२५॥ स पुनानो मदिंतमः सोमश्चमूषु सीदति । पशौ न रेत आदधत्पतिर्वचस्यते धियः ॥६॥ स मृज्यते सुकर्मभिर्देवो देवेभ्यः सुतः । विदे यदासु संददिर्महीरपो वि गाहते ॥७॥ सुत इंदो पवित्र आ नृभिर्यतो वि नीयसे । इंद्राय मत्सरिंतमश्चमूष्वा नि षीदसि ॥८॥२६॥

॥ १०० ॥ १–९ रेभसूनू काश्यपौ ॥ पवमानः सोमः ॥ अनुष्टुप् ॥

॥१००॥ अभी नवंते अद्रुहः प्रियमिंद्रस्य काम्यं । वत्सं न पूर्व आयुनि जातं रिहंति मातरः ॥१॥ पुनान इंदवा भर सोम द्विबर्हसं रयिं । त्वं वसूनि पुष्यसि विश्वानि दाशुषो गृहे ॥२॥ त्वं धियं मनोयुजं सृजा वृष्टिं न तन्यतुः । त्वं वसूनि पार्थिवा दिव्या च सोम पुष्यसि ॥३॥ परि ते जिग्युषो यथा धारा सुतस्य धावति । रंहमाणा व्य१व्ययं वारं वाजीव सानसिः ॥४॥ क्रत्वे दक्षाय नः कवे पवस्व सोम धारया । इंद्राय पातवे सुतो मित्राय वरुणाय च ॥५॥२७॥ पवस्व वाजसातमः पवित्रे धारया सुतः । इंद्राय सोम विष्णवे



Digitized by Google

तं सखायः पुरःऽरुचं यूयं वयं च सूरयः अश्याम वाजऽगंध्यं सनेम वाजऽपस्त्यं ॥ १२ ॥ २४ ॥

---

॥ ९९ ॥ आ हर्यताय धृष्णवे धनुः तन्वंति पौंस्यं शुक्रां वयंति असुराय निःऽनिजं विपां अग्रे महीयुवः ॥ १ ॥ अध क्षपा परिऽकृतः वाजान् अभि प्र गाहते यदि विवस्वतः धियः हरिं हिन्वंति यातवे ॥ २ ॥ तं अस्य मर्जयामसि मदः यः इंद्रऽपातमः यं गावः आसऽभिः दधुः पुरा नूनं च सूरयः ॥ ३ ॥ तं गाथया पुराण्या पुनानं अभि अनूषत उतो कृपंत धीतयः देवानां नाम बिभ्रतीः ॥ ४ ॥ तं उक्षमाणं अव्यये वारे पुनंति धर्णसिं दूतं न पूर्वऽचित्तये आ शासते मनीषिणः ॥ ५ ॥ २५ ॥ सः पुनानः मदिन्ऽतमः सोमः चमूषु सीदति पशौ न रेतः आऽदधत् पतिः वचस्यते धियः ॥ ६ ॥ सः मृज्यते सुकर्मऽभिः देवः देवेभ्यः सुतः विदे यत् आसु संऽददिः महीः अपः विगाहते ॥ ७ ॥ सुतः इंदो इति पवित्रे आ नृऽभिः यतः वि नीयसे इंद्राय मत्सरिन्ऽतमः चमूषु आ नि सीदसि ॥ ८ ॥ २६ ॥

---

॥ १०० ॥ अभि नवंते अद्रुहः प्रियं इंद्रस्य काम्यं वत्सं न पूर्वे आयुनि जातं रिहंति मातरः ॥ १ ॥ पुनानः इंदो इति आ भर सोम द्विऽबर्हसं रयिं त्वं वसूनि पुष्यसि विश्वानि दाशुषः गृहे ॥ २ ॥ त्वं धियं मनःऽयुजं सृज वृष्टिं न तन्यतुः त्वं वसूनि पार्थिवा दिव्या च सोम पुष्यसि ॥ ३ ॥ परि ते जिग्युषः यथा धारा सुतस्य धावति रंहमाणा वि अव्ययं वारं वाजीऽइव सानसिः ॥ ४ ॥ क्रत्वे दक्षाय नः कवे पवस्व सोम धारया इंद्राय पातवे सुतः मित्राय वरुणाय च ॥ ५ ॥ २७ ॥ पवस्व वाजऽसातमः पवित्रे धारया सुतः इंद्राय सोम विष्णवे



Digitized by Google

देवेभ्यो मधुमत्तमः ॥६॥ त्वां रिहंति मातरो हरिं पवित्रे अद्रुहः।
वत्सं जातं न धेनवः पवमान विधर्मणि ॥७॥ पवमान महि श्रव-
श्चित्रेभिर्यासि रश्मिभिः। शर्धन्तमांसि जिघ्नसे विश्वानि दाशुषो
गृहे ॥८॥ त्वं द्यां च महिव्रत पृथिवीं चाति जभ्रिषे। प्रति द्रापिम-
मुंचथाः पवमान महित्वना ॥ ९ ॥ २८ ॥ ४ ॥

---

॥ १०१ ॥ १–३ अंधीगुः श्यावाश्विः। ४–६ ययातिर्नाहुषः। ७–९ नहुषो मानवः। १०–१२ मनुः सांवरणः। १३–१६ प्रजापतिः ॥ पवमानः सोमः ॥ १. ४–१६ अनुष्टुप्। २. ३ गायत्री ॥

॥१०१॥ पुरोजिती वो अंधसः सुताय मादयित्नवे। अप श्वानं
श्नथिष्टन सखायो दीर्घजिह्व्यं ॥१॥ यो धारया पावकया परिप्रस्यं-
दते सुतः। इंदुरश्वो न कृत्व्यः ॥२॥ तं दुरोषमभी नरः सोमं विश्वाच्या
धिया। यज्ञं हिन्वंत्यद्रिभिः ॥३॥ सुतासो मधुमत्तमाः सोमा इंद्राय
मंदिनः। पवित्रवंतो अक्षरन्देवान्गच्छंतु वो मदाः ॥४॥ इंदुरिं-
द्राय पवत इति देवासो अब्रुवन्। वाचस्पतिर्मखस्यते विश्वस्ये-
शान ओजसा ॥५॥१॥ सहस्रधारः पवते समुद्रो वाचमीङ्खयः।
सोमः पती रयीणां सखेंद्रस्य दिवेदिवे ॥६॥ अयं पूषा रयिर्भगः
सोमः पुनानो अर्षति। पतिर्विश्वस्य भूमनो व्यख्यद्रोदसी उभे
॥७॥ समु प्रिया अनूषत गावो मदाय घृष्वयः। सोमासः कृण्वते
पथः पवमानास इंदवः ॥८॥ य ओजिष्ठस्तमा भर पवमान श्रवा-
य्यं। यः पंच चर्षणीरभि रयिं येन वनामहे ॥९॥ सोमाः पवंत
इंदवोऽस्मभ्यं गातुवित्तमाः। मित्राः सुवाना अरेपसः स्वाध्यः
स्वर्विदः ॥१०॥२॥ सुष्वाणासो व्यद्रिभिश्चिताना गोरधि त्वचि।
इषमस्मभ्यमभितः समस्वरन्वसुविदः ॥ ११ ॥ एते पूता विप-
श्चितः सोमासो दध्याशिरः। सूर्यासो न दर्शतासो जिगत्नवो
ध्रुवा घृते ॥१२॥ प्र सुन्वानस्यांधसो मर्तो न वृत तद्वचः। अप



Digitized by Google

देवेभ्यः मधुमत्ऽतमः ॥६॥ त्वां रिहंति मातरः हरिं पवित्रे अद्रुहः वत्सं जातं न धेनवः पवमान विऽधर्मणि॥७॥ पवमान महि श्रवः चित्रेभिः यासि रश्मिऽभिः शर्धन् तमांसि जिघ्नसे विश्वानि दाशुषः गृहे ॥८॥ त्वं द्यां च महिऽव्रत पृथिवीं च अति जभ्रिषे प्रति द्रापिं अमुंचथाः पवमान महिऽत्वना ॥ ९ ॥ २८ ॥ ४ ॥

---

॥१०१॥ पुरःऽजिती वः अंधसः सुताय मादयित्नवे अप श्वानं श्नथिष्टन सखायः दीर्घऽजिह्व्यं ॥१॥ यः धारया पावकया परिऽप्रस्यंदते सुतः इंदुः अश्वः न कृत्व्यः ॥२॥ तं दुरोषं अभि नरः सोमं विश्वाच्या धिया यज्ञं हिन्वंति अद्रिऽभिः ॥३॥ सुतासः मधुमत्ऽतमाः सोमाः इंद्राय मंदिनः पवित्रऽवंतः अक्षरन् देवान् गच्छंतु वः मदाः ॥४॥ इंदुः इंद्राय पवते इति देवासः अब्रुवन् वाचः पतिः मखस्यते विश्वस्य ईशानः ओजसा ॥५॥१॥ सहस्रऽधारः पवते समुद्रः वाचंऽईखयः सोमः पतिः रयीणां सखा इंद्रस्य दिवेऽदिवे ॥६॥ अयं पूषा रयिः भगः सोमः पुनानः अर्षति पतिः विश्वस्य भूमनः वि अख्यत् रोदसी उभे ॥७॥ सं ऊं प्रियाः अनूषत गावः मदाय घृष्वयः सोमासः कृण्वते पथः पवमानासः इंदवः ॥८॥ यः ओजिष्ठः तं आ भर पवमान श्रवाय्यं यः पंच चर्षणीः अभि रयिं येन वनामहे ॥९॥ सोमाः पवंते इंदवः अस्मभ्यं गातुवित्ऽतमाः मित्राः सुवानाः अरेपसः सुऽआध्यः स्वःऽविदः ॥१०॥२॥ सुऽस्वानासः वि अद्रिऽभिः चिताना: गोः अधि त्वचि इषं अस्मभ्यं अभितः सं अस्वरन् वसुऽविदः ॥११॥ एते पूताः विपःऽचितः सोमासः दधिऽआशिरः सूर्यासः न दर्शतासः जिगत्नवः ध्रुवाः घृते ॥१२॥ प्र सुन्वानस्य अंधसः मर्तः न वृत तत् वचः अप



Digitized by Google

ध्वानमराधसं हता मखं न भृगवः ॥१३॥ आ जामिरत्के अव्यत भुजे न पुत्र ओण्योः। सरज्जारो न योषणां वरो न योनिमासदं ॥१४॥ स वीरो दक्षसाधनो वि यस्तस्तंभ रोदसी। हरिः पवित्रे अव्यत वेधा न योनिमासदं ॥१५॥ अव्यो वारेभिः पवते सोमो गव्ये अधि त्वचि। कनिक्रदद्वृषा हरिरिंद्रस्याभ्येति निष्कृतं ॥ १६ ॥ ३ ॥

---

॥ १०२ ॥ १—८ त्रितः ॥ पवमानः सोमः ॥ उष्णिक् ॥

॥ १०२ ॥ क्राणा शिशुर्महीनां हिन्वन्नृतस्य दीधितिं। विश्वा परि प्रिया भुवदध द्विता ॥ १ ॥ उप त्रितस्य पाष्यो३रभक्त यद्गुहा पदं। यज्ञस्य सप्त धामभिरध प्रियं ॥ २ ॥ त्रीणि त्रितस्य धारया पृष्ठेष्वेरया रयिं। मिमीते अस्य योजना वि सुक्रतुः ॥ ३ ॥ जज्ञानं सप्त मातरो वेधामशासत श्रिये। अयं ध्रुवो रयीणां चिकेत यत् ॥ ४ ॥ अस्य व्रते सजोषसो विश्वे देवासो अद्रुहः। स्पार्हा भवंति रंतयो जुषंत यत् ॥ ५ ॥ ४ ॥ यमी गर्भमृतावृधो दृशे चारुमजीजनन्। कविं मंहिष्ठमध्वरे पुरुस्पृहं ॥ ६ ॥ समीचीने अभि त्मना यह्वी ऋतस्य मातरा। तन्वाना यज्ञमानुषग्यदंजते ॥ ७ ॥ क्रत्वा शुक्रेभिरक्षभिर्ऋणोरप व्रजं दिवः। हिन्वन्नृतस्य दीधितिं प्राध्वरे ॥ ८ ॥ ५ ॥

---

॥ १०३ ॥ १—६ द्वित आप्त्यः ॥ पवमानः सोमः ॥ उष्णिक् ॥

॥१०३॥ प्र पुनानाय वेधसे सोमाय वच उद्यतं। भृतिं न भरा मतिभिर्जुजोषते ॥ १ ॥ परि वाराण्यव्यया गोभिरंजानो अर्षति। त्री षधस्था पुनानः कृणुते हरिः ॥ २ ॥ परि कोशं मधुश्चुतमव्यये वारे अर्षति। अभि वाणीर्ऋषीणां सप्त



Digitized by Google

भानं अराधसं हत मखं न भृगवः ॥१३॥ आ जामिः अत्के अव्यत भुजे न पुत्रः ओण्योः सरत् जारः न योषणां वरः न योनिं आऽसदं ॥१४॥ सः वीरः दक्षऽसाधनः वि यः तस्तंभ रोदसी इति हरिः पवित्रे अव्यत वेधाः न योनिं आऽसदं ॥१५॥ अव्यः वारेभिः पवते सोमः गव्ये अधि त्वचि कनिक्रदत् वृषा हरिः इंद्रस्य अभि एति निःऽकृतं ॥ १६ ॥ ३ ॥

॥ १०२ ॥ क्राणा शिशुः महीनां हिन्वन् ऋतस्य दीधितिं विश्वा परि प्रिया भुवत् अध द्विता ॥१॥ उप त्रितस्य पाष्योः अभक्त यत् गुहा पदं यज्ञस्य सप्त धामऽभिः अध प्रियं ॥२॥ त्रीणि त्रितस्य धारया पृष्ठेषु आ ईरय रयिं मिमीते अस्य योजना वि सुऽक्रतुः ॥ ३ ॥ जज्ञानं सप्त मातरः वेधां अशासत श्रिये अयं ध्रुवः रयीणां चिकेत यत् ॥४॥ अस्य व्रते सऽजोषसः विश्वे देवासः अद्रुहः स्पार्हाः भवंति रंतयः जुषंत यत् ॥५॥४॥ यं ईं गर्भं ऋतऽवृधः दृशे चारुं अजीजनन् कविं मंहिष्ठं अध्वरे पुरुऽस्पृहं ॥ ६ ॥ संऽईचीने इति अभि त्मना यह्वी इति ऋतस्य मातरा तन्वानाः यज्ञं आनुषक् यत् अंजते ॥७॥ क्रत्वा शुक्रेभिः अक्षऽभिः ऋणोः अप व्रजं दिवः हिन्वन् ऋतस्य दीधितिं प्र अध्वरे ॥ ८ ॥ ५ ॥

॥१०३॥ प्र पुनानाय वेधसे सोमाय वचः उतऽयतं भृतिं न भर मतिऽभिः जुजोषते ॥१॥ परि वाराणि अव्यया गोभिः अंजानः अर्षति त्री सधऽस्था पुनानः कृणुते हरिः ॥२॥ परि कोशं मधुऽश्चुतं अव्यये वारे अर्षति अभि वाणीः ऋषीणां सप्त



Digitized by Google

नूंषत ॥३॥ परि गोता मतीनां विश्वदेवो अदाभ्यः। सोमः पुना-
नश्वम्वोर्विशद्धरिः ॥४॥ परि दैवीरनु स्वधा इंद्रेण याहि सरथं।
पुनानो वाघद्वाघद्भिरमर्त्यः ॥५॥ परि सप्तिर्न वाजयुर्देवो दे-
वेभ्यः सुतः। व्यानशिः पवमानो वि धावति ॥६॥६॥६॥

॥ १०४ ॥ १–६ पर्वतनारदौ द्वे शिखंडिन्यौ वा काश्यपावप्सरसौ ॥ पवमानः सोमः ॥ उष्णिक् ॥

॥१०४॥ सखाय आ नि षीदत पुनानाय प्र गायत। शिशुं
न यज्ञैः परि भूषत श्रिये ॥१॥ समी वत्सं न मातृभिः सृजता
गयसाधनं। देवाव्यं१मदमभि द्विशवसं ॥२॥ पुनाता दक्षसा-
धनं यथा शर्धाय वीतये। यथा मित्राय वरुणाय शंतमः
॥३॥ अस्मभ्यं त्वा वसुविदमभि वाणीरनूषत। गोभिष्टे वर्ण-
मभि वासयामसि ॥४॥ स नो मदानां पत इंदो देवप्सरा
असि। सखेव सख्ये गातुवित्तमो भव ॥५॥ सनेमि कृध्य१-
स्मदा रक्षसं कं चिदत्रिणं। अपादेवं द्वयुमंहो युयोधि नः
॥६॥७॥

॥ १०५ ॥ १–६ पर्वतनारदौ ॥ पवमानः सोमः ॥ उष्णिक् ॥

॥१०५॥ तं वः सखायो मदाय पुनानमभि गायत। शिशुं न
यज्ञैः स्वदयंत गूर्तिभिः ॥१॥ सं वत्स इव मातृभिरिंदुर्हिन्वानो
अज्यते। देवावीर्मदो मतिभिः परिष्कृतः ॥२॥ अयं दक्षाय
साधनोऽयं शर्धाय वीतये। अयं देवेभ्यो मधुमत्तमः सुतः
॥३॥ गोमन्न इंदो अश्ववत्सुतः सुदक्ष धन्व। शुचिं ते वर्णमधि
गोषु दीधरं ॥४॥ स नो हरीणां पत इंदो देवप्सरस्तमः। सखेव
सख्ये नर्यो रुचे भव ॥५॥ सनेमि त्वमस्मदाँ अदेवं कं चिद-
त्रिणं। साह्वाँ इंदो परि बाधो अप द्वयुं ॥६॥८॥



Digitized by Google

नूषत ॥३॥ परि नेता मतीनां विश्वऽदेवः अदाभ्यः सोमः पुनानः चम्वोः विशत् हरिः ॥४॥ परि देवीः अनु स्वधाः इंद्रेण याहि सऽरथं पुनानः वाघत् वाघतऽभिः अमर्त्यः ॥ ५ ॥ परि सप्तिः न वाजऽयुः देवः देवेभ्यः सुतः विऽआनशिः पवमानः वि धावति ॥ ६ ॥ ६ ॥ ६ ॥

॥ १०४ ॥ सखायः आ नि सीदत पुनानाय प्र गायत शिशुं न यज्ञैः परि भूषत श्रिये ॥ १ ॥ सं ईं वत्सं न मातृऽभिः सृजत गयऽसाधनं देवऽअव्यं मदं अभि द्विऽशवसं ॥२॥ पुनात दक्षऽसाधनं यथा शर्धाय वीतये यथा मित्राय वरुणाय शंऽतमः ॥३ ॥ अस्मभ्यं त्वा वसुऽविदं अभि वाणीः अनूषत गोभिः ते वर्णं अभि वासयामसि ॥ ४ ॥ सः नः मदानां पते इंदो देवऽप्सराः असि सखाऽइव सख्ये गातुवित्ऽतमः भव ॥५॥ सनेमि कृधि अस्मत् आ रक्षसं कं चित् अत्रिणं अप अदेवं द्वयुं अंहः युयोधि नः ॥ ६ ॥ ७ ॥

॥१०५॥ तं वः सखायः मदाय पुनानं अभि गायत शिशुं न यज्ञैः स्वदयंत गूर्तिऽभिः ॥१॥ सं वत्सःऽइव मातृऽभिः इंदुः हिन्वानः अज्यते देवऽअवीः मदः मतिऽभिः परिऽकृतः ॥२॥ अयं दक्षाय साधनः अयं शर्धाय वीतये अयं देवेभ्यः मधुमत्ऽतमः सुतः ॥३॥ गोऽमत् नः इंदो अश्वऽवत् सुतः सुऽदक्ष धन्व शुचिं ते वर्णं अधि गोषु दीधरं ॥४॥ सः नः हरीणां पते इंदो देवप्सरःऽतमः सखाऽइव सख्ये नर्यः रुचे भव ॥५॥ सनेमि त्वं अस्मत् आ अदेवं कं चित् अत्रिणं सह्वान् इंदो परि बाधः अप द्वयुं ॥ ६ ॥ ८ ॥



Digitized by Google

॥ १०६ ॥ १-३ अग्निश्चाक्षुषः । ४-६ चक्षुर्मानवः । ७-९ मनुराप्सवः । १०-१४ अग्निः ॥ पवमानः सोमः ॥ उष्णिक् ॥

॥१०६॥ इंद्रमच्छ सुता इमे वृषणं यंतु हरयः। श्रुष्टी जातास इंदवः स्वर्विदः॥१॥ अयं भराय सानसिरिंद्राय पवते सुतः। सोमो जैत्रस्य चेतति यथा विदे॥२॥ अस्येदिंद्रो मदेष्वा ग्राभं गृभ्णीत सानसिं। वज्रं च वृषणं भरत्समप्सुजित्॥३॥ प्र धन्वा सोम जागृविरिंद्रायेंदो परि स्रव। द्युमंतं शुष्ममा भरा स्वर्विदं॥४॥ इंद्राय वृषणं मदं पवस्व विश्वदर्शतः। सहस्रयामा पथिकृद्विचक्षणः॥५॥९॥ अस्मभ्यं गातुवित्तमो देवेभ्यो मधुमत्तमः। सहस्रं याहि पथिभिः कनिक्रदत्॥६॥ पवस्व देववीतय इंदो धाराभिरोजसा। आ कलशं मधुमान्सोम नः सदः॥७॥ तव द्रप्सा उदप्रुत इंद्रं मदाय वावृधुः। त्वां देवासो अमृताय कं पपुः॥८॥ आ नः सुतास इंदवः पुनाना धावता रयिं। वृष्टिद्यावो रीत्यापः स्वर्विदः॥९॥ सोमः पुनान ऊर्मिणाव्यो वारं वि धावति। अग्रे वाचः पवमानः कनिक्रदत्॥१०॥१०॥ धीभिर्हिन्वंति वाजिनं वने क्रीळंतमत्यविं। अभि त्रिपृष्ठं मतयः समस्वरन्॥११॥ असर्जि कलशाँ अभि मीळ्हे सप्तिर्न वाजयुः। पुनानो वाचं जनयन्नसिष्यदत्॥१२॥ पवते हर्यतो हरिरति ह्वरांसि रंह्या। अभ्यर्षन्स्तोतृभ्यो वीरवद्यशः॥१३॥ अया पवस्व देवयुर्मधोर्धारा असृक्षत। रेभन्पवित्रं पर्येषि विश्वतः॥ १४ ॥ ११ ॥

---

॥ १०७ ॥ १-२६ सप्तर्षयः ॥ पवमानः सोमः ॥ १. ४. ६. ८-१०. १२. १४. १७. १९. २१. २३. २५. बृहती । २. ५. ७. ११. १३. १५. १८. २०. २२. २४. २६ सतोबृहती । ३. १६ द्विपदा ॥

॥ १०७ ॥ परीतो षिंचता सुतं सोमो य उत्तमं हविः। दधन्वाँ यो नर्यो अप्स्वं१तरा सुषाव सोममद्रिभिः ॥ १ ॥ नूनं पुनानोऽविभिः परि स्रवादब्धः सुरभिंतरः। सुते



Digitized by Google

॥१०६॥ इंद्रं अच्छ सुताः इमे वृषणं यंतु हरयः श्रुष्टी जातासः इंदवः स्वःऽविदः ॥१॥ अयं भराय सानसिः इंद्राय पवते सुतः सोमः जैत्रस्य चेतति यथा विदे ॥२॥ अस्य इत् इंद्रः मदेषु आ ग्राभं गृभ्णीत सानसिं वज्रं च वृषणं भरत् सं अप्सुऽजित् ॥३॥ प्र धन्व सोम जागृविः इंद्राय इंदो इति परि स्रव द्युऽमंतं शुष्मं आ भर स्वःऽविदं ॥४॥ इंद्राय वृषणं मदं पवस्व विश्वऽदर्शतः सहस्रऽयामा पथिऽकृत् विऽचक्षणः ॥५॥९॥ अस्मभ्यं गातुऽवित्ऽतमः देवेभ्यः मधुमत्ऽतमः सहस्रं याहि पथिऽभिः कनिक्रदत् ॥६॥ पवस्व देवऽवीतये इंदो इति धाराभिः ओजसा आ कलशं मधुऽमान् सोम नः सदः ॥७॥ तव द्रप्साः उदऽप्रुतः इंद्रं मदाय वावृधुः त्वां देवासः अमृताय कं पपुः ॥८॥ आ नः सुतासः इंदवः पुनानाः धावत रयिं वृष्टिऽद्यावः रीतिऽआपः स्वःऽविदः ॥९॥ सोमः पुनानः ऊर्मिणा अव्यः वारं वि धावति अग्रे वाचः पवमानः कनिक्रदत् ॥१०॥१०॥ धीभिः हिन्वंति वाजिनं वने क्रीळंतं अतिऽअविं अभि त्रिऽपृष्ठं मतयः सं अस्वरन् ॥११॥ असर्जि कलशान् अभि मीळ्हे सप्तिः न वाजऽयुः पुनानः वाचं जनयन् असिस्यदत् ॥१२॥ पवते हर्यतः हरिः अति ह्वरांसि रंह्या अभिऽअर्षन् स्तोतृऽभ्यः वीरऽवत् यशः ॥१३॥ अया पवस्व देवऽयुः मधोः धाराः असृक्षत रेभन् पवित्रं परि एषि विश्वतः ॥१४॥११॥

---

॥१०७॥ परि इतः सिंचत सुतं सोमः यः उत्ऽतमं हविः दधन्वान् यः नर्यः अप्सु अंतः आ सुषाव सोमं अद्रिऽभिः ॥१॥ नूनं पुनानः अविऽभिः परि स्रव अदब्धः सुरभिऽतरः सुते



Digitized by Google

चिन्वाप्सु मंदामो अंधसा श्रीणंतो गोभिरुत्तरं ॥ २ ॥ परि सुवानश्चक्षसे देवमादनः क्रतुरिंदुर्विचक्षणः ॥ ३ ॥ पुनानः सोम धारयापो वसानो अर्षसि । आ रत्नधा योनिमृतस्य सीदस्युत्सो देव हिरण्ययः ॥ ४ ॥ दुहान ऊधर्दिव्यं मधु प्रियं प्रत्नं सधस्थमासदत् । आपृच्छ्यं धरुणं वाज्यर्षति नृभिर्धूतो विचक्षणः ॥ ५ ॥ १२ ॥ पुनानः सोम जागृविरव्यो वारे परि प्रियः । त्वं विप्रो अभवोऽङ्गिरस्तमो मध्वा यज्ञं मिमिक्ष नः ॥ ६ ॥ सोमो मीढ्वान्पवते गातुवित्तम ऋषिर्विप्रो विचक्षणः । त्वं कविरभवो देववीतम आ सूर्यं रोहयो दिवि ॥ ७ ॥ सोम उ षुवाणः सोतृभिरधि ष्णुभिरवीनां । अश्वयेव हरिता याति धारया मंद्रया याति धारया ॥ ८ ॥ अनूपे गोमान्गोभिरक्षाः सोमो दुग्धाभिरक्षाः । समुद्रं न संवरणान्यग्मन्मंदी मदाय तोशते ॥ ९ ॥ आ सोम सुवानो अद्रिभिस्तिरो वाराण्यव्यया । जनो न पुरि चम्वोर्विशद्धरिः सदो वनेषु दधिषे ॥ १० ॥ १३ ॥ स मामृजे तिरो अण्वानि मेष्यो मीळ्हे सप्तिर्न वाजयुः । अनुमाद्यः पवमानो मनीषिभिः सोमो विप्रेभिर्ऋक्वभिः ॥ ११ ॥ प्र सोम देववीतये सिंधुर्न पिप्ये अर्णसा । अंशोः पयसा मदिरो न जागृविरच्छा कोशं मधुश्चुतं ॥ १२ ॥ आ हर्यतो अर्जुने अत्के अव्यत प्रियः सूनुर्न मर्ज्यः । तमीं हिन्वंत्यपसो यथा रथं नदीष्वा गभस्त्योः ॥ १३ ॥ अभि सोमास आयवः पवंते मद्यं मदं । समुद्रस्याधि विष्टपि मनीषिणो मत्सरासः स्वर्विदः ॥ १४ ॥ तरत्समुद्रं पवमान ऊर्मिणा राजा देव ऋतं बृहत् । अर्षन्मित्रस्य वरुणस्य धर्मणा प्र हिन्वान ऋतं बृहत् ॥ १५ ॥ १४ ॥ नृभिर्येमानो हर्यतो विचक्षणो राजा देवः समुद्रियः ॥ १६ ॥



Digitized by Google

चित् त्वा अप्ऽसु मदामः अंधसा श्रीणंतः गोभिः उत्ऽतरं ॥२॥
परि सुवानः चक्षसे देवऽमादनः क्रतुः इंदुः विऽचक्षणः ॥३॥ पु-
नानः सोम धारया अपः वसानः अर्षसि आ रत्नऽधाः योनिं
ऋतस्य सीदसि उत्सः देव हिरण्ययः ॥४॥ दुहानः ऊधः दिव्यं मधु
प्रियं प्रत्नं सधऽस्थं आ असदत् आऽपृच्छ्यं धरुणं वाजी अर्षति
नृऽभिः धूतः विऽचक्षणः ॥५॥१२॥ पुनानः सोम जागृविः अव्यः
वारे परि प्रियः त्वं विप्रः अभवः अंगिरःऽतमः मध्वा यज्ञं मिमिक्ष
नः ॥६॥ सोमः मीढ्वान् पवते गातुवित्ऽतमः ऋषिः विप्रः वि-
ऽचक्षणः त्वं कविः अभवः देवऽवीतमः आ सूर्यं रोहयः दिवि ॥७॥
सोमः ऊं इति सुवानः सोतृऽभिः अधि स्नुऽभिः अवीनां अश्वयाऽइव
हरिता याति धारया मंद्रया याति धारया ॥८॥ अनूपे गोऽमान्
गोभिः अक्षारिति सोमः दुग्धाभिः अक्षारिति समुद्रं न संऽवरणानि
अग्मन् मंदी मदाय तोशते ॥९॥ आ सोम सुवानः अद्रिऽभिः तिरः
वाराणि अव्यया जनः न पुरि चम्वोः विशत् हरिः सदः वनेषु
दधिषे ॥१०॥१३॥ सः ममृजे तिरः अण्वानि मेष्यः मीळ्हे सप्तिः न
वाजऽयुः अनुऽमाद्यः पवमानः मनीषिऽभिः सोमः विप्रेभिः
ऋक्वऽभिः ॥११॥ प्र सोम देवऽवीतये सिंधुः न पिप्ये अर्णसा अंशोः
पयसा मदिरः न जागृविः अच्छ कोशं मधुऽश्चुतं ॥१२॥ आ हर्यतः
अर्जुने अत्के अव्यत प्रियः सूनुः न मर्ज्यः तं ईं इति हिन्वंति अपसः यथा
रथं नदीषु आ गभस्त्योः ॥१३॥ अभि सोमासः आयवः पवंते मद्यं
मदं समुद्रस्य अधि विष्टपि मनीषिणः मत्सरासः स्वःऽविदः
॥१४॥ तरत् समुद्रं पवमानः ऊर्मिणा राजा देवः ऋतं बृहत् अर्षत्
मित्रस्य वरुणस्य धर्मणा प्र हिन्वानः ऋतं बृहत् ॥१५॥१४॥ नृ-
ऽभिः येमानः हर्यतः विऽचक्षणः राजा देवः समुद्रियः ॥१६॥



Digitized by Google

इंद्राय पवते मदः सोमो मरुत्वते सुतः । सहस्रधारो अत्यव्यमर्षति
तमी मृजंत्यायवः ॥१७॥ पुनानश्चमू जनयन्मतिं कविः सोमो
देवेषु रण्यति । अपो वसानः परि गोभिरुत्तरः सीदन्वनेष्वव्यत
॥१८॥ तवाहं सोम रारण सख्य इंदो दिवेदिवे । पुरूणि बभ्रो नि
चरंति मामव परिधीँरति ताँ इहि ॥१९॥ उताहं नक्तमुत सोम ते
दिवा सख्याय बभ्र ऊधनि । घृणा तपंतमति सूर्यं परः शकुना इव
पप्तिम ॥२०॥१५॥ मृज्यमानः सुहस्त्य समुद्रे वाचमिन्वसि । रयिं
पिशंगं बहुलं पुरुस्पृहं पवमानाभ्यर्षसि ॥२१॥ मृजानो वारे पव-
मानो अव्यये वृषाव चक्रदो वने । देवानां सोम पवमान निष्कृतं
गोभिरंजानो अर्षसि ॥२२॥ पवस्व वाजसातयेऽभि विश्वानि
काव्या । त्वं समुद्रं प्रथमो वि धारयो देवेभ्यः सोम मत्सरः ॥२३॥ स
तू पवस्व परि पार्थिवं रजो दिव्या च सोम धर्मभिः । त्वां विप्रासो
मतिभिर्विचक्षण शुभ्रं हिन्वंति धीतिभिः ॥२४॥ पवमाना असृ-
क्षत पवित्रमति धारया । मरुत्वंतो मत्सरा इंद्रिया हया मेधामभि
प्रयांसि च ॥२५॥ अपो वसानः परि कोशमर्षतींदुर्हियानः सोतृ-
भिः । जनयञ्ज्योतिर्मंदना अवीवशद्गाः कृण्वानो न निर्णिजं
॥ २६ ॥ १६ ॥

---

॥ १०८ ॥ १. २ गौरिवीतिः । ३. १४–१६ शक्तिः । ४. ५ ऊरुः । ६. ७ ऋजिश्वा ।
८. ९ ऊर्ध्वसद्मा । १०. ११ कृतयशाः । १२. १३ ऋणंचयः ॥ पवमानः सोमः ॥
१. ३. ५. ७. ९. ११. १५ ककुप् । २. ४. ६. ८. १०. १२. १४. १६ सतोबृहती ।
१३ गायत्री यवमध्या ॥

॥१०८॥ पवस्व मधुमत्तम इंद्राय सोम क्रतुवित्तमो मदः ।
महि द्युक्षतमो मदः ॥१॥ यस्य ते पीत्वा वृषभो वृषायते-
ऽस्य पीता स्वर्विदः । स सुप्रकेतो अभ्यक्रमीदिषोऽच्छा
वाजं नैतशः ॥२॥ त्वं ह्यं१ग दैव्या पवमान जनिमानि द्यु-



Digitized by Google

इंद्राय पवते मदः सोमः मरुत्वते सुतः सहस्रऽधारः अति अव्यं अर्षति तं ईं मृजंति आयवः ॥१७॥ पुनानः चमू जनयन् मतिं कविः सोमः देवेषु रण्यति अपः वसानः परि गोभिः उत्ऽतरः सीदन् वनेषु अव्यत ॥१८॥ तव अहं सोम रारण सख्ये इंदो दिवेऽदिवे पुरूणि बभ्रो नि चरंति मां अव परिऽधीन् अति तान् इहि ॥१९॥ उत अहं नक्तं उत सोम ते दिवा सख्याय बभ्रो ऊधनि घृणा तपंतं अति सूर्यं परः शकुनाःऽइव पप्तिम ॥२०॥१५॥ मृज्यमानः सुऽहस्त्य समुद्रे वाचं इन्वसि रयिं पिशंगं बहुलं पुरुऽस्पृहं पवमान अभि अर्षसि ॥२१॥ मृजानः वारे पवमानः अव्यये वृषा अव चक्रदः वने देवानां सोम पवमान निःऽकृतं गोभिः अंजानः अर्षसि ॥२२॥ पवस्व वाजऽसातये अभि विश्वानि काव्या त्वं समुद्रं प्रथमः वि धारयः देवेभ्यः सोम मत्सरः ॥२३॥ सः तु पवस्व परि पार्थिवं रजः दिव्या च सोम धर्मऽभिः त्वां विप्रासः मतिऽभिः विऽचक्षण शुभ्रं हिन्वंति धीतिऽभिः ॥२४॥ पवमानाः असृक्षत पवित्रं अति धारया मरुत्वंतः मत्सराः इंद्रियाः हयाः मेधां अभि प्रयांसि च ॥२५॥ अपः वसानः परि कोशं अर्षति इंदुः हियानः सोतृऽभिः जनयन् ज्योतिः मंदनाः अवीवशत् गाः कृण्वानः न निःऽनिजं ॥२६॥१६॥

---

॥१०८॥ पवस्व मधुमत्ऽतमः इंद्राय सोम क्रतुवित्ऽतमः मदः महिं द्युक्षऽतमः मदः ॥१॥ यस्य ते पीत्वा वृषभः वृषऽयते अस्य पीता स्वःऽविदः सः सुऽप्रकेतः अभि अक्रमीत् इषः अच्छ वाजं न एतशः ॥२॥ त्वं हि अंग दैव्या पवमान जनिमानि द्यु-



Digitized by Google

मत्तमः। अमृतत्वाय घोषयः ॥३॥ येना नवग्वो दध्यङ्ङपोर्णुते येन विप्रास आपिरे। देवानां सुम्ने अमृतस्य चारुणो येन श्रवांस्यानशुः ॥४॥ एष स्य धारया सुतोऽव्यो वारेभिः पवते मदिंतमः। क्रीळन्नूर्मिरपामिव ॥५॥१७॥ य उस्रिया अप्या अंतरश्मनो निर्गा अकृंतदोजसा। अभि व्रजं तत्निषे गव्यमश्व्यं वर्मीव धृष्णवा रुज ॥६॥ आ सोता परि षिंचताश्वं न स्तोममप्तुरं रजस्तुरं। वनक्रक्षमुदप्रुतं ॥७॥ सहस्रधारं वृषभं पयोवृधं प्रियं देवाय जन्मने। ऋतेन य ऋतजातो विवावृधे राजा देव ऋतं बृहत् ॥८॥ अभि द्युम्नं बृहद्यश इषस्पते दिदीहि देव देवयुः। वि कोशं मध्यमं युव ॥९॥ आ वच्यस्व सुदक्ष चम्वोः सुतो विशां वह्निर्न विश्पतिः। वृष्टिं दिवः पवस्व रीतिमपां जिन्वा गविष्टये धियः ॥१०॥१८॥ एतमु त्यं मदच्युतं सहस्रधारं वृषभं दिवो दुहुः। विश्वा वसूनि बिभ्रतं ॥११॥ वृषा वि जज्ञे जनयन्नमर्त्यः प्रतपञ्ज्योतिषा तमः। स सुष्टुतः कविभिर्निर्णिजं दधे त्रिधात्वस्य दंससा ॥१२॥ स सुन्वे यो वसूनां यो रायामानेता य इळानां। सोमो यः सुक्षितीनां ॥१३॥ यस्य न इंद्रः पिबाद्यस्य मरुतो यस्य वार्यमणा भगः। आ येन मित्रावरुणा करामह एंद्रमवसे महे ॥१४॥ इंद्राय सोम पातवे नृभिर्यतः स्वायुधो मदिंतमः। पवस्व मधुमत्तमः ॥१५॥ इंद्रस्य हार्दि सोमधानमा विश समुद्रमिव सिंधवः। जुष्टो मित्राय वरुणाय वायवे दिवो विष्टंभ उत्तमः ॥१६॥१९॥

---

॥ १०९ ॥ १–२२ अग्नयो धिष्ण्या ऐश्वराः ॥ पवमानः सोमः ॥ द्विपदा ॥

॥१०९॥ परि प्र धन्वेंद्राय सोम स्वादुर्मित्राय पूष्णे भगाय



Digitized by Google

मतऽतमः अमृतऽत्वाय घोषयः ॥३॥ येन नवऽग्वः दध्यङ् अपऽऊर्णुते येन विप्रासः आपिरे देवानां सुम्ने अमृतस्य चारुणः येन श्रवांसि आनशुः ॥४॥ एषः स्यः धारया सुतः अव्यः वारेभिः पवते मदिन्ऽतमः क्रीळन् ऊर्मिः अपांऽइव ॥५॥१७॥ यः उस्रियाः अप्याः अंतः अश्मनः निः गाः अकृंतत् ओजसा अभि व्रजं तत्निषे गव्यं अश्व्यं वर्मीऽइव धृष्णो आ रुज ॥६॥ आ सोत परि सिंचत अश्वं न स्तोमं अप्ऽतुरं रजःऽतुरं वनऽक्रक्षं उदऽप्रुतं ॥७॥ सहस्रऽधारं वृषभं पयःऽवृधं प्रियं देवाय जन्मने ऋतेन यः ऋतऽजातः विऽववृधे राजा देवः ऋतं बृहत् ॥८॥ अभि द्युम्नं बृहत् यशः इषः पते दिदीहि देव देवऽयुः वि कोशं मध्यमं युव ॥९॥ आ वच्यस्व सुऽदक्ष चम्वोः सुतः विशां वह्निः न विश्पतिः वृष्टिं दिवः पवस्व रीतिं अपां जिन्व गोऽइष्टये धियः ॥१०॥१८॥ एतं ऊं त्यं मदऽच्युतं सहस्रऽधारं वृषभं दिवः दुहुः विश्वा वसूनि बिभ्रतं ॥११॥ वृषा वि जज्ञे जनयन् अमर्त्यः प्रऽतपन् ज्योतिषा तमः सः सुऽस्तुतः कविऽभिः निःऽनिजं दधे त्रिऽधातु अस्य दंससा ॥१२॥ सः सुन्वे यः वसूनां यः रायां आऽनेता यः इळानां सोमः यः सुऽक्षितीनां ॥१३॥ यस्य नः इंद्रः पिबात् यस्य मरुतः यस्य वा अर्यमणा भगः आ येन मित्रावरुणा करामहे आ इंद्रं अवसे महे ॥१४॥ इंद्राय सोम पातवे नृऽभिः यतः सुऽआयुधः मदिन्ऽतमः पवस्व मधुमत्ऽतमः ॥१५॥ इंद्रस्य हार्दि सोमऽधानं आ विश समुद्रंऽइव सिंधवः जुष्टः मित्राय वरुणाय वायवे दिवः विष्टंभः उत्ऽतमः ॥१६॥१९॥

---

॥१०९॥ परि प्र धन्व इंद्राय सोम स्वादुः मित्राय पूष्णे भगाय



Digitized by Google

॥१॥ इंद्रस्ते सोम सुतस्य पेयाः क्रत्वे दक्षाय विश्वे च देवाः ॥२॥ एवामृताय महे क्षयाय स शुक्रो अर्ष दिव्यः पीयूषः ॥३॥ पवस्व सोम महान्त्समुद्रः पिता देवानां विश्वाभि धाम ॥४॥ शुक्रः पवस्व देवेभ्यः सोम दिवे पृथिव्यै शं च प्रजायै ॥५॥ दिवो धर्तासि शुक्रः पीयूषः सत्ये विधर्मन्वाजी पवस्व ॥६॥ पवस्व सोम द्युम्नी सुधारो महामवीनामनु पूर्व्यः ॥७॥ नृभिर्येमानो जज्ञानः पूतः क्षरद्विश्वानि मंद्रः स्वर्वित् ॥८॥ इंदुः पुनानः प्रजामुराणः करद्विश्वानि द्रविणानि नः ॥९॥ पवस्व सोम क्रत्वे दक्षायाश्वो न निक्तो वाजी धनाय ॥१०॥२०॥ तं ते सोतारो रसं मदाय पुनंति सोमं महे द्युम्नाय ॥११॥ शिशुं जज्ञानं हरिं मृजंति पवित्रे सोमं देवेभ्य इंदुं ॥१२॥ इंदुः पविष्ट चारुर्मदायापामुपस्थे कविर्भगाय ॥ १३ ॥ बिभर्ति चार्विंद्रस्य नाम येन विश्वानि वृत्रा जघान ॥१४॥ पिबंत्यस्य विश्वे देवासो गोभिः श्रीतस्य नृभिः सुतस्य ॥१५॥ प्र सुवानो अक्षाः सहस्रधारस्तिरः पवित्रं वि वारमव्यं ॥१६॥ स वाज्यक्षाः सहस्ररेता अद्भिर्मृजानो गोभिः श्रीणानः ॥१७॥ प्र सोम याहींद्रस्य कुक्षा नृभिर्येमानो अद्रिभिः सुतः ॥१८॥ असर्जि वाजी तिरः पवित्रमिंद्राय सोमः सहस्रधारः ॥१९॥ अंजंत्येनं मध्वो रसेनेंद्राय वृष्ण इंदुं मदाय ॥२०॥ देवेभ्यस्त्वा वृथा पाजसेऽपो वसानं हरिं मृजंति ॥ २१ ॥ इंदुरिंद्राय तोशते नि तोशते श्रीणन्नुग्रो रिणन्नपः ॥ २२ ॥ २१ ॥

---

॥ ११० ॥ १—१२ त्र्यरुणत्रसदस्यू । पवमानः सोमः । १—३ अनुष्टुप्पिपीलिकमध्या । ४—९ ऊर्ध्वबृहती । १०—१२ विराट् ॥

॥११०॥ पर्यू षु प्र धन्व वाजसातये परि वृत्राणि सक्षणिः । द्विषस्तरध्या ऋणया न ईयसे ॥१॥ अनु हि त्वा सुतं सोम मदाम-



Digitized by Google

॥१॥ इंद्रः ते सोम सुतस्यं पेयाः क्रत्वे दक्षाय विश्वे च देवाः ॥२॥ एव
अमृताय महे क्षयाय सः शुक्रः अर्ष दिव्यः पीयूषः ॥३॥ पवस्व
सोम महान् समुद्रः पिता देवानां विश्वा अभि धाम ॥४॥ शुक्रः
पवस्व देवेभ्यः सोम दिवे पृथिव्यै शं च प्रऽजायै ॥५॥ दिवः धर्ता
असि शुक्रः पीयूषः सत्ये विऽधर्मन् वाजी पवस्व ॥६॥ पवस्व
सोम द्युम्नी सुऽधारः महां अवीनां अनु पूर्व्यः ॥७॥ नृऽभिः येमानः
जज्ञानः पूतः क्षरत् विश्वानि मंद्रः स्वःऽवित् ॥८॥ इंदुः पुनानः प्र-
ऽजां उराणः करत् विश्वानि द्रविणानि नः ॥९॥ पवस्व सोम क्रत्वे
दक्षाय अश्वः न निक्तः वाजी धनाय ॥१०॥२०॥ तं ते सोतारः रसं
मदाय पुनंति सोमं महे द्युम्नाय ॥११॥ शिशुं जज्ञानं हरिं मृजंति
पवित्रे सोमं देवेभ्यः इंदुं ॥१२॥ इंदुः पविष्ट चारुः मदाय अपां उप-
ऽस्थे कविः भगाय ॥१३॥ बिभर्ति चारु इंद्रस्य नाम येन विश्वानि
वृत्रा जघान ॥१४॥ पिबंति अस्य विश्वे देवासः गोभिः श्रीतस्य
नृऽभिः सुतस्य ॥१५॥ प्र सुवानः अक्षाः सहस्रऽधारः तिरः पवित्रं
वि वारं अव्यं ॥१६॥ सः वाजी अक्षाः सहस्रऽरेताः अत्ऽभिः मृ-
जानः गोभिः श्रीणानः ॥१७॥ प्र सोम याहि इंद्रस्य कुक्षा नृऽभिः
येमानः अद्रिऽभिः सुतः ॥१८॥ असर्जि वाजी तिरः पवित्रं इंद्राय
सोमः सहस्रऽधारः ॥१९॥ अंजंति एनं मध्वः रसेन इंद्राय वृष्णे इंदुं
मदाय ॥२०॥ देवेभ्यः त्वा वृथा पाजसे अपः वसानं हरिं मृजंति
॥२१॥ इंदुः इंद्राय तोशते नि तोशते श्रीणन् उग्रः रिणन् अपः
॥ २२ ॥ २१ ॥

---

॥११०॥ परि ऊं सु प्र धन्व वाजऽसातये परि वृत्राणि सक्षणिः
द्विषः तरध्यै ऋणऽयाः नः ईयसे ॥१॥ अनु हि त्वा सुतं सोम मदाम-



Digitized by Google

सि महे संमर्यराज्ये । वाजाँ अभि पवमान प्र गाहसे ॥ २ ॥
अजीजनो हि पवमान सूर्यं विधारे शक्मना पयः । गोजीरया
रंहमाणः पुरंध्या ॥३॥ अजीजनो अमृत मर्त्येष्वाँ ऋतस्य ध-
र्मन्नमृतस्य चारुणः । सदासरो वाजमच्छा सनिष्यदत् ॥ ४ ॥
अभ्यभि हि श्रवसा ततर्दिथोत्सं न कं चिज्जनपानमक्षितं ।
शर्याभिर्न भरमाणो गभस्त्योः ॥५॥ आदीं के चित्पश्यमानास
आप्यं वसुरुचो दिव्या अभ्यनूषत । वारं न देवः सविता व्यू-
र्णुते ॥६॥२२॥ त्वे सोम प्रथमा वृक्तबर्हिषो महे वाजाय श्र-
वसे धियं दधुः । स त्वं नो वीर वीर्याय चोदय ॥ ७ ॥ दिवः
पीयूषं पूर्व्यं यदुक्थ्यं महो गाहाद्दिव आ निरधुक्षत । इंद्रमभि
जायमानं समस्वरन् ॥८॥ अध यदिमे पवमान रोदसी इमा
च विश्वा भुवनाभि मज्मना । यूथे न निःष्ठा वृषभो वि ति-
ष्ठसे ॥९॥ सोमः पुनानो अव्यये वारे शिशुर्न क्रीळन्पवमानो
अक्षाः । सहस्रधारः शतवाज इंदुः ॥१०॥ एष पुनानो मधुमाँ
ऋतावेंद्रायेंदुः पवते स्वादुरूर्मिः । वाजसनिर्वरिवोविद्वयो-
धाः ॥११॥ स पवस्व सहमानः पृतन्यून्सेधन्रक्षांस्यप दुर्गहा-
णि । स्वायुधः सासह्वान्त्सोम शत्रून् ॥ १२ ॥ २३ ॥

---

॥ १११ ॥ १–३ अनानतः पारुच्छेपिः ॥ पवमानः सोमः ॥ अत्यष्टिः ॥

॥१११॥ अया रुचा हरिण्या पुनानो विश्वा द्वेषांसि तरति
स्वयुग्वभिः सूरो न स्वयुग्वभिः । धारा सुतस्य रोचते पुनानो
अरुषो हरिः । विश्वा यद्रूपा परियात्यृक्वभिः सप्तास्येभिरृक्वभिः
॥१॥ त्वं त्यत्पणीनां विदो वसु सं मातृभिर्मर्जयसि स्व आ दम
ऋतस्य धीतिभिर्दमे । परावतो न साम तद्यत्रा रणंति धी-
तयः । त्रिधातुभिररुषीभिर्वयो दधे रोचमानो वयो दधे ॥२॥



Digitized by Google

सिमहे समयेऽराज्ये वाजान् अभि पवमान प्र गाहसे॥२॥ अजीं-
जनः हि पवमान सूर्यं विऽधारे शक्मना पयः गोऽजीरया रंहं-
माणः पुरंऽध्या॥३॥ अजीजनः अमृत मर्त्येषु आ ऋतस्य धर्मन्
अमृतस्य चारुणः सदा असरः वाजं अच्छ सनिस्यदत्॥४॥ अभि-
ऽअभि हि श्रवसा ततर्दिथ उत्सं न कं चित् जनऽपानं अक्षितं
शर्याभिः न भरमाणः गभस्त्योः॥५॥ आत् ईं के चित् पश्यमानासः
आप्यं वसुऽरुचः दिव्याः अभि अनूषत वारं न देवः सविता वि
ऊर्णुते॥६॥२२॥ त्वे सोम प्रथमाः वृक्तऽबर्हिषः महे वाजाय श्रवसे
धियं दधुः सः त्वं नः वीर वीर्याय चोदय॥७॥ दिवः पीयूषं पूर्व्यं यत्
उक्थ्यं महः गाहात् दिवः आ निः अधुक्षत इंद्रं अभि जायमानं
सं अस्वरन्॥८॥ अध यत् इमे पवमान रोदसी इमा च विश्वा
भुवना अभि मज्मना यूथे न निःऽस्थाः वृषभः वि तिष्ठसे॥९॥
सोमः पुनानः अव्यये वारे शिशुः न क्रीळन् पवमानः अक्षाः
सहस्रऽधारः शतऽवाजः इंदुः॥१०॥ एषः पुनानः मधुऽमान् ऋत-
ऽवा इंद्राय इंदुः पवते स्वादुः ऊर्मिः वाजऽसनिः वरिवःऽवित्
वयःऽधाः॥११॥ सः पवस्व सहमानः पृतन्यून् सेधन् रक्षांसि अप
दुःऽगहानि सुऽआयुधः ससह्वान् सोम शत्रून्॥१२॥२३॥

---

॥१११॥ अया रुचा हरिण्या पुनानः विश्वा द्वेषांसि तरति स्व-
युग्वऽभिः सूरः न स्वयुग्वऽभिः धारा सुतस्य रोचते पुनानः अरुषः
हरिः विश्वा यत् रूपा परिऽयाति ऋक्वऽभिः सप्तऽआस्येभिः ऋ-
क्वऽभिः॥१॥ त्वं त्यत् पणीनां विदः वसु सं मातृऽभिः मर्जयसि स्वे
आ दमे ऋतस्य धीतिऽभिः दमे पराऽवतः न साम तत् यत्र रणंति
धीतयः त्रिधातुऽभिः अरुषीभिः वयः दधे रोचमानः वयः दधे॥२॥



Digitized by Google

पूर्वामनु प्रदिशं याति चेकितत्सं रश्मिभिर्यतते दर्शतो रथो दैव्यो दर्शतो रथः । अग्मन्नुक्थानि पौंस्येंद्रं जैत्राय हर्षयन् । वज्रश्च यद्भवथो अनपच्युता समत्स्वनपच्युता ॥३॥२४॥

---

॥ ११२ ॥ १-४ शिशुः ॥ पवमानः सोमः ॥ पंक्तिः ॥

॥११२॥ नानानं वा उ नो धियो वि व्रतानि जनानां । तक्षा रिष्टं रुतं भिषग्ब्रह्मा सुन्वंतमिच्छतींद्रायेंदो परि स्रव ॥१॥ जरतीभिरोषधीभिः पर्णेभिः शकुनानां । कार्मारो अश्मभिर्द्युभिर्हिरण्यवंतमिच्छतींद्रायेंदो परि स्रव ॥२॥ कारुरहं ततो भिषगुपलप्रक्षिणी नना । नानाधियो वसूयवोऽनु गा इव तस्थिमेंद्रायेंदो परि स्रव ॥३॥ अश्वो वोळ्हा सुखं रथं हसनामुपमंत्रिणः । शेपो रोमण्वंतौ भेदौ वारिन्मंडूक इच्छतींद्रायेंदो परि स्रव ॥४॥२५॥

---

॥ ११३ ॥ १-११ कश्यपः ॥ पवमानः सोमः ॥ पंक्तिः ॥

॥११३॥ शर्यणावति सोममिंद्रः पिबतु वृत्रहा । बलं दधान आत्मनि करिष्यन्वीर्यं महदिंद्रायेंदो परि स्रव ॥१॥ आ पवस्व दिशां पत आर्जीकात्सोम मीढ्वः । ऋतवाकेन सत्येन श्रद्धया तपसा सुत इंद्रायेंदो परि स्रव ॥२॥ पर्जन्यवृद्धं महिषं तं सूर्यस्य दुहिताभरत् । तं गंधर्वाः प्रत्यगृभ्णन्तं सोमे रसमादधुरिंद्रायेंदो परि स्रव ॥३॥ ऋतं वदन्नृतद्युम्न सत्यं वदन्सत्यकर्मन् । श्रद्धां वदन्सोम राजन्धात्रा सोम परिष्कृत इंद्रायेंदो परि स्रव ॥४॥ सत्यमुग्रस्य बृहतः सं स्रवंति संस्रवाः । सं यंति रसिनो रसाः पुनानो ब्रह्मणा हर इंद्रायेंदो परि स्रव ॥५॥२६॥ यत्र ब्रह्मा पवमान छंदस्यां३ वाचं वदन् । ग्राव्णा सोमे



Digitized by Google

पूर्वी अनु प्रऽदिशं याति चेकितत् सं रश्मिऽभिः यतते दर्शतः रथः दैव्यः दर्शतः रथः अग्मन् उक्थानि पौंस्या इंद्रं जैत्राय हर्षयन् वज्रः च यत् भवथः अनपऽच्युता समत्ऽसु अनपऽच्युता ॥ ३ ॥ २४ ॥

---

॥११२॥ नानानं वै ऊं नः धियः वि व्रतानि जनानां तक्षा रिष्टं रुतं भिषक् ब्रह्मा सुन्वंतं इच्छति इंद्राय इंदो इति परि स्रव॥१॥ जरतीभिः ओषधीभिः पर्णेभिः शकुनानां कार्मारः अश्मऽभिः द्युऽभिः हिरण्यऽवंतं इच्छति इंद्राय इंदो इति परि स्रव॥२॥ कारुः अहं ततः भिषक् उपलऽप्रक्षिणी नना नानाऽधियः वसुऽयवः अनु गाःऽइव तस्थिम इंद्राय इंदो इति परि स्रव॥३॥ अश्वः वोळ्हा सुऽखं रथं हसनां उपऽमंत्रिणः शेपः रोमण्ऽवंतौ भेदौ वाः इत् मंडूकः इच्छति इंद्राय इंदो इति परि स्रव ॥ ४ ॥ २५ ॥

---

॥११३॥ शर्यणाऽवति सोमं इंद्रः पिबतु वृत्रऽहा बलं दधानः आत्मनि करिष्यन् वीर्यं महत् इंद्राय इंदो इति परि स्रव॥१॥ आ पवस्व दिशां पते आर्जीकात् सोम मीढ्वः ऋतऽवाकेन सत्येन श्रद्धया तपसा सुतः इंद्राय इंदो इति परि स्रव॥२॥ पर्जन्यऽवृद्धं महिषं तं सूर्यस्य दुहिता आ अभरत् तं गंधर्वाः प्रति अगृभ्णन् तं सोमे रसं आ अदधुः इंद्राय इंदो इति परि स्रव॥३॥ ऋतं वदन् ऋतऽद्युम्न सत्यं वदन् सत्यऽकर्मन् श्रद्धां वदन् सोम राजन् धात्रा सोम परिऽकृतः इंद्राय इंदो इति परि स्रव॥४॥ सत्यऽउग्रस्य बृहतः सं स्रवंति संऽस्रवाः सं यंति रसिनः रसाः पुनानः ब्रह्मणा हरे इंद्राय इंदो इति परि स्रव ॥५॥२६॥ यत्र ब्रह्मा पवमान छंदस्यां वाचं वदन् ग्राव्णा सोमे



Digitized by Google

महीयते सोमेनानंदं जनयन्निंद्रायेंदो परि स्रव ॥ ६ ॥ यत्र ज्योतिरजस्रं यस्मिँल्लोके स्वर्हितं । तस्मिन्मां धेहि पवमानामृते लोके अक्षित इंद्रायेंदो परि स्रव ॥ ७ ॥ यत्र राजा वैवस्वतो यत्रावरोधनं दिवः । यत्रामूर्यह्वतीरापस्तत्र माममृतं कृधींद्रायेंदो परि स्रव ॥ ८ ॥ यत्रानुकामं चरणं त्रिनाके त्रिदिवे दिवः । लोका यत्र ज्योतिष्मंतस्तत्र माममृतं कृधींद्रायेंदो परि स्रव ॥ ९ ॥ यत्र कामा निकामाश्च यत्र ब्रध्नस्य विष्टपं । स्वधा च यत्र तृप्तिश्च तत्र माममृतं कृधींद्रायेंदो परि स्रव ॥ १० ॥ यत्रानंदाश्च मोदाश्च मुदः प्रमुद आसते । कामस्य यत्राप्ताः कामास्तत्र माममृतं कृधींद्रायेंदो परि स्रव ॥ ११ ॥ २७ ॥

---

॥ ११४ ॥ १-४ कश्यपः ॥ पवमानः सोमः ॥ पंक्तिः ॥

॥ ११४ ॥ य इंदोः पवमानस्यानु धामान्यक्रमीत् । तमाहुः सुप्रजा इति यस्ते सोमाविधन्मन इंद्रायेंदो परि स्रव ॥ १ ॥ ऋषे मंत्रकृतां स्तोमैः कश्यपोद्वर्धयन्गिरः । सोमं नमस्य राजानं यो जज्ञे वीरुधां पतिरिंद्रायेंदो परि स्रव ॥ २ ॥ सप्त दिशो नानासूर्याः सप्त होतार ऋत्विजः । देवा आदित्या ये सप्त तेभिः सोमाभि रक्ष न इंद्रायेंदो परि स्रव ॥ ३ ॥ यत्ते राजञ्छृतं हविस्तेन सोमाभि रक्ष नः । अरातीवा मा नस्तारीन्मो च नः किं चनाममदिंद्रायेंदो परि स्रव ॥ ४ ॥ २८ ॥ ७ ॥ ९ ॥

॥ इति नवमं मंडलं समाप्तं ॥



Digitized by Google

महीयते सोमेन आऽनंदं जनयन् इंद्राय इंदो इति परि स्रव ॥ ६ ॥ यत्र ज्योतिः अजस्रं यस्मिन् लोके स्वः हितं तस्मिन् मां धेहि पवमान अमृते लोके अक्षिते इंद्राय इंदो इति परि स्रव ॥ ७ ॥ यत्र राजा वैवस्वतः यत्र अवऽरोधनं दिवः यत्र अमूः यह्वतीः आपः तत्र मां अमृतं कृधि इंद्राय इंदो इति परि स्रव ॥ ८ ॥ यत्र अनुऽकामं चरणं त्रिऽनाके त्रिऽदिवे दिवः लोकाः यत्र ज्योतिष्मंतः तत्र मां अमृतं कृधि इंद्राय इंदो इति परि स्रव ॥ ९ ॥ यत्र कामाः निऽकामाः च यत्र ब्रध्नस्य विष्टपं स्वधा च यत्र तृप्तिः च तत्र मां अमृतं कृधि इंद्राय इंदो इति परि स्रव ॥ १० ॥ यत्र आऽनंदाः च मोदाः च मुदः प्रऽमुदः आसते कामस्य यत्र आप्ताः कामाः तत्र मां अमृतं कृधि इंद्राय इंदो इति परि स्रव ॥ ११ ॥ २७ ॥

---

॥ ११४ ॥ यः इंदोः पवमानस्य अनु धामानि अक्रमीत् तं आहुः सुऽप्रजाः इति यः ते सोम अविधत् मनः इंद्राय इंदो इति परि स्रव ॥ १ ॥ ऋषे मंत्रऽकृतां स्तोमैः कश्यप उत्ऽवर्धयन् गिरः सोमं नमस्य राजानं यः जज्ञे वीरुधां पतिः इंद्राय इंदो इति परि स्रव ॥ २ ॥ सप्त दिशः नानाऽसूर्याः सप्त होतारः ऋत्विजः देवाः आदित्याः ये सप्त तेभिः सोम अभि रक्ष नः इंद्राय इंदो इति परि स्रव ॥ ३ ॥ यत् ते राजन् भृतं हविः तेन सोम अभि रक्ष नः अरातिऽवा मा नः तारीत् मो इति च नः किं चन आममत् इंद्राय इंदो इति परि स्रव ॥ ४ ॥ २८ ॥ ७ ॥ ९ ॥

॥ इति नवमं मंडलं समाप्तं ॥



Digitized by Google

॥ १ ॥ १–७ त्रितः ॥ अग्निः ॥ त्रिष्टुप् ॥

॥१॥ अग्रे बृहन्नुषसामूर्ध्वो अस्थान्निर्जगन्वान्तमसो ज्यो-
तिषागात्। अग्निर्भानुना रुशता स्वंग आ जातो विश्वा सद्मा-
न्यप्राः ॥१॥ स जातो गर्भो असि रोदस्योरग्ने चारुर्विभृत ओष-
धीषु। चित्रः शिशुः परि तमांस्यक्तून्प्र मातृभ्यो अधि कनि-
क्रदद्गाः ॥ २ ॥ विष्णुरित्था परममस्य विद्वाञ्जातो बृहन्नभि
पाति तृतीयं। आसा यदस्य पयो अक्रत स्वं सचेतसो अभ्य-
र्चन्त्यत्र ॥३॥ अत उ त्वा पितुभृतो जनित्रीरन्नावृधं प्रति चरन्त्यन्नैः।
ता ईं प्रत्येषि पुनरन्यरूपा असि त्वं विक्षु मानुषीषु होता ॥४॥
होतारं चित्ररथमध्वरस्य यज्ञस्ययज्ञस्य केतुं रुशंतं। प्रत्यर्धिं दे-
वस्यदेवस्य मह्ना श्रिया त्व१ग्निमतिथिं जनानां ॥ ५ ॥ स तु
वस्त्राण्यध पेशनानि वसानो अग्निर्नाभा पृथिव्याः। अरुषो
जातः पद इळायाः पुरोहितो राजन्यक्षीह देवान् ॥ ६ ॥ आ
हि द्यावापृथिवी अग्न उभे सदा पुत्रो न मातरा ततंथ। प्र
याह्यच्छोशतो यविष्ठाथा वह सहस्वेह देवान् ॥ ७ ॥ २९ ॥

---

॥ २ ॥ १–७ त्रितः ॥ अग्निः ॥ त्रिष्टुप् ॥

॥२॥ पिप्रीहि देवाँ उशतो यविष्ठ विद्वाँ ऋतूँरृतुपते
यजेह। ये दैव्या ऋत्विजस्तेभिरग्ने त्वं होतॄणामस्यायजिष्ठः
॥१॥ वेषि होत्रमुत पोत्रं जनानां मंधातासि द्रविणोदा ऋ-
तावा। स्वाहा वयं कृणवामा हवींषि देवो देवान्यजत्वग्नि-
रर्हन् ॥ २ ॥ आ देवानामपि पंथामगन्म यच्छक्नवाम तदनु
प्रवोळ्हुं। अग्निर्विद्वान्स यजात्सेदु होता सो अध्वरान्स
ऋतून्कल्पयाति ॥ ३ ॥ यद्वो वयं प्रमिनाम व्रतानि विदु-
षां देवा अविदुष्टरासः। अग्निष्टद्विश्वमा पृणाति विद्वान्ये-



Digitized by Google

॥१॥ अग्रे बृहन् उषसां ऊर्ध्वः अस्थात् निःऽजगन्वान् तमसः ज्योतिषा आ अगात् अग्निः भानुना रुशता सुऽअंगः आ जातः विश्वा सद्मानि अप्राः ॥१॥ सः जातः गर्भः असि रोदस्योः अग्ने चारुः विऽभृतः ओषधीषु चित्रः शिशुः परि तमांसि अक्तून् प्र मातृऽभ्यः अधि कनिक्रदत् गाः ॥२॥ विष्णुः इत्था परमं अस्य विद्वान् जातः बृहन् अभि पाति तृतीयं आसा यत् अस्य पयः अक्रत स्वं सऽचेतसः अभि अर्चति अत्र ॥३॥ अतः ऊं त्वा पितुऽभृतः जनित्रीः अन्नऽवृधं प्रति चरंति अन्नैः ताः ईं प्रति एषि पुनः अन्यऽरूपाः असि त्वं विक्षु मानुषीषु होता ॥४॥ होतारं चित्रऽरथं अध्वरस्य यज्ञस्यऽयज्ञस्य केतुं रुशंतं प्रतिऽअर्धिं देवस्यऽदेवस्य मह्ना श्रिया तु अग्निं अतिथिं जनानां ॥५॥ सः तु वस्त्राणि अध पेशनानि वसानः अग्निः नाभा पृथिव्याः अरुषः जातः पदे इळायाः पुरःऽहितः राजन् यक्षि इह देवान् ॥६॥ आ हि द्यावापृथिवी अग्ने उभे सदा पुत्रः न मातरा ततंथ प्र याहि अच्छ उशतः यविष्ठ अथ आ वह सहस्य इह देवान् ॥७॥२९॥

---

॥२॥ पिप्रीहि देवान् उशतः यविष्ठ विद्वान् ऋतून् ऋतुऽपते यज इह ये दैव्याः ऋत्विजः तेभिः अग्ने त्वं होतॄणां असि आऽयजिष्ठः ॥१॥ वेषि होत्रं उत पोत्रं जनानां मंधाता असि द्रविणःऽदाः ऋतऽवा स्वाहा वयं कृणवाम हवींषि देवः देवान् यजतु अग्निः अर्हन् ॥२॥ आ देवानां अपि पंथां अगन्म यत् शक्नवाम तत् अनु प्रऽवोळ्हुं अग्निः विद्वान् सः यजात् सः इत् ऊं होता सः अध्वरान् सः ऋतून् कल्पयाति ॥३॥ यत् वः वयं प्रऽमिनाम व्रतानि विदुषां देवाः अविदुःऽतरासः अग्निः तत् विश्वं आ पृणाति विद्वान् ये-

भिर्देवाँ ऋतुभिः कल्पयाति ॥४॥ यत्पाकत्रा मनसा दीनदक्षा
न यज्ञस्य मन्वते मर्त्यासः । अग्निष्टद्धोता क्रतुविद्विजानन्य-
जिष्ठो देवाँ ऋतुशो यजाति ॥५॥ विश्वेषां ह्यध्वराणामनीकं
चित्रं केतुं जनिता त्वा जजान । स आ यजस्व नृवतीरनु
क्षाः स्पार्हा इषः क्षुमतीर्विश्वजन्याः ॥६॥ यं त्वा द्यावापृथिवी
यं त्वापस्त्वष्टा यं त्वा सुजनिमा जजान । पन्थामनु प्रविद्वा-
न्पितृयाणं द्युमदग्ने समिधानो वि भाहि ॥ ७ ॥ ३० ॥

---

॥ ३ ॥ १-७ चितः ॥ अग्निः ॥ त्रिष्टुप् ॥

॥३॥ इनो राजन्नरतिः समिद्धो रौद्रो दक्षाय सुषुमाँ अदर्-
शि । चिकिद्वि भाति भासा बृहतासिक्नीमेति रुशतीमपाजन्
॥१॥ कृष्णां यदेनीमभि वर्पसा भूज्जनयन्योषां बृहतः पितु-
र्जाम् । ऊर्ध्वं भानुं सूर्यस्य स्तभायन्दिवो वसुभिररतिर्वि भाति
॥२॥ भद्रो भद्रया सचमान आगात्स्वसारं जारो अभ्येति प-
श्चात् । सुप्रकेतैर्द्युभिरग्निर्वितिष्ठन्रुशद्भिर्वर्णैरभि राममस्थात्
॥३॥ अस्य यामासो बृहतो न वग्नूनिन्धाना अग्नेः सख्युः शि-
वस्य । ईड्यस्य वृष्णो बृहतः स्वासो भामासो यामन्नक्तवश्चि-
किते ॥४॥ स्वना न यस्य भामासः पवन्ते रोचमानस्य बृहतः
सुदिवः । ज्येष्ठेभिर्यस्तेजिष्ठैः क्रीळुमद्भिर्वर्षिष्ठेभिर्भानुभिर्नक्षति
द्याम् ॥५॥ अस्य शुष्मासो ददृशानपवेर्जेहमानस्य स्वनयन्नि-
युद्भिः । प्रत्नेभिर्यो रुशद्भिर्देवतमो वि रेभद्भिररतिर्भाति वि-
भ्वा ॥६॥ स आ वक्षि महि न आ च सत्सि दिवस्पृथिव्यो-
ररतिर्युवत्योः । अग्निः सुतुकः सुतुकेभिरश्वै रभस्वद्भी रभस्वाँ
एह गम्याः ॥ ७ ॥ ३१ ॥



Digitized by Google

भिः देवान् ऋतुऽभिः कल्पयाति ॥४॥ यत् पाकऽत्रा मनसा दीनऽदक्षाः न यज्ञस्य मन्वते मर्त्यासः अग्निः तत् होता क्रतुऽवित् विऽजानन् यजिष्ठः देवान् ऋतुऽशः यजाति ॥५॥ विश्वेषां हि अध्वराणां अनीकं चित्रं केतुं जनिता त्वा जजान सः आ यजस्व नृऽवतीः अनु क्षाः स्पार्हाः इषः क्षुऽमतीः विश्वऽजन्याः ॥६॥ यं त्वा द्यावापृथिवी यं त्वा आपः त्वष्टा यं त्वा सुऽजनिमा जजान पंथां अनु प्रऽविद्वान् पितृऽयानं द्युऽमत् अग्ने संऽइधानः वि भाहि ॥७॥३०॥

---

॥३॥ इनः राजन् अरतिः संऽइद्धः रौद्रः दक्षाय सुसुऽमान् अदर्शि चिकित् वि भाति भासा बृहता असिक्नीं एति रुशती अपऽअजन् ॥१॥ कृष्णां यत् एनीं अभि वर्पसा भूत् जनयन् योषां बृहतः पितुः जां ऊर्ध्वं भानुं सूर्यस्य स्तभायन् दिवः वसुऽभिः अरतिः वि भाति ॥२॥ भद्रः भद्रया सचमानः आ अगात् स्वसारं जारः अभि एति पश्चात् सुऽप्रकेतैः द्युऽभिः अग्निः विऽतिष्ठन् रुशत्ऽभिः वर्णैः अभि रामं अस्थात् ॥३॥ अस्य यामासः बृहतः न वग्नून् इंधानाः अग्नेः सख्युः शिवस्य ईड्यस्य वृष्णः बृहतः सुऽआसः भामासः यामन् अक्तवः चिकित्रे ॥४॥ स्वनाः न यस्य भामासः पवंते रोचमानस्य बृहतः सुऽदिवः ज्येष्ठेभिः यः तेजिष्ठैः क्रीळुमत्ऽभिः वर्षिष्ठेभिः भानुऽभिः नक्षति द्यां ॥५॥ अस्य शुष्मासः ददृशानऽपवेः जेहमानस्य स्वनयन् नियुत्ऽभिः प्रत्नेभिः यः रुशत्ऽभिः देवऽतमः वि रेभत्ऽभिः अरतिः भाति विऽभ्वा ॥६॥ सः आ वक्षि महि नः आ च सत्सि दिवःऽपृथिव्योः अरतिः युवत्योः अग्निः सुऽतुकः सुऽतुकेभिः अश्वैः रभस्वत्ऽभिः रभस्वान् आ इह गम्याः ॥७॥३१॥



Digitized by Google

॥ ४ ॥ १–७ त्रितः ॥ अग्निः ॥ त्रिष्टुप् ॥

॥४॥ प्र ते यक्षि प्र त इयर्मि मन्म भुवो यथा वंद्यो नो हवेषु । धन्वन्निव प्रपा असि त्वमग्न इयक्षवे पूरवे प्रत्न राजन् ॥१॥ यं त्वा जनासो अभि संचरंति गाव उष्णमिव व्रजं यविष्ठ । दूतो देवानामसि मर्त्यानामंतर्महाँश्चरसि रोचनेन ॥२॥ शिशुं न त्वा जेन्यं वर्धयंती माता बिभर्ति सचनस्यमाना । धनोरधि प्रवता यासि हर्यञ्जिगीषसे पशुरिवावसृष्टः ॥३॥ मूरा अमूर न वयं चिकित्वो महित्वमग्ने त्वमंग वित्से । शये वव्रिश्चरति जिह्वयादन्रेरिह्यते युवतिं विश्पतिः सन् ॥४॥ कूचिज्जायते सनयासु नव्यो वने तस्थौ पलितो धूमकेतुः । अस्नातापो वृषभो न प्र वेति सचेतसो यं प्रणयंत मर्ताः ॥५॥ तनूत्यजेव तस्करा वनर्गू रशनाभिर्दशभिरभ्यधीतां । इयं ते अग्ने नव्यसी मनीषा युक्ष्वा रथं न शुचयद्भिरंगैः ॥६॥ ब्रह्म च ते जातवेदो नमश्चेयं च गीः सदमिद्वर्धनी भूत् । रक्षा णो अग्ने तनयानि तोका रक्षोत नस्तन्वो३ अप्रयुच्छन् ॥ ७ ॥ ३२ ॥

---

॥ ५ ॥ १–७ त्रितः ॥ अग्निः ॥ त्रिष्टुप् ॥

॥५॥ एकः समुद्रो धरुणो रयीणामस्मद्धृदो भूरिजन्मा वि चष्टे । सिषक्त्यूधर्निण्योरुपस्थ उत्सस्य मध्ये निहितं पदं वेः ॥१॥ समानं नीळं वृषणो वसानाः सं जग्मिरे महिषा अर्वतीभिः । ऋतस्य पदं कवयो नि पांति गुहा नामानि दधिरे पराणि ॥२॥ ऋतायिनी मायिनी सं दधाते मित्वा शिशुं जज्ञतुर्वर्धयंती । विश्वस्य नाभिं चरतो ध्रुवस्य कवेश्चित्तंतुं मनसा वियंतः ॥३॥ ऋतस्य हि वर्तनयः सुजातमिषो वाजाय प्रदिवः सचंते । अधीवासं रोदसी वावसाने घृतैरन्नैर्वावृधाते मधूनां ॥४॥ सप्त स्वसॄररुषीर्वावशानो विद्वान्मध्व



Digitized by Google

॥४॥ प्र ते यक्षि प्र ते इयर्मि मन्मं भुवः यथा वंद्यः नः हवेषु धन्वन्ऽइव प्रऽपा असि त्वं अग्ने इयक्षवे पूरवे प्रत्न राजन् ॥१॥ यं त्वा जनासः अभि संऽचरंति गावः उष्णंऽइव व्रजं यविष्ठ दूतः देवानां असि मर्त्यानां अंतः महान् चरसि रोचनेन ॥२॥ शिशुं न त्वा जेन्यं वर्धयंती माता बिभर्ति सचनस्यमाना धनोः अधि प्रऽवता यासि हर्यन् जिगीषसे पशुःऽइव अवऽसृष्टः ॥३॥ मूराः अमूर न वयं चिकित्वः महिऽत्वं अग्ने त्वं अंग वित्से शये वव्रिः चरति जिह्वया अदन् रेरिह्यते युवतिं विश्पतिः सन् ॥४॥ कूऽचित् जायते सनयासु नव्यः वने तस्थौ पलितः धूमऽकेतुः अस्नाता आपः वृषभः न प्र वेति सऽचेतसः यं प्रऽनयंत मर्ताः ॥५॥ तनूत्यजाऽइव तस्करा वनर्गू रशनाभिः दशऽभिः अभि अधीतां इयं ते अग्ने नव्यसी मनीषा युक्ष्व रथं न शुचयत्ऽभिः अंगैः ॥६॥ ब्रह्म च ते जातऽवेदः नमः च इयं च गीः सदं इत् वर्धनी भूत् रक्ष नः अग्ने तनयानि तोका रक्ष उत नः तन्वः अप्रऽयुच्छन् ॥७॥३२॥

---

॥५॥ एकः समुद्रः धरुणः रयीणां अस्मत् हृदः भूरिऽजन्मा वि चष्टे सिसक्ति ऊधः निण्योः उपऽस्थे उत्सस्य मध्ये निऽहितं पदं वेरिति वेः ॥१॥ समानं नीळं वृषणः वसानाः सं जग्मिरे महिषाः अर्वतीभिः ऋतस्य पदं कवयः नि पांति गुहा नामानि दधिरे पराणि ॥२॥ ऋतऽयिनी इति मायिनी इति सं दधाते इति मित्वा शिशुं जज्ञतुः वर्धयंती इति विश्वस्य नाभिं चरतः ध्रुवस्य कवेः चित् तंतुं मनसा विऽयंतः ॥३॥ ऋतस्य हि वर्तनयः सुऽजातं इषः वाजाय प्रऽदिवः सचंते अधीवासं रोदसी इति वावसाने इति घृतैः अन्नैः वावृधाते इति मधूनां ॥४॥ सप्त स्वसृः अरुषीः वावशानः विद्वान् मध्वः



Digitized by Google

उर्जंभारा हृशे कं। अंतर्येमे अंतरिक्षे पुराजा इच्छन्वव्रिमविदत्पूषणस्य ॥५॥ सप्त मर्यादाः कवयस्ततक्षुस्तासामेकामिदभ्यंहुरो गात्। आयोर्ह स्कंभ उपमस्य नीळे पथां विसर्गे धरुणेषु तस्थौ ॥६॥ असच्च सच्च परमे व्योमन्दक्षस्य जन्मन्नदितेरुपस्थे। अग्निर्ह नः प्रथमजा ऋतस्य पूर्व आयुनि वृषभश्च धेनुः ॥ ७ ॥ ३३ ॥ ५ ॥

॥ ६ ॥ १–७ त्रितः ॥ अग्निः ॥ त्रिष्टुप् ॥

॥६॥ अयं स यस्य शर्मन्नवोभिरग्नेरेधते जरिताभिष्टौ। ज्येष्ठेभिर्यो भानुभिर्ऋषूणां पर्येति परिवीतो विभावा ॥१॥ यो भानुभिर्विभावा विभात्यग्निर्देवेभिर्ऋतावाजस्रः। आ यो विवाय सख्या सखिभ्योऽपरिह्वृतो अत्यो न सप्तिः ॥२॥ ईशे यो विश्वस्या देववीतेरीशे विश्वायुरुषसो व्युष्टौ। आ यस्मिन्मना हवींष्यग्नावरिष्टरथः स्कभ्नाति शूषैः ॥३॥ शूषेभिर्वृधो जुषाणो अर्कैर्देवाँ अच्छा रघुपत्वा जिगाति। मंद्रो होता स जुह्वा३ यजिष्ठः संमिश्लो अग्निरा जिघर्ति देवान् ॥४॥ तमुस्रामिंद्रं न रेजमानमग्निं गीर्भिर्नमोभिरा कृणुध्वं। आ यं विप्रासो मतिभिर्गृणंति जातवेदसं जुह्वं सहानां ॥५॥ सं यस्मिन्विश्वा वसूनि जग्मुर्वाजे नाश्वाः सप्तीवंत एवैः। अस्मे ऊतीरिंद्रवाततमा अर्वाचीना अग्न आ कृणुष्व ॥६॥ अधा ह्यग्ने मह्ना निषद्या सद्यो जज्ञानो हव्यो बभूथ। तं ते देवासो अनु केतमायन्नधावर्धंत प्रथमास ऊमाः ॥ ७ ॥ १ ॥

॥ ७ ॥ १–७ त्रितः ॥ अग्निः ॥ त्रिष्टुप् ॥

॥ ७ ॥ स्वस्ति नो दिवो अग्ने पृथिव्या विश्वायुर्धेहि यजथाय देव। सचेमहि तव दस्म प्रकेतैरुरुष्या ण उरुभिर्देव शंसैः



Digitized by Google

उत् जभार हशे कं अंतः येमे अंतरिक्षे पुराऽजाः इच्छन् वव्रिं अविदत् पूषणस्य ॥५॥ सप्त मर्यादाः कवयः ततक्षुः तासां एकां इत् अभि अंहुरः गात् आयोः ह स्कंभः उपऽमस्य नीळे पथां विऽसर्गे धरुणेषु तस्थौ ॥ ६ ॥ असत् च सत् च परमे विऽओमन् दक्षस्य जन्मन् अदितेः उपऽस्थे अग्निः ह नः प्रथमऽजाः ऋतस्य पूर्वे आयुनि वृषभः च धेनुः ॥ ७ ॥ ३३ ॥ ५ ॥

---

॥६॥ अयं सः यस्य शर्मन् अवःऽभिः अग्नेः एधते जरिता अभिष्टौ ज्येष्ठेभिः यः भानुऽभिः ऋषूणां परिऽएति परिऽवीतः विभाऽवा ॥१॥ यः भानुऽभिः विभाऽवा विऽभाति अग्निः देवेभिः ऋतऽवा अजस्रः आ यः विवाय सख्या सखिऽभ्यः अपरिऽह्वृतः अत्यः न सप्तिः ॥२॥ ईशे यः विश्वस्याः देवऽवीतेः ईशे विश्वऽआयुः उषसः विऽउष्टौ आ यस्मिन् मना हवींषि अग्नौ अरिष्टऽरथः स्कभ्नाति शूषैः ॥३॥ शूषेभिः वृधः जुषाणः अर्कैः देवान् अच्छ रघुऽपत्वा जिगाति मंद्रः होता सः जुह्वा यजिष्ठः संऽमिश्लः अग्निः आ जिघर्ति देवान् ॥४॥ तं उस्रां इंद्रं न रेजमानं अग्निं गीःऽभिः नमःऽभिः आ कृणुध्वं आ यं विप्रासः मतिऽभिः गृणंति जातऽवेदसं जुह्वं सहानां ॥५॥ सं यस्मिन् विश्वा वसूनि जग्मुः वाजे न अश्वाः सप्तिऽवंतः एवैः अस्मे ऊतीः इंद्रवातऽतमाः अर्वाचीनाः अग्ने आ कृणुष्व ॥६॥ अध हि अग्ने मह्ना निऽसद्य सद्यः जज्ञानः हव्यः बभूथ तं ते देवासः अनु केतं आयन् अध अवर्धंत प्रथमासः ऊमाः ॥७॥१॥

---

॥७॥ स्वस्ति नः दिवः अग्ने पृथिव्याः विश्वऽआयुः धेहि यजथाय देव सचेमहि तव दस्म प्रऽकेतैः उरुष्य नः उरुऽभिः देव शंसैः



Digitized by Google

॥१॥ इमा अग्ने मतयस्तुभ्यं जाता गोभिरश्वैरभि गृणंति राधः।
यदा ते मर्तो अनु भोगमानड्वसो दधानो मतिभिः सुजात
॥२॥ अग्निं मन्ये पितरमग्निमापिमग्निं भ्रातरं सदमित्सखायं।
अग्नेरनीकं बृहतः सपर्यं दिवि शुक्रं यजतं सूर्यस्य ॥३॥ सिध्रा
अग्ने धियो अस्मे सनुत्रीर्यं त्रायसे दम आ नित्यहोता। ऋ-
तावा स रोहिदश्वः पुरुक्षुर्द्युभिरस्मा अहभिर्वाममस्तु ॥४॥
द्युभिर्हितं मित्रमिव प्रयोगं प्रत्नमृत्विजमध्वरस्य जारं। बाहु-
भ्यामग्निमायवोऽजनंत विक्षु होतारं न्यसादयंत ॥ ५ ॥ स्वयं
यजस्व दिवि देव देवान्किं ते पाकः कृणवदप्रचेताः। यथा-
यज ऋतुभिर्देव देवानेवा यजस्व तन्वं सुजात ॥ ६ ॥ भवा
नो अग्नेऽवितोत गोपा भवा वयस्कृदुत नो वयोधाः। रा-
स्वा च नः सुमहो हव्यदातिं त्रास्वोत नस्तन्वो३अप्रयुच्छन्
॥ ७ ॥ २ ॥

---

॥ ८ ॥ १–९ त्रिशिरास्त्वाष्ट्रः ॥ १–६ अग्निः। ७–९ इंद्रः॥ त्रिष्टुप् ॥

॥ ८ ॥ प्र केतुना बृहता यात्यग्निरा रोदसी वृषभो रोर-
वीति। दिवश्चिदंताँ उपमाँ उदानळपामुपस्थे महिषो
ववर्ध ॥१॥ मुमोद गर्भो वृषभः ककुद्मानस्रेमा वत्सः शिमी-
वाँ अरावीत्। स देवतात्युद्यतानि कृण्वन्स्वेषु क्षयेषु प्र-
थमो जिगाति ॥२॥ आ यो मूर्धानं पित्रोररब्ध न्यध्वरे दधिरे
सूरो अर्णः। अस्य पत्मन्नरुषीरश्वबुध्ना ऋतस्य योनौ तन्वो जु-
षंत ॥३॥ उषउषो हि वसो अग्रमेषि त्वं यमयोरभवो विभा-
वा। ऋताय सप्त दधिषे पदानि जनयन्मित्रं तन्वे३स्वायै ॥४॥
भुवश्चक्षुर्मह ऋतस्य गोपा भुवो वरुणो यदृताय वेषि। भुवो
अपां नपाज्जातवेदो भुवो दूतो यस्य हव्यं जुजोषः ॥५॥३॥ भुवो



Digitized by Google

॥१॥ इमाः अग्ने मतयः तुभ्यं जाताः गोभिः अश्वैः अभि गृणंति रा-धः यदा ते मर्तः अनु भोगं आनट् वसो दधानः मतिऽभिः सुऽजात ॥२॥ अग्निं मन्ये पितरं अग्निं आपिं अग्निं भ्रातरं सदं इत् सखायं अग्नेः अनीकं बृहतः सपर्यं दिवि शुक्रं यजतं सूर्यस्य ॥३॥ सिध्राः अग्ने धियः अस्मे सनुत्रीः यं त्रायसे दमे आ नित्यऽहोता ऋत-ऽवा सः रोहित्ऽअश्वः पुरुऽक्षुः द्युऽभिः अस्मै अहऽभिः वामं अस्तु ॥४॥ द्युऽभिः हितं मित्रंऽइव प्रऽयोगं प्रत्नं ऋत्विजं अ-ध्वरस्य जारं बाहुऽभ्यां अग्निं आयवः अजनंत विक्षु होतारं नि असादयंत ॥५॥ स्वयं यजस्व दिवि देव देवान् किं ते पाकः कृण-वत् अप्रऽचेताः यथा अयजः ऋतुऽभिः देव देवान् एव यजस्व तन्वं सुऽजात ॥६॥ भव नः अग्ने अविता उत गोपाः भव वयः-ऽकृत् उत नः वयःऽधाः रास्व च नः सुऽमहः हव्यऽदातिं त्रास्व उत नः तन्वः अप्रऽयुच्छन् ॥ ७ ॥ २ ॥

---

॥८॥ प्र केतुना बृहता याति अग्निः आ रोदसी वृषभः रोरवीति दिवः चित् अंतान् उपऽमान् उत् आनट् अपां उपऽस्थे महिषः ववर्ध ॥१॥ मुमोद गर्भः वृषभः ककुत्ऽमान् अस्रेमा वत्सः शिमी-ऽवान् अरावीत् सः देवऽताति उत्ऽयतानि कृण्वन् स्वेषु क्षयेषु प्रथमः जिगाति ॥२॥ आ यः मूर्धानं पित्रोः अरब्ध नि अध्वरे दधिरे सूरः अर्णः अस्य पत्मन् अरुषीः अश्वऽबुध्नाः ऋतस्य योनौ तन्वः जुषंत ॥३॥ उषःऽउषः हि वसो अग्रं एषि त्वं यमयोः अभवः वि-भाऽवा ऋताय सप्त दधिषे पदानि जनयन् मित्रं तन्वे स्वायै ॥४॥ भुवः चक्षुः महः ऋतस्य गोपाः भुवः वरुणः यत् ऋताय वेषि भुवः अपां नपात् जातऽवेदः भुवः दूतः यस्य हव्यं जुजोषः ॥५॥३॥ भुवः



Digitized by Google

यज्ञस्य रजसश्च नेता यत्रा नियुद्भिः सचसे शिवाभिः । दिवि मूर्धानं दधिषे स्वर्षां जिह्वामग्ने चकृषे हव्यवाहं ॥ ६ ॥ अस्य त्रितः क्रतुना वव्रे अंतरिच्छन्धीतिं पितुरेवैः परस्य । सचस्यमानः पित्रोरुपस्थे जामि ब्रुवाण आयुधानि वेति ॥ ७ ॥ स पित्र्याण्यायुधानि विद्वानिंद्रेषित आप्त्यो अभ्ययुध्यत् । त्रिशीर्षाणं सप्तरश्मिं जघन्वान्त्वाष्ट्रस्य चिन्निः ससृजे त्रितो गाः ॥ ८ ॥ भूरीदिंद्र उदिनक्षंतमोजोऽवाभिनत्सत्पतिर्मन्यमानं । त्वाष्ट्रस्य चिद्विश्वरूपस्य गोनामाचक्राणस्त्रीणि शीर्षा परा वर्क् ॥ ९ ॥ ४ ॥

॥ ९ ॥ १–९ त्रिशिरास्त्वाष्ट्रः सिंधुद्वीपो वांबरीषः ॥ आपः ॥ १–४. ६ गायत्री । ५ वर्धमाना । ७ प्रतिष्ठा । ८. ९ अनुष्टुप् ॥

॥ ९ ॥ आपो हि ष्ठा मयोभुवस्ता न ऊर्जे दधातन । महे रणाय चक्षसे ॥ १ ॥ यो वः शिवतमो रसस्तस्य भाजयतेह नः । उशतीरिव मातरः ॥ २ ॥ तस्मा अरं गमाम वो यस्य क्षयाय जिन्वथ । आपो जनयथा च नः ॥ ३ ॥ शं नो देवीरभिष्टय आपो भवंतु पीतये । शं योरभि स्रवंतु नः ॥ ४ ॥ ईशाना वार्याणां क्षयंतीश्चर्षणीनां । अपो याचामि भेषजं ॥ ५ ॥ अप्सु मे सोमो अब्रवीदंतर्विश्वानि भेषजा । अग्निं च विश्वशंभुवं ॥ ६ ॥ आपः पृणीत भेषजं वरूथं तन्वे३ मम । ज्योक् च सूर्यं दृशे ॥ ७ ॥ इदमापः प्र वहत यत्किं च दुरितं मयि । यद्वाहमभिदुद्रोह यद्वा शेप उतानृतं ॥ ८ ॥ आपो अद्यान्वचारिषं रसेन समगस्महि । पयस्वानग्न आ गहि तं मा सं सृज वर्चसा ॥ ९ ॥ ५ ॥

॥ १० ॥ १. ३. ५–७. ११. १३ यमी वैवस्वती । २. ४. ८–१०. १२. १४ यमो वैवस्वतः ॥ १. ३. ५–७. ११. १३ यमो वैवस्वतः । २. ४. ८–१०. १२. १४ यमी वैवस्वती ॥ त्रिष्टुप् ॥

॥ १० ॥ ओ चित्सखायं सख्या ववृत्यां तिरः पुरू चिदर्णवं जगन्वान् । पितुर्नपातमा दधीत वेधा अधि क्षमि प्रतरं दी-



Digitized by Google

यज्ञस्य रजसः च नेता यत्र नियुत्ऽभिः सचसे शिवाभिः दिवि मूर्धानं दधिषे स्वःऽसां जिह्वां अग्ने चकृषे हव्यऽवाहं ॥ ६ ॥ अस्य चित् ऋतुना वम्रे अंतः इच्छन् धीतिं पितुः एवैः परस्य सचस्यमानः पित्रोः उपऽस्थे जामि ब्रुवाणः आयुधानि वेति ॥ ७ ॥ सः पित्र्याणि आयुधानि विद्वान् इंद्रऽइषितः आप्त्यः अभि अयुध्यत् त्रिऽशीर्षाणं सप्तऽरश्मिं जघन्वान् त्वाष्ट्रस्य चित् निः ससृजे त्रितः गाः ॥ ८ ॥ भूरि इत् इंद्रः उत्ऽइनक्षंतं ओजः अव अभिनत् सत्ऽपतिः मन्यमानं त्वाष्ट्रस्य चित् विश्वऽरूपस्य गोनां आऽचक्राणः त्रीणि शीर्षा परा वर्क्° ॥ ९ ॥ ४ ॥

---

॥ ९ ॥ आपः हि स्थ मयःऽभुवः ताः नः ऊर्जे दधातन महे रणाय चक्षसे ॥ १ ॥ यः वः शिवऽतमः रसः तस्य भाजयत इह नः उशतीःऽइव मातरः ॥ २ ॥ तस्मै अरं गमाम वः यस्य क्षयाय जिन्वथ आपः जनयथ च नः ॥ ३ ॥ शं नः देवीः अभिष्टये आपः भवंतु पीतये शं योः अभि स्रवंतु नः ॥ ४ ॥ ईशानाः वार्याणां क्षयंतीः चर्षणीनां अपः याचामि भेषजं ॥ ५ ॥ अप्ऽसु मे सोमः अब्रवीत् अंतः विश्वानि भेषजा अग्निं च विश्वऽशंभुवं ॥ ६ ॥ आपः पृणीत भेषजं वरूथं तन्वे मम ज्योक् च सूर्यं दृशे ॥ ७ ॥ इदं आपः प्र वहत यत् किं च दुःऽइतं मयि यत् वा अहं अभिऽदुद्रोह यत् वा शेपे उत अनृतं ॥ ८ ॥ आपः अद्य अनु अचारिषं रसेन सं अगस्महि पयस्वान् अग्ने आ गहि तं मा सं सृज वर्चसा ॥ ९ ॥ ५ ॥

---

॥ १० ॥ ओ चित् सखायं सख्या ववृत्यां तिरः पुरु चित् अर्णवं जगन्वान् पितुः नपातं आ दधीत वेधाः अधि क्षमि प्रऽतरं दी-



Digitized by Google

ध्यानः ॥१॥ न ते सखा सख्यं वष्ट्येतत्सलक्ष्मा यद्विषुरूपा भ-
वाति। महस्पुत्रासो असुरस्य वीरा दिवो धर्तार उर्विया परि
ख्यन् ॥२॥ उशंति घा ते अमृतास एतदेकस्य चित्त्यजसं
मर्त्यस्य। नि ते मनो मनसि धाय्यस्मे जन्युः पतिस्तन्व१मा
विविश्याः ॥३॥ न यत्पुरा चकृमा कद्ध नूनमृता वदंतो अनृतं
रपेम। गंधर्वो अप्स्वप्या च योषा सा नो नाभिः परमं जामि
तन्नौ ॥४॥ गर्भे नु नौ जनिता दंपती कर्देवस्त्वष्टा सविता
विश्वरूपः। नकिरस्य प्र मिनंति व्रतानि वेद नावस्य पृथिवी
उत द्यौः ॥५॥६॥ को अस्य वेद प्रथमस्याह्नः क ईं ददर्श क इह
प्र वोचत्। बृहन्मित्रस्य वरुणस्य धाम कदु ब्रव आहनो वी-
च्या नॄन् ॥६॥ यमस्य मा यम्यं१काम आगन्त्समाने योनौ
सहशेय्याय। जायेव पत्ये तन्वं रिरिच्यां वि चिद्वृहेव रथ्येव
चक्रा ॥७॥ न तिष्ठंति न नि मिषंत्येते देवानां स्पश इह ये
चरंति। अन्येन मदाहनो याहि तूयं तेन वि वृह रथ्येव चक्रा
॥८॥ रात्रीभिरस्मा अहभिर्दशस्येत्सूर्यस्य चक्षुर्मुहुरुन्मिमी-
यात्। दिवा पृथिव्या मिथुना सबंधू यमीर्यमस्य बिभृयाद-
जामि ॥९॥ आ घा ता गच्छानुत्तरा युगानि यत्र जामयः
कृणवन्नजामि। उप बर्बृहि वृषभाय बाहुमन्यमिच्छस्व सु-
भगे पतिं मत् ॥१०॥७॥ किं भ्रातासद्यदनाथं भवाति किमु
स्वसा यन्निर्ऋतिर्निगच्छात्। काममूता बह्वे३तद्रपामि त-
न्वा मे तन्वं१सं पिपृग्धि ॥११॥ न वा उ ते तन्वा तन्वं१सं
पपृच्यां पापमाहुर्यः स्वसारं निगच्छात्। अन्येन मत्प्रमुदः
कल्पयस्व न ते भ्राता सुभगे वष्ट्येतत् ॥१२॥ बतो बतासि
यम नैव ते मनो हृदयं चाविदाम। अन्या किल त्वां कक्ष्येव



Digitized by Google

ध्यानः ॥१॥ न ते सखा सख्यं वष्टि एतत् सऽलक्ष्मा यत् विषुऽरूपा
भवाति महः पुत्रासः असुरस्य वीराः दिवः धर्तारः उर्विया परि
ख्यन् ॥२॥ उशंति घ ते अमृतासः एतत् एकस्य चित् त्यजसं
मर्त्यस्य नि ते मनः मनसि धायि अस्मे जन्युः पतिः तन्वं आ
विविश्याः ॥३॥ न यत् पुरा चकृम कत् ह नूनं ऋता वदंतः अनृतं
रपेम गंधर्वः अप्ऽसु अप्या च योषा सा नः नाभिः परमं जामि
तत् नौ ॥४॥ गर्भे नु नौ जनिता दंऽपती॰ कः देवः त्वष्टा सविता
विश्वऽरूपः नकिः अस्य प्र मिनंति व्रतानि वेद नौ अस्य पृथिवी
उत द्यौः ॥५॥६॥ कः अस्य वेद प्रथमस्य अह्नः कः ईं ददर्श कः इह प्र
वोचत् बृहत् मित्रस्य वरुणस्य धाम कत् ऊं ब्रवः आहनः वीच्या
नॄन् ॥६॥ यमस्य मा यम्यं कामः आ अगन् समाने योनौ सह-
ऽशेय्याय जायाऽइव पत्ये तन्वं रिरिच्यां वि चित् वृहेव रथ्याऽइव
चक्रा ॥७॥ न तिष्ठंति न नि मिषंति एते देवानां स्पशः इह ये चरंति
अन्येन मत् आहनः याहि तूयं तेन वि वृह रथ्याऽइव चक्रा ॥८॥
रात्रीभिः अस्मै अहऽभिः दशस्येत् सूर्यस्य चक्षुः मुहुः उत् मिमी-
यात् दिवा पृथिव्या मिथुना सऽबंधू॰ यमीः यमस्य बिभृयात्
अजामि ॥९॥ आ घ ता गच्छान् उत्ऽतरा युगानि यत्र जामयः
कृणवन् अजामि उप बर्बृहि वृषभाय बाहुं अन्यं इच्छस्व सु-
ऽभगे पतिं मत् ॥१०॥७॥ किं भ्राता असत् यत् अनाथं भवाति किं
ऊं स्वसा यत् निःऽऋतिः निऽगच्छात् कामऽमूता बहु एतत्
रपामि तन्वा मे तन्वं सं पिपृग्धि ॥११॥ न वै ऊं ते तन्वा तन्वं सं
पपृच्यां पापं आहुः यः स्वसारं निऽगच्छात् अन्येन मत् प्रऽमुदः
कल्पयस्व न ते भ्राता सुऽभगे वष्टि एतत् ॥१२॥ बतः बत असि
यम न एव ते मनः हृदयं च अविदाम अन्या किल त्वां कक्ष्याऽइव



Digitized by Google

युक्तं परि ष्वजाते लिबुजेव वृक्षं ॥१३॥ अन्यमू षु त्वं यम्यन्य
उ त्वां परि ष्वजाते लिबुजेव वृक्षं। तस्य वा त्वं मन इच्छा
स वा तवाधा कृणुष्व संविदं सुभद्रां ॥१४॥८॥

---

॥११॥ १–९ हविर्धान आङ्गिः ॥ अग्निः ॥ १–६ जगती। ७–९ त्रिष्टुप् ॥

॥११॥ वृषा वृष्णे दुदुहे दोहसा दिवः पयांसि यह्वो अ-
दितेरदाभ्यः। विश्वं स वेद वरुणो यथा धिया स यज्ञियो
यजतु यज्ञियाँ ऋतून् ॥१॥ रपद्गन्धर्वीरप्या च योषणा नदस्य
नादे परि पातु मे मनः। इष्टस्य मध्ये अदितिर्नि धातु नो
भ्राता नो ज्येष्ठः प्रथमो वि वोचति ॥२॥ सो चिन्नु भद्रा क्षु-
मती यशस्वत्युषा उवास मनवे स्वर्वती। यदीमुशन्तमुशता-
मनु क्रतुमग्निं होतारं विदथाय जीजनन् ॥३॥ अध त्यं द्रप्सं
विभ्वं विचक्षणं विराभरदिषितः श्येनो अध्वरे। यदी विशो
वृणते दस्ममार्या अग्निं होतारमध धीरजायत ॥४॥ सदासि
रण्वो यवसेव पुष्यते होत्राभिरग्ने मनुषः स्वध्वरः। विप्रस्य वा
यच्छशमान उक्थ्यं१वाजं ससवाँ उपयासि भूरिभिः ॥५॥९॥
उदीरय पितरा जार आ भगमियक्षति हर्यतो हृत्त इष्यति।
विवक्ति वह्निः स्वपस्यते मखस्तविष्यते असुरो वेपते मती
॥६॥ यस्ते अग्ने सुमतिं मर्तो अक्षत्सहसः सूनो अति स प्र
शृण्वे। इषं दधानो वहमानो अश्वैरा स द्युमाँ अमवान्भूषति
द्यून् ॥७॥ यदग्न एषा समितिर्भवाति देवी देवेषु यजता
यजत्र। रत्ना च यद्विभजासि स्वधावो भागं नो अत्र वसु-
मन्तं वीतात् ॥८॥ श्रुधी नो अग्ने सदने सधस्थे युक्ष्वा रथ-
ममृतस्य द्रवित्नुं। आ नो वह रोदसी देवपुत्रे माकिर्देवा-
नामप भूरिह स्याः ॥९॥१०॥



Digitized by Google

युक्तं परि स्वजाते लिबुजाऽइव वृक्षं ॥१३॥ अन्यं ऊं सु त्वं यमि अन्यः ऊं त्वां परि स्वजाते लिबुजाऽइव वृक्षं तस्य वा त्वं मनः इच्छ सः वा तव अध कृणुष्व संऽविदं सुऽभद्रां ॥ १४ ॥ ८ ॥

---

॥११॥ वृषा वृष्णे दुदुहे दोहसा दिवः पयांसि यह्वः अदितेः अदाभ्यः विश्वं सः वेद वरुणः यथा धिया सः यज्ञियः यजतु यज्ञियान् ऋतून् ॥१॥ रपत् गंधर्वीः अप्या च योषणा नदस्य नादे परि पातु मे मनः इष्टस्य मध्ये अदितिः नि धातु नः भ्राता नः ज्येष्ठः प्रथमः वि वोचति ॥२॥ सो चित् नु भद्रा क्षुऽमती यशस्वती उषाः उवास मनवे स्वःऽवती यत् ईं उशंतं उशतां अनु क्रतुं अग्निं होतारं विदथाय जीजनन् ॥३॥ अध त्यं द्रप्सं विऽभ्वं विऽचक्षणं विः आ अभरत् इषितः श्येनः अध्वरे यदि विशः वृणते दस्मं आर्याः अग्निं होतारं अध धीः अजायत ॥४॥ सदा असि रण्वः यवसाऽइव पुष्यते होत्राभिः अग्ने मनुषः सुऽअध्वरः विप्रस्य वा यत् शशमानः उक्थ्यं वाजं ससऽवान् उपऽयासि भूरिऽभिः ॥५॥९॥ उत् ईरय पितरा जारः आ भगं इयक्षति हर्यतः हृत्तः इष्यति विवक्ति वह्निः सुऽअपस्यते मखः तविष्यते असुरः वेपते मती ॥६॥ यः ते अग्ने सुऽमतिं मर्तः अक्षत् सहसः सूनो अति सः प्र शृण्वे इषं दधानः वहमानः अश्वैः आ सः द्युऽमान् अमऽवान् भूषति द्यून् ॥७॥ यत् अग्ने एषा संऽइतिः भवाति देवी देवेषु यजता यजत्र रत्ना च यत् विऽभजासि स्वधाऽवः भागं नः अत्र वसुऽमंतं वीतात् ॥८॥ श्रुधि नः अग्ने सदने सधऽस्थे युक्ष्व रथं अमृतस्य द्रवित्नुं आ नः वह रोदसी देवऽपुत्रे माकिः देवानां अप भूः इह स्याः ॥ ९ ॥ १० ॥



Digitized by Google

॥ १२ ॥ १–९ हविर्धान आङ्गिः ॥ अग्निः ॥ त्रिष्टुप् ॥

॥१२॥ द्यावा॑ ह॒ क्षामा॑ प्रथ॒मे ऋ॒तेना॑भिश्रा॒वे भ॑वतः सत्य॒वाचा॑। दे॒वो यन्मर्ता॑न्यज॒थाय॑ कृ॒ण्वन्त्सीद॒द्धोता॑ प्र॒त्यङ्‌ स्वमसुं॒ यन् ॥१॥ दे॒वो दे॒वान्प॑रि॒भूरृ॒तेन॒ वहा॑ नो ह॒व्यं प्र॑थ॒मश्चि॑कि॒त्वान्। धू॒मके॑तुः स॒मिधा॒ भाऋ॑जीको म॒न्द्रो होता॒ नित्यो॑ वा॒चा यजी॑यान् ॥२॥ स्वावृ॑ग्दे॒वस्या॒मृतं॒ यदी॒ गोरतो॑ जा॒तासो॑ धारयन्त उ॒र्वी। विश्वे॑ दे॒वा अनु॒ तत्ते॒ यजु॑र्गुर्दु॒हे यदेनी॑ दि॒व्यं घृ॒तं वाः ॥३॥ अर्चा॑मि वां॒ वर्धा॒यापो॑ घृतस्नू॒ द्यावा॑भूमी शृणु॒तं रो॑दसी मे। अहा॒ यद्द्यावोऽसु॑नीति॒मय॒न्मध्वा॑ नो॒ अत्र॑ पि॒तरा॑ शिशीताम् ॥४॥ किं स्वि॑न्नो॒ राजा॑ जगृहे॒ कद॒स्याति॑ व्र॒तं च॑कृमा॒ को वि वे॑द। मि॒त्रश्चि॒द्धि ष्मा॑ जुहुरा॒णो दे॒वाञ्छ्लोको॒ न या॒ताम॑पि॒ वाजो॒ अस्ति॑ ॥५॥११॥ दु॒र्मन्त्वत्रा॒मृत॑स्य॒ नाम॒ सल॑क्ष्मा॒ यद्विषु॑रूपा॒ भवा॑ति। य॒मस्य॒ यो म॒नव॑ते सु॒मन्त्व॒ग्ने तमृ॑ष्व पा॒ह्यप्र॑युच्छन् ॥६॥ यस्मि॑न्दे॒वा वि॒दथे॑ मा॒दय॑न्ते वि॒वस्व॑तः॒ सद॑ने धा॒रय॑न्ते। सूर्ये॒ ज्योति॒रद॑धुर्मा॒स्य१॒॑क्तून्परि॑ द्योत॒निं च॑रतो॒ अज॑स्रा ॥७॥ यस्मि॑न्दे॒वा मन्म॑नि सं॒चर॑न्त्यपी॒च्ये३॒॑ न व॒यम॑स्य वि॒द्म। मि॒त्रो नो॒ अत्रादि॑ति॒रना॑गान्त्सवि॒ता दे॒वो वरु॑णाय वोचत् ॥८॥ श्रु॒धी नो॑ अग्ने॒ सद॑ने स॒धस्थे॑ यु॒क्ष्वा रथ॑म॒मृत॑स्य द्रवि॒त्नुम्। आ नो॑ वह॒ रोद॑सी दे॒वपु॑त्रे॒ माकि॑र्दे॒वाना॒मप॑ भूरि॒ह स्याः ॥९॥१२॥

---

॥ १३ ॥ १–५ विवस्वानादित्यः ॥ हविर्धाने ॥ १–४ त्रिष्टुप्। ५ जगती ॥

॥१३॥ यु॒जे वां॒ ब्रह्म॑ पू॒र्व्यं नमो॑भि॒र्वि श्लोक॑ एतु प॒थ्ये॑व सू॒रेः। शृ॒ण्वन्तु॒ विश्वे॑ अ॒मृत॑स्य पु॒त्रा आ ये धामा॑नि दि॒व्यानि॑ त॒स्थुः ॥१॥ य॒मे इ॑व॒ यत॑माने॒ यदैतं॒ प्र वां॑ भर॒न्मानु॑षा देव॒यन्तः॑। आ सी॑दतं॒ स्वमु॑ लो॒कं विदा॑ने स्वास॒स्थे भ॑वत॒मिन्द॑वे नः

॥१२॥ द्यावा॑ ह॒ क्षामा॑ प्रथ॒मे ऋ॒तेन॑ अ॒भि॒ऽश्रा॒वे भ॑वतः स॒त्य॒ऽवाचा॑ दे॒वः यत् मर्ता॑न् य॒जथा॑य कृ॒ण्वन् सीद॑त् होता॑ प्र॒त्यङ् स्वं अ॒सुं यन् ॥१॥ दे॒वः दे॒वान् प॒रि॒ऽभूः ऋ॒तेन॑ वह॑ नः ह॒व्यं प्र॒थ॒मः चि॒कि॒त्वान् धू॒मऽके॑तुः स॒म्ऽइ॑धा भाः॒ऽऋ॒जीकः म॒न्द्रः होता॑ नित्यः वा॒चा यजी॑यान् ॥२॥ स्वावृ॑क् दे॒वस्य॑ अ॒मृतं॑ यदि॑ गोः अतः॑ जा॒तासः॑ धा॒र॒य॒न्ते उ॒र्वी॒ इति॑ विश्वे॑ दे॒वाः अनु॑ तत् ते॒ यजुः॑ गुः॒ दु॒हे यत् एनी॑ दि॒व्यं घृ॒तं वाः॑० ॥३॥ अर्चा॑मि वा॒ं वर्धा॑य अपः॑ घृ॒त॒स्नू॒ इति॑ घृतऽस्नू॑ द्यावा॑भूमी॒ इति॑ शृ॒णु॒तं रो॒द॒सी॒ इति॑ मे॒ अहा॑ यत् द्या॒वः अ॒सुऽनी॑तिं अय॑न् मध्वा॑ नः॒ अत्र॑ पि॒तरा॑ शि॒शी॒तां ॥४॥ किं स्वि॒त् नः॒ राजा॑ ज॒गृ॒हे॒ कत् अ॒स्य॒ अति॑ व्र॒तं च॒कृ॒म॒ कः वि वे॒द॒ मि॒त्रः चि॒त् हि स्म॒ जु॒हु॒रा॒णः दे॒वान् श्लोकः॑ न या॒तां अपि॑ वाजः॑ अस्ति॑ ॥५॥११॥ दुः॒ऽमन्तु॑ अत्र॑ अ॒मृत॑स्य नाम॑ स॒ऽल॑क्ष्मा यत् वि॒षु॑ऽरूपा भवा॑ति य॒मस्य॑ यः मन॑वते सु॒ऽमन्तु॑ अग्ने॑ तं ऋ॒ष्व॒ पा॒हि॒ अप्र॑ऽयुच्छन् ॥६॥ यस्मि॑न् दे॒वाः वि॒दथे॑ मा॒दय॑न्ते वि॒वस्व॑तः सद॑ने धा॒रय॑न्ते सूर्ये॑ ज्योतिः॑ अ॒द॒धुः मा॒सि अ॒क्तून् परि॑ द्यो॒त॒निं च॒र॒तः अज॑स्रा ॥७॥ यस्मि॑न् दे॒वाः मन्म॑नि सं॒ऽचर॑न्ति अ॒पी॒च्ये॑ न व॒यं अ॒स्य वि॒द्म मि॒त्रः नः॒ अत्र॑ अदि॑तिः अना॑गान् स॒वि॒ता दे॒वः वरु॑णाय वो॒चत् ॥८॥ श्रु॒धि नः॑ अग्ने॒ सद॑ने स॒ध॒ऽस्थे॑ यु॒क्ष्व रथं॑ अ॒मृत॑स्य द्र॒वि॒त्नुं आ नः॑ वह॒ रोद॑सी॒ इति॑ दे॒वऽपु॑त्रे॒ इति॑ दे॒वऽपु॑त्रे॒ माकिः॑ दे॒वानां॑ अप॑ भूः इ॒ह स्याः॑ ॥९॥१२॥

---

॥१३॥ यु॒जे वां॒ ब्रह्म॑ पू॒र्व्यं नमः॑ऽभिः वि श्लोकः॑ ए॒तु॒ प॒थ्या॑ऽइव सूरेः॑ शृ॒ण्वन्तु॑ विश्वे॑ अ॒मृत॑स्य पु॒त्राः आ ये धामा॑नि दि॒व्यानि॑ त॒स्थुः ॥१॥ य॒मे॑ऽइव॑० यत॑माने॒ इति॑ यत् ऐतं॑ प्र वां॒ भ॒र॒न् मानु॑षाः दे॒व॒ऽयन्तः॑ आ सी॒द॒तं स्वं उँ॒ इति॑ लो॒कं विदा॑ने॒ इति॑ सु॒ऽआ॒स॒स्थे॒॰ भ॒व॒तं इन्द॑वे नः॒



Digitized by Google

॥२॥ पंच पदानि रूपो अन्वरोहं चतुष्पदीमन्वेमि व्रतेन। अक्षरेण
प्रति मिम एतामृतस्य नाभावधि सं पुनामि॥३॥ देवेभ्यः कम-
वृणीत मृत्युं प्रजायै कममृतं नावृणीत। बृहस्पतिं यज्ञमकृण्वत
ऋषिं प्रियां यमस्तन्वं१ प्रारिरेचीत॥४॥ सप्त क्षरंति शिशवे म-
रुत्वते पित्रे पुत्रासो अप्यवीवतन्नृतं। उभे इदस्योभयस्य राजत
उभे यतेते उभयस्य पुष्यतः ॥ ५ ॥ १३ ॥

---

॥ १४ ॥ १–१६ यमः ॥ १–५. १३–१६ यमः। ६ लिंगोक्तदेवताः। ७–९ लिंगोक्तदेवताः
पितरो वा। १०–१२ श्वानौ ॥ १–१२ त्रिष्टुप्। १३. १४. १६ अनुष्टुप्। १५ बृहती ॥

॥ १४ ॥ परेयिवांसं प्रवतो महीरनु बहुभ्यः पंथामनुपस्प-
शानं। वैवस्वतं संगमनं जनानां यमं राजानं हविषा दुवस्य
॥ १ ॥ यमो नो गातुं प्रथमो विवेद नैषा गव्यूतिरपभर्तवा
उ। यत्रा नः पूर्वे पितरः परेयुरेना जज्ञानाः पथ्या३ अनु स्वाः
॥ २ ॥ मातली कव्यैर्यमो अंगिरोभिर्बृहस्पतिर्ऋक्वभिर्वावृधा-
नः। यांश्च देवा वावृधुर्ये च देवान्त्स्वाहान्ये स्वधयान्ये
मदंति ॥ ३ ॥ इमं यम प्रस्तरमा हि सीदांगिरोभिः पितृभिः
संविदानः। आ त्वा मंत्राः कविशस्ता वहंत्वेना राजन्हविषा
मादयस्व ॥ ४ ॥ अंगिरोभिरा गहि यज्ञियेभिर्यम वैरूपैरिह
मादयस्व। विवस्वंतं हुवे यः पिता तेऽस्मिन्यज्ञे बर्हिष्या नि-
षद्य ॥५॥१४॥ अंगिरसो नः पितरो नवग्वा अथर्वाणो भृगवः
सोम्यासः। तेषां वयं सुमतौ यज्ञियानामपि भद्रे सौमनसे
स्याम ॥६॥ प्रेहि प्रेहि पथिभिः पूर्व्येभिर्यत्रा नः पूर्वे पितरः
परेयुः। उभा राजाना स्वधया मदंता यमं पश्यासि वरुणं च
देवं ॥ ७ ॥ सं गच्छस्व पितृभिः सं यमेनेष्टापूर्तेन परमे व्यो-
मन्। हित्वायावद्यं पुनरस्तमेहि सं गच्छस्व तन्वा सुवर्चाः



Digitized by Google

॥२॥ पंच पदानि रुपः अनु अरोहं चतुःऽपदीं अनु एमि व्रतेन अक्षरेण प्रति मिमे एतां ऋतस्य नाभौ अधि सं पुनामि ॥३॥ देवेभ्यः कं अवृणीत मृत्युं प्रऽजायै कं अमृतं न अवृणीत बृहस्पतिं यज्ञं अकृण्वत ऋषिं प्रियां यमः तन्वं प्र अरिरेचीत् ॥४॥ सप्त क्षरंति शिशवे मरुत्वते पित्रे पुत्रासः अपि अवीवतन् ऋतं उभे इत् अस्य उभयस्य राजतः उभे यतेते उभयस्य पुष्यतः ॥५॥१३॥

---

॥१४॥ परेयिऽवांसं प्रऽवतः महीः अनु बहुऽभ्यः पंथां अनुऽपस्पशानं वैवस्वतं संऽगमनं जनानां यमं राजानं हविषा दुवस्य ॥१॥ यमः नः गातुं प्रथमः विवेद न एषा गव्यूतिः अपऽभर्तवै ऊं यत्र नः पूर्वे पितरः पराऽईयुः एना जज्ञानाः पथ्याः अनु स्वाः ॥२॥ मातली कव्यैः यमः अंगिरःऽभिः बृहस्पतिः ऋक्वऽभिः ववृधानः यान् च देवाः ववृधुः ये च देवान् स्वाहा अन्ये स्वधया अन्ये मदंति ॥३॥ इमं यम प्रऽस्तरं आ हि सीद अंगिरःऽभिः पितृऽभिः संऽविदानः आ त्वा मंत्राः कविऽशस्ताः वहंतु एना राजन् हविषा मादयस्व ॥४॥ अंगिरःऽभिः आ गहि यज्ञियेभिः यम वैरूपैः इह मादयस्व विवस्वंतं हुवे यः पिता ते अस्मिन् यज्ञे बर्हिषि आ निऽसद्य ॥५॥१४॥ अंगिरसः नः पितरः नवऽग्वाः अथर्वाणः भृगवः सोम्यासः तेषां वयं सुऽमतौ यज्ञियानां अपि भद्रे सौमनसे स्याम ॥६॥ प्र इहि प्र इहि पथिऽभिः पूर्व्येभिः यत्र नः पूर्वे पितरः पराऽईयुः उभा राजाना स्वधया मदंता यमं पश्यासि वरुणं च देवं ॥७॥ सं गच्छस्व पितृऽभिः सं यमेन इष्टापूर्तेन परमे विऽओमन् हित्वाय अवद्यं पुनः अस्तं आ इहि सं गच्छस्व तन्वा सुऽवर्चाः



Digitized by Google

॥ ८ ॥ अपे॑त॒ वीत॒ वि च॑ सर्प॒तातो॑ऽस्मा ए॒तं पि॒तरो॑ लो॒क-
मंक्रन् । अहो॑भिर॒द्भिर॒क्तुभि॒र्व्य॑क्तं य॒मो द॑दात्यव॒सान॑मस्मै
॥ ९ ॥ अति॑ द्रव सारमे॒यौ श्वानौ॑ चतुर॒क्षौ श॒बलौ॑ सा॒धुना॑
प॒था । अथा॑ पि॒तॄन्त्सु॑वि॒दत्राँ॒ उपे॑हि य॒मेन॒ ये स॑ध॒मादं॒ मद॑न्ति
॥ १० ॥ १५ ॥ यौ ते॒ श्वानौ॑ यम रक्षि॒तारौ॑ चतुर॒क्षौ प॑थि॒रक्षी॑
नृ॒चक्ष॑सौ । ताभ्या॑मेनं॒ परि॑ देहि राजन्त्स्व॒स्ति चा॑स्मा अ-
नमी॒वं च॑ धेहि ॥ ११ ॥ उ॒रू॒ण॒सावसु॒तृपा॑ उदुम्ब॒लौ य॒मस्य॑
दू॒तौ च॑रतो॒ जनाँ॒ अनु॑ । ताव॒स्मभ्यं॑ दृ॒शये॒ सूर्या॑य॒ पुन॑र्दाता॒-
मसु॑म॒द्येह भ॒द्रम् ॥ १२ ॥ य॒माय॒ सोमं॑ सुनुत य॒माय॑ जुहुता
ह॒विः । य॒मं ह॑ य॒ज्ञो ग॑च्छत्य॒ग्निदू॑तो॒ अरं॑कृतः ॥ १३ ॥ य॒माय॑
घृ॒तव॑द्ध॒विर्जु॒होत॒ प्र च॑ तिष्ठत । स नो॑ दे॒वेष्वा य॑म॒द्दी॒र्घमायुः॑
प्र जी॒वसे॑ ॥ १४ ॥ य॒माय॒ मधु॑मत्तमं॒ राज्ञे॑ ह॒व्यं जु॑होतन । इ॒दं
नम॒ ऋषि॑भ्यः पूर्व॒जेभ्यः॒ पूर्वे॑भ्यः पथि॒कृद्भ्यः॑ ॥ १५ ॥ त्रिक॑द्रुके-
भिः पतति॒ षळु॒र्वीरेक॒मिद्बृ॒हत् । त्रि॒ष्टुब्गा॑य॒त्री छन्दां॑सि॒ सर्वा॒
ता य॒म आहि॑ता ॥ १६ ॥ १६ ॥

---

॥ १५ ॥ १-१४ शंखो यामायनः ॥ पितरः ॥ १-१०. १२-१४ त्रिष्टुप् । ११ जगती ॥

॥ १५ ॥ उदी॑रता॒मव॑र॒ उत्परा॑स॒ उन्म॑ध्य॒माः पि॒तरः॑ सो॒-
म्यासः॑ । असुं॒ य ई॒युर॑वृ॒का ऋ॑त॒ज्ञास्ते नो॑ऽवन्तु पि॒तरो॒ हवे॑षु
॥ १ ॥ इ॒दं पि॒तृभ्यो॒ नमो॑ अस्त्व॒द्य ये पूर्वा॑सो॒ य उप॑रास ई॒युः ।
ये पार्थि॑वे॒ रज॒स्या निष॑त्ता॒ ये वा॑ नू॒नं सु॑वृ॒जना॑सु वि॒क्षु ॥ २ ॥
आहं पि॒तॄन्त्सु॑वि॒दत्राँ॑ अवित्सि॒ नपा॑तं च वि॒क्रम॑णं च॒
विष्णोः॑ । ब॒र्हि॒षदो॒ ये स्व॒धया॑ सु॒तस्य॒ भज॑न्त पि॒त्वस्त इ॒हाग॑-
मिष्ठाः ॥ ३ ॥ बर्हि॑षदः पितर ऊ॒त्य१र्वागि॒मा वो॑ ह॒व्या च॑कृमा
जु॒षध्व॑म् । त आ ग॒ताव॑सा॒ शंत॑मे॒नाथा॑ नः॒ शं योर॑र॒पो द॑धात



Digitized by Google

॥८॥ अप इत वि इत वि च सर्पत अतः अस्मै एतं पितरः लोकं
अक्रन् अहःऽभिः अत्ऽभिः अक्तुऽभिः विऽअक्तं यमः ददाति
अवऽसानं अस्मै ॥९॥ अति द्रव सारमेयौ श्वानौ चतुःऽअक्षौ
शबलौ साधुना पथा अथ पितॄन् सुऽविदत्रान् उप इहि यमेन
ये सधऽमादं मदंति ॥१०॥१५॥ यौ ते श्वानौ यम रक्षितारौ च-
तुःऽअक्षौ पथिऽरक्षी॰ नृऽचक्षसौ ताभ्यां एनं परि देहि राजन्
स्वस्ति च अस्मै अनमीवं च धेहि ॥११॥ उरुऽनसौ असुऽतृपौ उ-
दुंबलौ यमस्य दूतौ चरतः जनान् अनु तौ अस्मभ्यं दृशये सूर्याय
पुनः दातां असुं अद्य इह भद्रं ॥१२॥ यमाय सोमं सुनुत यमाय जु-
हुत हविः यमं ह यज्ञः गच्छति अग्निऽदूतः अरंऽकृतः ॥१३॥ यमाय
घृतऽवत् हविः जुहोत प्र च तिष्ठत सः नः देवेषु आ यमत् दीर्घं
आयुः प्र जीवसे ॥१४॥ यमाय मधुमत्ऽतमं राज्ञे हव्यं जुहोतन इदं
नमः ऋषिऽभ्यः पूर्वऽजेभ्यः पूर्वेभ्यः पथिकृत्ऽभ्यः ॥१५॥ त्रिऽक-
द्रुकेभिः पतति षट् उर्वीः एकं इत् बृहत् त्रिऽस्तुप् गायत्री छंदांसि
सर्वा ता यमे आऽहिता ॥ १६ ॥ १६ ॥

---

॥१५॥ उत् ईरतां अवरे उत् परासः उत् मध्यमाः पितरः सो-
म्यासः असुं ये ईयुः अवृकाः ऋतऽज्ञाः ते नः अवंतु पितरः हवेषु
॥१॥ इदं पितृऽभ्यः नमः अस्तु अद्य ये पूर्वासः ये उपरासः ईयुः ये
पार्थिवे रजसि आ निऽसत्ताः ये वा नूनं सुऽवृजनासु विक्षु ॥२॥
आ अहं पितॄन् सुऽविदत्रान् अवित्सि नपातं च विऽक्रमणं च
विष्णोः बर्हिऽसदः ये स्वधया सुतस्य भजंत पित्वः ते इह आऽग-
मिष्ठाः ॥३॥ बर्हिऽसदः पितरः ऊती अर्वाक् इमा वः हव्या चकृम
जुषध्वं ते आ गत अवसा शंऽतमेन अथ नः शं योः अरपः दधात

॥ ४ ॥ उपहूताः पितरः सोम्यासो बर्हिष्येषु निधिषु प्रियेषु ।
त आ गमंतु त इह श्रुवंत्वधि ब्रुवंतु तेऽवंत्वस्मान् ॥५॥१७॥
आच्या जानु दक्षिणतो निषद्येमं यज्ञमभि गृणीत विश्वे । मा
हिंसिष्ट पितरः केन चिन्नो यद्व आगः पुरुषता कराम ॥ ६ ॥
आसीनासो अरुणीनामुपस्थे रयिं धत्त दाशुषे मर्त्याय । पु-
त्रेभ्यः पितरस्तस्य वस्वः प्र यच्छत त इहोर्जं दधात ॥७॥ ये
नः पूर्वे पितरः सोम्यासोऽनूहिरे सोमपीथं वसिष्ठाः । तेभि-
र्यमः संरराणो हवींष्युशन्नुशद्भिः प्रतिकाममत्तु ॥८॥ ये तातृ-
षुर्देवत्रा जेहमाना होत्राविदः स्तोमतष्टासो अर्कैः । आग्ने
याहि सुविदत्रेभिरर्वाङ् सत्यैः कव्यैः पितृभिर्घर्मसद्भिः ॥९॥ ये
सत्यासो हविरदो हविष्पा इंद्रेण देवैः सरथं दधानाः । आग्ने
याहि सहस्रं देववंदैः परैः पूर्वैः पितृभिर्घर्मसद्भिः ॥१०॥१८॥
अग्निष्वात्ताः पितर एह गच्छत सदःसदः सदत सुप्रणीतयः ।
अत्ता हवींषि प्रयतानि बर्हिष्यथा रयिं सर्ववीरं दधातन
॥११॥ त्वमग्न ईळितो जातवेदोऽवाड्ढव्यानि सुरभीणि कृत्वी ।
प्रादाः पितृभ्यः स्वधया ते अक्षन्नद्धि त्वं देव प्रयता हवींषि
॥१२॥ ये चेह पितरो ये च नेह यांश्च विद्म याँ उ च न प्र-
विद्म । त्वं वेत्थ यति ते जातवेदः स्वधाभिर्यज्ञं सुकृतं जुषस्व
॥१३॥ ये अग्निदग्धा ये अनग्निदग्धा मध्ये दिवः स्वधया
मादयंते । तेभिः स्वराळसुनीतिमेतां यथावशं तन्वं कल्प-
यस्व ॥ १४ ॥ १९ ॥

---

॥ १६ ॥ १–१४ दमनो यामायनः ॥ अग्निः ॥ १–१० त्रिष्टुप् । ११–१४ अनुष्टुप् ॥

॥१६॥ मैनमग्ने वि दहो माभि शोचो मास्य त्वचं चिक्षि-
पो मा शरीरं । यदा शृतं कृणवो जातवेदोऽथेमेनं प्र हिणु-



Digitized by Google

॥ ४ ॥ उपऽहूताः पितरः सोम्यासः बर्हिष्येषु निऽधिषु प्रियेषु ते आ
गमंतु ते इह श्रुवंतु अधि ब्रुवंतु ते अवंतु अस्मान् ॥ ५ ॥ १७ ॥ आ-
ऽअच्य जानु दक्षिणतः निऽसद्य इमं यज्ञं अभि गृणीत विश्वे मा
हिंसिष्ट पितरः केन चित् नः यत् वः आगः पुरुषता कराम ॥ ६ ॥
आसीनासः अरुणीनां उपऽस्थे रयिं धत्त दाशुषे मर्त्याय पुत्रेभ्यः
पितरः तस्य वस्वः प्र यच्छत ते इह ऊर्जं दधात ॥ ७ ॥ ये नः पूर्वे
पितरः सोम्यासः अनुऽऊहिरे सोमऽपीथं वसिष्ठाः तेभिः यमः
संऽरराणः हवींषि उशन् उशत्ऽभिः प्रतिऽकामं अत्तु ॥ ८ ॥ ये त-
तृषुः देवऽत्रा जेहमानाः होत्राऽविदः स्तोमऽतष्टासः अर्कैः आ
अग्ने याहि सुऽविदत्रेभिः अर्वाङ् सत्यैः कव्यैः पितृऽभिः घर्मसत्-
ऽभिः ॥ ९ ॥ ये सत्यासः हविःऽअदः हविःऽपाः इंद्रेण देवैः सऽरथं
दधानाः आ अग्ने याहि सहस्रं देवऽवंदैः परैः पूर्वैः पितृऽभिः घर्म-
सत्ऽभिः ॥ १० ॥ १८ ॥ अग्निऽस्वात्ताः पितरः आ इह गच्छत सदःऽ-
ऽसदः सदत सुऽप्रनीतयः अत्त हवींषि प्रऽयतानि बर्हिषि अथ
रयिं सर्वऽवीरं दधातन ॥ ११ ॥ त्वं अग्ने ईळितः जातऽवेदः अवाट्
हव्यानि सुरभीणि कृत्वी प्र अदाः पितृऽभ्यः स्वधया ते अक्षन्
अद्धि त्वं देव प्रऽयता हवींषि ॥ १२ ॥ ये च इह पितरः ये च न इह
यान् च विद्म यान् ऊँ च न प्रऽविद्म त्वं वेत्थ यति ते जातऽवेदः
स्वधाभिः यज्ञं सुऽकृतं जुषस्व ॥ १३ ॥ ये अग्निऽदग्धाः ये अनग्नि-
ऽदग्धाः मध्ये दिवः स्वधया मादयंते तेभिः स्वऽराट् असुऽनीतिं
एतां यथाऽवशं तन्वं कल्पयस्व ॥ १४ ॥ १९ ॥

---

॥ १६ ॥ मा एनं अग्ने वि दहः मा अभि शोचः मा अस्य त्वचं चि-
क्षिपः मा शरीरं यदा शृतं कृणवः जातऽवेदः अथ ईं एनं प्र हिणु-

तात्पितृभ्यः ॥ १ ॥ शृतं यदा करसि जातवेदोऽथेमेनं परि दत्तात्पितृभ्यः । यदा गच्छात्यसुनीतिमेतामथा देवानां वशनीर्भवाति ॥ २ ॥ सूर्यं चक्षुर्गच्छतु वातमात्मा द्यां च गच्छ पृथिवीं च धर्मणा । अपो वा गच्छ यदि तत्र ते हितमोषधीषु प्रति तिष्ठा शरीरैः ॥ ३ ॥ अजो भागस्तपसा तं तपस्व तं ते शोचिस्तपतु तं ते अर्चिः । यास्ते शिवास्तन्वो जातवेदस्ताभिर्वहैनं सुकृतामु लोकं ॥ ४ ॥ अव सृज पुनरग्ने पितृभ्यो यस्त आहुतश्चरति स्वधाभिः । आयुर्वसान उप वेतु शेषः सं गच्छतां तन्वा जातवेदः ॥ ५ ॥ २० ॥ यत्ते कृष्णः शकुन आतुतोद पिपीलः सर्प उत वा श्वापदः । अग्निष्टद्विश्वादगदं कृणोतु सोमश्च यो ब्राह्मणाँ आविवेश ॥ ६ ॥ अग्नेर्वर्म परि गोभिर्व्ययस्व सं प्रोर्णुष्व पीवसा मेदसा च । नेत्त्वा धृष्णुर्हरसा जर्हृषाणो दधृग्विधक्ष्यन्पर्यङ्खयाते ॥ ७ ॥ इममग्ने चमसं मा वि जिह्वरः प्रियो देवानामुत सोम्यानां । एष यश्चमसो देवपानस्तस्मिन्देवा अमृता मादयंते ॥ ८ ॥ क्रव्यादमग्निं प्र हिणोमि दूरं यमराज्ञो गच्छतु रिप्रवाहः । इहैवायमितरो जातवेदा देवेभ्यो हव्यं वहतु प्रजानन् ॥ ९ ॥ यो अग्निः क्रव्यात्प्रविवेश वो गृहमिमं पश्यन्नितरं जातवेदसं । तं हरामि पितृयज्ञाय देवं स घर्ममिन्वात्परमे सधस्थे ॥ १० ॥ २१ ॥ यो अग्निः क्रव्यवाहनः पितॄन्यक्षदृतावृधः । प्रेदु हव्यानि वोचति देवेभ्यश्च पितृभ्य आ ॥ ११ ॥ उशन्तस्त्वा नि धीमह्युशन्तः समिधीमहि । उशन्नुशत आ वह पितॄन्हविषे अत्तवे ॥ १२ ॥ यं त्वमग्ने समदहस्तमु निर्वापया पुनः । कियाम्ब्वत्र रोहतु पाकदूर्वा व्यल्कशा ॥ १३ ॥ शीतिके



Digitized by Google

तात् पितृऽभ्यः ॥१॥ शृतं यदा करसि जातऽवेदः अथ ईं एनं परि दत्तात् पितृऽभ्यः यदा गच्छाति असुऽनीतिं एतां अथ देवानां वशऽनीः भवाति॥२॥ सूर्यं चक्षुः गच्छतु वातं आत्मा द्यां च गच्छ पृथिवीं च धर्मणा अपः वा गच्छ यदि तत्र ते हितं ओषधीषु प्रति तिष्ठ शरीरैः ॥३॥ अजः भागः तपसा तं तपस्व तं ते शोचिः तपतु तं ते अर्चिः याः ते शिवाः तन्वः जातऽवेदः ताभिः वह एनं सुऽकृतां ऊं लोकं॥४॥ अव सृज पुनः अग्ने पितृऽभ्यः यः ते आऽहुतः चरति स्वधाभिः आयुः वसानः उप वेतु शेषः सं गच्छतां तन्वा जातऽवेदः ॥५॥२०॥ यत् ते कृष्णः शकुनः आऽतुतोद पिपीलः सर्पः उत वा श्वापदः अग्निः तत् विश्वऽअत् अगदं कृणोतु सोमः च यः ब्राह्मणान् आऽविवेश ॥६॥ अग्नेः वर्म परि गोभिः व्ययस्व सं प्र ऊर्णुष्व पीवसा मेदसा च न इत् त्वा धृष्णुः हरसा जर्हृषाणः दधृक् विऽधक्ष्यन् परिऽअंखयाते ॥७॥ इमं अग्ने चमसं मा वि जिह्वरः प्रियः देवानां उत सोम्यानां एषः यः चमसः देवऽपानः तस्मिन् देवाः अमृताः मादयंते ॥८॥ क्रव्यऽअदं अग्निं प्र हिणोमि दूरं यमऽराज्ञः गच्छतु रिप्रऽवाहः इह एव अयं इतरः जातऽवेदाः देवेभ्यः हव्यं वहतु प्रऽजानन्॥९॥ यः अग्निः क्रव्यऽअत् प्रऽविवेश वः गृहं इमं पश्यन् इतरं जातऽवेदसं तं हरामि पितृऽयज्ञाय देवं सः घर्मं इन्वात् परमे सधऽस्थे॥१०॥२१॥ यः अग्निः क्रव्यऽवाहनः पितॄन् यक्षत् ऋतऽवृधः प्र इत् ऊं हव्यानि वोचति देवेभ्यः च पितृऽभ्यः आ॥११॥ उशंतः त्वा नि धीमहि उशंतः सं इधीमहि उशन् उशतः आ वह पितॄन् हविषे अत्तवे ॥१२॥ यं त्वं अग्ने संऽअदहः तं ऊं इति निः वापय पुनः कियांबु अत्र रोहतु पाकऽदूर्वा विऽअल्कशा ॥१३॥ शीतिके



Digitized by Google

शीतिकावति ह्लादिके ह्लादिकावति । मंडूक्या३सु सं गम
इमं स्व१ग्निं हर्षय ॥ १४ ॥ २२ ॥ १ ॥

---

॥ १७ ॥ १–१४ देवश्रवा यामायनः ॥ १. २ सरण्यूः । ३–६ पूषा । ७–९ सरस्वती । १०. १४ आपः । ११–१३ आपः सोमो वा ॥ १–१२ त्रिष्टुप् । १३ अनुष्टुप्पुरस्ताद्बृहती वा । १४ अनुष्टुप् ॥

॥१७॥ त्वष्टा दुहित्रे वहतुं कृणोतीतीदं विश्वं भुवनं समेति ।
यमस्य माता पर्युह्यमाना महो जाया विवस्वतो ननाश
॥ १ ॥ अपागूहन्नमृतां मर्त्येभ्यः कृत्वी सवर्णामददुर्विवस्वते ।
उताश्विनावभरद्यत्तदासीदजहादु द्वा मिथुना सरण्यूः ॥ २ ॥
पूषा त्वेतश्च्यावयतु प्र विद्वाननष्टपशुर्भुवनस्य गोपाः । स
त्वैतेभ्यः परि ददत्पितृभ्योऽग्निर्देवेभ्यः सुविदत्रियेभ्यः ॥ ३ ॥ आ-
युर्विश्वायुः परि पासति त्वा पूषा त्वा पातु प्रपथे पुरस्तात् ।
यत्रासते सुकृतो यत्र ते ययुस्तत्र त्वा देवः सविता दधातु ॥ ४ ॥
पूषेमा आशा अनु वेद सर्वाः सो अस्माँ अभयतमेन नेषत् ।
स्वस्तिदा आघृणिः सर्ववीरोऽप्रयुच्छन्पुर एतु प्रजानन् ॥ ५ ॥ २३ ॥
प्रपथे पथामजनिष्ट पूषा प्रपथे दिवः प्रपथे पृथिव्याः । उभे
अभि प्रियतमे सधस्थे आ च परा च चरति प्रजानन् ॥ ६ ॥
सरस्वतीं देवयंतो हवंते सरस्वतीमध्वरे तायमाने । सरस्व-
तीं सुकृतो अह्वयंत सरस्वती दाशुषे वार्यं दात् ॥ ७ ॥ सरस्वति
या सरथं ययाथ स्वधाभिर्देवि पितृभिर्मदंती । आसद्यास्मि-
न्बर्हिषि मादयस्वानमीवा इष आ धेह्यस्मे ॥ ८ ॥ सरस्वतीं यां
पितरो हवंते दक्षिणा यज्ञमभिनक्षमाणाः । सहस्रार्घमिळो
अत्र भागं रायस्पोषं यजमानेषु धेहि ॥ ९ ॥ आपो अस्मान्मा-
तरः शुंधयंतु घृतेन नो घृतप्वः पुनंतु । विश्वं हि रिप्रं प्रवहंति



Digitized by Google

शीतिकाऽवति ह्लादिके ह्लादिकाऽवति मंडूक्या सु सं गमः इमं सु अग्निं हर्षय ॥ १४ ॥ २२ ॥ १ ॥

---

॥१७॥ त्वष्टा दुहित्रे वहतुं कृणोति इति इदं विश्वं भुवनं सं एति यमस्य माता परिऽउह्यमाना महः जाया विवस्वतः ननाश ॥१॥ अप अगूहन् अमृतां मर्त्येभ्यः कृत्वी सऽवर्णां अददुः विवस्वते उत अश्विनौ अभरत् यत् तत् आसीत् अजहात् ऊं इति द्वा मिथुना सरण्यूः ॥२॥ पूषा त्वा इतः च्यवयतु प्र विद्वान् अनष्टऽपशुः भुवनस्य गोपाः सः त्वा एतेभ्यः परि ददत् पितृऽभ्यः अग्निः देवेभ्यः सुऽविदत्रियेभ्यः ॥ ३ ॥ आयुः विश्वऽआयुः परि पासति त्वा पूषा त्वा पातु प्रऽपथे पुरस्तात् यत्र आसते सुऽकृतः यत्र ते ययुः तत्र त्वा देवः सविता दधातु ॥ ४ ॥ पूषा इमाः आशाः अनु वेद सर्वाः सः अस्मान् अभयऽतमेन नेषत् स्वस्तिऽदाः आघृणिः सर्वऽवीरः अप्रऽयुच्छन् पुरः एतु प्रऽजानन् ॥ ५ ॥ २३ ॥ प्रऽपथे पथां अजनिष्ट पूषा प्रऽपथे दिवः प्रऽपथे पृथिव्याः उभे इति अभि प्रियऽतमे इति सधऽस्थे इति आ च परा च चरति प्रऽजानन् ॥ ६ ॥ सरस्वतीं देवऽयंतः हवंते सरस्वतीं अध्वरे तायमाने सरस्वतीं सुऽकृतः अह्वयंत सरस्वती दाशुषे वार्यं दात् ॥ ७ ॥ सरस्वति या सऽरथं ययाथ स्वधाभिः देवि पितृऽभिः मदंती आऽसद्य अस्मिन् बर्हिषि मादयस्व अनमीवाः इषः आ धेहि अस्मे इति ॥ ८ ॥ सरस्वतीं यां पितरः हवंते दक्षिणा यज्ञं अभिऽनक्षमाणाः सहस्रऽअर्घं इळः अत्र भागं रायः पोषं यजमानेषु धेहि ॥ ९ ॥ आपः अस्मान् मातरः शुंधयंतु घृतेन नः घृतऽप्वः पुनंतु विश्वं हि रिप्रं प्रऽवहंति



Digitized by Google

देवीरुदिदाभ्यः शुचिरा पूत एमि ॥१०॥२४॥ द्रप्सश्चस्कंद प्रथमाँ अनु द्यूनिमं च योनिमनु यश्च पूर्वः। समानं योनिमनु संचरंतं द्रप्सं जुहोम्यनु सप्त होत्राः ॥११॥ यस्ते द्रप्सः स्कंदति यस्ते अंशुर्बाहुच्युतो धिषणाया उपस्थात्। अध्वर्योर्वा परि वा यः पवित्रात्तं ते जुहोमि मनसा वषट्कृतं ॥१२॥ यस्ते द्रप्सः स्कन्नो यस्ते अंशुरवश्च यः परः स्रुचा। अयं देवो बृहस्पतिः सं तं सिंचतु राधसे ॥१३॥ पयस्वतीरोषधयः पयस्वन्मामकं वचः। अपां पयस्वदित्पयस्तेन मा सह शुंधत ॥१४॥२५॥

---

॥ १८ ॥ १–१४ संकुसुको यामायनः ॥ १–४ मृत्युः । ५ धाता । ६ त्वष्टा । ७–१३ पितृमेधः । १४ पितृमेधः प्रजापतिर्वा ॥ १–१०. १२ त्रिष्टुप् । ११ प्रस्तारपंक्तिः । १३ जगती । १४ अनुष्टुप् ॥

॥१८॥ परं मृत्यो अनु परेहि पंथां यस्ते स्व इतरो देवयानात्। चक्षुष्मते शृण्वते ते ब्रवीमि मा नः प्रजां रीरिषो मोत वीरान् ॥१॥ मृत्योः पदं योपयंतो यदैत द्राघीय आयुः प्रतरं दधानाः। आप्यायमानाः प्रजया धनेन शुद्धाः पूता भवत यज्ञियासः ॥२॥ इमे जीवा वि मृतैराववृत्रन्नभूद्भद्रा देवहूतिर्नो अद्य। प्रांचो अगाम नृतये हसाय द्राघीय आयुः प्रतरं दधानाः ॥३॥ इमं जीवेभ्यः परिधिं दधामि मैषां नु गादपरो अर्थमेतं। शतं जीवंतु शरदः पुरूचीरंतर्मृत्युं दधतां पर्वतेन ॥४॥ यथाहान्यनुपूर्वं भवंति यथ ऋतव ऋतुभिर्यंति साधु। यथा न पूर्वमपरो जहात्येवा धातरायूंषि कल्पयैषां ॥५॥२६॥ आ रोहतायुर्जरसं वृणाना अनुपूर्वं यतमाना यति ष्ठ। इह त्वष्टा सुजनिमा सजोषा दीर्घमायुः करति जीवसे वः ॥६॥ इमा नारीरविधवाः सुपत्नीरांजनेन सर्पिषा सं विशंतु। अनश्रवोऽनमीवाः सुरत्ना आ रोहंतु जनयो योनि-



Digitized by Google

देवीः उत इत आभ्यः शुचिः आ पूतः एमि ॥१०॥२४॥ द्रप्सः चस्कंद प्रथमान् अनु द्यून् इमं च योनिं अनु यः च पूर्वः समानं योनिं अनु संऽचरंतं द्रप्सं जुहोमि अनु सप्त होत्राः ॥११॥ यः ते द्रप्सः स्कंदति यः ते अंशुः बाहुऽच्युतः धिषणायाः उपऽस्थात् अध्वर्योः वा परि वा यः पवित्रात् तं ते जुहोमि मनसा वषट्ऽकृतं ॥१२॥ यः ते द्रप्सः स्कन्नः यः ते अंशुः अवः च यः परः स्रुचा अयं देवः बृहस्पतिः सं तं सिंचतु राधसे ॥१३॥ पयस्वतीः ओषधयः पयस्वत् मामकं वचः अपां पयस्वत् इत् पयः तेन मा सह शुंधत ॥ १४ ॥ २५ ॥

---

॥१८॥ परं मृत्यो इति अनु परा इहि पंथां यः ते स्वः इतरः देवऽयानात् चक्षुष्मते शृण्वते ते ब्रवीमि मा नः प्रऽजां रिरिषः मा उत वीरान् ॥१॥ मृत्योः पदं योपयंतः यत् ऐत द्राघीयः आयुः प्रऽतरं दधानाः आऽप्यायमानाः प्रऽजया धनेन शुद्धाः पूताः भवत यज्ञियासः ॥२॥ इमे जीवाः वि मृतैः आ अववृत्रन् अभूत् भद्रा देवऽहूतिः नः अद्य प्रांचः अगाम नृतये हसाय द्राघीयः आयुः प्रऽतरं दधानाः ॥३॥ इमं जीवेभ्यः परिऽधिं दधामि मा एषां नु गात् अपरः अर्थं एतं शतं जीवंतु शरदः पुरूचीः अंतः मृत्युं दधतां पर्वतेन ॥४॥ यथा अहानि अनुऽपूर्वं भवंति यथा ऋतवः ऋतुऽभिः यंति साधु यथा न पूर्वं अपरः जहाति एव धातः आयूंषि कल्पय एषां ॥५॥२६॥ आ रोहत आयुः जरसं वृणानाः अनुऽपूर्वं यतमानाः यति स्थ इह त्वष्टा सुऽजनिमा सऽजोषाः दीर्घं आयुः करति जीवसे वः ॥६॥ इमाः नारीः अविधवाः सुऽपत्नीः आऽअंजनेन सर्पिषा सं विशंतु अनश्रवः अनमीवाः सुऽरत्नाः आ रोहंतु जनयः योनिं



Digitized by Google

मये ॥ ७ ॥ उदीर्ष्व नार्यभि जीवलोकं गतासुमेतमुप शेष एहि । हस्तग्राभस्य दिधिषोस्तवेदं पत्युर्जनित्वमभि सं बभूथ ॥ ८ ॥ धनुर्हस्तादाददानो मृतस्यास्मे क्षत्राय वर्चसे बलाय । अत्रैव त्वमिह वयं सुवीरा विश्वाः स्पृधो अभिमातीर्जयेम ॥ ९ ॥ उप सर्प मातरं भूमिमेतामुरुव्यचसं पृथिवीं सुशेवां । ऊर्णम्रदा युवतिर्दक्षिणावत एषा त्वा पातु निर्ऋतेरुपस्थात् ॥१०॥२७॥ उच्छ्वञ्चस्व पृथिवि मा नि बाधथाः सूपायनास्मै भव सूपवंचना । माता पुत्रं यथा सिचाभ्येनं भूम ऊर्णुहि ॥ ११ ॥ उच्छ्वञ्चमाना पृथिवी सु तिष्ठतु सहस्रं मित उप हि श्रयंतां । ते गृहासो घृतश्चुतो भवंतु विश्वाहास्मै शरणाः संत्वत्र ॥१२॥ उत्ते स्तभ्नामि पृथिवीं त्वत्परीमं लोगं निदधन्मो अहं रिषं । एतां स्थूणां पितरो धारयंतु तेऽत्रा यमः सादना ते मिनोतु ॥ १३ ॥ प्रतीचीने मामहनीष्वाः पर्णमिवा दधुः । प्रतीचीं जग्रभा वाचमश्वं रशनया यथा ॥ १४ ॥ २८ ॥ ६ ॥

---

॥ १९ ॥ १–८ मथितो यामायनो भृगुर्वा वारुणिश्च्यवनो वा भार्गवः ॥ १[१]. २–८ आपो गावो वा । १[२]: अग्नीषोमौ ॥ १–५. ७. ८. अनुष्टुप् । ६ गायत्री ॥

॥ १९ ॥ नि वर्तध्वं मानु गातास्मान्त्सिषक्त रेवतीः । अग्नीषोमा पुनर्वसू अस्मे धारयतं रयिं ॥ १ ॥ पुनरेना नि वर्तय पुनरेना न्या कुरु । इंद्र एणा नि यच्छत्वग्निरेना उपाजतु ॥ २ ॥ पुनरेता नि वर्ततामस्मिन्पुष्यंतु गोमतौ । इहैवाग्ने नि धारयेह तिष्ठतु या रयिः ॥ ३ ॥ यन्नियानं न्ययनं संज्ञानं यत्परायणं । आवर्तनं निवर्तनं यो गोपा अपि तं हुवे ॥ ४ ॥ य उदानड्व्ययनं य उदानट्परायणं । आवर्तनं निवर्तनमपि गोपा नि वर्ततां ॥ ५ ॥



Digitized by Google

अये॥ ७॥ उत् ईर्ष्व नारि अभि जीवऽलोकं गतऽअसुं एतं उप शेषे आ इहि हस्तऽग्राभस्य दिधिषोः तव इदं पत्युः जनिऽत्वं अभि सं बभूथ॥ ८॥ धनुः हस्तात् आऽददानः मृतस्य अस्मे क्षत्राय वर्चसे बलाय अत्र एव त्वं इह वयं सुऽवीराः विश्वाः स्पृधः अभिऽमातीः जयेम॥ ९॥ उप सर्प मातरं भूमिं एतां उरुऽव्यचसं पृथिवीं सुऽशेवां ऊर्णंऽम्रदाः युवतिः दक्षिणाऽवते एषा त्वा पातु निःऽऋतेः उपऽस्थात्॥ १०॥ २७॥ उत् श्वंचस्व पृथिवि मा नि बाधथाः सुऽउपायना अस्मै भव सुऽउपवंचना माता पुत्रं यथा सिचा अभि एनं भूमे ऊर्णुहि॥ ११॥ उत्ऽश्वंचमाना पृथिवी सु तिष्ठतु सहस्रं मितः उप हि श्रयंतां ते गृहासः घृतऽश्चुतः भवंतु विश्वाहा अस्मै शरणाः संतु अत्र॥ १२॥ उत् ते स्तभ्नामि पृथिवीं त्वत् परि इमं लोगं निऽदधत् मो अहं रिषं एतां स्थूणां पितरः धारयंतु ते अत्र यमः सदना ते मिनोतु॥ १३॥ प्रतीचीने मां अहनि इष्वाः पर्णंऽइव आ दधुः प्रतीचीं जग्रभ वाचं अश्वं रशनया यथा ॥ १४ ॥ २८ ॥ ६ ॥

---

॥१९॥ नि वर्तध्वं मा अनु गात अस्मान् सिसक्त रेवतीः अग्नीषोमा पुनःऽवसू॰ अस्मे धारयतं रयिं॥ १॥ पुनः एनाः नि वर्तय पुनः एनाः नि आ कुरु इंद्रः एनाः नि यच्छतु अग्निः एनाः उपऽअजंतु॥ २॥ पुनः एताः नि वर्ततां अस्मिन् पुष्यंतु गोऽपतौ इह एव अग्ने नि धारय इह तिष्ठतु या रयिः॥ ३॥ यत् निऽयानं निऽअयनं संऽज्ञानं यत् पराऽअयनं आऽवर्तनं निऽवर्तनं यः गोपाः अपि तं हुवे॥ ४॥ यः उत्ऽआनट् विऽअयनं यः उत्ऽआनट् पराऽअयनं आऽवर्तनं निऽवर्तनं अपि गोपाः नि वर्ततां॥ ५॥



Digitized by Google

आ निवर्त नि वर्तय पुनर्न इंद्र गा देहि। जीवाभिर्भुनजामहै ॥६॥ परि वो विश्वतो दध ऊर्जा घृतेन पयसा। ये देवाः के च यज्ञियास्ते रय्या सं सृजंतु नः ॥७॥ आ निवर्तन वर्तय नि निवर्तन वर्तय। भूम्याश्चतस्रः प्रदिशस्ताभ्य एना नि वर्तय ॥८॥१॥

॥ २० ॥ १–१० विमद ऐंद्रः प्राजापत्यो वा वसुकृद्वा वासुक्रः ॥ अग्निः ॥ १ एकपदा (पाद एव वा शांत्यर्थः)। २ अनुष्टुप्। ३–८ गायत्री। ९ विराट्। १० त्रिष्टुप् ॥

॥२०॥ भद्रं नो अपि वातय मनः ॥१॥ अग्निमीळे भुजां यविष्ठं शासा मित्रं दुर्धरीतुं। यस्य धर्मन्स्व१रेनीः सपर्यंति मातुरूधः ॥२॥ यमासा कृपनीळं भासाकेतुं वर्धयंति। भ्राजते श्रेणिदन् ॥३॥ अर्यो विशां गातुरेति प्र यदानड्दिवो अंतान्। कविरभ्रं दीद्यानः ॥४॥ जुषद्धव्या मानुषस्योर्ध्वस्तस्थावृभ्वा यज्ञे। मिन्वन्सद्म पुर एति ॥५॥ स हि क्षेमो हविर्यज्ञः श्रुष्टीदस्य गातुरेति। अग्निं देवा वाशीमंतं ॥६॥२॥ यज्ञासाहं दुव इषेऽग्निं पूर्वस्य शेवस्य। अद्रेः सूनुमायुमाहुः ॥७॥ नरो ये के चास्मदा विश्वेत्ते वाम आ स्युः। अग्निं हविषा वर्धंतः ॥८॥ कृष्णः श्वेतोऽरुषो यामो अस्य ब्रध्न ऋज्र उत शोणो यशस्वान्। हिरण्यरूपं जनिता जजान ॥९॥ एवा ते अग्ने विमदो मनीषामूर्जो नपादमृतेभिः सजोषाः। गिर आ वक्षत्सुमतीरियान इषमूर्जं सुक्षितिं विश्वमाभाः ॥१०॥३॥

॥ २१ ॥ १–८ विमद ऐंद्रः प्राजापत्यो वा वसुकृद्वा वासुक्रः ॥ अग्निः ॥ आस्तारपंक्तिः ॥

॥२१॥ आग्निं न स्ववृक्तिभिर्होतारं त्वा वृणीमहे। यज्ञाय स्तीर्णबर्हिषे वि वो मदे शीरं पावकशोचिषं विवक्षसे ॥१॥ त्वामु ते स्वाभुवः शुंभंत्यश्वराधसः। वेति त्वामुपसेचनी वि वो मद ऋजीतिरग्न आहुतिर्विवक्षसे ॥२॥ त्वे धर्माण आ-



Digitized by Google

आ निऽवर्त नि वर्तय पुनः नः इंद्र गाः देहि जीवाभिः भुनजामहे ॥ ६ ॥ परि वः विश्वतः दधे ऊर्जा घृतेन पयसा ये देवाः के च यज्ञियाः ते रय्या सं सृजंतु नः ॥ ७ ॥ आ निऽवर्तन वर्तय नि निऽवर्तन वर्तय भूम्याः चतस्रः प्रऽदिशः ताभ्यः एनाः नि वर्तय ॥ ८ ॥ १ ॥

---

॥२०॥ भद्रं नः अपि वातय मनः ॥१॥ अग्निं ईळे भुजां यविष्ठं शासा मित्रं दुःऽधरीतुं यस्य धर्मन् स्वः एनीः सपर्यंति मातुः ऊधः ॥२॥ यं आसा कृपऽनीळं भासाऽकेतुं वर्धयंति भ्राजते श्रेणिऽदन् ॥३॥ अर्यः विशां गातुः एति प्र यत् आनट् दिवः अंतान् कविः अभ्रं दीद्यानः ॥४॥ जुषत् हव्या मानुषस्य ऊर्ध्वः तस्थौ ऋभ्वा यज्ञे मिन्वन् सद्म पुरः एति ॥५॥ सः हि क्षेमः हविः यज्ञः श्रुष्टी इत् अस्य गातुः एति अग्निं देवाः वाशीऽमंतं ॥६॥२॥ यज्ञऽसहं दुवः इषे अग्निं पूर्वस्य शेवस्य अद्रेः सूनुं आयुं आहुः ॥ ७ ॥ नरः ये के च अस्मत् आ विश्वा इत् ते वामे आ स्युः॰ अग्निं हविषा वर्धंतः ॥८॥ कृष्णः श्वेतः अरुषः यामः अस्य ब्रध्नः ऋज्रः उत शोणः यशस्वान् हिरण्यऽरूपं जनिता जजान ॥९॥ एव ते अग्ने विऽमदः मनीषां ऊर्जः नपात् अमृतेभिः सऽजोषाः गिरः आ वक्षत् सुऽमतीः इयानः इषं ऊर्जं सुऽक्षितिं विश्वं आ अभाः॰ ॥ १० ॥ ३ ॥

---

॥२१॥ आ अग्निं न स्ववृक्तिऽभिः होतारं त्वा वृणीमहे यज्ञाय स्तीर्णऽबर्हिषे वि वः मदे शीरं पावकऽशोचिषं विवक्षसे ॥१॥ त्वां ऊं ते सुऽआभुवः शुंभंति अश्वऽराधसः वेति त्वां उपऽसेचनी वि वः मदे ऋजीतिः अग्ने आऽहुतिः विवक्षसे ॥२॥ त्वे धर्माणः आ-



Digitized by Google

मते जुहूभिः सिंचतीरिव। कृष्णा रूपाण्यर्जुना वि वो मदे वि-
श्वा अधि श्रियो धिषे विवक्षसे॥३॥ यमग्ने मन्यसे रयिं सह-
सावन्नमर्त्य। तमा नो वाजसातये वि वो मदे यज्ञेषु चित्रमा
भरा विवक्षसे॥४॥ अग्निर्जातो अथर्वणा विदद्विश्वानि काव्या।
भुवद्दूतो विवस्वतो वि वो मदे प्रियो यमस्य काम्यो विवक्षसे
॥५॥४॥ त्वां यज्ञेष्वीळतेऽग्ने प्रयत्यध्वरे। त्वं वसूनि काम्या वि वो
मदे विश्वा दधासि दाशुषे विवक्षसे॥६॥ त्वां यज्ञेष्वृत्विजं चारु-
मग्ने नि षेदिरे। घृतप्रतीकं मनुषो वि वो मदे शुक्रं चेतिष्ठमक्ष-
भिर्विवक्षसे॥७॥ अग्ने शुक्रेण शोचिषोरु प्रथयसे बृहत्। अभि-
क्रंदन्वृषायसे वि वो मदे गर्भं दधासि जामिषु विवक्षसे॥८॥५॥

---

॥ २२ ॥ १–१५ विमद ऐंद्रः प्राजापत्यो वा वसुकृद्वा वासुक्रः ॥ इंद्रः ॥
१–४. ६. ८. १०–१४ पुरस्ताद्बृहती। ५. ७. ९ अनुष्टुप्। १५ त्रिष्टुप्॥

॥२२॥ कुह श्रुत इंद्रः कस्मिन्नद्य जने मित्रो न श्रूयते। ऋषी-
णां वा यः क्षये गुहा वा चर्कृषे गिरा॥१॥ इह श्रुत इंद्रो अस्मे
अद्य स्तवे वज्र्यृचीषमः। मित्रो न यो जनेष्वा यशश्चक्रे असा-
म्या॥२॥ महो यस्पतिः शवसो असाम्या महो नृम्णस्य तूतु-
जिः। भर्ता वज्रस्य धृष्णोः पिता पुत्रमिव प्रियं॥३॥ युजानो
अश्वा वातस्य धुनी देवो देवस्य वज्रिवः। स्यंता पथा विरुक्म-
ता सृजानः स्तोष्यध्वनः॥४॥ त्वं त्या चिद्वातस्याश्वागा ऋज्रा
त्मना वहध्यै। ययोर्देवो न मर्त्यो यंता नकिर्विदाय्यः॥५॥६॥
अध ग्मंतोशना पृच्छते वां कदर्था न आ गृहं। आ जग्मथुः
पराकाद्दिवश्च ग्मश्च मर्त्यं॥६॥ आ न इंद्र पृक्षसेऽस्माकं
ब्रह्मोद्यतं। तत्त्वा याचामहेऽवः शुष्णं यद्धन्नमानुषं॥७॥ अ-
कर्मा दस्युरभि नो अमंतुरन्यव्रतो अमानुषः। त्वं तस्या-



Digitized by Google

सते जुहूभिः सिंचतीःऽइव कृष्णा रूपाणि अर्जुना वि वः मदे वि-
श्वाः अधि श्रियः धिषे विवक्षसे ॥३॥ यं अग्ने मन्यसे रयिं सहसा-
ऽवन् अमर्त्य तं आ नः वाजऽसातये वि वः मदे यज्ञेषु चित्रं आ
भर विवक्षसे ॥४॥ अग्निः जातः अथर्वणा विदत् विश्वानि काव्या
भुवत् दूतः विवस्वतः वि वः मदे प्रियः यमस्य काम्यः विवक्षसे
॥५॥४॥ त्वां यज्ञेषु ईळते अग्ने प्रऽयति अध्वरे त्वं वसूनि काम्या वि
वः मदे विश्वा दधासि दाशुषे विवक्षसे ॥६॥ त्वां यज्ञेषु ऋत्विजं
चारुं अग्ने नि सेदिरे घृतऽप्रतीकं मनुषः वि वः मदे शुक्रं चेतिष्ठं
अक्षऽभिः विवक्षसे ॥७॥ अग्ने शुक्रेण शोचिषा उरु प्रथयसे बृहत्
अभिऽक्रंदन् वृषऽयसे वि वः मदे गर्भं दधासि जामिषु विवक्षसे
॥ ८ ॥ ५ ॥

---

॥२२॥ कुह श्रुतः इंद्रः कस्मिन् अद्य जने मित्रः न श्रूयते ऋषी-
णां वा यः क्षये गुहा वा चर्कृषे गिरा ॥१॥ इह श्रुतः इंद्रः अस्मे अद्य
स्तवे वज्री ऋचीषमः मित्रः न यः जनेषु आ यशः चक्रे असामि
आ ॥२॥ महः यः पतिः शवसः असामि आ महः नृम्णस्य तूतुजिः
भर्ता वज्रस्य धृष्णोः पिता पुत्रंऽइव प्रियं ॥३॥ युजानः अश्वा वा-
तस्य धुनी देवः देवस्य वज्रिऽवः स्यंता पथा विरुक्मता सृजानः
स्तोषि अध्वनः ॥४॥ त्वं त्या चित् वातस्य अश्वा आ अगाः ऋज्रा
त्मना वहध्यै ययोः देवः न मर्त्यः यंता नकिः विदाय्यः ॥५॥६॥ अध
ग्मंता उशना पृच्छते वां कतऽअर्था नः आ गृहं आ जग्मथुः परा-
कात् दिवः च ग्मः च मर्त्यं ॥६॥ आ नः इंद्र पृक्षसे अस्माकं ब्रह्म
उतऽयतं तत् त्वा याचामहे अवः शुष्णं यत् हन् अमानुषं ॥७॥
अकर्मा दस्युः अभि नः अमंतुः अन्यऽव्रतः अमानुषः त्वं तस्य अ-



Digitized by Google

मिथहुन्वर्धदासस्य दंभय ॥८॥ त्वं न इंद्र शूर शूरैरुत त्वोतासो बर्हणा। पुरुत्रा ते वि पूर्तयो नवंत क्षोणयो यथा ॥९॥ त्वं तान्वृत्रहत्ये चोदयो नृन्कार्पाणे शूर वज्रिवः। गुहा यदी कवीनां विशां नक्षत्रशवसां ॥१०॥७॥ मक्षू ता त इंद्र दानाप्नस आक्षाणे शूर वज्रिवः। यद्ध शुष्णस्य दंभयो जातं विश्वं सयावभिः ॥११॥ माकुध्र्यगिंद्र शूर वस्वीरस्मे भूवन्नभिष्टयः। वयंवयं त आसां सुम्ने स्याम वज्रिवः ॥१२॥ अस्मे ता त इंद्र संतु सत्याहिंसंतीरुपस्पृशः। विद्याम यासां भुजो धेनूनां न वज्रिवः ॥१३॥ अहस्ता यदपदी वर्धत क्षाः शचीभिर्वेद्यानां। शुष्णं परि प्रदक्षिणिद्विश्वायवे नि शिश्नथः ॥१४॥ पिबापिबेदिंद्र शूर सोमं मा रिषण्यो वसवान वसुः सन्। उत त्रायस्व गृणतो मघोनो महश्च रायो रेवतस्कृधी नः ॥१५॥८॥

---

॥२३॥ १-७ विमद ऐंद्रः प्राजापत्यो वा वसुकृद्वा वासुक्रः ॥ इंद्रः ॥ १. ७ त्रिष्टुप्। २-४. ६ जगती। ५ अभिसारिणी ॥

॥२३॥ यजामह इंद्रं वज्रदक्षिणं हरीणां रथ्य१ं विव्रतानां। प्र श्मश्रु दोधुवदूर्ध्वथा भूद्वि सेनाभिर्दयमानो वि राधसा ॥१॥ हरी न्वस्य या वने विदे वस्विंद्रो मघैर्मघवा वृत्रहा भुवत्। ऋभुर्वाज ऋभुक्षाः पत्यते शवोऽव क्ष्णौमि दासस्य नाम चित् ॥२॥ यदा वज्रं हिरण्यमिदथा रथं हरी यमस्य वहतो वि सूरिभिः। आ तिष्ठति मघवा सनश्रुत इंद्रो वाजस्य दीर्घश्रवसस्पतिः ॥३॥ सो चिन्नु वृष्टिर्यूथ्या३ स्वा सचाँ इंद्रः श्मश्रूणि हरिताभि प्रुष्णुते। अव वेति सुक्षयं सुते मधूदिद्धूनोति वातो यथा वनं ॥४॥ यो वाचा विवाचो मृध्रवाचः पुरू सहस्राशिवा जघान। तत्तदिदस्य पौंस्यं गृणीमसि पितेव



Digitized by Google

मित्रऽहन् वधः दासस्य दंभय ॥ ८ ॥ त्वं नः इंद्र शूर शूरैः उत त्वाऽऊतासः बर्हणा पुरुऽत्रा ते वि पूर्तयः नवंत क्षोणयः यथा ॥ ९ ॥ त्वं तान् वृत्रऽहत्ये चोदयः नॄन् कार्पाणे शूर वज्रिऽवः गुहा यदि कवीनां विशां नक्षत्रऽशवसां ॥ १० ॥ ७ ॥ मक्षु ता ते इंद्र दानऽअप्नसः आक्षाणे शूर वज्रिऽवः यत् ह शुष्णस्य दंभयः जातं विश्वं सयावऽभिः ॥ ११ ॥ मा अकुध्र्यक् इंद्र शूर वस्वीः अस्मे भूवन् अभिष्टयः वयंऽवयं ते आसां सुम्ने स्याम वज्रिऽवः ॥ १२ ॥ अस्मे ता ते इंद्र संतु सत्या अहिंसंतीः उपऽस्पृशः विद्याम यासां भुजः धेनूनां न वज्रिऽवः ॥ १३ ॥ अहस्ता यत् अपदी वर्धत क्षाः शचीभिः वेद्यानां शुष्णं परि प्रऽदक्षिणित् विश्वऽआयवे नि शिश्नथः ॥ १४ ॥ पिबऽपिब इत् इंद्र शूर सोमं मा रिषण्यः वसवान वसुः सन् उत त्रायस्व गृणतः मघोनः महः च रायः रेवतः कृधि नः ॥ १५ ॥ ८ ॥

---

॥ २३ ॥ यजामहे इंद्रं वज्रऽदक्षिणं हरीणां रथ्यं विऽव्रतानां प्र श्मश्रु दोधुवत् ऊर्ध्वऽथा भूत् वि सेनाभिः दयमानः वि राधसा ॥ १ ॥ हरी नु अस्य या वने विदे वसु इंद्रः मघैः मघऽवा वृत्रऽहा भुवत् ऋभुः वाजः ऋभुक्षाः पत्यते शवः अव क्ष्णौमि दासस्य नाम चित् ॥ २ ॥ यदा वज्रं हिरण्यं इत् अथ रथं हरी यं अस्य वहतः वि सूरिऽभिः आ तिष्ठति मघऽवा सनऽश्रुतः इंद्रः वाजस्य दीर्घऽश्रवसः पतिः ॥ ३ ॥ सो चित् नु वृष्टिः यूथ्या स्वा सचा इंद्रः श्मश्रूणि हरिता अभि प्रुष्णुते अव वेति सुऽक्षयं सुते मधु उत् इत् धूनोति वातः यथा वनं ॥ ४ ॥ यः वाचा विऽवाचः मृध्रऽवाचः पुरु सहस्रा अशिवा जघान ततऽतत् इत् अस्य पौंस्यं गृणीमसि पिताऽइव



Digitized by Google

यस्तविषी वावृधे शवः ॥५॥ स्तोमं त इंद्र विमदा अजीजनन्नपूर्व्यं पुरुतमं सुदानवे । विद्मा ह्यस्य भोजनमिनस्य यदा पशुं न गोपाः करामहे ॥ ६ ॥ माकिर्न एना सख्या वि यौषुस्तव चेंद्र विमदस्य च ऋषेः । विद्मा हि ते प्रमतिं देव जामिवदस्मे ते संतु सख्या शिवानि ॥ ७ ॥ ९ ॥

---

॥ २४ ॥ विमद ऐंद्रः प्राजापत्यो वा वसुकृद्वा वासुक्रः ॥ १–३ इंद्रः । ४–६ अश्विनौ ॥ १–३ आस्तारपंक्तिः । ४–६ अनुष्टुप् ॥

॥२४॥ इंद्र सोममिमं पिब मधुमंतं चमू सुतं । अस्मे रयिं नि धारय वि वो मदे सहस्रिणं पुरूवसो विवक्षसे ॥१॥ त्वां यज्ञेभिरुक्थैरुप हव्येभिरीमहे । शचीपते शचीनां वि वो मदे श्रेष्ठं नो धेहि वार्यं विवक्षसे ॥२॥ यस्पतिर्वार्याणामसि रध्रस्य चोदिता । इंद्र स्तोतॄणामविता वि वो मदे द्विषो नः पाह्यंहसो विवक्षसे ॥३॥ युवं शक्रा मायाविना समीची निरमंथतं । विमदेन यदीळिता नासत्या निरमंथतं ॥४॥ विश्वे देवा अकृपंत समीच्योर्निष्पतंत्योः । नासत्यावब्रुवन्देवाः पुनरा वहतादिति ॥५॥ मधुमन्मे परायणं मधुमत्पुनरायनं । ता नो देवा देवतया युवं मधुमतस्कृतं ॥६॥१०॥

---

॥ २५ ॥ १–११ विमद ऐंद्रः प्राजापत्यो वा वसुकृद्वा वासुक्रः ॥ सोमः ॥ आस्तारपंक्तिः ॥

॥२५॥ भद्रं नो अपि वातय मनो दक्षमुत क्रतुं । अधा ते सख्ये अंधसो वि वो मदे रणन्गावो न यवसे विवक्षसे ॥१॥ हृदिस्पृशस्त आसते विश्वेषु सोम धामसु । अधा कामा इमे मम वि वो मदे वि तिष्ठंते वसूयवो विवक्षसे ॥२॥ उत व्रतानि सोम ते प्राहं मिनामि पाक्या । अधा पितेव सूनवे वि वो मदे मृळा नो अभि चिद्वधाद्विवक्षसे ॥३॥ समु प्र यंति धीतयः सर्गासोऽवतान्



Digitized by Google

यः तविषी ववृधे शर्वः ॥ ५ ॥ स्तोमं ते इंद्र विऽमदाः
अजीजनन् अपूर्व्यं पुरुऽतमं सुऽदानवे विद्म हि अस्य भो-
जनं इनस्य यत् आ पशुं न गोपाः करामहे ॥ ६ ॥ माकिः नः
एना सख्या वि यौषुः तव च इंद्र विऽमदस्य च ऋषेः विद्म हि
ते प्रऽमतिं देव जामिऽवत् अस्मे॰ ते संतु सख्या शिवानि
॥ ७ ॥ ९ ॥

॥२४॥ इंद्र सोमं इमं पिब मधुऽमंतं चमू॰ सुतं अस्मे॰ रयिं नि
धारय वि वः मदे सहस्रिणं पुरुऽवसो॰ विवक्षसे ॥१॥ त्वां यज्ञेभिः
उक्थैः उप हव्येभिः ईमहे शचीऽपते शचीनां वि वः मदे श्रेष्ठं नः
धेहि वार्यं विवक्षसे ॥२॥ यः पतिः वार्याणां असि रध्रस्य चोदिता
इंद्र स्तोतॄणां अविता वि वः मदे द्विषः नः पाहि अंहसः विवक्षसे
॥३॥ युवं शक्रा मायाऽविना संऽईची॰ निः अमंथतं विऽमदेन
यत् ईळिता नासत्या निःऽअमंथतं ॥४॥ विश्वे देवाः अकृपंत सं-
ऽईच्योः निःऽपतंत्योः नासत्यौ अब्रुवन् देवाः पुनः आ वहतात्
इति ॥५॥ मधुऽमत् मे पराऽअयनं मधुऽमत् पुनः आऽअयनं ता
नः देवा देवतया युवं मधुऽमतः कृतं ॥ ६ ॥ १० ॥

॥२५॥ भद्रं नः अपि वातय मनः दक्षं उत क्रतुं अध ते सख्ये अं-
धसः वि वः मदे रणन् गावः न यवसे विवक्षसे ॥१॥ हृदिऽस्पृशः ते
आसते विश्वेषु सोम धामऽसु अध कामाः इमे मम वि वः मदे वि
तिष्ठंते वसुऽयवः विवक्षसे ॥२॥ उत व्रतानि सोम ते प्र अहं मि-
नामि पाक्या अध पिताऽइव सूनवे वि वः मदे मृळ नः अभि
चित् वधात् विवक्षसे ॥३॥ सं ऊं॰ प्र यंति धीतयः सर्गासः अव-

ताँ इव । क्रतुं नः सोम जीवसे वि वो मदे धारया चमसाँ इव वि-
वक्षसे ॥४॥ तव त्ये सोम शक्तिभिर्निकामासो व्यृण्विरे । गृत्सस्य
धीरास्तवसो वि वो मदे व्रजं गोमंतमश्विनं विवक्षसे ॥५॥११॥
पशुं नः सोम रक्षसि पुरुत्रा विष्ठितं जगत् । समाकृणोषि जी-
वसे वि वो मदे विश्वा संपश्यन्भुवना विवक्षसे ॥६॥ त्वं नः सोम
विश्वतो गोपा अदाभ्यो भव । सेध राजन्नप स्रिधो वि वो मदे मा
नो दुःशंस ईशता विवक्षसे ॥७॥ त्वं नः सोम सुक्रतुर्वयोधेयाय
जागृहि । क्षेत्रवित्तरो मनुषो वि वो मदे द्रुहो नः पाह्यंहसो विव-
क्षसे ॥८॥ त्वं नो वृत्रहंतमेंद्रस्येंदो शिवः सखा । यत्सीं हवंते समिथे
वि वो मदे युध्यमानास्तोकसातौ विवक्षसे ॥९॥ अयं घ स तुरो
मद इंद्रस्य वर्धत प्रियः । अयं कक्षीवतो महो वि वो मदे मतिं वि-
प्रस्य वर्धयद्विवक्षसे ॥१०॥ अयं विप्राय दाशुषे वाजाँ इयर्ति गो-
मतः । अयं सप्तभ्य आ वरं वि वो मदे प्रांधं श्रोणं च तारिषद्विव-
क्षसे ॥ ११ ॥ १२ ॥

॥ २६ ॥ १–९ विमद ऐंद्रः प्राजापत्यो वा वसुकृद्वा वासुक्रः ॥ पूषा ॥ १. ४. उष्णिक् । २. ३. ५–९ अनुष्टुप् ॥

॥२६॥ प्र ह्यच्छा मनीषाः स्पार्हा यंति नियुतः । प्र दस्रा नि-
युद्रथः पूषा अविष्टु माहिनः ॥१॥ यस्य त्यन्महित्वं वाताप्य-
मयं जनः । विप्र आ वंसद्धीतिभिश्चिकेत सुष्टुतीनां ॥२॥ स
वेद सुष्टुतीनामिंदुर्न पूषा वृषा । अभि प्सुरः प्रुषायति व्रजं
न आ प्रुषायति ॥३॥ मंसीमहि त्वा वयमस्माकं देव पूषन् ।
मतीनां च साधनं विप्राणां चाधवं ॥४॥ प्रत्यर्धिर्यज्ञानाम-
श्वहयो रथानां । ऋषिः स यो मनुर्हितो विप्रस्य यावयत्सखः
॥५॥१३॥ आधीषमाणायाः पतिः शुचायाश्च शुचस्य च । वा-
सोवायोऽवीनामा वासांसि मर्मृजत् ॥६॥ इनो वाजानां प-



Digitized by Google

तान्ऽइव क्रतुं नः सोम जीवसे वि वः मदे धारय चमसान्ऽइव
विवक्षसे ॥४॥ तव त्ये सोम शक्तिऽभिः निऽकामासः वि ऋृण्विरे
गृत्सस्य धीराः तवसः वि वः मदे व्रजं गोऽमंतं अश्विनं विवक्षसे
॥५॥११॥ पशुं नः सोम रक्षसि पुरुऽत्रा विऽस्थितं जगत् संऽआकृ-
णोषि जीवसे वि वः मदे विश्वा संऽपश्यन् भुवना विवक्षसे ॥६॥
त्वं नः सोम विश्वतः गोपाः अदाभ्यः भव सेध राजन् अप स्रिधः
वि वः मदे मा नः दुःऽशंसः ईशत विवक्षसे ॥७॥ त्वं नः सोम सुऽक्रतुः
वयःऽधेयाय जागृहि क्षेत्रवित्ऽतरः मनुषः वि वः मदे द्रुहः नः
पाहि अंहसः विवक्षसे ॥८॥ त्वं नः वृत्रहन्ऽतम इंद्रस्य इंदो शिवः
सखा यत् सीं हवंते संऽइथे वि वः मदे युध्यमानाः तोकऽसातौ
विवक्षसे ॥९॥ अयं घ सः तुरः मदः इंद्रस्य वर्धत प्रियः अयं कक्षी-
वतः महः वि वः मदे मतिं विप्रस्य वर्धयत् विवक्षसे ॥१०॥ अयं
विप्राय दाशुषे वाजान् इयर्ति गोऽमतः अयं सप्तऽभ्यः आ वरं
वि वः मदे प्र अंधं श्रोणं च तारिषत् विवक्षसे ॥ ११ ॥ १२ ॥

---

॥२६॥ प्र हि अच्छ मनीषाः स्पार्हाः यंति निऽयुतः प्र दस्रा नि-
युत्ऽरथः पूषा अविष्टु माहिनः ॥१॥ यस्य त्यत् महिऽत्वं वाताप्यं
अयं जनः विप्रः आ वंसत् धीतिऽभिः चिकेत सुऽस्तुतीनां ॥२॥
सः वेद सुऽस्तुतीनां इंदुः न पूषा वृषा अभि प्सुरः प्रुषायति व्रजं नः
आ प्रुषायति ॥३॥ मंसीमहि त्वा वयं अस्माकं देव पूषन् मतीनां
च साधनं विप्राणां च आऽधवं ॥४॥ प्रतिऽअर्धिः यज्ञानां अश्व-
ऽहयः रथानां ऋषिः सः यः मनुःऽहितः विप्रस्य यवयत्ऽसखः
॥५॥१३॥ आऽधीषमाणायाः पतिः शुचायाः च शुचस्य च वासः-
ऽवायः अवीनां आ वासांसि मर्मृजत् ॥६॥ इनः वाजानां प-



Digitized by Google

तिरिनः पुष्टीनां सखा । प्र श्मश्रु हर्यतो दूधोद्वि वृथा यो अ-
दाभ्यः ॥७॥ आ ते रथस्य पूषन्नजा धुरं ववृत्युः । विश्वस्यार्थिनः
सखा सनोजा अनपच्युतः ॥८॥ अस्माकमूर्जा रथं पूषा अविष्टु
माहिनः । भुवद्वाजानां वृध इमं नः शृणवद्धवं ॥९॥१४॥

---

॥ २७ ॥ १–२४ वसुक्र ऐंद्रः ॥ इंद्रः ॥ त्रिष्टुप् ॥

॥२७॥ असत्सु मे जरितः साभिवेगो यत्सुन्वते यजमा-
नाय शिक्षं । अनाशीर्दामहमस्मि प्रहंता सत्यध्वृतं वृजिना-
यंतमाभुं ॥१॥ यदीदहं युधये संनयान्यदेवयून्तन्वा३ शूशुजा-
नान् । अमा ते तुम्रं वृषभं पचानि तीव्रं सुतं पंचदशं नि
षिंचं ॥२॥ नाहं तं वेद य इति ब्रवीत्यदेवयून्समरणे जघ-
न्वान् । यदावाख्यत्समरणमृघावदादिद्ध मे वृषभा प्र
ब्रुवंति ॥३॥ यदज्ञातेषु वृजनेष्वासं विश्वे सतो मघवानो म
आसन् । जिनामि वेत्क्षेम आ संतमाभुं प्र तं क्षिणां पर्वते
पादगृह्य ॥४॥ न वा उ मां वृजने वारयंते न पर्वतासो
यदहं मनस्ये । मम स्वनात्कृधुकर्णो भयात एवेदनु द्यून्कि-
रणः समेजात ॥५॥१५॥ दर्शन्न्वत्र शृतपाँ अनिंद्रान्बा-
हुक्षदः शरवे पत्यमानान् । घृषुं वा ये निनिदुः सखायमध्यू
न्वेषु पवयो ववृत्युः ॥६॥ अभूर्वौक्षीर्व्यु१ आयुरानड्दर्षन्नु
पूर्वो अपरो नु दर्षत् । द्वे पवस्ते परि तं न भूतो यो अस्य
पारे रजसो विवेष ॥७॥ गावो यवं प्रयुता अर्यो अक्षन्ता
अपश्यं सहगोपाश्चरंतीः । हवा इदर्यो अभितः समाय-
न्कियदासु स्वपतिश्छंदयाते ॥८॥ सं यद्वयं यवसादो जना-
नामहं यवाद उर्वज्रे अंतः । अत्रा युक्तोऽवसातारमि-
च्छादथो अयुक्तं युनजद्ववन्वान् ॥९॥ अत्रेदु मे मंससे



Digitized by Google

तिः इनः पुष्टीनां सखा प्र श्मश्रु हर्यतः दूधोत् वि वृथा यः अदाभ्यः ॥७॥ आ ते रथस्य पूषन् अजाः धुरं ववृत्युः विश्वस्य अर्थिनः सखा सनःऽजाः अनपऽच्युतः ॥८॥ अस्माकं ऊर्जा रथं पूषा अविष्टु माहिनः भुवत् वाजानां वृधः इमं नः शृणवत् हवं ॥९॥१४॥

---

॥२७॥ असत् सु मे जरितः सः अभिऽवेगः यत् सुन्वते यजमानाय शिक्षं अनाशीःऽदां अहं अस्मि प्रऽहंता सत्यऽध्वृतं वृजिनऽयंतं आभुं ॥१॥ यदि इत् अहं युधये संऽनयानि अदेवऽयून् तन्वा शूशुजानान् अमा ते तुयं वृषभं पचानि तीव्रं सुतं पंचऽदशं नि सिंचं ॥२॥ न अहं तं वेद यः इति ब्रवीति अदेवऽयून् संऽअरणे जघन्वान् यदा अवऽअख्यत् संऽअरणं ऋघावत् आत् इत् ह मे वृषभा प्र ब्रुवंति ॥३॥ यत् अज्ञातेषु वृजनेषु आसं विश्वे सतः मघऽवानः मे आसन् जिनामि वा इत् क्षेमे आ संतं आभुं प्र तं क्षिणां पर्वते पादऽगृह्य ॥४॥ न वै ऊं इति मां वृजने वारयंते न पर्वतासः यत् अहं मनस्ये मम स्वनात् कृधुऽकर्णः भयाते एव इत् अनु द्यून् किरणः सं एजात् ॥५॥१५॥ दर्शन् नु अत्र शृतऽपान् अनिंद्रान् बाहुऽक्षदः शरवे पत्यमानान् घृषुं वा ये निनिदुः सखायं अधि ऊं इति नु एषु पवयः ववृत्युः ॥६॥ अभूः ऊं इति औक्षीः वि ऊं इति आयुः आनट् दर्षत् नु पूर्वः अपरः नु दर्षत् द्वे इति पवस्ते इति परि तं न भूतः यः अस्य पारे रजसः विवेष ॥७॥ गावः यवं प्रऽयुताः अर्यः अक्षन् ताः अपश्यं सहऽगोपाः चरंतीः हवाः इत् अर्यः अभितः सं आयन् कियत् आसु स्वऽपतिः छंदयाते ॥८॥ सं यत् वयं यवसऽअदः जनानां अहं यवऽअदः उरुऽअज्रे अंतरिति अत्र युक्तः अवऽसातारं इच्छात् अथो इति अयुक्तं युनजत् ववन्वान् ॥९॥ अत्र इत् ऊं इति मे मंससे



Digitized by Google

सत्यमुक्तं द्विपाच्च यच्चतुष्पात्संसृजानि। स्त्रीभिर्यो अत्र वृषणं
पृतन्यादयुद्धो अस्य वि भंजानि वेदः ॥१०॥१६॥ यस्यानक्षा
दुहिता जात्वास कस्तां विद्वाँ अभि मंन्याते अंधां। कतरो
मेनिं प्रति तं मुचाते य ईं वहाते य ईं वा वरेयात् ॥११॥
कियती योषा मर्यतो वधूयोः परिप्रीता पन्यसा वार्येण।
भद्रा वधूर्भवति यत्सुपेशाः स्वयं सा मित्रं वनुते जने चित्
॥१२॥ पत्तो जगार प्रत्यंचमत्ति शीर्ष्णा शिरः प्रति दधौ वरूथं।
आसीन ऊर्ध्वामुपसि क्षिणाति न्यङ्ङुत्तानामन्वेति भूमिं ॥१३॥
बृहन्नच्छायो अपलाशो अर्वा तस्थौ माता विषितो अत्ति
गर्भः। अन्यस्या वत्सं रिहती मिमाय कया भुवा नि दधे धेनु-
रूधः ॥१४॥ सप्त वीरासो अधरादुदायन्नष्टोत्तरात्तात्समंज-
ग्मिरन्ते। नव पश्चातात्स्थिविमंत आयन्दश प्राक्सानु वि
तिरंत्यश्नः ॥१५॥१७॥ दशानामेकं कपिलं समानं तं हिन्वंति
क्रतवे पार्याय। गर्भं माता सुधितं वक्षणास्ववेनंतं तुषयंती
बिभर्ति ॥१६॥ पीवानं मेषमपचंत वीरा न्युप्ता अक्षा अनु
दीव आसन्। द्वा धनुं बृहतीमप्स्वं१ंतः पवित्रवंता चरतः पु-
नंता ॥१७॥ वि क्रोशनासो विष्वंच आयन्पचाति नेमो नहि
पक्षदर्धः। अयं मे देवः सविता तदाह द्र्वन्न इद्वनवत्सर्पिरन्नः
॥१८॥ अपश्यं ग्रामं वहमानमारादचक्रया स्वधया वर्त-
मानं। सिषक्त्यर्यः प्र युगा जनानां सद्यः शिश्ना प्रमिनानो
नवीयान् ॥१९॥ एतौ मे गावौ प्रमरस्य युक्तौ मो षु प्र सेधी-
र्मुहुरिन्ममंधि। आपश्चिदस्य वि नशंत्यर्थं सूरश्च मर्क उपरो
बभूवान् ॥२०॥१८॥ अयं यो वज्रः पुरुधा विवृत्तोऽवः सू-
र्यस्य बृहतः पुरीषात्। श्रव इदेना परो अन्यदस्ति तदव्य-



Digitized by Google

सत्यं उक्तं द्विऽपात् च यत् चतुःऽपात् संऽसृजानि स्त्रीभिः यः अत्र
वृषणं पृतन्यात् अयुद्धः अस्य वि भजानि वेदः ॥१०॥१६॥ यस्य
अनक्षा दुहिता जातु आस कः तां विद्वान् अभि मन्याते अंधां
कतरः मेनिं प्रति तं मुचाते यः ईं वहाते यः ईं वा वरेऽयात् ॥११॥
कियती योषा मर्यतः वधूऽयोः परिऽप्रीता पन्यसा वार्येण भद्रा
वधूः भवति यत् सुऽपेशाः स्वयं सा मित्रं वनुते जने चित् ॥१२॥
पत्तः जगार प्रत्यंचं अत्ति शीर्ष्णा शिरः प्रति दधौ वरूथं आसीनः
ऊर्ध्वा उपसि श्रिणाति न्यङ् उत्तानां अनु एति भूमिं ॥१३॥ बृहन्
अच्छायः अपलाशः अर्वा तस्थौ माता विऽसितः अत्ति गर्भः
अन्यस्याः वत्सं रिहती मिमाय कया भुवा नि दधे धेनुः ऊधः ॥१४॥
सप्त वीरासः अधरात् उत् आयन् अष्ट उत्तरात्तात् सं अजग्मिरन्
ते नव पश्चातात् स्थिविऽमंतः आयन् दश प्राक् सानु वि तिरंति
अश्नः ॥१५॥१७॥ दशानां एकं कपिलं समानं तं हिन्वंति क्रतवे
पार्याय गर्भं माता सुऽधितं वक्षणासु अवेनंतं तुषयंती बिभर्ति
॥१६॥ पीवानं मेषं अपचंत वीराः निऽउप्ताः अक्षाः अनु दीवे
आसन् द्वा धनुं बृहतीं अप्ऽसु अंतः॰ पवित्रऽवंता चरतः पुनंता
॥१७॥ वि क्रोशनासः विष्वंचः आयन् पचाति नेमः नहि पक्षत्
अर्धः अयं मे देवः सविता तत् आह दुऽअन्नः इत् वनवत् सर्पिः-
ऽअन्नः ॥१८॥ अपश्यं ग्रामं वहमानं आरात् अचक्रया स्वधया
वर्तमानं सिसक्ति अर्यः प्र युगा जनानां सद्यः शिश्ना प्रऽमिनानः
नवीयान् ॥१९॥ एतौ मे गावौ प्रऽमरस्य युक्तौ मो॰ सु प्र सेधीः
मुहुः इत् ममंधि आपः चित् अस्य वि नशंति अर्थं सूरः च मर्कः
उपरः बभूवान् ॥२०॥१८॥ अयं यः वज्रः पुरुधा विऽवृत्तः अवः सू-
र्यस्य बृहतः पुरीषात् श्रवः इत् एना परः अन्यत् अस्ति तत् अव्य-



Digitized by Google

धी जरिमार्णस्तरंति ॥२१॥ वृक्षेवृक्षे नियंता मीमयद्गौस्ततो वयः प्र पतान्पूरुषादः। अथेदं विश्वं भुवनं भयात इंद्राय सुन्वदृषये च शिक्षत ॥२२॥ देवानां माने प्रथमा अतिष्ठन्कृंतत्रादेषामुपरा उदायन्। त्रयस्तपंति पृथिवीमनूपा द्वा बृबूकं वहतः पुरीषं ॥२३॥ सा ते जीवातुरुत तस्य विद्धि मा स्मैतादृगप गूहः समर्ये। आविः स्वः कृणुते गूहते बुसं स पादुरस्य निर्णिजो न मुच्यते ॥२४॥१९॥

॥ २८ ॥ १–१२ इंद्रवसुक्रयोः संवाद ऐंद्रः (१ इंद्रस्य स्नुषा परोक्षवदिंद्रमाह) ॥ त्रिष्टुप् ॥

॥ २८ ॥ विश्वो ह्य१न्यो अरिराजगाम ममेदह श्वशुरो ना जगाम। जक्षीयाद्धाना उत सोमं पपीयात्स्वाशितः पुनरस्तं जगायात् ॥१॥ स रोरुवद्वृषभस्तिग्मशृंगो वर्ष्मन्तस्थौ वरिमन्ना पृथिव्याः। विश्वेष्वेनं वृजनेषु पामि यो मे कुक्षी सुतसोमः पृणाति ॥२॥ अद्रिणा ते मंदिन इंद्र तूयान्सुन्वंति सोमान्पिबसि त्वमेषां। पचंति ते वृषभाँ अत्सि तेषां पृक्षेण यन्मघवन्हूयमानः ॥३॥ इदं सु मे जरितरा चिकिद्धि प्रतीपं शापं नद्यो वहंति। लोपाशः सिंहं प्रत्यंचमत्साः क्रोष्टा वराहं निरतक्त कक्षात् ॥४॥ कथा त एतदहमा चिकेतं गृत्सस्य पाकस्तवसो मनीषां। त्वं नो विद्वाँ ऋतुथा वि वोचो यमर्धं ते मघवन्क्षेम्या धूः ॥५॥ एवा हि मां तवसं वर्धयंति दिवश्चिन्मे बृहत उत्तरा धूः। पुरू सहस्रा नि शिशामि साकमशत्रुं हि मा जनिता जजान ॥६॥२०॥ एवा हि मां तवसं जज्ञुरुग्रं कर्मन्कर्मन्वृषणमिंद्र देवाः। वधीं वृत्रं वज्रेण मंदसानोऽप व्रजं महिना दाशुषे वं ॥७॥ देवास आयन्परशूँरबिभ्रन्वना वृश्चंतो अभि विड्भिरायन्। नि सुद्र्वं१ दधतो वक्षणासु यत्रा कृ-



Digitized by Google

पी जरिमाणः तरंति ॥२१॥ वृक्षेऽवृक्षे निऽयता मीमयत् गौः ततः वयः प्र पतान् पुरुषऽअदः अथ इदं विश्वं भुवनं भयाते इंद्राय सुन्वत् ऋषये च शिक्षत ॥२२॥ देवानां माने प्रथमाः अतिष्ठन् कृंतत्रात् एषां उपराः उत् आयन् त्रयः तपंति पृथिवीं अनूपाः द्वा बृबूकं वहतः पुरीषं ॥२३॥ सा ते जीवातुः उत तस्य विद्धि मा स्म एतादृक् अप गूहः सऽमर्ये आविः स्वः॰ कृणुते गूहते बुसं सः पादुः अस्य निःऽनिजः न मुच्यते ॥ २४ ॥ १९ ॥

॥२८॥ विश्वः हि अन्यः अरिः आऽजगाम मम इत् अह श्वशुरः न आ जगाम जक्षीयात् धानाः उत सोमं पपीयात् सुऽआशितः पुनः अस्तं जगायात् ॥१॥ सः रोरुवत् वृषभः तिग्मऽशृंगः वर्ष्मन् तस्थौ वरिमन् आ पृथिव्याः विश्वेषु एनं वृजनेषु पामि यः मे कुक्षी सुतऽसोमः पृणाति ॥२॥ अद्रिणा ते मंदिनः इंद्र तूयान् सुन्वंति सोमान् पिबसि त्वं एषां पचंति ते वृषभान् अत्सि तेषां पृक्षेण यत् मघऽवन् हूयमानः ॥३॥ इदं सु मे जरितः आ चिकिद्धि प्रतिऽईपं शापं नद्यः वहंति लोपाशः सिंहं प्रत्यंचं अत्साः क्रोष्टा वराहं निः अतक्त कक्षात् ॥४॥ कथा ते एतत् अहं आ चिकेतं गृत्सस्य पाकः तवसः मनीषां त्वं नः विद्वान् ऋतुऽथा वि वोचः यं अर्धं ते मघऽवन् क्षेम्या धूः ॥५॥ एव हि मां तवसं वर्धयंति दिवः चित् मे बृहतः उत्ऽतरा धूः पुरु सहस्रा नि शिशामि साकं अशत्रुं हि मा जनिता जजान ॥६॥२०॥ एव हि मां तवसं जज्ञुः उग्रं कर्मन्ऽकर्मन् वृषणं इंद्र देवाः वधीं वृत्रं वज्रेण मंदसानः अप व्रजं महिना दाशुषे वं ॥७॥ देवासः आयन् परशून् अबिभ्रन् वना वृश्चंतः अभि विट्ऽभिः आयन् नि सुऽद्र्वं दधतः वक्षणासु यत्र कृ-



Digitized by Google

पीटमनु तर्हंहंति ॥८॥ शशः क्षुरं प्रत्यंचं जगारार्द्रिं लोगेन व्यंभेदमारात्। बृहंतं चिद्दहते रंधयानि वयंद्वत्सो वृषभं शूशुवानः ॥९॥ सुपर्ण इत्था नखमा सिषायावरुद्धः परिपदं न सिंहः। निरुद्धश्चिन्महिषस्तर्ष्यावान्गोधा तस्मा अयथं कर्षदेतत् ॥१०॥ तेभ्यो गोधा अयथं कर्षदेतद्ये ब्रह्मणः प्रतिपीयंत्यन्नैः। सिम उक्ष्णोऽवसृष्टाँ अदंति स्वयं बलानि तन्वः शृणानाः ॥११॥ एते शमीभिः सुशमी अभूवन्ये हिंन्विरे तन्व१ः सोम उक्थैः। नृवद्वदन्नुप नो माहि वाजान्दिवि श्रवो दधिषे नाम वीरः ॥१२॥२१॥

---

॥ २९ ॥ १–८ वसुक्रः ॥ इंद्रः ॥ त्रिष्टुप् ॥

॥२९॥ वने न वा यो न्यधायि चाकञ्छुचिर्वां स्तोमो भुरणावजीगः। यस्येदिंद्रः पुरुदिनेषु होता नृणां नर्यो नृतमः क्षपावान् ॥१॥ प्र ते अस्या उषसः प्रापरस्या नृतौ स्याम नृतमस्य नृणां। अनु त्रिशोकः शतमावहन्नॄन्कुत्सेन रथो यो असत्ससवान् ॥२॥ कस्ते मद इंद्र रंत्यो भूद्दुरो गिरो अभ्यु१ग्रो वि धाव। कद्वाहो अर्वागुप मा मनीषा आ त्वा शक्यामुपमं राधो अन्नैः ॥३॥ कदु द्युम्नमिंद्र त्वावतो नॄन्कया धिया करसे कन्न आगन्। मित्रो न सत्य उरुगाय भृत्या अन्ने समस्य यदसन्मनीषाः ॥४॥ प्रेरय सूरो अर्थं न पारं ये अस्य कामं जनिधा इव ग्मन्। गिरश्च ये ते तुविजात पूर्वीर्नर इंद्र प्रतिशिक्षंत्यन्नैः ॥५॥२२॥ मात्रे नु ते सुमिते इंद्र पूर्वी द्यौर्मज्मना पृथिवी काव्येन। वराय ते घृतवंतः सुतासः स्वाद्मन्भवंतु पीतये मधूनि ॥६॥ आ मध्वो अस्मा असिचन्नमत्रमिंद्राय पूर्णं स हि सत्यराधाः। स वावृधे वरिमन्ना पृथिव्या अभि



Digitized by Google

पीटं अनु तत् दहंति ॥८॥ शशः क्षुरं प्रत्यंचं जगार अद्रिं लोगेन वि अभेदं आरात् बृहंतं चित् ऋहते रंधयानि वयत् वत्सः वृषभं शूशुवानः ॥९॥ सुऽपर्णाः इत्था नखं आ सिसाय अवऽरुद्धः परिऽपदं न सिंहः निऽरुद्धः चित् महिषः तर्ष्याऽवान् गोधा तस्मै अयथं कर्षत् एतत् ॥१०॥ तेभ्यः गोधा अयथं कर्षत् एतत् ये ब्रह्मणः प्रतिऽपीयंति अन्नैः सिमः उक्ष्णः अवऽसृष्टान् अदंति स्वयं बलानि तन्वः शृणानाः ॥११॥ एते शमीभिः सुऽशमी अभूवन् ये हिन्विरे तन्वः सोमे उक्थैः नृऽवत् वदन् उप नः माहि वाजान् दिवि श्रवः दधिषे नाम वीरः ॥ १२ ॥ २१ ॥

---

॥२९॥ वने न वा यः नि अधायि चाकन् शुचिः वां स्तोमः भुरणौ अजीगरिति यस्य इत् इंद्रः पुरुऽदिनेषु होता नृणां नर्यः नृऽतमः क्षपाऽवान् ॥१॥ प्र ते अस्याः उषसः प्र अपरस्याः नृतौ स्याम नृऽतमस्य नृणां अनु त्रिऽशोकः शतं आ अवहत् नृन् कुत्सेन रथः यः असत् ससऽवान् ॥२॥ कः ते मदः इंद्र रंत्यः भूत् दुरः गिरः अभि उग्रः वि धाव कत् वाहः अर्वाक् उप मा मनीषा आ त्वा शक्यां उपऽमं राधः अन्नैः ॥३॥ कत् ऊं इति द्युम्नं इंद्र त्वाऽवतः नृन् कया धिया करसे कत् नः आ अगन् मित्रः न सत्यः उरुऽगाय भृत्यै अन्ने समस्य यत् असन् मनीषाः ॥४॥ प्र ईरय सूरः अर्थं न पारं ये अस्य कामं जनिधाःऽइव ग्मन् गिरः च ये ते तुविऽजात पूर्वीः नरः इंद्र प्रतिऽशिक्षंति अन्नैः ॥५॥२२॥ मात्रे इति नु ते सुऽमिते इति इंद्र पूर्वी इति द्यौः मज्मना पृथिवी काव्येन वराय ते घृतऽवंतः सुतासः स्वाद्मन् भवंतु पीतये मधूनि ॥६॥ आ मध्वः अस्मै असिचन् अमत्रं इंद्राय पूर्णं सः हि सत्यऽराधाः सः ववृधे वरिमन् आ पृथिव्याः अभि



Digitized by Google

कृत्वा नर्यः पौंस्यैश्च ॥७॥ व्यानळिंद्रः पृतनाः स्वोजा आस्मै
यतंते सख्याय पूर्वीः । आ स्मा रथं न पृतनासु तिष्ठ यं भद्र-
या सुमत्या चोदयासे ॥ ८ ॥ २३ ॥ २ ॥

---

॥ ३० ॥ १-१५ कवष ऐलूषः ॥ आप अपांनपाद्वा ॥ त्रिष्टुप् ॥

॥३०॥ प्र देवत्रा ब्रह्मणे गातुरेत्वपो अच्छा मनसो न प्र-
युक्ति । महीं मित्रस्य वरुणस्य धासिं पृथुज्रयसे रीरधा सुवृक्तिं
॥ १ ॥ अध्वर्यवो हविष्मंतो हि भूताच्छाप इतोशतीरुशंतः ।
अव याश्चष्टे अरुणः सुपर्णस्तमास्यध्वमूर्मिमद्या सुहस्ताः ॥२॥
अध्वर्यवोऽप इता समुद्रमपां नपातं हविषा यजध्वं । स वो
ददूर्मिमद्या सुपूतं तस्मै सोमं मधुमंतं सुनोत ॥३॥ यो अनि-
ध्मो दीदयदप्स्व१ंतर्यं विप्रास ईळते अध्वरेषु । अपां नपा-
न्मधुमतीरपो दा याभिरिंद्रो वावृधे वीर्याय ॥ ४ ॥ याभिः
सोमो मोदते हर्षते च कल्याणीभिर्युवतिभिर्न मर्यः । ता अ-
ध्वर्यो अपो अच्छा परेहि यदासिंचा ओषधीभिः पुनीतात्
॥ ५ ॥ २४ ॥ एवेद्यूने युवतयो नमंत यदीमुशन्नुशतीरेत्यच्छ ।
सं जानते मनसा सं चिकित्रेऽध्वर्यवो धिषणापश्च देवीः
॥६॥ यो वो वृताभ्यो अकृणोदु लोकं यो वो मह्या अभि-
शस्तेरमुंचत् । तस्मा इंद्राय मधुमंतमूर्मिं देवमादनं प्र हि-
णोतनापः ॥ ७ ॥ प्रास्मै हिनोत मधुमंतमूर्मिं गर्भो यो वः
सिंधवो मध्व उत्सः । घृतपृष्ठमीड्यमध्वरेष्वापो रेवतीः शृणुता
हवं मे ॥ ८ ॥ तं सिंधवो मत्सरमिंद्रपानमूर्मिं प्र हेत य उभे
इयर्ति । मदच्युतमौशानं नभोजां परि त्रितंतुं विचरंतमुत्सं
॥९॥ आवर्वृततीरध नु द्विधारा गोषुयुधो न नियवं चरंतीः ।
ऋषे जनित्रीर्भुवनस्य पत्नीरपो वंदस्व सवृधः सयोनीः



Digitized by Google

ऋत्वा नर्यैः पौंस्यैः च ॥ ७ ॥ वि आनट् इंद्रः पृतनाः सुऽओजाः आ अस्मै यतंते सख्याय पूर्वीः आ स्म रथं न पृतनासु तिष्ठ यं भद्रया सुऽमत्या चोदयासे ॥ ८ ॥ २३ ॥ २ ॥

---

॥ ३० ॥ प्र देवऽत्रा ब्रह्मणे गातुः एतु अपः अच्छ मनसः न प्रऽयुक्ति महीं मित्रस्य वरुणस्य धासिं पृथुऽज्रयसे रीरध सुऽवृक्तिं ॥ १ ॥ अध्वर्यवः हविष्मंतः हि भूत अच्छ अपः इत उशतीः उशंतः अव याः चष्टे अरुणः सुऽपर्णः तं आ अस्यध्वं ऊर्मिं अद्य सुऽहस्ताः ॥ २ ॥ अध्वर्यवः अपः इत समुद्रं अपां नपातं हविषा यजध्वं सः वः ददत् ऊर्मिं अद्य सुऽपूतं तस्मै सोमं मधुऽमंतं सुनोत ॥ ३ ॥ यः अनिध्मः दीदयत् अप्ऽसु अंतः यं विप्रासः ईळते अध्वरेषु अपां नपात् मधुऽमतीः अपः दाः याभिः इंद्रः ववृधे वीर्याय ॥ ४ ॥ याभिः सोमः मोदते हर्षते च कल्याणीभिः युवतिऽभिः न मर्यः ताः अध्वर्यो अपः अच्छ परा इहि यत् आऽसिंचाः ओषधीभिः पुनीतात् ॥ ५ ॥ २४ ॥ एव इत् यूने युवतयः नमंत यत् ईं उशन् उशतीः एति अच्छ सं जानते मनसा सं चिकित्रे अध्वर्यवः धिषणा आपः च देवीः ॥ ६ ॥ यः वः वृताभ्यः अकृणोत् ऊं लोकं यः वः मह्याः अभिऽशस्तेः अमुंचत् तस्मै इंद्राय मधुऽमंतं ऊर्मिं देवऽमादनं प्र हिणोतन आपः ॥ ७ ॥ प्र अस्मै हिनोत मधुऽमंतं ऊर्मिं गर्भः यः वः सिंधवः मध्वः उत्सः घृतऽपृष्ठं ईड्यं अध्वरेषु आपः रेवतीः शृणुत हवं मे ॥ ८ ॥ तं सिंधवः मत्सरं इंद्रऽपानं ऊर्मिं प्र हेत यः उभे इयर्ति मदऽच्युतं औशानं नभःऽजां परि त्रिऽतंतुं विऽचरंतं उत्सं ॥ ९ ॥ आऽववृततीः अध नु द्विऽधाराः गोषुऽयुधः न निऽयवं चरंतीः ऋषे जनित्रीः भुवनस्य पत्नीः अपः वंदस्व सऽवृधः सऽयोनीः



Digitized by Google

॥१०॥२५॥ हिनोता नो अध्वरं देवयज्या हिनोत ब्रह्म सनये धनानां। ऋतस्य योगे वि ष्यध्वमूधः श्रुष्टीवरीर्भूतनास्मभ्यमापः ॥११॥ आपो रेवतीः क्षयथा हि वस्वः क्रतुं च भद्रं बिभृथामृतं च। रायश्च स्थ स्वपत्यस्य पत्नीः सरस्वती तद्गृणते वयो धात् ॥१२॥ प्रति यदापो अदृश्रमायतीर्घृतं पयांसि बिभ्रतीर्मधूनि। अध्वर्युभिर्मनसा संविदाना इंद्राय सोमं सुषुतं भरंतीः ॥१३॥ एमा अग्मन्रेवतीर्जीवधन्या अध्वर्यवः सादयता सखायः। नि बर्हिषि धत्तन सोम्यासोऽपां नप्त्रा संविदानास एनाः ॥१४॥ आग्मन्नाप उशतीर्बर्हिरेदं न्यध्वरे असदन्देवयंतीः। अध्वर्यवः सुनुतेंद्राय सोममभूदु वः सुशका देवयज्या ॥१५॥२६॥ ———

॥ ३१ ॥ १–११ कवष ऐलूषः ॥ विश्वे देवाः ॥ त्रिष्टुप् ॥

॥३१॥ आ नो देवानामुप वेतु शंसो विश्वेभिस्तुरैरवसे यजत्रः। तेभिर्वयं सुषखायो भवेम तरंतो विश्वा दुरिता स्याम ॥१॥ परि चिन्मर्तो द्रविणं ममन्यादृतस्य पथा नमसा विवासेत्। उत स्वेन क्रतुना सं वदेत श्रेयांसं दक्षं मनसा जगृभ्यात् ॥२॥ अधायि धीतिरससृग्रमंशास्तीर्थे न दस्ममुप यंत्यूमाः। अभ्यानश्म सुवितस्य शूषं नवेदसो अमृतानामभूम ॥३॥ नित्यश्चाकन्यात्स्वपतिर्दमूना यस्मा उ देवः सविता जजान। भगो वा गोभिरर्यमेमनज्यात्सो अस्मै चारुश्छदयदुत स्यात् ॥४॥ इयं सा भूया उषसामिव क्षा यद्ध क्षुमंतः शवसा समायन्। अस्य स्तुतिं जरितुर्भिक्षमाणा आ नः शग्मास उप यंतु वाजाः ॥५॥२७॥ अस्येदेषा सुमतिः पप्रथानाभवत्पूर्व्या भूमना गौः। अस्य सनीळा असुरस्य योनौ समान आ भरणे



Digitized by Google

॥१०॥२५॥ हिनोत नः अध्वरं देवऽयज्या हिनोत ब्रह्म सनये धनानां ऋतस्य योगे वि स्यध्वं ऊधः श्रुष्टीऽवरीः भूतन अस्मभ्यं आपः ॥११॥ आपः रेवतीः क्षयथ हि वस्वः क्रतुं च भद्रं बिभृथ अमृतं च रायः च स्थ सुऽअपत्यस्य पत्नीः सरस्वती तत् गृणते वयः धात् ॥१२॥ प्रति यत् आपः अदृश्रं आऽयतीः घृतं पयांसि बिभ्रतीः मधूनि अध्वर्युऽभिः मनसा संऽविदानाः इंद्राय सोमं सुऽसुतं भरंतीः ॥१३॥ आ इमाः अग्मन् रेवतीः जीवऽधन्याः अध्वर्यवः सादयत सखायः नि बर्हिषि धत्तन सोम्यासः अपां नप्त्रा संऽविदानासः एनाः ॥१४॥ आ अग्मन् आपः उशतीः बर्हिः आ इदं नि अध्वरे असदन् देवऽयंतीः अध्वर्यवः सुनुत इंद्राय सोमं अभूत् ऊं वः सुऽशका देवऽयज्या ॥ १५ ॥ २६ ॥

---

॥३१॥ आ नः देवानां उप वेतु शंसः विश्वेभिः तुरैः अवसे यजत्रः तेभिः वयं सुऽसखायः भवेम तरंतः विश्वा दुःऽइता स्याम ॥१॥ परि चित् मर्तः द्रविणं ममन्यात् ऋतस्य पथा नमसा आ विवासेत् उत स्वेन क्रतुना सं वदेत श्रेयांसं दक्षं मनसा जगृभ्यात् ॥२॥ अधायि धीतिः असंसृग्रं अंशाः तीर्थे न दस्मं उप यंति ऊमाः अभि आनश्म सुवितस्य शूषं नवेदसः अमृतानां अभूम ॥३॥ नित्यः चाकन्यात् स्वऽपतिः दमूनाः यस्मै ऊं देवः सविता जजान भगः वा गोभिः अर्यमा ईं अनज्यात् सः अस्मै चारुः छदयत् उत स्यात् ॥४॥ इयं सा भूयाः उषसांऽइव क्षाः यत् ह क्षुऽमंतः शवसा संऽआयन् अस्य स्तुतिं जरितुः भिक्षमाणाः आ नः शग्मासः उप यंतु वाजाः ॥५॥२७॥ अस्य इत् एषा सुऽमतिः पप्रथाना अभवत् पूर्व्या भूमना गौः अस्य सऽनीळाः असुरस्य योनौ समाने आ भरणे



Digitized by Google

बिभ्रमाणाः ॥६॥ किं स्विद्वनं क उ स वृक्ष आस यतो द्यावापृथिवी निष्टतक्षुः । संतस्थाने अजरे इतऊती अहानि पूर्वीरुषसो जरंत ॥७॥ नैतावदेना परो अन्यदस्त्युक्षा स द्यावापृथिवी बिभर्ति । त्वचं पवित्रं कृणुत स्वधावान्यदीं सूर्यं न हरितो वहंति ॥८॥ स्तेगो न क्षामत्येति पृथ्वीं मिहं न वातो वि ह वाति भूम । मित्रो यत्र वरुणो अज्यमानोऽग्निर्वने न व्यसृष्ट शोकं ॥९॥ स्तरीर्यत्सूत सद्यो अज्यमाना व्यथिरव्यथीः कृणुत स्वगोपा । पुत्रो यत्पूर्वः पित्रोर्जनिष्ट शम्यां गौर्जगार यद्ध पृच्छान् ॥१०॥ उत कण्वं नृषदः पुत्रमाहुरुत श्यावो धनमादत्त वाजी । प्र कृष्णाय रुशदपिन्वतोधर्ऋतमत्र नकिरस्मा अपीपेत् ॥११॥२८॥

---

॥ ३२ ॥ १–९ कवष ऐलूषः ॥ विश्वे देवाः ॥ १–५ जगती । ६–९ त्रिष्टुप् ॥

॥३२॥ प्र सु ग्मंता धियसानस्य सक्षणि वरेभिर्वराँ अभि षु प्रसीदतः । अस्माकमिंद्र उभयं जुजोषति यत्सोम्यस्यांधसो बुबोधति ॥१॥ वींद्र यासि दिव्यानि रोचना वि पार्थिवानि रजसा पुरुष्टुत । ये त्वा वहंति मुहुरध्वराँ उप ते सु वन्वंतु वग्वनाँ अराधसः ॥२॥ तदिन्मे छंत्सद्वपुषो वपुष्टरं पुत्रो यज्जानं पित्रोरधीयति । जाया पतिं वहति वग्नुना सुमत्पुंस इद्भद्रो वहतुः परिष्कृतः ॥३॥ तदित्सधस्थमभि चारु दीधय गावो यच्छासन्वहतुं न धेनवः । माता यन्मंतुर्यूथस्य पूर्व्याभि वाणस्य सप्तधातुरिज्जनः ॥४॥ प्र वोऽच्छा रिरिचे देवयुष्पदमेको रुद्रेभिर्याति तुर्वणिः । जरा वा येष्वमृतेषु दावने परि व ऊमेभ्यः सिंचता मधु ॥५॥२९॥ निधीयमानमपगूळ्हमप्सु प्र मे देवानां व्रतपा उवाच । इंद्रो विद्वाँ अनु



Digitized by Google

बिभ्रमाणाः ॥६॥ किं स्वित् वनं कः ऊं सः वृक्षः आस यतः द्यावा-
पृथिवी निःऽततक्षुः संऽतस्थाने॰ अजरे इतःऽऊती॰ अहानि
पूर्वीः उषसः जरंत ॥७॥ न एतावत् एना परः अन्यत् अस्ति उक्षा
सः द्यावापृथिवी बिभर्ति त्वचं पविचं कृणुत स्वधाऽवान् यत्
ईं सूर्यं न हरितः वहंति ॥८॥ स्तेगः न क्षां अति एति पृथ्वीं मिहं न
वातः वि ह वाति भूमं मित्रः यत्र वरुणः अज्यमानः अग्निः वने न
वि असृष्ट शोकं ॥९॥ स्तरीः यत् सूत सद्यः अज्यमाना व्यथिः अव्य-
थीः कृणुत स्वऽगोपा पुत्रः यत् पूर्वः पित्रोः जनिष्ट शम्यां गौः
जगार यत् ह पृच्छान् ॥१०॥ उत कण्वं नृऽसदः पुत्रं आहुः उत
श्यावः धनं आ अदत्त वाजी प्र कृष्णाय रुशत् अपिन्वत ऊधः
ऋतं अत्र नकिः अस्मै अपीपेत् ॥ ११ ॥ २८ ॥

---

॥३२॥ प्र सु ग्मंता धियसानस्य सक्षणिं वरेभिः वरान् अभि सु
प्रऽसीदतः अस्माकं इंद्रः उभयं जुजोषति यत् सोम्यस्य अंधसः
बुबोधति ॥१॥ वि इंद्र यासि दिव्यानि रोचना वि पार्थिवानि
रजसा पुरुऽस्तुत ये त्वा वहंति मुहुः अध्वरान् उप ते सु वन्वंतु व-
ग्वनान् अराधसः ॥२॥ तत् इत् मे छंत्सत् वपुषः वपुःऽतरं पुत्रः
यत् जानं पित्रोः अधिऽइयति जाया पतिं वहति वग्नुना सुऽमत्
पुंसः इत् भद्रः वहतुः परिऽकृतः ॥३॥ तत् इत् सधऽस्थं अभि चारु
दीधय गावः यत् शासन् वहतुं न धेनवः माता यत् मंतुः यूथस्य
पूर्व्या अभि वाणस्य सप्तऽधातुः इत् जनः ॥४॥ प्र वः अच्छ रिरिचे
देवऽयुः पदं एकः रुद्रेभिः याति तुर्वणिः जरा वा येषु अमृतेषु दा-
वने परि वः ऊमेभ्यः सिंचत मधु ॥५॥२९॥ निऽधीयमानं अप-
ऽगूळ्हं अप्ऽसु प्र मे देवानां व्रतऽपाः उवाच इंद्रः विद्वान् अनु



Digitized by Google

हि त्वा च चक्षु तेनाहमग्ने अनुशिष्ट आगाम् ॥६॥ अक्षेत्रवित्क्षेत्र-
विदं ह्यप्राट् स प्रैति क्षेत्रविदानुशिष्टः । एतद्वै भद्रमनुशासन-
स्योत स्रुतिं विंदत्यंजसीनाम् ॥७॥ अद्येदु प्राणीदममन्निमाहा-
पीवृतो अधयन्मातुरूधः । एमेनमाप जरिमा युवानमहेळन्वसुः
सुमना बभूव ॥८॥ एतानि भद्रा कलश क्रियाम कुरुश्रवण
ददतो मघानि । दान इद्वो मघवानः सो अस्त्वयं च सोमो हृदि
यं बिभर्मि ॥९॥ ३०॥ ७॥

॥ ३३ ॥ १–९ कवष ऐलूषः ॥ १ विश्वे देवाः । २.३ इंद्रः । ४.५ कुरुश्रवणस्य त्रासदस्यवस्य दानस्तुतिः । ६–९ उपमश्रवा मित्रातिथिपुत्रः ॥ १ त्रिष्टुप् । २ बृहती । ३ सतोबृहती । ४–९ गायत्री ॥

॥३३॥ प्र मा युयुज्रे प्रयुजो जनानां वहामि स्म पूषणमंतरेण ।
विश्वे देवासो अध मामरक्षन्दुःशासुरागादिति घोष आसीत् ॥१॥
सं मा तपंत्यभितः सपत्नीरिव पर्शवः । नि बाधते अमतिर्नग्नता
जसुर्वेर्न वेवीयते मतिः ॥२॥ मूषो न शिश्ना व्यदंति माध्यः स्तोतारं
ते शतक्रतो । सकृत्सु नो मघवन्निंद्र मृळयाधा पितेव नो भव
॥३॥ कुरुश्रवणमावृणि राजानं त्रासदस्यवम् । मंहिष्ठं वाघता-
मृषिः ॥४॥ यस्य मा हरितो रथे तिस्रो वहंति साधुया । स्तवै
सहस्रदक्षिणे ॥५॥१॥ यस्य प्रस्वादसो गिर उपमश्रवसः पितुः ।
क्षेत्रं न रण्वमूचुषे ॥६॥ अधि पुत्रोपमश्रवो नपान्मित्राति-
थेरिहि । पितुष्टे अस्मि वंदिता ॥७॥ यदीशीयामृतानामुत
वा मर्त्यानाम् । जीवेदिन्मघवा मम ॥८॥ न देवानामति व्रतं
शतात्मा चन जीवति । तथा युजा वि वावृते ॥९॥२॥

॥ ३४ ॥ १–१४ कवष ऐलूष अक्षो वा मौजवान् ॥ १. ७. ९. १२. १३ अक्षकृषिप्रशंसा । २–६. ८. १०. ११. १४ अक्षकितवनिंदा ॥ १–६. ८–१४ त्रिष्टुप् । ७ जगती ॥

॥३४॥ प्रावेपा मा बृहतो मादयंति प्रवातेजा इरिणे वर्वृ-



Digitized by Google

हि त्वा चचक्ष तेन अहं अमे अनुऽशिष्टः आ अगां ॥ ६ ॥ अक्षेत्रऽवित् क्षेत्रऽविदं हि अप्राट् सः प्र एति क्षेत्रऽविदा अनुऽशिष्टः एतत् वै भद्रं अनुऽशासनस्य उत स्रुतिं विंदति अंजसीनां ॥ ७ ॥ अद्य इत् ऊं प्र आनीत् अममन् इमा अहा अपिऽवृतः अधयत मातुः ऊधः आ ईं एनं आप जरिमा युवानं अहेळन् वसुः सुऽमनाः बभूव ॥ ८ ॥ एतानि भद्रा कलश क्रियाम कुरुऽश्रवण ददतः मघानि दानः इत् वः मघऽवानः सः अस्तु अयं च सोमः हृदि यं बिभर्मि ॥ ९ ॥ ३० ॥ ७ ॥

---

॥ ३३ ॥ प्र मा युयुज्रे प्रऽयुजः जनानां वहामि स्म पूषणं अंतरेण विश्वे देवासः अध मां अरक्षन् दुःऽशासुः आ अगात् इति घोषः आसीत् ॥ १ ॥ सं मा तपंति अभितः सपत्नीःऽइव पर्शवः नि बाधते अमतिः नग्नता जसुः वेः न वेवीयते मतिः ॥ २ ॥ मूषः न शिश्ना वि अदंति मा आऽध्यः स्तोतारं ते शतऽक्रतो° सकृत् सु नः मघऽवन् इंद्र मृळय अध पिताऽइव नः भव ॥ ३ ॥ कुरुऽश्रवणं अवृणि राजानं त्रासदस्यवं मंहिष्ठं वाघतां ऋषिः ॥ ४ ॥ यस्य मा हरितः रथे तिस्रः वहंति साधुऽया स्तवै सहस्रऽदक्षिणे ॥ ५ ॥ १ ॥ यस्य प्रऽस्वादसः गिरः उपमऽश्रवसः पितुः क्षेत्रं न रण्वं ऊचुषे ॥ ६ ॥ अधि पुत्र उपमऽश्रवः नपात् मित्रऽअतिथेः इहि पितुः ते अस्मि वंदिता ॥ ७ ॥ यत् ईशीय अमृतानां उत वा मर्त्यानां जीवेत् इत् मघऽवा मम ॥ ८ ॥ न देवानां अति व्रतं शतऽआत्मा चन जीवति तथा युजा वि ववृते ॥ ९ ॥ २ ॥

---

॥ ३४ ॥ प्रावेपाः मा बृहतः मादयंति प्रवातेऽजाः इरिणे वर्वृ-



Digitized by Google

तानाः। सोमस्येव मौजवतस्य भक्षो विभीदको जागृविर्मह्यमच्छान् ॥१॥ न मा मिमेथ न जिहीळ एषा शिवा सखिभ्य उत मह्यमासीत्। अक्षस्याहमेकपरस्य हेतोरनुव्रतामप जायामरोधं ॥२॥ द्वेष्टि श्वश्रूरप जाया रुणद्धि न नाथितो विंदते मर्डितारं। अश्वस्येव जरतो वस्न्यस्य नाहं विंदामि कितवस्य भोगं ॥३॥ अन्ये जायां परि मृशंत्यस्य यस्यागृधद्वेदने वाज्य१क्षः। पिता माता भ्रातर एनमाहुर्न जानीमो नयता बद्धमेतं ॥४॥ यदादीध्ये न दविषाण्येभिः परायद्भ्योऽव हीये सखिभ्यः। न्युप्ताश्च बभ्रवो वाचमक्रतँ एमीदेषां निष्कृतं जारिणीव ॥५॥३॥ सभामेति कितवः पृच्छमानो जेष्यामीति तन्वा३ शूशुजानः। अक्षासो अस्य वि तिरंति कामं प्रतिदीव्ने दधत आ कृतानि ॥६॥ अक्षास इदंकुशिनो नितोदिनो निकृत्वानस्तपनास्तापयिष्णवः। कुमारदेष्णा जयतः पुनर्हणो मध्वा संपृक्ताः कितवस्य बर्हणा ॥७॥ त्रिपंचाशः क्रीळति व्रात एषां देव इव सविता सत्यधर्मा। उग्रस्य चिन्मन्यवे ना नमंते राजा चिदेभ्यो नम इत्कृणोति ॥८॥ नीचा वर्तंत उपरि स्फुरंत्यहस्तासो हस्तवंतं सहंते। दिव्या अंगारा इरिणे न्युप्ताः शीताः संतो हृदयं निर्दहंति ॥९॥ जाया तप्यते कितवस्य हीना माता पुत्रस्य चरतः क्व स्वित्। ऋणावा बिभ्यद्धनमिच्छमानोऽन्येषामस्तमुप नक्तमेति ॥१०॥४॥ स्त्रियं दृष्ट्वाय कितवं ततापान्येषां जायां सुकृतं च योनिं। पूर्वाह्णे अश्वान्युयुजे हि बभ्रून्त्सो अग्नेरंते वृषलः पपाद ॥११॥ यो वः सेनानीर्महतो गणस्य राजा व्रातस्य प्रथमो बभूव। तस्मै कृणोमि न धना रुणध्मि दशाहं प्राचीस्तदृतं वदामि ॥१२॥ अक्षै-



Digitized by Google

तानाः सोमस्यऽइव मौजऽवतस्य भक्षः विऽभीदकः जागृविः
मह्यं अच्छान् ॥ १ ॥ न मा मिमेथ न जिहीळे एषा शिवा सखिऽभ्यः उत मह्यं आसीत् अक्षस्य अहं एकऽपरस्य हेतोः अनुऽव्रतां
अप जायां अरोधं ॥ २ ॥ द्वेष्टि श्वश्रूः अप जाया रुणद्धि न नाथितः
विंदते मर्डितारं अश्वस्यऽइव जरतः वस्न्यस्य न अहं विंदामि कितवस्य भोगं ॥ ३ ॥ अन्ये जायां परि मृशंति अस्य यस्य अगृधत्
वेदने वाजी अक्षः पिता माता भ्रातरः एनं आहुः न जानीमः नयत बद्धं एतं ॥ ४ ॥ यत् आऽदीध्ये न दविषाणि एभिः परायत्ऽभ्यः
अव हीये सखिऽभ्यः निऽउप्ताः च बभ्रवः वाचं अक्रत एमि इत्
एषां निःऽकृतं जारिणीऽइव ॥ ५ ॥ ३ ॥ सभां एति कितवः पृच्छमानः जेष्यामि इति तन्वा शूशुजानः अक्षासः अस्य वि तिरंति
कामं प्रतिऽदीव्ने दधतः आ कृतानि ॥ ६ ॥ अक्षासः इत् अंकुशिनः
निऽतोदिनः निऽकृत्वानः तपनाः तापयिष्णवः कुमारऽदेष्णाः
जयतः पुनःऽहनः मध्वा संऽपृक्ताः कितवस्य बर्हणा ॥ ७ ॥ त्रिऽपंचाशः क्रीळति व्रातः एषां देवःऽइव सविता सत्यऽधर्मा उग्रस्य
चित् मन्यवे न नमंते राजा चित् एभ्यः नमः इत् कृणोति ॥ ८ ॥
नीचा वर्तंते उपरि स्फुरंति अहस्तासः हस्तऽवंतं सहंते दिव्याः
अंगाराः इरिणे निऽउप्ताः शीताः संतः हृदयं निः दहंति ॥ ९ ॥ जाया
तप्यते कितवस्य हीना माता पुत्रस्य चरतः क्व स्वित् ऋणऽवा
बिभ्यत् धनं इच्छमानः अन्येषां अस्तं उप नक्तं एति ॥ १० ॥ ४ ॥ स्त्रियं
दृष्ट्वाय कितवं तताप अन्येषां जायां सुऽकृतं च योनिं पूर्वाह्णे
अश्वान् युयुजे हि बभ्रून् सः अग्नेः अंते वृषलः पपाद ॥ ११ ॥ यः वः
सेनाऽनीः महतः गणस्य राजा व्रातस्य प्रथमः बभूव तस्मै कृणोमि न धना रुणध्मि दश अहं प्राचीः तत् ऋतं वदामि ॥ १२ ॥ अक्षैः



Digitized by Google

मा दीव्यः कृषिमित्कृषस्व वित्ते रमस्व बहु मन्यमानः। तत्र गावः कितव तत्र जाया तन्मे वि चष्टे सवितायमर्यः ॥१३॥ मित्रं कृणुध्वं खलु मृळता नो मा नो घोरेण चरताभि धृष्णु। नि वो नु मन्युर्विशतामरातिरन्यो बभ्रूणां प्रसितौ न्वस्तु ॥१४॥५॥

॥ ३५ ॥ १–१४ लुशो धानाकः ॥ विश्वे देवाः ॥ १–१२ जगती। १३. १४ त्रिष्टुप् ॥

॥ ३५ ॥ अबुध्रमु त्य इंद्रवंतो अग्नयो ज्योतिर्भरंत उषसो व्युष्टिषु। मही द्यावापृथिवी चेततामपोऽद्या देवानामव आ वृणीमहे ॥१॥ दिवस्पृथिव्योरव आ वृणीमहे मातॄन्त्सिंधून्पर्वताञ्छर्यणावतः। अनागास्त्वं सूर्यमुषासमीमहे भद्रं सोमः सुवानो अद्या कृणोतु नः ॥२॥ द्यावा नो अद्य पृथिवी अनागसो मही त्रायेतां सुविताय मातरा। उषा उच्छंत्यप बाधतामघं स्वस्त्य१ग्निं समिधानमीमहे ॥३॥ इयं न उस्रा प्रथमा सुदेव्यं रेवत्सनिभ्यो रेवती व्युच्छतु। आरे मन्युं दुर्विदत्रस्य धीमहि स्वस्त्य१ग्निं समिधानमीमहे ॥४॥ प्र याः सिस्रते सूर्यस्य रश्मिभिर्ज्योतिर्भरंतीरुषसो व्युष्टिषु। भद्रा नो अद्य श्रवसे व्युच्छत स्वस्त्य१ग्निं समिधानमीमहे ॥५॥६॥ अनमीवा उषस आ चरंतु न उदग्नयो जिहतां ज्योतिषा बृहत्। आयुक्षातामश्विना तूतुजिं रथं स्वस्त्य१ग्निं समिधानमीमहे ॥६॥ श्रेष्ठं नो अद्य सवितर्वरेण्यं भागमा सुव स हि रत्नधा असि। रायो जनित्रीं धिषणामुप ब्रुवे स्वस्त्य१ग्निं समिधानमीमहे ॥७॥ पिपर्तु मा तदृतस्य प्रवाचनं देवानां यन्मनुष्या३ अमन्महि। विश्वा इदुस्राः स्पळुदेति सूर्यः स्वस्त्य१ग्निं समिधानमीमहे ॥८॥ अद्वेषो अद्य बर्हिषः स्तरीमणि ग्राव्णां योगे मन्मनः साध ईमहे। आदित्यानां शर्मणि स्था भुरण्यसि स्वस्त्य१ग्निं समि-



Digitized by Google

मा दीव्यः कृषिं इत् कृषस्व वित्ते रमस्व बहु मन्यमानः तत्र गावः कितव तत्र जाया तत् मे वि चष्टे सविता अयं अर्यः॥१३॥ मित्रं कृणुध्वं खलु मृळत नः मा नः घोरेण चरत अभि धृष्णु नि वः नु मन्युः विशतां अरातिः अन्यः बभ्रूणां प्रऽसितौ नु अस्तु॥१४॥५॥

---

॥३५॥ अबुध्रं ऊं॰ त्ये इंद्रऽवंतः अग्नयः ज्योतिः भरंतः उषसः विऽउष्टिषु मही॰ द्यावापृथिवी॰ चेततां अपः अद्य देवानां अवः आ वृणीमहे॥१॥ दिवःपृथिव्योः अवः आ वृणीमहे मातॄन् सिंधून् पर्वतान् शर्यणाऽवतः अनागाःऽत्वं सूर्यं उषसं ईमहे भद्रं सोमः सुवानः अद्य कृणोतु नः॥२॥ द्यावा नः अद्य पृथिवी॰ अनागसः मही॰ त्रायेतां सुविताय मातरा उषाः उच्छंती अप बाधतां अघं स्वस्ति अग्निं संऽइधानं ईमहे॥३॥ इयं नः उस्रा प्रथमा सुऽदेव्यं रेवत् सनिऽभ्यः रेवती वि उच्छतु आरे मन्युं दुःऽविदत्रस्य धीमहि स्वस्ति अग्निं संऽइधानं ईमहे॥४॥ प्र याः सिस्रते सूर्यस्य रश्मिऽभिः ज्योतिः भरंतीः उषसः विऽउष्टिषु भद्राः नः अद्य श्रवसे वि उच्छत स्वस्ति अग्निं संऽइधानं ईमहे॥५॥६॥ अनमीवाः उषसः आ चरंतु नः उत् अग्नयः जिहतां ज्योतिषा बृहत् अयुक्षातां अश्विना तूतुजिं रथं स्वस्ति अग्निं संऽइधानं ईमहे॥६॥ श्रेष्ठं नः अद्य सवितः वरेण्यं भागं आ सुव सः हि रत्नऽधाः असि रायः जनित्री धिषणां उप ब्रुवे स्वस्ति अग्निं संऽइधानं ईमहे॥७॥ पिपर्तु मा तत् ऋतस्य प्रऽवाचनं देवानां यत् मनुष्याः अमन्महि विश्वाः इत् उस्राः स्पट् उत् एति सूर्यः स्वस्ति अग्निं संऽइधानं ईमहे ॥८॥ अद्वेषः अद्य बर्हिषः स्तरीमणि ग्राव्णां योगे मन्मनः साधे ईमहे आदित्यानां शर्मणि स्थाः भुरण्यसि स्वस्ति अग्निं संऽइ-

धानमीमहे ॥ ९ ॥ आ नो बर्हिः सधमादे बृहद्दिवि देवाँ ईळे सादया सप्त होतॄन्। इंद्रं मित्रं वरुणं सातये भगं स्वस्त्य१ग्निं समिधानमीमहे ॥ १० ॥ ७ ॥ त आदित्या आ गता सर्वतातये वृधे नो यज्ञमवता सजोषसः। बृहस्पतिं पूषणमश्विना भगं स्वस्त्य१ग्निं समिधानमीमहे ॥ ११ ॥ तन्नो देवा यच्छत सुप्रवाचनं छर्दिरादित्याः सुभरं नृपाय्यं। पश्वे तोकाय तनयाय जीवसे स्वस्त्य१ग्निं समिधानमीमहे ॥ १२ ॥ विश्वे अद्य मरुतो विश्व ऊती विश्वे भवंत्वग्नयः समिद्धाः। विश्वे नो देवा अवसा गमंतु विश्वमस्तु द्रविणं वाजो अस्मे ॥ १३ ॥ यं देवासोऽवथ वाजसातौ यं त्रायध्वे यं पिपृथात्यंहः। यो वो गोपीथे न भयस्य वेद ते स्याम देववीतये तुरासः ॥ १४ ॥ ८ ॥

---

॥ ३६ ॥ १–१४ लुशो धानाकः ॥ विश्वे देवाः ॥ १–१२ जगती। १३. १४ त्रिष्टुप् ॥

॥ ३६ ॥ उषासानक्ता बृहती सुपेशसा द्यावाक्षामा वरुणो मित्रो अर्यमा। इंद्रं हुवे मरुतः पर्वताँ अप आदित्यान्द्यावापृथिवी अपः स्वः ॥ १ ॥ द्यौश्च नः पृथिवी च प्रचेतस ऋतावरी रक्षतामंहसो रिषः। मा दुर्विदत्रा निर्ऋतिर्न ईशत तद्देवानामवो अद्या वृणीमहे ॥ २ ॥ विश्वस्मान्नो अदितिः पात्वंहसो माता मित्रस्य वरुणस्य रेवतः। स्वर्वज्ज्योतिरवृकं नशीमहि तद्देवानामवो अद्या वृणीमहे ॥ ३ ॥ ग्रावा वदन्नप रक्षांसि सेधतु दुःष्वप्न्यं निर्ऋतिं विश्वमत्रिणं। आदित्यं शर्म मरुतामशीमहि तद्देवानामवो अद्या वृणीमहे ॥ ४ ॥ एंद्रो बर्हिः सीदतु पिन्वतामिळा बृहस्पतिः सामभिर्ऋक्वो अर्चतु। सुप्रकेतं जीवसे मन्म धीमहि तद्देवानामवो अद्या वृणीमहे ॥ ५ ॥ ९ ॥ दिविस्पृशं यज्ञमस्माकमश्विना जीराध्वरं कृणुतं



Digitized by Google

धानं ईमहे ॥ ९ ॥ आ नः बर्हिः सधऽमादे बृहत् दिवि देवान् ईळे सादय सप्त होतॄन् इंद्रं मित्रं वरुणं सातये भगं स्वस्ति अग्निं संऽइधानं ईमहे ॥ १० ॥ ७ ॥ ते आदित्याः आ गत सर्वऽतातये वृधे नः यज्ञं अवत सऽजोषसः बृहस्पतिं पूषणं अश्विना भगं स्वस्ति अग्निं संऽइधानं ईमहे ॥ ११ ॥ तत् नः देवाः यच्छत सुऽप्रवाचनं छर्दिः आदित्याः सुऽभरं नृऽपाय्यं पश्वे तोकाय तनयाय जीवसे स्वस्ति अग्निं संऽइधानं ईमहे ॥ १२ ॥ विश्वे अद्य मरुतः विश्वे ऊती विश्वे भवंतु अग्नयः संऽइद्धाः विश्वे नः देवाः अवसा आ गमंतु विश्वं अस्तु द्रविणं वाजः अस्मे ॥ १३ ॥ यं देवासः अवथ वाजऽसातौ यं त्रायध्वे यं पिपृथ अति अंहः यः वः गोऽपीथे न भयस्य वेद ते स्याम देवऽवीतये तुरासः ॥ १४ ॥ ८ ॥

---

॥ ३६ ॥ उषसानक्ता बृहती सुऽपेशसा द्यावाक्षामा वरुणः मित्रः अर्यमा इंद्रं हुवे मरुतः पर्वतान् अपः आदित्यान् द्यावापृथिवी अपः स्वः॰ ॥ १ ॥ द्यौः च नः पृथिवी च प्रऽचेतसा ऋतवरी॰ रक्षतां अंहसः रिषः मा दुःऽविदत्रा निःऽऋतिः नः ईशत तत् देवानां अवः अद्य वृणीमहे ॥ २ ॥ विश्वस्मात् नः अदितिः पातु अंहसः माता मित्रस्य वरुणस्य रेवतः स्वःऽवत् ज्योतिः अवृकं नशीमहि तत् देवानां अवः अद्य वृणीमहे ॥ ३ ॥ ग्रावा वदन् अप रक्षांसि सेधतु दुःऽस्वप्न्यं निःऽऋतिं विश्वं अत्रिणं आदित्यं शर्म मरुतां अशीमहि तत् देवानां अवः अद्य वृणीमहे ॥ ४ ॥ आ इंद्रः बर्हिः सीदतु पिन्वतां इळा बृहस्पतिः सामऽभिः ऋक्वः अर्चतु सुऽप्रकेतं जीवसे मन्म धीमहि तत् देवानां अवः अद्य वृणीमहे ॥ ५ ॥ ९ ॥ दिविऽस्पृशं यज्ञं अस्माकं अश्विना जीरऽअध्वरं कृणुतं



Digitized by Google

सुम्नमिष्टये । प्राचीनरश्मिमाहुतं घृतेन तद्देवानामवो अद्या वृणीमहे ॥ ६ ॥ उप ह्वये सुहवं मारुतं गणं पावकमृष्वं सख्याय शंभुवं । रायस्पोषं सौश्रवसाय धीमहि तद्देवानामवो अद्या वृणीमहे ॥७॥ अपां पेरुं जीवधन्यं भरामहे देवाव्यं सुहवमध्वरश्रियं । सुरश्मिं सोममिंद्रियं यमीमहि तद्देवानामवो अद्या वृणीमहे ॥ ८ ॥ सनेम तत्सुसनिता सनित्वभिर्वयं जीवा जीवपुत्रा अनागसः । ब्रह्मद्विषो विष्वगेनो भरेरत तद्देवानामवो अद्या वृणीमहे ॥ ९ ॥ ये स्था मनोर्यज्ञियास्ते शृणोतन यद्वो देवा ईमहे तद्ददातन । जैत्रं क्रतुं रयिमद्वीरवद्यशस्तद्देवानामवो अद्या वृणीमहे ॥ १० ॥ १० ॥ महदद्य महतामा वृणीमहेऽवो देवानां बृहतामनर्वणां । यथा वसु वीरजातं नशामहै तद्देवानामवो अद्या वृणीमहे ॥११॥ महो अग्नेः समिधानस्य शर्मण्यनागा मित्रे वरुणे स्वस्तये । श्रेष्ठे स्याम सवितुः सवीमनि तद्देवानामवो अद्या वृणीमहे ॥१२॥ ये सवितुः सत्यसवस्य विश्वे मित्रस्य व्रते वरुणस्य देवाः । ते सौभगं वीरवद्गोमदप्नो दधातन द्रविणं चित्रमस्मे ॥ १३ ॥ सविता पश्चातात्सविता पुरस्तात्सवितोत्तरात्तात्सविताधरात्तात् । सविता नः सुवतु सर्वतातिं सविता नो रासतां दीर्घमायुः ॥ १४ ॥ ११ ॥

॥ ३७ ॥ १–१२ अभितपाः सौर्यः ॥ सूर्यः ॥ १–९. ११. १२ जगती । १० त्रिष्टुप् ॥

॥ ३७ ॥ नमो मित्रस्य वरुणस्य चक्षसे महो देवाय तदृतं सपर्यत । दूरेदृशे देवजाताय केतवे दिवस्पुत्राय सूर्याय शंसत ॥१॥ सा मा सत्योक्तिः परि पातु विश्वतो द्यावा च यत्र ततनन्नहानि च । विश्वमन्यन्नि विशते यदेजति विश्वाहापो



Digitized by Google

सुषं इष्टयें प्राचीनऽरश्मिं आऽहुतं घृतेन तत् देवानां अवः अद्य
वृणीमहे ॥६॥ उप ह्वये सुऽहवं मारुतं गणं पावकं ऋष्वं सख्याय
शंऽभुवं रायः पोषं सौश्रवसाय धीमहि तत् देवानां अवः अद्य
वृणीमहे ॥७॥ अपां पेरुं जीवऽधन्यं भरामहे देवऽअव्यं सुऽहवं
अध्वरऽश्रियं सुऽरश्मिं सोमं इन्द्रियं यमीमहि तत् देवानां अवः
अद्य वृणीमहे ॥८॥ सनेम तत् सुऽसनिता सनित्वऽभिः वयं जी-
वाः जीवऽपुत्राः अनागसः ब्रह्मऽद्विषः विष्वक् एनः भरेरत तत्
देवानां अवः अद्य वृणीमहे ॥९॥ ये स्थ मनोः यज्ञियाः ते शृणो-
तन यत् वः देवाः ईमहे तत् ददातन जैत्रं क्रतुं रयिऽमत् वीरऽवत्
यशः तत् देवानां अवः अद्य वृणीमहे ॥१०॥१०॥ महत् अद्य महतां
आ वृणीमहे अवः देवानां बृहतां अनर्वणां यथा वसु वीरऽजातं
नशामहै तत् देवानां अवः अद्य वृणीमहे ॥११॥ महः अग्नेः संऽइ-
धानस्य शर्मणि अनागाः मित्रे वरुणे सुऽअस्तये श्रेष्ठे स्याम सवितुः
सवीमनि तत् देवानां अवः अद्य वृणीमहे ॥१२॥ ये सवितुः सत्य-
ऽसवस्य विश्वे मित्रस्य व्रते वरुणस्य देवाः ते सौभगं वीरऽवत्
गोऽमत् अप्नः दधातन द्रविणं चित्रं अस्मे ॥१३॥ सविता पश्चा-
तात् सविता पुरस्तात् सविता उत्तरात्तात् सविता अधरात्तात्
सविता नः सुवतु सर्वऽतातिं सविता नः रासतां दीर्घं आयुः
॥१४॥११॥

---

॥३७॥ नमः मित्रस्य वरुणस्य चक्षसे महः देवाय तत् ऋतं
सपर्यत दूरेऽदृशे देवऽजाताय केतवे दिवः पुत्राय सूर्याय शंसत
॥१॥ सा मा सत्यऽउक्तिः परि पातु विश्वतः द्यावा च यत्र ततनन्
अहानि च विश्वं अन्यत् नि विशते यत् एजति विश्वाहा आपः



Digitized by Google

विश्वाहोदेति सूर्यः ॥२॥ न ते अदेवः प्रदिवो नि वासते यदे-
तशेभिः पतरै रथर्यसि । प्राचीनमन्यदनु वर्तते रज उदन्येन
ज्योतिषा यासि सूर्य ॥ ३ ॥ येन सूर्य ज्योतिषा बाधसे तमो
जगच्च विश्वमुदियर्षि भानुना । तेनास्मद्विश्वामनिरामनाहु-
तिमपामीवामप दुःष्वप्न्यं सुव ॥ ४ ॥ विश्वस्य हि प्रेषितो
रक्षसि व्रतमहेळयन्नुच्चरसि स्वधा अनु । यदद्य त्वा सूर्यो-
पब्रवामहै तं नो देवा अनु मंसीरत क्रतुं ॥५॥ तं नो द्यावा-
पृथिवी तन्न आप इंद्रः शृण्वंतु मरुतो हवं वचः । मा शूने
भूम सूर्यस्य संदृशि भद्रं जीवंतो जरणामशीमहि ॥ ६ ॥ १२॥
विश्वाहा त्वा सुमनसः सुचक्षसः प्रजावंतो अनमीवा अना-
गसः । उद्यंतं त्वा मित्रमहो दिवेदिवे ज्योग्जीवाः प्रति पश्येम
सूर्य ॥७॥ महि ज्योतिर्बिभ्रतं त्वा विचक्षण भास्वंतं चक्षुषे-
चक्षुषे मयः । आरोहंतं बृहतः पाजसस्परि वयं जीवाः प्रति
पश्येम सूर्य ॥ ८ ॥ यस्य ते विश्वा भुवनानि केतुना प्र चेरते
नि च विशंते अक्तुभिः । अनागास्त्वेन हरिकेश सूर्याह्नाह्ना
नो वस्यसावस्यसोदिहि ॥९॥ शं नो भव चक्षसा शं नो अ-
ह्ना शं भानुना शं हिमा शं घृणेन । यथा शमध्वञ्छमसद्दुरोणे
तत्सूर्य द्रविणं धेहि चित्रं ॥१०॥ अस्माकं देवा उभयाय ज-
न्मने शर्म यच्छत द्विपदे चतुष्पदे । अदत्पिबदूर्जयमानमा-
शितं तदस्मे शं योररपो दधातन ॥ ११ ॥ यद्वो देवाश्चकृम
जिह्वया गुरु मनसो वा प्रयुती देवहेळनं । अरावा यो नो
अभि दुच्छुनायते तस्मिन्तदेनो वसवो नि धेतन ॥१२॥१३॥

---

॥ ३८ ॥ १-५ इंद्रो मुष्कवान् ॥ इंद्रः ॥ जगती ॥

॥३८॥ अस्मिन्न इंद्र पृत्सुतौ यशस्वति शिमीवति क्रंदसि



Digitized by Google

विश्वाहा उत् एति सूर्यः ॥२॥ न ते अदेवः प्रऽदिवः नि वासते यत्
एतशेभिः पतरैः रथर्यसि प्राचीनं अन्यत् अनु वर्तते रजः उत् अ-
न्येन ज्योतिषा यासि सूर्य ॥३॥ येन सूर्य ज्योतिषा बाधसे तमः
जगत् च विश्वं उत्ऽइयर्षि भानुना तेन अस्मत् विश्वां अनिरां
अनाहुतिं अप अमीवां अप दुःऽस्वप्न्यं सुव ॥४॥ विश्वस्य हि प्र-
ऽइषितः रक्षसि व्रतं अहेळयन् उत्ऽचरसि स्वधाः अनु यत् अद्य
त्वा सूर्य उपऽब्रवामहै तं नः देवाः अनु मंसीरत क्रतुं ॥५॥ तं नः
द्यावापृथिवी तत् नः आपः इंद्रः शृण्वंतु मरुतः हवं वचः मा शूने
भूम सूर्यस्य संऽदृशि भद्रं जीवंतः जरणां अशीमहि ॥६॥१२॥ वि-
श्वाहा त्वा सुऽमनसः सुऽचक्षसः प्रजाऽवंतः अनमीवाः अना-
गसः उत्ऽयंतं त्वा मित्रऽमहः दिवेऽदिवे ज्योक् जीवाः प्रति
पश्येम सूर्य ॥७॥ महि ज्योतिः बिभ्रतं त्वा विऽचक्षण भास्वंतं
चक्षुषेऽचक्षुषे मयः आऽरोहंतं बृहतः पाजसः परि वयं जीवाः
प्रति पश्येम सूर्य ॥८॥ यस्य ते विश्वा भुवनानि केतुना प्र च ईरते
नि च विशंते अक्तुऽभिः अनागाःऽत्वेन हरिऽकेश सूर्य अह्नाऽअ-
ह्ना नः वस्यसाऽवस्यसा उत् इहि ॥९॥ शं नः भव चक्षसा शं नः
अह्ना शं भानुना शं हिमा शं घृणेन यथा शं अध्वन् शं असत् दु-
रोणे तत् सूर्य द्रविणं धेहि चित्रं ॥१०॥ अस्माकं देवाः उभयाय
जन्मने शर्म यच्छत द्विऽपदे चतुःऽपदे अदत् पिबत् ऊर्जयमानं
आशितं तत् अस्मे शं योः अरपः दधातन ॥११॥ यत् वः देवाः च-
कृम जिह्वया गुरु मनसः वा प्रऽयुती देवऽहेळनं अरावा यः नः
अभि दुच्छुनऽयते तस्मिन् तत् एनः वसवः नि धेतन ॥१२॥१३॥

---

॥३८॥ अस्मिन् नः इंद्र पृत्सुतौ यशस्वति शिमीऽवति क्रंदसि



Digitized by Google

प्रावं सातये। यत्र गोषाता धृषितेषु खादिषु विष्वक्पतंति दिद्यवो नृषाह्ये ॥१॥ स नः क्षुमंतं सदने व्यूर्णुहि गोअर्णसं रयिमिंद्र श्रवाय्यं। स्याम ते जयतः शक्र मेदिनो यथा वयमुश्मसि तद्वसो कृधि ॥२॥ यो नो दास आर्यो वा पुरुष्टुतादेव इंद्र युधये चिकेतति। अस्माभिष्टे सुषहाः संतु शत्रवस्त्वया वयं तान्वनुयाम संगमे ॥३॥ यो दभ्रेभिर्हव्यो यश्च भूरिभिर्यो अभीके वरिवोविन्नृषाह्ये। तं विखादे सस्निमद्य श्रुतं नरमर्वांचमिंद्रमवसे करामहे ॥४॥ स्ववृजं हि त्वामहमिंद्र शुश्रवानानुदं वृषभ रध्रचोदनं। प्र मुंचस्व परि कुत्सादिहा गहि किमु त्वावान्मुष्कयोर्बद्ध आसते ॥५॥१४॥

---

॥ ३९ ॥ १–१४ घोषा काक्षीवती ॥ अश्विनौ ॥ १–१३ जगती । १४ त्रिष्टुप् ॥

॥३९॥ यो वां परिज्मा सुवृदश्विना रथो दोषामुषासो हव्यो हविष्मता। शश्वत्तमासस्तमु वामिदं वयं पितुर्न नाम सुहवं हवामहे ॥१॥ चोदयतं सूनृताः पिन्वतं धिय उत्पुरंधीरीरयतं तदुश्मसि। यशसं भागं कृणुतं नो अश्विना सोमं न चारुं मघवत्सु नस्कृतं ॥२॥ अमाजुरश्चिद्भवथो युवं भगोऽनाशोश्चिदवितारापमस्य चित्। अंधस्य चिन्नासत्या कृशस्य चिद्युवामिदाहुर्भिषजा रुतस्य चित् ॥३॥ युवं च्यवानं सनयं यथा रथं पुनर्युवानं चरथाय तक्षथुः। निष्टौग्र्यमूहथुरद्भ्यस्परि विश्वेत्ता वां सवनेषु प्रवाच्या ॥४॥ पुराणा वां वीर्या३ प्र ब्रवा जनेऽथो हासथुर्भिषजा मयोभुवा। ता वां नु नव्याववसे करामहेऽयं नासत्या श्रदरिर्यथा दधत् ॥५॥१५॥ इयं वामह्वे शृणुतं मे अश्विना पुत्रायेव पितरा मह्यं शिक्षतं। अनापिरज्ञा असजात्यामतिः पुरा तस्या अ-



Digitized by Google

प्र अव सातये यत्र गोऽसाता धृषितेषु खादिषु विष्वक् पतंति
दिद्यवः नृऽसह्ये ॥१॥ सः नः क्षुऽमंतं सदने वि ऊर्णुहि गोऽअर्णसं
रयिं इंद्र श्रवाय्यं स्याम ते जयतः शक्र मेदिनः यथा वयं उश्मसि
तत् वसो कृधि ॥२॥ यः नः दासः आर्यः वा पुरुऽस्तुत अदेवः इंद्र
युधये चिकेतति अस्माभिः ते सुऽसहाः संतु शत्रवः त्वया वयं तान्
वनुयाम संऽगमे ॥३॥ यः दभ्रेभिः हव्यः यः च भूरिऽभिः यः अभीके
वरिवःऽवित् नृऽसह्ये तं विऽखादे सस्निं अद्य श्रुतं नरं अर्वाचं
इंद्रं अवसे करामहे ॥४॥ स्वऽवृजं हि त्वां अहं इंद्र शुश्रव अननुऽदं
वृषभ रध्रऽचोदनं प्र मुंचस्व परि कुत्सात् इह आ गहि किं ऊं त्वा-
ऽवान् मुष्कयोः बद्धः आसते ॥५॥१४॥

---

॥३९॥ यः वां परिऽज्मा सुऽवृत् अश्विना रथः दोषां उषसः ह-
व्यः हविष्मता शश्वत्ऽतमासः तं ऊं वां इदं वयं पितुः न नाम
सुऽहवं हवामहे ॥१॥ चोदयतं सूनृताः पिन्वतं धियः उत् पुरंऽधीः
ईरयतं तत् उश्मसि यशसं भागं कृणुतं नः अश्विना सोमं न चारुं
मघवत्ऽसु नः कृतं ॥२॥ अमाऽजुरः चित् भवथः युवं भगः अना-
शोः चित् अवितारा अपमस्य चित् अंधस्य चित् नासत्या कृ-
शस्य चित् युवां इत् आहुः भिषजा रुतस्य चित् ॥३॥ युवं च्यवानं
सनयं यथा रथं पुनः युवानं चरथाय तक्षथुः निः तौग्र्यं ऊहथुः
अत्ऽभ्यः परि विश्वा इत् ता वां सवनेषु प्रऽवाच्या ॥४॥ पुराणा
वां वीर्या प्र ब्रव जने अथो ह आसथुः भिषजा मयःऽभुवा ता वां
नु नव्यौ अवसे करामहे अयं नासत्या श्रत् अरिः यथा दधत्
॥५॥१५॥ इयं वां अह्वे शृणुतं मे अश्विना पुत्रायऽइव पितरा मह्यं
शिक्षतं अनापिः अज्ञाः असजात्या अमतिः पुरा तस्याः अ-



Digitized by Google

भिशस्तेरव स्पृतं ॥ ६ ॥ युवं रथेन विमदाय शुंध्युवं न्यूहथुः पुरुमित्रस्य योषणां । युवं हवं वध्रिमत्या अगच्छतं युवं सुषुतिं चक्रथुः पुरंधये ॥ ७ ॥ युवं विप्रस्य जरणामुपेयुषः पुनः कलेरकृणुतं युवद्वयः । युवं वंदनमृश्यदादुदूपथुर्युवं सद्यो विश्पलामेतवे कृथः ॥ ८ ॥ युवं ह रेभं वृषणा गुहा हितमुदैरयतं ममृवांसमश्विना । युवमृबीसमुत तप्तमत्रय ओमन्वंतं चक्रथुः सप्तवध्रये ॥ ९ ॥ युवं श्वेतं पेदवेऽश्विनाश्वं नवभिर्वाजैर्नवती च वाजिनं । चर्कृत्यं ददथुर्द्रावयत्सखं भगं न नृभ्यो हव्यं मयोभुवं ॥ १० ॥ १६ ॥ न तं राजानावदिते कुतश्चन नांहो अश्नोति दुरितं नकिर्भयं । यमश्विना सुहवा रुद्रवर्तनी पुरोरथं कृणुथः पत्न्या सह ॥ ११ ॥ आ तेन यातं मनसो जवीयसा रथं यं वामृभवश्चक्रुरश्विना । यस्य योगे दुहिता जायते दिव उभे अहनी सुदिने विवस्वतः ॥ १२ ॥ ता वर्तिर्यातं जयुषा वि पर्वतमपिन्वतं शयवे धेनुमश्विना । वृकस्य चिद्वर्तिकामंतरास्याद्युवं शचीभिर्ग्रसितामर्मुचतं ॥ १३ ॥ एतं वां स्तोममश्विनावकर्मातक्षाम भृगवो न रथं । न्यमृक्षाम योषणां न मर्ये नित्यं न सूनुं तनयं दधानाः ॥ १४ ॥ १७ ॥

---

॥ ४० ॥ १–१४ घोषा काक्षीवती ॥ अश्विनौ ॥ जगती ॥

॥ ४० ॥ रथं यांतं कुह को ह वां नरा प्रति द्युमंतं सुवितायं भूषति । प्रातर्यावाणं विभ्वं विशेविशे वस्तोर्वस्तोर्वहमानं धिया शमि ॥ १ ॥ कुह स्विद्दोषा कुह वस्तोरश्विना कुहाभिपित्वं करतः कुहोषतुः । को वां शयुत्रा विधवेव देवरं मर्यं न योषा कृणुते सधस्थ आ ॥ २ ॥ प्रातर्जरेथे जरणेव कापया वस्तोर्वस्तोर्यजता गच्छथो गृहं । कस्य ध्वस्रा भवथः कस्य वा



Digitized by Google

भिऽशस्तेः अव स्पृतं ॥६॥ युवं रथेन विऽमदाय शुंध्युवं नि ऊहथुः
पुरुऽमित्रस्य योषणां युवं हवं वध्रिऽमत्याः अगच्छतं युवं सुऽसु-
तिं चक्रथुः पुरंऽधये ॥७॥ युवं विप्रस्य जरणां उपऽईयुषः पुनः
कलेः अकृणुतं युवत् वयः युवं वंदनं ऋश्यऽदात् उत् ऊपथुः युवं
सद्यः विश्पलां एतवे कृथः ॥८॥ युवं ह रेभं वृषणा गुहा हितं उत् ऐ-
रयतं ममृऽवांसं अश्विना युवं ऋबीसं उत तप्तं अत्रये ओमन्-
ऽवंतं चक्रथुः सप्तऽवध्रये ॥९॥ युवं श्वेतं पेदवे अश्विना अश्वं नव-
ऽभिः वाजैः नवती च वाजिनं चर्कृत्यं ददथुः द्रवयत्ऽसखं भगं न
नृऽभ्यः हव्यं मयःऽभुवं ॥१०॥१६॥ न तं राजानौ अदिते कुतः चन न
अंहः अश्नोति दुःऽइतं नकिः भयं यं अश्विना सुऽहवा रुद्रऽवर्तनी॰
पुरःऽरथं कृणुथः पत्न्या सह ॥११॥ आ तेन यातं मनसः जवीयसा
रथं यं वां ऋभवः चक्रुः अश्विना यस्य योगे दुहिता जायते दिवः
उभे॰ अहनी॰ सुऽदिने॰ विवस्वतः ॥१२॥ ता वर्तिः यातं जयुषा
वि पर्वतं अपिन्वतं शयवे धेनुं अश्विना वृकस्य चित् वर्तिकां
अंतः आस्यात् युवं शचीभिः ग्रसितां अमुंचतं ॥१३॥ एतं वां
स्तोमं अश्विनौ अकर्म अतक्षाम भृगवः न रथं नि अमृक्षाम यो-
षणां न मर्ये नित्यं न सूनुं तनयं दधानाः ॥ १४ ॥ १७ ॥

---

॥४०॥ रथं यांतं कुह कः ह वां नरा प्रति द्युऽमंतं सुविताय भूष-
ति प्रातःऽयावानं विऽभ्वं विशेऽविशे वस्तोःऽवस्तोः वहमानं
धिया शमि ॥१॥ कुह स्वित् दोषा कुह वस्तोः अश्विना कुह अभि-
ऽपित्वं करतः कुह ऊषतुः कः वां शयुऽत्रा विधवाऽइव देवरं मर्यं
न योषा कृणुते सधऽस्थे आ ॥२॥ प्रातः जरेथे जरणाऽइव कापया
वस्तोःऽवस्तोः यजता गच्छथः गृहं कस्य ध्वस्रा भवथः कस्य वा



Digitized by Google

नरा राजपुत्रेव सवनाव गच्छथः ॥ ३ ॥ युवां मृगेव वारणा मृगण्यवो दोषा वस्तोर्हविषा नि ह्वयामहे । युवं होत्रामृतुथा जुह्वते नरेषं जनाय वहथः शुभस्पती ॥४॥ युवां ह घोषा पर्यश्विना यती राज्ञ ऊचे दुहिता पृच्छे वां नरा । भूतं मे अह्न उत भूतमक्तवेऽश्वावते रथिने शक्तमर्वते ॥ ५ ॥ १८ ॥ युवं कवी ष्ठः पर्यश्विना रथं विशो न कुत्सो जरितुर्नशायथः । युवोर्ह मक्षा पर्यश्विना मध्वासा भरत निष्कृतं न योषणा ॥ ६ ॥ युवं ह भुज्युं युवमश्विना वशं युवं शिंजारमुशनामुपारथुः । युवो ररावा परि सख्यमासते युवोरहमवसा सुम्नमा चके ॥ ७ ॥ युवं ह कृशं युवमश्विना शयुं युवं विधंतं विधवामुरुष्यथः । युवं सनिभ्यः स्तनयंतमश्विनाप व्रजमूर्णुथः सप्तास्यं ॥ ८ ॥ जनिष्ट योषा पतयत्कनीनको वि चारुहन्वीरुधो दंसना अनु । आस्मै रीयंते निवनेव सिंधवोऽस्मा अह्ने भवति तत्पतित्वनं ॥ ९ ॥ जीवं रुदंति वि मयंते अध्वरे दीर्घामनु प्रसितिं दीधियुर्नरः । वामं पितृभ्यो य इदं समेरिरे मयः पतिभ्यो जनयः परिष्वजे ॥ १० ॥ १९ ॥ न तस्य विद्म तदु षु प्र वोचत युवा ह यद्युवत्याः क्षेति योनिषु । प्रियोस्रियस्य वृषभस्य रेतिनो गृहं गमेमाश्विना तदुश्मसि ॥ ११ ॥ आ वामगन्सुमतिर्वाजिनीवसू न्यश्विना हृत्सु कामा अयंसत । अभूतं गोपा मिथुना शुभस्पती प्रिया अर्यम्णो दुर्यां अशीमहि ॥ १२ ॥ ता मंदसाना मनुषो दुरोण आ धत्तं रयिं सहवीरं वचस्यवे । कृतं तीर्थं सुप्रपाणं शुभस्पती स्थाणुं पथेष्ठामप दुर्मतिं हतं ॥ १३ ॥ क स्विदद्य कतमास्वश्विना विक्षु दस्रा मादयेते शुभस्पती । क ईं नि येमे कतमस्य जग्मतुर्विप्रस्य वा यजमानस्य वा गृहं ॥ १४ ॥ २० ॥



Digitized by Google

नरा राजपुत्राऽइव सवना अव गच्छथः ॥३॥ युवां मृगाऽइव वारणा मृगण्यवः दोषा वस्तोः हविषा नि ह्वयामहे युवं होत्रां ऋतुऽथा जुह्वते नरा इषं जनाय वहथः शुभः पती इति ॥४॥ युवां ह घोषा परि अश्विना यती राज्ञः ऊचे दुहिता पृच्छे वां नरा भूतं मे अह्ने उत भूतं अक्तवे अश्वऽवते रथिने शक्तं अर्वते ॥५॥१८॥ युवं कवी इति स्थः परि अश्विना रथं विशः न कुत्सः जरितुः नशायथः युवोः ह मक्षा परि अश्विना मधु आसा भरत निःऽकृतं न योषणा ॥६॥ युवं ह भुज्युं युवं अश्विना वशं युवं शिंजारं उशनां उप आरथुः युवोः ररावा परि सख्यं आसते युवोः अहं अवसा सुम्नं आ चके ॥७॥ युवं ह कृशं युवं अश्विना शयुं युवं विधंतं विधवां उरुष्यथः युवं सनिऽभ्यः स्तनयंतं अश्विना अप व्रजं ऊर्णुथः सप्तऽआस्यं ॥८॥ जनिष्ट योषा पतयत् कनीनकः वि च अरुहन् वीरुधः दंसनाः अनु आ अस्मै रीयंते निवनाऽइव सिंधवः अस्मै अह्ने भवति तत् पतिऽत्वनं ॥९॥ जीवं रुदंति वि मयंते अध्वरे दीर्घां अनु प्रऽसितिं दीधियुः नरः वामं पितृऽभ्यः ये इदं संऽएरिरे मयः पतिऽभ्यः जनयः परिऽस्वजे ॥१०॥१९॥ न तस्य विद्म तत् ऊं इति सु प्र वोचत युवा ह यत् युवत्याः क्षेति योनिषु प्रियऽउस्रियस्य वृषभस्य रेतिनः गृहं गमेम अश्विना तत् उश्मसि ॥११॥ आ वां अगन् सुऽमतिः वाजिनीवसू इति वाजिनीऽवसू नि अश्विना हृत्ऽसु कामाः अयंसत अभूतं गोपा मिथुना शुभः पती इति प्रियाः अर्यम्णः दुर्यान् अशीमहि ॥१२॥ ता मंदसाना मनुषः दुरोणे आ धत्तं रयिं सहऽवीरं वचस्यवे कृतं तीर्थं सुऽप्रपानं शुभः पती इति स्थाणुं पथेऽस्थां अप दुःऽमतिं हतं ॥१३॥ क्व स्वित् अद्य कतमासु अश्विना विक्षु दस्रा मादयेते इति शुभः पती इति कः ईं नि येमे कतमस्य जग्मतुः विप्रस्य वा यजमानस्य वा गृहं ॥१४॥२०॥



Digitized by Google

॥ ४१ ॥ १–३ सुहस्त्यो घौषेयः ॥ अश्विनौ ॥ जगती ॥

॥४१॥ समानमु त्यं पुरुहूतमुक्थ्यं१ रथं त्रिचक्रं सवना गनि-
ग्मतं । परिज्मानं विदथ्यं सुवृक्तिभिर्वयं व्युष्टा उषसो हवामहे
॥१॥ प्रातर्युजं नासत्याधि तिष्ठथः प्रातर्यावाणं मधुवाहनं रथं ।
विशो येन गच्छथो यज्वरीर्नरा कीरेश्चिद्यज्ञं होतृमंतमश्विना
॥२॥ अध्वर्युं वा मधुपाणिं सुहस्त्यमग्निधं वा धृतदक्षं दमूनसं ।
विप्रस्य वा यत्सवनानि गच्छथोऽत आ यातं मधुपेयमश्विना
॥ ३ ॥ २१ ॥

---

॥ ४२ ॥ १–११ कृष्णः ॥ इंद्रः ॥ त्रिष्टुप् ॥

॥४२॥ अस्तेव सु प्रतरं लायमस्यन्भूषन्निव प्र भरा स्तो-
मंमस्मै । वाचा विप्रास्तरत वाचमर्यो नि रामय जरितः सोम
इंद्रं ॥१॥ दोहेन गामुप शिक्षा सखायं प्र बोधय जरितर्जार-
मिंद्रं । कोशं न पूर्णं वसुना न्यृष्टमा च्यावय मघदेयाय शूरं
॥ २ ॥ किमंग त्वा मघवन्भोजमाहुः शिशीहि मा शिशयं त्वा
शृणोमि । अप्नस्वती मम धीरस्तु शक्र वसुविदं भगमिंद्रा भरा
नः ॥३॥ त्वां जना ममसत्येष्विंद्र संतस्थाना वि ह्वयंते समीके ।
अत्रा युजं कृणुते यो हविष्मान्नासुन्वता सख्यं वष्टि शूरः ॥४॥
धनं न स्पंद्रं बहुलं यो अस्मै तीव्रान्सोमाँ आसुनोति प्रय-
स्वान् । तस्मै शत्रून्सुतुकान्प्रातरह्नो नि स्वष्ट्रान्युवति हंति वृत्रं
॥५॥२२॥ यस्मिन्वयं दधिमा शंसमिंद्रे यः शिश्राय मघवा का-
मंमस्मे । आराच्चित्सन्भयतामस्य शत्रुर्न्यस्मै द्युम्ना जन्या नमं-
तां ॥ ६ ॥ आराच्छत्रुमप बाधस्व दूरमुग्रो यः शंबः पुरुहूत
तेन । अस्मे धेहि यवमद्गोमदिंद्र कृधी धियं जरित्रे वाज-
रत्नां ॥७॥ प्र यमंतर्वृषसवासो अग्मन्तीव्राः सोमा बहुला-
तास इंद्रं । नाह दामानं मघवा नि यंसन्नि सुन्वते वहति



Digitized by Google

॥४१॥ समानं ऊं इति त्यं पुरुऽहूतं उक्थ्यं रथं त्रिऽचक्रं सवना गनिग्मतं परिऽज्मानं विदथ्यं सुवृक्तिऽभिः वयं विऽउष्टौ उषसः हवामहे ॥१॥ प्रातःऽयुजं नासत्या अधि तिष्ठथः प्रातःऽयावानं मधुऽवाहनं रथं विशः येन गच्छथः यज्वरीः नरा कीरेः चित् यज्ञं होतृऽमंतं अश्विना ॥२॥ अध्वर्युं वा मधुऽपाणिं सुऽहस्त्यं अग्निधं वा धृतऽदक्षं दमूनसं विप्रस्य वा यत् सवनानि गच्छथः अतः आ यातं मधुऽपेयं अश्विना ॥ ३ ॥ २१ ॥

---

॥४२॥ अस्ताऽइव सु प्रऽतरं लायं अस्यन् भूषन्ऽइव प्र भर स्तोमं अस्मै वाचा विप्राः तरत वाचं अर्यः नि रमय जरितः सोमे इंद्रं ॥१॥ दोहेन गां उप शिक्ष सखायं प्र बोधय जरितः जारं इंद्रं कोशं न पूर्णं वसुना निऽऋष्टं आ च्यवय मघऽदेयाय शूरं ॥२॥ किं अंग त्वा मघऽवन् भोजं आहुः शिशीहि मा शिशयं त्वा शृणोमि अप्नस्वती मम धीः अस्तु शक्र वसुऽविदं भगं इंद्र आ भर नः ॥३॥ त्वां जनाः ममऽसत्येषु इंद्र संऽतस्थानाः वि ह्वयंते संऽईके अत्र युजं कृणुते यः हविष्मान् न असुन्वता सख्यं वष्टि शूरः ॥४॥ धनं न स्यंद्रं बहुलं यः अस्मै तीव्रान् सोमान् आऽसुनोति प्रयस्वान् तस्मै शत्रून् सुऽतुकान् प्रातः अह्नः नि सुऽअष्ट्रान् युवति हंति वृत्रं ॥५॥२२॥ यस्मिन् वयं दधिम शंसं इंद्रे यः शिश्राय मघऽवा कामं अस्मे आरात् चित् सन् भयतां अस्य शत्रुः नि अस्मै द्युम्ना जन्या नमंतां ॥६॥ आरात् शत्रुं अप बाधस्व दूरं उग्रः यः शंबः पुरुऽहूत तेन अस्मे धेहि यवऽमत् गोऽमत् इंद्र कृधि धियं जरित्रे वाजऽरत्नां ॥७॥ प्र यं अंतः वृषऽसवासः अग्मन् तीव्राः सोमाः बहुलऽअंतासः इंद्रं न अह दामानं मघऽवा नि यंसत् नि सुन्वते वहति



Digitized by Google

भूरि वामं ॥८॥ उत प्रहामतिदीव्या जयाति कृतं यच्छ्वघ्नी विचिनोति काले । यो देवकामो न धना रुणद्धि समित्तं राया सृजति स्वधावान्॥९॥ गोभिष्टरेमामतिं दुरेवां यवेन क्षुधं पुरुहूत विश्वां । वयं राजभिः प्रथमा धनान्यस्माकेन वृजनेना जयेम ॥१०॥ बृहस्पतिर्नः परि पातु पश्चादुतोत्तरस्मादधराद्-घायोः । इंद्रः पुरस्तादुत मध्यतो नः सखा सखिभ्यो वरिवः कृणोतु ॥ ११ ॥ २३ ॥ ३ ॥

---

॥ ४३ ॥ १–११ कृष्णः ॥ इंद्रः ॥ १–९ जगती । १०. ११ त्रिष्टुप् ॥

॥ ४३ ॥ अच्छा म इंद्रं मतयः स्वर्विदः सध्रीचीर्विश्वा उशतीरनूषत । परि ष्वजंते जनयो यथा पतिं मर्यं न शुंध्युं मघवानमूतये ॥१॥ न घा त्वद्रिगप वेति मे मनस्त्वे इत्कामं पुरुहूत शिश्रय । राजेव दस्म नि षदोऽधि बर्हिष्यस्मिन्सु सोमेऽवपानमस्तु ते ॥२॥ विषूवृदिंद्रो अमतेरुत क्षुधः स इद्रायो मघवा वस्व ईशते । तस्येदिमे प्रवणे सप्त सिंधवो वयो वर्धंति वृषभस्य शुष्मिणः ॥३॥ वयो न वृक्षं सुपलाशमासदन्त्सोमास इंद्रं मंदिनश्चमूषदः । प्रैषामनीकं शवसा दविद्युतद्विदत्स्व१र्मनवे ज्योतिरार्यं ॥४॥ कृतं न श्वघ्नी वि चिनोति देवने संवर्गं यन्मघवा सूर्यं जयत् । न तत्ते अन्यो अनु वीर्यं शकन्न पुराणो मघवन्नोत नूतनः ॥५॥२४॥ विशंविशं मघवा पर्यशायत जनानां धेना अवचाकशद्वृषा । यस्याह शक्रः सवनेषु रण्यति स तीव्रैः सोमैः सहते पृतन्यतः ॥६॥ आपो न सिंधुमभि यत्समक्षरन्त्सोमास इंद्रं कुल्या इव ह्रदं । वर्धंति विप्रा महो अस्य सादने यवं न वृष्टिर्दिव्येन दानुना ॥७॥ वृषा न क्रुद्धः पतयद्रजःस्वा यो अर्यपत्नीरकृणोदिमा अपः ।



Digitized by Google

भूरि वामं ॥८॥ उत प्रऽहा अतिऽदीव्यं जयाति कृतं यत् श्वऽघ्नी
विऽचिनोति काले यः देवऽकामः न धना रुणद्धि सं इत् तं राया
सृजति स्वधाऽवान् ॥९॥ गोभिः तरेम अमतिं दुःऽएवां यवेन क्षुधं
पुरुऽहूत विश्वां वयं राजऽभिः प्रथमाः धनानि अस्माकेन वृज-
नेन जयेम ॥१०॥ बृहस्पतिः नः परि पातु पश्चात् उत उत्ऽतर-
स्मात् अधरात् अघऽयोः इंद्रः पुरस्तात् उत मध्यतः नः सखा
सखिऽभ्यः वरिवः कृणोतु ॥ ११ ॥ २३ ॥ ३ ॥

---

॥४३॥ अच्छ मे इंद्रं मतयः स्वःऽविदः सध्रीचीः विश्वाः उशतीः
अनूषत परि स्वजंते जनयः यथा पतिं मर्यं न शुंध्युं मघऽवानं
ऊतये ॥१॥ न घ त्वद्रिक् अप वेति मे मनः त्वे इत् कामं पुरुऽहूत
शिश्रय राजाऽइव दस्म नि सदः अधि बर्हिषि अस्मिन् सु सोमे
अवऽपानं अस्तु ते ॥२॥ विषुऽवृत् इंद्रः अमतेः उत क्षुधः सः इत्
रायः मघऽवा वस्वः ईशते तस्य इत् इमे प्रवणे सप्त सिंधवः वयः
वर्धंति वृषभस्य शुष्मिणः ॥३॥ वयः न वृक्षं सुऽपलाशं आ असदन्
सोमासः इंद्रं मंदिनः चमूऽसदः प्र एषां अनीकं शवसा दविद्युतत्
विदत् स्वः मनवे ज्योतिः आर्यं ॥४॥ कृतं न श्वऽघ्नी वि चिनोति
देवने संऽवर्गं यत् मघऽवा सूर्यं जयत् न तत् ते अन्यः अनु वीर्यं
शकत् न पुराणः मघऽवन् न उत नूतनः ॥५॥२४॥ विशंऽविशं मघ-
ऽवा परि अशायत जनानां धेनाः अवऽचाकशत् वृषा यस्य अह
शक्रः सवनेषु रण्यति सः तीव्रैः सोमैः सहते पृतन्यतः ॥६॥ आपः
न सिंधुं अभि यत् संऽअक्षरन् सोमासः इंद्रं कुल्याःऽइव ह्रदं वर्धं-
ति विप्राः महः अस्य सदने यवं न वृष्टिः दिव्येन दानुना ॥७॥ वृषा
न क्रुद्धः पतयत् रजःऽसु आ यः अर्यऽपत्नीः अकृणोत् इमाः अपः



Digitized by Google

स सुन्वते मघवा जीरदानवेऽविंदज्ज्योतिर्मनवे हविष्मते ॥ ८ ॥
उज्जायतां परशुर्ज्योतिषा सह भूया ऋतस्य सुदुघा पुराण-
वत् । वि रोचतामरुषो भानुना शुचिः स्व१र्ण शुक्रं शुशु-
चीत सत्पतिः ॥ ९ ॥ गोभिष्टरेमामतिं दुरेवां यवेन क्षुधं पुरुहूत
विश्वां । वयं राजभिः प्रथमा धनान्यस्माकेन वृजनेना जयेम
॥ १० ॥ बृहस्पतिर्नः परि पातु पश्चादुतोत्तरस्मादधरादघायोः ।
इंद्रः पुरस्तादुत मध्यतो नः सखा सखिभ्यो वरिवः कृणोतु
॥ ११ ॥ २५ ॥

---

॥ ४४ ॥ १–११ कृष्णः ॥ इंद्रः ॥ १–३. १०. ११ त्रिष्टुप् । ४–९ जगती ॥

॥ ४४ ॥ आ यात्विंद्रः स्वपतिर्मदाय यो धर्मणा तूतुजान-
स्तुविष्मान् । प्रत्वक्षाणो अति विश्वा सहांस्यपारेण महता
वृष्ण्येन ॥ १ ॥ सुष्ठामा रथः सुयमा हरी ते मिम्यक्ष वज्रो नृ-
पते गभस्तौ । शीभं राजन्त्सुपथा याह्यर्वाङ् वर्धाम ते पपुषो
वृष्ण्यानि ॥ २ ॥ एंद्रवाहो नृपतिं वज्रबाहुमुग्रमुग्रासस्तवि-
षास एनं । प्रत्वक्षसं वृषभं सत्यशुष्ममेमस्मत्रा सधमादो
वहंतु ॥ ३ ॥ एवा पतिं द्रोणसाचं सचेतसमूर्जः स्कंभं धरुण
आ वृषायसे । ओजः कृष्व सं गृभाय त्वे अप्यसो यथा के-
निपानामिनो वृधे ॥ ४ ॥ गमन्नस्मे वसून्या हि शंसिषं स्वा-
शिषं भरमा याहि सोमिनः । त्वमीशिषे सास्मिन्ना सत्सि
बर्हिष्यनाधृष्या तव पात्राणि धर्मणा ॥ ५ ॥ २६ ॥ पृथक्
प्रायन्प्रथमा देवहूतयोऽकृण्वत श्रवस्यानि दुष्टरा । न ये
शेकुर्यज्ञियां नावमारुहमीर्मैव ते न्यविशंत केपयः ॥ ६ ॥
एवैवापागपरे संतु दूढ्योऽश्वा येषां दुर्युज आयुयुज्रे । इत्था
ये प्रागुपरे संति दावने पुरूणि यत्र वयुनानि भोजना

सः सुन्वते मघऽवा जीरऽदानवे अविंदत् ज्योतिः मनवे हविष्मते ॥८॥ उत जायतां परशुः ज्योतिषा सह भूयाः ऋतस्य सुऽदुघा पुराणऽवत् वि रोचतां अरुषः भानुना शुचिः स्वः न शुक्रं शुशुचीत सत्ऽपतिः ॥९॥ गोभिः तरेम अमतिं दुःऽएवां यवेन क्षुधं पुरुऽहूत विश्वां वयं राजऽभिः प्रथमाः धनानि अस्माकेन वृजनेन जयेम ॥१०॥ बृहस्पतिः नः परि पातु पश्चात् उत उत्ऽतरस्मात् अधरात् अघऽयोः इंद्रः पुरस्तात् उत मध्यतः नः सखा सखिऽभ्यः वरिवः कृणोतु ॥ ११ ॥ २५ ॥

---

॥४४॥ आ यातु इंद्रः स्वऽपतिः मदाय यः धर्मणा तूतुजानः तुविष्मान् प्रऽत्वक्षाणः अति विश्वा सहांसि अपारेण महता वृष्ण्येन ॥१॥ सुऽस्थामा रथः सुऽयमा हरी इति ते मिम्यक्ष वज्रः नृऽपते गभस्तौ शीभं राजन् सुऽपथा आ याहि अर्वाङ् वर्धाम ते पपुषः वृष्ण्यानि ॥२॥ आ इंद्रऽवाहः नृऽपतिं वज्रऽबाहुं उग्रं उग्रासः तविषासः एनं प्रऽत्वक्षसं वृषभं सत्यऽशुष्मं आ ईं अस्मऽत्रा सधऽमादः वहंतु ॥३॥ एव पतिं द्रोणऽसाचं सऽचेतसं ऊर्जः स्कंभं धरुणे आ वृषऽयसे ओजः कृष्व सं गृभाय त्वे इति अपि असः यथा केऽनिपानां इनः वृधे ॥४॥ गमन् अस्मे इति वसूनि आ हि शंसिषं सुऽआशिषं भरं आ याहि सोमिनः त्वं ईशिषे सः अस्मिन् आ सत्सि बर्हिषि अनाधृष्या तव पात्राणि धर्मणा ॥५॥२६॥ पृथक् प्र आयन् प्रथमाः देवऽहूतयः अकृण्वत श्रवस्यानि दुस्तरा न ये शेकुः यज्ञियां नावं आऽरुहं ईर्मा एव ते नि अविशंत केपयः ॥६॥ एव एव अपाक् अपरे संतु दुःऽध्यः अश्वाः येषां दुःऽयुजः आऽयुयुज्रे इत्था ये प्राक् उपरे संति दावने पुरूणि यत्र वयुनानि भोजना



Digitized by Google

॥७॥ गिरीँरज्राँ रेजमानाँ अधारयद्द्यौः क्रंदद॒न्तरिक्षाणि कोपयत् । स॒मी॒ची॒ने धि॒षणे॒ वि ष्कभायति॒ वृष्णः॑ पी॒त्वा मद॑ उ॒क्थानि॑ शंसति ॥८॥ इ॒मं बि॑भर्मि॒ सुकृ॑तं ते अंकु॒शं येना॑रु॒जासि॑ मघवञ्छफारु॒जः । अ॒स्मिन्त्सु ते॒ सव॑ने अस्त्वो॒क्यं॑ सु॒त इ॒ष्टौ म॑घवन्बो॒ध्याभ॑गः ॥९॥ गोभि॑ष्टरे॒माम॑तिं दु॒रेवां॒ यवे॑न॒ क्षुधं॑ पुरुहूत॒ विश्वां॑ । व॒यं राज॑भिः प्रथ॒मा धना॑न्य॒स्माके॑न वृ॒जने॑ना जयेम ॥१०॥ बृह॒स्पति॑र्नः॒ परि॑ पातु प॒श्चादु॒तोत्त॑रस्मा॒दध॑रादघा॒योः । इंद्रः॑ पु॒रस्ता॑दु॒त म॑ध्य॒तो नः॒ सखा॒ सखि॑भ्यो॒ वरि॑वः कृणोतु ॥११॥२७॥

---

॥ ४५ ॥ १–१२ वत्सप्रिः ॥ अग्निः ॥ त्रिष्टुप् ॥

॥४५॥ दि॒वस्परि॑ प्रथ॒मं ज॑ज्ञे अ॒ग्निर॒स्मद्द्वि॒तीयं॒ परि॑ जा॒तवे॑दाः । तृ॒तीय॑म॒प्सु नृ॒मणा॒ अज॑स्र॒मिंधा॑न एनं जरते स्वा॒धीः ॥१॥ वि॒द्मा ते॑ अग्ने त्रे॒धा त्र॒याणि॑ वि॒द्मा ते॒ धाम॒ विभृ॑ता पुरु॒त्रा । वि॒द्मा ते॒ नाम॑ पर॒मं गुहा॒ यद्वि॒द्मा तमुत्सं॒ यत॑ आ॒जग॑न्थ ॥२॥ स॒मु॒द्रे त्वा॑ नृ॒मणा॑ अ॒प्स्व॑१न्तर्नृ॒चक्षा॑ ईधे दि॒वो अग्न॒ ऊध॑न् । तृ॒तीये॑ त्वा॒ रज॑सि तस्थि॒वांस॑म॒पामु॒पस्थे॑ महि॒षा अ॑वर्धन् ॥३॥ अक्र॑न्दद॒ग्निः स्त॒नय॑न्निव॒ द्यौः क्षामा॒ रेरि॑हद्वी॒रुधः॑ सम॒ञ्जन् । स॒द्यो ज॑ज्ञा॒नो वि हीमि॒द्धो अख्य॒दा रोद॑सी भा॒नुना॑ भात्य॒न्तः ॥४॥ श्री॒णामु॑दा॒रो ध॒रुणो॑ रयी॒णां म॑नी॒षाणां॒ प्रार्प॑णः॒ सोम॑गोपाः । वसुः॑ सू॒नुः सह॑सो अ॒प्सु राजा॒ वि भा॒त्यग्र॑ उ॒षसा॑मिधा॒नः ॥५॥ विश्व॑स्य के॒तुर्भुव॑नस्य॒ गर्भ॒ आ रोद॑सी अपृणा॒ज्जाय॑मानः । वी॒ळुं चि॒दद्रि॑मभिनत्परा॒यञ्जना॒ यद॒ग्निमय॑जन्त॒ पंच॑ ॥६॥२८॥ उ॒शिक्पा॑व॒को अ॑र॒तिः सु॑मे॒धा मर्ते॑ष्व॒ग्निर॒मृतो॒ नि धा॑यि । इय॑र्ति धू॒मम॑रु॒षं भरि॑-



Digitized by Google

॥७॥ गिरीन् अज्रान् रेजमानान् अधारयत् द्यौः क्रंदत् अंतरि- क्षाणि कोपयत् सं॰ईचीने॰ धिषणे॰ वि स्कभायति वृष्णः पीत्वा मदे॑ उक्थानि शंसति ॥८॥ इमं बिभर्मि सु॰कृतं ते अंकुशं येन आ- ॰रुजासि मघ॰वन् शफ॰आरुजः अस्मिन् सु ते सवने अस्तु ओक्यं सुते इष्टौ मघ॰वन् बोधि आ॰भगः ॥९॥ गोभिः तरेम अ- मतिं दुः॰एवां यवेन क्षुधं पुरु॰हूत विश्वां वयं राज॰भिः प्रथमाः धनानि अस्माकेन वृजनेन जयेम ॥१०॥ बृहस्पतिः नः परि पातु पश्चात् उत उत्॰तरस्मात् अधरात् अघ॰योः इंद्रः पुरस्तात् उत मध्यतः नः सखा सखि॰भ्यः वरिवः कृणोतु ॥ ११ ॥ २७ ॥

---

॥४५॥ दिवः परि प्रथमं जज्ञे अग्निः अस्मत् द्वितीयं परि जात- ॰वेदाः तृतीयं अप्॰सु नृ॰मनाः अजस्रं इंधानः एनं जरते सु- ॰आधीः ॥१॥ विद्म ते अग्ने त्रेधा त्रयाणि विद्म ते धाम वि॰भृता पुरु॰त्रा विद्म ते नाम परमं गुहा यत् विद्म तं उत्सं यतः आ॰ज- गंथ ॥२॥ समुद्रे त्वा नृ॰मनाः अप्॰सु अंतः नृ॰चक्षाः ईधे दिवः अग्ने ऊधन् तृतीये त्वा रजसि तस्थि॰वांसं अपां उप॰स्थे महि- षाः अवर्धन् ॥३॥ अक्रंदत् अग्निः स्तनयन्॰इव द्यौः क्षाम रेरिहत् वीरुधः सं॰अंजन् सद्यः जज्ञानः वि हि ईं इद्धः अख्यत् आ रोदसी॰ भानुना भाति अंतः ॥४॥ श्रीणां उत्॰आरः धरुणः रयीणां मनी- षाणां प्र॰अर्पणः सोम॰गोपाः वसुः सूनुः सहसः अप्॰सु राजा वि भाति अग्रे उषसां इधानः ॥५॥ विश्वस्य केतुः भुवनस्य गर्भः आ रो- दसी॰ अपृणात् जायमानः वीळुं चित् अद्रिं अभिनत् परा॰यन् जनाः यत् अग्निं अयजंत पंच ॥६॥२८॥ उशिक् पावकः अरतिः सु॰मेधाः मर्तेषु अग्निः अमृतः नि धायि इयर्ति धूमं अरुषं भरि-



Digitized by Google

यदुच्छुक्रेण शोचिषा द्यामिनंक्षन् ॥ ७ ॥ दृशानो रुक्म उर्विया व्यद्यौदुर्मर्षमायुः श्रिये रुचानः । अग्निरमृतो अभवद्वयोभिर्यदेनं द्यौर्जनयत्सुरेताः ॥ ८ ॥ यस्ते अद्य कृणवद्भद्रशोचेऽपूपं देव घृतवंतमग्ने । प्र तं नय प्रतरं वस्यो अच्छाभि सुम्नं देवभक्तं यविष्ठ ॥ ९ ॥ आ तं भज सौश्रवसेष्वग्न उक्थउक्थ आ भज शस्यमाने । प्रियः सूर्ये प्रियो अग्ना भवात्युज्जातेन भिनददुज्जनित्वैः ॥ १० ॥ त्वामग्ने यजमाना अनु द्यून्विश्वा वसु दधिरे वार्याणि । त्वया सह द्रविणमिच्छमाना व्रजं गोमंतमुशिजो वि वव्रुः ॥ ११ ॥ अस्ताव्यग्निर्नरां सुशेवो वैश्वानर ऋषिभिः सोमगोपाः । अद्वेषे द्यावापृथिवी हुवेम देवा धत्त रयिमस्मे सुवीरं ॥ १२ ॥ २९ ॥ ८ ॥ ७ ॥

---



Digitized by Google

भत् उत शुक्रेणं शोचिषा द्यां इनक्षन॥७॥ दृशानः रुक्मः उर्विया
वि अद्यौत् दुःऽमर्षं आयुः श्रियै रुचानः अग्निः अमृतः अभवत्
वयःऽभिः यत् एनं द्यौः जनयत् सुऽरेताः॥८॥ यः ते अद्य कृणवत्
भद्रऽशोचे अपूपं देव घृतऽवंतं अग्ने प्र तं नय प्रऽतरं वस्यः अच्छ
अभि सुम्नं देवऽभक्तं यविष्ठ॥९॥ आ तं भज सौश्रवसेषु अग्ने उक्थे-
ऽउक्थे आ भज शस्यमाने प्रियः सूर्ये प्रियः अग्ना भवाति उत
जातेन भिनदत् उत जनिऽत्वैः॥१०॥ त्वां अग्ने यजमानाः अनु
द्यून् विश्वा वसु दधिरे वार्याणि त्वया सह द्रविणं इच्छमानाः
व्रजं गोऽमंतं उशिजः वि वव्रुः॥११॥ अस्तावि अग्निः नरां सुऽशेवः
वैश्वानरः ऋषिऽभिः सोमऽगोपाः अद्वेषे द्यावापृथिवी हुवेम
देवाः धत्त रयिं अस्मे सुऽवीरं॥१२॥२९॥८॥७॥



Digitized by Google

॥ ४६ ॥ १—१० वत्सप्रिः ॥ अग्निः ॥ त्रिष्टुप् ॥

॥४६॥ प्र होता जातो महान्नभोविन्नृषद्वा सीददपामुपस्थे।
दधिर्यो धायि स ते वयांसि यंता वसूनि विधते तनूपाः॥१॥ इमं
विधंतो अपां सधस्थे पशुं न नष्टं पदैरनु ग्मन्। गुहा चतंतमु-
शिजो नमोभिरिच्छंतो धीरा भृगवोऽविंदन्॥२॥ इमं त्रितो
भूर्यविंददिच्छन्वैभूवसो मूर्धन्यघ्न्यायाः। स शेवृधो जात आ
हर्म्येषु नाभिर्युवा भवति रोचनस्य॥३॥ मंद्रं होतारमुशिजो
नमोभिः प्रांचं यज्ञं नेतारमध्वराणां। विशामकृण्वन्नरतिं पा-
वकं हव्यवाहं दधतो मानुषेषु॥४॥ प्र भूर्जयंतं महां विपोधां
मूरा अमूरं पुरां दर्माणं। नयंतो गर्भं वनां धियं धुर्हिरिश्मश्रुं
नार्वाणं धनर्चं॥५॥१॥ नि पस्त्यासु त्रितः स्तभूयन्परिवीतो यो-
नौ सीददंतः। अतः संगृभ्या विशां दमूना विधर्मणायंत्रैरीयते
नॄन्॥६॥ अस्याजरासो दमामरित्रा अर्चद्धूमासो अग्नयः पा-
वकाः। श्वितीचयः श्वात्रासो भुरण्यवो वनर्षदो वायवो न
सोमाः॥७॥ प्र जिह्वया भरते वेपो अग्निः प्र वयुनानि चेतसा
पृथिव्याः। तमायवः शुचयंतं पावकं मंद्रं होतारं दधिरे यजिष्ठं
॥८॥ द्यावा यमग्निं पृथिवी जनिष्टामापस्त्वष्टा भृगवो यं सहो-
भिः। ईळेन्यं प्रथमं मातरिश्वा देवास्ततक्षुर्मनवे यजत्रं॥९॥ यं
त्वा देवा दधिरे हव्यवाहं पुरुस्पृहो मानुषासो यजत्रं। स यामन्नग्ने
स्तुवते वयो धाः प्र देवयन्यशसः सं हि पूर्वीः॥१०॥२॥

---

॥ ४७ ॥ १—८ सप्तगुः ॥ इंद्रो वैकुंठः ॥ त्रिष्टुप् ॥

॥४७॥ जगृभ्मा ते दक्षिणमिंद्र हस्तं वसूयवो वसुपते वसू-
नां। विद्मा हि त्वा गोपतिं शूर गोनामस्मभ्यं चित्रं वृषणं रयिं



Digitized by Google

॥४६॥ प्र होता जातः महान् नभःऽवित् नृऽसद्मा सीदत् अ-
पां उपऽस्थे दधिः यः धायि सः ते वयांसि यंता वसूनि विधते
तनूऽपाः ॥१॥ इमं विधंतः अपां सधऽस्थे पशुं न नष्टं पदैः अनु
ग्मन् गुहा चतंतं उशिजः नमःऽभिः इच्छंतः धीराः भृगवः अ-
विंदन् ॥२॥ इमं त्रितः भूरि अविंदत् इच्छन् वैभुऽवसः मूर्धनि
अघ्न्यायाः सः शेऽवृधः जातः आ हर्म्येषु नाभिः युवा भवति रो-
चनस्य ॥३॥ मंद्रं होतारं उशिजः नमःऽभिः प्रांचं यज्ञं नेतारं अ-
ध्वराणां विशां अकृण्वन् अरतिं पावकं हव्यऽवाहं दधतः मानु-
षेषु ॥४॥ प्र भूः जयंतं महां विपःऽधां मूराः अमूरं पुरां दर्माणं
नयंतः गर्भं वनां धियं धुः हिरिऽश्मश्रुं न अर्वाणं धनऽअर्चं
॥५॥१॥ नि पस्त्यासु त्रितः स्तभुऽयन् परिऽवीतः योनौ सीदत्
अंतः॰ अतः संऽगृभ्य विशां दमूनाः विऽधर्मणा अयंत्रैः ईयते
नॄन् ॥६॥ अस्य अजरासः दमां अरित्राः अर्चत्ऽधूमासः अग्नयः
पावकाः श्वितीचयः श्वात्रासः भुरण्यवः वनऽसदः वायवः न
सोमाः ॥७॥ प्र जिह्वया भरते वेपः अग्निः प्र वयुनानि चेतसा
पृथिव्याः तं आयवः शुचयंतं पावकं मंद्रं होतारं दधिरे यजिष्ठं
॥८॥ द्यावा यं अग्निं पृथिवी जनिष्टां आपः त्वष्टा भृगवः यं सहः-
ऽभिः ईळेन्यं प्रथमं मातरिश्वा देवाः ततक्षुः मनवे यजत्रं ॥९॥
यं त्वा देवाः दधिरे हव्यऽवाहं पुरुऽस्पृहः मानुषासः यजत्रं सः
यामन् अग्ने स्तुवते वयः धाः प्र देवऽयन् यशसः सं हि पूर्वीः
॥१०॥२॥

---

॥४७॥ जगृभ्म ते दक्षिणं इंद्र हस्तं वसुऽयवः वसुऽपते वसू-
नां विद्म हि त्वा गोऽपतिं शूर गोनां अस्मभ्यं चित्रं वृषणं रयिं



Digitized by Google

दाः ॥१॥ स्वायुधं स्ववसं सुनीथं चतुःसमुद्रं धरुणं रयीणां । चर्कृत्यं शंस्यं भूरिवारमस्मभ्यं चित्रं वृषणं रयिं दाः ॥२॥ सुब्रह्माणं देववंतं बृहंतमुरुं गभीरं पृथुबुध्नमिंद्र । श्रुतऋषिमुग्रमभिमातिषाहमस्मभ्यं चित्रं वृषणं रयिं दाः ॥३॥ सनद्वाजं विप्रवीरं तरुत्रं धनस्पृतं शूशुवांसं सुदक्षं । दस्युहनं पूर्भिदमिंद्र सत्यमस्मभ्यं चित्रं वृषणं रयिं दाः ॥४॥ अश्वावंतं रथिनं वीरवंतं सहस्रिणं शतिनं वाजमिंद्र । भद्रव्रातं विप्रवीरं स्वर्षामस्मभ्यं चित्रं वृषणं रयिं दाः ॥५॥३॥ प्र सप्तगुमृतधीतिं सुमेधां बृहस्पतिं मतिरच्छा जिगाति । य आंगिरसो नमसोपसद्योऽस्मभ्यं चित्रं वृषणं रयिं दाः ॥६॥ वनीवानो मम दूतास इंद्रं स्तोमाश्चरंति सुमतीरियानाः । हृदिस्पृशो मनसा वच्यमाना अस्मभ्यं चित्रं वृषणं रयिं दाः ॥७॥ यत्त्वा यामि दद्धि तन्न इंद्र बृहंतं क्षयमसमं जनानां । अभि तद्द्यावापृथिवी गृणीतामस्मभ्यं चित्रं वृषणं रयिं दाः ॥८॥४॥

---

॥ ४८ ॥ १-११ इंद्रो वैकुंठः ॥ इंद्रो वैकुंठः ॥ १-६, ८. ९ जगती । ७. १०. ११ त्रिष्टुप् ॥

॥४८॥ अहं भुवं वसुनः पूर्व्यस्पतिरहं धनानि सं जयामि शश्वतः । मां हवंते पितरं न जंतवोऽहं दाशुषे वि भजामि भोजनं ॥१॥ अहमिंद्रो रोधो वक्षो अथर्वणस्त्रिताय गा अजनयमहेरधि । अहं दस्युभ्यः परि नृम्णमा ददे गोत्रा शिक्षन् दधीचे मातरिश्वने ॥२॥ मह्यं त्वष्टा वज्रमतक्षदायसं मयि देवासोऽवृजन्नपि क्रतुं । ममानीकं सूर्यस्येव दुष्टरं मामार्यंति कृतेन कर्त्वेन च ॥३॥ अहमेतं गव्ययमश्व्यं पशुं पुरीषिणं सायकेना हिरण्ययं । पुरू सहस्रा नि शिशामि दाशुषे यन्मा सोमास उक्थिनो अमंदिषुः ॥४॥ अहमिंद्रो न परा जिग्य इद्धनं न



Digitized by Google

दाः ॥१॥ सुऽआयुधं सुऽअवसं सुऽनीथं चतुःऽसमुद्रं धरुणं रयीणां चर्कृत्यं शंस्यं भूरिऽवारं अस्मभ्यं चित्रं वृषणं रयिं दाः ॥२॥ सुऽब्रह्माणं देवऽवंतं बृहंतं उरुं गभीरं पृथुऽबुध्नं इंद्र श्रुतऽऋषिं उग्रं अभिमातिऽसहं अस्मभ्यं चित्रं वृषणं रयिं दाः ॥३॥ सनत्ऽवाजं विप्रऽवीरं तरुत्रं धनऽस्पृतं शूशुऽवांसं सुऽदक्षं दस्युऽहनं पूःऽभिदं इंद्र सत्यं अस्मभ्यं चित्रं वृषणं रयिं दाः ॥४॥ अश्वऽवंतं रथिनं वीरऽवंतं सहस्रिणं शतिनं वाजं इंद्र भद्रऽव्रातं विप्रऽवीरं स्वःऽसां अस्मभ्यं चित्रं वृषणं रयिं दाः ॥५॥३॥ प्र सप्तऽगुं ऋतऽधीतिं सुऽमेधां बृहस्पतिं मतिः अच्छ जिगाति यः आंगिरसः नमसा उपऽसद्यः अस्मभ्यं चित्रं वृषणं रयिं दाः ॥६॥ वनीवानः मम दूतासः इंद्रं स्तोमाः चरंति सुऽमतीः इयानाः हृदिऽस्पृशः मनसा वच्यमानाः अस्मभ्यं चित्रं वृषणं रयिं दाः ॥७॥ यत् त्वा यामि दद्धि तत् नः इंद्र बृहंतं क्षयं असमं जनानां अभि तत् द्यावापृथिवी गृणीतां अस्मभ्यं चित्रं वृषणं रयिं दाः ॥८॥४॥

---

॥४८॥ अहं भुवं वसुनः पूर्व्यः पतिः अहं धनानि सं जयामि शश्वतः मां हवंते पितरं न जंतवः अहं दाशुषे वि भजामि भोजनं ॥१॥ अहं इंद्रः रोधः वक्षः अथर्वणः त्रिताय गाः अजनयं अहेः अधि अहं दस्युऽभ्यः परि नृम्णं आ ददे गोत्रा शिक्षन् दधीचे मातरिश्वने ॥२॥ मह्यं त्वष्टा वज्रं अतक्षत् आयसं मयि देवासः अवृजन् अपि क्रतुं मम अनीकं सूर्यस्यऽइव दुस्तरं मां आर्यंति कृतेन कर्त्वेन च ॥३॥ अहं एतं गव्ययं अश्व्यं पशुं पुरीषिणं सायकेन हिरण्ययं पुरु सहस्रा नि शिशामि दाशुषे यत् मा सोमासः उक्थिनः अमंदिषुः ॥४॥ अहं इंद्रः न परा जिग्ये इत् धनं न



Digitized by Google

मृत्यवेऽव तस्थे कदा चन । सोममिन्मा सुन्वंतो याचता वसु न मे
पूरवः सख्ये रिषाथन ॥५॥५॥ अहमेताञ्छाश्वसतो द्वाद्वेंद्रं ये वज्रं
युधयेऽकृण्वत । आह्वयमानाँ अव हन्मनाहनं दृळ्हा वदन्नन-
मस्युर्नमस्विनः ॥६॥ अभी३दमेकमेको अस्मि निष्षाळभी द्वा
किमु त्रयः करंति । खले न पर्षान्प्रति हन्मि भूरि किं मा निंदंति
शत्रवोऽनिंद्राः ॥७॥ अहं गुंगुभ्यो अतिथिग्वमिष्करमिषं न
वृत्रतुरं विक्षु धारयं । यत्पर्णयघ्न उत वा करंजहे प्राहं महे वृत्रहत्ये
अशुश्रवि ॥८॥ प्र मे नमी साप्य इषे भुजे भूद्गवामेषे सख्या कृणुत
द्विता । दिद्युं यदस्य समिथेषु मंहयमादिदेनं शंस्यमुक्थ्यं करं ॥९॥
प्र नेमस्मिन्ददृशे सोमो अंतर्गोपा नेममाविरस्था कृणोति । स
तिग्मशृंगं वृषभं युयुत्सन्द्रुहस्तस्थौ बहुले बद्धो अंतः ॥१०॥
आदित्यानां वसूनां रुद्रियाणां देवो देवानां न मिनामि धाम ।
ते मा भद्राय शवसे ततक्षुरपराजितमस्तृतमषाळ्हं ॥११॥६॥

---

॥ ४९ ॥ १–११ इंद्रो वैकुंठः ॥ इंद्रो वैकुंठः ॥ १. ३–१० जगती । २. ११ त्रिष्टुप् ॥

॥४९॥ अहं दां गृणते पूर्व्यं वस्वहं ब्रह्म कृणवं मह्यं वर्धनं ।
अहं भुवं यजमानस्य चोदितायज्वनः साक्षि विश्वस्मिन्भरे
॥१॥ मां धुरिंद्रं नाम देवता दिवश्च ग्मश्चापां च जंतवः । अहं
हरी वृषणा विव्रता रघू अहं वज्रं शवसे धृष्ण्वा ददे ॥२॥
अहमत्कं कवये शिश्नथं हथैरहं कुत्समावमाभिरूतिभिः । अहं
शुष्णस्य श्नथिता वधर्यमं न यो रर आर्यं नाम दस्यवे ॥३॥
अहं पितेव वेतसूँरभिष्टये तुग्रं कुत्साय स्मदिभं च रंधयं ।
अहं भुवं यजमानस्य राजनि प्र यद्भरे तुजये न प्रियाधृषे
॥४॥ अहं रँधयं मृगयं श्रुतर्वणे यन्माजिहीत वयुना चना-



Digitized by Google

मृत्यवे अव तस्थे कदा चन सोमं इत् मा सुन्वंतः याचत वसु न मे पूरवः सख्ये रिषाथन ॥५॥५॥ अहं एतान् शाश्वसतः द्वाऽद्वा इंद्रं ये वज्रं युधये अकृण्वत आऽह्वयमानान् अव हन्मना अहनं दृळ्हा वदन् अनमस्युः नमस्विनः ॥६॥ अभि इदं एकं एकः अस्मि निष्षाट् अभि द्वा किं ऊं इति त्रयः करंति खले न पर्षान् प्रति हन्मि भूरि किं मा निंदंति शत्रवः अनिंद्राः ॥७॥ अहं गुंगुऽभ्यः अतिथिऽग्वं इष्करं इषं न वृत्रऽतुरं विक्षु धारयं यत् पर्णयऽघ्ने उत वा करंजऽहे प्र अहं महे वृत्रऽहत्ये अशुश्रवि ॥८॥ प्र मे नमी साप्यः इषे भुजे भूत् गवां एषे सख्या कृणुत द्विता दिद्युं यत् अस्य संऽइथेषु मंहयं आत् इत् एनं शंस्यं उक्थ्यं करं ॥९॥ प्र नेमस्मिन् ददृशे सोमः अंतः गोपाः नेमं आविः अस्था कृणोति सः तिग्मऽशृंगं वृषभं युयुत्सन् द्रुहः तस्थौ बहुले बद्धः अंतः ॥१०॥ आदित्यानां वसूनां रुद्रियाणां देवः देवानां न मिनामि धाम ते मा भद्राय शवसे ततक्षुः अपराऽजितं अस्तृतं अषाळ्हं ॥११॥६॥

---

॥४९॥ अहं दां गृणते पूर्व्यं वसु अहं ब्रह्म कृणवं मह्यं वर्धनं अहं भुवं यजमानस्य चोदिता अयज्वनः साक्षि विश्वस्मिन् भरे ॥१॥ मां धुः इंद्रं नाम देवता दिवः च ग्मः च अपां च जंतवः अहं हरी इति वृषणा विऽव्रता रघू इति अहं वज्रं शवसे धृष्णु आ ददे ॥२॥ अहं अत्कं कवये शिश्नथं हथैः अहं कुत्सं आवं आभिः ऊतिऽभिः अहं शुष्णस्य श्नथिता वधः यमं न यः ररे आर्यं नाम दस्यवे ॥३॥ अहं पिताऽइव वेतसून् अभिष्टये तुग्रं कुत्साय स्मत्ऽइभं च रंधयं अहं भुवं यजमानस्य राजनि प्र यत् भरे तुजये न प्रिया आऽधृषे ॥४॥ अहं रंधयं मृगयं श्रुतर्वणे यत् मा अजिहीत वयुना चन आ-



Digitized by Google

नुषक्। अहं वेशं नम्रमायवेऽकरमहं सव्याय पड्गृभिमरंधयं
॥५॥७॥ अहं स यो नववास्त्वं बृहद्रथं सं वृत्रेव दासं वृत्रहारुजं।
यद्वर्धयंतं प्रथयंतमानुषग्दूरे पारे रजसो रोचनाकरं॥६॥ अहं
सूर्यस्य परि याम्याशुभिः प्रैतशेभिर्वहमान ओजसा। यन्मा सा-
वो मनुष आहं निर्णिज ऋधक्कृषे दासं कृत्व्यं हथैः॥७॥ अहं
सप्तहा नहुषो नहुष्टरः प्राश्रावयं शवसा तुर्वशं यदुं। अहं न्य१न्यं
सहसा सहस्करं नव व्राधतो नवतिं च वक्षयं॥८॥ अहं सप्त स्र-
वतो धारयं वृषा द्रवित्न्वः पृथिव्यां सीरा अधि। अहमर्णांसि वि
तिरामि सुक्रतुर्युधा विदं मनवे गातुमिष्टये॥९॥ अहं तदासु
धारयं यदासु न देवश्चन त्वष्टाधारयद्रुशत्। स्पार्हं गवामूधःसु व-
क्षणास्वा मधोर्मधु श्वात्र्यं सोममाशिरं॥१०॥ एवा देवाँ इंद्रो
विव्ये नॄन् प्र च्यौत्नेन मघवा सत्यराधाः। विश्वेत्ता ते हरिवः
शचीवोऽभि तुरासः स्वयशो गृणंति॥११॥८॥

---

॥५०॥ १–७ इंद्रो वैकुंठः॥ इंद्रो वैकुंठः॥ १. २. ६. ७ जगती। ३. ४ अभिसारिणी। ५ त्रिष्टुप्॥

॥५०॥ प्र वो महे मंदमानायांधसोऽर्चा विश्वानराय वि-
श्वाभुवे। इंद्रस्य यस्य सुमखं सहो महि श्रवो नृम्णं च रोदसी
सपर्यतः॥१॥ सो चिन्नु सख्या नर्य इनः स्तुतश्चर्कृत्य इंद्रो
मावते नरे। विश्वासु धूर्षु वाजकृत्येषु सत्पते वृत्रे वाप्स्व१भि
शूर मंदसे॥२॥ के ते नर इंद्र ये त इषे ये ते सुम्नं सध-
न्य१मियक्षान्। के ते वाजायासुर्याय हिन्विरे के अप्सु स्वासूर्व-
रासु पौंस्ये॥३॥ भुवस्त्वमिंद्र ब्रह्मणा महान्भुवो विश्वेषु सवनेषु
यज्ञियः। भुवो नॄंश्च्यौत्नो विश्वस्मिन्भरे ज्येष्ठश्च मंत्रो विश्व-
चर्षणे॥४॥ अवा नु कं ज्यायान् यज्ञवनसो महीं त ओमात्रां



Digitized by Google

नुषक् अहं वेशं नम्रं आयवे अकरं अहं सव्याय पत्ऽगृभिं अरंधयं ॥५॥७॥ अहं सः यः नवऽवास्त्वं बृहत्ऽरथं सं वृत्राऽइव दासं वृत्रऽहा अरुजं यत् वर्धयंतं प्रथयंतं आनुषक् दूरे पारे रजसः रोचना अकरं ॥६॥ अहं सूर्यस्य परि यामि आशुऽभिः प्र एतशेभिः वहमानः ओजसा यत् मा सावः मनुषः आह निःऽनिजे ऋधक् कृषे दासं कृत्व्यं हथैः ॥७॥ अहं सप्तऽहा नहुषः नहुःऽतरः प्र अश्रवयं शवसा तुर्वशं यदुं अहं नि अन्यं सहसा सहः करं नव व्राधतः नवतिं च वक्षयं ॥८॥ अहं सप्त स्रवतः धारयं वृषा द्रवित्न्वः पृथिव्यां सीराः अधि अहं अर्णांसि वि तिरामि सुऽक्रतुः युधा विदं मनवे गातुं इष्टये ॥९॥ अहं तत् आसु धारयं यत् आसु न देवः चन त्वष्टा अधारयत् रुशत् स्पार्हं गवां ऊधःऽसु वक्षणासु आ मधोः मधु श्वात्र्यं सोमं आऽशिरं ॥१०॥ एव देवान् इंद्रः विव्ये नॄन् प्र च्यौत्नेन मघऽवा सत्यऽराधाः विश्वा इत् ता ते हरिऽवः शचीऽवः अभि तुरासः स्वऽयशः गृणंति ॥११॥८॥

---

॥५०॥ प्र वः महे मंदमानाय अंधसः अर्च विश्वानराय विश्वऽभुवे इंद्रस्य यस्य सुऽमखं सहः महि श्रवः नृम्णं च रोदसी सपर्यतः ॥१॥ सः चित् नु सख्या नर्यः इनः स्तुतः चर्कृत्यः इंद्रः माऽवते नरे विश्वासु धूःऽसु वाजऽकृत्येषु सत्ऽपते वृत्रे वा अप्ऽसु अभि शूर मंदसे ॥२॥ के ते नरः इंद्र ये ते इषे ये ते सुम्नं सऽधन्यं इयक्षान् के ते वाजाय असुर्याय हिन्विरे के अप्ऽसु स्वासु उर्वरासु पौंस्ये ॥३॥ भुवः त्वं इंद्र ब्रह्मणा महान् भुवः विश्वेषु सवनेषु यज्ञियः भुवः नॄन् च्यौत्नः विश्वस्मिन् भरे ज्येष्ठः च मंत्रः विश्वऽचर्षणे ॥४॥ अव नु कं ज्यायान् यज्ञऽवनसः महीं ते ओमात्रां



Digitized by Google

कृष्टयो विदुः। असो नु कमजरो वर्धाश्च विश्वेदेता सवना तूतुमा
कृषे॥५॥ एता विश्वा सवना तूतुमा कृषे स्वयं सूनो सहसो या-
नि दधिषे। वराय ते पात्रं धर्मणे तना यज्ञो मन्त्रो ब्रह्मोद्यतं वचः
॥६॥ ये ते विप्र ब्रह्मकृतः सुते सचा वसूनां च वसुनश्च दावने। प्र
ते सुम्नस्य मनसा पथा भुवन्मदे सुतस्य सोम्यस्यान्धसः॥७॥९॥

---

॥५१॥ १. ३. ५. ७. ९ देवाः। २. ४. ६. ८ अग्निः सौचीकः॥ १. ३. ५. ७. ९ अग्निः सौचीकः।
२. ४. ६. ८ देवाः॥ त्रिष्टुप्॥

॥५१॥ महत्तदुल्बं स्थविरं तदासीद्येनाविष्टितः प्रविवे-
शिथापः। विश्वा अपश्यद्बहुधा ते अग्ने जातवेदस्तन्वो देव
एकः॥१॥ को मा ददर्श कतमः स देवो यो मे तन्वो बहुधा
पर्यपश्यत्। क्वाह मित्रावरुणा क्षियन्त्यग्नेर्विश्वाः समिधो देव-
यानीः॥२॥ ऐच्छाम त्वा बहुधा जातवेदः प्रविष्टमग्ने अप्स्वो-
षधीषु। तं त्वा यमो अचिकेच्चित्रभानो दशान्तरुष्यादतिरो-
चमानं॥३॥ होत्रादहं वरुण बिभ्यदायं नेदेव मा युन-
जन्नत्र देवाः। तस्य मे तन्वो बहुधा निविष्टा एतमर्थं न चि-
केताहमग्निः॥४॥ एहि मनुर्देवयुर्यज्ञकामोऽरंकृत्या तमसि
क्षेष्यग्ने। सुगान्पथः कृणुहि देवयानान्वह हव्यानि सुमन-
स्यमानः॥५॥१०॥ अग्नेः पूर्वे भ्रातरो अर्थमेतं रथीवाध्वान-
मन्वावरीवुः। तस्माद्भिया वरुण दूरमायं गौरो न क्षेप्नोरविजे
ज्यायाः॥६॥ कुर्मस्त आयुरजरं यदग्ने यथा युक्तो जातवेदो न
रिष्याः। अथा वहासि सुमनस्यमानो भागं देवेभ्यो हविषः सु-
जात॥७॥ प्रयाजान्मे अनुयाजांश्च केवलानूर्जस्वन्तं हविषो
दत्त भागं। घृतं चापां पुरुषं चौषधीनामग्नेश्च दीर्घमायुरस्तु



Digitized by Google

कृत्व्यः विदुः असः नु कं अजरः वर्धाः च विश्वा इत् एता सर्वना तूतुमा कृषे ॥५॥ एता विश्वा सर्वना तूतुमा कृषे स्वयं सूनो इति सहसः यानि दधिषे वराय ते पात्रं धर्मणे तना यज्ञः मंत्रः ब्रह्म उत्ऽयतं वचः ॥६॥ ये ते विप्र ब्रह्मऽकृतः सुते सचा वसूनां च वसुनः च दावने प्र ते सुम्नस्य मनसा पथा भुवन् मदे सुतस्य सोम्यस्य अंधसः ॥७॥९॥

---

॥५१॥ महत् तत् उल्बं स्थविरं तत् आसीत् येन आऽविष्टितः प्रऽविवेशिथ अपः विश्वाः अपश्यत् बहुधा ते अग्ने जातऽवेदः तन्वः देवः एकः ॥१॥ कः मा ददर्श कतमः सः देवः यः मे तन्वः बहुधा परिऽअपश्यत् क्व अह मित्रावरुणा क्षियंति अग्नेः विश्वाः संऽइधः देवऽयानीः ॥२॥ ऐच्छाम त्वा बहुधा जातऽवेदः प्रऽविष्टं अग्ने अप्ऽसु ओषधीषु तं त्वा यमः अचिकेत् चित्रऽभानो इति दशऽअंतरुष्यात् अतिऽरोचमानं ॥३॥ होत्रात् अहं वरुण बिभ्यत् आयं न इत् एव मा युनजन् अत्र देवाः तस्य मे तन्वः बहुधा निऽविष्टाः एतं अर्थं न चिकेत अहं अग्निः ॥४॥ आ इहि मनुः देवऽयुः यज्ञऽकामः अरंऽकृत्य तमसि क्षेषि अग्ने सुऽगान् पथः कृणुहि देवऽयानान् वह हव्यानि सुऽमनस्यमानः ॥५॥१०॥ अग्नेः पूर्वे भ्रातरः अर्थं एतं रथीऽइव अध्वानं अनु आ अवरीवुः तस्मात् भिया वरुण दूरं आयं गौरः न क्षेप्नोः अविजे ज्यायाः ॥६॥ कुर्मः ते आयुः अजरं यत् अग्ने यथा युक्तः जातऽवेदः न रिष्याः अथ वहासि सुऽमनस्यमानः भागं देवेभ्यः हविषः सुऽजात ॥७॥ प्रऽयाजान् मे अनुऽयाजान् च केवलान् ऊर्जस्वंतं हविषः दत्त भागं घृतं च अपां पुरुषं च ओषधीनां अग्नेः च दीर्घं आयुः अस्तु



Digitized by Google

देवाः ॥८॥ तव प्रयाजा अनुयाजाश्च केवल ऊर्जस्वंतो हविषः संतु भागाः। तवाग्ने यज्ञो३ऽयमस्तु सर्वस्तुभ्यं नमंतां प्रदिशश्चतस्रः ॥९॥११॥

---

॥ ५२ ॥ १-६ अग्निः सौचीकः ॥ देवाः ॥ त्रिष्टुप् ॥

॥५२॥ विश्वे देवाः शास्तन मा यथेह होता वृतो मनवै यन्निषद्य। प्र मे ब्रूत भागधेयं यथा वो येन पथा हव्यमा वो वहानि ॥१॥ अहं होता न्यसीदं यजीयान् विश्वे देवा मरुतो मा जुनंति। अहरहरश्विनाध्वर्यवं वां ब्रह्मा समिद्भवति साहुतिर्वां ॥२॥ अयं यो होता किरु स यमस्य कमप्यूहे यत्समंजंति देवाः। अहरहर्जायते मासिमास्यथा देवा दधिरे हव्यवाहं ॥३॥ मां देवा दधिरे हव्यवाहमपम्लुक्तं बहु कृच्छ्रा चरंतं। अग्निर्विद्वान्यज्ञं नः कल्पयाति पंचयामं त्रिवृतं सप्ततंतुं ॥४॥ आ वो यक्ष्यमृतत्वं सुवीरं यथा वो देवा वरिवः कराणि। आ बाह्वोर्वज्रमिंद्रस्य धेयामथेमा विश्वाः पृतना जयाति ॥५॥ त्रीणि शता त्री सहस्राण्यग्निं त्रिंशच्च देवा नव चासपर्यन्। औक्षन्घृतैरस्तृणन्बर्हिरस्मा आदिद्धोतारं न्यसादयंत ॥६॥१२॥

---

॥ ५३ ॥ १-३.६-११ देवाः । ४.५ अग्निः सौचीकः ॥ १-३.६-११ अग्निः सौचीकः । ४.५ देवाः ॥ १-५.८ त्रिष्टुप् । ६.७.९-११ जगती ॥

॥५३॥ यमैच्छाम मनसा सो३ऽयमागाद्यज्ञस्य विद्वान्परुषश्चिकित्वान्। स नो यक्षद्देवताता यजीयान्नि हि षत्सदंतरः पूर्वो अस्मत् ॥१॥ अराधि होता निषदा यजीयानभि प्रयांसि सुधितानि हि ख्यत्। यजामहै यज्ञियान्हंत देवाँ ईळामहा ईड्याँ आज्येन ॥२॥ साध्वीमकर्देववीतिं नो अद्य यज्ञस्य जिह्वामविदाम गुह्यां। स आयुरागात्सुरभिर्वसानो



Digitized by Google

देवाः ॥८॥ तव प्रऽयाजाः अनुऽयाजाः च केवले ऊर्जस्वंतः हविषः संतु भागाः तव अग्ने यज्ञः अयं अस्तु सर्वः तुभ्यं नमंतां प्रऽदिशः चतस्रः ॥९॥११॥

---

॥५२॥ विश्वे देवाः शास्तन मा यथा इह होता वृतः मनवै यत् निऽसद्य प्र मे ब्रूत भागऽधेयं यथा वः येन पथा हव्यं आ वः वहानि ॥१॥ अहं होता नि असीदं यजीयान् विश्वे देवाः मरुतः मा जुनंति अहःऽअहः अश्विना आध्वर्यवं वां ब्रह्मा संऽइत् भवति सा आऽहुतिः वां ॥२॥ अयं यः होता किः ऊं' सः यमस्य कं अपि ऊहे यत् संऽअंजंति देवाः अहःऽअहः जायते मासिऽमासि अथ देवाः दधिरे हव्यऽवाहं ॥३॥ मां देवाः दधिरे हव्यऽवाहं अपऽम्लुक्तं बहु कृच्छ्रा चरंतं अग्निः विद्वान् यज्ञं नः कल्पयाति पंचऽयामं त्रिऽवृतं सप्तऽतंतुं ॥४॥ आ वः यक्षि अमृतऽत्वं सुऽवीरं यथा वः देवाः वरिवः कराणि आ बाह्वोः वज्रं इंद्रस्य धेयां अथ इमाः विश्वाः पृतनाः जयाति ॥५॥ त्रीणि शता त्री सहस्राणि अग्निं त्रिंशत् च देवाः नव च असपर्यन् औक्षन् घृतैः अस्तृणन् बर्हिः अस्मै आत् इत् होतारं नि असादयंत ॥६॥१२॥

---

॥५३॥ यं ऐच्छाम मनसा सः अयं आ अगात् यज्ञस्य विद्वान् परुषः चिकित्वान् सः नः यक्षत् देवऽताता यजीयान् नि हि सत्सत् अंतरः पूर्वः अस्मत् ॥१॥ अराधि होता निऽसदा यजीयान् अभि प्रयांसि सुऽधितानि हि ख्यत् यजामहै यज्ञियान् हंत देवान् ईळामहै ईड्यान् आज्येन ॥२॥ साध्वीं अकः देवऽवीतिं नः अद्य यज्ञस्य जिह्वां अविदाम गुह्यां सः आयुः आ अगात् सुरभिः वसानः



Digitized by Google

भद्रामंकर्देवहूतिं नो अद्य ॥३॥ तद॒द्य वा॒चः प्र॑थ॒मं म॑सीय॒ येना॑-
सुराँ॒ अ॒भि दे॒वा असा॑म। ऊर्जा॑द उ॒त य॑ज्ञियासः॒ पंच॑ जना॒ मम॑
हो॒त्रं जु॑षध्वं ॥४॥ पंच॒ जना॒ मम॑ हो॒त्रं जु॑षंतां॒ गोजा॑ता उ॒त ये
य॒ज्ञिया॑सः। पृ॒थि॒वी नः॒ पार्थि॑वात्पा॒त्वंह॑सो॒ऽंतरि॑क्षं दि॒व्यात्पा॑-
त्व॒स्मान् ॥५॥१३॥ तंतुं॑ त॒न्वन्रज॑सो भा॒नुमन्वि॑हि॒ ज्योति॑ष्मतः
प॒थो र॑क्ष धि॒या कृ॒तान्। अ॒नु॒ल्ब॒णं व॑यत॒ जोगु॑वा॒मपो॒ मनु॑र्भव
ज॒नया॒ दैव्यं॒ जनं॑ ॥६॥ अ॒क्षा॒न॒हो न॑ह्यतनो॒त सो॑म्या॒ इष्कृ॑णुध्वं
र॒श॒ना ओत पिं॑शत। अ॒ष्टाबं॑धुरं वहता॒भितो॒ रथं॒ येन॑ दे॒वासो॒
अन॑यन्न॒भि प्रि॒यं ॥७॥ अश्म॑न्वती रीयते॒ सं र॑भध्व॒मुत्ति॑ष्ठत॒ प्र
त॑रता सखायः। अत्रा॑ जहाम॒ ये अस॒न्नशे॑वाः शि॒वान्व॒यमुत्त॑रे-
मा॒भि वाजा॑न् ॥८॥ त्वष्टा॑ मा॒या वे॑द॒पसा॑म॒पस्त॑मो॒ बिभ्र॒त्पात्रा॑
दे॒व॒पाना॑नि॒ शंत॑मा। शि॒शीते॑ नू॒नं प॑र॒शुं स्वा॑य॒सं येन॑ वृ॒श्चा॑-
दे॒तशो॒ ब्रह्म॑ण॒स्पतिः॑ ॥९॥ सतो॑ नू॒नं क॑वयः॒ सं शि॑शीत वाशी॑-
भि॒र्याभि॑र॒मृता॑य॒ तक्ष॑थ। वि॒द्वांसः॑ प॒दा गुह्या॑नि कर्तन॒ येन॑
दे॒वासो॑ अमृत॒त्वमा॑न॒शुः ॥१०॥ गर्भे॒ योषा॒मद॑धुर्व॒त्सम॒सन्य॑-
पी॒च्ये॑न॒ मन॑सो॒त जि॒ह्वया॑। स वि॒श्वाहा॑ सु॒मना॑ यो॒ग्या अ॒भि
सि॑षा॒सनि॑र्वनते का॒र इज्जिति॑ं ॥११॥१४॥

---

॥ ५४ ॥ १-६ बृहदुक्थो वामदेव्यः ॥ इंद्रः ॥ त्रिष्टुप् ॥

॥५४॥ तां सु ते॑ की॒र्तिं म॑घवन्महि॒त्वा यत्त्वा॑ भी॒ते रोद॑-
सी॒ अह्व॑येतां। प्रावो॑ दे॒वाँ आति॑रो॒ दास॒मोजः॑ प्र॒जायै॑
त्व॒स्मै॒ यदशि॑क्ष इंद्र ॥१॥ यदच॑रस्त॒न्वा॑ वावृधा॒नो बला॑-
नींद्र प्रब्रुवा॒णो जने॑षु। मा॒येत्सा ते॒ यानि॑ यु॒द्धान्या॒हुर्नाद्य
शत्रुं॒ न॒नु पु॒रा वि॑वित्से ॥२॥ क उ॒ नु ते॑ महि॒मनः॑ सम॒स्या॒स्म-



Digitized by Google

भद्रां अकः देवऽहूतिं नः अद्य ॥३॥ तत् अद्य वाचः प्रथमं मसीय येन असुरान् अभि देवाः असाम ऊर्जऽअदः उत यज्ञियासः पंच जनाः मम होत्रं जुषध्वं ॥४॥ पंच जनाः मम होत्रं जुषंतां गोऽजाताः उत ये यज्ञियासः पृथिवी नः पार्थिवात् पातु अंहसः अंतरिक्षं दिव्यात् पातु अस्मान् ॥५॥१३॥ तंतुं तन्वन् रजसः भानुं अनु इहि ज्योतिष्मतः पथः रक्ष धिया कृतान् अनुल्बणं वयत जोगुवां अपः मनुः भव जनय दैव्यं जनं ॥६॥ अक्षऽनहः नह्यतन उत सोम्याः इष्कृणुध्वं रशनाः आ उत पिंशत अष्टाऽवंधुरं वहत अभितः रथं येन देवासः अनयन् अभि प्रियं ॥७॥ अश्मन्ऽवती रीयते सं रभध्वं उत् तिष्ठत प्र तरत सखायः अत्र जहाम ये असन् अशेवाः शिवान् वयं उत् तरेम अभि वाजान् ॥८॥ त्वष्टा मायाः वेत् अपसां अपःऽतमः बिभ्रत् पात्रा देवऽपानानि शंऽतमा शिशीते नूनं परशुं सुऽआयसं येन वृश्चात् एतशः ब्रह्मणः पतिः ॥९॥ सतः नूनं कवयः सं शिशीत वाशीभिः याभिः अमृताय तक्षथ विद्वांसः पदा गुह्यानि कर्तन येन देवासः अमृतऽत्वं आनशुः ॥१०॥ गर्भे योषां अदधुः वत्सं आसनि अपीच्येन मनसा उत जिह्वया सः विश्वाहा सुऽमनाः योग्याः अभि सिसासनिः वनते कारः इत् जितिं ॥११॥१४॥

---

॥५४॥ तां सु ते कीर्तिं मघऽवन् महिऽत्वा यत् त्वा भीते रोदसी अह्वयेतां प्र आवः देवान् आ अतिरः दासं ओजः प्रऽजायै त्वस्यै यत् अशिक्षः इंद्र ॥१॥ यत् अचरः तन्वा वावृधानः बलानि इंद्र प्रऽब्रुवाणः जनेषु माया इत् सा ते यानि युद्धानि आहुः न अद्य शत्रुं ननु पुरा विवित्से ॥२॥ के ऊं नु ते महिमनः समस्य अस्मत्



Digitized by Google

पूर्व ऋषयोऽंतमापुः। यन्मातरं च पितरं च साकमजनयथा-
स्तन्व१: स्वायाः ॥३॥ चत्वारि ते असुर्याणि नामादाभ्यानि म-
हिषस्य संति। त्वमंग तानि विश्वानि वित्से येभिः कर्माणि मघ-
वञ्चकर्थ ॥४॥ त्वं विश्वा दधिषे केवलानि यान्याविर्या च गुहा
वसूनि। काममिन्मे मघवन्मा वि तारीस्त्वमाज्ञाता त्वमिंद्रासि
दाता ॥५॥ यो अदधाज्ज्योतिषि ज्योतिरंतर्यो असृजन्मधुना सं
मधूनि। अध प्रियं शूषमिंद्राय मन्म ब्रह्मकृतो बृहदुक्थादवा-
चि ॥६॥१५॥

---

॥ ५५ ॥ १-८ बृहदुक्थो वामदेव्यः ॥ इंद्रः ॥ त्रिष्टुप् ॥

॥५५॥ दूरे तन्नाम गुह्यं पराचैर्यत्त्वा भीते अह्वयेतां वयोधै।
उदस्तभ्नाः पृथिवीं द्यामभीके भ्रातुः पुत्रान्मघवन्तित्विषाणः
॥१॥ महत्तन्नाम गुह्यं पुरुस्पृग्येन भूतं जनयो येन भव्यं। प्रत्नं
जातं ज्योतिर्यदस्य प्रियं प्रियाः समविशंत पंच ॥२॥ आ रोदसी
अपृणादोत मध्यं पंच देवाँ ऋतुशः सप्तसप्त। चतुस्त्रिंशता पुरु-
धा वि चष्टे सरूपेण ज्योतिषा विव्रतेन ॥३॥ यदुष औच्छः प्रथ-
मा विभानामजनयो येन पुष्टस्य पुष्टं। यत्ते जामित्वमवरं पर-
स्या महन्महत्या असुरत्वमेकं ॥४॥ विधुं दद्राणं समने बहूनां
युवानं संतं पलितो जगार। देवस्य पश्य काव्यं महित्वाद्या म-
मार स ह्यः समान ॥५॥१६॥ शाक्मना शाको अरुणः सुपर्ण आ
यो महः शूरः सनादनीळः। यच्चिकेत सत्यमित्तन्न मोघं वसु
स्पार्हमुत जेतोत दाता ॥६॥ ऐभिर्ददे वृष्ण्या पौंस्यानि येभि-
रौक्षद्वृत्रहत्याय वज्री। ये कर्मणः क्रियमाणस्य मह्न ऋते-
कर्ममुदजायंत देवाः ॥७॥ युजा कर्माणि जनयन्विश्वौजा



Digitized by Google

पूर्वे ऋषयः अंतं आपुः यत् मातरं च पितरं च साकं अजनयथाः तन्वः स्वायाः ॥३॥ चत्वारि ते असुर्याणि नाम अदाभ्यानि महिषस्य संति त्वं अंग तानि विश्वानि वित्से येभिः कर्माणि मघऽवन् चकर्थ ॥४॥ त्वं विश्वा दधिषे केवलानि यानि आविः या च गुहा वसूनि कामं इत् मे मघऽवन् मा वि तारीः त्वं आऽज्ञाता त्वं इंद्र असि दाता ॥५॥ यः अदधात् ज्योतिषि ज्योतिः अंतः यः असृजत् मधुना सं मधूनि अध प्रियं शूषं इंद्राय मन्म ब्रह्मऽकृतः बृहत्ऽउक्थात् अवाचि ॥६॥१५॥

---

॥५५॥ दूरे तत् नाम गुह्यं पराचैः यत् त्वा भीते अह्वयेतां वयःऽधै उत् अस्तभ्नाः पृथिवीं द्यां अभीके भ्रातुः पुत्रान् मघऽवन् तित्विषाणः ॥१॥ महत् तत् नाम गुह्यं पुरुऽस्पृक् येन भूतं जनयः येन भव्यं प्रत्नं जातं ज्योतिः यत् अस्य प्रियं प्रियाः सं अविशंत पंच ॥२॥ आ रोदसी अपृणात् आ उत मध्यं पंच देवान् ऋतुऽशः सप्तऽसप्त चतुःऽत्रिंशता पुरुधा वि चष्टे सऽरूपेण ज्योतिषा विऽव्रतेन ॥३॥ यत् उषः औच्छः प्रथमा विऽभानां अजनयः येन पुष्टस्य पुष्टं यत् ते जामिऽत्वं अवरं परस्याः महत् महत्याः असुरऽत्वं एकं ॥४॥ विऽधुं दद्राणं समने बहूनां युवानं संतं पलितः जगार देवस्य पश्य काव्यं महिऽत्वा अद्य ममार सः ह्यः सं आन ॥५॥१६॥ शाक्मना शाकः अरुणः सुऽपर्णः आ यः महः शूरः सनात् अनीळः यत् चिकेत सत्यं इत् तत् न मोघं वसु स्पार्हं उत जेता उत दाता ॥६॥ आ एभिः ददे वृष्ण्या पौंस्यानि येभिः औक्षत् वृत्रऽहत्याय वज्री ये कर्मणः क्रियमाणस्य मह्ना ऋतेऽकर्मं उत्ऽअजायंत देवाः ॥७॥ युजा कर्माणि जनयन् विश्वऽओजाः



Digitized by Google

अर्धमितहा विश्वमनास्तुराषाट् । पीत्वी सोमस्य दिव आ वृ-
धानः शूरो निर्युधाधमद्दस्यून् ॥ ८ ॥ १७ ॥

---

॥ ५६ ॥ १—७ बृहदुक्थो वामदेव्यः ॥ विश्वे देवाः ॥ १—३. ७ त्रिष्टुप् । ४—६ जगती ॥

॥ ५६ ॥ इदं त एकं पर ऊं त एकं तृतीयेन ज्योतिषा सं विश-
स्व । संवेशने तन्व१ श्चारुरेधि प्रियो देवानां परमे जनित्रे ॥ १ ॥
तनूष्टे वाजिन्तन्व१ं नयंती वाममस्मभ्यं धातु शर्म तुभ्यं । अह्रुतो
महो धरुणाय देवान्दिवीव ज्योतिः स्वमा मिमीयाः ॥ २ ॥ वा-
ज्यसि वाजिनेना सुवेनीः सुवितः स्तोमं सुवितो दिवं गाः । सु-
वितो धर्म प्रथमानु सत्या सुवितो देवान्त्सुवितोऽनु पत्म ॥ ३ ॥
महिम्न एषां पितरश्चनेशिरे देवा देवेष्वदधुरपि क्रतुं । समविव्य-
चुरुत यान्यत्विषुरैषां तनूषु नि विविशुः पुनः ॥ ४ ॥ सहोभिर्विश्वं
परि चक्रमू रजः पूर्वा धामान्यमिता मिमानाः । तनूषु विश्वा
भुवना नि येमिरे प्रासारयंत पुरुध प्रजा अनु ॥ ५ ॥ द्विधा सून-
वोऽसुरं स्वर्विदमास्थापयंत तृतीयेन कर्मणा । स्वां प्रजां पि-
तरः पित्र्यं सह आवरेष्वदधुस्तंतुमाततं ॥ ६ ॥ नावा न क्षोदः
प्रदिशः पृथिव्याः स्वस्तिभिरति दुर्गाणि विश्वा । स्वां प्रजां बृह-
दुक्थो महित्वावरेष्वदधादा परेषु ॥ ७ ॥ १८ ॥

---

॥ ५७ ॥ १—६ बंधुः सुबंधुः श्रुतबंधुर्विप्रबंधुश्च गौपायनाः ॥ विश्वे देवाः ॥ गायत्री ॥

॥ ५७ ॥ मा प्र गाम पथो वयं मा यज्ञादिंद्र सोमिनः । मां-
त स्थुर्नो अरातयः ॥ १ ॥ यो यज्ञस्य प्रसाधनस्तंतुर्देवेष्वा-
ततः । तमाहुतं नशीमहि ॥ २ ॥ मनो न्वा हुवामहे नाराशंसेन
सोमेन । पितॄणां च मन्मभिः ॥ ३ ॥ आ त एतु मनः पुनः क्रत्वे
दक्षाय जीवसे । ज्योक् च सूर्यं दृशे ॥ ४ ॥ पुनर्नः पितरो मनो द-



Digitized by Google

अशस्तिऽहा विश्वऽमनाः तुराषाट् पीत्वी सोमस्य दिवः आ वृधानः शूरः निः युधा अधमत् दस्यून् ॥ ८ ॥ १७ ॥

॥ ५६ ॥ इदं ते एकं परः ऊं ते एकं तृतीयेन ज्योतिषा सं विशस्व संऽवेशने तन्वः चारुः एधि प्रियः देवानां परमे जनित्रे ॥ १ ॥ तनूः ते वाजिन् तन्वं नयंती वामं अस्मभ्यं धातु शर्म तुभ्यं अहुतः महः धरुणाय देवान् दिविऽइव ज्योतिः स्वं आ मिमीयाः ॥ २ ॥ वाजी असि वाजिनेन सुऽवेनीः सुवितः स्तोमं सुवितः दिवं गाः सुवितः धर्म प्रथमा अनु सत्या सुवितः देवान् सुवितः अनु पत्म ॥ ३ ॥ महिम्नः एषां पितरः चन ईशिरे देवाः देवेषु अदधुः अपि क्रतुं सं अविव्यचुः उत यानि अत्विषुः आ एषां तनूषु नि विविशुः पुनः ॥ ४ ॥ सहःऽभिः विश्वं परि चक्रमुः रजः पूर्वा धामानि अमिता मिमानाः तनूषु विश्वा भुवना नि येमिरे प्र असारयंत पुरुध प्रऽजाः अनु ॥ ५ ॥ द्विधा सूनवः असुरं स्वःऽविदं आ अस्थापयंत तृतीयेन कर्मणा स्वां प्रऽजां पितरः पित्र्यं सहः आ अवरेषु अदधुः तंतुं आऽततं ॥ ६ ॥ नावा न क्षोदः प्रऽदिशः पृथिव्याः स्वस्तिऽभिः अति दुःऽगानि विश्वा स्वां प्रऽजां बृहत्ऽउक्थः महिऽत्वा आ अवरेषु अदधात् आ परेषु ॥ ७ ॥ १८ ॥

॥ ५७ ॥ मा प्र गाम पथः वयं मा यज्ञात् इंद्र सोमिनः मा अंतः स्थुः नः अरातयः ॥ १ ॥ यः यज्ञस्य प्रऽसाधनः तंतुः देवेषु आऽततः तं आऽहुतं नशीमहि ॥ २ ॥ मनः नु आ हुवामहे नाराशंसेन सोमेन पितृणां च मन्मऽभिः ॥ ३ ॥ आ ते एतु मनः पुनः क्रत्वे दक्षाय जीवसे ज्योक् च सूर्यं दृशे ॥ ४ ॥ पुनः नः पितरः मनः द-



Digitized by Google

दातु दैव्यो जनः । जीवं व्रातं सचेमहि ॥५॥ वयं सोम व्रते तव
मनस्तनूषु बिभ्रतः । प्रजावन्तः सचेमहि ॥६॥१९॥

---

॥ ५८ ॥ १–१२ बंध्वादयो गौपायनाः ॥ मनआवर्तनं ॥ अनुष्टुप् ॥

॥५८॥ यत्ते यमं वैवस्वतं मनो जगाम दूरकं । तत्त आ वर्तयामसीह क्षयाय जीवसे ॥१॥ यत्ते दिवं यत्पृथिवीं मनो जगाम दूरकं । तत्त आ वर्तयामसीह क्षयाय जीवसे ॥२॥ यत्ते भूमिं चतुर्भृष्टिं मनो जगाम दूरकं । तत्त आ वर्तयामसीह क्षयाय जीवसे ॥३॥ यत्ते चतस्रः प्रदिशो मनो जगाम दूरकं । तत्त आ वर्तयामसीह क्षयाय जीवसे ॥४॥ यत्ते समुद्रमर्णवं मनो जगाम दूरकं । तत्त आ वर्तयामसीह क्षयाय जीवसे ॥५॥ यत्ते मरीचीः प्रवतो मनो जगाम दूरकं । तत्त आ वर्तयामसीह क्षयाय जीवसे ॥६॥२०॥ यत्ते अपो यदोषधीर्मनो जगाम दूरकं । तत्त आ वर्तयामसीह क्षयाय जीवसे ॥७॥ यत्ते सूर्यं यदुषसं मनो जगाम दूरकं । तत्त आ वर्तयामसीह क्षयाय जीवसे ॥८॥ यत्ते पर्वतान्बृहतो मनो जगाम दूरकं । तत्त आ वर्तयामसीह क्षयाय जीवसे ॥९॥ यत्ते विश्वमिदं जगन्मनो जगाम दूरकं । तत्त आ वर्तयामसीह क्षयाय जीवसे ॥१०॥ यत्ते पराः परावतो मनो जगाम दूरकं । तत्त आ वर्तयामसीह क्षयाय जीवसे ॥११॥ यत्ते भूतं च भव्यं च मनो जगाम दूरकं । तत्त आ वर्तयामसीह क्षयाय जीवसे ॥१२॥२१॥

---

॥ ५९ ॥ १–१० बंध्वादयो गौपायनाः ॥ १–३ निर्ऋतिः । ४ निर्ऋतिः सोमश्च । ५. ६ असुनीतिः । ७ लिंगोक्ता देवताः । ८. ९. १०[१] द्यावापृथिव्यौ । १०[१] द्यावापृथिव्याविंद्रश्च ॥ १–७ त्रिष्टुप् । ८ पंक्तिः । ९ महापंक्तिः । १० पंक्त्युत्तरा ॥

॥५९॥ प्र तार्यायुः प्रतरं नवीयः स्थातारेव क्रतुमता रथस्य । अध च्यवान उत्तवीत्यर्थं परातरं सु निर्ऋ-



Digitized by Google

दातु दैव्यः जनः जीवं व्रातं सचेमहि ॥५॥ वयं सोम व्रते तव मनः तनूषु बिभ्रतः प्रजाऽवंतः सचेमहि ॥६॥१९॥

---

॥५८॥ यत् ते यमं वैवस्वतं मनः जगाम दूरकं तत् ते आ वर्तयामसि इह क्षयाय जीवसे ॥१॥ यत् ते दिवं यत् पृथिवीं मनः जगाम दूरकं तत् ते आ वर्तयामसि इह क्षयाय जीवसे ॥२॥ यत् ते भूमिं चतुःऽभृष्टिं मनः जगाम दूरकं तत् ते आ वर्तयामसि इह क्षयाय जीवसे ॥३॥ यत् ते चतस्रः प्रऽदिशः मनः जगाम दूरकं तत् ते आ वर्तयामसि इह क्षयाय जीवसे ॥४॥ यत् ते समुद्रं अर्णवं मनः जगाम दूरकं तत् ते आ वर्तयामसि इह क्षयाय जीवसे ॥५॥ यत् ते मरीचीः प्रऽवतः मनः जगाम दूरकं तत् ते आ वर्तयामसि इह क्षयाय जीवसे ॥६॥२०॥ यत् ते अपः यत् ओषधीः मनः जगाम दूरकं तत् ते आ वर्तयामसि इह क्षयाय जीवसे ॥७॥ यत् ते सूर्यं यत् उषसं मनः जगाम दूरकं तत् ते आ वर्तयामसि इह क्षयाय जीवसे ॥८॥ यत् ते पर्वतान् बृहतः मनः जगाम दूरकं तत् ते आ वर्तयामसि इह क्षयाय जीवसे ॥९॥ यत् ते विश्वं इदं जगत् मनः जगाम दूरकं तत् ते आ वर्तयामसि इह क्षयाय जीवसे ॥१०॥ यत् ते पराः पराऽवतः मनः जगाम दूरकं तत् ते आ वर्तयामसि इह क्षयाय जीवसे ॥११॥ यत् ते भूतं च भव्यं च मनः जगाम दूरकं तत् ते आ वर्तयामसि इह क्षयाय जीवसे ॥१२॥२१॥

---

॥५९॥ प्र तारि आयुः प्रऽतरं नवीयः स्थातारऽइव क्रतुऽमता रथस्य अध च्यवानः उत् तवीति अर्थं पराऽतरं सु निःऽऋ-



Digitized by Google

तिर्जिहीतां ॥१॥ सामन्नु राये निधिमन्न्वन्नं करामहे सु पुरुध श्र- वाँसि। ता नो विश्वानि जरिता ममत्तु परातरं सु निर्ऋतिर्जि- हीतां ॥२॥ अभी ष्व१र्यः पौंस्यैर्भवेम द्यौर्न भूमिं गिरयो नाज्रान्। ता नो विश्वानि जरिता चिकेत परातरं सु निर्ऋतिर्जिहीतां ॥३॥ मो षु णः सोम मृत्यवे परा दाः पश्येम नु सूर्यमुच्चरंतं। द्यु- भिर्हितो जरिमा सू नो अस्तु परातरं सु निर्ऋतिर्जिहीतां ॥४॥ असुनीते मनो अस्मासु धारय जीवातवे सु प्र तिरा न आयुः। रारंधि नः सूर्यस्य संदृशि घृतेन त्वं तन्वं वर्धयस्व ॥५॥२२॥ अ- सुनीते पुनरस्मासु चक्षुः पुनः प्राणमिह नो धेहि भोगं। ज्योक् पश्येम सूर्यमुच्चरंतमनुमते मृळया नः स्वस्ति ॥६॥ पुनर्नो असुं पृथिवी ददातु पुनर्द्यौर्देवी पुनरंतरिक्षं। पुनर्नः सोमस्तन्वं ददातु पुनः पूषा पथ्यां३ या स्वस्तिः ॥७॥ शं रोदसी सुबंधवे यह्वी ऋ- तस्य मातरा। भरतामप यद्रपो द्यौः पृथिवि क्षमा रपो मो षु ते किं चनाममत् ॥८॥ अव द्वके अव त्रिका दिवश्चरंति भेषजा। क्षमा चरिष्ण्वेककं भरतामप यद्रपो द्यौः पृथिवि क्षमा रपो मो षु ते किं चनाममत् ॥९॥ समिंद्रेरय गामनड्वाहं य आवहदु- शीनराण्या अनः। भरतामप यद्रपो द्यौः पृथिवि क्षमा रपो मो षु ते किं चनाममत् ॥१०॥२३॥

---

॥६०॥ १—५. ७—१२ बंध्वादयो गौपायनाः। ६ अगस्त्यस्य स्वसैषां माता ॥ १—४. ६ अस- माती राजा। ५ इंद्रः। ७—११ सुबंधोर्जीवितान्हानं। १२ हस्तः ॥ १—५ गायत्री। ६. ७. १०—१२ अनुष्टुप्। ८. ९ पंक्तिः ॥

॥६०॥ आ जनं त्वेषसंदृशं माहीनानामुपस्तुतं। अगन्म बि- भ्रतो नमः ॥१॥ असमातिं नितोशनं त्वेषं निययिनं रथं। भजेरथस्य सत्पतिं ॥२॥ यो जनान्महिषाँ इवातितस्थौ प- वीरवान्। उतापवीरवान्युधा ॥३॥ यस्येक्ष्वाकुरुप व्रते



Digitized by Google

ऋतिः जिहीतां ॥ १ ॥ सामन् नु राये निधिऽमत् नु अन्नं करामहे सु
पुरुध श्रवांसि ता नः विश्वानि जरिता ममत्तु पराऽतरं सु निः-
ऽऋतिः जिहीतां ॥ २ ॥ अभि सु अर्यः पौंस्यैः भवेम द्यौः न भूमिं
गिरयः न अज्रान् ता नः विश्वानि जरिता चिकेत पराऽतरं सु
निःऽऋतिः जिहीतां ॥ ३ ॥ मो' सु नः सोम मृत्यवे परा दाः प-
श्येम नु सूर्यं उत्ऽचरंतं द्युऽभिः हितः जरिमा सु नः अस्तु परा-
ऽतरं सु निःऽऋतिः जिहीतां ॥ ४ ॥ असुऽनीते मनः अस्मासु धा-
रय जीवातवे सु प्र तिर नः आयुः रंधि नः सूर्यस्य संऽदृशि घृतेन
त्वं तन्वं वर्धयस्व ॥ ५ ॥ २२ ॥ असुऽनीते पुनः अस्मासु चक्षुः पुनः
प्राणं इह नः धेहि भोगं ज्योक् पश्येम सूर्यं उत्ऽचरंतं अनुऽमते
मृळय नः स्वस्ति ॥ ६ ॥ पुनः नः असुं पृथिवी ददातु पुनः द्यौः देवी
पुनः अंतरिक्षं पुनः नः सोमः तन्वं ददातु पुनः पूषा पथ्यां या
स्वस्तिः ॥ ७ ॥ शं रोदसी' सुऽबंधवे यह्वी' ऋतस्य मातरा भरतां
अप यत् रपः द्यौः पृथिवि क्षमा रपः मो' सु ते किं चन आममत्
॥ ८ ॥ अव द्वके' अव त्रिका दिवः चरंति भेषजा क्षमा चरिष्णु ए-
ककं भरतां अप यत् रपः द्यौः पृथिवि क्षमा रपः मो' सु ते किं
चन आममत् ॥ ९ ॥ सं इंद्र ईरय गां अनड्वाहं यः आ अवहत् उ-
शीनराण्याः अनः भरतां अप यत् रपः द्यौः पृथिवि क्षमा रपः
मो' सु ते किं चन आममत् ॥ १० ॥ २३ ॥

---

॥ ६० ॥ आ जनं त्वेषऽसंदृशं माहीनानां उपऽस्तुतं अगन्म बि-
भ्रतः नमः ॥ १ ॥ असमातिं निऽतोशनं त्वेषं निऽययिनं रथं भजे-
ऽरथस्य सत्ऽपतिं ॥ २ ॥ यः जनान् महिषान्ऽइव अतिऽतस्थौ
पवीरवान् उत अपवीरवान् युधा ॥ ३ ॥ यस्य इक्ष्वाकुः उप व्रते

रे॒वान्मे॑रा॒य्येधते । दि॒वीव॒ पंच॑ कृ॒ष्टयः॑ ॥४॥ इंद्र॑ क्ष॒त्रास॑मातिषु र॒थप्रो॑ष्ठेषु धारय । दि॒वीव॒ सूर्यं॑ दृ॒शे ॥५॥ अ॒गस्त्य॑स्य न॒द्भ्यः सप्ती॑ यु॒नक्षि॒ रोहि॑ता । प॒णीन्न्य॑क्रमीर॒भि विश्वा॑न्राजन्नरा॒धसः॑ ॥६॥२४॥ अ॒यं मा॒ताय॑ पि॒ताय॑ं जी॒वातु॒राग॑मत् । इ॒दं तव॑ प्र॒सर्प॑णं॒ सुबं॑ध॒वेहि॒ निरि॑हि ॥७॥ यथा॑ यु॒गं व॑र॒त्रया॑ न॒ह्यंति॑ ध॒रुणा॑य॒ कं । ए॒वा दा॑धार ते॒ मनो॑ जी॒वात॑वे॒ न मृ॒त्यवेऽथो॑ अरि॒ष्टता॑तये ॥८॥ यथे॒यं पृ॑थि॒वी म॒ही दा॒धारे॒मान्वन॒स्पती॑न् । ए॒वा दा॑धार ते॒ मनो॑ जी॒वात॑वे॒ न मृ॒त्यवेऽथो॑ अरि॒ष्टता॑तये ॥९॥ य॒माद॒हं वै॑वस्व॒तात्सु॒बंधो॒र्मन॒ आभ॑रं । जी॒वात॑वे॒ न मृ॒त्यवेऽथो॑ अरि॒ष्टता॑तये ॥१०॥ न्य१॒ग्वातोऽव॑ वाति॒ न्य॑क्तपति॒ सूर्यः॑ । नी॒चीन॑म॒घ्न्या दु॑हे॒ न्य॑ग्भवतु ते॒ रपः॑ ॥११॥ अ॒यं मे॒ हस्तो॒ भग॑वान॒यं मे॒ भग॑वत्तरः । अ॒यं मे॑ वि॒श्वभे॑षजो॒ऽयं शि॒वाभि॑मर्शनः ॥१२॥२५॥४॥

---

॥ ६१ ॥ १–२७ नाभानेदिष्ठो मानवः ॥ विश्वे देवाः ॥ त्रिष्टुप् ॥

॥६१॥ इ॒दमि॒त्था रौद्रं॑ गू॒र्तव॑चा॒ ब्रह्म॒ क्रत्वा॒ शच्या॑मं॒तरा॒जौ । क्रा॒णा यद॑स्य पि॒तरा॑ मंह॒ने॒ष्ठाः पर्ष॑त्प॒क्थे अह॒न्ना स॒प्त होतॄ॑न् ॥१॥ स इ॒द्दाना॑य॒ दभ्या॑य व॒न्वञ्च्यवा॑नः॒ सूदै॑रमिमीत॒ वेदिं॑ । तूर्व॑याणो गू॒र्तव॑चस्तमः॒ क्षोदो॒ न रेत॑ इ॒तऊ॑ति सिंचत् ॥२॥ मनो॒ न येषु॒ हव॑नेषु ति॒ग्मं विपः॒ शच्या॑ वनु॒थो द्रवं॑ता । आ यः शर्या॑भिस्तुवि॒नृम्णो॑ अ॒स्याश्री॑णीता॒दिशं॒ गभ॑स्तौ ॥३॥ कृ॒ष्णा यद्गोष्व॑रु॒णीषु॒ सीद॑द्दि॒वो नपा॑ताश्विना हुवे वां । वी॒तं मे॑ य॒ज्ञमा ग॑तं मे॒ अन्नं॑ वव॒न्वांसा॒ नेष॒मस्मृ॑तध्रू ॥४॥ प्रथि॑ष्ट॒ यस्य॑ वी॒रक॑र्ममि॒ष्णदनु॑ष्ठितं॒ नु नर्यो॒ अपौ॑हत् । पुन॒स्तदा वृ॑हति॒ यत्क॒नाया॑ दुहि॒तुरा अनु॑-



Digitized by Google

रेवान् मरायी एधते दिविऽइव पंच कृष्टयः ॥४॥ इंद्र क्षत्रा असमातिषु रथऽप्रोष्ठेषु धारय दिविऽइव सूर्यं दृशे ॥५॥ अगस्त्यस्य नत्ऽभ्यः सप्ती इति युनक्षि रोहिता पणीन् नि अक्रमीः अभि विश्वान् राजन् अराधसः ॥६॥२४॥ अयं माता अयं पिता अयं जीवातुः आ अगमत् इदं तव प्रऽसर्पणं सुऽबंधो० आ इहि निः इहि ॥७॥ यथा युगं वरत्रया नह्यंति धरुणाय कं एव दाधार ते मनः जीवातवे न मृत्यवे अथो इति अरिष्टऽतातये ॥८॥ यथा इयं पृथिवी मही दाधार इमान् वनस्पतीन् एव दाधार ते मनः जीवातवे न मृत्यवे अथो इति अरिष्टऽतातये ॥९॥ यमात् अहं वैवस्वतात् सुऽबंधोः मनः आ अभरं जीवातवे न मृत्यवे अथो इति अरिष्टऽतातये ॥१०॥ न्यक् वातः अव वाति न्यक् तपति सूर्यः नीचीनं अघ्न्या दुहे न्यक् भवतु ते रपः ॥११॥ अयं मे हस्तः भगऽवान् अयं मे भगवत्ऽतरः अयं मे विश्वऽभेषजः अयं शिवऽअभिमर्शनः ॥१२॥२५॥४॥

---

॥६१॥ इदं इत्था रौद्रं गूर्तऽवचाः ब्रह्म क्रत्वा शच्यां अंतः आजौ क्राणा यत् अस्य पितरा मंहनेऽस्थाः पर्षत् पक्थे अहन् आ सप्त होतॄन् ॥१॥ सः इत् दानाय दभ्याय वन्वन् च्यवानः सूदैः अमिमीत वेदिं तूर्वयाणः गूर्तवचःऽतमः क्षोदः न रेतः इतःऽऊति सिंचत् ॥२॥ मनः न येषु हवनेषु तिग्मं विपः शच्या वनुथः द्रवंता आ यः शर्याभिः तुविऽनृम्णः अस्य अश्रीणीत आऽदिशं गभस्तौ ॥३॥ कृष्णा यत् गोषु अरुणीषु सीदत् दिवः नपाता अश्विना हुवे वां वीतं मे यज्ञं आ गतं मे अन्नं ववन्वांसा न इषं अस्मृतऽध्रू० ॥४॥ प्रथिष्ट यस्य वीरऽकर्मं इष्णत् अनुऽस्थितं नु नर्यः अप औहत् पुनरिति तत् आ वृहति यत् कनायाः दुहितुः आः अनु-



Digitized by Google

भृतमनर्वा ॥ ५ ॥ २६ ॥ मध्या यत्कर्त्वमभवदभीके कामं कृण्वाने पितरि युवत्यां । मनानग्रेतो जहतुर्वियंता सानौ निषिक्तं सुकृतस्य योनौ ॥ ६ ॥ पिता यत्स्वां दुहितरमधिष्कन्क्ष्मया रेतः संजग्मानो नि षिंचत् । स्वाध्योऽजनयन्ब्रह्म देवा वास्तोष्पतिं व्रतपां निरतक्षन् ॥ ७ ॥ स ईं वृषा न फेनमस्यदाजौ स्मदा परैदप दभ्रचेताः । सरत्पदा न दक्षिणा परावृङ् न ता नु मे पृशन्यो जगृभ्रे ॥ ८ ॥ मक्षू न वह्निः प्रजाया उपब्दिरग्निं न नग्न उप सीददूधः । सनितेध्मं सनितोत वाजं स धर्ता जज्ञे सहसा यवीयुत् ॥ ९ ॥ मक्षू कनायाः सख्यं नवग्वा ऋतं वदंत ऋतयुक्तिमग्मन् । द्विबर्हसो य उप गोपमागुरदक्षिणासो अच्युता दुदुक्षन् ॥ १० ॥ २७ ॥ मक्षू कनायाः सख्यं नवीयो राधो न रेत ऋतमित्तुरण्यन् । शुचि यत्ते रेक्ण आयजंत सबर्दुघायाः पय उस्रियायाः ॥ ११ ॥ पश्वा यत्पश्चा वियुता बुधंतेति ब्रवीति वक्तरी रराणः । वसोर्वसुत्वा कारवोऽनेहा विश्वं विवेष्टि द्रविणमुप क्षु ॥ १२ ॥ तदिन्न्वस्य परिषद्वानो अग्मन्पुरू सदंतो नार्षदं बिभित्सन् । वि शुष्णस्य संग्रथितमनर्वा विदत्पुरुप्रजातस्य गुहा यत् ॥ १३ ॥ भर्गो ह नामोत यस्य देवाः स्व१र्ण ये त्रिषधस्थे निषेदुः । अग्निर्ह नामोत जातवेदाः श्रुधी नो होतर्ऋतस्य होताध्रुक् ॥ १४ ॥ उत त्या मे रौद्रावर्चिमंता नासत्याविंद्र गूर्तये यजध्यै । मनुष्वद्वृक्तबर्हिषे रराणा मंदू हितप्रयसा विक्षु यज्यू ॥ १५ ॥ २८ ॥ अयं स्तुतो राजा वंदि वेधा अपश्च विप्रस्तरति स्वसेतुः । स कक्षीवंतं रेजयत्सो अग्निं नेमिं न चक्रमर्वतो रघुद्रु ॥ १६ ॥ स द्विबंधुर्वैतरणो यष्टा सबर्धुं धेनुमस्वं दुह-



Digitized by Google

ऽभृतं अनर्वा ॥ ५ ॥ २६ ॥ मध्या यत् कर्त्वं अभवत् अभीके कामं कृ-
ण्वाने पितरि युवत्यां मनानक् रेतः जहतुः विऽयंता सानौ नि-
ऽसिक्तं सुऽकृतस्य योनौ ॥ ६ ॥ पिता यत् स्वां दुहितरं अधिऽस्कन्
क्ष्मया रेतः संऽजग्मानः नि सिंचत् सुऽआध्यः अजनयन् ब्रह्म
देवाः वास्तोः पतिं व्रतऽपां निः अतक्षन् ॥ ७ ॥ सः ईं वृषा न फेनं
अस्यत् आजौ स्मत् आ परा ऐत् अप दभ्रऽचेताः सरत् पदा न
दक्षिणा पराऽवृक् न ताः नु मे पृशन्यः जगृभे ॥ ८ ॥ मक्षु न वह्निः
प्रऽजायाः उपब्दिः अग्निं न नग्नः उप सीदत् ऊधः सनिता इध्मं
सनिता उत वाजं सः धर्ता जज्ञे सहसा यविऽयुत् ॥ ९ ॥ मक्षु कना-
याः सख्यं नवऽग्वाः ऋतं वदंतः ऋतऽयुक्तिं अग्मन् द्विऽबर्हसः
ये उप गोपं आ अगुः अदक्षिणासः अच्युता दुधुक्षन् ॥ १० ॥ २७ ॥
मक्षु कनायाः सख्यं नवीयः राधः न रेतः ऋतं इत् तुरण्यन् शुचि
यत् ते रेक्णः आ अयजंत सबःऽदुघायाः पयः उस्रियायाः ॥ ११ ॥
पश्वा यत् पश्चा विऽयुता बुधंत इति ब्रवीति वक्तरि रराणः वसोः
वसुऽत्वा कारवः अनेहा विश्वं विवेष्टि द्रविणं उप क्षु ॥ १२ ॥ तत्
इत् नु अस्य परिऽसद्वानः अग्मन् पुरु सदंतः नार्सदं बिभित्सन्
वि शुष्णस्य संऽग्रथितं अनर्वा विदत् पुरुऽप्रजातस्य गुहा यत्
॥ १३ ॥ भर्गः ह नाम उत यस्य देवाः स्वः न ये त्रिऽसधस्थे निऽसेदुः
अग्निः ह नाम उत जातऽवेदाः श्रुधि नः होतः ऋतस्य होता अ-
ध्रुक् ॥ १४ ॥ उत त्या मे रौद्रौ अर्चिऽमंता नासत्यौ इंद्र गूर्तये य-
जध्यै मनुष्वत् वृक्तऽबर्हिषे रराणा मंदू हितऽप्रयसा विक्षु यज्यू
॥ १५ ॥ २८ ॥ अयं स्तुतः राजा वंदि वेधाः अपः च विप्रः तरति
स्वऽसेतुः सः कक्षीवंतं रेजयत् सः अग्निं नेमिं न चक्रं अर्वतः र-
घुऽद्रु ॥ १६ ॥ सः द्विऽबंधुः वैतरणः यष्टा सबःऽधुं धेनुं अस्वं दुह-



Digitized by Google

थे। सं यन्मित्रावरुणा वृंज उक्थैर्ज्येष्ठेभिरर्यमणं वरूथैः ॥१७॥
तद्बंधुः सूरिर्दिवि ते धियंधा नाभानेदिष्ठो रपति प्र वेनन्। सा
नो नाभिः परमास्य वा घाहं तत्पश्चा कतिथश्चिदास॥१८॥ इ्यं
मे नाभिरिह मे सधस्थमिमे मे देवा अयमस्मि सर्वः। द्विजा अह
प्रथमजा ऋतस्येदं धेनुरदुहज्जायमाना॥१९॥ अधासु मंद्रो अ-
रतिर्विभावाव स्यति द्विवर्तनिर्वनेषाट्। ऊर्ध्वा यच्छ्रेणिर्न शि-
शुर्दन्मक्षू स्थिरं शेवृधं सूत माता॥२०॥२९॥ अधा गाव उपमातिं
कनाया अनु श्वांतस्य कस्य चित्परेयुः। श्रुधि त्वं सुद्रविणो नस्त्वं
याळाश्वघ्नस्य वावृधे सूनृताभिः॥२१॥ अध त्वमिंद्र विद्ध्य१स्मा-
न्महो राये नृपते वज्रबाहुः। रक्षा च नो मघोनः पाहि सूरीन-
नेहसस्ते हरिवो अभिष्टौ॥२२॥ अध यद्राजाना गविष्टौ सरत्स-
रण्युः कारवे जरण्युः। विप्रः प्रेष्ठः स ह्येषां बभूव परा च वक्षदुत
पर्षदेनान्॥२३॥ अधा न्वस्य जेन्यस्य पुष्टौ वृथा रेभंत ईमहे तदू
नु। सरण्युरस्य सूनुरश्वो विप्रश्चासि श्रवसश्च सातौ॥२४॥ यु-
वोर्यदि सख्यायास्मे शर्धाय स्तोमं जुजुषे नमस्वान्। विश्वत्र
यस्मिन्ना गिरः समीचीः पूर्वीव गातुर्दाशत्सूनृतायै॥२५॥ स
गृणानो अद्भिर्देववानिति सुबंधुर्नमसा सूक्तैः। वर्धदुक्थैर्वचो-
भिरा हि नूनं व्यध्वैति पयस उस्रियायाः॥२६॥ त ऊ षु णो महो
यजत्रा भूत देवास ऊतये सजोषाः। ये वाजाँ अनयता वियंतो
ये स्था निचेतारो अमूराः॥२७॥३०॥१॥

---

॥६२॥ १–११ नाभानेदिष्ठो मानवः॥ १–६ विश्वे देवा अंगिरसो वा। ७ विश्वे देवाः। ८–११ सावर्णेर्दानस्तुतिः॥ १–४ जगती। ५.८.९ अनुष्टुप्। ६ बृहती। ७ सतोबृहती। १० गायत्री। ११ त्रिष्टुप्॥

॥६२॥ ये यज्ञेन दक्षिणया समक्ता इंद्रस्य सख्यममृतत्वमा-



Digitized by Google

थे सं यत् मित्रावरुणा वृंजे उक्थैः ज्येष्ठेभिः अर्यमणं वरूथैः ॥ १७॥ तत्ऽबंधुः सूरिः दिवि ते धियंऽधाः नाभानेदिष्ठः रपति प्र वेनन् सा नः नाभिः परमा अस्य वा घ अहं तत् पश्चा कतिथः चित् आस ॥ १८॥ इयं मे नाभिः इह मे सधऽस्थं इमे मे देवाः अयं अस्मि सर्वः द्विऽजाः अहं प्रथमऽजाः ऋतस्य इदं धेनुः अदुहत् जायमाना ॥ १९॥ अध आसु मंद्रः अरतिः विभाऽवा अव स्यति द्विऽवर्तनिः वनेषाट् ऊर्ध्वा यत् श्रेणिः न शिश्वः दन् मक्षु स्थिरं शेऽवृधं सूत माता ॥ २०॥ २१॥ अध गावः उपऽमातिं कनायाः अनु श्वांतस्य कस्य चित् परा ईयुः श्रुधि त्वं सुऽद्रविणः नः त्वं याट् आश्वऽघ्नस्य ववृधे सूनृताभिः ॥ २१॥ अध त्वं इंद्र विद्धि अस्मान् महः राये नृऽपते वज्रऽबाहुः रक्ष च नः मघोनः पाहि सूरीन् अनेहसः ते हरिऽवः अभिष्टौ ॥ २२॥ अध यत् राजाना गोऽइष्टौ सरत् सरण्युः कारवे जरण्युः विप्रः प्रेष्ठः सः हि एषां बभूव परा च वक्षत् उत पर्षत् एनान् ॥ २३॥ अध नु अस्य जेन्यस्य पुष्टौ वृथा रेभंतः ईमहे तत् ऊं नु सरण्युः अस्य सूनुः अश्वः विप्रः च असि श्रवसः च सातौ ॥ २४॥ युवोः यदि सख्याय अस्मे शर्धाय स्तोमं जुजुषे नमस्वान् विश्वत्र यस्मिन् आ गिरः संऽईचीः पूर्वीःऽइव गातुः दाशत् सूनृतायै ॥ २५॥ सः गृणानः अत्ऽभिः देवऽवान् इति सुऽबंधुः नमसा सुऽउक्तैः वर्धत् उक्थैः वचःऽभिः आ हि नूनं वि अध्वा एति पयसः उस्रियायाः ॥ २६॥ ते ऊं सु नः महः यजत्राः भूत देवासः ऊतये सऽजोषाः ये वाजान् अनयत वि-ऽयंतः ये स्थ निऽचेतारः अमूराः ॥ २७॥ ३०॥ १॥

---

॥ ६२॥ ये यज्ञेन दक्षिणया संऽअक्ताः इंद्रस्य सख्यं अमृतऽत्वं



Digitized by Google

नय। तेभ्यो भद्रमंगिरसो वो अस्तु प्रति गृभ्णीत मानवं सुमेधसः ॥१॥ य उदाजन्पितरो गोमयं वस्वृतेनाभिंदन्परिवत्सरे वलं। दीर्घायुत्वमंगिरसो वो अस्तु प्रति गृभ्णीत मानवं सुमेधसः ॥२॥ य ऋतेन सूर्यमारोहयन् दिव्यप्रथयन्पृथिवीं मातरं वि। सुप्रजास्त्वमंगिरसो वो अस्तु प्रति गृभ्णीत मानवं सुमेधसः ॥३॥ अयं नाभा वदति वल्गु वो गृहे देवपुत्रा ऋषयस्तच्छृणोतन। सुब्रह्मण्यमंगिरसो वो अस्तु प्रति गृभ्णीत मानवं सुमेधसः ॥४॥ विरूपास इदृषयस्त इद्गंभीरवेपसः। ते अंगिरसः सूनवस्ते अग्नेः परि जज्ञिरे ॥५॥१॥ ये अग्नेः परि जज्ञिरे विरूपासो दिवस्परि। नवग्वो नु दशग्वो अंगिरस्तमः सचा देवेषु मंहते ॥६॥ इंद्रेण युजा निः सृजंत वाघतो व्रजं गोमंतमश्विनं। सहस्रं मे ददतो अष्टकर्ण्यः १ श्रवो देवेष्वक्रत ॥७॥ प्र नूनं जायतामयं मनुस्तोक्मेव रोहतु। यः सहस्रं शताश्वं सद्यो दानाय मंहते ॥८॥ न तमश्नोति कश्चन दिव इव सान्वारभं। सावर्ण्यस्य दक्षिणा वि सिंधुरिव पप्रथे ॥९॥ उत दासा परिविषे स्मद्दिष्टी गोपरीणसा। यदुस्तुर्वश्च मामहे ॥१०॥ सहस्रदा ग्रामणीर्मा रिषन्मनुः सूर्येणास्य यतमानैतु दक्षिणा। सावर्णेर्देवाः प्र तिरंत्वायुर्यस्मिन्नश्रांता असनाम वाजं ॥११॥२॥

---

॥ ६३ ॥ १—१७ गयः प्लातः ॥ १—१४. १७ विश्वे देवाः। १५. १६ पथ्या स्वस्तिः ॥ १—१४ जगती। १५ जगती त्रिष्टुब्वा। १६. १७ त्रिष्टुप् ॥

॥६३॥ परावतो ये दिधिषंत आप्यं मनुप्रीतासो जनिमा विवस्वतः। ययातेर्ये नहुष्यस्य बर्हिषि देवा आसते ते अधि ब्रुवंतु नः ॥१॥ विश्वा हि वो नमस्यानि वंद्या नामानि देवा उत यज्ञियानि वः। ये स्थ जाता अदितेरद्भ्यस्परि ये पृथिव्यास्ते



Digitized by Google

आनश तेभ्यः भद्रं अंगिरसः वः अस्तु प्रति गृभ्णीत मानवं सुऽमेधसः ॥१॥ ये ऋतेन सूर्यं आ अरोहयन् दिवि अप्रथयन् पृथिवीं मातरं वि सुप्रजाःऽत्वं अंगिरसः वः अस्तु प्रति गृभ्णीत मानवं सुऽमेधसः ॥३॥ अयं नाभा वदति वल्गु वः गृहे देवऽपुत्राः ऋषयः तत् शृणोतन सुऽब्रह्मण्यं अंगिरसः वः अस्तु प्रति गृभ्णीत मानवं सुऽमेधसः ॥४॥ विऽरूपासः इत् ऋषयः ते इत् गंभीरऽवेपसः ते अंगिरसः सूनवः ते अग्नेः परि जज्ञिरे ॥५॥१॥ ये अग्नेः परि जज्ञिरे विऽरूपासः दिवः परि नवऽग्वः नु दशऽग्वः अंगिरःऽतमः सचा देवेषु मंहते ॥६॥ इंद्रेण युजा निः सृजंत वाघतः व्रजं गोऽमंतं अश्विनं सहस्रं मे ददतः अष्टऽकर्ण्यः श्रवः देवेषु अक्रत ॥७॥ प्र नूनं जायतां अयं मनुः तोक्मऽइव रोहतु यः सहस्रं शतऽअश्वं सद्यः दानाय मंहते ॥८॥ न तं अश्नोति कः चन दिवःऽइव सानु आऽरभं सावर्ण्यस्य दक्षिणा वि सिंधुःऽइव पप्रथे ॥९॥ उत दासा परिऽविषे स्मत्ऽदिष्टी॰ गोऽपरीणसा यदुः तुर्वः च ममहे ॥१०॥ सहस्रऽदाः ग्रामऽनीः मा रिषत् मनुः सूर्येण अस्य यतमाना एतु दक्षिणा सावर्णेः देवाः प्र तिरंतु आयुः यस्मिन् अश्रांताः असनाम वाजं ॥११॥२॥

---

॥६३॥ पराऽवतः ये दिधिषंते आप्यं मनुऽप्रीतासः जनिम विवस्वतः ययातेः ये नहुष्यस्य बर्हिषि देवाः आसते ते अधि ब्रुवंतु नः ॥१॥ विश्वा हि वः नमस्यानि वंद्या नामानि देवाः उत यज्ञियानि वः ये स्थ जाताः अदितेः अत्ऽभ्यः परि ये पृथिव्याः ते



Digitized by Google

मं इह श्रुता हवं ॥२॥ येभ्यो माता मधुमत्पिन्वते पयः पीयूषं द्यौरदितिरद्रिबर्हाः । उक्थशुष्मान्वृषभरान्त्स्वप्नसस्ताँ आदित्याँ अनु मदा स्वस्तये ॥३॥ नृचक्षसो अनिमिषंतो अर्हणा बृहद्देवासो अमृतत्वमानशुः । ज्योतीरथा अहिमाया अनागसो दिवो वर्ष्माणं वसते स्वस्तये ॥४॥ सम्राजो ये सुवृधो यज्ञमाययुरपरिह्वृता दधिरे दिवि क्षयं । ताँ आ विवास नमसा सुवृक्तिभिर्महो आदित्याँ अदितिं स्वस्तये ॥५॥३॥ को वः स्तोमं राधति यं जुजोषथ विश्वे देवासो मनुषो यति ष्ठन । को वोऽध्वरं तुविजाता अरं करद्यो नः पर्षदत्यंहः स्वस्तये ॥६॥ येभ्यो होत्रां प्रथमामायेजे मनुः समिद्धाग्निर्मनसा सप्त होतृभिः । त आदित्या अभयं शर्म यच्छत सुगा नः कर्त सुपथा स्वस्तये ॥७॥ य ईशिरे भुवनस्य प्रचेतसो विश्वस्य स्थातुर्जगतश्च मंतवः । ते नः कृतादकृतादेनसस्पर्यद्या देवासः पिपृता स्वस्तये ॥८॥ भरेष्विंद्रं सुहवं हवामहेंऽहोमुचं सुकृतं दैव्यं जनं । अग्निं मित्रं वरुणं सातये भगं द्यावापृथिवी मरुतः स्वस्तये ॥९॥ सुत्रामाणं पृथिवीं द्यामनेहसं सुशर्माणमदितिं सुप्रणीतिं । दैवीं नावं स्वरित्रामनागसमस्रवंतीमा रुहेमा स्वस्तये ॥१०॥४॥ विश्वे यजत्रा अधि वोचतोतये त्रायध्वं नो दुरेवाया अभिह्रुतः । सत्यया वो देवहूत्या हुवेम शृण्वतो देवा अवसे स्वस्तये ॥११॥ अपामीवामप विश्वामनाहुतिमपारातिं दुर्विदत्रामघायतः । आरे देवा द्वेषो अस्मद्युयोतनोरु णः शर्म यच्छता स्वस्तये ॥१२॥ अरिष्टः स मर्तो विश्व एधते प्र प्रजाभिर्जायते धर्मणस्परि । यमादित्यासो नयथा सुनीतिभिरति विश्वानि



Digitized by Google

मे इह श्रुत हवं॥२॥ येभ्यः माता मधुऽमत् पिन्वते पयः पीयूषं
द्यौः अदितिः अद्रिऽबर्हाः उक्थऽशुष्मान् वृषऽभरान् सुऽअ-
प्नसः तान् आदित्यान् अनु मद स्वस्तये॥३॥ नृऽचक्षसः अनि-
ऽमिषंतः अर्हणा बृहत् देवासः अमृतऽत्वं आनशुः ज्योतिःऽर-
थाः अहिऽमायाः अनागसः दिवः वर्ष्माणं वसते स्वस्तये॥४॥
संऽराजः ये सुऽवृधः यज्ञं आऽययुः अपरिऽह्वृताः दधिरे दिवि
क्षयं तान् आ विवास नमसा सुवृक्तिऽभिः महः आदित्यान् अ-
दितिं स्वस्तये॥५॥३॥ कः वः स्तोमं राधति यं जुजोषथ विश्वे दे-
वासः मनुषः यति स्थन कः वः अध्वरं तुविऽजाताः अरं करत् यः
नः पर्षत् अति अंहः स्वस्तये॥६॥ येभ्यः होत्रां प्रथमां आऽयेजे
मनुः समिद्धऽअग्निः मनसा सप्त होतृऽभिः ते आदित्याः अभयं
शर्म यच्छत सुऽगा नः कर्त सुऽपथा स्वस्तये॥७॥ ये ईशिरे भुव-
नस्य प्रऽचेतसः विश्वस्य स्थातुः जगतः च मंतवः ते नः कृतात्
अकृतात् एनसः परि अद्य देवासः पिपृत स्वस्तये॥८॥ भरेषु इंद्रं
सुऽहवं हवामहे अंहःऽमुचं सुऽकृतं दैव्यं जनं अग्निं मित्रं वरुणं
सातये भगं द्यावापृथिवी मरुतः स्वस्तये॥९॥ सुऽत्रामाणं पृ-
थिवीं द्यां अनेहसं सुऽशर्माणं अदितिं सुऽप्रनीतिं दैवीं नावं सु-
ऽअरित्रां अनागसं अस्रवंतीं आ रुहेम स्वस्तये॥१०॥४॥ विश्वे
यजत्राः अधि वोचत ऊतये त्रायध्वं नः दुःऽएवायाः अभिऽह्रुतः
सत्यया वः देवऽहूत्या हुवेम शृण्वतः देवाः अवसे स्वस्तये॥११॥
अप अमीवां अप विश्वां अनाहुतिं अप अरातिं दुःऽविदत्रां
अघऽयतः आरे देवाः द्वेषः अस्मत् युयोतन उरु नः शर्म यच्छत
स्वस्तये॥१२॥ अरिष्टः सः मर्तः विश्वः एधते प्र प्रऽजाभिः जायते
धर्मणः परि यं आदित्यासः नयथ सुनीतिऽभिः अति विश्वानि



Digitized by Google

दुरिता स्वस्तये॥१३॥ यं दे॑वासोऽव॑थ वाज॑साती॒ यं शूर॑साता मरुतो हि॒ते धने॑। प्रा॒त॒र्यावा॑णं रथ॑मिंद्र सान॒सिमरि॑ष्यंत॒मा रु॑हेमा स्वस्तये॑॥१४॥ स्व॒स्ति नः॑ प॒थ्यासु॒ धन्व॑सु स्व॒स्त्य१प्सु वृ॒जने॒ स्व॑र्वति। स्व॒स्ति नः॑ पुत्रकृ॒थेषु॒ योनि॑षु स्व॒स्ति रा॒ये म॑रुतो दधातन ॥१५॥ स्व॒स्तिरिद्धि प्रप॑थे श्रेष्ठा॒ रेक्ण॑स्वत्य॒भि या वा॒मेति॑। सा नो॑ अ॒मा सो अर॑णे॒ नि पा॑तु स्वावे॒शा भ॑वतु दे॒वगो॑पा॥१६॥ ए॒वा प्ल॒तेः सू॒नुर॑वीवृधद्वो॒ विश्व॑ आदित्या अदिते मनी॒षी। ई॒शा॒नासो॒ नरो॒ अम॑र्त्ये॒नास्ता॑वि॒ जनो॑ दि॒व्यो गये॑न ॥१७॥५॥

---

॥६४॥ १–१७ गयः प्लातः ॥ विश्वे देवाः ॥ १–११. १३–१५ जगती । १२. १६. १७ त्रिष्टुप् ॥

॥६४॥ क॒था दे॒वानां॑ कत॒मस्य॒ याम॑नि सु॒मंतु॒ नाम॑ शृ॒ण्वतां॑ मनामहे। को मृ॑ळाति कत॒मो नो॒ मय॑स्करत्कत॒म ऊ॒ती अ॒भ्या व॑वर्तति ॥१॥ क्र॒तू॒यंति॒ क्रत॑वो हृ॒त्सु धी॒तयो॒ वेनं॑ति वे॒नाः प॒तयं॒त्या दिशः॑। न म॑र्डि॒ता वि॑द्यते अ॒न्य ए॑भ्यो दे॒वेषु॑ मे॒ अधि॒ कामा॑ अयंसत ॥२॥ नरा॑ वा॒ शंसं॑ पू॒षण॒मगो॑ह्यम॒ग्निं दे॒वेद्ध॑म॒भ्य॑र्चसे गि॒रा। सूर्या॒मासा॑ चं॒द्रम॑सा य॒मं दि॒वि त्रि॒तं वात॑मु॒षस॑म॒क्तुम॒श्विना॑ ॥३॥ क॒था क॒विस्तु॑वी॒रवा॒न्कया॑ गि॒रा बृह॒स्पति॑र्वावृधते सुवृ॒क्तिभिः॑। अ॒ज एक॑पात्सु॒हवे॑भि॒र्ऋक्व॑भि॒रहिः॑ शृणोतु बु॒ध्न्यो॒३ हवी॑मनि ॥४॥ दक्ष॑स्य वादिते॒ जन्म॑नि व्र॒ते राजा॑ना मि॒त्रावरु॑णा॒ वि॑वाससि। अतू॑र्तपंथाः पुरु॒रथो॑ अ॒र्य॒मा स॒प्तहो॑ता॒ विषु॑रूपेषु॒ जन्म॑सु ॥५॥६॥ ते नो॒ अर्वं॑तो हवन॒श्रुतो॒ हवं॒ विश्वे॑ शृण्वंतु वा॒जिनो॑ मि॒तद्र॑वः। स॒ह॒स्र॒सा मे॒धसा॑ताविव॒ त्मना॑ म॒हो ये धनं॑ समि॒थेषु॑ जभ्रि॒रे ॥६॥ प्र वो॑ वा॒युं र॑थ॒युजं॒ पुरं॑धिं॒ स्तोमैः॑ कृणुध्वं स॒-



Digitized by Google

दुःऽइता स्वस्तये ॥ १३ ॥ यं देवासः अवथ वाजऽसातौ यं शूरऽसाता मरुतः हिते धने प्रातःऽयावानं रथं इंद्र सानसिं अरिष्यंतं आ रुहेम स्वस्तये ॥ १४ ॥ स्वस्ति नः पथ्यासु धन्वऽसु स्वस्ति अप्ऽसु वृजने स्वःऽवति स्वस्ति नः पुत्रऽकृथेषु योनिषु स्वस्ति राये मरुतः दधातन ॥ १५ ॥ स्वस्तिः इत् हि प्रऽपथे श्रेष्ठा रेक्णस्वती अभि या वामं एति सा नः अमा सो अरणे नि पातु सुऽआवेशा भवतु देवऽगोपा ॥ १६ ॥ एव प्लतेः सूनुः अवीवृधत् वः विश्वे आदित्याः अदिते मनीषी ईशानासः नरः अमर्त्येन अस्तावि जनः दिव्यः गयेन ॥ १७ ॥ ५ ॥

---

॥ ६४ ॥ कथा देवानां कतमस्य यामनि सुऽमंतु नाम शृण्वतां मनामहे कः मृळाति कतमः नः मयः करत् कतमः ऊती अभि आ ववर्तति ॥ १ ॥ क्रतुऽयंति क्रतवः हृत्ऽसु धीतयः वेनंति वेनाः पतयंति आ दिशः न मर्डिता विद्यते अन्यः एभ्यः देवेषु मे अधि कामाः अयंसत ॥ २ ॥ नराशंसं वा पूषणं अगोह्यं अग्निं देवऽइद्धं अभि अर्चसे गिरा सूर्यामासा चंद्रमसा यमं दिवि त्रितं वातं उषसं अक्तुं अश्विना ॥ ३ ॥ कथा कविः तुविऽरवान् कया गिरा बृहस्पतिः ववृधते सुवृक्तिऽभिः अजः एकऽपात् सुऽहवेभिः ऋक्वऽभिः अहिः शृणोतु बुध्न्यः हवीमनि ॥ ४ ॥ दक्षस्य वा अदिते जन्मनि व्रते राजाना मित्रावरुणा आ विवाससि अतूर्तऽपंथाः पुरुऽरथः अर्यमा सप्तऽहोता विषुऽरूपेषु जन्मऽसु ॥ ५ ॥ ६ ॥ ते नः अर्वंतः हवनऽश्रुतः हवं विश्वे शृण्वंतु वाजिनः मितऽद्रवः सहस्रऽसाः मेधसातौऽइव त्मना महः ये धनं संऽइथेषु जभ्रिरे ॥ ६ ॥ प्र वः वायुं रथऽयुजं पुरंऽधिं स्तोमैः कृणुध्वं स-



Digitized by Google

स्थाय पूषणं । ते हि देवस्य सवितुः सवीमनि क्रतुं सचंते सचितः सचेतसः ॥७॥ त्रिः सप्त सस्रा नद्यो महीरपो वनस्पतीन्पर्वताँ अग्निमूतये । कृशानुमस्तॄन्तिष्यं सधस्थ आ रुद्रं रुद्रेषु रुद्रियं हवामहे ॥८॥ सरस्वती सरयुः सिंधुरूर्मिभिर्महो महीरवसा यंतु वक्षणीः । देवीरापो मातरः सूदयित्न्वो घृतवत्पयो मधुमन्नो अर्चत ॥९॥ उत माता बृहद्दिवा शृणोतु नस्त्वष्टा देवेभिर्जनिभिः पिता वचः । ऋभुक्षा वाजो रथस्पतिर्भगो रण्वः शंसः शशमानस्य पातु नः ॥१०॥७॥ रण्वः संदृष्टौ पितुमाँ इव क्षयो भद्रा रुद्राणां मरुतामुपस्तुतिः । गोभिः ष्याम यशसो जनेष्वा सदा देवास इळया सचेमहि ॥११॥ यां मे धियं मरुत इंद्र देवा अददात वरुण मित्र यूयं । तां पीपयत पयसेव धेनुं कुविद्गिरो अधि रथे वहाथ ॥१२॥ कुविदंग प्रति यथा चिदस्य नः सजात्यस्य मरुतो बुबोधथ । नाभा यत्र प्रथमं संनसामहे तत्र जामित्वमदितिर्दधातु नः ॥१३॥ ते हि द्यावापृथिवी मातरा मही देवी देवाञ्जन्मना यज्ञिये इतः । उभे बिभृत उभयं भरीमभिः पुरू रेतांसि पितृभिश्च सिंचतः ॥१४॥ वि षा होत्रा विश्वमश्नोति वार्यं बृहस्पतिररमतिः पनीयसी । ग्रावा यत्र मधुषुदुच्यते बृहदवीवशंत मतिभिर्मनीषिणः ॥१५॥ एवा कविस्तुवीरवाँ ऋतज्ञा द्रविणस्युर्द्रविणसश्चकानः । उक्थेभिरत्र मतिभिश्च विप्रोऽपीपयद्गयो दिव्यानि जन्म ॥१६॥ एवा प्लतेः सूनुरवीवृधद्वो विश्व आदित्या अदिते मनीषी । ईशानासो नरो अमर्त्येनास्तावि जनो दिव्यो गयेन ॥१७॥८॥



Digitized by Google

स्मार्य पूषणं ते हि देवस्यं सवितुः सवीमनि क्रतुं सचंते सऽचितः सऽचेतसः ॥ ७ ॥ त्रिः सप्त सस्राः नद्यः महीः अपः वनस्पतीन् पर्वतान् अग्निं ऊतये कृशानुं अस्तृन् तिष्यं सधऽस्थे आ रुद्रं रुद्रेषु रुद्रियं हवामहे ॥ ८ ॥ सरस्वती सरयुः सिंधुः ऊर्मिऽभिः महः महीः अवसा आ यंतु वक्षणीः देवीः आपः मातरः सूदयित्न्वः घृतऽवत् पयः मधुऽमत् नः अर्चत ॥ ९ ॥ उत माता बृहत्ऽदिवा शृणोतु नः त्वष्टा देवेभिः जनिऽभिः पिता वचः ऋभुक्षाः वाजः रथःपतिः भगः रण्वः शंसः शशमानस्य पातु नः ॥ १० ॥ ७ ॥ रण्वः संऽदृष्टौ पितुमान्ऽइव क्षयः भद्रा रुद्राणां मरुतां उपऽस्तुतिः गोभिः स्याम यशसः जनेषु आ सदा देवासः इळया सचेमहि ॥ ११ ॥ यां मे धियं मरुतः इंद्र देवाः अददात वरुण मित्र यूयं तां पीपयत पयसाऽइव धेनुं कुवित् गिरः अधि रथे वहाथ ॥ १२ ॥ कुवित् अंग प्रति यथा चित् अस्य नः सऽजात्यस्य मरुतः बुबोधथ नाभा यत्र प्रथमं संऽनसामहे तत्र जामिऽत्वं अदितिः दधातु नः ॥ १३ ॥ ते हि द्यावापृथिवी मातरा मही देवी देवान् जन्मना यज्ञिये इतः उभे बिभृतः उभयं भरीमऽभिः पुरु रेतांसि पितृऽभिः च सिंचतः ॥ १४ ॥ वि सा होत्रा विश्वं अश्नोति वार्यं बृहस्पतिः अरमतिः पनीयसी ग्रावा यत्र मधुऽसुत् उच्यते बृहत् अवीवशंत मतिऽभिः मनीषिणः ॥ १५ ॥ एव कविः तुविऽरवान् ऋतऽज्ञाः द्रविणस्युः द्रविणसः चकानः उक्थेभिः अत्र मतिऽभिः च विप्रः अपीपयत् गयः दिव्यानि जन्म ॥ १६ ॥ एव प्लतेः सूनुः अवीवृधत् वः विश्वे आदित्याः अदिते मनीषी ईशानासः नरः अमर्त्येन अस्तावि जनः दिव्यः गयेन ॥ १७ ॥ ८ ॥



Digitized by Google

॥ ६५ ॥ १—१५ वसुकर्णो वासुक्रः ॥ विश्वे देवाः ॥ १—१४ जगती । १५ त्रिष्टुप् ॥

॥६५॥ अग्निरिंद्रो वरुणो मित्रो अर्यमा वायुः पूषा सरस्वती
सजोषसः। आदित्या विष्णुर्मरुतः स्वर्बृहत्सोमो रुद्रो अदितिर्ब्र-
ह्मणस्पतिः ॥१॥ इंद्राग्नी वृत्रहत्येषु सत्पती मिथो हिन्वाना
तन्वा३ समोकसा। अंतरिक्षं मह्या पप्रुरोजसा सोमो घृतश्रीर्म-
हिमानमीरयन् ॥२॥ तेषां हि मह्ना महतामनर्वणां स्तोमाँ इ-
यर्म्यृतज्ञा ऋतावृधां। ये अप्सवमर्णवं चित्रराधसस्ते नो रा-
संतां महये सुमित्र्याः॥३॥ स्वर्णरमंतरिक्षाणि रोचना द्यावा-
भूमी पृथिवीं स्कंभुरोजसा। पृक्षा इव महयंतः सुरातयो देवाः
स्तवंते मनुषाय सूरयः॥४॥ मित्राय शिक्ष वरुणाय दाशुषे या
सम्राजा मनसा न प्रयुच्छतः। ययोर्धाम धर्मणा रोचते बृहद्य-
योरुभे रोदसी नाधसी वृतौ ॥५॥९॥ या गौर्वर्तनिं पर्येति नि-
ष्कृतं पयो दुहाना व्रतनीरवारतः। सा प्रब्रुवाणा वरुणाय दा-
शुषे देवेभ्यो दाशद्धविषा विवस्वते ॥६॥ दिवक्षसो अग्निजिह्वा
ऋतावृध ऋतस्य योनिं विमृशंत आसते। द्यां स्कभित्व्य१प
आ चक्रुरोजसा यज्ञं जनित्वी तन्वी३ नि मामृजुः॥७॥ परिक्षि-
ता पितरा पूर्वजावरी ऋतस्य योना क्षयतः समोकसा। द्यावा-
पृथिवी वरुणाय सव्रते घृतवत्पयो महिषाय पिन्वतः ॥८॥
पर्जन्यावाता वृषभा पुरीषिणेंद्रवायू वरुणो मित्रो अर्यमा।
देवाँ आदित्याँ अदितिं हवामहे ये पार्थिवासो दिव्यासो अप्सु
ये ॥९॥ त्वष्टारं वायुमृभवो य ओहते दैव्या होतारा उषसं स्व-
स्तये। बृहस्पतिं वृत्रखादं सुमेधसमिंद्रियं सोमं धनसा उ ईमहे
॥१०॥१०॥ ब्रह्म गामश्वं जनयंत ओषधीर्वनस्पतीन्पृथिवीं
पर्वताँ अपः। सूर्यं दिवि रोहयंतः सुदानव आर्या व्रता विसृ-



Digitized by Google

॥६५॥ अग्निः इंद्रः वरुणः मित्रः अर्यमा वायुः पूषा सरस्वती सऽजोषसः आदित्याः विष्णुः मरुतः स्वः बृहत् सोमः रुद्रः अदितिः ब्रह्मणः पतिः ॥१॥ इंद्राग्नी' वृत्रऽहत्येषु सत्ऽपती° मिथः हिन्वाना तन्वा संऽओकसा अंतरिक्षं महि आ पप्रुः ओजसा सोमः घृतऽश्रीः महिमानं ईरयन् ॥२॥ तेषां हि मह्ना महतां अनर्वणां स्तोमान् इयर्मि ऋतऽज्ञाः ऋतऽवृधां ये अप्सवं अर्णवं चित्रऽराधसः ते नः रासंतां महये सुऽमित्र्याः ॥३॥ स्वःऽनरं अंतरिक्षाणि रोचना द्यावाभूमी' पृथिवीं स्कंभुः ओजसा पृक्षाःऽइव महयंतः सुऽरातयः देवाः स्तवंते मनुषाय सूरयः ॥४॥ मित्राय शिक्ष वरुणाय दाशुषे या संऽराजा मनसा न प्रऽयुच्छतः ययोः धाम धर्मणा रोचते बृहत् ययोः उभे' रोदसी' नाधसी' वृतौ ॥५॥

॥९॥ या गौः वर्तनिं परिऽएति निःऽकृतं पयः दुहाना व्रतऽनीः अवारतः सा प्रऽब्रुवाणा वरुणाय दाशुषे देवेभ्यः दाशत् हविषा विवस्वते ॥६॥ दिवक्षसः अग्निऽजिह्वाः ऋतऽवृधः ऋतस्य योनिं विऽमृशंतः आसते द्यां स्कभित्वी अपः आ चक्रुः ओजसा यज्ञं जनित्वी तन्वि नि ममृजुः ॥७॥ परिऽक्षिता पितरा पूर्वऽजावरी° ऋतस्य योना क्षयतः संऽओकसा द्यावापृथिवी' वरुणाय सऽव्रते° घृतऽवत् पयः महिषाय पिन्वतः ॥८॥ पर्जन्यावाता वृषभा पुरीषिणा इंद्रवायू' वरुणः मित्रः अर्यमा देवान् आदित्यान् अदितिं हवामहे ये पार्थिवासः दिव्यासः अप्ऽसु ये ॥९॥ त्वष्टारं वायुं ऋभवः यः ओहते दैव्या होतारौ उषसं स्वस्तये बृहस्पतिं वृत्रऽखादं सुऽमेधसं इंद्रियं सोमं धनऽसाः ऊं' ईमहे ॥१०॥

॥१०॥ ब्रह्म गां अश्वं जनयंतः ओषधीः वनस्पतीन् पृथिवीं पर्वतान् अपः सूर्यं दिवि रोहयंतः सुऽदानवः आर्या व्रता विऽसृ-



Digitized by Google

जंतो अधि क्षमि ॥ ११ ॥ भुज्युमंहसः पिपृथो निरश्विना श्यावं पुत्रं वध्रिमत्या अजिन्वतं । कमद्युवं विमदायोहथुर्युवं विष्णाप्वं१ विश्वकायाव सृजथः ॥ १२ ॥ पावीरवी तन्यतुरेकपादजो दिवो धर्ता सिंधुरापः समुद्रियः । विश्वे देवासः शृणवन्वचांसि मे सरस्वती सह धीभिः पुरंध्या ॥ १३ ॥ विश्वे देवाः सह धीभिः पुरंध्या मनोर्यजत्रा अमृता ऋतज्ञाः । रातिषाचो अभिषाचः स्वर्विदः स्व१र्गिरो ब्रह्म सूक्तं जुषेरत ॥ १४ ॥ देवान्वसिष्ठो अमृतान्ववंदे ये विश्वा भुवनाभि प्रतस्थुः । ते नो रासंतामुरुगायमद्य यूयं पात स्वस्तिभिः सदा नः ॥ १५ ॥ ११ ॥

---

॥ ६६ ॥ १–१५ वसुकर्णो वासुक्रः ॥ विश्वे देवाः ॥ १–१४ जगती । १५ त्रिष्टुप् ॥

॥ ६६ ॥ देवान्हुवे बृहच्छ्रवसः स्वस्तये ज्योतिष्कृतो अध्वरस्य प्रचेतसः । ये वावृधुः प्रतरं विश्ववेदस इंद्रज्येष्ठासो अमृता ऋतावृधः ॥ १ ॥ इंद्रप्रसूता वरुणप्रशिष्टा ये सूर्यस्य ज्योतिषो भागमानशुः । मरुद्गणे वृजने मन्म धीमहि माघोने यज्ञं जनयंत सूरयः ॥ २ ॥ इंद्रो वसुभिः परि पातु नो गयमादित्यैर्नो अदितिः शर्म यच्छतु । रुद्रो रुद्रेभिर्देवो मृळयाति नस्त्वष्टा नो ग्नाभिः सुविताय जिन्वतु ॥ ३ ॥ अदितिर्द्यावापृथिवी ऋतं महदिंद्राविष्णू मरुतः स्वर्बृहत् । देवाँ आदित्याँ अवसे हवामहे वसून्रुद्रान्सवितारं सुदंससं ॥ ४ ॥ सरस्वान्धीभिर्वरुणो धृतव्रतः पूषा विष्णुर्महिमा वायुरश्विना । ब्रह्मकृतो अमृता विश्ववेदसः शर्म नो यंसन् त्रिवरूथमंहसः ॥ ५ ॥ १२ ॥ वृषा यज्ञो वृषणः संतु यज्ञिया वृषणो देवा वृषणो हविष्कृतः । वृषणा द्यावापृथिवी ऋतावरी वृषा पर्जन्यो वृषणो



Digitized by Google

जंतः अधि क्षमि ॥ ११ ॥ भुज्युं अंहसः पिपृथः निः अश्विना श्यावं पुत्रं वध्रिऽमत्याः अजिन्वतं कमऽद्युवं विऽमदाय ऊहथुः युवं विष्णाप्वं विश्वकाय अव सृजथः ॥ १२ ॥ पावीरवी तन्यतुः एकऽपात् अजः दिवः धर्ता सिंधुः आपः समुद्रियः विश्वे देवासः शृणवन् वचांसि मे सरस्वती सह धीभिः पुरंऽध्या ॥ १३ ॥ विश्वे देवाः सह धीभिः पुरंऽध्या मनोः यजत्राः अमृताः ऋतऽज्ञाः रातिऽसाचः अभिऽसाचः स्वःऽविदः स्वः गिरः ब्रह्म सुऽउक्तं जुषेरत ॥ १४ ॥ देवान् वसिष्ठः अमृतान् ववंदे ये विश्वा भुवना अभि प्रऽतस्थुः ते नः रासंतां उरुऽगायं अद्य यूयं पात स्वस्तिऽभिः सदा नः ॥ १५ ॥ ११ ॥

---

॥ ६६ ॥ देवान् हुवे बृहत्ऽश्रवसः स्वस्तये ज्योतिःऽकृतः अध्वरस्य प्रऽचेतसः ये ववृधुः प्रऽतरं विश्वऽवेदसः इंद्रऽज्येष्ठासः अमृताः ऋतऽवृधः ॥ १ ॥ इंद्रऽप्रसूताः वरुणऽप्रशिष्टाः ये सूर्यस्य ज्योतिषः भागं आनशुः मरुत्ऽगणे वृजने मन्म धीमहि माघोने यज्ञं जनयंत सूरयः ॥ २ ॥ इंद्रः वसुऽभिः परि पातु नः गयं आदित्यैः नः अदितिः शर्म यच्छतु रुद्रः रुद्रेभिः देवः मृळयाति नः त्वष्टा नः ग्नाभिः सुवितायं जिन्वतु ॥ ३ ॥ अदितिः द्यावापृथिवी ऋतं महत् इंद्राविष्णू मरुतः स्वः बृहत् देवान् आदित्यान् अवसे हवामहे वसून् रुद्रान् सवितारं सुऽदंससं ॥ ४ ॥ सरस्वान् धीभिः वरुणः धृतऽव्रतः पूषा विष्णुः महिमा वायुः अश्विना ब्रह्मऽकृतः अमृताः विश्वऽवेदसः शर्म नः यंसन् त्रिऽवरूथं अंहसः ॥ ५ ॥ ॥ १२ ॥ वृषा यज्ञः वृषणः संतु यज्ञियाः वृषणः देवाः वृषणः हविःऽकृतः वृषणा द्यावापृथिवी ऋतऽवरी॰ वृषा पर्जन्यः वृषणः



Digitized by Google

वृषस्तुभः ॥ ६ ॥ अग्नीषोमा वृषणा वाजसातये पुरुप्रशस्ता वृषणा उप ब्रुवे। यावीजिरे वृषणो देवयज्यया ता नः शर्म त्रिवरूथं वि यंसतः ॥ ७ ॥ धृतव्रताः क्षत्रिया यज्ञनिष्कृतो बृहद्दिवा अध्वराणामभिश्रियः। अग्निहोतार ऋतसापो अद्रुहोऽपो असृजन्ननु वृत्रतूर्ये ॥ ८ ॥ द्यावापृथिवी जनयन्नभि व्रताप ओषधीर्वनिनानि यज्ञिया। अंतरिक्षं स्व१रा पप्रुरूतये वशं देवासस्तन्वी३ नि मामृजुः ॥ ९ ॥ धर्तारो दिव ऋभवः सुहस्ता वातापर्जन्या महिषस्य तन्यतोः। आप ओषधीः प्र तिरंतु नो गिरो भगो रातिर्वाजिनो यंतु मे हवं ॥ १० ॥ १३ ॥ समुद्रः सिंधू रजो अंतरिक्षमज एकपात्तनयित्नुरर्णवः। अहिर्बुध्न्यः शृणवद्वचांसि मे विश्वे देवास उत सूरयो मम ॥ ११ ॥ स्याम वो मनवो देववीतये प्रांचं नो यज्ञं प्र णयत साधुया। आदित्या रुद्रा वसवः सुदानव इमा ब्रह्म शस्यमानानि जिन्वत ॥ १२ ॥ दैव्या होतारा प्रथमा पुरोहित ऋतस्य पंथामन्वेमि साधुया। क्षेत्रस्य पतिं प्रतिवेशमीमहे विश्वान्देवाँ अमृताँ अप्रयुच्छतः ॥ १३ ॥ वसिष्ठासः पितृवद्वाचमक्रत देवाँ ईळाना ऋषिवत्स्वस्तये। प्रीता इव ज्ञातयः काममेत्यास्मे देवासोऽव धूनुता वसु ॥ १४ ॥ देवान्वसिष्ठो अमृतान्ववंदे ये विश्वा भुवनाभि प्रतस्थुः। ते नो रासंतामुरुगायमद्य यूयं पात स्वस्तिभिः सदा नः ॥ १५ ॥ १४ ॥

---

॥ ६७ ॥ १—१२ अयास्यः ॥ बृहस्पतिः ॥ त्रिष्टुप् ॥

॥ ६७ ॥ इमां धियं सप्तशीर्ष्णीं पिता न ऋतप्रजातां बृहतीमविंदत्। तुरीयं स्विज्जनयद्विश्वजन्योऽयास्य उक्थमिंद्राय शंसन् ॥ १ ॥ ऋतं शंसंत ऋजु दीध्याना दिवस्पुत्रासो असुरस्य



Digitized by Google

वृषऽस्तुभः ॥६॥ अग्नीषोमा वृषणा वाजऽसातये पुरुऽप्रशस्ता
वृषणौ उप ब्रुवे यौ ईजिरे वृषणः देवऽयज्यया ता नः शर्म त्रि-
ऽवरूथं वि यंसतः ॥७॥ धृतऽव्रताः क्षत्रियाः यज्ञनिःऽकृतः बृ-
हत्ऽदिवाः अध्वराणां अभिऽश्रियः अग्निऽहोतारः ऋतऽसापः
अद्रुहः अपः असृजन् अनु वृत्रऽतूर्ये ॥८॥ द्यावापृथिवी जनयन्
अभि व्रता आपः ओषधीः वनिनानि यज्ञिया अंतरिक्षं स्वः आ
पप्रुः ऊतये वशं देवासः तन्वि नि ममृजुः ॥९॥ धर्तारः दिवः ऋ-
भवः सुऽहस्ताः वातापर्जन्या महिषस्य तन्यतोः आपः ओषधीः
प्र तिरंतु नः गिरः भगः रातिः वाजिनः यंतु मे हवं ॥१०॥१३॥
समुद्रः सिंधुः रजः अंतरिक्षं अजः एकऽपात् तनयित्नुः अर्णवः
अहिः बुध्न्यः शृणवत् वचांसि मे विश्वे देवासः उत सूरयः मम
॥११॥ स्याम वः मनवः देवऽवीतये प्रांचं नः यज्ञं प्र नयत साधु-
ऽया आदित्याः रुद्राः वसवः सुऽदानवः इमा ब्रह्म शस्यमानानि
जिन्वत ॥१२॥ दैव्या होतारा प्रथमा पुरःऽहिता ऋतस्य पंथां अ-
नु एमि साधुऽया क्षेत्रस्य पतिं प्रतिऽवेशं ईमहे विश्वान् देवान्
अमृतान् अप्रऽयुच्छतः ॥१३॥ वसिष्ठासः पितृऽवत् वाचं अक्रत
देवान् ईळानाः ऋषिऽवत् स्वस्तये प्रीताःऽइव ज्ञातयः कामं
आऽइत्य अस्मे देवासः अव धूनुत वसु ॥१४॥ देवान् वसिष्ठः
अमृतान् ववंदे ये विश्वा भुवना अभि प्रऽतस्थुः ते नः रासंतां उ-
रुऽगायं अद्य यूयं पात स्वस्तिऽभिः सदा नः ॥१५॥१४॥

---

॥६७॥ इमां धियं सप्तऽशीर्ष्णीं पिता नः ऋतऽप्रजातां बृहतीं
अविंदत् तुरीयं स्वित् जनयत् विश्वऽजन्यः अयास्यः उक्थं इंद्राय
शंसन् ॥१॥ ऋतं शंसंतः ऋजु दीध्यानाः दिवः पुत्रासः असुरस्य



Digitized by Google

वीराः । विप्रं पदमंगिरसो दधाना यज्ञस्य धाम प्रथमं मनंत ॥२॥ हंसैरिव सखिभिर्वावदद्भिरश्मन्मयानि नहना व्यस्यन् । बृहस्पतिरभिकनिक्रदद्गा उत प्रास्तौदुच्च विद्वाँ अगायत् ॥३॥ अवो द्वाभ्यां पर एकया गा गुहा तिष्ठंतीरनृतस्य सेतौ । बृहस्पतिस्तमसि ज्योतिरिच्छन्नुदुस्रा आकर्वि हि तिस्र आवः ॥४॥ विभिद्या पुरं शयथेमपाचीं निस्त्रीणि साकमुदधेरकृंतत् । बृहस्पतिरुषसं सूर्यं गामर्कं विवेद स्तनयन्निव द्यौः ॥५॥ इंद्रो वलं रक्षितारं दुघानां करेणेव वि चकर्ता रवेण । स्वेदांजिभिराशिरमिच्छमानोऽरोदयत्पणिमा गा अमुष्णात् ॥६॥१५॥ स ईं सत्येभिः सखिभिः शुचद्भिर्गोधायसं वि धनसैरदर्दः । ब्रह्मणस्पतिर्वृषभिर्वराहैर्घर्मस्वेदेभिर्द्रविणं व्यानट् ॥७॥ ते सत्येन मनसा गोपतिं गा इयानास इषणयंत धीभिः । बृहस्पतिर्मिथोअवद्यपेभिरुदुस्रिया असृजत स्वयुग्भिः ॥८॥ तं वर्धयंतो मतिभिः शिवाभिः सिंहमिव नानदतं सधस्थे । बृहस्पतिं वृषणं शूरसातौ भरेभरे अनु मदेम जिष्णुं ॥९॥ यदा वाजमसनद्विश्वरूपमा द्यामरुक्षदुत्तराणि सद्म । बृहस्पतिं वृषणं वर्धयंतो नाना संतो बिभ्रतो ज्योतिरासा ॥१०॥ सत्यामाशिषं कृणुता वयोधै कीरिं चिद्ध्यवथ स्वेभिरेवैः । पश्चा मृधो अप भवंतु विश्वास्तद्रोदसी शृणुतं विश्वमिन्वे ॥११॥ इंद्रो मह्ना महतो अर्णवस्य वि मूर्धानमभिनदर्बुदस्य । अहन्नहिमरिणात्सप्त सिंधून्देवैर्द्यावापृथिवी प्रावतं नः ॥१२॥१६॥



Digitized by Google

वीराः विप्रं पदं अंगिरसः दधानाः यज्ञस्यं धामं प्रथमं मनंत ॥२॥
हंसैःऽइव सखिंऽभिः वावंदत्ऽभिः अश्मन्ऽमयानि नहंना
विऽअस्यंन् बृहस्पतिः अभिऽकनिक्रदत् गाः उत प्र अस्तौत् उत्
च विद्वान् अगायत् ॥३॥ अवः द्वाभ्यां परः एकंया गाः गुहा ति-
ष्ठंतीः अनृतस्य सेतौ बृहस्पतिः तमसि ज्योतिः इच्छन् उत् उस्राः
आ अकः वि हि तिस्रः आवः॰ ॥४॥ विऽभिद्य पुरं शयथां ईं अ-
पांचीं निः त्रीणि साकं उदऽधेः अकृंतत् बृहस्पतिः उषसं सूर्यं गां
अर्कं विवेद स्तनयंन्ऽइव द्यौः ॥५॥ इंद्रः वलं रक्षितारं दुघानां
करेणऽइव वि चकर्त रवेंण स्वेदांजिऽभिः आऽशिरं इच्छमा-
नः अरोदयत् पणिं आ गाः अमुष्णात् ॥६॥ १५॥ सः ईं सत्येभिः
सखिंऽभिः शुचत्ऽभिः गोऽधायसं वि धनऽसैः अदर्दः॰ ब्रह्मणः
पतिः वृषंऽभिः वराहैः घर्मऽस्वेदेभिः द्रविणं वि आनट् ॥७॥
ते सत्येन मनसा गोऽपतिं गाः इयानासः इषणयंत धीभिः बृह-
स्पतिः मिथःऽअवद्यपेभिः उत् उस्रियाः असृजत स्वयुक्ऽभिः
॥८॥ तं वर्धयंतः मतिऽभिः शिवाभिः सिंहंऽइव नानंदतं सध-
ऽस्थे बृहस्पतिं वृषणं शूरऽसातौ भरेऽभरे अनु मदेम जिष्णुं ॥९॥
यदा वाजं असनत् विश्वऽरूपं आ द्यां अरुक्षत् उत्ऽतराणि सद्म
बृहस्पतिं वृषणं वर्धयंतः नाना संतः बिभ्रतः ज्योतिः आसा
॥१०॥ सत्यां आऽशिषं कृणुत वयःऽधै कीरिं चित् हि अवथ स्वे-
भिः एवैः पश्चा मृधः अप भवंतु विश्वाः तत् रोदसी इति शृणुतं विश्वं-
ऽइन्वे॰ ॥११॥ इंद्रः मह्ना महतः अर्णवस्यं वि मूर्धानं अभिनत्
अर्बुदस्य अहंन् अहिं अरिणात् सप्त सिंधून् देवैः द्यावापृथिवी इति
प्र अवतं नः ॥१२॥१६॥



Digitized by Google

॥ ६८ ॥ १—१२ अयास्यः ॥ बृहस्पतिः ॥ त्रिष्टुप् ॥

॥६८॥ उदप्रुतो न वयो रक्षमाणा वावदतो अभ्रियस्येव
घोषाः। गिरिभ्रजो नोर्मयो मदंतो बृहस्पतिमभ्यर्का अना-
वन् ॥१॥ सं गोभिरांगिरसो नक्षमाणो भग इवेदर्यमणं नि-
नाय। जने मित्रो न दंपती अनक्ति बृहस्पते वाजयाशूँरिवाजौ
॥२॥ साध्वर्या अतिथिनीरिषिराः स्पार्हाः सुवर्णा अनवद्य-
रूपाः। बृहस्पतिः पर्वतेभ्यो वितूर्या निर्गा ऊपे यवमिव
स्थिविभ्यः ॥३॥ आप्रुषायन्मधुन ऋतस्य योनिमवक्षिपन्नर्क
उल्कामिव द्योः। बृहस्पतिरुद्धरन्नश्मनो गा भूम्या उद्नेव वि
त्वचं बिभेद ॥४॥ अप ज्योतिषा तमो अंतरिक्षादुद्नः शीपा-
लमिव वात आजत्। बृहस्पतिरनुमृश्या वलस्याभ्रमिव वात
आ चक्र आ गाः ॥५॥ यदा वलस्य पीयतो जसुं भेद्बृहस्प-
तिरग्नितपोभिरर्कैः। दद्भिर्न जिह्वा परिविष्टमाददाविर्निधीँ-
रकृणोदुस्रियाणां ॥६॥१७॥ बृहस्पतिरमत हि त्यदासां नाम
स्वरीणां सदने गुहा यत्। आंडेव भित्त्वा शकुनस्य गर्भमु-
दुस्रियाः पर्वतस्य त्मनाजत् ॥७॥ अश्नापिनद्धं मधु पर्यप-
श्यन्मत्स्यं न दीन उदनि क्षियंतं। निष्टज्जभार चमसं न
वृक्षाद्बृहस्पतिर्विरवेणा विकृत्य ॥८॥ सोषामविंदत्सः स्वः१
सो अग्निं सो अर्केण वि बबाधे तमांसि। बृहस्पतिर्गोव-
पुषो वलस्य निर्मज्जानं न पर्वणो जभार ॥९॥ हिमेव पर्णा
मुषिता वनानि बृहस्पतिनाकृपयद्वलो गाः। अनानुकृत्य-
मपुनश्चकार यात्सूर्यामासा मिथ उच्चरातः ॥१०॥ अभि श्यावं
न कृशनेभिरश्वं नक्षत्रेभिः पितरो द्यामपिंशन्। रात्र्यां तमो
अदधुर्ज्योतिरहन्बृहस्पतिर्भिनदद्रिं विदद्गाः ॥११॥ इदम-



Digitized by Google

॥ ६८ ॥ उद्ऽप्रुतः न वयः रक्षमाणाः वावदतः अभ्रियस्य-
ऽइव घोषाः गिरिऽभ्रजः न ऊर्मयः मदंतः बृहस्पतिं अभि अर्काः
अनावन् ॥ १ ॥ सं गोभिः आंगिरसः नक्षमाणः भगःऽइव इत्
अर्यमणं निनाय जने मित्रः न दंऽपती॰ अनक्ति बृहस्पते वाजय
आशून्ऽइव आजौ ॥ २ ॥ साधुऽअर्याः अतिथिनीः इषिराः स्पा-
र्हाः सुऽवर्णाः अनवद्यऽरूपाः बृहस्पतिः पर्वतेभ्यः विऽतूर्य निः
गाः ऊपे यवंऽइव स्थिविऽभ्यः ॥ ३ ॥ आऽप्रुषायन् मधुना ऋत-
स्य योनिं अवऽक्षिपन् अर्कः उल्कांऽइव द्योः बृहस्पतिः उद्धरन्
अश्मनः गाः भूम्याः उद्नाऽइव वि त्वचं बिभेद ॥ ४ ॥ अप ज्योति-
षा तमः अंतरिक्षात् उद्नः शीपालंऽइव वातः आजत् बृहस्पतिः
अनुऽमृश्य वलस्य अभ्रंऽइव वातः आ चक्रे आ गाः ॥ ५ ॥ यदा
वलस्य पीयतः जसुं भेत् बृहस्पतिः अग्नितपःऽभिः अर्कैः दत्ऽभिः
न जिह्वा परिऽविष्टं आदत् आविः निऽधीन् अकृणोत् उस्रिया-
णां ॥ ६ ॥ १७ ॥ बृहस्पतिः अमत हि त्यत् आसां नाम स्वरीणां स-
दने गुहा यत् आंडाऽइव भित्त्वा शकुनस्य गर्भं उत् उस्रियाः पर्व-
तस्य त्मना आजत् ॥ ७ ॥ अश्ना अपिऽनद्धं मधु परि अपश्यत् म-
त्स्यं न दीने उदनि क्षियंतं निः तत् जभार चमसं न वृक्षात् बृह-
स्पतिः विऽरवेण विऽकृत्य ॥ ८ ॥ सः उषां अविंदत् सः स्वः॰ सः
अग्निं सः अर्केण वि बबाधे तमांसि बृहस्पतिः गोऽवपुषः वलस्य
निः मज्जानं न पर्वणः जभार ॥ ९ ॥ हिमाऽइव पर्णा मुषिता वना-
नि बृहस्पतिना अकृपयत् वलः गाः अननुऽकृत्यं अपुनः चकार
यात् सूर्यामासा मिथः उत्ऽचरातः ॥ १० ॥ अभि श्यावं न कृश-
नेभिः अश्वं नक्षत्रेभिः पितरः द्यां अपिंशन् राम्यां तमः अदधुः
ज्योतिः अहन् बृहस्पतिः भिनत् अद्रिं विदत् गाः ॥ ११ ॥ इदं अ-



Digitized by Google

कर्मे नमो अभ्रियाय यः पूर्वीरन्वानोनवीति। बृहस्पतिः स हि
गोभिः सो अश्वैः स वीरेभिः स नृभिर्नो वयो धात्॥१२॥१८॥५॥

---

॥ ६९ ॥ १–१२ सुमित्रो वाध्र्यश्वः ॥ अग्निः ॥ १. २ जगती । ३–१२ त्रिष्टुप् ॥

॥ ६९ ॥ भद्रा अग्नेर्वध्र्यश्वस्य संदृशो वामी प्रणीतिः सु-
रणा उपेतयः । यदीं सुमित्रा विशो अग्र इन्धते घृतेनाहुतो
जरते दविद्युतत् ॥ १ ॥ घृतमग्नेर्वध्र्यश्वस्य वर्धनं घृतमन्नं
घृतम्वस्य मेदनं । घृतेनाहुत उर्विया वि पप्रथे सूर्य इव
रोचते सर्पिरासुतिः ॥ २ ॥ यत्ते मनुर्यदनीकं सुमित्रः सं-
मीधे अग्ने तदिदं नवीयः । स रेवच्छोच स गिरो जुषस्व
स वाजं दर्षि स इह श्रवो धाः ॥ ३ ॥ यं त्वा पूर्वमीळि-
तो वध्र्यश्वः समीधे अग्ने स इदं जुषस्व । स नः स्तिपा
उत भवा तनूपा दात्रं रक्षस्व यदिदं ते अस्मे ॥ ४ ॥ भवा
द्युम्नी वाध्र्यश्वोत गोपा मा त्वा तारीदभिमातिर्जनानां ।
शूर इव धृष्णुश्च्यवनः सुमित्रः प्र नु वोचं वाध्र्यश्वस्य
नाम ॥ ५ ॥ समज्र्या पर्वत्या३ वसूनि दासा वृत्राण्यार्या
जिगेथ । शूर इव धृष्णुश्च्यवनो जनानां त्वमग्ने पृतनायूँर-
भि ष्याः ॥ ६ ॥ १९ ॥ दीर्घतन्तुर्बृहदुक्षायमग्निः सहस्रस्तरीः
शतनीथ ऋभ्वा । द्युमान् द्युमत्सु नृभिर्मृज्यमानः सुमित्रेषु
दीदयो देवयत्सु ॥ ७ ॥ त्वे धेनुः सुदुघा जातवेदोऽसश्च-
तेव समना सबर्धुक् । त्वं नृभिर्दक्षिणावद्भिरग्ने सुमित्रे-
भिरिध्यसे देवयद्भिः ॥ ८ ॥ देवाश्चित्ते अमृता जातवेदो
महिमानं वाध्र्यश्व प्र वोचन् । यत्संपृच्छं मानुषीर्वि-
श आयन्त्वं नृभिरजयस्त्वावृधेभिः ॥ ९ ॥ पितेव पुत्रम-



Digitized by Google

कर्म नर्मः अभिऽयार्यं यः पूर्वीः अनु आऽनोनवीति बृहस्पतिः
सः हि गोभिः सः अश्वैः सः वीरेभिः सः नृऽभिः नः वयः धात्
॥ १२ ॥ १८ ॥ ५ ॥

---

॥ ६९ ॥ भद्राः अग्नेः वध्रिऽअश्वस्य संऽदृशः वामी प्रऽनीतिः
सुऽरणाः उपऽइतयः यत् ईं सुऽमित्राः विशः अग्रे इंधते घृतेन
आऽहुतः जरते दविद्युतत् ॥ १ ॥ घृतं अग्नेः वध्रिऽअश्वस्य वर्धनं
घृतं अन्नं घृतं ऊं इति अस्य मेदनं घृतेन आऽहुतः उर्विया वि पप्रथे
सूर्यःऽइव रोचते सर्पिःऽआसुतिः ॥ २ ॥ यत् ते मनुः यत् अनीकं
सुऽमित्रः संऽईधे अग्ने तत् इदं नवीयः सः रेवत् शोच सः गिरः
जुषस्व सः वाजं दर्षि सः इह श्रवः धाः ॥ ३ ॥ यं त्वा पूर्वं ईळितः
वध्रिऽअश्वः संऽईधे अग्ने सः इदं जुषस्व सः नः स्तिऽपाः उत भव
तनूऽपाः दात्रं रक्षस्व यत् इदं ते अस्मे इति ॥ ४ ॥ भव द्युम्नी वाध्रि-
ऽअश्व उत गोपाः मा त्वा तारीत् अभिऽमातिः जनानां शूरः-
ऽइव धृष्णुः च्यवनः सुऽमित्रः प्र नु वोचं वाध्रिऽअश्वस्य नाम
॥ ५ ॥ सं अज्र्या पर्वत्या वसूनि दासा वृत्राणि आर्या जिगेथ शूरः-
ऽइव धृष्णुः च्यवनः जनानां त्वं अग्ने पृतनाऽयून् अभि स्याः ॥ ६ ॥
॥ १९ ॥ दीर्घऽतंतुः बृहत्ऽउक्षा अयं अग्निः सहस्रऽस्तरीः शत-
ऽनीथः ऋभ्वा द्युऽमान् द्युमत्ऽसु नृऽभिः मृज्यमानः सुऽमित्रेषु
दीदयः देवयत्ऽसु ॥ ७ ॥ त्वे इति धेनुः सुऽदुघा जातऽवेदः असश्चता-
ऽइव समना सबःऽधुक् त्वं नृऽभिः दक्षिणावत्ऽभिः अग्ने सुऽमि-
त्रेभिः इध्यसे देवयत्ऽभिः ॥ ८ ॥ देवाः चित् ते अमृताः जातऽवेदः
महिमानं वाध्रिऽअश्व प्र वोचन् यत् संऽपृच्छं मानुषीः विशः
आयन् त्वं नृऽभिः अजयः त्वाऽवृधेभिः ॥ ९ ॥ पिताऽइव पुत्रं अ-



Digitized by Google

विभरूपस्थे त्वामग्ने वध्र्यश्वः सपर्यन्। जुषाणो अस्य समिधं यविष्ठोत पूर्वाँ अवनोर्व्राधतश्चित् ॥१०॥ शर्म्मदग्निर्वध्र्यश्वस्य शत्रून्नृभिर्जिगाय सुतसोमवद्भिः। समनं चिददहश्चित्रभानोऽव व्राधंतमभिनद्वृधश्चित् ॥११॥ अयमग्निर्वध्र्यश्वस्य वृत्रहा सनकात्प्रेद्धो नमसोपवाक्यः। स नो अजामीँरुत वा विजामीनभि तिष्ठ शर्धतो वाध्र्यश्व ॥१२॥२०॥

---

॥ ७० ॥ १–११ सुमित्रो वाध्र्यश्वः ॥ आप्रं ॥ त्रिष्टुप् ॥

॥७०॥ इमां मे अग्ने समिधं जुषस्वेळस्पदे प्रति हर्या घृताचीं। वर्ष्मन्पृथिव्याः सुदिनत्वे अह्नामूर्ध्वो भव सुक्रतो देवयज्या ॥१॥ आ देवानामग्रयावेह यातु नराशंसो विश्वरूपेभिरश्वैः। ऋतस्य पथा नमसा मियेधो देवेभ्यो देवतमः सुषूदत् ॥२॥ शश्वत्तममीळते दूत्याय हविष्मंतो मनुष्यासो अग्निं। वहिष्ठैरश्वैः सुवृता रथेना देवान्वक्षि नि षदेह होता ॥३॥ वि प्रथतां देवजुष्टं तिरश्चा दीर्घं द्राघ्मा सुरभि भूत्वस्मे। अहेळता मनसा देव बर्हिरिंद्रज्येष्ठाँ उशतो यक्षि देवान् ॥४॥ दिवो वा सानु स्पृशता वरीयः पृथिव्या वा मात्रया वि श्रयध्वं। उशतीर्द्वारो महिना महद्भिर्देवं रथं रथयुर्धारयध्वं ॥५॥२१॥ देवी दिवो दुहितरा सुशिल्पे उषासानक्ता सदतां नि योनौ। आ वां देवास उशती उशंत उरौ सीदंतु सुभगे उपस्थे ॥६॥ ऊर्ध्वो ग्रावा बृहदग्निः समिद्धः प्रिया धामान्यदितेरुपस्थे। पुरोहितावृत्विजा यज्ञे अस्मिन्विदुष्टरा द्रविणमा यजेथां ॥७॥ तिस्रो देवीर्बर्हिरिदं वरीय आ सीदत चकृमा वः स्योनं। मनुष्वद्यज्ञं सुधिता हवींषीळा देवी घृतपदी जुषंत ॥८॥



Digitized by Google

विभिः उपऽस्थे त्वां अग्ने वध्रिऽअश्वः सपर्यन् जुषाणः अस्य सं-
ऽइधं यविष्ठ उत पूर्वान् अवनोः व्राधतः चित् ॥१०॥ शश्वत् अ-
ग्निः वध्रिऽअश्वस्य शत्रून् नृऽभिः जिगाय सुतसोमवत्ऽभिः स-
मनं चित् अदहः चित्रऽभानो° अव व्राधंतं अभिनत् वृधः चित्
॥११॥ अयं अग्निः वध्रिऽअश्वस्य वृत्रऽहा सनकात् प्रऽइद्धः न-
मसा उपऽवाक्यः सः नः अजामीन् उत वा विऽजामीन् अभि
तिष्ठ शर्धतः वाध्रिऽअश्व ॥१२॥२०॥

---

॥७०॥ इमां मे अग्ने संऽइधं जुषस्व इळः पदे प्रति हर्य घृता-
चीं वर्ष्मन् पृथिव्याः सुदिनऽत्वे अह्नां ऊर्ध्वः भव सुऽक्रतो° देव-
ऽयज्या ॥१॥ आ देवानां अग्रऽयावा इह यातु नराशंसः विश्व-
ऽरूपेभिः अश्वैः ऋतस्य पथा नमसा मियेधः देवेभ्यः देवऽतमः
सुसूदत् ॥२॥ शश्वत्ऽतमं ईळते दूत्याय हविष्मंतः मनुष्यासः अ-
ग्निं वहिष्ठैः अश्वैः सुऽवृता रथेन आ देवान् वक्षि नि सद इह होता
॥३॥ वि प्रथतां देवऽजुष्टं तिरश्चा दीर्घं द्राघ्मा सुरभि भूतु अस्मे°
अहेळता मनसा देव बर्हिः इंद्रऽज्येष्ठान् उशतः यक्षि देवान् ॥४॥
दिवः वा सानु स्पृशत वरीयः पृथिव्या वा मात्रया वि श्रयध्वं उ-
शतीः द्वारः महिना महत्ऽभिः देवं रथं रथऽयुः धारयध्वं ॥५॥२१॥
देवी° दिवः दुहितरा सुऽशिल्पे° उषसानक्ता सदतां नि योनौ आ
वां देवासः उशती° उशंतः उरौ सीदंतु सुऽभगे° उपऽस्थे ॥६॥ ऊ-
र्ध्वः ग्रावा बृहत् अग्निः संऽइद्धः प्रिया धामानि अदितेः उपऽस्थे
पुरःऽहितौ ऋत्विजा यज्ञे अस्मिन् विदुःऽतरा द्रविणं आ यजेथां
॥७॥ तिस्रः देवीः बर्हिः इदं वरीयः आ सीदत चकृम वः स्योनं
मनुष्वत् यज्ञं सुऽधिता हवींषि इळा देवी घृतऽपदी जुषंत ॥८॥



Digitized by Google

देवं त्वष्टर्यद्ध चारुत्वमानड्यदंगिरसामभवः सचाभूः। स देवानां पाथ उप प्र विद्वानुशन्यक्षि द्रविणोदः सुरत्नः ॥ ९ ॥ वनस्पते रशनया नियूया देवानां पाथ उप वक्षि विद्वान्। स्वदाति देवः कृणवद्धवींष्यवतां द्यावापृथिवी हवं मे ॥ १० ॥ आग्ने वह वरुणमिष्टये न इंद्रं दिवो मरुतो अंतरिक्षात्। सीदंतु बर्हिर्विश्व आ यजत्राः स्वाहा देवा अमृता मादयंतां ॥ ११ ॥ २२ ॥

---

॥ ७१ ॥ १–११ बृहस्पतिः ॥ ज्ञानं ॥ १–८. १०. ११ त्रिष्टुप्। ९ जगती ॥

॥ ७१ ॥ बृहस्पते प्रथमं वाचो अग्रं यत्प्रैरत नामधेयं दधानाः। यदेषां श्रेष्ठं यदरिप्रमासीत्प्रेणा तदेषां निहितं गुहाविः ॥ १ ॥ सक्तुमिव तितउना पुनंतो यत्र धीरा मनसा वाचमक्रत। अत्रा सखायः सख्यानि जानते भद्रैषां लक्ष्मीर्निहिताधि वाचि ॥ २ ॥ यज्ञेन वाचः पदवीयमायन्तामन्वविंदन्नृषिषु प्रविष्टां। तामाभृत्या व्यदधुः पुरुत्रा तां सप्त रेभा अभि सं नवंते ॥ ३ ॥ उत त्वः पश्यन्न ददर्श वाचमुत त्वः शृण्वन्न शृणोत्येनां। उतो त्वस्मै तन्वं१ वि सस्रे जायेव पत्य उशती सुवासाः ॥ ४ ॥ उत त्वं सख्ये स्थिरपीतमाहुर्नैनं हिन्वंत्यपि वाजिनेषु। अधेन्वा चरति माययैष वाचं शुश्रुवाँ अफलामपुष्पां ॥ ५ ॥ २३ ॥ यस्तित्याज सचिविदं सखायं न तस्य वाच्यपि भागो अस्ति। यदीं शृणोत्यलकं शृणोति नहि प्रवेद सुकृतस्य पंथां ॥ ६ ॥ अक्षण्वंतः कर्णवंतः सखायो मनोजवेष्वसमा बभूवुः। आदघ्नास उपकक्षास उ त्वे ह्रदा इव स्नात्वा उ त्वे ददृश्रे ॥ ७ ॥ ह्रदा तष्टेषु मनसो जवेषु यद्ब्राह्मणाः संयजंते सखायः। अत्राह त्वं वि जहुर्वे-



Digitized by Google

देवं त्वष्टः यत् ह चारुऽत्वं आनट् यत् अंगिरसां अभवः सचाऽभूः सः देवानां पाथः उप प्र विद्वान् उशन् यक्षि द्रविणःऽदः सुऽरत्नः ॥९॥ वनस्पते रशनया निऽयूय देवानां पाथः उप वक्षि विद्वान् स्वदाति देवः कृणवत् हवींषि अवतां द्यावापृथिवी हवं मे ॥१०॥ आ अग्ने वह वरुणं इष्टये नः इंद्रं दिवः मरुतः अंतरिक्षात् सीदंतु बर्हिः विश्वे आ यजत्राः स्वाहा देवाः अमृताः मादयंतां ॥११॥२२॥

---

॥७१॥ बृहस्पते प्रथमं वाचः अग्रं यत् प्र ऐरत नामऽधेयं दधानाः यत् एषां श्रेष्ठं यत् अरिप्रं आसीत् प्रेणा तत् एषां निऽहितं गुहा आविः ॥१॥ सक्तुंऽइव तितउना पुनंतः यत्र धीराः मनसा वाचं अक्रत अत्र सखायः सख्यानि जानते भद्रा एषां लक्ष्मीः निऽहिता अधि वाचि ॥२॥ यज्ञेन वाचः पदऽवीयं आयन् तां अनु अविंदन् ऋषिषु प्रऽविष्टां तां आऽभृत्य वि अदधुः पुरुऽत्रा तां सप्त रेभाः अभि सं नवंते ॥३॥ उत त्वः पश्यन् न ददर्श वाचं उत त्वः शृण्वन् न शृणोति एनां उतो इति त्वस्मै तन्वं वि सस्रे जायाऽइव पत्ये उशती सुऽवासाः ॥४॥ उत त्वं सख्ये स्थिरऽपीतं आहुः न एनं हिन्वंति अपि वाजिनेषु अधेन्वा चरति मायया एषः वाचं शुश्रुऽवान् अफलां अपुष्पां ॥५॥२३॥ यः तित्याज सचिऽविदं सखायं न तस्य वाचि अपि भागः अस्ति यत् ईं शृणोति अलकं शृणोति नहि प्रऽवेद सुऽकृतस्य पंथां ॥६॥ अक्षण्ऽवंतः कर्णऽवंतः सखायः मनःऽजवेषु असमाः बभूवुः आदघ्नासः उपऽकक्षासः ऊं इति त्वे ह्रदाःऽइव स्नात्वाः ऊं इति त्वे ददृश्रे ॥७॥ हृदा तष्टेषु मनसः जवेषु यत् ब्राह्मणाः संऽयजंते सखायः अत्र अह त्वं वि जहुः वे-

द्याभिरोहंब्रह्माणो वि चरंत्यु त्वे ॥८॥ इमे ये नार्वाङ्न परश्चरंति न ब्राह्मणासो न सुतेकरासः। त एते वाचमभिपद्य पापया सि- रीस्तंत्रं तन्वते अप्रजज्ञयः ॥९॥ सर्वे नंदंति यशसागतेन सभा- साहेन सख्या सखायः। किल्बिषस्पृत्पितुषणिर्ह्येषामरं हितो भवति वाजिनाय ॥१०॥ ऋचां त्वः पोषमास्ते पुपुष्वान्गायत्रं त्वो गायति शक्करीषु। ब्रह्मा त्वो वदति जातविद्यां यज्ञस्य मात्रां वि मिमीत उ त्वः ॥११॥२४॥२॥

---

॥ ७२ ॥ १-९ बृहस्पतिर्बृहस्पतिर्वा लौक्य अदितिर्वा दाक्षायणी ॥ देवाः ॥ अनुष्टुप् ॥

॥७२॥ देवानां नु वयं जाना प्र वोचाम विपन्यया। उक्थेषु शस्यमानेषु यः पश्यादुत्तरे युगे ॥१॥ ब्रह्मणस्पतिरेता सं कर्मार इवाधमत्। देवानां पूर्व्ये युगेऽसतः सदजायत ॥२॥ देवानां युगे प्रथमेऽसतः सदजायत। तदाशा अन्वजायंत तदुत्तानपदस्परि ॥३॥ भूर्जज्ञ उत्तानपदो भुव आशा अजायंत। अदितेर्दक्षो अजा- यत दक्षाद्वदितिः परि ॥४॥ अदितिर्ह्यजनिष्ट दक्ष या दुहिता तव। तां देवा अन्वजायंत भद्रा अमृतबंधवः ॥५॥१॥ यद्देवा अदः सलिले सुसंरब्धा अतिष्ठत। अत्रा वो नृत्यतामिव तीव्रो रेणु- रपायत ॥६॥ यद्देवा यतयो यथा भुवनान्यपिन्वत। अत्रा समुद्र आ गूळ्हमा सूर्यमजभर्तन ॥७॥ अष्टौ पुत्रासो अदितेर्ये जाता- स्तन्व१स्परि। देवाँ उप प्रैत्सप्तभिः परा मार्तांडमास्यत् ॥८॥ स- प्तभिः पुत्रैरदितिरुप प्रैत्पूर्व्यं युगं। प्रजायै मृत्यवे त्वत्पुनर्मार्ता- डमाभरत् ॥९॥२॥

---

॥ ७३ ॥ १-११ गौरिवीतिः ॥ इंद्रः ॥ त्रिष्टुप् ॥

॥७३॥ जनिष्ठा उग्रः सहसे तुराय मंद्र ओजिष्ठो बहुला-



Digitized by Google

द्याभिः ओहैऽब्रह्माणः वि चरंति ऊं त्वे ॥८॥ इमे ये न अर्वाक् न परः चरंति न ब्राह्मणासः न सुतेऽकरासः ते एते वाचं अभिऽपद्य पापया सिरीः तंत्रं तन्वते अप्रऽजज्ञयः ॥९॥ सर्वे नंदंति यशसा आऽगतेन सभाऽसहेन सख्या सखायः किल्बिषऽस्पृत् पितुऽसनिः हि एषां अरं हितः भवति वाजिनाय ॥१०॥ ऋचां त्वः पोषं आस्ते पुपुष्वान् गायत्रं त्वः गायति शक्वरीषु ब्रह्मा त्वः वदति जातऽविद्यां यज्ञस्य मात्रां वि मिमीते ऊं त्वः ॥११॥२४॥२॥

---

॥७२॥ देवानां नु वयं जाना प्र वोचाम विपन्यया उक्थेषु शस्यमानेषु यः पश्यात् उत्ऽतरे युगे ॥१॥ ब्रह्मणः पतिः एता सं कर्मारःऽइव अधमत् देवानां पूर्व्ये युगे असतः सत् अजायत ॥२॥ देवानां युगे प्रथमे असतः सत् अजायत तत् आशाः अनु अजायंत तत् उत्तानऽपदः परि ॥३॥ भूः जज्ञे उत्तानऽपदः भुवः आशाः अजायंत अदितेः दक्षः अजायत दक्षात् ऊं अदितिः परि ॥४॥ अदितिः हि अजनिष्ट दक्ष या दुहिता तव तां देवाः अनु अजायंत भद्राः अमृतऽबंधवः ॥५॥१॥ यत् देवाः अदः सलिले सुऽसंरब्धाः अतिष्ठत अत्र वः नृत्यतांऽइव तीव्रः रेणुः अप आयत ॥६॥ यत् देवाः यतयः यथा भुवनानि अपिन्वत अत्र समुद्रे आ गूळ्हं आ सूर्यं अजभर्तन ॥७॥ अष्टौ पुत्रासः अदितेः ये जाताः तन्वः परि देवान् उप प्र ऐत् सप्तऽभिः परा मार्तांडं आस्यत् ॥८॥ सप्तऽभिः पुत्रैः अदितिः उप प्र ऐत् पूर्व्यं युगं प्रऽजायै मृत्यवे त्वत् पुनः मार्तांडं आ अभरत् ॥९॥२॥

---

॥७३॥ जनिष्ठाः उग्रः सहसे तुराय मंद्रः ओजिष्ठः बहुलऽअभि-



Digitized by Google

भिमानः। अवर्धन्निंद्रं मरुतश्चिदत्र माता यद्वीरं दधनद्धनिष्ठा
॥१॥ द्रुहो निषत्ता पृशनी चिदेवैः पुरू शंसेन वावृधुष्ट इंद्रं। अ-
भीवृतेव ता महापदेन ध्वांतात्प्रपित्वादुदरंत गर्भाः ॥२॥ ऋष्वा
ते पादा प्र यज्जिगास्यवर्धन्वाजा उत ये चिदत्र। त्वमिंद्र साला-
वृकान्सहस्रमासन्दधिषे अश्विना ववृत्याः॥३॥ समना तूर्णिरुप
यासि यज्ञमा नासत्या सख्याय वक्षि। वसाव्यामिंद्र धारयः स-
हस्राश्विना शूर ददतुर्मघानि ॥४॥ मंदमान ऋतादधि प्रजायै
सखिभिरिंद्र इषिरेभिरर्थं। आभिर्हि माया उप दस्युमागान्मिहः
प्र तम्रा अवपत्तमांसि ॥५॥३॥ सनामाना चिद्ध्वसयो न्यस्मा
अवाहन्निंद्र उषसो यथानः। ऋष्वैरगच्छः सखिभिर्निकामैः
साकं प्रतिष्ठा हृद्या जघंथ ॥६॥ त्वं जघंथ नमुचिं मखस्युं दासं
कृण्वान ऋषये विमायं। त्वं चकर्थ मनवे स्योनान्पथो देवत्रां-
जसेव यानान् ॥७॥ त्वमेतानि पप्रिषे वि नामेशान इंद्र दधिषे
गभस्तौ। अनु त्वा देवाः शवसा मदंत्युपरिबुध्नान्वनिनश्चकर्थ
॥८॥ चक्रं यदस्याप्स्वा निषत्तमुतो तदस्मै मध्विच्चच्छद्यात्।
पृथिव्यामतिषितं यदूधः पयो गोष्वदधा ओषधीषु ॥९॥
अश्वादियायेति यद्वदंत्योजसो जातमुत मन्य एनं। मन्यो-
रियाय हर्म्येषु तस्थौ यतः प्रजज्ञ इंद्रो अस्य वेद ॥१०॥
वयः सुपर्णा उप सेदुरिंद्रं प्रियमेधा ऋषयो नाधमानाः।
अप ध्वांतमूर्णुहि पूर्धि चक्षुर्मुमुग्ध्यस्मान्निधयेव बद्धान्
॥११॥४॥

---

॥७४॥ १–६ गौरिवीतिः ॥ इंद्रः ॥ त्रिष्टुप् ॥

॥७४॥ वसूनां वा चर्कृष इयक्षन्धिया वा यज्ञैर्वा रोदस्योः।



Digitized by Google

भिमानः अवर्धन् इंद्रं मरुतः चित् अत्र माता यत् वीरं दधनत् धनिष्ठा॥१॥ द्रुहः निऽसत्ता पृश्नी चित् एवैः पुरु शंसेन ववृधुः ते इंद्रं अभिवृताऽइव ता महाऽपदेन ध्वांतात् प्रऽपित्वात् उत् अरंत गर्भाः॥२॥ ऋष्वा ते पादा प्र यत् जिगासि अवर्धन् वाजाः उत ये चित् अत्र त्वं इंद्र सालावृकान् सहस्रं आसन् दधिषे अश्विना आ ववृत्याः॥३॥ समना तूर्णिः उप यासि यज्ञं आ नासत्या सख्याय वक्षि वसाव्यां इंद्र धारयः सहस्रा अश्विना शूर ददतुः मघानि॥४॥ मंदमानः ऋतात् अधि प्रऽजायै सखिऽभिः इंद्रः इषिरेभिः अर्थं आ आभिः हि मायाः उप दस्युं आ अगात् मिहः प्र तम्राः अवपत् तमांसि॥५॥३॥ सऽनामाना चित् ध्वसयः नि अस्मै अव अहन् इंद्रः उषसः यथा अनः ऋष्वैः अगच्छः सखिऽभिः निऽकामैः साकं प्रतिऽस्था हृद्या जघंथ॥६॥ त्वं जघंथ नमुचिं मखस्युं दासं कृण्वानः ऋषये विऽमायं त्वं चकर्थ मनवे स्योनान् पथः देवऽत्रा अंजसाऽइव यानान्॥७॥ त्वं एतानि पप्रिषे वि नाम ईशानः इंद्र दधिषे गभस्तौ अनु त्वा देवाः शवसा मदंति उपरिऽबुध्नान् वनिनः चकर्थ॥८॥ चक्रं यत् अस्य अप्ऽसु आ निऽसत्तं उतो॰ तत् अस्मै मधु इत् चच्छद्यात् पृथिव्यां अतिऽसितं यत् ऊधः पयः गोषु अदधाः ओषधीषु॥९॥ अश्वात् इयाय इति यत् वदंति ओजसः जातं उत मन्ये एनं मन्योः इयाय हर्म्येषु तस्थौ यतः प्रऽजज्ञे इंद्रः अस्य वेद॥१०॥ वयः सुऽपर्णाः उप सेदुः इंद्रं प्रियऽमेधाः ऋषयः नाधमानाः अप ध्वांतं ऊर्णुहि पूर्धि चक्षुः मुमुग्धि अस्मान् निधयाऽइव बद्धान्॥११॥४॥

---

॥७४॥ वसूनां वा चर्कृषे इयक्षन् धिया वा यज्ञैः वा रोदस्योः



Digitized by Google

अर्वंतो वा ये रयिमंतः सातौ वनुं वा ये सुश्रुणं सुश्रुतो धुः ॥१॥
इत्थं एषामसुरो नक्षत द्यां श्रवस्यता मनसा निंसत क्षां। चक्षा-
णा यत्र सुवितार्य देवा द्यौर्न वारेभिः कृणवंत स्वैः ॥२॥ इयमे-
षाममृतानां गीः सर्वताता ये कृपणंत रत्नं। धियं च यज्ञं च सा-
धंतस्ते नो धांतु वसव्य१मसामि॥३॥ आ तत्त इंद्रायवः पनंताभि
य ऊर्वं गोमंतं तितृत्सान्। सकृत्स्वं१ ये पुरुपुत्रां महीं सहस्रधारां
बृहतीं दुदुक्षन् ॥४॥ शचीव इंद्रमवसे कृणुध्वमनानतं दमयंतं
पृतन्यून्। ऋभुक्षणं मघवानं सुवृक्तिं भर्ता यो वज्रं नर्यं पुरुक्षुः
॥५॥ यद्वावान पुरुतमं पुराषाळा वृत्रहेंद्रो नामान्यप्राः। अचेति
प्रासहस्पतिस्तुविष्मान्यदीमुश्मसि कर्तवे करत्तत् ॥६॥५॥

॥ ७५ ॥ १–९ सिंधुक्षित्प्रैयमेधः ॥ नद्यः ॥ जगती ॥

॥ ७५ ॥ प्र सु व आपो महिमानमुत्तमं कारुर्वोचाति स-
दने विवस्वतः। प्र सप्तसप्त त्रेधा हि चक्रमुः प्र सृत्वरीणामति
सिंधुरोजसा ॥१॥ प्र तेऽरदद्वरुणो यातवे पथः सिंधो यद्वाजाँ
अभ्यद्रवस्त्वं। भूम्या अधि प्रवता यासि सानुना यदेषामग्रं
जगतामिरज्यसि ॥२॥ दिवि स्वनो यतते भूम्योपर्यनंतं शु-
ष्ममुदियर्ति भानुना। अभ्रादिव प्र स्तनयंति वृष्टयः सिं-
धुर्यदेति वृषभो न रोरुवत् ॥३॥ अभि त्वा सिंधो शिशुमिन्न
मातरो वाश्रा अर्षंति पयसेव धेनवः। राजेव युध्वा नयसि
त्वमित्सिचौ यदासामग्रं प्रवतामिनक्षसि ॥४॥ इमं मे गंगे
यमुने सरस्वति शुतुद्रि स्तोमं सचता परुष्ण्या। असिक्न्या
मरुद्वृधे वितस्तयार्जीकीये शृणुह्या सुषोमया ॥५॥६॥
तृष्टामया प्रथमं यातवे सजूः सुसर्त्वा रसया श्वेत्या त्या। त्वं



Digitized by Google

अर्वंतः वा ये रयिऽमंतः सातौ वनुं वा ये सुऽश्रुणं सुऽश्रुतः धुः॰
॥१॥ हवः एषां असुरः नक्षत द्यां श्रवस्यता मनसा निंसत क्षां
चक्षाणाः यत्र सुविताय देवाः द्यौः न वारेभिः कृणवंत स्वैः ॥२॥
इयं एषां अमृतानां गीः सर्वऽताता ये कृपणंत रत्नं धियं च यज्ञं
च साधंतः ते नः धांतु वसव्यं असामि ॥३॥ आ तत् ते इंद्र आयवः
पनंत अभि ये ऊर्वं गोऽमंतं तितृत्सान् सकृत्ऽस्वं ये पुरुऽपुत्रां
महीं सहस्रऽधारां बृहतीं दुधुक्षन् ॥४॥ शचीऽवः इंद्रं अवसे कृ-
णुध्वं अनानतं दमयंतं पृतन्यून् ऋभुक्षणं मघऽवानं सुऽवृक्तिं
भर्ता यः वज्रं नर्यं पुरुऽक्षुः ॥५॥ यत् ववान पुरुऽतमं पुराषाट्
आ वृत्रऽहा इंद्रः नामानि अप्राः अचेति प्रऽसहः पतिः तुवि-
ष्मान् यत् ईं उश्मसि कर्तवे करत् तत् ॥६॥५॥

---

॥७५॥ प्र सु वः आपः महिमानं उत्ऽतमं कारुः वोचाति स-
दने विवस्वतः प्र सप्तऽसप्त त्रेधा हि चक्रमुः प्र सृत्वरीणां अति
सिंधुः ओजसा ॥१॥ प्र ते अरदत् वरुणः यातवे पथः सिंधो यत्
वाजान् अभि अद्रवः त्वं भूम्याः अधि प्रऽवता यासि सानुना यत्
एषां अग्रं जगतां इरज्यसि ॥२॥ दिवि स्वनः यतते भूम्या उपरि
अनंतं शुष्मं उत् इयर्ति भानुना अभ्रात्ऽइव प्र स्तनयंति वृष्टयः
सिंधुः यत् एति वृषभः न रोरुवत् ॥३॥ अभि त्वा सिंधो शिशुं इत्
न मातरः वाश्राः अर्षंति पयसाऽइव धेनवः राजाऽइव युध्वा न-
यसि त्वं इत् सिचौ यत् आसां अग्रं प्रऽवतां इनक्षसि ॥४॥ इमं मे
गंगे यमुने सरस्वति शुतुद्रि स्तोमं सचत परुष्णि आ असिक्न्या
मरुत्ऽवृधे वितस्तया आर्जीकीये शृणुहि आ सुऽसोमया ॥५॥६॥
तृष्टऽअमया प्रथमं यातवे सऽजूः सुऽसर्त्वा रसया श्वेत्या त्या त्वं



Digitized by Google

सिंधो कुभया गोमतीं क्रुमुं मेहुत्न्वा सरथं याभिरीयसे ॥ ६ ॥ ऋजीत्येनी रुशंती महित्वा परि जयांसि भरते रजांसि । अदब्धा सिंधुरपसामपस्तमाश्वा न चित्रा वपुषीव दर्शता ॥ ७ ॥ स्वश्वा सिंधुः सुरथा सुवासा हिरण्ययी सुकृता वाजिनीवती । ऊर्णावती युवतिः सीलमावत्युताधि वस्ते सुभगा मधुवृधं ॥ ८ ॥ सुखं रथं युयुजे सिंधुरश्विनं तेन वाजं सनिषदस्मिन्नाजौ । महान्ह्यस्य महिमा पनस्यतेऽदब्धस्य स्वयशसो विरप्शिनः ॥ ९ ॥ ७ ॥

---

॥ ७६ ॥ १–८ जरत्कर्ण ऐरावतः सर्पः ॥ ग्रावाणः ॥ जगती ॥

॥ ७६ ॥ आ व ऋंजस ऊर्जां व्युष्टिष्विंद्रं मरुतो रोदसी अनक्तन । उभे यथा नो अहनी सचाभुवा सदःसदो वरिवस्यात उद्भिदा ॥ १ ॥ तदु श्रेष्ठं सवनं सुनोतनात्यो न हस्तयतो अद्रिः सोतरि । विदद्ध्य१र्यो अभिभूति पौंस्यं महो राये चित्तरुते यदर्वतः ॥ २ ॥ तदिद्ध्यस्य सवनं विवेरपो यथा पुरा मनवे गातुमश्रेत् । गोअर्णसि त्वाष्ट्रे अश्वनिर्णिजि प्रेमध्वरेष्वध्वरां अशिश्रयुः ॥ ३ ॥ अप हत रक्षसो भंगुरावतः स्कभायत निर्ऋतिं सेधतामतिं । आ नो रयिं सर्ववीरं सुनोतन देवाव्यं भरत श्लोकमद्रयः ॥ ४ ॥ दिवश्चिदा वोऽमवत्तरेभ्यो विभ्वना चिदाश्वपस्तरेभ्यः । वायोश्चिदा सोमरभस्तरेभ्योऽग्नेश्चिदर्च पितुकृत्तरेभ्यः ॥ ५ ॥ ८ ॥ भुरंतु नो यशसः सोत्वंधसो ग्रावाणो वाचा दिविता दिवित्मता । नरो यत्र दुहते काम्यं मध्वाघोषयंतो अभितो मिथस्तुरः ॥ ६ ॥ सुन्वंति सोमं रथिरासो अद्रयो निरस्य रसं गविषो दुहंति ते । दुहंत्यूधरुपसेचनाय कं नरो हव्या न



Digitized by Google

सिंधो॒ इति॑ कु॒भया॑ गो॒ऽमतीं॑ क्रुमुं मे॒ह॒त्न्वा स॒ऽरथं॑ याभिः॑ ईर्यसे ॥ ६ ॥ ऋजीती एनी॑ रुशती महि॒ऽत्वा परि॑ ज्रयांसि भर॒ते॒ रजांसि अदब्धा सिंधुः अपसां अपःऽतमा अश्वा न चित्रा वपुषीऽइव दर्शता ॥ ७ ॥ सु॒ऽअश्वा सिंधुः सु॒ऽरथा सु॒ऽवासाः हि॒र॒ण्ययी सु॒ऽकृता वा॒जिनी॑ऽवती ऊर्णा॑ऽवती यु॒व॒तिः सी॒लमा॑ऽवती उ॒त अधि॑ वस्ते सु॒ऽभगा॑ म॒धु॒ऽवृधं॑ ॥ ८ ॥ सु॒ऽखं रथं॑ यु॒यु॒जे सिंधुः अ॒श्विनं॑ तेन॑ वाजं॑ स॒नि॒ष॒त् अ॒स्मिन् आ॒जौ म॒हान् हि अ॒स्य म॒हि॒मा प॒न॒स्यते॑ अद॑ब्धस्य स्वऽय॑शसः वि॒ऽर॒प्शिनः॑ ॥ ९ ॥ ७ ॥

---

॥ ७६ ॥ आ वः॒ ऋ॒ञ्ज॒से॒ ऊर्जां॑ वि॒ऽउ॑ष्टिषु इंद्रं॑ म॒रुतः॑ रोद॑सी॒ इति॑ अ॒न॒क्त॒न॒ उ॒भे इति॑ यथा॑ नः॒ अह॑नी॒ इति॑ स॒चा॒ऽभुवा॑ सदः॑ऽसदः व॒रि॒व॒स्यातः॑ उ॒त्ऽभिदा॑ ॥ १ ॥ तत् ऊं॒ इति॑ श्रेष्ठं॑ सवनं॑ सु॒नो॒त॒न॒ अत्यः॑ न ह॒स्तऽयतः॑ अद्रिः॑ सो॒तरि॑ वि॒दत् हि अर्यः॑ अ॒भि॒ऽभूति पौंस्यं॑ म॒हः रा॒ये चि॒त् त॒रु॒ते यत् अर्वतः॑ ॥ २ ॥ तत् इ॒त् हि अ॒स्य स॒वनं॑ वि॒वेः अ॒पः यथा॑ पु॒रा मन॑वे गा॒तुं अश्रे॑त् गोऽअर्णसि त्वा॒ष्ट्रे अश्व॑ऽनि॒र्णिजि प्र ई॒ इति॑ अ॒ध्व॒रे॒षु अ॒ध्व॒रान् अ॒शि॒श्र॒युः ॥ ३ ॥ अप॑ ह॒त॒ र॒क्षसः॑ भं॒गु॒र॒ऽवतः॑ स्क॒भा॒य॒त निः॒ऽऋतिं॑ सेध॑त अम॑तिं आ नः॒ र॒यिं स॒र्व॑ऽवीरं सु॒नो॒त॒न दे॒व॒ऽअव्यं॑ भ॒र॒त॒ श्लोकं॑ अ॒द्र॒यः॒ ॥ ४ ॥ दि॒वः चि॒त् आ व॒ः अम॑वत्ऽतरेभ्यः वि॒ऽभ्वना॑ चि॒त् आ॒श्वप॑ःऽतरेभ्यः वा॒योः चि॒त् आ सोम॑रभःऽतरेभ्यः अ॒ग्नेः चि॒त् अ॒र्च॒ पि॒तु॒कृत्ऽत॑रेभ्यः ॥ ५ ॥ ८ ॥ भुरं॑तु नः॒ य॒शसः॑ सोतु॑ अंध॑सः ग्रावा॑णः वा॒चा दि॒विता॑ दि॒वित्म॑ता नरः॑ यत् दु॒ह॒ते काम्यं॑ मधु॑ आ॒ऽघो॒ष॒यंतः॑ अ॒भितः॑ मि॒थः॒ऽतुरः॑ ॥ ६ ॥ सु॒न्वंति॑ सोमं॑ र॒थि॒रासः॑ अद्र॑यः निः अ॒स्य रसं॑ गो॒ऽइषः॑ दु॒हं॒ति॒ ते दु॒हंति॑ ऊधः॑ उ॒प॒ऽसेच॑नाय कं नरः॑ ह॒व्या न



Digitized by Google

मंर्जयंत आसभिः ॥७॥ एते नरः स्वपसो अभूतन य इंद्राय सुनुथ सोमंमद्रयः। वामंवामं वो दिव्याय धाम्ने वसुंवसु वः पार्थिवाय सुन्वते ॥८॥९॥

॥ ७७ ॥ १–८ स्यूमरश्मिर्भार्गवः ॥ मरुतः ॥ १–४. ६–८ त्रिष्टुप् । ५ जगती ॥

॥७७॥ अभ्रप्रुषो न वाचा प्रुषा वसु हविष्मंतो न यज्ञा विजानुषः। सुमारुतं न ब्रह्माणमर्हसे गणमस्तोष्येषां न शोभसे ॥१॥ श्रिये मर्यासो अंजीरंकृण्वत सुमारुतं न पूर्वीरति क्षपः। दिवस्पुत्रास एता न येतिर आदित्यासस्ते अक्रा न वावृधुः ॥२॥ प्र ये दिवः पृथिव्या न बर्हणा त्मना रिरिच्रे अभ्रान्न सूर्यः। पाजस्वंतो न वीराः पनस्यवो रिशादसो न मर्या अभिद्यवः ॥३॥ युष्माकं बुध्ने अपां न यामनि विथुर्यति न मही श्रथर्यति। विश्वप्सुर्यज्ञो अर्वागयं सु वः प्रयस्वंतो न सत्राच आ गत ॥४॥ यूयं धूर्षु प्रयुजो न रश्मिभिर्ज्योतिष्मंतो न भासा व्युष्टिषु। श्येनासो न स्वयशसो रिशादसः प्रवासो न प्रसितासः परिप्रुषः ॥५॥१०॥ प्र यद्वहध्वे मरुतः पराकाद्यूयं महः संवरणस्य वस्वः। विदानासो वसवो राध्यस्याराच्चिद्द्वेषः सनुतर्युयोत ॥६॥ य उदृचि यज्ञे अध्वरेष्ठा मरुद्भ्यो न मानुषो ददाशत्। रेवत्स वयो दधते सुवीरं स देवानामपि गोपीथे अस्तु ॥७॥ ते हि यज्ञेषु यज्ञियास ऊमा आदित्येन नाम्ना शंभविष्ठाः। ते नोऽवंतु रथतूर्मनीषां महश्च यामन्नध्वरे चकानाः ॥८॥११॥

॥ ७८ ॥ १–८ स्यूमरश्मिर्भार्गवः ॥ मरुतः ॥ १. ३. ४. ८ त्रिष्टुप् । २. ५–७ जगती ॥

॥७८॥ विप्रासो न मन्मभिः स्वाध्यो देवाव्योऽ३ न यज्ञैः स्वप्नसः। राजानो न चित्राः सुसंदृशः क्षितीनां न मर्या अ-



Digitized by Google

मर्जयंते आसऽभिः ॥७॥ एते नरः सुऽअपसः अभूतन ये इंद्राय सु-
नुथ सोमं अद्रयः वामंऽवामं वः दिव्याय धाम्ने वसुऽवसु वः पा-
र्थिवाय सुन्वते ॥८॥९॥

---

॥७७॥ अभ्रऽप्रुषः न वाचा प्रुष वसु हविष्मंतः न यज्ञाः वि-
ऽजानुषः सुऽमारुतं न ब्रह्माणं अर्हसे गणं अस्तोषि एषां न शो-
भसे ॥१॥ श्रिये मर्यासः अंजीन् अकृण्वत सुऽमारुतं न पूर्वीः अ-
ति क्षपः दिवः पुत्रासः एताः न येतिरे आदित्यासः ते अक्राः न
ववृधुः ॥२॥ प्र ये दिवः पृथिव्याः न बर्हणा त्मना रिरिचे अभ्रात्
न सूर्यः पाजस्वंतः न वीराः पनस्यवः रिशादसः न मर्याः अ-
भिऽद्यवः ॥३॥ युष्माकं बुध्ने अपां न यामनि विथुर्यति न मही
श्रथर्यति विश्वऽप्सुः यज्ञः अर्वाक् अयं सु वः प्रयस्वंतः न सत्राचः
आ गत ॥४॥ यूयं धूःऽसु प्रऽयुजः न रश्मिऽभिः ज्योतिष्मंतः न
भासा विऽउष्टिषु श्येनासः न स्वऽयशसः रिशादसः प्रवासः न
प्रऽसितासः परिऽप्रुषः ॥५॥१०॥ प्र यत् वहध्वे मरुतः पराकात्
यूयं महः संऽवरणस्य वस्वः विदानासः वसवः राध्यस्य आरात्
चित् द्वेषः सनुतः युयोत ॥६॥ यः उत्ऽऋचि यज्ञे अध्वरेऽस्थाः
मरुत्ऽभ्यः न मानुषः ददाशत् रेवत् सः वयः दधते सुऽवीरं सः
देवानां अपि गोऽपीथे अस्तु ॥७॥ ते हि यज्ञेषु यज्ञियासः ऊमाः
आदित्येन नाम्ना शंऽभविष्ठाः ते नः अवंतु रथऽतूः मनीषां महः
च यामन् अध्वरे चकानाः ॥८॥११॥

---

॥७८॥ विप्रासः न मन्मऽभिः सुऽआध्यः देवऽअव्यः न यज्ञैः
सुऽअप्नसः राजानः न चित्राः सुऽसंदृशः क्षितीनां न मर्याः अ-



Digitized by Google

रेपसः ॥१॥ अग्निर्न ये भ्राजसा रुक्मवक्षसो वातासो न स्वयुजः सद्यऊतयः । प्रज्ञातारो न ज्येष्ठाः सुनीतयः सुशर्माणो न सोमा ऋतं यते ॥२॥ वातासो न ये धुनयो जिगत्नवोऽग्नीनां न जिह्वा विरोकिणः । वर्मण्वंतो न योधाः शिमीवंतः पितॄणां न शंसाः सुरातयः ॥३॥ रथानां न येऽराः सनाभयो जिगीवांसो न शूरा अभिद्यवः । वरेयवो न मर्या घृतप्रुषोऽभिस्वर्तारो अर्कं न सुष्टुभः ॥४॥ अश्वासो न ये ज्येष्ठास आशवो दिधिषवो न रथ्यः सुदानवः । आपो न निम्नैरुदभिर्जिगत्नवो विश्वरूपा अंगिरसो न सामभिः ॥५॥१२॥ ग्रावाणो न सूरयः सिंधुमातर आदर्दिरासो अद्रयो न विश्वहा । शिशूला न क्रीळयः सुमातरो महाग्रामो न यामन्नुत त्विषा ॥६॥ उषसां न केतवोऽध्वरश्रियः शुभंयवो नांजिभिर्व्यश्वितन् । सिंधवो न ययियो भ्राजदृष्टयः परावतो न योजनानि ममिरे ॥७॥ सुभागान्नो देवाः कृणुता सुरत्नानस्मान्त्स्तोतॄन्मरुतो वावृधानाः । अधि स्तोत्रस्य सख्यस्य गात सनाद्धि वो रत्नधेयानि संति ॥८॥१३॥

---

॥७९॥ १–७ अग्निः सौचीको वैश्वानरो वा सप्तिर्वा वाजंभरः ॥ अग्निः ॥ त्रिष्टुप् ॥

॥७९॥ अपश्यमस्य महतो महित्वममर्त्यस्य मर्त्यासु विक्षु । नाना हनू विभृते सं भरेते असिन्वती बप्सती भूर्यत्तः ॥१॥ गुहा शिरो निहितमृधगक्षी असिन्वन्नत्ति जिह्वया वनानि । अत्राण्यस्मै पड्भिः सं भरंत्युत्तानहस्ता नमसाधि विक्षु ॥२॥ प्र मातुः प्रतरं गुह्यमिच्छन्कुमारो न वीरुधः सर्पदुर्वीः । ससं न पक्वमविदच्छुचंतं रिरिह्वांसं रिप उपस्थे अंतः ॥३॥ तद्वामृतं रोदसी प्र ब्रवीमि जायमानो मातरा



Digitized by Google

रेपसः ॥१॥ अग्निः न ये भ्राजसा रुक्मऽवक्षसः वातासः न स्वऽयुजः सद्यःऽऊतयः प्रऽज्ञातारः न ज्येष्ठाः सुऽनीतयः सुऽशर्माणः न सोमाः ऋतं यते ॥२॥ वातासः न ये धुनयः जिगत्नवः अग्नीनां न जिह्वाः विऽरोकिणः वर्मण्ऽवंतः न योधाः शिमीऽवंतः पितॄणां न शंसाः सुऽरातयः ॥३॥ रथानां न ये अराः सऽनाभयः जिगीवांसः न शूराः अभिऽद्यवः वरेऽयवः न मर्याः घृतऽप्रुषः अभिऽस्वर्तारः अर्कं न सुऽस्तुभः ॥४॥ अश्वासः न ये ज्येष्ठासः आशवः दिधिषवः न रथ्यः सुऽदानवः आपः न निम्नैः उदऽभिः जिगत्नवः विश्वऽरूपाः अंगिरसः न सामऽभिः ॥५॥१२॥ ग्रावाणः न सूरयः सिंधुऽमातरः आऽदर्दिरासः अद्रयः न विश्वहा शिशूलाः न क्रीळयः सुऽमातरः महाऽग्रामः न यामन् उत त्विषा ॥६॥ उषसां न केतवः अध्वरऽश्रियः शुभंऽयवः न अंजिऽभिः वि अश्वितन् सिंधवः न ययियः भ्राजत्ऽऋष्टयः पराऽवतः न योजनानि ममिरे ॥७॥ सुऽभागान् नः देवाः कृणुत सुऽरत्नान् अस्मान् स्तोतॄन् मरुतः ववृधानाः अधि स्तोत्रस्य सख्यस्य गात सनात् हि वः रत्नऽधेयानि संति ॥८॥१३॥

---

॥७९॥ अपश्यं अस्य महतः महिऽत्वं अमर्त्यस्य मर्त्यासु विक्षु नाना हनू इति विऽभृते इति सं भरेते इति असिन्वती इति बप्संती इति भूरि अत्तः ॥१॥ गुहा शिरः निऽहितं ऋधक् अक्षी इति असिन्वन् अत्ति जिह्वया वनानि अत्राणि अस्मै पट्ऽभिः सं भरंति उत्तानऽहस्ताः नमसा अधि विक्षु ॥२॥ प्र मातुः प्रऽतरं गुह्यं इच्छन् कुमारः न वीरुधः सर्पत् उर्वीः ससं न पक्वं अविदत् शुचंतं रिरिह्वांसं रिपः उपऽस्थे अंतरिति ॥३॥ तत् वां ऋतं रोदसी इति प्र ब्रवीमि जायमानः मातरा



Digitized by Google

गर्भो अस्ति। नाहं देवस्य मर्त्यश्चिकेताग्निरंग विचेताः स प्रचे-
ताः ॥४॥ यो अस्मा अन्नं तृष्वा३दधात्याज्यैर्घृतैर्जुहोति पुष्यति।
तस्मै सहस्रमक्षभिर्वि चक्षेऽग्ने विश्वतः प्रत्यङ्ङसि त्वं ॥५॥ किं
देवेषु त्यज एनश्चकर्थाग्ने पृच्छामि नु त्वामविद्वान्। अक्रीळन्
क्रीळन्हरिरत्तवेऽदन्वि पर्वशश्चकर्त गामिवासिः ॥६॥ विषूचो
अश्वान्युयुजे वनेजा ऋजीतिभी रशनाभिर्गृभीतान्। चक्षदे
मित्रो वसुभिः सुजातः समानृधे पर्वभिर्वावृधानः ॥७॥१४॥

---

॥ ८० ॥ १–७ अग्निः सौचीको वैश्वानरो वा ॥ अग्निः ॥ त्रिष्टुप् ॥

॥ ८० ॥ अग्निः सप्तिं वाजंभरं ददात्यग्निर्वीरं श्रुत्यं कर्मनि-
ष्ठां। अग्नी रोदसी वि चरत्समंजन्नग्निर्नारीं वीरकुक्षिं पुरं-
धिं ॥१॥ अग्नेरप्नसः समिदस्तु भद्राग्निर्मही रोदसी आ
विवेश। अग्निरेकं चोदयत्समत्स्वग्निर्वृत्राणि दयते पुरू-
णि ॥२॥ अग्निर्ह त्यं जरतः कर्णमावाग्निरद्भ्यो निरदहज्जरूथं।
अग्निरत्रिं घर्म उरुष्यदंतरग्निर्नृमेधं प्रजयासृजत्सं ॥३॥ अ-
ग्निर्दाद्द्रविणं वीरपेशा अग्निरृषिं यः सहस्रा सनोति।
अग्निर्दिवि हव्यमा ततानाग्नेर्धामानि विभृता पुरुत्रा ॥४॥
अग्निमुक्थैरृषयो वि ह्वयंतेऽग्निं नरो यामनि बाधि-
तासः। अग्निं वयो अंतरिक्षे पतंतोऽग्निः सहस्रा परि
याति गोनां ॥५॥ अग्निं विश ईळते मानुषीर्या अग्निं
मनुषो नहुषो वि जाताः। अग्निर्गांधर्वीं पथ्यामृतस्याग्नेर्ग-
व्यूतिर्घृत आ निषत्ता ॥६॥ अग्नये ब्रह्म ऋभवस्ततक्षुरग्निं
महामवोचामा सुवृक्तिं। अग्ने प्राव जरितारं यविष्ठाग्ने
महि द्रविणमा यजस्व ॥७॥१५॥



Digitized by Google

गर्भः अस्ति न अहं देवस्य मर्त्यः चिकेत अग्निः अंग विऽचेताः सः प्रऽचेताः ॥४॥ यः अस्मै अन्नं तृषु आऽदधाति आज्यैः घृतैः जुहोति पुष्यति तस्मै सहस्रं अक्षऽभिः वि चक्षे अग्ने विश्वतः प्रत्यङ् असि त्वं ॥५॥ किं देवेषु त्यजः एनः चकर्थ अग्ने पृच्छामि नु त्वां अविद्वान् अक्रीळन् क्रीळन् हरिः अत्तवे अदन् वि पर्वऽशः चकर्त गांऽइव असिः ॥६॥ विषूचः अश्वान् युयुजे वनेऽजाः ऋजीतिऽभिः रशनाभिः गृभीतान् चक्षदे मित्रः वसुऽभिः सुऽजातः सं आनृधे पर्वऽभिः ववृधानः ॥७॥१४॥

---

॥८०॥ अग्निः सप्तिं वाजंऽभरं ददाति अग्निः वीरं श्रुत्यं कर्मनिःऽस्थां अग्निः रोदसी वि चरत् संऽअंजन् अग्निः नारीं वीरऽकुक्षिं पुरंऽधिं ॥१॥ अग्नेः अप्नसः संऽइत् अस्तु भद्रा अग्निः मही रोदसी आ विवेश अग्निः एकं चोदयत् समत्ऽसु अग्निः वृत्राणि दयते पुरूणि ॥२॥ अग्निः ह त्यं जरतः कर्णं आव अग्निः अत्ऽभ्यः निः अदहत् जरूथं अग्निः अत्रिं घर्मे उरुष्यत् अंतः अग्निः नृऽमेधं प्रऽजया असृजत् सं ॥३॥ अग्निः दात् द्रविणं वीरऽपेशाः अग्निः ऋषिं यः सहस्रा सनोति अग्निः दिवि हव्यं आ ततान अग्नेः धामानि विऽभृता पुरुऽत्रा ॥४॥ अग्निं उक्थैः ऋषयः वि ह्वयंते अग्निं नरः यामनि बाधितासः अग्निं वयः अंतरिक्षे पतंतः अग्निः सहस्रा परि याति गोनां ॥५॥ अग्निं विशः ईळते मानुषीः याः अग्निं मनुषः नहुषः वि जाताः अग्निः गांधर्वीं पथ्यां ऋतस्य अग्नेः गव्यूतिः घृते आ निऽसत्ता ॥६॥ अग्नये ब्रह्म ऋभवः ततक्षुः अग्निं महां अवोचाम सुऽवृक्तिं अग्ने प्र अव जरितारं यविष्ठ अग्ने महि द्रविणं आ यजस्व ॥७॥१५॥



Digitized by Google

॥ ८१ ॥ १–७ विश्वकर्मा भौवनः ॥ विश्वकर्मा ॥ त्रिष्टुप् ॥

॥८१॥ य इमा विश्वा भुवनानि जुह्वदृषिर्होता न्यसीदत्पिता नः। स आशिषा द्रविणमिच्छमानः प्रथमच्छदवराँ आ विवेश ॥१॥ किं स्विदासीदधिष्ठानमारंभणं कतमत्स्वित्कथासीत्। यतो भूमिं जनयन्विश्वकर्मा वि द्यामौर्णोन्महिना विश्वचक्षाः ॥२॥ विश्वतश्चक्षुरुत विश्वतोमुखो विश्वतोबाहुरुत विश्वतस्पात्। सं बाहुभ्यां धमति सं पतत्रैर्द्यावाभूमी जनयन्देव एकः ॥३॥ किं स्विद्वनं क उ स वृक्ष आस यतो द्यावापृथिवी निष्टतक्षुः। मनीषिणो मनसा पृच्छतेदु तद्यदध्यतिष्ठद्भुवनानि धारयन् ॥४॥ या ते धामानि परमाणि यावमा या मध्यमा विश्वकर्मन्नुतेमा। शिक्षा सखिभ्यो हविषि स्वधावः स्वयं यजस्व तन्वं वृधानः ॥५॥ विश्वकर्मन्हविषा वावृधानः स्वयं यजस्व पृथिवीमुत द्यां। मुह्यंत्वन्ये अभितो जनास इहास्माकं मघवा सूरिरस्तु ॥६॥ वाचस्पतिं विश्वकर्माणमूतये मनोजुवं वाजे अद्या हुवेम। स नो विश्वानि हवनानि जोषद्विश्वशंभूरवसे साधुकर्मा ॥७॥१६॥

---

॥ ८२ ॥ १–७ विश्वकर्मा भौवनः ॥ विश्वकर्मा ॥ त्रिष्टुप् ॥

॥८२॥ चक्षुषः पिता मनसा हि धीरो घृतमेने अजनन्नम्नमाने। यदेदंता अददृहंत पूर्व आदिद्द्यावापृथिवी अप्रथेतां ॥१॥ विश्वकर्मा विमना आद्विहाया धाता विधाता परमोत संदृक्। तेषामिष्टानि समिषा मदंति यत्रा सप्तऋषीन्पर एकमाहुः ॥२॥ यो नः पिता जनिता यो विधाता धामानि वेद भुवनानि विश्वा। यो देवानां नामधा एक एव तं संप्रश्नं भुवना यंत्यन्या ॥३॥ त आयजंत द्रविणं सम-



Digitized by Google

॥ ८१ ॥ यः इमा विश्वा भुवनानि जुह्वत् ऋषिः होता नि असीदत् पिता नः सः आऽशिषा द्रविणं इच्छमानः प्रथमऽछत् अवरान् आ विवेश ॥ १ ॥ किं स्वित् आसीत् अधिऽस्थानं आऽरंभणं कतमत् स्वित् कथा आसीत् यतः भूमिं जनयन् विश्वऽकर्मा वि द्यां और्णोत् महिना विश्वऽचक्षाः ॥ २ ॥ विश्वतःऽचक्षुः उत विश्वतःऽमुखः विश्वतःऽबाहुः उत विश्वतःऽपात् सं बाहुऽभ्यां धमति सं पतत्रैः द्यावाभूमी इति जनयन् देवः एकः ॥ ३ ॥ किं स्वित् वनं कः ऊं इति सः वृक्षः आस यतः द्यावापृथिवी इति निःऽततक्षुः मनीषिणः मनसा पृच्छत इत् ऊं इति तत् यत् अधिऽअतिष्ठत् भुवनानि धारयन् ॥ ४ ॥ या ते धामानि परमाणि या अवमा या मध्यमा विश्वऽकर्मन् उत इमा शिक्ष सखिऽभ्यः हविषि स्वधाऽवः स्वयं यजस्व तन्वं वृधानः ॥ ५ ॥ विश्वऽकर्मन् हविषा ववृधानः स्वयं यजस्व पृथिवीं उत द्यां मुह्यंतु अन्ये अभितः जनासः इह अस्माकं मघऽवा सूरिः अस्तु ॥ ६ ॥ वाचः पतिं विश्वऽकर्माणं ऊतये मनःऽजुवं वाजे अद्य हुवेम सः नः विश्वानि हवनानि जोषत् विश्वऽशंभूः अवसे साधुऽकर्मा ॥ ७ ॥ १६ ॥

---

॥ ८२ ॥ चक्षुषः पिता मनसा हि धीरः घृतं एने अजनत् नम्नमाने इति यदा इत् अंताः अदहहंत पूर्वे आत् इत् द्यावापृथिवी इति अप्रथेतां ॥ १ ॥ विश्वऽकर्मा विऽमनाः आत् विऽहायाः धाता विऽधाता परमा उत संऽदृक् तेषां इष्टानि सं इषा मदंति यत्र सप्तऽऋषीन् परः एकं आहुः ॥ २ ॥ यः नः पिता जनिता यः विऽधाता धामानि वेद भुवनानि विश्वा यः देवानां नामऽधाः एकः एव तं संऽप्रश्नं भुवना यंति अन्या ॥ ३ ॥ ते आ अयजंत द्रविणं सं



Digitized by Google

स्मा ऋषयः पूर्वे जरितारो न भूना। असूर्ते सूर्ते रजसि निषत्ते ये भूतानि समकृण्वन्निमानि ॥४॥ परो दिवा पर एना पृथिव्या परो देवेभिरसुरैर्यदस्ति। कं स्विद्गर्भं प्रथमं दध्र आपो यत्र देवाः समपश्यंत विश्वे ॥५॥ तमिद्गर्भं प्रथमं दध्र आपो यत्र देवाः समगच्छंत विश्वे। अजस्य नाभावध्येकमर्पितं यस्मिन्विश्वानि भुवनानि तस्थुः ॥६॥ न तं विदाथ य इमा जजानान्यद्युष्माकमंतरं बभूव। नीहारेण प्रावृता जल्प्या चासुतृप उक्थशासश्चरंति ॥७॥१७॥

---

॥ ८३ ॥ १–७ मन्युस्तापसः ॥ मन्युः ॥ १ जगती। २–७ त्रिष्टुप् ॥

॥८३॥ यस्ते मन्योऽविधद्वज्र सायक सह ओजः पुष्यति विश्वमानुषक्। साह्याम दासमार्यं त्वया युजा सहस्कृतेन सहसा सहस्वता ॥१॥ मन्युरिंद्रो मन्युरेवास देवो मन्युर्होता वरुणो जातवेदाः। मन्युं विश ईळते मानुषीर्याः पाहि नो मन्यो तपसा सजोषाः ॥२॥ अभीहि मन्यो तवसस्तवीयान्तपसा युजा वि जहि शत्रून्। अमित्रहा वृत्रहा दस्युहा च विश्वा वसून्या भरा त्वं नः ॥३॥ त्वं हि मन्यो अभिभूत्योजाः स्वयंभूर्भामो अभिमातिषाहः। विश्वचर्षणिः सहुरिः सहावानस्मास्वोजः पृतनासु धेहि ॥४॥ अभागः सन्नप परेतो अस्मि तव क्रत्वा तविषस्य प्रचेतः। तं त्वा मन्यो अक्रतुर्जिहीळाहं स्वा तनूर्बलदेयाय मेहि ॥५॥ अयं ते अस्म्युप मेह्यर्वाङ् प्रतीचीनः सहुरे विश्वधायः। मन्यो वज्रिन्नभि मामा ववृत्स्व हनाव दस्यूँरुत बोध्यापेः ॥६॥ अभि प्रेहि दक्षिणतो भवा मेऽधा वृत्राणि जंघनाव भूरि। जुहोमि ते धरुणं मध्वो अग्रमुभा उपांशु प्रथमा पिबाव ॥७॥१८॥



Digitized by Google

अस्मै ऋषयः पूर्वे जरितारः न भूना असूर्ते सूर्ते रजसि निऽसत्ते ये भूतानि संऽअकृण्वन् इमानि ॥४॥ परः दिवा परः एना पृथिव्या परः देवेभिः असुरैः यत् अस्ति कं स्वित् गर्भं प्रथमं दध्रे आपः यत्र देवाः संऽअपश्यंत विश्वे ॥५॥ तं इत् गर्भं प्रथमं दध्रे आपः यत्र देवाः संऽअगच्छंत विश्वे अजस्य नाभौ अधि एकं अर्पितं यस्मिन् विश्वानि भुवनानि तस्थुः ॥६॥ न तं विदाथ यः इमा जजान अन्यत् युष्माकं अंतरं बभूव नीहारेण प्रावृताः जल्प्या च असुऽतृपः उक्थऽशसः चरंति ॥७॥१७॥

---

॥८३॥ यः ते मन्यो अविधत् वज्र सायक सहः ओजः पुष्यति विश्वं आनुषक् सह्याम दासं आर्यं त्वया युजा सहःऽकृतेन सहसा सहस्वता ॥१॥ मन्युः इंद्रः मन्युः एव आस देवः मन्युः होता वरुणः जातऽवेदाः मन्युं विशः ईळते मानुषीः याः पाहि नः मन्यो तपसा सऽजोषाः ॥२॥ अभि इहि मन्यो तवसः तवीयान् तपसा युजा वि जहि शत्रून् अमित्रऽहा वृत्रऽहा दस्युऽहा च विश्वा वसूनि आ भर त्वं नः ॥३॥ त्वं हि मन्यो अभिभूतिऽओजाः स्वयंऽभूः भामः अभिमातिऽसहः विश्वऽचर्षणिः सहुरिः सहावान् अस्मासु ओजः पृतनासु धेहि ॥४॥ अभागः सन् अप परेतः अस्मि तव क्रत्वा तविषस्य प्रऽचेतः तं त्वा मन्यो अक्रतुः जिहीळ अहं स्वा तनूः बलऽदेयाय मा आ इहि ॥५॥ अयं ते अस्मि उप मा आ इहि अर्वाङ् प्रतीचीनः सहुरे विश्वऽधायः मन्यो वज्रिन् अभि मां आ ववृत्स्व हनाव दस्यून् उत बोधि आपेः ॥६॥ अभि प्र इहि दक्षिणतः भव मे अध वृत्राणि जंघनाव भूरि जुहोमि ते धरुणं मध्वः अग्रं उभौ उपऽअंशु प्रथमा पिबाव ॥७॥१८॥



Digitized by Google

॥ ८४ ॥ १—७ मन्युस्तापसः ॥ मन्युः ॥ १—३ त्रिष्टुप् । ४—७ जगती ॥

॥८४॥ त्वया मन्यो सरथमारुजंतो हर्षमाणासो धृषिता मरुत्वः। तिग्मेषव आयुधा संशिशाना अभि प्र यंतु नरो अग्निरूपाः॥१॥ अग्निरिव मन्यो त्विषितः सहस्व सेनानीर्नः सहुरे हूत एधि। हत्वाय शत्रून्वि भजस्व वेद ओजो मिमानो वि मृधो नुदस्व॥२॥ सहस्व मन्यो अभिमातिमस्मे रुजन्मृणन्प्रमृणन्प्रेहि शत्रून्। उग्रं ते पाजो नन्वा रुरुध्रे वशी वशं नयस एकज त्वं॥३॥ एको बहूनामसि मन्यवीळितो विशंविशं युधये सं शिशाधि। अकृत्तरुक्त्वया युजा वयं द्युमंतं घोषं विजयाय कृण्महे॥४॥ विजेषकृदिंद्र इवानवब्रवो३ऽस्माकं मन्यो अधिपा भवेह। प्रियं ते नाम सहुरे गृणीमसि विद्मा तमुत्सं यत आबभूथ॥५॥ आभूत्या सहजा वज्र सायक सहो बिभर्ष्यभिभूत उत्तरं। क्रत्वा नो मन्यो सह मेद्येधि महाधनस्य पुरुहूत संसृजि॥६॥ संसृष्टं धनमुभयं समाकृतमस्मभ्यं दत्तां वरुणश्च मन्युः। भियं दधाना हृदयेषु शत्रवः पराजितासो अप नि लयंतां॥७॥१९॥६॥

---

॥ ८५ ॥ १—४७ सूर्या सावित्री ॥ १—५ सोमः । ६—१६ सूर्याविवाहः । १७ देवाः । १८ सोमार्कौ । १९ चंद्रमाः । २०—२८ नृणां विवाहमंत्रा आशीःप्रायाः । २९. ३० वधूवासःसंस्पर्शनिंदा । ३१ यक्ष्मनाशिनी दंपत्योः । ३२—४७ सूर्या ॥ १—१३. १५—१७. २२. २५. २८—३३. ३५. ३८—४२. ४५—४७ अनुष्टुप् । १४. १९—२१. २३. २४. २६. ३६. ३७. ४४ त्रिष्टुप् । १८. २७. ४३ जगती । ३४ उरोबृहती ॥

॥८५॥ सत्येनोत्तभिता भूमिः सूर्येणोत्तभिता द्यौः। ऋतेनादित्यास्तिष्ठंति दिवि सोमो अधि श्रितः ॥१॥ सोमेनादित्या बलिनः सोमेन पृथिवी मही। अथो नक्षत्राणामेषामुपस्थे सोम आहितः ॥२॥ सोमं मन्यते पपिवान्यत्संपिंषंत्योषधिं। सोमं यं ब्रह्माणो विदुर्न तस्याश्नाति कश्चन ॥३॥ आच्छद्विधानैर्गुपितो बार्हतैः सोम रक्षितः। ग्राव्णा-



Digitized by Google

॥ ८४ ॥ त्वया मन्यो इति सऽरथं आऽरुजंतः हर्षमाणासः धृषिताः मरुत्वः तिग्मऽइषवः आयुधा संऽशिशानाः अभि प्र यंतु नरः अग्निऽरूपाः ॥ १ ॥ अग्निःऽइव मन्यो इति त्विषितः सहस्व सेनाऽनीः नः सहुरे हूतः एधि हत्वाय शत्रून् वि भजस्व वेदः ओजः मिमानः वि मृधः नुदस्व ॥ २ ॥ सहस्व मन्यो इति अभिऽमातिं अस्मे इति रुजन् मृणन् प्रऽमृणन् प्र इहि शत्रून् उग्रं ते पाजः ननु आ रुरुध्रे वशी वशं नयसे एकऽज त्वं ॥ ३ ॥ एकः बहूनां असि मन्यो इति ईळितः विशंऽविशं युधये सं शिशाधि अकृत्तऽरुक् त्वया युजा वयं द्युऽमंतं घोषं विऽजयाय कृण्महे ॥ ४ ॥ विजेषऽकृत् इंद्रःऽइव अनवऽब्रवः अस्माकं मन्यो इति अधिऽपाः भव इह प्रियं ते नाम सहुरे गृणीमसि विद्म तं उत्सं यतः आऽबभूथ ॥ ५ ॥ आऽभूत्या सहऽजाः वज्र सायक सहः बिभर्षि अभिऽभूते उत्ऽतरं क्रत्वा नः मन्यो इति सह मेदी एधि महाऽधनस्य पुरुऽहूत संऽसृजि ॥ ६ ॥ संऽसृष्टं धनं उभयं संऽआकृतं अस्मभ्यं दत्तां वरुणः च मन्युः भियं दधानाः हृदयेषु शत्रवः पराऽजितासः अप नि लयंतां ॥ ७ ॥ १९ ॥ ६ ॥

---

॥ ८५ ॥ सत्येन उत्तभिता भूमिः सूर्येण उत्तभिता द्यौः ऋतेन आदित्याः तिष्ठंति दिवि सोमः अधि श्रितः ॥ १ ॥ सोमेन आदित्याः बलिनः सोमेन पृथिवी मही अथो इति नक्षत्राणां एषां उपऽस्थे सोमः आऽहितः ॥ २ ॥ सोमं मन्यते पपिऽवान् यत् संऽपिंषंति ओषधिं सोमं यं ब्रह्माणः विदुः न तस्य अश्नाति कः चन ॥ ३ ॥ आच्छत्ऽविधानैः गुपितः बार्हतैः सोम रक्षितः ग्राव्णां



Digitized by Google

मिच्छूरवन्तिष्ठसि न ते अश्नाति पार्थिवः ॥ ४ ॥ यत्त्वा देव प्रपिबन्ति तत आ प्यायसे पुनः । वायुः सोमस्य रक्षिता समानां मास आकृतिः ॥ ५ ॥ २० ॥ रैभ्यासीदनुदेयी नाराशंसी न्योचनी । सूर्याया भद्रमिद्वासो गाथयैति परिष्कृतं ॥ ६ ॥ चित्तिरा उपबर्हणं चक्षुरा अभ्यंजनं । द्यौर्भूमिः कोश आसीद्यदयात्सूर्या पतिं ॥ ७ ॥ स्तोमा आसन्प्रतिधयः कुरीरं छंद ओपशः । सूर्याया अश्विना वराग्निरासीत्पुरोगवः ॥ ८ ॥ सोमो वधूयुरभवदश्विनास्तामुभा वरा । सूर्यां यत्पत्ये शंसंतीं मनसा सविताददात् ॥ ९ ॥ मनो अस्या अन आसीद्द्यौरासीदुत च्छदिः । शुक्रावनड्वाहावास्तां यदयात्सूर्या गृहं ॥ १० ॥ २१ ॥ ऋक्सामाभ्यामभिहितौ गावौ ते सामनावितः । श्रोत्रं ते चक्रे आस्तां दिवि पंथाश्चराचरः ॥ ११ ॥ शुची ते चक्रे यात्या व्यानो अक्ष आहतः । अनो मनस्मयं सूर्यारोहत्प्रयती पतिं ॥ १२ ॥ सूर्याया वहतुः प्रागात्सविता यमवासृजत् । अघासु हन्यंते गावोऽर्जुन्योः पर्युह्यते ॥ १३ ॥ यदश्विना पृच्छमानावयातं त्रिचक्रेण वहतुं सूर्यायाः । विश्वे देवा अनु तद्वामजानन्पुत्रः पितरावृणीत पूषा ॥ १४ ॥ यदयातं शुभस्पती वरेयं सूर्यामुप । क्वैकं चक्रं वामासीत्क्व देष्ट्राय तस्थथुः ॥ १५ ॥ २२ ॥ द्वे ते चक्रे सूर्ये ब्रह्माण ऋतुथा विदुः । अथैकं चक्रं यद्गुहा तदद्धातय इद्विदुः ॥ १६ ॥ सूर्यायै देवेभ्यो मित्राय वरुणाय च । ये भूतस्य प्रचेतस इदं तेभ्योऽकरं नमः ॥ १७ ॥ पूर्वापरं चरतो माययैतौ शिशू क्रीळंतौ परि यातो अध्वरं । विश्वान्यन्यो भुवनाभिचष्ट ऋतूँरन्यो विदधज्जायते पुनः ॥ १८ ॥



Digitized by Google

इत् शृण्वन् तिष्ठसि न ते अश्नाति पार्थिवः ॥४॥ यत् त्वा देव प्र-
ऽपिबंति ततः आ प्यायसे पुनः वायुः सोमस्य रक्षिता समानां
मासः आऽकृतिः ॥५॥२०॥ रैभी आसीत् अनुऽदेयी नाराशंसी
निऽओचनी सूर्यायाः भद्रं इत् वासः गाथया एति परिऽकृतं ॥६॥
चित्तिः आः उपऽबर्हणं चक्षुः आः अभिऽअंजनं द्यौः भूमिः को-
शः आसीत् यत् अयात् सूर्या पतिं ॥७॥ स्तोमाः आसन् प्रतिऽध-
यः कुरीरं छंदः ओपशः सूर्यायाः अश्विना वरा अग्निः आसीत्
पुरःऽगवः ॥८॥ सोमः वधूऽयुः अभवत् अश्विना आस्तां उभा
वरा सूर्यां यत् पत्ये शंसंतीं मनसा सविता अददात् ॥९॥ मनः
अस्याः अनः आसीत् द्यौः आसीत् उत छदिः शुक्रौ अनड्वाहौ
आस्तां यत् अयात् सूर्या गृहं ॥१०॥२१॥ ऋक्ऽसामाभ्यां अभि-
ऽहितौ गावौ ते सामनौ इतः श्रोत्रं ते चक्रे आस्तां दिवि पंथाः
चराचरः ॥११॥ शुची ते चक्रे यात्याः विऽआनः अक्षः आऽहतः
अनः मनस्मयं सूर्या आ अरोहत् प्रऽयती पतिं ॥१२॥ सूर्यायाः
वहतुः प्र अगात् सविता यं अवऽअसृजत् अघासु हन्यंते गावः
अर्जुन्योः परि उह्यते ॥१३॥ यत् अश्विना पृच्छमानौ अयातं त्रि-
ऽचक्रेण वहतुं सूर्यायाः विश्वे देवाः अनु तत् वां अजानन् पुत्रः
पितरौ अवृणीत पूषा ॥१४॥ यत् अयातं शुभः पती वरेऽयं सूर्यां
उप क्व एकं चक्रं वां आसीत् क्व देष्ट्राय तस्थथुः ॥१५॥२२॥ द्वे ते
चक्रे सूर्ये ब्रह्माणः ऋतुऽथा विदुः अथ एकं चक्रं यत् गुहा तत्
अद्धातयः इत् विदुः ॥१६॥ सूर्यायै देवेभ्यः मित्राय वरुणाय च ये
भूतस्य प्रऽचेतसः इदं तेभ्यः अकरं नमः ॥१७॥ पूर्वऽअपरं चरतः
मायया एतौ शिशू क्रीळंतौ परि यातः अध्वरं विश्वानि अन्यः
भुवना अभिऽचष्टे ऋतून् अन्यः विऽदधत् जायते पुनः ॥१८॥



Digitized by Google

नवोनवो भवति जायमानोऽह्नां केतुरुषसामेत्यग्रं । भागं
देवेभ्यो वि दधात्यायन्प्र चंद्रमास्तिरते दीर्घमायुः ॥ १९ ॥
सुकिंशुकं शल्मलिं विश्वरूपं हिरण्यवर्णं सुवृतं सुचक्रं । आ
रोह सूर्ये अमृतस्य लोकं स्योनं पत्ये वहतुं कृणुष्व ॥ २० ॥ २३ ॥
उदीर्ष्वातः पतिवती ह्येषा विश्वावसुं नमसा गीर्भिरीळे ।
अन्यामिच्छ पितृषदं व्यक्तां स ते भागो जनुषा तस्य विद्धि
॥ २१ ॥ उदीर्ष्वातो विश्वावसो नमसेळामहे त्वा । अन्या-
मिच्छ प्रफर्व्यं१ सं जायां पत्या सृज ॥ २२ ॥ अनृक्षरा ऋजवः संतु
पंथा येभिः सखायो यंति नो वरेयं । समर्यमा सं भगो नो नि-
नीयात्सं जास्पत्यं सुयममस्तु देवाः ॥ २३ ॥ प्र त्वा मुंचामि
वरुणस्य पाशाद्येन त्वाबध्नात्सविता सुशेवः । ऋतस्य योनौ
सुकृतस्य लोकेऽरिष्टां त्वा सह पत्या दधामि ॥ २४ ॥ प्रेतो मुं-
चामि नामुतः सुबद्धाममुतस्करं । यथेयमिंद्र मीढ्वः सुपुत्रा
सुभगासति ॥ २५ ॥ २४ ॥ पूषा त्वेतो नयतु हस्तगृह्याश्विना
त्वा प्र वहतां रथेन । गृहान्गच्छ गृहपत्नी यथासो व-
शिनी त्वं विदथमा वदासि ॥ २६ ॥ इह प्रियं प्रजया ते समृ-
ध्यतामस्मिन्गृहे गार्हपत्याय जागृहि । एना पत्या तन्वं१ सं सृ-
जस्वाधा जिव्री विदथमा वदाथः ॥ २७ ॥ नीललोहितं भवति
कृत्यासक्तिर्व्यज्यते । एधंते अस्या ज्ञातयः पतिर्बंधेषु बध्य-
ते ॥ २८ ॥ परा देहि शामुल्यं ब्रह्मभ्यो वि भजा वसु । कृत्यैषा
पद्वती भूत्व्या जाया विशते पतिं ॥ २९ ॥ अश्रीरा तनूर्भ-
वति रुशती पापयामुया । पतिर्यद्वध्वो३ वाससा स्वमंगम-
भिधित्सते ॥ ३० ॥ २५ ॥ ये वध्वश्चंद्रं वहतुं यक्ष्मा यंति जना-
दनु । पुनस्तान्यज्ञिया देवा नयंतु यत आगताः ॥ ३१ ॥ मा



Digitized by Google

नवःऽनवः भवति जायमानः अह्नां केतुः उषसां एति अग्रं भागं देवेभ्यः वि दधाति आऽयन् प्र चंद्रमाः तिरते दीर्घं आयुः ॥१९॥ सुऽकिंशुकं शल्मलिं विश्वऽरूपं हिरण्यऽवर्णं सुऽवृतं सुऽचक्रं आ रोह सूर्ये अमृतस्य लोकं स्योनं पत्ये वहतुं कृणुष्व ॥२०॥२३॥ उत् ईर्ष्व अतः पतिऽवती हि एषा विश्वऽवसुं नमसा गीःऽभिः ईळे अन्यां इच्छ पितृऽसदं विऽअक्तां सः ते भागः जनुषा तस्य विद्धि ॥२१॥ उत् ईर्ष्व अतः विश्वऽवसो॰ नमसा ईळामहे त्वा अन्यां इच्छ प्रऽफर्व्यं सं जायां पत्या सृज ॥२२॥ अनृक्षराः ऋजवः संतु पंथाः येभिः सखायः यंति नः वरेऽयं सं अर्यमा सं भगः नः निनीयात् सं जाःपत्यं सुऽयमं अस्तु देवाः ॥२३॥ प्र त्वा मुंचामि वरुणस्य पाशात् येन त्वा अबध्नात् सविता सुऽशेवः ऋतस्य योनौ सुऽकृतस्य लोके अरिष्टां त्वा सह पत्या दधामि ॥२४॥ प्र इतः मुंचामि न अमुतः सुऽबद्धां अमुतः करं यथा इयं इंद्र मीढ्वः सुऽपुत्रा सुऽभगा असति ॥२५॥२४॥ पूषा त्वा इतः नयतु हस्तऽगृह्य अश्विना त्वा प्र वहतां रथेन गृहान् गच्छ गृहऽपत्नी यथा असः वशिनी त्वं विदथं आ वदासि ॥२६॥ इह प्रियं प्रऽजया ते सं ऋध्यतां अस्मिन् गृहे गार्हऽपत्याय जागृहि एना पत्या तन्वं सं सृजस्व अध जिव्री॑ विदथं आ वदाथः ॥२७॥ नीलऽलोहितं भवति कृत्या आसक्तिः वि अज्यते एधंते अस्याः ज्ञातयः पतिः बंधेषु बध्यते ॥२८॥ परा देहि शामुल्यं ब्रह्मऽभ्यः वि भज वसु कृत्या एषा पत्ऽवती भूत्वी आ जाया विशते पतिं ॥२९॥ अश्रीरा तनूः भवति रुशंती पापया अमुया पतिः यत् वध्वः वाससा स्वं अंगं अभिऽधित्सते ॥३०॥२५॥ ये वध्वः चंद्रं वहतुं यक्ष्माः यंति जनात् अनु पुनः॑ तान् यज्ञियाः देवाः नयंतु यतः आऽगताः ॥३१॥ मा



Digitized by Google

विदन्परिपंथिनो य आसीदंति दंपती । सुगेभिर्दुर्गमतीतामप द्रांत्वरातयः ॥ ३२ ॥ सुमंगलीरियं वधूरिमां समेत पश्यत । सौभाग्यमस्यै दत्त्वायाथास्तं वि परेतन ॥ ३३ ॥ तृष्टमेतत्कटुकमेतदपाष्ठवद्विषवन्नैतदत्तवे । सूर्यां यो ब्रह्मा विद्यात्स इद्वाधूयमर्हति ॥ ३४ ॥ आशसनं विशसनमथो अधिविकर्तनं । सूर्यायाः पश्य रूपाणि तानि ब्रह्मा तु शुंधति ॥ ३५ ॥ २६ ॥ गृभ्णामि ते सौभगत्वाय हस्तं मया पत्या जरदष्टिर्यथासः । भगो अर्यमा सविता पुरंधिर्मह्यं त्वादुर्गार्हपत्याय देवाः ॥ ३६ ॥ तां पूषञ्छिवतमामेरयस्व यस्यां बीजं मनुष्या३ वपंति । या न ऊरू उशती विश्रयाते यस्यामुशंतः प्रहराम शेपं ॥ ३७ ॥ तुभ्यमग्रे पर्यवहन्त्सूर्यां वहतुना सह । पुनः पतिभ्यो जायां दा अग्ने प्रजया सह ॥ ३८ ॥ पुनः पत्नीमग्निरदादायुषा सह वर्चसा । दीर्घायुरस्या यः पतिर्जीवाति शरदः शतं ॥ ३९ ॥ सोमः प्रथमो विविदे गंधर्वो विविद उत्तरः । तृतीयो अग्निष्टे पतिस्तुरीयस्ते मनुष्यजाः ॥ ४० ॥ २७ ॥ सोमो ददद्गंधर्वाय गंधर्वो ददद्ग्नये । रयिं च पुत्रांश्चादादग्निर्मह्यमथो इमां ॥ ४१ ॥ इहैव स्तं मा वि यौष्टं विश्वमायुर्व्यश्नुतं । क्रीळंतौ पुत्रैर्नप्तृभिर्मोदमानौ स्वे गृहे ॥ ४२ ॥ आ नः प्रजां जनयतु प्रजापतिराजरसाय समनक्त्वर्यमा । अदुर्मंगलीः पतिलोकमा विश शं नो भव द्विपदे शं चतुष्पदे ॥ ४३ ॥ अघोरचक्षुरपतिघ्न्येधि शिवा पशुभ्यः सुमनाः सुवर्चाः । वीरसूर्देवकामा स्योना शं नो भव द्विपदे शं चतुष्पदे ॥ ४४ ॥ इमां त्वमिंद्र मीढ्वः सुपुत्रां सुभगां कृणु । दशास्यां पुत्राना



Digitized by Google

विदन् परिऽपंथिनः ये आऽसीदंति दंऽपती॰ सुऽगेभिः दुःऽगं अतिं इतां अप द्रांतु अरातयः ॥३२॥ सुऽमंगलीः इयं वधूः इमां संऽएत पश्यत सौभाग्यं अस्यै दत्वाय अथ अस्तं वि परां इतन ॥३३॥ तृष्टं एतत् कटुकं एतत् अपाष्ठऽवंत् विषऽवंत् न एतत् अत्तवे सूर्यां यः ब्रह्मा विद्यात् सः इत् वाधूऽयं अर्हति ॥३४॥ आऽशसनं विऽशसनं अथो' अधिऽविकर्तनं सूर्यायाः पश्य रूपाणि तानि ब्रह्मा तु शुंधति ॥ ३५ ॥ २६ ॥ गृभ्णामि ते सौभगऽत्वाय हस्तं मया पत्या जरत्ऽअष्टिः यथा असः भगः अर्यमा सविता पुरंऽधिः मह्यं त्वा अदुः गार्हऽपत्याय देवाः ॥३६॥ तां पूषन् शिवऽतमां आ ईरयस्व यस्यां बीजं मनुष्याः वपंति या नः ऊरू' उशती विऽश्रयाते यस्यां उशंतः प्रऽहराम शेपं ॥३७॥ तुभ्यं अग्रे परिं अवहन् सूर्यां वहतुना सह पुनः' पतिऽभ्यः जायां दाः अग्ने प्रऽजया सह ॥३८॥ पुनः' पत्नीं अग्निः अदात् आयुषा सह वर्चसा दीर्घऽआयुः अस्याः यः पतिः जीवाति शरदः शतं ॥३९॥ सोमः प्रथमः विविदे गंधर्वः विविदे उत्ऽतरः तृतीयः अग्निः ते पतिः तुरीयः ते मनुष्यऽजाः ॥४०॥ २७॥ सोमः ददत् गंधर्वाय गंधर्वः ददत् अग्नये रयिं च पुत्रान् च अदात् अग्निः मह्यं अथो' इमां ॥४१॥ इह एव स्तं मा वि यौष्टं विश्वं आयुः वि अश्नुतं क्रीळंतौ पुत्रैः नप्तृऽभिः मोदमानौ स्वे गृहे ॥४२॥ आ नः प्रऽजां जनयतु प्रजाऽपतिः आऽजरसाय सं अनक्तु अर्यमा अदुःऽमंगलीः पतिऽलोकं आ विश शं नः भव द्विऽपदे शं चतुःऽपदे ॥४३॥ अघोरऽचक्षुः अपतिऽघ्नी एधि शिवा पशुऽभ्यः सुऽमनाः सुऽवर्चाः वीरऽसूः देवऽकामा स्योना शं नः भव द्विऽपदे शं चतुःऽपदे ॥४४॥ इमां त्वं इंद्र मीढ्वः सुऽपुत्रां सुऽभगां कृणु दश अस्यां पुत्रान् आ



Digitized by Google

धेहि पतिमेकादशं कृधि ॥ ४५ ॥ सम्राज्ञी श्वशुरे भव सम्राज्ञी श्वश्र्वां भव। ननांदरि सम्राज्ञी भव सम्राज्ञी अधि देवृषु ॥ ४६ ॥ समंजंतु विश्वे देवाः समापो हृदयानि नौ। सं मातरिश्वा सं धाता समु देष्ट्री दधातु नौ ॥ ४७ ॥ २८ ॥ ३ ॥

---

॥ ८६ ॥ १–२३ वृषाकपिरैंद्र इंद्राणींद्रश्च ऋषयः ॥ पंक्तिः ॥

॥ ८६ ॥ वि हि सोतोरसृक्षत नेंद्रं देवममंसत। यत्रामदद्वृषाकपिरर्यः पुष्टेषु मत्सखा विश्वस्मादिंद्र उत्तरः ॥ १ ॥ परा हींद्र धावसि वृषाकपेरति व्यथिः। नो अह प्र विंदस्यन्यत्र सोमपीतये विश्वस्मादिंद्र उत्तरः ॥ २ ॥ किमयं त्वां वृषाकपिश्चकार हरितो मृगः। यस्मा इरस्यसीदु न्व१र्यो वा पुष्टिमद्वसु विश्वस्मादिंद्र उत्तरः ॥ ३ ॥ यमिमं त्वं वृषाकपिं प्रियमिंद्राभिरक्षसि। श्वा न्वस्य जंभिषदपि कर्णे वराहयुर्विश्वस्मादिंद्र उत्तरः ॥ ४ ॥ प्रिया तष्टानि मे कपिर्व्यक्ता व्यदूदुषत्। शिरो न्वस्य राविषं न सुगं दुष्कृते भुवं विश्वस्मादिंद्र उत्तरः ॥ ५ ॥ १ ॥ न मत्स्त्री सुभसत्तरा न सुयाशुतरा भुवत्। न मत्प्रतिच्यवीयसी न सक्थ्युद्यमीयसी विश्वस्मादिंद्र उत्तरः ॥ ६ ॥ उवे अंब सुलाभिके यथेवांग भविष्यति। भसन्मे अंब सक्थि मे शिरो मे वीव हृष्यति विश्वस्मादिंद्र उत्तरः ॥ ७ ॥ किं सुबाहो स्वंगुरे पृथुष्टो पृथुजाघने। किं शूरपत्नि नस्त्वमभ्यमीषि वृषाकपिं विश्वस्मादिंद्र उत्तरः ॥ ८ ॥ अवीरामिव मामयं शरारुरभि मन्यते। उताहमस्मि वीरिणींद्रपत्नी मरुत्सखा विश्वस्मादिंद्र उत्तरः ॥ ९ ॥ संहोत्रं स्म पुरा नारी समनं वाव गच्छति। वेधा ऋतस्य वीरिणींद्रपत्नी म-



Digitized by Google

धेहि पतिं एकादशं कृधि ॥४५॥ संऽराज्ञी श्वशुरे भव संऽराज्ञी श्वश्र्वां भव ननांदरि संऽराज्ञी भव संऽराज्ञी अधि देवृषु ॥४६॥ सं अंजंतु विश्वे देवाः सं आपः हृदयानि नौ सं मातरिश्वा सं धाता सं ऊं' देष्ट्री दधातु नौ ॥४७॥२८॥३॥

---

॥८६॥ वि हि सोतोः असृक्षत न इंद्रं देवं अमंसत यत्र अमदत् वृषाकपिः अर्यः पुष्टेषु मत्ऽसखा विश्वस्मात् इंद्रः उत्ऽतरः ॥१॥ परा हि इंद्र धावसि वृषाकपेः अति व्यथिः नो' अह प्र विंदसि अन्यत्र सोमऽपीतये विश्वस्मात् इंद्रः उत्ऽतरः ॥२॥ किं अयं त्वां वृषाकपिः चकार हरितः मृगः यस्मै इरस्यसि इत् ऊं' नु अर्यः वा पुष्टिऽमत् वसु विश्वस्मात् इंद्रः उत्ऽतरः ॥३॥ यं इमं त्वं वृषाकपिं प्रियं इंद्र अभिऽरक्षसि श्वा नु अस्य जंभिषत् अपि कर्णे वराहऽयुः विश्वस्मात् इंद्रः उत्ऽतरः ॥४॥ प्रिया तष्टानि मे कपिः विऽअक्ता वि अदूदुषत् शिरः नु अस्य राविषं न सुऽगं दुःऽकृते भुवं विश्वस्मात् इंद्रः उत्ऽतरः ॥५॥१॥ न मत् स्त्री सुभसत्ऽतरा न सुयाशुऽतरा भुवत् न मत् प्रतिऽच्यवीयसी न सक्थि उत्ऽयमीयसी विश्वस्मात् इंद्रः उत्ऽतरः ॥६॥ उवे अंब सुलाभिके यथाऽइव अंग भविष्यति भसत् मे अंब सक्थि मे शिरः मे विऽइव हृष्यति विश्वस्मात् इंद्रः उत्ऽतरः ॥७॥ किं सुऽबाहो॰ सुऽअंगुरे पृथुऽस्तो॰ पृथुऽजघने किं शूरऽपत्नि नः त्वं अभि अमीषि वृषाकपिं विश्वस्मात् इंद्रः उत्ऽतरः ॥८॥ अवीरांऽइव मां अयं शरारुः अभि मन्यते उत अहं अस्मि वीरिणी इंद्रऽपत्नी मरुत्ऽसखा विश्वस्मात् इंद्रः उत्ऽतरः ॥९॥ संऽहोत्रं स्म पुरा नारी समनं वा अव गच्छति वेधाः ऋतस्य वीरिणी इंद्रऽपत्नी म-



Digitized by Google

हीयते विश्वस्मादिंद्र उत्तरः ॥ १० ॥ २ ॥ इंद्राणीमासु नारिषु सुभगामहमश्रवं । नह्यस्या अपरं चन जरसा मरते पतिर्विश्वस्मादिंद्र उत्तरः ॥ ११ ॥ नाहमिंद्राणि रारण सख्युर्वृषाकपेर्ऋते । यस्येदमप्यं हविः प्रियं देवेषु गच्छति विश्वस्मादिंद्र उत्तरः ॥ १२ ॥ वृषाकपायि रेवति सुपुत्र आदु सुस्नुषे । घसत्त इंद्रं उक्षणः प्रियं काचित्करं हविर्विश्वस्मादिंद्र उत्तरः ॥ १३ ॥ उक्ष्णो हि मे पंचदश साकं पचंति विंशतिं । उताहमद्मि पीव इदुभा कुक्षी पृणंति मे विश्वस्मादिंद्र उत्तरः ॥ १४ ॥ वृषभो न तिग्मशृंगोऽतर्यूथेषु रोरुवत् । मंथस्त इंद्र शं हृदे यं ते सुनोति भावयुर्विश्वस्मादिंद्र उत्तरः ॥ १५ ॥ ३ ॥ न सेशे यस्य रंबतेऽतरा सक्थ्या३कपृत् । सेदीशे यस्य रोमशं निषेदुषो विजृंभते विश्वस्मादिंद्र उत्तरः ॥ १६ ॥ न सेशे यस्य रोमशं निषेदुषो विजृंभते । सेदीशे यस्य रंबतेऽतरा सक्थ्या३कपृद्विश्वस्मादिंद्र उत्तरः ॥ १७ ॥ अयमिंद्र वृषाकपिः परस्वंतं हतं विदत् । असिं सूनां नवं चरुमादेधस्यान आचितं विश्वस्मादिंद्र उत्तरः ॥ १८ ॥ अयमेमि विचाकशद्विचिन्वन्दासमार्यं । पिबामि पाकसुत्वनोऽभि धीरमचाकशं विश्वस्मादिंद्र उत्तरः ॥ १९ ॥ धन्व च यत्कृंतत्रं च कति स्वित्ता वि योजना । नेदीयसो वृषाकपेऽस्तमेहि गृहाँ उप विश्वस्मादिंद्र उत्तरः ॥ २० ॥ पुनरेहि वृषाकपे सुविता कल्पयावहै । य एषः स्वप्ननंशनोऽस्तमेषि पथा पुनर्विश्वस्मादिंद्र उत्तरः ॥ २१ ॥ यदुदंचो वृषाकपे गृहमिंद्राजगंतन । क्व१स्य पुल्वघो मृगः कमगञ्जनयोपनो विश्वस्मादिंद्र उत्तरः ॥ २२ ॥ पर्शुर्ह नाम मानवी साकं स-



Digitized by Google

हीयते विश्वंस्मात् इंद्रः उत्ऽतरः ॥ १० ॥ २ ॥ इंद्राणीं आसु नारिषु सुऽभगां अहं अश्रवं न हि अस्याः अपरं चन जरसा मरते पतिः विश्वंस्मात् इंद्रः उत्ऽतरः ॥ ११ ॥ न अहं इंद्राणि ररण सख्युः वृषाकपेः ऋते यस्य इदं अप्यं हविः प्रियं देवेषु गच्छति विश्वंस्मात् इंद्रः उत्ऽतरः ॥ १२ ॥ वृषाकपायि रेवति सुऽपुत्रे आत् ऊं सुऽस्नुषे घसंत् ते इंद्रः उक्षणः प्रियं काचित्ऽकरं हविः विश्वंस्मात् इंद्रः उत्ऽतरः ॥ १३ ॥ उक्ष्णः हि मे पंचऽदश साकं पचंति विंशतिं उत अहं अद्मि पीवः इत् उभा कुक्षी पृणंति मे विश्वंस्मात् इंद्रः उत्ऽतरः ॥ १४ ॥ वृषभः न तिग्मऽशृंगः अंतः यूथेषु रोरुवत् मंथः ते इंद्र शं हृदे यं ते सुनोति भावयुः विश्वंस्मात् इंद्रः उत्ऽतरः ॥ १५ ॥ ॥ ३ ॥ न सः ईशे यस्य रंबते अंतरा सक्थ्या कपृत् सः इत् ईशे यस्य रोमशं निऽसेदुषः विऽजृंभते विश्वंस्मात् इंद्रः उत्ऽतरः ॥ १६ ॥ न सः ईशे यस्य रोमशं निऽसेदुषः विऽजृंभते सः इत् ईशे यस्य रंबते अंतरा सक्थ्या कपृत् विश्वंस्मात् इंद्रः उत्ऽतरः ॥ १७ ॥ अयं इंद्र वृषाकपिः परस्वंतं हतं विदत् असिं सूनां नवं चरुं आत् एधस्य अनः आऽचितं विश्वंस्मात् इंद्रः उत्ऽतरः ॥ १८ ॥ अयं एमि विऽचाकशत् विऽचिन्वन् दासं आर्यं पिबामि पाकऽसुत्वनः अभि धीरं अचाकशं विश्वंस्मात् इंद्रः उत्ऽतरः ॥ १९ ॥ धन्व च यत् कृंतत्रं च कति स्वित् ता वि योजना नेदीयसः वृषाकपे अस्तं आ इहि गृहान् उप विश्वंस्मात् इंद्रः उत्ऽतरः ॥ २० ॥ पुनः आ इहि वृषाकपे सुविता कल्पयावहै यः एषः स्वप्नऽनंशनः अस्तं एषि पथा पुनः विश्वंस्मात् इंद्रः उत्ऽतरः ॥ २१ ॥ यत् उदंचः वृषाकपे गृहं इंद्र अजगंतन क्व स्यः पुल्वघः मृगः कं अगन् जनऽयोपनः विश्वंस्मात् इंद्रः उत्ऽतरः ॥ २२ ॥ पर्शुः ह नाम मानवी साकं स-



Digitized by Google

सूव विंशतिं। भद्रं भल त्यस्या अभूद्यस्या उदरमामयद्विश्वस्मा-
दिंद्र उत्तरः ॥२३॥४॥

---

॥ ८७ ॥ १—२५ पायुः ॥ अग्नी रक्षोहा ॥ १—२१ त्रिष्टुप्। २२—२५ अनुष्टुप् ॥

॥८७॥ रक्षोहणं वाजिनमा जिघर्मि मित्रं प्रथिष्ठमुप यामि
शर्म। शिशानो अग्निः क्रतुभिः समिद्धः स नो दिवा स रिषः
पातु नक्तं ॥१॥ अयोदंष्ट्रो अर्चिषा यातुधानानुप स्पृश जातवेदः
समिद्धः। आ जिह्वया मूरदेवान्रभस्व क्रव्यादो वृक्त्व्यपि धत्स्वा-
सन् ॥२॥ उभोभयाविन्नुप धेहि दंष्ट्रा हिंस्रः शिशानोऽवरं परं
च। उतांतरिक्षे परि याहि राजञ्जंभैः सं धेह्यभि यातुधानान्
॥३॥ यज्ञैरिषूः संनममानो अग्ने वाचा शल्यां अशनिभिर्दि-
हानः। ताभिर्विध्य हृदये यातुधानान्प्रतीचो बाहून्प्रति भङ्ध्ये-
षां ॥४॥ अग्ने त्वचं यातुधानस्य भिंधि हिंस्राशनिर्हरसा हंत्वेनं।
प्र पर्वाणि जातवेदः शृणीहि क्रव्यात्क्रविष्णुर्वि चिनोतु वृक्णं
॥५॥५॥ यत्रेदानीं पश्यसि जातवेदस्तिष्ठंतमग्न उत वा चरंतं।
यद्वांतरिक्षे पथिभिः पतंतं तमस्ता विध्य शर्वा शिशानः
॥६॥ उतालब्धं स्पृणुहि जातवेद आलेभानादृष्टिभिर्यातु-
धानात्। अग्ने पूर्वो नि जहि शोशुचान आमादः क्ष्विंका-
स्तमदंत्वेनीः ॥७॥ इह प्र ब्रूहि यतमः सो अग्ने यो यातुधानो
य इदं कृणोति। तमा रभस्व समिधा यविष्ठ नृचक्षसश्चक्षुषे
रंधयैनं ॥८॥ तीक्ष्णेनाग्ने चक्षुषा रक्ष यज्ञं प्रांचं वसुभ्यः प्र
णय प्रचेतः। हिंस्रं रक्षांस्यभि शोशुचानं मा त्वा दभन्यातु-
धाना नृचक्षः ॥९॥ नृचक्षा रक्षः परि पश्य विक्षु तस्य
त्रीणि प्रति शृणीह्यग्रा। तस्याग्ने पृष्टीर्हरसा शृणीहि त्रेधा



Digitized by Google

सुव विंशतिं भद्रं भल त्यस्यै अभूत् यस्याः उदरं आमयत् विश्व-
स्मात् इंद्रः उत्ऽतरः ॥२३॥४॥

---

॥८७॥ रक्षःऽहनं वाजिनं आ जिघर्मि मित्रं प्रथिष्ठं उप या-
मि शर्म शिशानः अग्निः क्रतुऽभिः संऽइद्धः सः नः दिवा सः रिषः
पातु नक्तं ॥१॥ अयःऽदंष्ट्रः अर्चिषा यातुऽधानान् उप स्पृश जा-
तऽवेदः संऽइद्धः आ जिह्वया मूरऽदेवान् रभस्व क्रव्यऽअदः वृ-
क्त्वी अपि धत्स्व आसन् ॥२॥ उभा उभयाविन् उप धेहि दंष्ट्रा
हिंस्रः शिशानः अवरं परं च उत अंतरिक्षे परि याहि राजन्
जंभैः सं धेहि अभि यातुऽधानान् ॥३॥ यज्ञैः इषूः संऽनममानः
अग्ने वाचा शल्यान् अशनिऽभिः दिहानः ताभिः विध्य हृदये
यातुऽधानान् प्रतीचः बाहून् प्रति भंग्धि एषां ॥४॥ अग्ने त्वचं
यातुऽधानस्य भिंधि हिंस्रा अशनिः हरसा हंतु एनं प्र पर्वाणि
जातऽवेदः शृणीहि क्रव्यऽअत् क्रविष्णुः वि चिनोतु वृक्णं ॥५॥
॥५॥ यत्र इदानीं पश्यसि जातऽवेदः तिष्ठंतं अग्ने उत वा चरंतं यत्
वा अंतरिक्षे पथिऽभिः पतंतं तं अस्ता विध्य शर्वा शिशानः ॥६॥
उत आऽलब्धं स्पृणुहि जातऽवेदः आऽलेभानात् ऋष्टिऽभिः या-
तुऽधानात् अग्ने पूर्वः नि जहि शोशुचानः आमऽअदः क्ष्विंकाः
तं अदंतु एनीः ॥७॥ इह प्र ब्रूहि यतमः सः अग्ने यः यातुऽधानः
यः इदं कृणोति तं आ रभस्व संऽइधा यविष्ठ नृऽचक्षसः चक्षुषे
रंधय एनं ॥८॥ तीक्ष्णेन अग्ने चक्षुषा रक्ष यज्ञं प्रांचं वसुऽभ्यः प्र
नय प्रऽचेतः० हिंस्रं रक्षांसि अभि शोशुचानं मा त्वा दभन् यातु-
ऽधानाः नृऽचक्षः ॥९॥ नृऽचक्षाः रक्षः परि पश्य विक्षु तस्य
त्रीणि प्रति शृणीहि अग्रा तस्य अग्ने पृष्टीः हरसा शृणीहि त्रेधा



Digitized by Google

मूलँ यातुधानस्य वृश्च ॥ १० ॥ ६ ॥ त्रिर्यातुधानः प्रसितिं त एत्वृतं यो अग्ने अनृतेन हंति । तमर्चिषा स्फूर्जयञ्जातवेदः समक्षमेनं गृणते नि वृङ्धि ॥ ११ ॥ तदग्ने चक्षुः प्रति धेहि रेभे शफारुजं येन पश्यसि यातुधानं । अथर्ववज्ज्योतिषा दैव्येन सत्यं धूर्वंतमचितं न्योष ॥ १२ ॥ यदग्ने अद्य मिथुना शपातो यद्वाचस्तृष्टं जनयंत रेभाः । मन्योर्मनसः शरव्या३ जायते या तया विध्य हृदये यातुधानान् ॥ १३ ॥ परा शृणीहि तपसा यातुधानान्पराग्ने रक्षो हरसा शृणीहि । परार्चिषा मूरदेवाञ्छृणीहि परासुतृपो अभि शोशुचानः ॥ १४ ॥ पराद्य देवा वृजिनं शृणंतु प्रत्यगेनं शपथा यंतु तृष्टाः । वाचास्तेनं शरव ऋच्छंतु मर्मन्विश्वस्यैतु प्रसितिं यातुधानः ॥ १५ ॥ ७ ॥ यः पौरुषेयेण क्रविषा समंक्ते यो अश्व्येन पशुना यातुधानः । यो अघ्न्याया भरति क्षीरमग्ने तेषां शीर्षाणि हरसापि वृश्च ॥ १६ ॥ संवत्सरीणं पय उस्रियायास्तस्य माशीद्यातुधानो नृचक्षः । पीयूषमग्ने यतमस्तितृप्सात्तं प्रत्यंचमर्चिषा विध्य मर्मन् ॥ १७ ॥ विषं गवां यातुधानाः पिबंत्वा वृश्च्यंतामदितये दुरेवाः । परैनान्देवः सविता ददातु परा भागमोषधीनां जयंतां ॥ १८ ॥ सनादग्ने मृणसि यातुधानान्न त्वा रक्षांसि पृतनासु जिग्युः । अनु दह सहमूरान्क्रव्यादो मा ते हेत्या मुक्षत दैव्यायाः ॥ १९ ॥ त्वं नो अग्ने अधरादुदक्तात्त्वं पश्चादुत रक्षा पुरस्तात् । प्रति ते ते अजरासस्तपिष्ठा अघशंसं शोशुचतो दहंतु ॥ २० ॥ ८ ॥ पश्चात्पुरस्तादधरादुदक्तात्कविः काव्येन परि पाहि राजन् । सखे सखायमजरो जरिम्णेऽग्ने मर्ताँ अमर्त्यस्त्वं नः ॥ २१ ॥ परि त्वाग्ने पुरं वयं विप्रं



Digitized by Google

मूलं यातुऽधानस्य वृश्च ॥१०॥६॥ त्रिः यातुऽधानः प्रऽसितिं ते
एतु ऋतं यः अग्ने अनृतेन हंति तं अर्चिषा स्फूर्जयन् जातऽवेदः
संऽअक्षं एनं गृणते नि वृङ्धि ॥११॥ तत् अग्ने चक्षुः प्रति धेहि रेभे
शफऽआरुजं येन पश्यसि यातुऽधानं अथर्वऽवत् ज्योतिषा दै-
व्येन सत्यं धूर्वंतं अचितं नि ओष ॥१२॥ यत् अग्ने अद्य मिथुना
शपातः यत् वाचः तृष्टं जनयंत रेभाः मन्योः मनसः शरव्या जा-
यते या तया विध्य हृदये यातुऽधानान् ॥१३॥ परा शृणीहि तप-
सा यातुऽधानान् परा अग्ने रक्षः हरसा शृणीहि परा अर्चिषा
मूरऽदेवान् शृणीहि परा असुऽतृपः अभि शोशुचानः ॥१४॥ प-
रा अद्य देवाः वृजिनं शृणंतु प्रत्यक् एनं शपथाः यंतु तृष्टाः वाचा-
ऽस्तेनं शरवः ऋच्छंतु मर्मन् विश्वस्य एतु प्रऽसितिं यातुऽधानः
॥१५॥७॥ यः पौरुषेयेण क्रविषा संऽअंक्ते यः अश्व्येन पशुना या-
तुऽधानः यः अघ्न्यायाः भरति क्षीरं अग्ने तेषां शीर्षाणि हरसा
अपि वृश्च ॥१६॥ संवत्सरीणं पयः उस्रियायाः तस्य मा अशीत्
यातुऽधानः नृऽचक्षः पीयूषं अग्ने यतमः तितृप्सात् तं प्रत्यंचं अ-
र्चिषा विध्य मर्मन् ॥१७॥ विषं गवां यातुऽधानाः पिबंतु आ वृ-
श्च्यंतां अदितये दुःऽएवाः परा एनान् देवः सविता ददातु परा
भागं ओषधीनां जयंतां ॥१८॥ सनात् अग्ने मृणसि यातुऽधानान्
न त्वा रक्षांसि पृतनासु जिग्युः अनु दह सहऽमूरान् क्रव्यऽअदः
मा ते हेत्याः मुक्षत दैव्यायाः ॥१९॥ त्वं नः अग्ने अधरात् उदक्तात्
त्वं पश्चात् उत रक्ष पुरस्तात् प्रति ते ते अजरासः तपिष्ठाः अघ-
ऽशंसं शोशुचतः दहंतु ॥२०॥८॥ पश्चात् पुरस्तात् अधरात् उद-
क्तात् कविः काव्येन परि पाहि राजन् सखे सखायं अजरः जरि-
म्णे अग्ने मर्तान् अमर्त्यः त्वं नः ॥२१॥ परि त्वा अग्ने पुरं वयं विप्रं



Digitized by Google

सहस्य धीमहि। धृषद्वर्णं दिवेदिवे हंतारं भंगुरावतां ॥२२॥ वि-
षेण भंगुरावतः प्रति ष्म रक्षसो दह। अग्ने तिग्मेन शोचिषा
तपुरग्राभिर्ऋष्टिभिः ॥२३॥ प्रत्यग्ने मिथुना दह यातुधाना कि-
मीदिना। सं त्वा शिशामि जागृह्यदब्धं विप्र मन्मभिः ॥२४॥
प्रत्यग्ने हरसा हरः शृणीहि विश्वतः प्रति। यातुधानस्य रक्षसो
बलं वि रुज वीर्यं ॥२५॥९॥

---

॥८८॥ १-१९ मूर्धन्वानांगिरसो वामदेव्यो वा ॥ सूर्यवैश्वानरौ ॥ त्रिष्टुप् ॥

॥८८॥ हविष्पांतमजरं स्वर्विदि दिविस्पृश्याहुतं जुष्टमग्नौ।
तस्य भर्मणे भुवनाय देवा धर्मणे कं स्वधया पप्रथंत ॥१॥ गीर्णं
भुवनं तमसापगूळ्हमाविः स्वरभवज्जाते अग्नौ। तस्य देवाः
पृथिवी द्यौरुतापोऽरणयन्नोषधीः सख्ये अस्य ॥२॥ देवेभिर्न्वि-
षितो यज्ञियेभिरग्निं स्तोषाण्यजरं बृहंतं। यो भानुना पृथिवीं
द्यामुतेमामाततान रोदसी अंतरिक्षं ॥३॥ यो होतासीत्प्रथमो
देवजुष्टो यं समांजन्नाज्येना वृणानाः। स पतत्रीत्वरं स्था ज-
गद्यच्छ्वात्रमग्निरकृणोज्जातवेदाः ॥४॥ यज्जातवेदो भुवनस्य
मूर्धन्नतिष्ठो अग्ने सह रोचनेन। तं त्वाहेम मतिभिर्गीर्-
भिरुक्थैः स यज्ञियो अभवो रोदसिप्राः ॥५॥१०॥ मूर्धा भुवो
भवति नक्तमग्निस्ततः सूर्यो जायते प्रातरुद्यन्। मायामू तु
यज्ञियानामेतामपो यत्तूर्णिश्चरति प्रजानन् ॥६॥ दृशेन्यो यो
महिना समिद्धोऽरोचत दिवियोनिर्विभावा। तस्मिन्नग्नौ
सूक्तवाकेन देवा हविर्विश्व आजुहवुस्तनूपाः ॥७॥ सूक्तवाकं
प्रथममादिदग्निमादिद्धविरजनयंत देवाः। स एषां यज्ञो
अभवत्तनूपास्तं द्यौर्वेद तं पृथिवी तमापः ॥८॥ यं दे-



Digitized by Google

सहस्य धीमहि धृषत्ऽवर्णं दिवेऽदिवे हंतारं भंगुरऽवतां ॥२२॥ विषेण भंगुरऽवतः प्रति स्म रक्षसः दह अग्ने तिग्मेन शोचिषा तपुःऽअग्राभिः ऋष्टिऽभिः ॥२३॥ प्रति अग्ने मिथुना दह यातुऽधाना किमीदिना सं त्वा शिशामि जागृहि अदब्धं विप्र मन्मऽभिः ॥२४॥ प्रति अग्ने हरसा हरः शृणीहि विश्वतः प्रति यातुऽधानस्य रक्षसः बलं वि रुज वीर्यं ॥२५॥९॥

---

॥८८॥ हविः पांतं अजरं स्वःऽविदि दिविऽस्पृशि आऽहुतं जुष्टं अग्नौ तस्य भर्मणे भुवनाय देवाः धर्मणे कं स्वधया पप्रथंत ॥१॥ गीर्णं भुवनं तमसा अपऽगूळ्हं आविः स्वः अभवत् जाते अग्नौ तस्य देवाः पृथिवी द्यौः उत आपः अरणयन् ओषधीः सख्ये अस्य ॥२॥ देवेभिः नु इषितः यज्ञियेभिः अग्निं स्तोषाणि अजरं बृहंतं यः भानुना पृथिवीं द्यां उत इमां आऽततान रोदसी अंतरिक्षं ॥३॥ यः होता आसीत् प्रथमः देवऽजुष्टः यं संऽआंजन् आज्येन वृणानाः सः पतत्रि इत्वरं स्थाः जगत् यत् श्वात्रं अग्निः अकृणोत् जातऽवेदाः ॥४॥ यत् जातऽवेदः भुवनस्य मूर्धन् अतिष्ठः अग्ने सह रोचनेन तं त्वा अहेम मतिऽभिः गीःऽभिः उक्थैः सः यज्ञियः अभवः रोदसिऽप्राः ॥५॥१०॥ मूर्धा भुवः भवति नक्तं अग्निः ततः सूर्यः जायते प्रातः उत्ऽयन् मायां ऊं इति तु यज्ञियानां एतां अपः यत् तूर्णिः चरति प्रऽजानन् ॥६॥ दृशेन्यः यः महिना संऽइद्धः अरोचत दिविऽयोनिः विभाऽवा तस्मिन् अग्नौ सूक्तऽवाकेन देवाः हविः विश्वे आ अजुहवुः तनूऽपाः ॥७॥ सूक्तऽवाकं प्रथमं आत् इत् अग्निं आत् इत् हविः अजनयंत देवाः सः एषां यज्ञः अभवत् तनूऽपाः तं द्यौः वेद तं पृथिवी तं आपः ॥८॥ यं दे-



Digitized by Google

वासोऽजनयंताग्निं यस्मिन्नाजुहवुर्भुवनानि विश्वा । सो अर्चिषा पृथिवीं द्यामुतेमामृजूयमानो अतपन्महित्वा ॥ ९ ॥ स्तोमेन हि दिवि देवासो अग्निमजीजनञ्छक्तिभी रोदसिप्रां । तमू अकृण्वन् त्रेधा भुवे कं स ओषधीः पचति विश्वरूपाः ॥ १० ॥ ११ ॥ यदेदेनमदधुर्यज्ञियासो दिवि देवाः सूर्यमादितेयं । यदा चरिष्णू मिथुनावभूतामादित्प्रापश्यन्भुवनानि विश्वा ॥ ११ ॥ विश्वस्मा अग्निं भुवनाय देवा वैश्वानरं केतुमह्नामकृण्वन् । आ यस्ततानोषसो विभातीरपो ऊर्णोति तमो अर्चिषा यन् ॥ १२ ॥ वैश्वानरं कवयो यज्ञियासोऽग्निं देवा अजनयन्नजुर्यं । नक्षत्रं प्रत्नममिनच्चरिष्णु यक्षस्याध्यक्षं तविषं बृहंतं ॥ १३ ॥ वैश्वानरं विश्वहा दीदिवांसं मंत्रैरग्निं कविमच्छा वदामः । यो महिम्ना परिबभूवोर्वी उतावस्तादुत देवः परस्तात् ॥ १४ ॥ द्वे स्रुती अशृणवं पितॄणामहं देवानामुत मर्त्यानां । ताभ्यामिदं विश्वमेजत्समेति यदंतरा पितरं मातरं च ॥ १५ ॥ १२ ॥ द्वे समीची बिभृतश्चरंतं शीर्षतो जातं मनसा विमृष्टं । स प्रत्यङ्विश्वा भुवनानि तस्थावप्रयुच्छन्तरणिर्भ्राजमानः ॥ १६ ॥ यत्रा वदेते अवरः परश्च यज्ञन्योः कतरो नौ वि वेद । आ शेकुरित्सधमादं सखायो नक्षंत यज्ञं क इदं वि वोचत् ॥ १७ ॥ कत्यग्नयः कति सूर्यासः कत्युषासः कत्यु स्विदापः । नोपस्पिजं वः पितरो वदामि पृच्छामि वः कवयो विद्मने कं ॥ १८ ॥ यावन्मात्रमुषसो न प्रतीकं सुपर्ण्यो३ वसते मातरिश्वः । तावद्दधात्युप यज्ञमायन्ब्राह्मणो होतुरवरो निषीदन् ॥ १९ ॥ १३ ॥



Digitized by Google

वासः अजनयंत अग्निं यस्मिन् आ अजुहवुः भुवनानि विश्वा
सः अर्चिषा पृथिवीं द्यां उत इमां ऋजुऽयमानः अतपत् महिऽत्वा ॥ ९ ॥ स्तोमेन हि दिवि देवासः अग्निं अजीजनन् शक्तिऽभिः रोदसिऽप्रां तं ऊं अकृण्वन् त्रेधा भुवे कं सः ओषधीः पचति विश्वऽरूपाः ॥ १० ॥ ११ ॥ यदा इत् एनं अदधुः यज्ञियासः दिवि देवाः सूर्यं आदितेयं यदा चरिष्णू मिथुनौ अभूतां आत् इत् प्र अपश्यन् भुवनानि विश्वा ॥ ११ ॥ विश्वस्मै अग्निं भुवनाय देवाः वैश्वानरं केतुं अह्नां अकृण्वन् आ यः ततान उषसः विऽभातीः अपो ऊर्णोति तमः अर्चिषा यन् ॥ १२ ॥ वैश्वानरं कवयः यज्ञियासः अग्निं देवाः अजनयन् अजुर्यं नक्षत्रं प्रत्नं अमिनत् चरिष्णु यक्षस्य अधिऽअक्षं तविषं बृहंतं ॥ १३ ॥ वैश्वानरं विश्वहा दीदिऽवांसं मंत्रैः अग्निं कविं अच्छ वदामः यः महिम्ना परिऽबभूव उर्वी उत अवस्तात् उत देवः परस्तात् ॥ १४ ॥ द्वे स्रुती अशृणवं पितॄणां अहं देवानां उत मर्त्यानां ताभ्यां इदं विश्वं एजत् सं एति यत् अंतरा पितरं मातरं च ॥ १५ ॥ १२ ॥ द्वे संऽईची॰ बिभृतः चरंतं शीर्षतः जातं मनसा विऽमृष्टं सः प्रत्यङ् विश्वा भुवनानि तस्थौ अप्रऽयुच्छन् तरणिः भ्राजमानः ॥ १६ ॥ यत्र वदेते अवरः परः च यज्ञऽन्योः कतरः नौ वि वेद आ शेकुः इत् सधऽमादं सखायः नक्षंत यज्ञं कः इदं वि वोचत् ॥ १७ ॥ कति अग्नयः कति सूर्यासः कति उषसः कति ऊं स्वित् आपः न उपऽस्पिजं वः पितरः वदामि पृच्छामि वः कवयः विद्मने कं ॥ १८ ॥ यावत्ऽमात्रं उषसः न प्रतीकं सुऽपर्ण्यः वसंते मातरिश्वः तावत् दधाति उप यज्ञं आऽयन् ब्राह्मणः होतुः अवरः निऽसीदन् ॥ १९ ॥ १३ ॥



Digitized by Google

॥ ८९ ॥ १—१८ रेणुः ॥ १—४. ६—१८ इंद्रः । ५ इंद्रासोमौ ॥ त्रिष्टुप् ॥

॥ ८९ ॥ इंद्रं स्तवा नृतमं यस्य महा विबबाधे रोचना वि
ज्मो अंतान्। आ यः पप्रौ चर्षणीधृद्वरोभिः प्र सिंधुभ्यो रिरि-
चानो महित्वा ॥ १ ॥ स सूर्यः पर्युरू वरांस्येंद्रो ववृत्याद्रथ्येव
चक्रा। अतिष्ठंतमपस्य१ं न सर्गं कृष्णा तमांसि त्विष्या जघान
॥ २ ॥ समानमस्मा अनपावृदर्च क्ष्मया दिवो असमं ब्रह्म नव्यं।
वि यः पृष्ठेव जनिमान्यर्य इंद्रश्चिकाय न सखायमीषे ॥ ३ ॥
इंद्राय गिरो अनिशितसर्गा अपः प्रेरयं सगरस्य बुध्नात्। यो
अक्षेणेव चक्रिया शचीभिर्विष्वक्तस्तंभ पृथिवीमुत द्यां ॥ ४ ॥
आपांतमन्युस्तृपलप्रभर्मा धुनिः शिमीवाञ्छरुमाँ ऋजीषी।
सोमो विश्वान्यतसा वनानि नार्वागिंद्रं प्रतिमानानि देभुः
॥ ५ ॥ १४ ॥ न यस्य द्यावापृथिवी न धन्व नांतरिक्षं नाद्रयः
सोमो अक्षाः। यदस्य मन्युरधिनीयमानः शृणाति वीळु
रुजति स्थिराणि ॥ ६ ॥ जघान वृत्रं स्वधितिर्वनेव रुरोज पुरो
अरदन्न सिंधून्। बिभेद गिरिं नवमिन्न कुंभमा गा इंद्रो
अकृणुत स्वयुग्भिः ॥ ७ ॥ त्वं ह त्यदृणया इंद्र धीरोऽसिर्न पर्व
वृजिना शृणासि। प्र ये मित्रस्य वरुणस्य धाम युजं न जना
मिनंति मित्रं ॥ ८ ॥ प्र ये मित्रं प्रार्यमणं दुरेवाः प्र संगिरः प्र
वरुणं मिनंति। न्य१मित्रेषु वधमिंद्र तुम्रं वृषन्वृषाणमरुषं शि-
शीहि ॥ ९ ॥ इंद्रो दिव इंद्र ईशे पृथिव्या इंद्रो अपामिंद्र इत्पर्वतानां।
इंद्रो वृधामिंद्र इन्मेधिराणामिंद्रः क्षेमे योगे हव्य इंद्रः ॥ १० ॥ १५ ॥
प्राक्तुभ्य इंद्रः प्र वृधो अहभ्यः प्रांतरिक्षात्प्र समुद्रस्य धासेः। प्र वा-
तस्य प्रथसः प्र ज्मो अंतात्प्र सिंधुभ्यो रिरिचे प्र क्षितिभ्यः ॥ ११ ॥
प्र शोशुचत्या उषसो न केतुरसिन्वा ते वर्ततामिंद्र हेतिः। अश्मे-



Digitized by Google

॥८९॥ इंद्रं स्तव नृऽतमं यस्य मह्ना विऽबबाधे रोचना वि
ज्मः अंतान् आ यः पप्रौ चर्षणिऽधृत् वरःऽभिः प्र सिंधुऽभ्यः रि-
रिचानः महिऽत्वा ॥१॥ सः सूर्यः परि उरु वरांसि आ इंद्रः ववृ-
त्यात् रथ्याऽइव चक्रा अतिष्ठंतं अपस्यं न सर्गं कृष्णा तमांसि
त्विष्या जघान ॥२॥ समानं अस्मै अनपऽवृत् अर्च क्ष्मया दिवः
असमं ब्रह्म नव्यं वि यः पृष्ठाऽइव जनिमानि अर्यः इंद्रः चिकाय
न सखायं ईषे ॥३॥ इंद्राय गिरः अनिशितऽसर्गाः अपः प्र ईरयं
सगरस्य बुध्नात् यः अक्षेणऽइव चक्रिया शचीभिः विष्वक् तस्तंभ
पृथिवीं उत द्यां ॥४॥ आपांतऽमन्युः तृपलऽप्रभर्मा धुनिः शि-
मीऽवान् शरुऽमान् ऋजीषी सोमः विश्वानि अतसा वनानि
न अर्वाक् इंद्रं प्रतिऽमानानि देभुः ॥५॥१४॥ न यस्य द्यावापृथि-
वी' न धन्व न अंतरिक्षं न अद्रयः सोमः अक्षाः' यत् अस्य मन्युः
अधिऽनीयमानः शृणाति वीळु रुजति स्थिराणि ॥६॥ जघान
वृत्रं स्वऽधितिः वनाऽइव रुरोज पुरः अरदत् न सिंधून् बिभेद
गिरिं नवं इत् न कुंभं आ गाः इंद्रः अकृणुत स्वयुक्ऽभिः ॥७॥ त्वं
ह त्यत् ऋणऽयाः इंद्र धीरः असिः न पर्व वृजिना शृणासि प्र ये
मित्रस्य वरुणस्य धाम युजं न जनाः मिनंति मित्रं ॥८॥ प्र ये
मित्रं प्र अर्यमणं दुःऽएवाः प्र संऽगिरः प्र वरुणं मिनंति नि अ-
मित्रेषु वधं इंद्र तुम्रं वृषन् वृषाणं अरुषं शिशीहि ॥९॥ इंद्रः दिवः
इंद्रः ईशे पृथिव्याः इंद्रः अपां इंद्रः इत् पर्वतानां इंद्रः वृधां इंद्रः इत्
मेधिराणां इंद्रः क्षेमे योगे हव्यः इंद्रः ॥१०॥१५॥ प्र अक्तुऽभ्यः इंद्रः
प्र वृधः अहःऽभ्यः प्र अंतरिक्षात् प्र समुद्रस्य धासेः प्र वातस्य प्र-
थसः प्र ज्मः अंतात् प्र सिंधुऽभ्यः रिरिचे प्र क्षितिऽभ्यः ॥११॥
प्र शोशुचत्याः उषसः न केतुः असिन्वा ते वर्ततां इंद्र हेतिः अश्मा-



Digitized by Google

व विध्य दिव आ सृजानस्तपिष्ठेन हेषसा द्रोघमित्रान् ॥१२॥ अन्वह मासा अन्विद्वनान्यन्वोषधीरनु पर्वतासः। अन्विंद्रं रोदसी वावशाने अन्वापो अजिहत जायमानं ॥१३॥ कर्हि स्वित्सा त इंद्र चेत्यासदघस्य यद्भिनदो रक्ष एषत्। मित्रक्रुवो यच्छसने न गावः पृथिव्या आपृगमुया शयंते ॥१४॥ शत्रूयंतो अभि ये नस्ततस्रे महि व्राधंत ओगणास इंद्र। अंधेनामित्रास्तमसा सचंतां सुज्योतिषो अक्तवस्ताँ अभि ष्युः ॥१५॥ पुरूणि हि त्वा सवना जनानां ब्रह्माणि मंदन्गृणतामृषीणां। इमामाघोषन्नवसा सहूतिं तिरो विश्वाँ अर्चतो याह्यर्वाङ् ॥१६॥ एवा ते वयमिंद्र भुंजतीनां विद्याम सुमतीनां नवानां। विद्याम वस्तोरवसा गृणंतो विश्वामित्रा उत त इंद्र नूनं ॥१७॥ शुनं हुवेम मघवानमिंद्रमस्मिन्भरे नृतमं वाजसातौ। शृण्वंतमुग्रमूतये समत्सु घ्नंतं वृत्राणि संजितं धनानां ॥१८॥१६॥

---

॥९०॥ १—१६ नारायणः ॥ पुरुषः ॥ १—१५ अनुष्टुप्। १६ त्रिष्टुप् ॥

॥९०॥ सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात्। स भूमिं विश्वतो वृत्वात्यतिष्ठद्दशांगुलं ॥१॥ पुरुष एवेदं सर्वं यद्भूतं यच्च भव्यं। उतामृतत्वस्येशानो यदन्नेनातिरोहति ॥२॥ एतावानस्य महिमातो ज्यायाँश्च पूरुषः। पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि ॥३॥ त्रिपादूर्ध्व उदैत्पुरुषः पादोऽस्येहाभवत्पुनः। ततो विष्वङ्व्यक्रामत्साशनानशने अभि ॥४॥ तस्माद्विराळजायत विराजो अधि पूरुषः। स जातो अत्यरिच्यत पश्चाद्भूमिमथो पुरः ॥५॥१७॥ यत्पुरुषेण हविषा देवा यज्ञमतन्वत।



Digitized by Google

ऽइव विष्य दिवः आ सृजानः तपिष्ठेन हेषसा द्रोघऽमित्रान् ॥ १२ ॥
अनु अहं मासाः अनु इत् वनानि अनु ओषधीः अनु पर्वतासः
अनु इंद्रं रोदसी वावशाने अनु आपः अजिहत जायमानं
॥ १३ ॥ कर्हि स्वित् सा ते इंद्र चेत्या असत् अघस्य यत् भिनदः रक्षः
आऽईषत् मित्रऽक्रुवः यत् शसने न गावः पृथिव्याः आऽपृक्
अमुया शयंते ॥ १४ ॥ शत्रुऽयंतः अभि ये नः ततस्रे महि व्राधंतः
ओगणासः इंद्र अंधेन अमित्राः तमसा सचंतां सुऽज्योतिषः अ-
क्तवः तान् अभि स्युः० ॥ १५ ॥ पुरूणि हि त्वा सवना जनानां ब्र-
ह्माणि मंदन् गृणतां ऋषीणां इमां आऽघोषन् अवसा सऽहूतिं
तिरः विश्वान् अर्चतः याहि अर्वाङ् ॥ १६ ॥ एव ते वयं इंद्र भुंज-
तीनां विद्याम सुऽमतीनां नवानां विद्याम वस्तोः अवसा गृ-
णंतः विश्वामित्राः उत ते इंद्र नूनं ॥ १७ ॥ शुनं हुवेम मघऽवानं
इंद्रं अस्मिन् भरे नृऽतमं वाजऽसातौ शृण्वंतं उग्रं ऊतये समत्ऽसु
घ्नंतं वृत्राणि संऽजितं धनानां ॥ १८ ॥ १६ ॥

---

॥ ९० ॥ सहस्रऽशीर्षा पुरुषः सहस्रऽअक्षः सहस्रऽपात् सः भू-
मिं विश्वतः वृत्वा अति अतिष्ठत् दशऽअंगुलं ॥ १ ॥ पुरुषः एव इदं
सर्वं यत् भूतं यत् च भव्यं उत अमृतऽत्वस्य ईशानः यत् अन्नेन अ-
तिऽरोहति ॥ २ ॥ एतावान् अस्य महिमा अतः ज्यायान् च पुरुषः
पादः अस्य विश्वा भूतानि त्रिऽपात् अस्य अमृतं दिवि ॥ ३ ॥ त्रि-
ऽपात् ऊर्ध्वः उत् ऐत् पुरुषः पादः अस्य इह अभवत् पुनः ततः
विष्वङ् वि अक्रामत् साशनानशने अभि ॥ ४ ॥ तस्मात् विऽराट्
अजायत विऽराजः अधि पुरुषः सः जातः अति अरिच्यत पश्चात्
भूमिं अथो पुरः ॥ ५ ॥ १७ ॥ यत् पुरुषेण हविषा देवाः यज्ञं अतन्वत



Digitized by Google

वसंतो अस्यासीदाज्यं ग्रीष्म इध्मः शरद्धविः ॥६॥ तं यज्ञं बर्हिषि प्रौक्षन्पुरुषं जातमग्रतः। तेन देवा अयजंत साध्या ऋषयश्च ये ॥७॥ तस्माद्यज्ञात्सर्वहुतः संभृतं पृषदाज्यं। पशून्तांश्चक्रे वायव्यानारण्यान्ग्राम्याश्च ये ॥८॥ तस्माद्यज्ञात्सर्वहुत ऋचः सामानि जज्ञिरे। छंदांसि जज्ञिरे तस्माद्यजुस्तस्मादजायत ॥९॥ तस्मादश्वा अजायंत ये के चोभयादतः। गावो ह जज्ञिरे तस्मात्तस्माज्जाता अजावयः ॥१०॥१८॥ यत्पुरुषं व्यदधुः कतिधा व्यकल्पयन्। मुखं किमस्य कौ बाहू का ऊरू पादा उच्येते ॥११॥ ब्राह्मणोऽस्य मुखमासीद्बाहू राजन्यः कृतः। ऊरू तदस्य यद्वैश्यः पद्भ्यां शूद्रो अजायत ॥१२॥ चंद्रमा मनसो जातश्चक्षोः सूर्यो अजायत। मुखादिंद्रश्चाग्निश्च प्राणाद्वायुरजायत ॥१३॥ नाभ्या आसीदंतरिक्षं शीर्ष्णो द्यौः समवर्तत। पद्भ्यां भूमिर्दिशः श्रोत्रात्तथा लोकाँ अकल्पयन् ॥१४॥ सप्तास्यासन्परिधयस्त्रिः सप्त समिधः कृताः। देवा यद्यज्ञं तन्वाना अबध्नन्पुरुषं पशुं ॥१५॥ यज्ञेन यज्ञमयजंत देवास्तानि धर्माणि प्रथमान्यासन्। ते ह नाकं महिमानः सचंत यत्र पूर्वे साध्याः संति देवाः ॥१६॥१९॥७॥

---

॥ ९१ ॥ १—१५ अरुणो वैतहव्यः ॥ अग्निः ॥ १—१४ जगती । १५ त्रिष्टुप् ॥

॥९१॥ सं जागृवद्भिर्जरमाण इध्यते दमे दमूना इषयन्निळस्पदे। विश्वस्य होता हविषो वरेण्यो विभुर्विभावा सुषखा सखीयते ॥१॥ स दर्शतश्रीरतिथिर्गृहेगृहे वनेवने शिश्रिये तक्ववीरिव। जनंजनं जन्यो नाति मन्यते विश आ क्षेति विश्यो३ विशंविशं ॥२॥ सुदक्षो दक्षैः क्रतुना-



Digitized by Google

वसंतः अस्य आसीत् आज्यं ग्रीष्मः इध्मः शरत् हविः ॥ ६ ॥ तं यज्ञं बर्हिषि प्र औक्षन् पुरुषं जातं अग्रतः तेन देवाः अयजंत साध्याः ऋषयः च ये ॥ ७ ॥ तस्मात् यज्ञात् सर्वऽहुतः संऽभृतं पृषत्ऽआज्यं पशून् तान् चक्रे वायव्यान् आरण्यान् ग्राम्याः च ये ॥ ८ ॥ तस्मात् यज्ञात् सर्वऽहुतः ऋचः सामानि जज्ञिरे छंदांसि जज्ञिरे तस्मात् यजुः तस्मात् अजायत ॥ ९ ॥ तस्मात् अश्वाः अजायंत ये के च उभयादतः गावः ह जज्ञिरे तस्मात् तस्मात् जाताः अजावयः ॥ १० ॥ ॥ १८ ॥ यत् पुरुषं वि अदधुः कतिधा वि अकल्पयन् मुखं किं अस्य कौ बाहू इति कौ ऊरू इति पादौ उच्येते इति ॥ ११ ॥ ब्राह्मणः अस्य मुखं आसीत् बाहू इति राजन्यः कृतः ऊरू इति तत् अस्य यत् वैश्यः पत्ऽभ्यां शूद्रः अजायत ॥ १२ ॥ चंद्रमाः मनसः जातः चक्षोः सूर्यः अजायत मुखात् इंद्रः च अग्निः च प्राणात् वायुः अजायत ॥ १३ ॥ नाभ्याः आसीत् अंतरिक्षं शीर्ष्णः द्यौः सं अवर्तत पत्ऽभ्यां भूमिः दिशः श्रोत्रात् तथा लोकान् अकल्पयन् ॥ १४ ॥ सप्त अस्य आसन् परिऽधयः त्रिः सप्त संऽइधः कृताः देवाः यत् यज्ञं तन्वानाः अबध्नन् पुरुषं पशुं ॥ १५ ॥ यज्ञेन यज्ञं अयजंत देवाः तानि धर्माणि प्रथमानि आसन् ते ह नाकं महिमानः सचंत यत्र पूर्वे साध्याः संति देवाः ॥ १६ ॥ १९ ॥ ७ ॥

---

॥ ९१ ॥ सं जागृवत्ऽभिः जरमाणः इध्यते दमे दमूनाः इषयन् इळः पदे विश्वस्य होता हविषः वरेण्यः विऽभुः विभाऽवा सुऽसखा सखिऽयते ॥ १ ॥ सः दर्शतऽश्रीः अतिथिः गृहेऽगृहे वनेऽवने शिश्रिये तक्ववीःऽइव जनंऽजनं जन्यः न अति मन्यते विशः आ क्षेति विश्यः विशंऽविशं ॥ २ ॥ सुऽदक्षः दक्षैः क्रतुना अ-



Digitized by Google

सि सुक्रतुरग्ने कविः काव्येनासि विश्ववित्। वसुर्वसूनां
क्षयसि त्वमेक इद्द्यावा च यानि पृथिवी च पुष्यतः ॥ ३ ॥
प्रजानन्नग्ने तव योनिमृत्वियमिळायास्पदे घृतवंतमासदः।
आ ते चिकित्र उषसामिवेतयोऽरेपसः सूर्यस्येव रश्मयः
॥ ४ ॥ तव श्रियो वर्ष्यस्येव विद्युतश्चित्राश्चिकित्र उषसां
न केतवः। यदोषधीरभिसृष्टो वनानि च परि स्वयं
चिनुषे अन्नमास्ये ॥ ५ ॥ २० ॥ तमोषधीर्दधिरे गर्भमृत्वियं तमापो
अग्निं जनयंत मातरः। तमित्समानं वनिनश्च वीरुधोऽंतर्वतीश्च
सुवते च विश्वहा ॥ ६ ॥ वातोपधूत इषितो
वशाँ अनु तृषु यदन्ना वेविषद्वितिष्ठसे। आ ते यतंते रथ्यो३यथा
पृथक्शर्धांस्यग्ने अजराणि धक्षतः ॥ ७ ॥ मेधाकारं
विदथस्य प्रसाधनमग्निं होतारं परिभूतमं मतिं। तमिदर्भे
हविष्या समानमित्तमिन्महे वृणते नान्यं त्वत् ॥ ८ ॥ त्वामिदत्र
वृणते त्वायवो होतारमग्ने विदथेषु वेधसः। यद्देवयंतो
दधति प्रयांसि ते हविष्मंतो मनवो वृक्तबर्हिषः ॥ ९ ॥ तवाग्ने
होत्रं तव पोत्रमृत्वियं तव नेष्ट्रं त्वमग्निदृतायतः। तव प्रशास्त्रं
त्वमध्वरीयसि ब्रह्मा चासि गृहपतिश्च नो दमे ॥ १० ॥
॥ २१ ॥ यस्तुभ्यमग्ने अमृताय मर्त्यः समिधा दाशदुत वा
हविष्कृति। तस्य होता भवसि यासि दूत्य१मुप ब्रूषे यजस्याध्वरीयसि
॥ ११ ॥ इमा अस्मै मतयो वाचो अस्मदाँ ऋचो
गिरः सुष्टुतयः समग्मत। वसूयवो वसवे जातवेदसे वृद्धासु
चिद्वर्धनो यासु चाकनत् ॥ १२ ॥ इमां प्रत्नाय सुष्टुतिं नवीयसीं
वोचेयमस्मा उशते शृणोतु नः। भूया अंतरा हृद्यस्य
निस्पृशे जायेव पत्य उशती सुवासाः ॥ १३ ॥ यस्मिन्नश्वास



Digitized by Google

सि सुऽक्रतुः अग्ने कविः काव्येन असि विश्वऽवित् वसुः वसूनां
क्षयसि त्वं एकः इत् द्यावा च यानि पृथिवी च पुष्यतः ॥३॥ प्र-
ऽजानन् अग्ने तव योनिं ऋत्वियं इळायाः पदे घृतऽवंतं आ अ-
सदः आ ते चिकित्रे उषसांऽइव एतयः अरेपसः सूर्यस्यऽइव र-
श्मयः ॥४॥ तव श्रियः वर्ष्यस्यऽइव विऽद्युतः चित्राः चिकित्रे उ-
षसां न केतवः यत् ओषधीः अभिऽसृष्टः वनानि च परि स्वयं
चिनुषे अन्नं आस्ये ॥५॥२०॥ तं ओषधीः दधिरे गर्भं ऋत्वियं तं
आपः अग्निं जनयंत मातरः तं इत् समानं वनिनः च वीरुधः
अंतःऽवतीः च सुवते च विश्वहा ॥६॥ वातऽउपधूतः इषितः व-
शान् अनु तृषु यत् अन्ना वेविषत् विऽतिष्ठसे आ ते यतंते रथ्यः
यथा पृथक् शर्धांसि अग्ने अजराणि धक्षतः ॥७॥ मेधाऽकारं वि-
दथस्य प्रऽसाधनं अग्निं होतारं परिऽभूतमं मतिं तं इत् अर्भे ह-
विषि आ समानं इत् तं इत् महे वृणते न अन्यं त्वत् ॥८॥ त्वां इत्
अत्र वृणते त्वाऽयवः होतारं अग्ने विदथेषु वेधसः यत् देवऽयंतः
दधति प्रयांसि ते हविष्मंतः मनवः वृक्तऽबर्हिषः ॥९॥ तव अग्ने
होत्रं तव पोत्रं ऋत्वियं तव नेष्ट्रं त्वं अग्नित् ऋतऽयतः तव प्र-
ऽशास्त्रं त्वं अध्वरिऽयसि ब्रह्मा च असि गृहऽपतिः च नः दमे
॥१०॥२१॥ यः तुभ्यं अग्ने अमृताय मर्त्यः सम्ऽइधा दाशत् उत वा
हविःऽकृति तस्य होता भवसि यासि दूत्यं उप ब्रूषे यजसि अ-
ध्वरिऽयसि ॥११॥ इमाः अस्मै मतयः वाचः अस्मत् आ ऋचः
गिरः सुऽस्तुतयः सं अग्मत वसुऽयवः वसवे जातऽवेदसे वृद्धासु
चित् वर्धनः यासु चाकनत् ॥१२॥ इमां प्रत्नाय सुऽस्तुतिं नवी-
यसीं वोचेयं अस्मै उशते शृणोतु नः भूयाः अंतरा हृदि अस्य नि-
ऽस्पृशे जायाऽइव पत्ये उशती सुऽवासाः ॥१३॥ यस्मिन् अश्वासः



Digitized by Google

ऋषभास उक्षणो वशा मेषा अवसृष्टास आहुताः। कीलालपे सोमपृष्ठाय वेधसे हृदा मतिं जनये चारुमग्नये ॥१४॥ अहाव्यग्ने हविरास्ये ते स्रुचीव घृतं चम्वीव सोमः। वाजसनिं रयिमस्मे सुवीरं प्रशस्तं धेहि यशसं बृहंतं ॥१५॥२२॥

---

॥९२॥ १—१५ शार्यातो मानवः ॥ विश्वे देवाः ॥ जगती ॥

॥९२॥ यज्ञस्य वो रथ्यं विश्पतिं विशां होतारमक्तोरतिथिं विभावसुं। शोचञ्छुष्कासु हरिणीषु जर्भुरद्वृषा केतुर्यजतो द्यामशायत ॥१॥ इममंजस्पामुभये अकृण्वत धर्माणमग्निं विदथस्य साधनं। अक्तुं न यह्वमुषसः पुरोहितं तनूनपातमरुषस्य निंसते ॥२॥ बळस्य नीथा वि पणेश्च मन्महे वया अस्य प्रहुता आसुरत्तवे। यदा घोरासो अमृतत्वमाशतादिज्जनस्य दैव्यस्य चर्किरन् ॥३॥ ऋतस्य हि प्रसितिर्द्यौरुरु व्यचो नमो मह्य१रमतिः पनीयसी। इंद्रो मित्रो वरुणः सं चिकित्रिरेऽथो भगः सविता पूतदक्षसः ॥४॥ प्र रुद्रेण ययिना यंति सिंधवस्तिरो महीमरमतिं दधन्विरे। येभिः परिज्मा परियन्नुरु ज्रयो वि रोरुवज्जठरे विश्वमुक्षते ॥५॥२३॥ क्राणा रुद्रा मरुतो विश्वकृष्टयो दिवः श्येनासो असुरस्य नीळयः। तेभिश्चष्टे वरुणो मित्रो अर्यमेंद्रो देवेभिरर्वशेभिरर्वशः ॥६॥ इंद्रे भुजं शशमानास आशत सूरो दृशीके वृषणश्च पौंस्ये। प्र ये न्वस्यार्हणा ततक्षिरे युजं वज्रं नृषदनेषु कारवः ॥७॥ सूरश्चिदा हरितो अस्य रीरमदिंद्रादा कश्चिद्भयते तवीयसः। भीमस्य वृष्णो जठरादभिश्वसो दिवेदिवे सहुरिः स्तन्नबाधितः ॥८॥ स्तोमं वो अद्य रुद्राय शिक्वसे क्षयद्वीराय



Digitized by Google

घृषभासः उक्षणः वशाः मेषाः अवऽसृष्टासः आऽहुताः कीलालऽपे सोमऽपृष्ठाय वेधसे हृदा मतिं जनये चारुं अग्नये ॥१४॥ अहावि अग्ने हविः आस्ये ते स्रुचिऽइव घृतं चम्विऽइव सोमः वाजऽसनिं रयिं अस्मे सुऽवीरं प्रऽशस्तं धेहि यशसं बृहंतं ॥१५॥२२॥

---

॥९२॥ यज्ञस्य वः रथ्यं विश्पतिं विशां होतारं अक्तोः अतिथिं विभाऽवसुं शोचन् शुष्कासु हरिणीषु जर्भुरत् वृषा केतुः यजतः द्यां अशायत ॥१॥ इमं अंजःऽपां उभये अकृण्वत धर्माणं अग्निं विदथस्य साधनं अक्तुं न यह्वं उषसः पुरःऽहितं तनूऽनपातं अरुषस्य निंसते ॥२॥ बट् अस्य नीथा वि पणेः च मन्महे वयाः अस्य प्रऽहुताः आसुः अत्तवे यदा घोरासः अमृतऽत्वं आशत आत् इत् जनस्य दैव्यस्य चर्किरन् ॥३॥ ऋतस्य हि प्रऽसितिः द्यौः उरु व्यचः नमः मही अरमतिः पनीयसी इंद्रः मित्रः वरुणः सं चिकित्रिरे अथो भगः सविता पूतऽदक्षसः ॥४॥ प्र रुद्रेण ययिना यंति सिंधवः तिरः महीं अरमतिं दधन्विरे येभिः परिऽज्मा परिऽयन् उरु ज्रयः वि रोरुवत् जठरे विश्वं उक्षते ॥५॥२३॥ क्राणाः रुद्राः मरुतः विश्वऽकृष्टयः दिवः श्येनासः असुरस्य नीळयः तेभिः चष्टे वरुणः मित्रः अर्यमा इंद्रः देवेभिः अर्वशेभिः अर्वशः ॥६॥ इंद्रे भुजं शशमानासः आशत सूरः दृशीके वृषणः च पौंस्ये प्र ये नु अस्य अर्हणा ततक्षिरे युजं वज्रं नृऽसदनेषु कारवः ॥७॥ सूरः चित् आ हरितः अस्य रीरमत् इंद्रात् आ कः चित् भयते तवीयसः भीमस्य वृष्णः जठरात् अभिऽश्वसः दिवेऽदिवे सहुरिः स्तन् अबाधितः ॥८॥ स्तोमं वः अद्य रुद्राय शिक्वसे क्षयत्ऽवीराय

नमसा दिदिष्टन । येभिः शिवः स्ववाँ एवयावभिर्दिवः सिषक्ति
स्वयशा निकामभिः ॥९॥ ते हि प्रजाया अभरंत वि श्रवो बृह-
स्पतिर्वृषभः सोमजामयः । यज्ञैरथर्वा प्रथमो वि धारयद्देवा द-
क्षैर्भृगवः सं चिकित्रिरे ॥१०॥२४॥ ते हि द्यावापृथिवी भूरिरे-
तसा नराशंसश्चतुरंगो यमोऽदितिः । देवस्त्वष्टा द्रविणोदा ऋ-
भुक्षणः प्र रोदसी मरुतो विष्णुरर्हिरे ॥११॥ उत स्य न उशिजा-
मुर्विया कविरहिः शृणोतु बुध्न्यो३ हवीमनि । सूर्यामासा वि-
चरंता दिविक्षिता धिया शमीनहुषी अस्य बोधतं ॥१२॥ प्र नः
पूषा चरथं विश्वदेव्योऽपां नपादवतु वायुरिष्टये । आत्मानं
वस्यो अभि वातमर्चत तदश्विना सुहवा यामनि श्रुतं ॥१३॥
विशामासामभयानामधिक्षितं गीर्भिरु स्वयशसं गृणीमसि ।
ग्नाभिर्विश्वाभिरदितिमनर्वणमक्तोर्युवानं नृमणा अधा पतिं
॥१४॥ रेभदत्र जनुषा पूर्वो अंगिरा ग्रावाण ऊर्ध्वा अभि चक्षु-
रध्वरं । येभिर्विहाया अभवद्विचक्षणः पाथः सुमेकं स्वधितिर्व-
नन्वति ॥१५॥२५॥

---

॥९३॥ १–१५ तान्वः पार्थ्यः ॥ विश्वे देवाः ॥ १.४–८.१०.१२.१४ प्रस्तारपंक्तिः ।
२.३.१३ अनुष्टुप् । ९ अक्षरैःपंक्तिः । ११ न्यंकुसारिणी । १५ पुरस्ताद्बृहती ॥

॥९३॥ महि द्यावापृथिवी भूतमुर्वी नारी यह्वी न रोदसी
सदं नः । तेभिर्नः पातं सह्यस एभिर्नः पातं शूषणि ॥१॥
यज्ञेयज्ञे स मर्त्यो देवान्त्सपर्यति । यः सुम्नैर्दीर्घश्रुत्तम आ-
विवासात्येनान् ॥२॥ विश्वेषामिरज्यवो देवानां वार्महः ।
विश्वे हि विश्वमहसो विश्वे यज्ञेषु यज्ञियाः ॥३॥ ते घा राजानो
अमृतस्य मंद्रा अर्यमा मित्रो वरुणः परिज्मा । कद्रुद्रो नृणां
स्तुतो मरुतः पूषणो भगः ॥४॥ उत नो नक्तमपां वृषण्वसू



Digitized by Google

नमसा दिदिष्टन येभिः शिवः स्वऽवान् एवयावऽभिः दिवः सिसक्ति स्वऽयशाः निकामऽभिः ॥९॥ ते हि प्रऽजायाः अभरंत वि श्रवः बृहस्पतिः वृषभः सोमऽजामयः यज्ञैः अथर्वा प्रथमः वि धारयत् देवाः दक्षैः भृगवः सं चिकित्रिरे ॥१०॥२४॥ ते हि द्यावापृथिवी भूरिऽरेतसा नराशंसः चतुःऽअंगः यमः अदितिः देवः त्वष्टा द्रविणःऽदाः ऋभुक्षणः प्र रोदसी मरुतः विष्णुः अर्हिरे ॥११॥ उत स्यः नः उशिजां उर्विया कविः अहिः शृणोतु बुध्न्यः हवीमनि सूर्यामासा विऽचरंता दिविऽक्षिता धिया शमीनहुषी अस्य बोधतं ॥१२॥ प्र नः पूषा चरथं विश्वऽदेव्यः अपां नपात् अवतु वायुः इष्टये आत्मानं वस्यः अभि वातं अर्चत तत् अश्विना सुऽहवा यामनि श्रुतं ॥१३॥ विशां आसां अभयानां अधिऽक्षितं गीःऽभिः ऊं स्वऽयशसं गृणीमसि ग्नाभिः विश्वाभिः अदितिं अनर्वणं अक्तोः युवानं नृऽमनाः अध पतिं ॥१४॥ रेभत् अत्र जनुषा पूर्वः अंगिराः ग्रावाणः ऊर्ध्वाः अभि चक्षुः अध्वरं येभिः विऽहायाः अभवत् विऽचक्षणः पाथः सुऽमेकं स्वऽधितिः वनन्ऽवति ॥१५॥२५॥

---

॥९३॥ महि द्यावापृथिवी भूतं उर्वी नारी यह्वी न रोदसी सदं नः तेभिः नः पातं सह्यसः एभिः नः पातं शूषणि ॥१॥ यज्ञेऽयज्ञे सः मर्त्यः देवान् सपर्यति यः सुम्नैः दीर्घश्रुत्ऽतमः आऽविवासाति एनान् ॥२॥ विश्वेषां इरज्यवः देवानां वाः महः विश्वे हि विश्वऽमहसः विश्वे यज्ञेषु यज्ञियाः ॥३॥ ते घ राजानः अमृतस्य मंद्राः अर्यमा मित्रः वरुणः परिऽज्मा कत् रुद्रः नृणां स्तुतः मरुतः पूषणः भगः ॥४॥ उत नः नक्तं अपां वृषण्ऽवसू॰



Digitized by Google

सूर्यामासा सदनाय सधन्या। सचा यत्सादेषामहिर्बुध्नेषु बुध्न्यः ॥५॥२६॥ उत नो देवावश्विना शुभस्पती धामभिर्मित्रावरुणा उरुष्यतां। महः स राय एषतेऽति धन्वेव दुरिता ॥६॥ उत नो रुद्रा चिन्मृळतामश्विना विश्वे देवासो रथस्पतिर्भगः। ऋभुर्वाज ऋभुक्षणः परिज्मा विश्ववेदसः ॥७॥ ऋभुर्ऋभुक्षा ऋभुर्विधतो मद आ ते हरी जूजुवानस्य वाजिना। दुष्टरं यस्य साम चिदृधग्यज्ञो न मानुषः ॥८॥ कृधी नो अह्रयो देव सवितः स च स्तुषे मघोनां। सहो न इंद्रो वह्निभिर्न्येषां चर्षणीनां चक्रं रश्मिं न योयुवे ॥९॥ ऐषु द्यावापृथिवी धातं महदस्मे वीरेषु विश्वचर्षणि श्रवः। पृक्षं वाजस्य सातये पृक्षं रायोत तुर्वणे ॥१०॥२७॥ एतं शंसमिंद्रास्मयुष्ट्वं कूचित्संतं सहसावन्नभिष्टये सदा पाह्यभिष्टये। मेदतां वेदता वसो ॥११॥ एतं मे स्तोमं तना न सूर्ये द्युतद्यामानं वावृधंत नृणां। संवननं नाश्व्यं तष्टेवानपच्युतं ॥१२॥ वावर्त येषां राया युक्तैषां हिरण्ययी। नेमधिता न पौंस्या वृथेव विष्टांता ॥१३॥ प्र तद्दुःशीमे पृथवाने वेने प्र रामे वोचमसुरे मघवत्सु। ये युक्त्वाय पंच शतास्मयु पथा विश्राव्येषां ॥१४॥ अधीन्न्वत्र सप्ततिं च सप्त च। सद्यो दिदिष्ट तान्वः सद्यो दिदिष्ट पार्थ्यः सद्यो दिदिष्ट मायवः ॥१५॥२८॥

---

॥९४॥ १—१४ अर्बुदः काद्रवेयः सर्पः ॥ ग्रावाणः ॥ १—४. ६. ८—१३ जगती । ५. ७. १४ त्रिष्टुप् ॥

॥९४॥ प्रैते वदंतु प्र वयं वदाम ग्रावभ्यो वाचं वदता वदद्भ्यः। यदद्रयः पर्वताः साकमाशवः श्लोकं घोषं भरथेंद्राय सोमिनः ॥१॥ एते वदंति शतवत्सहस्रवदभि क्रंदंति हरितेभिरासभिः। विष्ट्वी ग्रावाणः सुकृतः सुकृत्यया होतु-



Digitized by Google

सूर्यामासा सदनाय सऽधन्या सचा यत् सादि एषां अहिः बुध्नेषु
बुध्न्यः ॥५॥२६॥ उत नः देवौ अश्विना शुभः पती' धामऽभिः मि-
त्रावरुणा उरुष्यतां महः सः रायः आ ईषते अति धन्वऽइव दुः-
ऽइता ॥६॥ उत नः रुद्रा चित् मृळतां अश्विना विश्वे देवासः रथः-
पतिः भगः ऋभुः वाजः ऋभुक्षणः परिऽज्मा विश्वऽवेदसः ॥७॥
ऋभुः ऋभुक्षाः ऋभुः विधतः मदः आ ते हरी' जूजुवानस्य वा-
जिना दुस्तरं यस्य साम चित् ऋधक् यज्ञः न मानुषः ॥८॥ कृधि
नः अह्रयः देव सवितः' सः च स्तुषे मघोनां सहो' नः इंद्रः वह्नि-
ऽभिः नि एषां चर्षणीनां चक्रं रश्मिं न योयुवे ॥९॥ आ एषु द्या-
वापृथिवी' धातं महत् अस्मे' वीरेषु विश्वऽचर्षणि श्रवः पृक्षं
वाजस्य सातये पृक्षं राया उत तुर्वणे ॥१०॥२७॥ एतं शंसं इंद्र अ-
स्मऽयुः त्वं कूऽचित् संतं सहसाऽवन् अभिष्टये सदा पाहि अभि-
ष्टये मेदतां वेदता वसो' ॥११॥ एतं मे स्तोमं तना न सूर्ये द्युतत्-
ऽयामानं ववृधंत नृणां संऽवननं न अश्व्यं तष्टाऽइव अनपऽच्युतं
॥१२॥ ववर्त येषां राया युक्ता एषां हिरण्ययी नेमऽधिता न पौं-
स्या वृथाऽइव विष्टऽअंता ॥१३॥ प्र तत् दुःऽशीमे पृथवाने वेने
प्र रामे वोचं असुरे मघवत्ऽसु ये युक्त्वाय पंच शता अस्मऽयु प-
था विऽश्रावि एषां ॥१४॥ अधि इत् नु अत्र सप्ततिं च सप्त च सद्यः
दिदिष्ट तान्वः सद्यः दिदिष्ट पार्थ्यः सद्यः दिदिष्ट मायवः ॥१५॥२८॥

---

॥९४॥ प्र एते वदंतु प्र वयं वदाम ग्रावऽभ्यः वाचं वदत वदत्-
ऽभ्यः यत् अद्रयः पर्वताः साकं आशवः श्लोकं घोषं भरथ इंद्राय
सोमिनः ॥१॥ एते वदंति शतऽवत् सहस्रऽवत् अभि क्रंदंति ह-
रितेभिः आसऽभिः विष्ट्वी ग्रावाणः सुऽकृतः सुऽकृत्यया होतुः



Digitized by Google

ष्चित्पूर्वे ह॒विर॑द्य॒माश॑त ॥ २ ॥ ए॒ते व॑दं॒त्यवि॑दन्न॒ना मधु॒ न्यूं॑-
खयंते॒ अधि॑ प॒क्व आमि॑षि । वृ॒क्षस्य॒ शाखा॑मरु॒णस्य॒ बप्सं॑-
त॒स्ते सूभ॑र्वा वृष॒भाः प्रेम॑राविषुः ॥ ३ ॥ बृ॒हद्व॑दंति मदि॒रेण॑
मं॒दिनेंद्रं॒ क्रोशं॑तोऽविदन्न॒ना मधु॑ । सं॒रभ्या॒ धीराः॒ स्वसृ॑भि-
रनर्तिषुराघो॒षयं॑तः पृथि॒वीमु॑प॒ब्दिभिः॑ ॥ ४ ॥ सु॒प॒र्णा वाच॑-
मक्र॒तोप॒ द्यव्या॑ख॒रे कृष्णा॑ इषि॒रा अ॑नर्तिषुः । न्य१ङ्नि॑
यं॒त्युप॑रस्य निष्कृ॒तं पु॒रू रेतो॑ दधिरे सूर्य॒श्वितः॑ ॥ ५ ॥ २९ ॥
उ॒ग्रा इ॑व प्र॒वहं॑तः स॒माय॑मुः सा॒कं यु॒क्ता वृष॑णो॒ बिभ्र॑तो॒
धुरः॑ । यच्छ्व॒संतो॑ जग्रसा॒ना अरा॑विषुः शृ॒ण्व ए॑षां प्रो॒थथो॒
अर्व॑तामिव ॥ ६ ॥ दशा॑वनिभ्यो॒ दश॑कक्ष्येभ्यो॒ दश॑योक्त्रेभ्यो॒
दश॑योजनेभ्यः । दशा॑भीशुभ्यो॒ अर्च॑ता॒जरे॑भ्यो॒ दश॒ धुरो॒ दश॑
यु॒क्ता वह॑द्भ्यः ॥ ७ ॥ ते अद्र॑यो॒ दश॑यंत्रास आ॒शव॒स्तेषा॑मा॒धानं॒
पर्ये॑ति हर्य॒तं । त ऊं॑ सु॒तस्य॑ सो॒म्यस्यांध॑सों॒ऽशोः पी॒यूषं॑ प्रथ॒-
मस्य॑ भेजिरे ॥ ८ ॥ ते सो॑मादो॒ हरी॒ इंद्र॑स्य निंसतेंऽशुं॑ दु॒हंतो॒
अध्या॑सते॒ गवि॑ । तेभि॑र्दु॒ग्धं प॑पि॒वान्त्सो॒म्यं मध्विंद्रो॑ वर्धते॒
प्रथ॑ते वृषा॒यते॑ ॥ ९ ॥ वृषा॑ वो अं॒शुर्न किला॑ रिषाथ॒नेळा॑वंतः॒
सद॒मित्स्थ॑नाशिताः । रै॒वत्ये॑व॒ मह॑सा॒ चार॑वः स्थन॒ यस्य॑
ग्रावाणो॒ अजु॑षध्वमध्व॒रं ॥ १० ॥ ३० ॥ तृ॒दि॒ला अतृ॑दिलासो॒
अद्र॑योऽश्रम॒णा अशृ॑थिता॒ अमृ॑त्यवः । अ॒ना॒तु॒रा अ॒जराः॒
स्थाम॑विष्णवः सुपी॒वसो॒ अतृ॑षिता॒ अतृ॑ष्णजः ॥ ११ ॥ ध्रु॒वा
ए॒व वः॑ पि॒तरो॑ यु॒गेयु॑गे॒ क्षेम॑कामासः॒ सद॑सो॒ न यु॑ंजते । अ॒-
जु॒र्यासो॑ हरि॒षाचो॑ ह॒रिद्र॑व॒ आ द्यां रवे॑ण पृथि॒वीम॑शुश्रवुः
॥ १२ ॥ तदिद्व॑दं॒त्यद्र॑यो वि॒मोच॑ने॒ याम॑न्नंज॒स्पा इ॑व॒ घेदु॑प॒ब्दि-
भिः॑ । वप॑न्तो॒ बीज॑मिव धान्या॒कृतः॑ पृं॒चंति॒ सोमं॒ न मि॑नंति॒



Digitized by Google

चित् पूर्वे हृविःऽअद्यं आशत ॥२॥ एते वदंति अविदन् अना मधु नि ऊंखयंते अधि पक्वे आमिषि वृक्षस्य शाखां अरुणस्य बप्सतः ते सूभर्वाः वृषभाः प्र ईं अराविषुः ॥३॥ बृहत् वदंति मदिरेण मंदिना इंद्रं क्रोशंतः अविदन् अना मधु संऽरभ्य धीराः स्वसृऽभिः अनर्तिषुः आऽघोषयंतः पृथिवीं उपब्दिऽभिः ॥४॥ सुऽपर्णाः वाचं अक्रत उप द्यवि आऽखरे कृष्णाः इषिराः अनर्तिषुः न्यक् नि यंति उपरस्य निःऽकृतं पुरु रेतः दधिरे सूर्यऽश्वितः ॥५॥२९॥ उग्राःऽइव प्रऽवहंतः संऽआयमुः साकं युक्ताः वृषणः बिभ्रतः धुरः यत् श्वसंतः जग्रसानाः अराविषुः शृण्वे एषां प्रोथथः अर्वताऽइव ॥६॥ दशावनिऽभ्यः दशऽकक्ष्येभ्यः दशऽयोक्त्रेभ्यः दशऽयोजनेभ्यः दशाभीशुऽभ्यः अर्चत अजरेभ्यः दश धुरः दश युक्ताः वहत्ऽभ्यः ॥७॥ ते अद्रयः दशऽयंत्रासः आशवः तेषां आऽधानं परि एति हर्यतं ते ऊं सुतस्य सोम्यस्य अंधसः अंशोः पीयूषं प्रथमस्य भेजिरे ॥८॥ ते सोमऽअदः हरी इंद्रस्य निंसते अंशुं दुहंतः अधि आसते गवि तेभिः दुग्धं पपिऽवान् सोम्यं मधु इंद्रः वर्धते प्रथते वृषऽयते ॥९॥ वृषा वः अंशुः न किल रिषाथन इळाऽवंतः सदं इत् स्थन आशिताः रेवत्याऽइव महसा चारवः स्थन यस्य ग्रावाणः अजुषध्वं अध्वरं ॥१०॥३०॥ तृदिलाः अतृदिलासः अद्रयः अश्रमणाः अशृथिताः अमृत्यवः अनातुराः अजराः स्थ अमविष्णवः सुऽपीवसः अतृषिताः अतृष्णऽजः ॥११॥ ध्रुवाः एव वः पितरः युगेऽयुगे क्षेमऽकामासः सदसः न युंजते अजुर्यासः हरिऽसाचः हरिद्रवः आ द्यां रवेण पृथिवीं अशुश्रवुः ॥१२॥ तत् इत् वदंति अद्रयः विऽमोचने यामन् अंजःपाःऽइव घ इत् उपब्दिऽभिः वपंतः बीजंऽइव धान्यऽकृतः पृंचंति सोमं न मिनंति



Digitized by Google

वप्सतः॥१३॥ सुते अध्वरे अधि वाचमक्रता क्रीळयो न मातरं
तुदंतः। वि षू मुंचा सुषुवुषो मनीषां वि वर्तंतामद्रय१श्चायमा-
नाः॥१४॥३१॥४॥

---

॥९५॥ १. ३. ६. ८–१०. १२. १४. १७ पुरूरवा ऐळः। २. ४. ५. ७. ११. १३. १५. १६. १८ उर्वशी॥ १. ३. ६. ८–१०. १२. १४. १७ उर्वशी। २. ४. ५. ७. ११. १३. १५. १६. १८ पुरूरवा ऐळः॥ त्रिष्टुप्॥

॥९५॥ हये जाये मनसा तिष्ठ घोरे वचांसि मिश्रा कृणवावहै
नु। न नौ मंत्रा अनुदितास एते मयस्करन्परतरे चनाहन्॥१॥
किमेता वाचा कृणवा तवाहं प्राक्रमिषमुषसामग्रियेव। पुरू-
रवः पुनरस्तं परेहि दुरापना वात इवाहमस्मि॥२॥ इषुर्न श्रिय
इषुधेरसना गोषाः शतसा न रंहिः। अवीरे क्रतौ वि दविद्युत-
न्नोरा न मायुं चितयंत धुनयः॥३॥ सा वसु दधती श्वशुराय वय
उषो यदि वष्ट्यंतिगृहात्। अस्तं ननक्षे यस्मिञ्चाकन्दिवा नक्तं
श्नथिता वैतसेन॥४॥ त्रिः स्म माह्नः श्नथयो वैतसेनोत स्म
मेऽव्यत्यै पृणासि। पुरूरवोऽनु ते केतमायं राजा मे वीर त-
न्व१स्तदासीः॥५॥१॥ या सुजूर्णिः श्रेणिः सुम्नआपिर्ह्रदेच-
क्षुर्न ग्रंथिनी चरण्युः। ता अंजयोऽरुणयो न सस्रुः श्रिये गावो
न धेनवोऽनवंत॥६॥ समस्मिञ्जायमान आसत ग्ना उतेम-
वर्धन्नद्य१ःस्वगूर्ताः। महे यत्त्वा पुरूरवो रणायावर्धयन्दस्यु-
हत्याय देवाः॥७॥ सचा यदासु जहतीष्वत्कममानुषीषु मानुषो
निषेवे। अप स्म मत्तरसंती न भुज्युस्ता अत्रसन्रथस्पृशो ना-
श्वाः॥८॥ यदासु मर्तो अमृतासु निस्पृक्सं क्षोणीभिः क्र-
तुभिर्न पृंक्ते। ता आतयो न तन्वः शुंभत स्वा अश्वासो न
क्रीळयो दंदशानाः॥९॥ विद्युन्न या पतंती दविद्योद्भरंती मे
अप्या काम्यानि। जनिष्टो अपो नर्यः सुजातः प्रोर्वशी तिरत



Digitized by Google

यस॑तः ॥१३॥ सुते अ॑ध्वरे अधि॑ वाचँ॑ अक्रत आ क्रीळ॑यः न मा॒-
तरं॑ तुदंतः॑ वि सु मुं॒च सु॒सुऽवु॑षः मनी॒षां वि व॑र्तंतां॒ अद्र॑यः चा-
यमानाः ॥१४॥३१॥४॥

---

॥ ९५ ॥ हये जाये॑ मन॑सा तिष्ठ॑ घोरे॒ वचां॑सि मि॒श्रा कृ॒णवा॑वहै
नु न नौ॒ मंत्राः॑ अनु॑दितासः एते मयः॑ कर॒न् पर॑ऽतरे च॒न अह॑न्
॥१॥ किं ए॒ता वा॒चा कृ॒णव॒ तव॑ अ॒हं प्र अ॒क्र॒मि॒षं उ॒षसां॑ अ॒प्रि॒या-
ऽइव पु॒रू॒रवः पुनः॑ अ॒स्तं परा॑ इ॒हि दुः॒ऽआ॒प॒ना वातः॑ऽइव अहं
अ॒स्मि॒ ॥२॥ इषुः॑ न श्रि॒ये इ॒षु॒ऽधेः अ॒स॒ना गोऽसाः श॒त॒ऽसाः न
रंहिः॑ अवी॑रे क्रतौ॑ वि द॒वि॒द्यु॒त॒त् न उरा॑ न मा॒यु चि॒त॒यं॒त धुनयः॑
॥३॥ सा वसु॑ दध॑ती श्वशु॑राय वयः॑ उषः॑ यदि॑ वष्टि॑ अंति॑ऽगृहात्
अ॒स्तं न॒न॒क्षे यस्मि॑न् चा॒कन् दिवा॑ नक्तं॑ श्नथि॒ता वैत॒सेन॑ ॥४॥
त्रिः स्म॒ मा॒ अह्नः॑ श्नथ॒यः वैत॒सेन॑ उत स्म॒ मे॒ अव्य॑त्यै पृणा॒सि पुरू-
रवः अनु॑ ते के॒तं आय॒ं राजा॑ मे वी॒र॒ तन्वः॑ तत् आ॒सीः ॥५॥१॥
या सु॒ऽजू॒र्णिः श्रेणिः॑ सुम्नेऽआ॑पिः ह्र॒देऽचक्षुः न ग्रंथिनी॑ चरण्युः
ताः अं॒जयः॑ अ॒रु॒णयः॑ न स॒स्रुः॒ श्रि॒ये गावः॑ न धे॒नवः॑ अ॒न॒वं॒त
॥६॥ सं अ॒स्मि॒न् जाय॑माने आ॒स॒त ग्नाः उ॒त ई॒ अ॒व॒र्ध॒न् न॒द्यः
स्व॒ऽगू॑र्ताः म॒हे यत् त्वा॒ पु॒रू॒र॒वः रणा॑य अव॑र्धयन् द॒स्यु॒ऽह॒त्याय
दे॒वाः ॥७॥ सचा॑ यत् आसु॒ जह॑तीषु अत्कं॑ अमा॑नुषीषु मानु॑षः नि-
ऽसेवे॑ अप॑ स्म॒ मत् त॒रसं॑ती न भु॒ज्युः ताः अ॒त्र॒स॒न् र॒थ॒ऽस्पृशः न
अश्वाः ॥८॥ यत् आसु॒ मर्तः॑ अमृ॑तासु नि॒ऽस्पृक् सं क्षोणी॑भिः क्र-
तुऽभिः न पृं॒क्ते ताः आ॒तयः॑ न त॒न्वः॑ शुं॒भ॒त स्वाः अश्वा॑सः न क्री॒-
ळयः॑ दंद॑शानाः ॥९॥ वि॒ऽद्यु॒त् न या पत॑ंती दवि॑द्योत् भर॑ंती मे॒
अप्या॑ काम्या॑नि जनि॑ष्टो अ॒पः नर्यः॑ सुऽजा॑तः प्र उ॒र्वशी॑ ति॒र॒त



Digitized by Google

दीर्घमायुः ॥१०॥२॥ जज्ञिष इत्था गोपीथ्याय हि दधाथ तत्पु-
रूरवो म ओजः। अशासं त्वा विदुषी सस्मिन्नहन्न म आशृणोः
किमभुग्वदासि ॥११॥ कदा सूनुः पितरं जात इच्छाच्चक्रन्नाश्रु
वर्तयद्विजानन्। को दंपती समनसा वि यूयोदध यदग्निः श्वशु-
रेषु दीदयत् ॥१२॥ प्रति ब्रवाणि वर्तयते अश्रु चक्रन्न क्रंददाध्ये
शिवायै। प्र तत्ते हिनवा यत्ते अस्मे परेह्यस्तं नहि मूर मापः
॥१३॥ सुदेवो अद्य प्रपतेदनावृत्परावतं परमां गंतवा उ। अधा
शयीत निर्ऋतेरुपस्थेऽधैनं वृका रभसासो अद्युः ॥१४॥ पुरूर-
वो मा मृथा मा प्र पप्तो मा त्वा वृकासो अशिवास उ क्षन्। न
वै स्त्रैणानि सख्यानि संति सालावृकाणां हृदयान्येता ॥१५॥३॥
यद्विरूपाचरं मर्त्येष्ववसं रात्रीः शरदश्चतस्रः। घृतस्य स्तोकं
सकृदह्न आश्नां तादेवेदं तातृपाणा चरामि ॥१६॥ अंतरिक्षप्रां
रजसो विमानीमुप शिक्षाम्युर्वशीं वसिष्ठः। उप त्वा रातिः
सुकृतस्य तिष्ठान्नि वर्तस्व हृदयं तप्यते मे ॥१७॥ इति त्वा
देवा इम आहुरैळ यथेमेतद्भवसि मृत्युबंधुः। प्रजा ते देवान्ह-
विषा यजाति स्वर्ग उ त्वमपि मादयासे ॥१८॥४॥

---

॥९६॥ १—१३ बरुः सर्वहरिर्वैंद्रः ॥ हरिस्तुतिः ॥ १—११ जगती । १२.१३ त्रिष्टुप् ॥

॥९६॥ प्र ते महे विदथे शंसिषं हरी प्र ते वन्वे वनुषो हर्यतं
मदं। घृतं न यो हरिभिश्चारु सेचत आ त्वा विशंतु हरिवर्पसं
गिरः ॥१॥ हरिं हि योनिमभि ये समस्वरन्हिन्वंतो हरी दिव्यं
यथा सदः। आ यं पृणंति हरिभिर्न धेनव इंद्राय शूषं हरि-
वंतमर्चत ॥२॥ सो अस्य वज्रो हरितो य आयसो हरिर्नि-



Digitized by Google

दीर्घं आयुः ॥१०॥२॥ जज्ञिषे इत्था गोऽपीथ्याय हि दधाथ तत्
पुरूरवः मे ओजः अशासं त्वा विदुषी सस्मिन् अहन् न मे आ
अशृणोः किं अभुक् वदासि ॥११॥ कदा सूनुः पितरं जातः इच्छात्
चक्रन् न अश्रु वर्तयत् विऽजानन् कः दंऽपती॰ सऽमनसा वि
यूयोत् अध यत् अग्निः श्वशुरेषु दीदयत् ॥१२॥ प्रति ब्रवाणि वर्त-
यते अश्रु चक्रन् न क्रंदत् आऽध्ये शिवायै प्र तत् ते हिनव यत् ते
अस्मे परा इहि अस्तं नहि मूर मा आपः ॥१३॥ सुऽदेवः अद्य प्र-
ऽपतेत् अनावृत् पराऽवतं परमां गंतवै ऊं अध शयीत निःऽऋ-
तेः उपऽस्थे अध एनं वृकाः रभसासः अद्युः ॥१४॥ पुरूरवः मा मृ-
थाः मा प्र पप्तः मा त्वा वृकासः अशिवासः ऊं क्षन् न वै स्त्रैणानि
सख्यानि संति सालावृकाणां हृदयानि एता ॥१५॥३॥ यत् वि-
ऽरूपा अचरं मर्त्येषु अवसं रात्रीः शरदः चतस्रः घृतस्य स्तोकं
सकृत् अह्नः आश्नां तात् एव इदं ततृपाणा चरामि ॥१६॥ अंत-
रिक्षऽप्रां रजसः विऽमानीं उप शिक्षामि उर्वशीं वसिष्ठः उप
त्वा रातिः सुऽकृतस्य तिष्ठात् नि वर्तस्व हृदयं तप्यते मे ॥१७॥
इति त्वा देवाः इमे आहुः ऐळ यथा ईं एतत् भवसि मृत्युऽबंधुः
प्रऽजा ते देवान् हविषा यजाति स्वःऽगे ऊं त्वं अपि मादयासे
॥१८॥४॥

---

॥९६॥ प्र ते महे विदथे शंसिषं हरी प्र ते वन्वे वनुषः हर्यतं मदं
घृतं न यः हरिऽभिः चारु सेचते आ त्वा विशंतु हरिऽवर्पसं गिरः
॥१॥ हरिं हि योनिं अभि ये संऽअस्वरन् हिन्वंतः हरी दिव्यं
यथा सदः आ यं पृणंति हरिऽभिः न धेनवः इंद्राय शूषं हरि-
ऽवंतं अर्चत ॥२॥ सः अस्य वज्रः हरितः यः आयसः हरिः नि-



Digitized by Google

कामो हरिरा गभस्त्योः। द्युम्नी सुशिप्रो हरिमन्युसायक इंद्रे नि रूपा हरिता मिमिक्षिरे ॥३॥ दिवि न केतुरधि धायि हर्यतो विव्यचद्वज्रो हरितो न रंह्या। तुददहिं हरिशिप्रो य आयसः सहस्रशोका अभवद्धरिंभरः ॥४॥ त्वंत्वमहर्यथा उपस्तुतः पूर्वेभिरिंद्र हरिकेश यज्वभिः। त्वं हर्यसि तव विश्वमुक्थ्य१मसामि राधो हरिजात हर्यतं ॥५॥५॥ ता वज्रिणं मंदिनं स्तोम्यं मद इंद्रं रथे वहतो हर्यता हरी। पुरूण्यस्मै सवनानि हर्यत इंद्राय सोमा हरयो दधन्विरे ॥६॥ अरं कामाय हरयो दधन्विरे स्थिराय हिन्वन्हरयो हरी तुरा। अर्वद्भिर्यो हरिभिर्जोषमीयते सो अस्य कामं हरिवंतमानशे ॥७॥ हरिश्मशारुर्हरिकेश आयसस्तुरस्पेये यो हरिपा अवर्धत। अर्वद्भिर्यो हरिभिर्वाजिनीवसुरति विश्वा दुरिता पारिषद्धरी ॥८॥ स्रुवेव यस्य हरिणी विपेततुः शिप्रे वाजाय हरिणी दविध्वतः। प्र यत्कृते चमसे मर्मृजद्धरी पीत्वा मदस्य हर्यतस्यांधसः ॥९॥ उत स्म सद्म हर्यतस्य पस्त्यो३रत्यो न वाजं हरिवाँ अचिक्रदत्। मही चिद्धि धिषणाहर्यदोजसा बृहद्वयो दधिषे हर्यतश्चिदा ॥१०॥६॥ आ रोदसी हर्यमाणो महित्वा नव्यंनव्यं हर्यसि मन्म नु प्रियं। प्र पस्त्यमसुर हर्यतं गोराविष्कृधि हरये सूर्याय ॥११॥ आ त्वा हर्यंतं प्रयुजो जनानां रथे वहंतु हरिशिप्रमिंद्र। पिबा यथा प्रतिभृतस्य मध्वो हर्यन्यज्ञं सधमादे दशोणिं ॥१२॥ अपाः पूर्वेषां हरिवः सुतानामथो इदं सवनं केवलं ते। ममद्धि सोमं मधुमंतमिंद्र सत्रा वृषञ्जठर आ वृषस्व ॥१३॥७॥



Digitized by Google

ऽकामः हरिः आ गभस्त्योः द्युम्नी सुऽशिप्रः हरिमन्युऽसायकः
इंद्रे नि रूपा हरिता मिमिक्षिरे ॥३॥ दिवि न केतुः अधि धायि
हर्यतः विऽव्यचत् वज्रः हरितः न रंह्या तुदत् अहिं हरिऽशिप्रः यः
आयसः सहस्रऽशोकाः अभवत् हरिंऽभरः ॥४॥ त्वंऽत्वं अहर्यथाः
उपऽस्तुतः पूर्वेभिः इंद्र हरिऽकेश यज्वंऽभिः त्वं हर्यसि तव विश्वं
उक्थ्यं असामि राधः हरिऽजात हर्यतं ॥५॥५॥ ता वज्रिणं मंदिनं
स्तोम्यं मदे इंद्रं रथे वहतः हर्यता हरी' पुरूणि अस्मै सवनानि
हर्यते इंद्राय सोमाः हरयः दधन्विरे ॥६॥ अरं कामाय हरयः द-
धन्विरे स्थिराय हिन्वन् हरयः हरी' तुरा अर्वत्ऽभिः यः हरि-
ऽभिः जोषं ईयते सः अस्य कामं हरिऽवंतं आनशे ॥७॥ हरि-
ऽश्मशारुः हरिऽकेशः आयसः तुरःऽपेये यः हरिऽपाः अवर्धत
अर्वत्ऽभिः यः हरिऽभिः वाजिनीऽवसुः अति विश्वा दुःऽइता
पारिषत् हरी' ॥८॥ स्रुवाऽइव यस्य हरिणी' विऽपेततुः शिप्रे'
वाजाय हरिणी' दविध्वतः प्र यत् कृते चमसे मर्मृजत् हरी' पीत्वा
मदस्य हर्यतस्य अंधसः ॥९॥ उत स्म सद्म हर्यतस्य पस्त्योः अत्यः
न वाजं हरिऽवान् अचिक्रदत् मही चित् हि धिषणा अहर्यत्
ओजसा बृहत् वयः दधिषे हर्यतः चित् आ ॥१०॥६॥ आ रोदसी'
हर्यमाणः महिऽत्वा नव्यंऽनव्यं हर्यसि मन्म नु प्रियं प्र पस्त्यं अ-
सुर हर्यतं गोः आविः कृधि हरये सूर्याय ॥११॥ आ त्वा हर्यंतं प्र-
ऽयुजः जनानां रथे वहंतु हरिऽशिप्रं इंद्र पिब यथा प्रतिऽभृतस्य
मध्वः हर्यन् यज्ञं सधऽमादे दशऽओणिं ॥१२॥ अपाः पूर्वेषां हरि-
ऽवः सुतानां अथो' इदं सवनं केवलं ते ममद्धि सोमं मधुऽमंतं
इंद्र सत्रा वृषन् जठरे आ वृषस्व ॥१३॥७॥



Digitized by Google

॥ ९७ ॥ १–२३ भिषगाथर्वणः ॥ ओषधीस्तुतिः ॥ अनुष्टुप् ॥

॥९७॥ या ओषधीः पूर्वा जाता देवेभ्यस्त्रियुगं पुरा । मनै नु
बभ्रूणामहं शतं धामानि सप्त च ॥१॥ शतं वो अंब धामानि
सहस्रमुत वो रुहः । अधा शतक्रत्वो यूयमिमं मे अगदं कृत ॥२॥
ओषधीः प्रति मोदध्वं पुष्पवतीः प्रसूवरीः । अश्वा इव सजित्व-
रीर्वीरुधः पारयिष्ण्वः ॥३॥ ओषधीरिति मातरस्तद्वो देवीरुप
ब्रुवे । सनेयमश्वं गां वासं आत्मानं तव पूरुष ॥४॥ अश्वत्थे वो
निषदनं पर्णे वो वसतिष्कृता । गोभाज इत्किलासथ यत्सनवथ
पूरुषं ॥५॥८॥ यत्रौषधीः समग्मत राजानः समिताविव । विप्रः
स उच्यते भिषग्रक्षोहामीवचातनः ॥६॥ अश्वावतीं सोमाव-
तीमूर्जयंतीमुदोजसं । आवित्सि सर्वा ओषधीरस्मा अरिष्टता-
तये ॥७॥ उच्छुष्मा ओषधीनां गावो गोष्ठादिवेरते । धनं सनि-
ष्यंतीनामात्मानं तव पूरुष ॥८॥ इष्कृतिर्नाम वो माताथो
यूयं स्थ निष्कृतीः । सीराः पतत्रिणीः स्थन यदामयति निष्कृथ
॥९॥ अति विश्वाः परिष्ठाः स्तेन इव व्रजमक्रमुः । ओषधीः
प्राचुच्यवुर्यत्किं च तन्वो३ रपः ॥१०॥९॥ यदिमा वाजयन्नह-
मोषधीर्हस्त आदधे । आत्मा यक्ष्मस्य नश्यति पुरा जीवगृभो
यथा ॥११॥ यस्यौषधीः प्रसर्पथांगमंगं परुष्परुः । ततो यक्ष्मं
वि बाधध्व उग्रो मध्यमशीरिव ॥१२॥ साकं यक्ष्म प्र पत चाषेण
किकिदीविना । साकं वातस्य ध्राज्या साकं नश्य निहाकया
॥१३॥ अन्या वो अन्यामवत्वन्यान्यस्या उपावत । ताः सर्वाः
संविदाना इदं मे प्रावता वचः ॥१४॥ याः फलिनीर्या
अफला अपुष्पा याश्च पुष्पिणीः । बृहस्पतिप्रसूतास्ता नो
मुंचंत्वंहसः ॥१५॥१०॥ मुंचंतु मा शपथ्या३दथो वरुण्या-



Digitized by Google

॥९७॥ याः ओषधीः पूर्वाः जाताः देवेभ्यः त्रिऽयुगं पुरा मनै
नु बभ्रूणां अहं शतं धामानि सप्त च ॥१॥ शतं वः अंब धामानि
सहस्रं उत वः रुहः अध शतऽक्रत्वः यूयं इमं मे अगदं कृत ॥२॥ ओ-
षधीः प्रति मोदध्वं पुष्पऽवतीः प्रऽसूवरीः अश्वाःऽइव सऽजि-
त्वरीः वीरुधः पारयिष्ण्वः ॥३॥ ओषधीः इति मातरः तत् वः दे-
वीः उप ब्रुवे सनेयं अश्वं गां वासः आत्मानं तव पूरुष ॥४॥ अ-
श्वत्थे वः निऽसदनं पर्णे वः वसतिः कृता गोऽभाजः इत् किल
असथ यत् सनवथ पूरुषं ॥५॥८॥ यत्र ओषधीः संऽअग्मत रा-
जानः समितौऽइव विप्रः सः उच्यते भिषक् रक्षःऽहा अमीव-
ऽचातनः ॥६॥ अश्वऽवतीं सोमऽवतीं ऊर्जयंतीं उतऽओजसं आ
अवित्सि सर्वाः ओषधीः अस्मै अरिष्टऽतातये ॥७॥ उत् शुष्माः
ओषधीनां गावः गोष्ठात्ऽइव ईरते धनं सनिष्यंतीनां आत्मानं
तव पूरुष ॥८॥ इष्कृतिः नाम वः माता अथो यूयं स्थ निःऽकृ-
तीः सीराः पतत्रिणीः स्थन यत् आमयति निः कृथ ॥९॥ अति
विश्वाः परिऽस्थाः स्तेनःऽइव व्रजं अक्रमुः ओषधीः प्र अचुच्यवुः
यत् किं च तन्वः रपः ॥१०॥९॥ यत् इमाः वाजयन् अहं ओष-
धीः हस्ते आऽदधे आत्मा यक्ष्मस्य नश्यति पुरा जीवऽगृभः यथा
॥११॥ यस्य ओषधीः प्रऽसर्पथ अंगंऽअंगं परुःऽपरुः ततः यक्ष्मं
वि बाधध्वे उग्रः मध्यमशीःऽइव ॥१२॥ साकं यक्ष्म प्र पत चाषेण
किकिदीविना साकं वातस्य ध्राज्या साकं नश्य निऽहाकया
॥१३॥ अन्या वः अन्यां अवतु अन्या अन्यस्याः उप अवत ताः
सर्वाः संऽविदानाः इदं मे प्र अवत वचः ॥१४॥ याः फलिनीः
याः अफलाः अपुष्पाः याः च पुष्पिणीः बृहस्पतिऽप्रसूताः ताः
नः मुंचंतु अंहसः ॥१५॥१०॥ मुंचंतु मा शपथ्यात् अथो वरुण्यात्



Digitized by Google

दूत। अथो यमस्य पड्वीशात्सर्वस्माद्देवकिल्बिषात् ॥१६॥ अवपतंतीरवदन्दिव ओषधयस्परि। यं जीवमश्नवामहै न स रिष्याति पूरुषः ॥१७॥ या ओषधीः सोमराज्ञीर्बह्वीः शतविचक्षणाः। तासां त्वमस्युत्तमारं कामाय शं हृदे ॥१८॥ या ओषधीः सोमराज्ञीर्विष्ठिताः पृथिवीमनु। बृहस्पतिप्रसूता अस्यै सं दत्त वीर्यं ॥१९॥ मा वो रिषत्खनिता यस्मै चाहं खनामि वः। द्विपच्चतुष्पदस्माकं सर्वमस्त्वनातुरं ॥२०॥ याश्चेदमुपशृण्वंति याश्च दूरं परागताः। सर्वाः संगत्य वीरुधोऽस्यै सं दत्त वीर्यं ॥२१॥ ओषधयः सं वदंते सोमेन सह राज्ञा। यस्मै कृणोति ब्राह्मणस्तं राजन्पारयामसि ॥२२॥ त्वमुत्तमास्योषधे तव वृक्षा उपस्तयः। उपस्तिरस्तु सोऽस्माकं यो अस्माँ अभिदासति ॥२३॥११॥

---

॥ ९८ ॥ १–१२ देवापिरार्ष्टिषेणः ॥ देवाः ॥ त्रिष्टुप् ॥

॥ ९८ ॥ बृहस्पते प्रति मे देवतामिहि मित्रो वा यद्वरुणो वासि पूषा। आदित्यैर्वा यद्वसुभिर्मरुत्वान्स पर्जन्यं शंतनवे वृषाय ॥१॥ आ देवो दूतो अजिरश्चिकित्वान्त्वद्देवापे अभि मामगच्छत्। प्रतीचीनः प्रति मामा ववृत्स्व दधामि ते द्युमतीं वाचमासन् ॥२॥ अस्मे धेहि द्युमतीं वाचमासन्बृहस्पते अनमीवामिषिरां। यया वृष्टिं शंतनवे वनाव दिवो द्रप्सो मधुमाँ आ विवेश ॥३॥ आ नो द्रप्सा मधुमंतो विशंत्विंद्र देह्यधिरथं सहस्रं। नि षीद होत्रमृतुथा यजस्व देवान्देवापे हविषा सपर्य ॥४॥ आर्ष्टिषेणो होत्रमृषिर्निषीदन्देवापिर्देवसुमतिं चिकित्वान्। स उत्तरस्मादधरं समुद्रमपो दिव्या असृजद्वर्ष्या अभि ॥५॥ अस्मिन्त्समुद्रे अध्यु-



Digitized by Google

उत अथो॑ यमस्य॑ पड्वीशात् सर्वस्मात् देवऽकिल्बिषात् ॥ १६ ॥ अवऽपतंतीः अवदन् दिवः ओषधयः परि॑ यं जीवं अश्नवामहै न सः रिष्याति पुरुषः ॥ १७ ॥ याः ओषधीः सोमऽराज्ञीः बह्वीः शतऽविचक्षणाः तासां त्वं असि उत्ऽतमा अरं कामाय शं हृदे ॥ १८ ॥ याः ओषधीः सोमऽराज्ञीः विऽस्थिताः पृथिवीं अनु बृहस्पतिऽप्रसूताः अस्यै सं दत्त वीर्यं ॥ १९ ॥ मा वः रिषत् खनिता यस्मै च अहं खनामि वः द्विऽपत् चतुःऽपत् अस्माकं सर्वं अस्तु अनातुरं ॥ २० ॥ याः च इदं उपऽशृण्वंति याः च दूरं पराऽगताः सर्वाः संऽगत्य वीरुधः अस्यै सं दत्त वीर्यं ॥ २१ ॥ ओषधयः सं वदंते सोमेन सह राज्ञा यस्मै कृणोति ब्राह्मणः तं राजन् पारयामसि ॥ २२ ॥ त्वं उत्ऽतमा असि ओषधे तव वृक्षाः उपस्तयः उपस्तिः अस्तु सः अस्माकं यः अस्मान् अभिऽदासति ॥ २३ ॥ ११ ॥

---

॥ ९८ ॥ बृहस्पते प्रति मे देवतां इहि मित्रः वा यत् वरुणः वा असि पूषा आदित्यैः वा यत् वसुऽभिः मरुत्वान् सः पर्जन्यं शंऽतनवे वृषय ॥ १ ॥ आ देवः दूतः अजिरः चिकित्वान् त्वत् देवऽआपे अभि मां अगच्छत् प्रतीचीनः प्रति मां आ ववृत्स्व दधामि ते द्युऽमतीं वाचं आसन् ॥ २ ॥ अस्मे॑ धेहि द्युऽमतीं वाचं आसन् बृहस्पते अनमीवां इषिरां यया वृष्टिं शंऽतनवे वनाव दिवः द्रप्सः मधुऽमान् आ विवेश ॥ ३ ॥ आ नः द्रप्साः मधुऽमंतः विशंतु इंद्र देहि अधिऽरथं सहस्रं नि सीद होत्रं ऋतुऽथा यजस्व देवान् देवऽआपे हविषा सपर्य ॥ ४ ॥ आर्ष्टिषेणः होत्रं ऋषिः निऽसीदन् देवऽआपिः देवऽसुमतिं चिकित्वान् सः उत्ऽतरस्मात् अधरं समुद्रं अपः दिव्याः असृजत् वर्ष्याः अभि ॥ ५ ॥ अस्मिन् समुद्रे अधि



Digitized by Google

त्तरस्मिन्नापो देवेभिर्निवृता अतिष्ठन् । ता अद्रवन्नार्ष्टिषेणेन सृष्टा देवापिना प्रेषिता मृक्षिणीषु ॥६॥१२॥ यद्देवापिः शंतनवे पुरोहितो होत्राय वृतः कृपयन्नदीधेत् । देवश्रुतं वृष्टिवनिं रराणो बृहस्पतिर्वाचमस्मा अयच्छत् ॥७॥ यं त्वा देवापिः शुशुचानो अग्न आर्ष्टिषेणो मनुष्यः समीधे । विश्वेभिर्देवैरनुमद्यमानः प्र पर्जन्यमीरया वृष्टिमंतं ॥८॥ त्वां पूर्व ऋषयो गीर्भिरायन्त्वामध्वरेषु पुरुहूत विश्वे । सहस्राण्यधिरथान्यस्मे आ नो यज्ञं रोहिदश्वोप याहि ॥९॥ एतान्यग्ने नवतिर्नव त्वे आहुतान्यधिरथा सहस्रा । तेभिर्वर्धस्व तन्वः शूर पूर्वीर्दिवो नो वृष्टिमिषितो रिरीहि ॥१०॥ एतान्यग्ने नवतिं सहस्रा सं प्र यच्छ वृष्ण इंद्राय भागं । विद्वान्पथ ऋतुशो देवयानानप्यौलानं दिवि देवेषु धेहि ॥११॥ अग्ने बाधस्व वि मृधो वि दुर्गहापामीवामप रक्षांसि सेध । अस्मात्समुद्राद्बृहतो दिवो नोऽपां भूमानमुप नः सृजेह ॥१२॥१३॥

---

॥ ९९ ॥ १-१२ वम्रो वैखानसः ॥ इंद्रः ॥ त्रिष्टुप् ॥

॥९९॥ कं नश्चित्रमिषण्यसि चिकित्वान्पृथुग्मानं वाश्रं वावृधध्यै । कत्तस्य दातु शवसो व्युष्टौ तक्षद्वज्रं वृत्रतुरमपिन्वत् ॥१॥ स हि द्युता विद्युता वेति साम पृथुं योनिमसुरत्वा ससाद । स सनीळेभिः प्रसहानो अस्य भ्रातुर्न ऋते सप्तथस्य मायाः ॥२॥ स वाजं यातापदुष्पदा यन्त्स्वर्षाता परि षदत्सनिष्यन् । अनर्वा यच्छतदुरस्य वेदो घ्नञ्छिश्नदेवाँ अभि वर्पसा भूत् ॥३॥ स यह्व्यो३ऽवनीर्गोष्वर्वा जुहोति प्रधन्यासु सस्रिः । अपादो यत्र युज्यासोऽरथा द्रोण्य-



Digitized by Google

उत्ऽतरस्मिन् आपः देवेभिः निऽवृताः अतिष्ठन् ताः अद्रवन् आर्ष्टिषेणेन सृष्टाः देवऽआपिना प्रऽइषिताः मृक्षिणीषु ॥ ६॥ ॥१२॥ यत् देवऽआपिः शंऽतनवे पुरःऽहितः होत्राय वृतः कृपयन् अदीधेत् देवऽश्रुतं वृष्टिऽवनिं रराणः बृहस्पतिः वाचं अस्मै अयच्छत् ॥७॥ यं त्वा देवऽआपिः शुशुचानः अग्ने आर्ष्टिषेणः मनुष्यः संऽईधे विश्वेभिः देवैः अनुऽमद्यमानः प्र पर्जन्यं ईरय वृष्टिऽमंतं ॥८॥ त्वां पूर्वे ऋषयः गीःऽभिः आयन् त्वां अध्वरेषु पुरुऽहूत विश्वे सहस्राणि अधिऽरथानि अस्मे आ नः यज्ञं रोहित्ऽअश्व उप याहि ॥९॥ एतानि अग्ने नवतिः नव त्वे आऽहुतानि अधिऽरथा सहस्रा तेभिः वर्धस्व तन्वः शूर पूर्वीः दिवः नः वृष्टिं इषितः रिरीहि ॥१०॥ एतानि अग्ने नवतिं सहस्रा सं प्र यच्छ वृष्णे इंद्राय भागं विद्वान् पथः ऋतुऽशः देवऽयानान् अपि औलानं दिवि देवेषु धेहि ॥११॥ अग्ने बाधस्व वि मृधः वि दुःऽगहा अप अमीवां अप रक्षांसि सेध अस्मात् समुद्रात् बृहतः दिवः नः अपां भूमानं उप नः सृज इह ॥१२॥१३॥

---

॥९९॥ कं नः चित्रं इषण्यसि चिकित्वान् पृथुऽग्मानं वाश्रं वावृधध्यै कत् तस्य दातु शवसः विऽउष्टौ तक्षत् वज्रं वृत्रऽतुरं अपिन्वत् ॥१॥ सः हि द्युता विऽद्युता वेति साम पृथुं योनिं असुरऽत्वा आ ससाद सः सऽनीळेभिः प्रऽसहानः अस्य भ्रातुः न ऋते सप्तथस्य मायाः ॥२॥ सः वाजं याता अपदुःऽपदा यन् स्वःऽसाता परि सदत् सनिष्यन् अनर्वा यत् शतऽदुरस्य वेदः घ्नन् शिश्नऽदेवान् अभि वर्पसा भूत् ॥३॥ सः यह्व्यः अवनीः गोषु अर्वा आ जुहोति प्रऽधन्यासु सस्निः अपादः यत्र युज्यासः अरथाः द्रोणि-



Digitized by Google

श्वास ईरते घृतं वाः ॥ ४ ॥ स रुद्रेभिरशस्तवार ऋभ्वा हित्वी गयमारेअवद्य आगात्। वम्रस्य मन्ये मिथुना विवव्री अन्नमभीत्यारोदयन्मुषायन् ॥ ५ ॥ स इद्दासं तुवीरवं पतिर्दन्षळक्षं त्रिशीर्षाणं दमन्यत्। अस्य त्रितो न्वोजसा वृधानो विपा वराहमयोअग्रया हन् ॥ ६ ॥ १४ ॥ स द्रुह्वणे मनुष ऊर्ध्वसान आ साविषदर्शसानाय शरुं। स नृतमो नहुषोऽस्मत्सुजातः पुरोऽभिनदर्हन्दस्युहत्ये ॥ ७ ॥ सो अभियो न यवस उदन्यन्क्षयाय गातुं विदन्नो अस्मे। उप यत्सीददिंदुं शरीरैः श्येनोऽयोऽपाष्टिर्हन्ति दस्यून् ॥ ८ ॥ स व्राधतः शवसानेभिरस्य कुत्साय शुष्णं कृपणे परादात्। अयं कविमनयच्छस्यमानमत्कं यो अस्य सनितोत नृणां ॥ ९ ॥ अयं दशस्यन्नर्येभिरस्य दस्मो देवेभिर्वरुणो न मायी। अयं कनीन ऋतुपा अवेद्यमिमीतारुं यश्चतुष्पात् ॥ १० ॥ अस्य स्तोमेभिरौशिज ऋजिश्वा व्रजं दरयद्वृषभेण पिप्रोः। सुत्वा यद्यजतो दीदयद्गीः पुर इयानो अभि वर्पसा भूत् ॥ ११ ॥ एवा महो असुर वक्षथाय वम्रकः पड्भिरुप सर्पदिंद्रं। स इयानः करति स्वस्तिमस्मा इषमूर्जं सुक्षितिं विश्वमाभाः ॥ १२ ॥ १५ ॥ ८ ॥

---

॥ १०० ॥ १—१२ दुवस्युर्वांदनः ॥ विश्वे देवाः ॥ १—११ जगती । १२ त्रिष्टुप् ॥

॥ १०० ॥ इंद्र दृह्य मघवन्त्वावदिद्भुज इह स्तुतः सुतपा बोधि नो वृधे। देवेभिर्नः सविता प्रावतु श्रुतमा सर्वतातिमदितिं वृणीमहे ॥ १ ॥ भराय सु भरत भागमृत्वियं प्र वायवे शुचिपे क्रंददिष्टये। गौरस्य यः पयसः पीतिमानश आ सर्वतातिमदितिं वृणीमहे ॥ २ ॥ आ नो देवः सविता साविष-



Digitized by Google

ऽअभ्वासः ईरते घृतं वाः॰ ॥४॥ सः रुद्रेभिः अशस्तऽवारः ऋभ्वा हित्वी गयं आरेऽअवद्यः आ अगात् वम्रस्य मन्ये मिथुना विऽवव्री॰ अन्नं अभिऽइत्य अरोदयत् मुषायन् ॥५॥ सः इत् दासं तुविऽरवं पतिः दन् षट्ऽअक्षं त्रिऽशीर्षाणं दमन्यत् अस्य त्रितः नु ओजसा वृधानः विपा वराहं अयःऽअग्रया हन्॰ ॥६॥१४॥ सः द्रुह्वणे मनुषे ऊर्ध्वसानः आ साविषत् अर्शसानाय शरुं सः नृऽतमः नहुषः अस्मत् सुऽजातः पुरः अभिनत् अर्हन् दस्युऽहत्ये ॥७॥ सः अभ्रियः न यवसे उदन्यन् क्षयाय गातुं विदत् नः अस्मे उप यत् सीदत् इंदुं शरीरैः श्येनः अयःऽअपाष्टिः हंति दस्यून् ॥८॥ सः व्राधतः शवसानेभिः अस्य कुत्साय शुष्णं कृपणे परा अदात् अयं कविं अनयत् शस्यमानं अत्कं यः अस्य सनिता उत नृणां ॥९॥ अयं दशस्यन् नर्येभिः अस्य दस्मः देवेभिः वरुणः न मायी अयं कनीनः ऋतुऽपाः अवेदि अमिमीत अररुं यः चतुःऽपात् ॥१०॥ अस्य स्तोमेभिः औशिजः ऋजिश्वा व्रजं दरयत् वृषभेण पिप्रोः सुत्वा यत् यजतः दीदयत् गीः पुरः इयानः अभि वर्पसा भूत् ॥११॥ एव महः असुर वक्षथाय वम्रकः पट्ऽभिः उप सर्पत् इंद्रं सः इयानः करति स्वस्तिं अस्मै इषं ऊर्जं सुऽक्षितिं विश्वं आ अभाः॰ ॥१२॥१५॥८॥

---

॥१००॥ इंद्र दृह्य मघऽवन् त्वाऽवत् इत् भुजे इह स्तुतः सुतऽपाः बोधि नः वृधे देवेभिः नः सविता प्र अवतु श्रुतं आ सर्वऽतातिं अदितिं वृणीमहे ॥१॥ भराय सु भरत भागं ऋत्वियं प्र वायवे शुचिऽपे क्रंदत्ऽइष्टये गौरस्य यः पयसः पीतिं आनशे आ सर्वऽतातिं अदितिं वृणीमहे ॥२॥ आ नः देवः सविता साविषत्



Digitized by Google

वय ऋजूयते यजमानाय सुन्वते। यथा देवान्प्रतिभूषेम पाक-
वदा सर्वतातिमदितिं वृणीमहे ॥३॥ इंद्रो अस्मे सुमना अस्तु
विश्वहा राजा सोमः सुवितस्याध्येतु नः। यथायथा मित्रधि-
तानि संदधुरा सर्वतातिमदितिं वृणीमहे ॥४॥ इंद्र उक्थेन
शवसा परुर्दधे बृहस्पते प्रतरीतास्यायुषः। यज्ञो मनुः प्रमतिर्नः
पिता हि कमा सर्वतातिमदितिं वृणीमहे ॥५॥ इंद्रस्य नु सुकृतं
दैव्यं सहोऽग्निर्गृहे जरिता मेधिरः कविः। यज्ञश्च भूद्विदथे
चारुरंतम आ सर्वतातिमदितिं वृणीमहे ॥६॥१६॥ न वो गुहा
चकृम भूरि दुष्कृतं नाविष्ट्यं वसवो देवहेळनं। माकिर्नो देवा
अनृतस्य वर्पस आ सर्वतातिमदितिं वृणीमहे ॥७॥ अपामीवां
सविता साविषन्न्य१ग्वरीय इदप सेधंत्वद्रयः। ग्रावा यत्र मधु-
षुदुच्यते बृहदा सर्वतातिमदितिं वृणीमहे ॥८॥ ऊर्ध्वो ग्रावा
वसवोऽस्तु सोतरि विश्वा द्वेषांसि सनुतर्युयोत। स नो देवः
सविता पायुरीड्य आ सर्वतातिमदितिं वृणीमहे ॥९॥ ऊर्जं गा-
वो यवसे पीवो अत्तन ऋतस्य याः सदने कोशे अंग्ध्वे। तनूरेव
तन्वो अस्तु भेषजमा सर्वतातिमदितिं वृणीमहे ॥१०॥ क्रतुप्रावा
जरिता शश्वतामव इंद्र इद्भद्रा प्रमतिः सुतावतां। पूर्णमूधर्दिव्यं
यस्य सिक्तय आ सर्वतातिमदितिं वृणीमहे ॥११॥ चित्रस्ते भानुः
क्रतुप्रा अभिष्टिः संति स्पृधो जरणिप्रा अधृष्टाः। रजिष्ठया रज्या
पश्व आ गोस्तूतूर्षति पर्ययं दुवस्युः ॥१२॥१७॥

---

॥१०१॥ १–१२ बुधः सौम्यः ॥ विश्वे देवा ऋत्विजो वा ॥ १–३. ७. ८. १०. ११ त्रिष्टुप्। ४. ६ गायत्री। ५ बृहती। ९. १२ जगती ॥

॥१०१॥ उद्बुध्यध्वं समनसः सखायः समग्निमिंध्वं बहवः
सनीळाः। दधिक्रामग्निमुषसं च देवीमिंद्रावतोऽवसे नि



Digitized by Google

वयं॑ः ऋतु॒ऽयते॒ यज॑मानाय सु॒न्वते॒ यथा॑ दे॒वान् प्रति॑ऽभूषेम पा॒कऽवत् आ स॒र्वऽता॑तिं अदि॑तिं वृणीमहे ॥ ३ ॥ इंद्रः॑ अ॒स्मे सु॒ऽमनाः॑ अ॒स्तु वि॒श्वहा॑ राजा॑ सोमः॑ सु॒वि॒तस्य॑ अधि॑ ए॒तु नः॒ यथा॑ऽयथा मि॒त्रऽधि॑तानि सं॒ऽद॒धुः आ स॒र्वऽता॑तिं अदि॑तिं वृणीमहे ॥ ४ ॥ इंद्रः॑ उ॒क्थेन॑ शव॑सा परुः॑ द॒धे बृह॑स्पते प्र॒ऽत॒री॒ता अ॒सि आयु॑षः य॒ज्ञः मनुः॑ प्र॒ऽम॑तिः नः॒ पि॒ता हि कं॒ आ स॒र्वऽता॑तिं अदि॑तिं वृणीमहे ॥ ५ ॥ इंद्र॑स्य नु सु॒ऽकृ॑तं दैव्यं॑ सहः॑ अ॒ग्निः गृ॒हे ज॒रि॒ता मेधि॑रः क॒विः य॒ज्ञः च॒ भू॒त् वि॒दथे॑ चारुः॑ अंत॑मः आ स॒र्वऽता॑तिं अदि॑तिं वृणीमहे ॥ ६ ॥ १६ ॥ न वः॒ गुहा॑ चकृ॒म भूरि॑ दुः॒ऽकृतं॑ न आ॒विःऽत्यं॑ वस॒वः॒ दे॒वऽहेळ॑नं माकि॑ः नः॒ दे॒वाः॒ अनृ॑तस्य वर्प॑सः आ स॒र्वऽता॑तिं अदि॑तिं वृणीमहे ॥ ७ ॥ अप॑ अमी॑वां स॒वि॒ता सा॒वि॒ष॒त् न्यक् वरी॑यः इत् अप॑ से॒धंतु अद्र॑यः ग्रावा॑ यत्र॑ मधु॒ऽसुत् उ॒च्यते॑ बृ॒हत् आ स॒र्वऽता॑तिं अदि॑तिं वृणीमहे ॥ ८ ॥ ऊर्ध्वः ग्रावा॑ वस॒वः॒ अ॒स्तु सो॒त॒रि॑ वि॒श्वा॑ द्वेषां॑सि स॒नु॒तः यु॒यो॒त॒ सः॒ नः॒ दे॒वः स॒वि॒ता पा॒युः ईड्यः॑ आ स॒र्वऽता॑तिं अदि॑तिं वृणीमहे ॥ ९ ॥ ऊर्जं॑ गा॒वः॒ यव॑से पीव॑ः अ॒त्त॒न॒ ऋ॒तस्य॑ याः॒ सद॑ने कोशे॑ अं॒ग्ध्वे त॒नूः ए॒व त॒न्वः॑ अ॒स्तु भे॒ष॒जं आ स॒र्वऽता॑तिं अदि॑तिं वृणीमहे ॥ १० ॥ क्रतु॒ऽप्रावा॑ ज॒रि॒ता शश्व॑तां अवः॑ इंद्रः॑ इत् भ॒द्रा प्र॒ऽम॑तिः सु॒तऽव॑तां पू॒र्णः ऊधः॑ दि॒व्यं यस्य॑ सि॒क्तये॑ आ स॒र्वऽता॑तिं अदि॑तिं वृणीमहे ॥ ११ ॥ चि॒त्रः ते॒ भा॒नुः क्रतु॒ऽप्राः अ॒भि॒ष्टिः संति॑ स्पृधः ज॒र॒णि॒ऽप्राः अधृ॑ष्टाः र॒जिष्ठ॑या रज्या॑ प॒श्वः आ गोः तूतू॑र्षति परि॑ अ॒ग्रं दु॒वस्युः ॥ १२ ॥ १७ ॥

---

॥ १०१ ॥ उत् बु॒ध्य॒ध्वं स॒ऽम॑नसः स॒खा॒यः॒ सं अ॒ग्निं इं॒ध्वं ब॒ह॒वः॑ स॒ऽनी॑ळाः द॒धि॒ऽक्रां अ॒ग्निं उ॒षसं॑ च॒ दे॒वीं इंद्र॒ऽव॒तः अव॑से नि



Digitized by Google

ह्वये वः ॥ १ ॥ मंद्रा कृणुध्वं धिय आ तनुध्वं नावमरित्रपरणीं कृणुध्वं। इष्कृणुध्वमायुधारं कृणुध्वं प्रांचं यज्ञं प्र णयता सखायः ॥ २ ॥ युनक्त सीरा वि युगा तनुध्वं कृते योनौ वपतेह बीजं। गिरा च श्रुष्टिः सभरा असन्नो नेदीय इत्सृण्यः पक्वमेयात् ॥ ३ ॥ सीरा युंजंति कवयो युगा वि तन्वते पृथक्। धीरा देवेषु सुम्नया ॥ ४ ॥ निराहावान्कृणोतन सं वरत्रा दधातन। सिंचामहा अवतमुद्रिणं वयं सुषेकमनुपक्षितं ॥ ५ ॥ इष्कृताहावमवतं सुवरत्रं सुषेचनं। उद्रिणं सिंचे अक्षितं ॥ ६ ॥ १८ ॥ प्रीणीताश्वान्हितं जयाथ स्वस्तिवाहं रथमित्कृणुध्वं। द्रोणाहावमवतमश्मचक्रमंसत्रकोशं सिंचता नृपाणं ॥ ७ ॥ व्रजं कृणुध्वं स हि वो नृपाणो वर्म सीव्यध्वं बहुला पृथूनि। पुरः कृणुध्वमायसीरधृष्टा मा वः सुस्रोच्चमसो दृंहता तं ॥ ८ ॥ आ वो धियं यज्ञियां वर्त ऊतये देवा देवीं यजतां यज्ञियामिह। सा नो दुहीयद्यवसेव गत्वी सहस्रधारा पयसा मही गौः ॥ ९ ॥ आ तू षिंच हरिमीं द्रोरुपस्थे वाशीभिस्तक्षताश्मन्मयीभिः। परि ष्वजध्वं दश कक्ष्याभिरुभे धुरौ प्रति वह्निं युनक्त ॥ १० ॥ उभे धुरौ वह्निरापिब्दमानोऽन्तर्योनेव चरति द्विजानिः। वनस्पतिं वन आस्थापयध्वं नि षू दधिध्वमखनंत उत्सं ॥ ११ ॥ कपृन्नरः कपृथमुद्दधातन चोदयत खुदत वाजसातये। निष्टिग्र्यः पुत्रमा च्यावयोतय इंद्रं सबाध इह सोमपीतये ॥ १२ ॥ १९ ॥

---

॥ १०२ ॥ १—१२ मुद्गलो भार्म्यश्वः ॥ द्रुघन इंद्रो वा ॥ १. ३. १२ बृहती। २. ४—११ त्रिष्टुप् ॥

॥ १०२ ॥ प्र ते रथं मिथूकृतमिंद्रोऽवतु धृष्णुया। अस्मिन्नाजौ पुरुहूत श्रवाय्ये धनभक्षेषु नोऽव ॥ १ ॥ उत्स्म वातो



Digitized by Google

हुये वः ॥१॥ मंद्रा कृणुध्वं धियः आ तनुध्वं नावं अरित्रऽपरणीं कृणुध्वं इष्कृणुध्वं आयुधा अरं कृणुध्वं प्रांचं यज्ञं प्र नयत सखायः ॥२॥ युनक्त सीरा वि युगा तनुध्वं कृते योनौ वपत इह बीजं गिरा च श्रुष्टिः सऽभराः असत् नः नेदीयः इत् सृण्यः पक्वं आ इयात् ॥३॥ सीरा युंजंति कवयः युगा वि तन्वते पृथक् धीराः देवेषु सुम्नऽया ॥४॥ निः आऽहावान् कृणोतन सं वरत्राः दधातन सिंचामहै अवतं उद्रिणं वयं सुऽसेकं अनुपऽक्षितं ॥५॥ इष्कृतऽआहावं अवतं सुऽवरत्रं सुऽसेचनं उद्रिणं सिंचे अक्षितं ॥६॥१८॥ प्रीणीत अश्वान् हितं जयाथ स्वस्तिऽवाहं रथं इत् कृणुध्वं द्रोणऽआहावं अवतं अश्मऽचक्रं अंसत्रऽकोशं सिंचत नृऽपानं ॥७॥ व्रजं कृणुध्वं सः हि वः नृऽपानः वर्म सीव्यध्वं बहुला पृथूनि पुरः कृणुध्वं आयसीः अधृष्टाः मा वः सुस्रोत् चमसः दृंहत तं ॥८॥ आ वः धियं यज्ञियां वर्ते ऊतये देवाः देवीं यजतां यज्ञियां इह सा नः दुहीयत् यवसाऽइव गत्वी सहस्रऽधारा पयसा मही गौः ॥९॥ आ तु सिंच हरिं ईं द्रोः उपऽस्थे वाशीभिः तक्षत अश्मन्ऽमयीभिः परि स्वजध्वं दश कक्ष्याभिः उभे धुरौ प्रति वह्निं युनक्त ॥१०॥ उभे धुरौ वह्निः आऽपिब्दमानः अंतः योनाऽइव चरति द्विऽजानिः वनस्पतिं वने आ अस्थापयध्वं नि सु दधिध्वं अखनंतः उत्सं ॥११॥ कपृत् नरः कपृथं उत् दधातन चोदयत खुदत वाजऽसातये निःऽटिग्र्यः पुत्रं आ च्यवय ऊतये इंद्रं सऽबाधः इह सोमऽपीतये ॥१२॥१९॥

---

॥१०२॥ प्र ते रथं मिथुऽकृतं इंद्रः अवतु धृष्णुऽया अस्मिन् आजौ पुरुऽहूत श्रवाय्ये धनऽभक्षेषु नः अव ॥१॥ उत् स्म वातः



Digitized by Google

वहति वासो अस्या अधिरथं यदजयत्सहस्रं । रथीरभून्मुद्गला-
नी गविष्टौ भरे कृतं व्यचेदिंद्रसेना ॥२॥ अंतर्यच्छ जिघांसतो
वज्रमिंद्राभिदासतः । दासस्य वा मघवन्नार्यस्य वा सनुतर्यवया
वधं ॥३॥ उद्नो ह्रदमपिबज्जर्हृषाणः कूटं स्म तृंहदभिमातिमेति ।
प्र मुष्कभारः श्रव इच्छमानोऽजिरं बाहू अभरत्सिषासन् ॥४॥
न्यक्रंदयन्नुपयंत एनममेहयन्वृषभं मध्य आजेः । तेन सूभर्वं श-
तवत्सहस्रं गवां मुद्गलः प्रधने जिगाय ॥५॥ ककर्दवे वृषभो युक्त
आसीदवावचीत्सारथिरस्य केशी । दुधेर्युक्तस्य द्रवतः सहानस
ऋच्छंति ष्मा निष्पदो मुद्गलानीं ॥६॥२०॥ उत प्रधिमुद्दहन्नस्य
विद्वानुपायुनग्वंसगमत्र शिक्षन् । इंद्र उदावत्पतिमघ्न्यानाम-
रंहत पद्याभिः ककुद्मान् ॥७॥ शुनमष्ट्राव्यचरत्कपर्दी वर-
त्रायां दार्वानह्यमानः । नृम्णानि कृण्वन्बहवे जनाय गाः
पस्पशानस्तविषीरधत्त ॥८॥ इमं तं पश्य वृषभस्य युंजं का-
ष्ठाया मध्ये द्रुघणं शयानं । येन जिगाय शतवत्सहस्रं गवां
मुद्गलः पृतनाज्येषु ॥९॥ आरे अघा को न्वि१त्था ददर्श
यं युंजंति तम्वा स्थापयंति । नास्मै तृणं नोदकमा भरंत्युत्तरो
धुरो वहति प्रदेदिशत् ॥१०॥ परिवृक्तेव पतिविद्यमानट् पी-
प्याना कूचक्रेणेव सिंचन् । एषैष्या चिद्रथ्या जयेम सुमं-
गलं सिनवदस्तु सातं ॥११॥ त्वं विश्वस्य जगतश्चक्षुरिंद्रासि
चक्षुषः । वृषा यदाजिं वृषणा सिषाससि चोदयन्वध्रिणा यु-
जा ॥१२॥२१॥

---

॥ १०३ ॥ १–१३ अप्रतिरथ ऐंद्रः ॥ १–३. ५–११ इंद्रः । ४ बृहस्पतिः । १२ अप्वा ।
१३ इंद्रो मरुतो वा ॥ १–१२ त्रिष्टुप् । १३ अनुष्टुप् ॥

॥१०३॥ आशुः शिशानो वृषभो न भीमो घनाघनः क्षोभण-



Digitized by Google

वहति वासः अस्याः अधिऽरथं यत् अजयत् सहस्रं रथीः अभूत् मुद्गलानी गोऽइष्टौ भरे कृतं वि अचेत् इंद्रऽसेना ॥२॥ अंतः यच्छ जिघांसतः वज्रं इंद्र अभिऽदासतः दासस्य वा मघऽवन् आर्यस्य वा सनुतः यवय वधं ॥३॥ उद्रः हृदं अपिबत् जर्हृषाणः कूटं स्म तृंहत् अभिऽमातिं एति प्र मुष्कऽभारः श्रवः इच्छमानः अजिरं बाहू अभरत् सिसासन् ॥४॥ नि अक्रंदयन् उपऽयंतः एनं अमेहयन् वृषभं मध्ये आजेः तेन सूभर्वं शतऽवत् सहस्रं गवां मुद्गलः प्रऽधने जिगाय ॥५॥ ककर्दवे वृषभः युक्तः आसीत् अवावचीत् सारथिः अस्य केशी दुधेः युक्तस्य द्रवतः सह अनसा ऋच्छंति स्म निःऽपदः मुद्गलानीं ॥६॥२०॥ उत प्रऽधिं उत् अहन् अस्य विद्वान् उप अयुनक् वंसगं अत्र शिक्षन् इंद्रः उत् आवत् पतिं अघ्न्यानां अरंहत पद्याभिः ककुत्ऽमान् ॥७॥ शुनं अष्ट्राऽवी अचरत् कपर्दी वरत्रायां दारु आऽनह्यमानः नृम्णानि कृण्वन् बहवे जनाय गाः पस्पशानः तविषीः अधत्त ॥८॥ इमं तं पश्य वृषभस्य युंजं काष्ठायाः मध्ये द्रुऽघनं शयानं येन जिगाय शतऽवत् सहस्रं गवां मुद्गलः पृतनाज्येषु ॥९॥ आरे अघा कः नु इत्था ददर्श यं युंजंति तं ऊं आ स्थापयंति न अस्मै तृणं न उदकं आ भरंति उत्ऽतरः धुरः वहति प्रऽदेदिशत् ॥१०॥ परिवृक्ताऽइव पतिऽविद्यं आनट् पीप्याना कूचक्रेणऽइव सिंचन् एषऽएष्या चित् रथ्या जयेम सुऽमंगलं सिनऽवत् अस्तु सातं ॥११॥ त्वं विश्वस्य जगतः चक्षुः इंद्र असि चक्षुषः वृषा यत् आजिं वृषणा सिसाससि चोदयन् वध्रिणा युजा ॥१२॥२१॥

---

॥१०३॥ आशुः शिशानः वृषभः न भीमः घनाघनः क्षोभणः



Digitized by Google

चर्षणीनां । संक्रंदनोऽनिमिष एकवीरः शतं सेना अजयत्साकमिंद्रः ॥ १॥ संक्रंदनेनानिमिषेण जिष्णुना युत्कारेण दुश्च्यवनेन धृष्णुना । तदिंद्रेण जयत तत्सहध्वं युधो नर इषुहस्तेन वृष्णा ॥ २॥ स इषुहस्तैः स निषंगिभिर्वशी संस्रष्टा स युध इंद्रो गणेन । संसृष्टजित्सोमपा बाहुशर्ध्यु१ग्रधन्वा प्रतिहिताभिरस्ता ॥ ३॥ बृहस्पते परि दीया रथेन रक्षोहामित्राँ अपबाधमानः । प्रभंजन्सेनाः प्रमृणो युधा जयन्नस्माकमेध्यविता रथानां ॥ ४॥ बलविज्ञायः स्थविरः प्रवीरः सहस्वान्वाजी सहमान उग्रः । अभिवीरो अभिसत्वा सहोजा जैत्रमिंद्र रथमा तिष्ठ गोवित् ॥ ५॥ गोत्रभिदं गोविदं वज्रबाहुं जयंतमज्म प्रमृणंतमोजसा । इमं सजाता अनु वीरयध्वमिंद्रं सखायो अनु सं रभध्वं ॥ ६॥ २२॥ अभि गोत्राणि सहसा गाहमानोऽदयो वीरः शतमन्युरिंद्रः । दुश्च्यवनः पृतनाषाळयुध्यो३ऽस्माकं सेना अवतु प्र युत्सु ॥ ७॥ इंद्र आसां नेता बृहस्पतिर्दक्षिणा यज्ञः पुर एतु सोमः । देवसेनानामभिभंजतीनां जयंतीनां मरुतो यंत्वग्रं ॥ ८॥ इंद्रस्य वृष्णो वरुणस्य राज्ञ आदित्यानां मरुतां शर्ध उग्रं । महामनसां भुवनच्यवानां घोषो देवानां जयतामुदस्थात् ॥ ९॥ उद्धर्षय मघवन्नायुधान्युत्सत्वनां मामकानां मनांसि । उद्वृत्रहन्वाजिनां वाजिनान्युद्रथानां जयतां यंतु घोषाः ॥ १०॥ अस्माकमिंद्रः समृतेषु ध्वजेष्वस्माकं या इषवस्ता जयंतु । अस्माकं वीरा उत्तरे भवंत्वस्माँ उ देवा अवता हवेषु ॥ ११॥ अमीषां चित्तं प्रतिलोभयंती गृहाणांगान्यप्वे परेहि । अभि प्रेहि निर्दह हृत्सु शोकैरंधेनामित्रास्तमसा



Digitized by Google

चर्षणीनां सम्ऽक्रंदनः अनिऽमिषः एकऽवीरः शतं सेनाः अज-
यत् साकं इंद्रः ॥ १ ॥ सम्ऽक्रंदनेन अनिऽमिषेण जिष्णुना युत्ऽका-
रेण दुःऽच्यवनेन धृष्णुना तत् इंद्रेण जयत तत् सहध्वं युधः नरः
इषुऽहस्तेन वृष्णा ॥ २ ॥ सः इषुऽहस्तैः सः निषंगिऽभिः वशी सम्-
ऽस्रष्टा सः युधः इंद्रः गणेन संसृष्टऽजित् सोमऽपाः बाहुऽशर्धी
उग्रऽधन्वा प्रतिऽहिताभिः अस्ता ॥ ३ ॥ बृहस्पते परि दीय रथेन
रक्षःऽहा अमित्रान् अपऽबाधमानः प्रऽभंजन् सेनाः प्रऽमृणः
युधा जयन् अस्माकं एधि अविता रथानां ॥ ४ ॥ बलऽविज्ञायः
स्थविरः प्रऽवीरः सहस्वान् वाजी सहमानः उग्रः अभिऽवीरः
अभिऽसत्वा सहःऽजाः जैत्रं इंद्र रथं आ तिष्ठ गोऽवित् ॥ ५ ॥ गोत्र-
ऽभिदं गोऽविदं वज्रऽबाहुं जयंतं अज्म प्रऽमृणंतं ओजसा इमं
सऽजाताः अनु वीरयध्वं इंद्रं सखायः अनु सं रभध्वं ॥ ६ ॥ २२ ॥ अ-
भि गोत्राणि सहसा गाहमानः अदयः वीरः शतऽमन्युः इंद्रः दुः-
ऽच्यवनः पृतनाषाट् अयुध्यः अस्माकं सेनाः अवतु प्र युत्ऽसु
॥ ७ ॥ इंद्रः आसां नेता बृहस्पतिः दक्षिणा यज्ञः पुरः एतु सोमः
देवऽसेनानां अभिऽभंजतीनां जयंतीनां मरुतः यंतु अग्रं ॥ ८ ॥
इंद्रस्य वृष्णः वरुणस्य राज्ञः आदित्यानां मरुतां शर्धः उग्रं महा-
ऽमनसां भुवनऽच्यवानां घोषः देवानां जयतां उत् अस्थात् ॥ ९ ॥
उत् हर्षय मघऽवन् आयुधानि उत् सत्वनां मामकानां मनांसि
उत् वृत्रऽहन् वाजिनां वाजिनानि उत् रथानां जयतां यंतु घो-
षाः ॥ १० ॥ अस्माकं इंद्रः सम्ऽऋतेषु ध्वजेषु अस्माकं याः इषवः ताः
जयंतु अस्माकं वीराः उत्ऽतरे भवंतु अस्मान् उं देवाः अवत ह-
वेषु ॥ ११ ॥ अमीषां चित्तं प्रतिऽलोभयंती गृहाण अंगानि अप्वे प-
रा इहि अभि प्र इहि निः दह हृत्ऽसु शोकैः अंधेन अमित्राः तमसा



Digitized by Google

सचंतां ॥१२॥ प्रेता जयता नर इंद्रो वः शर्म यच्छतु । उग्रा वः संतु बाहवोऽनाधृष्या यथासथ ॥१३॥२३॥

---

॥१०४॥ १–११ अष्टको वैश्वामित्रः ॥ इंद्रः ॥ त्रिष्टुप् ॥

॥१०४॥ असावि सोमः पुरुहूत तुभ्यं हरिभ्यां यज्ञमुप याहि तूयं । तुभ्यं गिरो विप्रवीरा इयाना दधन्विर इंद्र पिबा सुतस्य ॥१॥ अप्सु धूतस्य हरिवः पिबेह नृभिः सुतस्य जठरं पृणस्व । मिमिक्षुर्यमद्रय इंद्र तुभ्यं तेभिर्वर्धस्व मदमुक्थवाहः ॥२॥ प्रोग्रां पीतिं वृष्ण इयर्मि सत्यां प्रयै सुतस्य हर्यश्व तुभ्यं । इंद्र धेनाभिरिह मादयस्व धीभिर्विश्वाभिः शच्या गृणानः ॥३॥ ऊती शचीवस्तव वीर्येण वयो दधाना उशिज ऋतज्ञाः । प्रजावदिंद्र मनुषो दुरोणे तस्थुर्गृणंतः सधमाद्यासः ॥४॥ प्रणीतिभिष्टे हर्यश्व सुष्टोः सुषुम्नस्य पुरुरुचो जनासः । मंहिष्ठामूतिं वितिरे दधानाः स्तोतार इंद्र तव सूनृताभिः ॥५॥२४॥ उप ब्रह्माणि हरिवो हरिभ्यां सोमस्य याहि पीतये सुतस्य । इंद्र त्वा यज्ञः क्षममाणमानड् दाश्वाँ अस्यध्वरस्य प्रकेतः ॥६॥ सहस्रवाजमभिमातिषाहं सुतेरणं मघवानं सुवृक्तिं । उप भूषंति गिरो अप्रतीतमिंद्रं नमस्या जरितुः पनंत ॥७॥ सप्तापो देवीः सुरणा अमृक्ता याभिः सिंधुमतर इंद्र पूर्भित् । नवतिं स्रोत्या नव च स्रवंतीर्देवेभ्यो गातुं मनुषे च विंदः ॥८॥ अपो महीरभिशस्तेरमुंचोऽजागरास्वधि देव एकः । इंद्र यास्त्वं वृत्रतूर्ये चकर्थ ताभिर्विश्वायुस्तन्वं पुपुष्याः ॥९॥ वीरेण्यः क्रतुरिंद्रः सुशस्तिरुतापि धेना पुरुहूतमीट्टे । आर्दयद्वृत्रमकृणोदु लोकं ससाहे शक्रः पृतना अभिष्टिः ॥१०॥ शुनं हुवेम मघवानमिंद्रमस्मिन्भरे नृतमं



Digitized by Google

सचंतां ॥ १२ ॥ प्र इत जयत नरः इंद्रः वः शर्म यच्छतु उग्राः वः संतु बाहवः अनाधृष्याः यथा असथ ॥ १३ ॥ २३ ॥

---

॥ १०४ ॥ असावि सोमः पुरुऽहूत तुभ्यं हरिऽभ्यां यज्ञं उप याहि तूयं तुभ्यं गिरः विप्रऽवीराः इयानाः दधन्विरे इंद्र पिब सुतस्य ॥ १ ॥ अप्ऽसु धूतस्य हरिऽवः पिब इह नृऽभिः सुतस्य जठरं पृणस्व मिमिक्षुः यं अद्रयः इंद्र तुभ्यं तेभिः वर्धस्व मदं उक्थऽवाहः ॥ २ ॥ प्र उग्रां पीतिं वृष्णे इयर्मि सत्यां प्रऽयै सुतस्य हरिऽअश्व तुभ्यं इंद्र धेनाभिः इह मादयस्व धीभिः विश्वाभिः शच्या गृणानः ॥ ३ ॥ ऊती शचीऽवः तव वीर्येण वयः दधानाः उशिजः ऋतऽज्ञाः प्रजाऽवत् इंद्र मनुषः दुरोणे तस्थुः गृणंतः सधऽमाद्यासः ॥ ४ ॥ प्रणीतिऽभिः ते हरिऽअश्व सुऽस्तोः सुऽसुम्नस्य पुरुऽरुचः जनासः मंहिष्ठां ऊतिं विऽतिरे दधानाः स्तोतारः इंद्र तव सूनृताभिः ॥ ५ ॥ २४ ॥ उप ब्रह्माणि हरिऽवः हरिऽभ्यां सोमस्य याहि पीतये सुतस्य इंद्र त्वा यज्ञः क्षममाणं आनट् दाश्वान् असि अध्वरस्य प्रऽकेतः ॥ ६ ॥ सहस्रऽवाजं अभिमातिऽसहं सुतेऽरणं मघऽवानं सुऽवृक्तिं उप भूषंति गिरः अप्रतिऽइतं इंद्रं नमस्याः जरितुः पनंत ॥ ७ ॥ सप्त आपः देवीः सुऽरणाः अमृक्ताः याभिः सिंधुं अतरः इंद्र पूःऽभित् नवतिं स्रोत्याः नव च स्रवंतीः देवेभ्यः गातुं मनुषे च विंदः ॥ ८ ॥ अपः महीः अभिऽशस्तेः अमुंचः अजागः आसु अधि देवः एकः इंद्र याः त्वं वृत्रऽतूर्ये चकर्थ ताभिः विश्वऽआयुः तन्वं पुपुष्याः ॥ ९ ॥ वीरेण्यः क्रतुः इंद्रः सुऽशस्तिः उत अपि धेना पुरुऽहूतं ईट्टे आर्दयत् वृत्रं अकृणोत् ऊं लोकं ससहे शक्रः पृतनाः अभिष्टिः ॥ १० ॥ शुनं हुवेम मघऽवानं इंद्रं अस्मिन् भरे नृऽतमं



Digitized by Google

वार्जसातौ। नृवंतमुग्रमूतये समत्सु घ्नंतं वृत्राणि संजितं धनानां ॥११॥२५॥

॥१०५॥ १—११ कौत्सो दुर्मित्रो नाम्ना सुमित्रो गुणतः सुमित्रो वा नाम्ना दुर्मित्रो गुणतः ॥ इंद्रः ॥ १ उष्णिग्गायत्री वा। २.७ पिपीलिकमध्या। ३—६.८—१० उष्णिक्। ११ त्रिष्टुप्॥

॥१०५॥ कदा वसो स्तोत्रं हर्यत आव श्मशा रुधद्वाः। दीर्घं सुतं वाताप्याय॥१॥ हरी यस्य सुयुजा विव्रता वेरर्वतानु शेपा। उभा रजी न केशिना पतिर्दन्॥२॥ अप योरिंद्रः पापज आ मर्तो न शश्रमाणो बिभीवान्। शुभे यद्युयुजे तविषीवान्॥३॥ सचायोरिंद्रश्चर्कृष आँ उपानसः सपर्यन्। नदयोर्विव्रतयोः शूर इंद्रः॥४॥ अधि यस्तस्थौ केशवंता व्यचस्वंता न पुष्ट्यै। वनोति शिप्राभ्यां शिप्रिणीवान्॥५॥२६॥ प्रास्तौदृष्वौजा ऋष्वेभिस्ततक्ष शूरः शवसा। ऋभुर्न क्रतुभिर्मातरिश्वा॥६॥ वज्रं यश्चक्रे सुहनाय दस्यवे हिरीमशो हिरीमान्। अरुतहनुरद्भुतं न रजः॥७॥ अव नो वृजिना शिशीह्यृचा वनेमानृचः। नाब्रह्मा यज्ञ ऋधग्जोषति त्वे॥८॥ ऊर्ध्वा यत्ते त्रेतिनी भूद्यज्ञस्य धूर्षु सद्मन्। सजूर्नावं स्वयशसं सचायोः॥९॥ श्रिये ते पृश्निरुपसेचनी भूच्छ्रिये दर्विररेपाः। यया स्वे पात्रे सिंचस उत्॥१०॥ शतं वा यदसुर्य प्रति त्वा सुमित्र इत्थास्तौद्दुर्मित्र इत्थास्तौत्। आवो यद्दस्युहत्ये कुत्सपुत्रं प्रावो यद्दस्युहत्ये कुत्सवत्सं॥११॥२७॥५॥

॥१०६॥ १—११ भूतांशः काश्यपः॥ अश्विनौ॥ त्रिष्टुप्॥

॥१०६॥ उभा उ नूनं तदिदर्थयेथे वि तन्वाथे धियो वस्त्रापसेव। सध्रीचीना यातवे प्रेमजीगः सुदिनेव पृक्ष आ तंसयेथे॥१॥ उष्टारेव फर्वरेषु श्रयेथे प्रायोगेव



Digitized by Google

वाजऽसातौ नृऽतमं ऊयं ऊतये समत्ऽसु घ्नंतं वृत्राणि संऽजितं धनानां ॥ ११ ॥ २५ ॥

---

॥ १०५ ॥ कदा वसो इति स्तोत्रं हर्यते आ अव श्मशा रुधत् वारिति दीर्घं सुतं वाताप्याय ॥ १ ॥ हरी इति यस्य सुऽयुजा विऽव्रता वेः अर्वंता अनु शेपा उभा रजी इति न केशिना पतिः दन् ॥ २ ॥ अप योः इंद्रः पापजे आ मर्तः न शश्रमाणः बिभीवान् शुभे यत् युयुजे तविषीऽवान् ॥ ३ ॥ सचा आयोः इंद्रः चर्कृषे आ उपानसः सपर्यन् नदयोः विऽव्रतयोः शूरः इंद्रः ॥ ४ ॥ अधि यः तस्थौ केशऽवंता व्यचस्वंता न पुष्ट्यै वनोति शिप्राभ्यां शिप्रिणीऽवान् ॥ ५ ॥ २६ ॥ प्र अस्तौत् ऋष्वऽओजाः ऋष्वेभिः ततक्ष शूरः शवसा ऋभुः न क्रतुऽभिः मातरिश्वा ॥ ६ ॥ वज्रं यः चक्रे सुऽहनाय दस्यवे हिरीमशः हिरीमान् अरुतऽहनुः अद्भुतं न रजः ॥ ७ ॥ अव नः वृजिना शिशीहि ऋचा वनेम अनृचः न अब्रह्मा यज्ञः ऋधक् जोषति त्वे इति ॥ ८ ॥ ऊर्ध्वा यत् ते त्रेतिनी भूत् यज्ञस्य धूःऽसु सद्मन् सऽजूः नावं स्वऽयशसं सचा आयोः ॥ ९ ॥ श्रिये ते पृश्निः उपऽसेचनी भूत् श्रिये दर्विः अरेपाः यया स्वे पात्रे सिंचसे उत् ॥ १० ॥ शतं वा यत् असुर्य प्रति त्वा सुऽमित्रः इत्था अस्तौत् दुःऽमित्रः इत्था अस्तौत् आवः यत् दस्युऽहत्ये कुत्सऽपुत्रं प्र आवः यत् दस्युऽहत्ये कुत्सऽवत्सं ॥ ११ ॥ २७ ॥ ५ ॥

---

॥ १०६ ॥ उभौ ऊं इति नूनं तत् इत् अर्थयेथे इति वि तन्वाथे इति धियः वस्त्रा अपसाऽइव सध्रीचीना यातवे प्र ईं इति अजीगरिति सुदिनाऽइव पृक्षः आ तंसयेथे इति ॥ १ ॥ उष्टाराऽइव फर्वरेषु श्रयेथे इति प्रायोगाऽइव



Digitized by Google

ष्याथ्या शासुरेथः। दूतेव हि ष्ठो यशसा जनेषु माप स्थातं महि-षेवावपानात् ॥ २॥ साकंयुजा शकुनस्येव पक्षा पश्वेव चित्रा यजुरा गमिष्टं। अग्निरिव देवयोर्दीदिवांसा परिज्मानेव यजथः पुरुत्रा ॥३॥ आपी वो अस्मे पितरेव पुत्रोग्रेव रुचा नृपतीव तुर्यै। इर्येव पुष्ट्यै किरणेव भुज्यै श्रुष्टीवानेव हवमा गमिष्टं ॥४॥ वंसगेव पूषर्या शिंबाता मित्रेव ऋता शतरा शातपंता। वाजेवोच्चा वयसा घर्म्येष्ठा मेषेवेषा सपर्या३ पुरीषा ॥ ५॥ १॥ सृण्येव जर्भरी तुर्फरीतू नैतोशेव तुर्फरी पर्फरीका। उदन्यजेव जेमना मदेरू ता मे जराय्वजरं मरायु ॥ ६॥ पज्रेव चर्चरं जारं मरायु क्षद्मेवार्थेषु तर्तरीथ उग्रा। ऋभू नापत्खरमज्ञा खरज्रुर्वायुर्न पर्फरत्क्षयद्रयीणां ॥ ७॥ घर्मेव मधु जठरे सनेरू भगेऽविता तुर्फरी फारिवारं। पतरेव चचरा चंद्रनिर्णिङ्मनऋंगा मनन्या३ न जग्मी ॥ ८॥ बृहंतेव गंभरेषु प्रतिष्ठां पादेव गाधं तरते विदाथः। कर्णेव शासुरनु हि स्मराथोऽंशेव नो भजतं चित्रमप्नः ॥ ९॥ आरंगरेव मध्वेरयेथे सारघेव गवि नीचीनबारे। कीनारेव स्वेदमासिष्विदाना क्षामेवोर्जा सूयवसात्सचेथे ॥ १०॥ ऋध्याम स्तोमं सनुयाम वाजमा नो मंत्रं सरथेहोप यातं। यशो न पक्वं मधु गोष्वंतरा भूतांशो अश्विनोः काममप्राः ॥ ११॥ २॥

---

॥ १०७॥ १-११ दिव्यो दक्षिणा वा प्राजापत्या ॥ दक्षिणा तद्दातारो वा ॥ १-३.५-११ त्रिष्टुप्। ४ जगती ॥

॥ १०७॥ आविरभून्महि माघोनमेषां विश्वं जीवं तमसो निरमोचि। महि ज्योतिः पितृभिर्दत्तमागादुरुः पंथा



Digitized by Google

म्याऱ्यां शासुः आ इयः दूताऽइव हि स्थः यशसा जनेषु मा अप स्थातं महिषाऽइव अवऽमानात् ॥ २ ॥ साकंऽयुजा शकुनस्यऽइव पक्षा पश्वाऽइव चित्रा यजुः आ गमिष्टं अग्निःऽइव देवऽयोः दीदिऽवांसा परिज्मानाऽइव यजथः पुरुऽत्रा ॥ ३ ॥ आपी वः अस्मे पितराऽइव पुत्रा उग्राऽइव रुचा नृपतीऽइव॰ तुर्ये इर्योऽइव पुष्ट्यै किरणाऽइव भुज्यै श्रुष्टीवानाऽइव हवं आ गमिष्टं ॥ ४ ॥ वंसगाऽइव पूषर्या शिंबाता मित्राऽइव ऋता शतरा शातपंता वाजाऽइव उच्चा वयसा घर्म्येऽस्था मेषाऽइव इषा सपर्या पुरीषा ॥ ५ ॥ १ ॥ सृण्याऽइव जर्भरी तुर्फरीतू नैतोशाऽइव तुर्फरी पर्फरीका उदन्यजाऽइव जेमना मदेरू ता मे जराय्वु अजरं मरायु ॥ ६ ॥ पज्राऽइव चर्चरं जारं मरायु क्षद्मऽइव अर्थेषु तर्तरीथः उग्रा चाभू न आपत् खरमज्रा खरऽज्रुः वायुः न पर्फरत् क्षयत् रयीणां ॥ ७ ॥ घर्माऽइव मधु जठरे सनेरू भगेऽअविता तुर्फरी फारिवा अरं पतराऽइव चचरा चंद्रऽनिर्निक् मनःऽऋंगा मनन्या न जग्मी ॥ ८ ॥ बृहंताऽइव गंभरेषु प्रतिऽस्थां पादाऽइव गाधं तरते विदाथः कर्णाऽइव शासुः अनु हि स्मराथः अंशाऽइव नः भजतं चित्रं अप्नः ॥ ९ ॥ आरंगराऽइव मधु आ ईरयेथे सारघाऽइव गवि नीचीनऽबारे कीनाराऽइव स्वेदं आऽसिस्विदाना क्षामऽइव ऊर्जा सुयवसऽअत् सचेथे ॥ १० ॥ ऋध्याम स्तोमं सनुयाम वाजं आ नः मंत्रं सऽरथा इह उप यातं यशः न पक्वं मधु गोषु अंतः आ भूतऽअंशः अश्विनोः कामं अप्राः ॥ ११ ॥ २ ॥

---

॥ १०७ ॥ आविः अभूत् महि माघोनं एषां विश्वं जीवं तमसः निः अमोचि महि ज्योतिः पितृऽभिः दत्तं आ अगात् उरुः पंथाः



Digitized by Google

दक्षिणाया अदर्शि ॥१॥ उच्चा दिवि दक्षिणावंतो अस्थुर्ये अश्व-
दाः सह ते सूर्येण । हिरण्यदा अमृतत्वं भजंते वासोदाः सोम प्र
तिरंत आयुः ॥२॥ दैवी पूर्तिर्दक्षिणा देवयज्या न कवारिभ्यो
नहि ते पृणंति । अथा नरः प्रयतदक्षिणासोऽवद्यभिया बहवः
पृणंति ॥३॥ शतधारं वायुमर्कं स्वर्विदं नृचक्षसस्ते अभि चक्षते
हविः । ये पृणंति प्र च यच्छंति संगमे ते दक्षिणां दुहते सप्तमा-
तरं ॥४॥ दक्षिणावान्प्रथमो हूत एति दक्षिणावान्ग्रामणीरग्र-
मेति । तमेव मन्ये नृपतिं जनानां यः प्रथमो दक्षिणामाविवाय
॥५॥३॥ तमेव ऋषिं तमु ब्रह्माणमाहुर्यज्ञन्यं सामगामुक्थशा-
सं । स शुक्रस्य तन्वो वेद तिस्रो यः प्रथमो दक्षिणया रराध ॥६॥
दक्षिणाश्वं दक्षिणा गां ददाति दक्षिणा चंद्रमुत यद्धिरण्यं ।
दक्षिणान्नं वनुते यो न आत्मा दक्षिणां वर्म कृणुते विजा-
नन् ॥७॥ न भोजा मम्रुर्न न्यर्थमीयुर्न रिष्यंति न व्यथंते ह भो-
जाः । इदं यद्विश्वं भुवनं स्वश्चैतत्सर्वं दक्षिणैभ्यो ददाति ॥८॥ भो-
जा जिग्युः सुरभिं योनिमग्रे भोजा जिग्युर्वध्वं१ या सुवासाः ।
भोजा जिग्युरंतःपेयं सुराया भोजा जिग्युर्ये अहूताः प्रयंति
॥९॥ भोजायाश्वं सं मृजंत्याशुं भोजायास्ते कन्या३ शुंभमाना ।
भोजस्येदं पुष्करिणीव वेश्म परिष्कृतं देवमानेव चित्रं
॥१०॥ भोजमश्वाः सुष्ठुवाहो वहंति सुवृद्रथो वर्तते दक्षि-
णायाः । भोजं देवासोऽवता भरेषु भोजः शत्रून्समनीकेषु
जेता ॥११॥४॥

---

॥१०८॥ १. ३. ५. ७. ९ पणयोऽसुराः । २. ४. ६. ८. १०. ११ सरमा देवशुनी ॥ १. ३. ५. ७. ९ सरमा । २. ४. ६. ८. १०. ११ पणयः ॥ त्रिष्टुप् ॥

॥१०८॥ किमिच्छंती सरमा प्रेदमानड् दूरे ह्यध्वा जगुरिः



Digitized by Google

दक्षिणायाः अदर्शि ॥१॥ उच्चा दिवि दक्षिणाऽवंतः अस्थुः ये अश्वऽदाः सह ते सूर्येण हिरण्यऽदाः अमृतऽत्वं भजंते वासःऽदाः सोम प्र तिरंते आयुः ॥२॥ दैवी पूर्तिः दक्षिणा देवऽयज्या न कवऽअरिभ्यः नहि ते पृणंति अर्थ नरः प्रयतऽदक्षिणासः अवद्यऽभिया बहवः पृणंति ॥३॥ शतऽधारं वायुं अर्कं स्वःऽविदं नृऽचक्षसः ते अभि चक्षते हविः ये पृणंति प्र च यच्छंति संऽगमे ते दक्षिणां दुहते सप्तऽमातरं ॥४॥ दक्षिणाऽवान् प्रथमः हूतः एति दक्षिणाऽवान् ग्रामऽनीः अग्रं एति तं एव मन्ये नृऽपतिं जनानां यः प्रथमः दक्षिणां आऽविवाय ॥५॥३॥ तं एव ऋषिं तं ऊं ब्रह्माणं आहुः यज्ञऽन्यं सामऽगां उक्थऽशसं सः शुक्रस्य तन्वः वेद तिस्रः यः प्रथमः दक्षिणया रराध ॥६॥ दक्षिणा अश्वं दक्षिणा गां ददाति दक्षिणा चंद्रं उत यत् हिरण्यं दक्षिणा अन्नं वनुते यः नः आत्मा दक्षिणां वर्म कृणुते विऽजानन् ॥७॥ न भोजाः ममुः न निऽअर्थं ईयुः न रिष्यंति न व्यथंते ह भोजाः इदं यत् विश्वं भुवनं स्वः॰ च एतत् सर्वं दक्षिणा एभ्यः ददाति ॥८॥ भोजाः जिग्युः सुरभिं योनिं अग्रे भोजाः जिग्युः वध्वं या सुऽवासाः भोजाः जिग्युः अंतःऽपेयं सुरायाः भोजाः जिग्युः ये अहूताः प्रऽयंति ॥९॥ भोजाय अश्वं सं मृजंति आशुं भोजाय आस्ते कन्या शुंभमाना भोजस्य इदं पुष्करिणीऽइव वेश्म परिऽकृतं देवमानाऽइव चित्रं ॥१०॥ भोजं अश्वाः सुष्ठुऽवाहः वहंति सुऽवृत् रथः वर्तते दक्षिणायाः भोजं देवासः अवत भरेषु भोजः शत्रून् संऽअनीकेषु जेता ॥११॥४॥

---

॥१०८॥ किं इच्छंती सरमा प्र इदं आनट् दूरे हि अध्वा जगुरिः



Digitized by Google

पराचैः। कास्मेहितिः का परितक्म्यासीत्कथं रसाया अतरः पयांसि ॥ १ ॥ इंद्रस्य दूतीरिषिता चरामि मह इच्छंती पणयो निधीन्वः। अतिष्कदो भियसा तन्न आवत्तथा रसाया अतरं पयांसि ॥ २ ॥ कीदृङ्ङिंद्रः सरमे का दृशीका यस्येदं दूतीरसरः पराकात्। आ च गच्छान्मित्रमेना दधामाथा गवां गोपतिर्नो भवाति ॥ ३ ॥ नाहं तं वेद दभ्यं दभत्स यस्येदं दूतीरसरं पराकात्। न तं गूहंति स्रवतो गभीरा हता इंद्रेण पणयः शयध्वे ॥ ४ ॥ इमा गावः सरमे या ऐच्छः परि दिवो अंतान्सुभगे पतंती। कस्त एना अव सृजादयुध्व्युतास्माकमायुधा संति तिग्मा ॥ ५ ॥ ५ ॥ असेन्या वः पणयो वचांस्यनिषव्यास्तन्वः संतु पापीः। अधृष्टो व एतवा अस्तु पंथा बृहस्पतिर्व उभया न मृळात् ॥ ६ ॥ अयं निधिः सरमे अद्रिबुध्नो गोभिरश्वेभिर्वसुभिर्न्यृष्टः। रक्षंति तं पणयो ये सुगोपा रेकु पदमलकमा जगंथ ॥ ७ ॥ एह गमन्नृषयः सोमशिता अयास्यो अंगिरसो नवग्वाः। त एतमूर्वं वि भजंत गोनामथैतद्वचः पणयो वमन्नित् ॥ ८ ॥ एवा च त्वं सरम आजगंथ प्रबाधिता सहसा दैव्येन। स्वसारं त्वा कृणवै मा पुनर्गा अप ते गवां सुभगे भजाम ॥ ९ ॥ नाहं वेद भ्रातृत्वं नो स्वसृत्वमिंद्रो विदुरंगिरसश्च घोराः। गोकामा मे अच्छदयन्यदायमपात इत पणयो वरीयः ॥ १० ॥ दूरमित पणयो वरीय उद्गावो यंतु मिनतीर्ऋतेन। बृहस्पतिर्या अविंदन्निगूळ्हाः सोमो ग्रावाण ऋषयश्च विप्राः ॥ ११ ॥ ६ ॥

---

॥ १०९ ॥ १–७ जुहूर्ब्रह्मजायोर्ध्वनाभा वा ब्राह्मः ॥ विश्वे देवाः ॥ १–५ त्रिष्टुप्। ६. ७ अनुष्टुप् ॥

॥ १०९ ॥ तेऽवदन्प्रथमा ब्रह्मकिल्बिषेऽकूपारः सलि-



Digitized by Google

पराचैः का अस्मेऽहितिः का परिऽतक्म्या आसीत् कथं रसायाः
अतरः पयांसि ॥१॥ इंद्रस्य दूतीः इषिता चरामि महः इच्छंती
पणयः निऽधीन् वः अतिऽस्कदः भियसा तत् नः आवत् तथा
रसायाः अतरं पयांसि ॥२॥ कीदृङ् इंद्रः सरमे का दृशीका यस्य इदं
दूतीः असरः पराकात् आ च गच्छात् मित्रं एनं दधाम अथ गवां
गोऽपतिः नः भवाति ॥३॥ न अहं तं वेद दभ्यं दभत् सः यस्य इदं
दूतीः असरं पराकात् न तं गूहंति स्रवतः गभीराः हताः इंद्रेण
पणयः शयध्वे ॥४॥ इमाः गावः सरमे याः ऐच्छः परि दिवः अं-
तान् सुऽभगे पतंती कः ते एनाः अव सृजात् अयुध्वी उत अ-
स्माकं आयुधा संति तिग्मा ॥५॥५॥ असेन्याः वः पणयः वचांसि
अनिषव्याः तन्वः संतु पापीः अधृष्टः वः एतवै अस्तु पंथाः बृहस्प-
तिः वः उभया न मृळात् ॥६॥ अयं निऽधिः सरमे अद्रिऽबुध्नः
गोभिः अश्वेभिः वसुऽभिः निऽऋष्टः रक्षंति तं पणयः ये सुऽगोपाः
रेकु पदं अलकं आ जगंथ ॥७॥ आ इह गमन् ऋषयः सोमऽशि-
ताः अयास्यः अंगिरसः नवऽग्वाः ते एतं ऊर्वं वि भजंत गोनां
अथ एतत् वचः पणयः वमन् इत् ॥८॥ एव च त्वं सरमे आऽज-
गंथ प्रऽबाधिता सहसा दैव्येन स्वसारं त्वा कृणवै मा पुनः गाः
अप ते गवां सुऽभगे भजाम ॥९॥ न अहं वेद भ्रातृऽत्वं नो स्वसृ-
ऽत्वं इंद्रः विदुः अंगिरसः च घोराः गोऽकामाः मे अच्छदयन् यत्
आयं अप अतः इत पणयः वरीयः ॥१०॥ दूरं इत पणयः वरीयः
उत् गावः यंतु मिनतीः ऋतेन बृहस्पतिः याः अविंदत् निऽगू-
ळ्हाः सोमः ग्रावाणः ऋषयः च विप्राः ॥११॥६॥

---

॥१०९॥ ते अवदन् प्रथमाः ब्रह्मऽकिल्बिषे अकूपारः सलि-



Digitized by Google

लो मा॒तरि॒श्वा॑। वी॒ळुह॑रा॒स्तप॑ उ॒ग्रो म॑यो॒भूरापो॑ दे॒वीः प्र॑थम॒जा
ऋ॒तेन॑ ॥ १ ॥ सोमो॒ राजा॑ प्रथ॒मो ब्र॑ह्मजा॒यां पुनः॒ प्राय॑च्छ॒दहृ॑णी-
यमानः। अ॒न्व॒र्ति॒ता वरु॑णो मि॒त्र आ॑सीद॒ग्निर्होता॑ हस्त॒गृह्या
नि॑नाय ॥ २ ॥ हस्ते॑नै॒व ग्रा॒ह्य॑ आ॒धिर॑स्या ब्रह्मजा॒येय॒मिति॒ चेद॑-
वो॑चन्। न दू॒ताय॒ प्रह्ये॑ तस्थ ए॒षा तथा॑ रा॒ष्ट्रं गु॑पि॒तं क्ष॒त्रिय॑स्य
॥ ३ ॥ दे॒वा ए॒तस्या॑मवदन्त॒ पूर्वे॑ सप्तऋ॒षय॒स्तप॑से॒ ये नि॑षे॒दुः। भी॒मा
जा॒या ब्रा॑ह्म॒णस्योप॑नीता दु॒र्धां द॑धाति पर॒मे व्यो॑मन् ॥ ४ ॥ ब्र॒ह्म॒-
चा॒री च॑रति॒ वेवि॑ष॒द्विषः॑ स दे॒वानां॑ भव॒त्येक॒मङ्ग॑म्। तेन॑ जा॒या-
मन्व॑विन्द॒द्बृह॒स्पतिः॒ सोमे॑न नी॒तां जु॒ह्वं१॒॑ न दे॑वाः ॥ ५ ॥ पुन॒र्वै
दे॒वा अ॑ददुः॒ पुन॑र्मनु॒ष्या॑ उ॒त। राजा॑नः स॒त्यं कृ॑ण्वा॒ना ब्र॑ह्मजा॒यां
पुन॑र्ददुः ॥ ६ ॥ पु॒न॒र्दाय॑ ब्रह्मजा॒यां कृ॒त्वी दे॒वैर्नि॑किल्बि॒षम्। ऊर्जं॑
पृथि॒व्या भ॒क्त्वायो॑रुगा॒यमुपा॑सते ॥ ७ ॥ ७ ॥

---

॥ ११० ॥ १—११ जमदग्निस्तत्सुतो वा रामः ॥ आप्रियः ॥ त्रिष्टुप् ॥

॥ ११० ॥ समि॑द्धो अ॒द्य मनु॑षो दुरो॒णे दे॒वो दे॒वान्य॑जसि
जातवेदः। आ च॒ वह॑ मित्रमहश्चिकि॒त्वान्त्वं दू॒तः क॒विर॑सि॒
प्रचे॑ताः ॥ १ ॥ तनू॑नपात्प॒थ ऋ॒तस्य॒ याना॒न्मध्वा॑ सम॒ञ्जन्स्व॑-
दया सुजिह्व। मन्मा॑नि धी॒भिरु॒त य॒ज्ञमृ॒न्धन्दे॑व॒त्रा च॑ कृ-
णुह्यध्व॒रं नः॑ ॥ २ ॥ आ॒जुह्वा॑न॒ ईड्यो॒ वन्द्य॒श्चा या॑ह्यग्ने॒ वसु॑-
भिः स॒जोषाः॑। त्वं दे॒वाना॑मसि यह्व॒ होता॒ स ए॑ना॒न्यक्षी॑-
षि॒तो यजी॑यान् ॥ ३ ॥ प्रा॒चीनं॑ ब॒र्हिः प्र॒दिशा॑ पृथि॒व्या वस्तो॑-
र॒स्या वृ॑ज्यते॒ अग्रे॒ अह्ना॑म्। व्यु॑ प्रथते वित॒रं वरी॑यो दे॒वेभ्यो॒
अदि॑तये स्यो॒नम् ॥ ४ ॥ व्यच॑स्वतीरुर्वि॒या वि श्र॑यन्तां॒ पति॑भ्यो॒
न जन॑यः॒ शुम्भ॑मानाः। देवी॑र्द्वारो बृहतीर्विश्वमिन्वा दे॒वेभ्यो॑ भ-



Digitized by Google

लः मातरिश्वा वीळुऽहराः तपः उग्रः मयःऽभूः आपः देवीः प्र-
थमऽजाः ऋतेन ॥१॥ सोमः राजा प्रथमः ब्रह्मऽजायां पुनः' प्र
अयच्छत् अहृणीयमानः अनुऽअर्तिता वरुणः मित्रः आसीत्
अग्निः होता हस्तऽगृह्य आ निनाय ॥२॥ हस्तेन एव ग्राह्यः आ-
ऽधिः अस्याः ब्रह्मऽजाया इयं इति च इत् अवोचन् न दूताय प्र-
ऽह्ये तस्थे एषा तथा राष्ट्रं गुपितं क्षत्रियस्य ॥३॥ देवाः एतस्यां
अवदंत पूर्वे सप्तऽऋषयः तपसे ये निऽसेदुः भीमा जाया ब्राह्म-
णस्य उपऽनीता दुःऽधां दधाति परमे विऽओमन् ॥४॥ ब्रह्म-
ऽचारी चरति वेविषत् विषः सः देवानां भवति एकं अंगं तेन जा-
यां अनु अविंदत् बृहस्पतिः सोमेन नीतां जुह्वं न देवाः ॥५॥ पुनः
वै देवाः अददुः पुनः मनुष्याः उत राजानः सत्यं कृण्वानाः ब्रह्म-
ऽजायां पुनः ददुः ॥६॥ पुनःऽदाय ब्रह्मऽजायां कृत्वी देवैः निऽकि-
ल्बिषं ऊर्जं पृथिव्याः भक्त्वाय उरुऽगायं उप आसते ॥७॥७॥

---

॥११०॥ संऽइद्धः अद्य मनुषः दुरोणे देवः देवान् यजसि जा-
तऽवेदः आ च वह मित्रऽमहः चिकित्वान् त्वं दूतः कविः असि प्र-
ऽचेताः ॥१॥ तनूऽनपात् पथः ऋतस्य यानान् मध्वा संऽअंजन्
स्वदय सुऽजिह्व मन्मानि धीभिः उत यज्ञं ऋंधन् देवऽत्रा च कृ-
णुहि अध्वरं नः ॥२॥ आऽजुह्वानः ईड्यः वंद्यः च आ याहि अग्ने
वसुऽभिः सऽजोषाः त्वं देवानां असि यह्व होता सः एनान् यक्षि
इषितः यजीयान् ॥३॥ प्राचीनं बर्हिः प्रऽदिशा पृथिव्याः वस्तोः
अस्याः वृज्यते अग्रे अह्नां वि ऊं' प्रथते विऽतरं वरीयः देवेभ्यः
अदितये स्योनं ॥४॥ व्यचस्वतीः उर्विया वि श्रयंतां पतिऽभ्यः
न जनयः शुंभमानाः देवीः द्वारः बृहतीः विश्वंऽइन्वाः देवेभ्यः भ-



Digitized by Google

वत सुप्रायणाः ॥५॥८॥ आ सुष्वयंती यजते उपाके उषासानक्ता सदतां नि योनौ। दिव्ये योषणे बृहती सुरुक्मे अधि श्रियं शुक्रपिशं दधाने ॥६॥ दैव्या होतारा प्रथमा सुवाचा मिमाना यज्ञं मनुषो यजध्यै। प्रचोदयंता विदथेषु कारू प्राचीनं ज्योतिः प्रदिशा दिशंता ॥७॥ आ नो यज्ञं भारती तूयमेत्विळा मनुष्वदिह चेतयंती। तिस्रो देवीर्बर्हिरेदं स्योनं सरस्वती स्वपसः सदंतु ॥८॥ य इमे द्यावापृथिवी जनित्री रूपैरपिंशद्भुवनानि विश्वा। तमद्य होतरिषितो यजीयान्देवं त्वष्टारमिह यक्षि विद्वान् ॥९॥ उपावसृज त्मन्या समंजन्देवानां पाथ ऋतुथा हवींषि। वनस्पतिः शमिता देवो अग्निः स्वदंतु हव्यं मधुना घृतेन ॥१०॥ सद्यो जातो व्यमिमीत यज्ञमग्निर्देवानामभवत्पुरोगाः। अस्य होतुः प्रदिश्यृतस्य वाचि स्वाहाकृतं हविरदंतु देवाः ॥११॥९॥

---

॥१११॥ १–१० अष्टादंष्ट्रो वैरूपः ॥ इंद्रः ॥ त्रिष्टुप् ॥

॥१११॥ मनीषिणः प्र भरध्वं मनीषां यथायथा मतयः संति नृणां। इंद्रं सत्यैरेरयामा कृतेभिः स हि वीरो गिर्वणस्युर्विदानः ॥१॥ ऋतस्य हि सदसो धीतिरद्यौत्सं गार्ष्टेयो वृषभो गोभिरानट्। उदतिष्ठत्तविषेणा रवेण महांति चित्सं विव्याचा रजांसि ॥२॥ इंद्रः किल श्रुत्या अस्य वेद स हि जिष्णुः पथिकृत्सूर्याय। आन्मेनां कृण्वन्नच्युतो भुवद्गोः पतिर्दिवः सनजा अप्रतीतः ॥३॥ इंद्रो मह्ना महतो अर्णवस्य व्रतामिनादंगिरोभिर्गृणानः। पुरूणि चिन्नि तताना रजांसि दाधार यो धरुणं सत्यताता ॥४॥ इंद्रो दिवः प्रतिमानं पृथिव्या विश्वा वेद सवना हंति शुष्णं। महीं चिद्द्यामातनो-



Digitized by Google

वत सुप्रऽअयनाः॥५॥८॥ आ सुस्वयंती यजते उपाके उषसा-
नक्ता सदतां नि योनौ दिव्ये योषणे बृहती सुऽरुक्मे० अधि
श्रियं शुक्रऽपिशं दधाने ॥६॥ दैव्या होतारा प्रथमा सुऽवाचा
मिमाना यज्ञं मनुषः यजध्यै प्रऽचोदयंता विदथेषु कारू प्रा-
चीनं ज्योतिः प्रऽदिशा दिशंता॥७॥ आ नः यज्ञं भारती तूयं एतु
इळा मनुष्वत् इह चेतयंती तिस्रः देवीः बर्हिः आ इदं स्योनं स-
रस्वती सुऽअपसः सदंतु॥८॥ यः इमे द्यावापृथिवी जनित्री
रूपैः अपिंशत् भुवनानि विश्वा तं अद्य होतः इषितः यजीयान्
देवं त्वष्टारं इह यक्षि विद्वान्॥९॥ उपऽअवसृज त्मन्या संऽअं-
जन् देवानां पाथः ऋतुऽथा हवींषि वनस्पतिः शमिता देवः
अग्निः स्वदंतु हव्यं मधुना घृतेन॥१०॥ सद्यः जातः वि अमिमीत
यज्ञं अग्निः देवानां अभवत् पुरःऽगाः अस्य होतुः प्रऽदिशि ऋ-
तस्य वाचि स्वाहाऽकृतं हविः अदंतु देवाः॥११॥९॥

---

॥१११॥ मनीषिणः प्र भरध्वं मनीषां यथाऽयथा मतयः सं-
ति नृणां इंद्रं सत्यैः आ ईरयाम कृतेभिः सः हि वीरः गिर्वणस्युः
विदानः॥१॥ ऋतस्य हि सदसः धीतिः अद्यौत् सं गार्ष्टेयः वृष-
भः गोभिः आनट् उत् अतिष्ठत् तविषेण रवेण महांति चित् सं
विव्याच रजांसि॥२॥ इंद्रः किल श्रुत्यै अस्य वेद सः हि जिष्णुः
पथिऽकृत् सूर्याय आत् मेनां कृण्वन् अच्युतः भुवत् गोः पतिः दि-
वः सनऽजाः अप्रतिऽइतः॥३॥ इंद्रः मह्ना महतः अर्णवस्य व्रता
अमिनात् अंगिरःऽभिः गृणानः पुरूणि चित् नि तताम रजांसि
दाधार यः धरुणं सत्यऽताता॥४॥ इंद्रः दिवः प्रतिऽमानं पृथि-
व्याः विश्वा वेद सवना हंति शुष्णं महीं चित् द्यां आ अतनोत्



Digitized by Google

सूर्येण चास्कंभ चित्कंभनेन स्कभीयान्॥५॥१०॥ वज्रेण हि वृत्रहा वृत्रमस्तरदेवस्य शूशुवानस्य मायाः। वि धृष्णो अत्र धृषता जघंथाथाभवो मघवन्बाह्वोजाः॥६॥ सचंत यदुषसः सूर्येण चित्रामस्य केतवो रामविंदन्। आ यन्नक्षत्रं ददृशे दिवो न पुनर्यतो नकिरद्धा नु वेद॥७॥ दूरं किल प्रथमा जग्मुरासामिंद्रस्य याः प्रसवे सस्रुरापः। क्व स्विदग्रं क्व बुध्न आसामापो मध्यं क्व वो नूनमंतः॥८॥ सृजः सिंधूँरहिना जग्रसानाँ आदिदेताः प्र विविज्रे जवेन। मुमुक्षमाणा उत या मुमुच्रेऽधेदेता न रमंते नितिक्ताः॥९॥ सध्रीचीः सिंधुमुशतीरिवायन्सनाज्जार आरितः पूर्भिदासां। अस्तमा ते पार्थिवा वसून्यस्मे जग्मुः सूनृता इंद्र पूर्वीः॥१०॥११॥

---

॥११२॥ १—१० नभःप्रभेदनो वैरूपः॥ इंद्रः॥ त्रिष्टुप्॥

॥११२॥ इंद्र पिब प्रतिकामं सुतस्य प्रातःसावस्तव हि पूर्वपीतिः। हर्षस्व हंतवे शूर शत्रूनुक्थेभिष्टे वीर्या३ प्र ब्रवाम॥१॥ यस्ते रथो मनसो जवीयानेंद्र तेन सोमपेयाय याहि। तूयमा ते हरयः प्र द्रवंतु येभिर्यासि वृषभिर्मंदमानः॥२॥ हरित्वता वर्चसा सूर्यस्य श्रेष्ठै रूपैस्तन्वं स्पर्शयस्व। अस्माभिरिंद्र सखिभिर्हुवानः सध्रीचीनो मादयस्वा निषद्य॥३॥ यस्य त्यत्ते महिमानं मदेष्विमे मही रोदसी नाविविक्तां। तदोक आ हरिभिरिंद्र युक्तैः प्रियेभिर्याहि प्रियमन्नमच्छ॥४॥ यस्य शश्वत्पपिवाँ इंद्र शत्रूननानुकृत्या रण्या चकर्थ। स ते पुरंधिं तविषीमियर्ति स ते मदाय सुत इंद्र सोमः॥५॥१२॥ इदं ते पात्रं सनवित्तमिंद्र पिबा सोममेना शतक्रतो। पूर्ण आहावो मदिरस्य मध्वो यं विश्व इदभिहर्यंति देवाः॥६॥ वि हि त्वा-



Digitized by Google

सूर्येण चास्कंभं चित् स्कंभनेन स्कभीयान् ॥ ५ ॥ १० ॥ वज्रेण हि वृत्रऽहा वृत्रं अस्तः अदेवस्य शूशुवानस्य मायाः वि धृष्णो अत्र धृषता जघंथ अथ अभवः मघऽवन् बाहुऽओजाः ॥ ६ ॥ सचंत यत् उषसः सूर्येण चित्रां अस्य केतवः रां अविंदन् आ यत् नक्षत्रं ददृशे दिवः न पुनः यतः नकिः अद्धा नु वेद ॥ ७ ॥ दूरं किल प्रथमाः जग्मुः आसां इंद्रस्य याः प्रऽसवे ससुः आपः क्व स्वित् अग्रं क्व बुध्नः आसां आपः मध्यं क्व वः नूनं अंतः ॥ ८ ॥ सृजः सिंधून् अहिना जग्रसानान् आत् इत् एताः प्र विविज्रे जवेन मुमुक्षमाणाः उत याः मुमुचे अध इत् एताः न रमंते निऽतिक्ताः ॥ ९ ॥ सध्रीचीः सिंधुं उशतीःऽइव आयन् सनात् जारः आरितः पूःऽभित् आसां अस्त आ ते पार्थिवा वसूनि अस्मे जग्मुः सूनृताः इंद्र पूर्वीः ॥ १० ॥ ११ ॥

---

॥ ११२ ॥ इंद्र पिब प्रतिऽकामं सुतस्य प्रातःऽसावः तव हि पूर्वऽपीतिः हर्षस्व हंतवे शूर शत्रून् उक्थेभिः ते वीर्या प्र ब्रवाम ॥ १ ॥ यः ते रथः मनसः जवीयान् आ इंद्र तेन सोमऽपेयाय याहि तूयं आ ते हरयः प्र द्रवंतु येभिः यासि वृषऽभिः मंदमानः ॥ २ ॥ हरित्वता वर्चसा सूर्यस्य श्रेष्ठैः रूपैः तन्वं स्पर्शयस्व अस्माभिः इंद्र सखिऽभिः हुवानः सध्रीचीनः मादयस्व निऽसद्य ॥ ३ ॥ यस्य त्यत् ते महिमानं मदेषु इमे मही रोदसी न अविविक्तां तत् ओकः आ हरिऽभिः इंद्र युक्तैः प्रियेभिः याहि प्रियं अन्नं अच्छ ॥ ४ ॥ यस्य शश्वत् पपिऽवान् इंद्र शत्रून् अननुऽकृत्या रण्या चकर्थ सः ते पुरंऽधिं तविषीं इयर्ति सः ते मदाय सुतः इंद्र सोमः ॥ ५ ॥ १२ ॥ इदं ते पात्रं सनऽवित्तं इंद्र पिब सोमं एना शतऽक्रतो पूर्णः आऽहावः मदिरस्य मध्वः यं विश्वे इत् अभिऽहर्यंति देवाः ॥ ६ ॥ वि हि त्वां



Digitized by Google

मिंद्र पुरुधा जनासो हितप्रयसो वृषभ ह्वयंते। अस्माकं ते मधुमत्तमानीमा भुवन्त्सवना तेषु हर्य ॥७॥ प्र तं इंद्र पूर्व्याणि प्र नूनं वीर्या वोचं प्रथमा कृतानि। सतीनमन्युरश्रथायो अद्रिं सुवेदनामकृणोर्ब्रह्मणे गां ॥८॥ नि षु सीद गणपते गणेषु त्वामाहुर्विप्रतमं कवीनां। न ऋते त्वत्क्रियते किं चनारे महामर्कं मघवञ्चित्रमर्च ॥९॥ अभिख्या नो मघवन्नाधमानान्त्सखे बोधि वसुपते सखीनां। रणं कृधि रणकृत्सत्यशुष्माभक्ते चिदा भजा राये अस्मान् ॥१०॥१३॥९॥

---

॥ ११३ ॥ १–१० शतप्रभेदनो वैरूपः ॥ इंद्रः ॥ १–९ जगती । १० त्रिष्टुप् ॥

॥११३॥ तमस्य द्यावापृथिवी सचेतसा विश्वेभिर्देवैरनु शुष्ममावतां। यदैत्कृण्वानो महिमानमिंद्रियं पीत्वी सोमस्य क्रतुमाँ अवर्धत ॥१॥ तमस्य विष्णुर्महिमानमोजसांशुं दधन्वान्मधुनो वि रप्शते। देवेभिरिंद्रो मघवा सयावभिर्वृत्रं जघन्वाँ अभवद्वरेण्यः ॥२॥ वृत्रेण यदहिना बिभ्रदायुधा समस्थिथा युधये शंसमाविदे। विश्वे ते अत्र मरुतः सह त्मनावर्धन्नुग्र महिमानमिंद्रियं ॥३॥ जज्ञान एव व्यबाधत स्पृधः प्रापश्यद्वीरो अभि पौंस्यं रणं। अवृश्चदद्रिमव सस्यदः सृजदस्तभ्नान्नाकं स्वपस्यया पृथुं ॥४॥ आदिंद्रः सत्रा तविषीरपत्यत वरीयो द्यावापृथिवी अबाधत। अवाभरद्धृषितो वज्रमायसं शेवं मित्राय वरुणाय दाशुषे ॥५॥१४॥ इंद्रस्यात्र तविषीभ्यो विरप्शिन ऋघायतो अरंहयंत मन्यवे। वृत्रं यदुग्रो व्यवृश्चदोजसापो बिभ्रतं तमसा परीवृतं ॥६॥ या वीर्याणि प्रथमानि कर्त्वा महित्वेभिर्यतमानौ समीयतुः। ध्वांतं तमोऽव दध्वसे हत इंद्रो मह्ना पूर्वहूताव-



Digitized by Google

इंद्र पुरुधा जनासः हितऽप्रयसः वृषभ ह्वयंते अस्माकं ते मधु-
मत्ऽतमानि इमा भुवन् सवना तेषु हर्य ॥७॥ प्र ते इंद्र पूर्व्याणि
प्र नूनं वीर्या वोचं प्रथमा कृतानि सतीनऽमन्युः अश्रथयः अद्रिं
सुऽवेदनां अकृणोः ब्रह्मणे गां ॥८॥ नि सु सीद गणऽपते गणेषु त्वां
आहुः विप्रऽतमं कवीनां न ऋते त्वत् क्रियते किं चन आरे महां
अर्कं मघऽवन् चित्रं अर्च ॥९॥ अभिऽख्या नः मघऽवन् नाध-
मानान् सखे बोधि वसुऽपते सखीनां रणं कृधि रणऽकृत् सत्य-
ऽशुष्म अभक्ते चित् आ भज राये अस्मान् ॥१०॥१३॥९॥

---

॥११३॥ तं अस्य द्यावापृथिवी सऽचेतसा विश्वेभिः देवैः अ-
नु शुष्मं आवतां यत् ऐत् कृण्वानः महिमानं इंद्रियं पीत्वी सोम-
स्य क्रतुऽमान् अवर्धत ॥१॥ तं अस्य विष्णुः महिमानं ओजसा
अंशुं दधन्वान् मधुनः वि रप्शते देवेभिः इंद्रः मघऽवा सयावऽभिः
वृत्रं जघन्वान् अभवत् वरेण्यः ॥२॥ वृत्रेण यत् अहिना बिभ्रत्
आयुधा संऽअस्थिथाः युधये शंसं आऽविदे विश्वे ते अत्र मरुतः
सह त्मना अवर्धन् उग्र महिमानं इंद्रियं ॥३॥ जज्ञानः एव वि
अबाधत स्पृधः प्र अपश्यत् वीरः अभि पौंस्यं रणं अवृश्चत् अद्रिं
अव सऽस्यदः सृजत् अस्तभ्नात् नाकं सुऽअपस्यया पृथुं ॥४॥ आत्
इंद्रः सत्रा तविषीः अपत्यत वरीयः द्यावापृथिवी अबाधत अव
अभरत् धृषितः वज्रं आयसं शेवं मित्राय वरुणाय दाशुषे ॥५॥
॥१४॥ इंद्रस्य अत्र तविषीभ्यः विऽरप्शिनः ऋघायतः अरंहयंत
मन्यवे वृत्रं यत् उग्रः वि अवृश्चत् ओजसा अपः बिभ्रतं तमसा प-
रिऽवृतं ॥६॥ या वीर्याणि प्रथमानि कर्त्वा महिऽत्वेभिः यतमा-
नौ संऽईयतुः ध्वांतं तमः अव दध्वसे हते इंद्रः मह्ना पूर्वऽहूतौ अ-



Digitized by Google

पत्यत ॥७॥ विश्वे देवासो अध वृष्ण्यानि तेऽवर्धयन्त्सोमवत्या वचस्यया। रद्धं वृत्रमहिमिंद्रस्य हन्मनाग्निर्न जंभैस्तृष्वन्नमावयत् ॥८॥ भूरि दक्षेभिर्वचनेभिर्ऋक्वभिः सख्येभिः सख्यानि प्र वोचत। इंद्रो धुनिं च चुमुरिं च दंभयञ्छ्रद्धामनस्या शृणुते दभीतये ॥९॥ त्वं पुरूण्या भरा स्वश्व्या येभिर्मंसै निवचनानि शंसन्। सुगेभिर्विश्वा दुरिता तरेम विदो षु ण उर्विया गाधमद्य ॥१०॥१५॥

॥ ११४ ॥ १–१० सध्रिर्वैरूपो घर्मो वा तापसः ॥ विश्वे देवाः ॥ १–३. ५–१० त्रिष्टुप् । ४ जगती ॥

॥११४॥ घर्मा समंता त्रिवृतं व्यापतुस्तयोर्जुष्टिं मातरिश्वा जगाम। दिवस्पयो दिधिषाणा अवेषन्विदुर्देवाः सहसामानमर्कं ॥१॥ तिस्रो देष्ट्राय निर्ऋतीरुपासते दीर्घश्रुतो वि हि जानंति वह्नयः। तासां नि चिक्युः कवयो निदानं परेषु या गुह्येषु व्रतेषु ॥२॥ चतुष्कपर्दा युवतिः सुपेशा घृतप्रतीका वयुनानि वस्ते। तस्यां सुपर्णा वृषणा नि षेदतुर्यत्र देवा दधिरे भागधेयं ॥३॥ एकः सुपर्णः स समुद्रमा विवेश स इदं विश्वं भुवनं वि चष्टे। तं पाकेन मनसापश्यमंतितस्तं माता रेळ्हि स उ रेळ्हि मातरं ॥४॥ सुपर्णं विप्राः कवयो वचोभिरेकं संतं बहुधा कल्पयंति। छंदांसि च दधतो अध्वरेषु ग्रहान्त्सोमस्य मिमते द्वादश ॥५॥१६॥ षट्त्रिंशांश्च चतुरः कल्पयंतश्छंदांसि च दधत आद्वादशं। यज्ञं विमाय कवयो मनीष ऋक्सामाभ्यां प्र रथं वर्तयंति ॥६॥ चतुर्दशान्ये महिमानो अस्य तं धीरा वाचा प्र णयंति सप्त। आप्नानं तीर्थं क इह प्र वोचद्येन पथा प्रपिबंते सुतस्य ॥७॥ सहस्रधा पंचदशान्युक्था यावद्द्यावापृथिवी तावदित्तत्। सहस्रधा महिमानः



Digitized by Google

पत्यत॥७॥ विश्वे देवासः अध वृष्ण्यानि ते अवर्धयन् सोमऽवत्या
वचस्यया इदं वृषं अहिं इंद्रस्य हन्मना अग्निः न जंभैः तृषु अन्नं
आवयत्॥८॥ भूरि दक्षेभिः वचनेभिः ऋक्वऽभिः सख्येभिः स-
ख्यानि प्र वोचत इंद्रः धुनिं च चुमुरिं च दंभयन् श्रद्धाऽमनस्या
शृणुते दभीतये॥९॥ त्वं पुरूणि आ भर सुऽअश्व्या येभिः मंसै नि-
ऽवचनानि शंसन् सुऽगेभिः विश्वा दुःऽइता तरेम विदो' सु नः
उर्विया गाधं अद्य॥१०॥१५॥

---

॥११४॥ घर्मा संऽअंता त्रिऽवृतं वि आपतुः तयोः जुष्टिं मा-
तरिश्वा जगाम दिवः पयः दिधिषाणाः अवेषन् विदुः देवाः स-
हऽसामानं अर्कं॥१॥ तिस्रः देष्ट्राय निःऽऋतीः उप आसते दीर्घ-
ऽश्रुतः वि हि जानंति वह्नयः तासां नि चिक्युः कवयः निऽदानं
परेषु याः गुह्येषु व्रतेषु॥२॥ चतुःऽकपर्दा युवतिः सुऽपेशाः घृत-
ऽप्रतीका वयुनानि वस्ते तस्यां सुऽपर्णा वृषणा नि सेदतुः यत्र
देवाः दधिरे भागऽधेयं॥३॥ एकः सुऽपर्णः सः समुद्रं आ विवेश
सः इदं विश्वं भुवनं वि चष्टे तं पाकेन मनसा अपश्यं अंतितः तं
माता रेळ्हि सः ऊं' रेळ्हि मातरं॥४॥ सुऽपर्णं विप्राः कवयः व-
चःऽभिः एकं संतं बहुधा कल्पयंति छंदांसि च दधतः अध्वरेषु य-
हान् सोमस्य मिमते द्वादश॥५॥१६॥ षट्ऽत्रिंशान् च चतुरः क-
ल्पयंतः छंदांसि च दधतः आऽद्वादशं यज्ञं विऽमाय कवयः मनी-
षा ऋक्ऽसामाभ्यां प्र रथं वर्तयंति॥६॥ चतुःऽदश अन्ये महि-
मानः अस्य तं धीराः वाचा प्र नयंति सप्त आप्नानं तीर्थं कः इह प्र
वोचत् येन पथा प्रऽपिबंते सुतस्य॥७॥ सहस्रधा पंचऽदशानि
उक्था यावत् द्यावापृथिवी' तावत् इत् तत् सहस्रधा महिमानः

सहस्रं यावद्ब्रह्म विष्ठितं तावती वाक् ॥८॥ कश्छंदसां योगमा वेद धीरः को धिष्ण्यां प्रति वाचं पपाद। कमृत्विजामष्टमं शूरमाहुर्हरी इंद्रस्य नि चिकाय कः स्वित् ॥९॥ भूम्या अंतं पर्येके चरंति रथस्य धूर्षु युक्तासो अस्थुः। श्रमस्य दायं वि भजंत्येभ्यो यदा यमो भवति हर्म्ये हितः ॥१०॥१७॥

---

॥११५॥ १-९ उपस्तुतो वार्ष्टिहव्यः ॥ अग्निः ॥ १-७ जगती। ८ त्रिष्टुप्। ९ शक्वरी ॥

॥११५॥ चित्र इच्छिशोस्तरुणस्य वक्षथो न यो मातरावप्येति धातवे। अनूधा यदि जीजनदधा च नु ववक्ष सद्यो महि दूत्यं१ चरन् ॥१॥ अग्निर्ह नाम धायि दन्नपस्तमः सं यो वना युवते भस्मना दता। अभिप्रमुरा जुह्वा स्वध्वर इनो न प्रोथमानो यवसे वृषा ॥२॥ तं वो विं न द्रुषदं देवमंधस इंदुं प्रोथंतं प्रवपंतमर्णवं। आसा वह्निं न शोचिषा विरप्शिनं महिव्रतं न सरजंतमध्वनः ॥३॥ वि यस्य ते ज्रयसानस्याजर धक्षोर्न वाताः परि संत्यच्युताः। आ रण्वासो युयुधयो न सत्वनं त्रितं नशंत प्र शिषंत इष्टये ॥४॥ स इदग्निः कण्वतमः कण्वसखार्यः परस्यांतरस्य तरुषः। अग्निः पातु गृणतो अग्निः सूरीनग्निर्ददातु तेषामवो नः ॥५॥१८॥ वाजिंतमाय सह्यसे सुपित्र्य तृषु च्यवानो अनु जातवेदसे। अनुद्रे चिद्यो धृषता वरं सते महिंतमाय धन्वनेदविष्यते ॥६॥ एवाग्निर्मर्तैः सह सूरिभिर्वसु ष्टवे सहसः सूनरो नृभिः। मित्रासो न ये सुधिता ऋतायवो द्यावो न द्युम्नैरभि संति मानुषान् ॥७॥ ऊर्जो नपात्सहसावन्निति त्वोपस्तुतस्य वंदते वृषा वाक्। त्वां स्तोषाम त्वया सुवीरा द्राघीय आयुः प्रतरं दधानाः ॥८॥ इति त्वाग्ने वृष्टिहव्यस्य पुत्रा उपस्तुतास



Digitized by Google

सहस्रं यावत् ब्रह्म विऽस्थितं तावती वाक् ॥ ८ ॥ कः छंदसां योगं आ वेद धीरः कः धिष्ण्यां प्रति वाचं पपाद कं ऋत्विजां अष्टमं शूरं आहुः हरी इंद्रस्य नि चिकाय कः स्वित् ॥ ९ ॥ भूम्याः अंतं परि एके चरंति रथस्य धूःऽसु युक्तासः अस्थुः श्रमस्य दायं वि भजंति एभ्यः यदा यमः भवति हर्म्ये हितः ॥ १० ॥ १७ ॥

---

॥ ११५ ॥ चित्रः इत् शिशोः तरुणस्य वक्षथः न यः मातरौ अपिऽएति धातवे अनूधाः यदि जीजनत् अध च नु ववक्ष सद्यः महि दूत्यं चरन् ॥ १ ॥ अग्निः ह नाम धायि दन् अपःऽतमः सं यः वना युवते भस्मना दता अभिऽप्रमुरा जुह्वा सुऽअध्वरः इनः न प्रोथमानः यवसे वृषा ॥ २ ॥ तं वः विं न द्रुऽसदं देवं अंधसः इंदुं प्रोथंतं प्रऽवपंतं अर्णवं आसा वह्निं न शोचिषा विऽरप्शिनं महिऽव्रतं न सरजंतं अध्वनः ॥ ३ ॥ वि यस्य ते ज्रयसानस्य अजर धक्षोः न वाताः परि संति अच्युताः आ रण्वासः युयुधयः न सत्वनं त्रितं नशंत प्र शिषंतः इष्टये ॥ ४ ॥ सः इत् अग्निः कण्वऽतमः कण्वऽसखा अर्यः परस्य अंतरस्य तरुषः अग्निः पातु गृणतः अग्निः सूरीन् अग्निः ददातु तेषां अवः नः ॥ ५ ॥ १८ ॥ वाजिन्ऽतमाय सह्यसे सुऽपित्र्य तृषु च्यवानः अनु जातऽवेदसे अनुद्रे चित् यः धृषता वरं सते महिन्ऽतमाय धन्वना इत् अविष्यते ॥ ६ ॥ एव अग्निः मर्तैः सह सूरिऽभिः वसुः स्तवे सहसः सूनरः नृऽभिः मित्रासः न ये सुऽधिताः ऋतऽयवः द्यावः न द्युम्नैः अभि संति मानुषान् ॥ ७ ॥ ऊर्जः नपात् सहसाऽवन् इति त्वा उपऽस्तुतस्य वंदते वृषा वाक् त्वां स्तोषाम त्वया सुऽवीराः द्राघीयः आयुः प्रऽतरं दधानाः ॥ ८ ॥ इति त्वा अग्ने वृष्टिऽहव्यस्य पुत्राः उपऽस्तुतासः



Digitized by Google

ऋषयोऽवोचन्। तांश्च पाहि गृणतश्च सूरीन्वषड्वषळित्यूर्ध्वासो अनक्षन्नमो नम इत्यूर्ध्वासो अनक्षन् ॥ ९ ॥ १९ ॥

॥ ११६ ॥ १—९ अग्नियुतः स्थौरोऽग्नियूपो वा स्थौरः ॥ इंद्रः ॥ त्रिष्टुप् ॥

॥ ११६ ॥ पिबा सोममिंद्र महत इंद्रियाय पिबा वृत्राय हंतवे शविष्ठ। पिब राये शवसे हूयमानः पिब मध्वस्तृपदिंद्रा वृषस्व ॥ १ ॥ अस्य पिब क्षुमतः प्रस्थितस्येंद्र सोमस्य वरमा सुतस्य। स्वस्तिदा मनसा मादयस्वार्वाचीनो रेवते सौभगाय ॥ २ ॥ ममत्तु त्वा दिव्यः सोम इंद्र ममत्तु यः सूयते पार्थिवेषु। ममत्तु येन वरिवश्चकर्थ ममत्तु येन निरिणासि शत्रून् ॥ ३ ॥ आ द्विबर्हा अमिनो यात्विंद्रो वृषा हरिभ्यां परिषिक्तमंधः। गव्या सुतस्य प्रभृतस्य मध्वः सत्रा खेदामरुशहा वृषस्व ॥ ४ ॥ नि तिग्मानि भ्राशयन्भ्राश्यान्यव स्थिरा तनुहि यातुजूनां। उग्राय ते सहो बलं ददामि प्रतीत्या शत्रून्विगदेषु वृश्च ॥ ५ ॥ २० ॥ व्यर्य इंद्र तनुहि श्रवांस्योजः स्थिरेव धन्वनोऽभिमातीः। अस्मद्र्यग्वावृधानः सहोभिरनिभृष्टस्तन्वं वावृधस्व ॥ ६ ॥ इदं हविर्मघवन्तुभ्यं रातं प्रति सम्राळहृणानो गृभाय। तुभ्यं सुतो मघवन्तुभ्यं पक्वो३ऽद्धींद्र पिब च प्रस्थितस्य ॥ ७ ॥ अद्धीदिंद्र प्रस्थितेमा हवींषि चनो दधिष्व पचतोत सोमं। प्रयस्वंतः प्रति हर्यामसि त्वा सत्याः संतु यजमानस्य कामाः ॥ ८ ॥ प्रेंद्राग्निभ्यां सुवचस्यामियर्मि सिंधाविव प्रेरयं नावमर्कैः। अया इव परि चरंति देवा ये अस्मभ्यं धनदा उद्भिदश्च ॥ ९ ॥ २१ ॥

॥ ११७ ॥ १—९ भिक्षुः ॥ धनान्नदानप्रशंसा ॥ १. २ जगती। ३—९ त्रिष्टुप् ॥

॥ ११७ ॥ न वा उ देवाः क्षुधमिद्वधं ददुरुताशितमुप ग-



Digitized by Google

ऋषयः अवोचन् तान् च पाहि गृणतः च सूरीन् वषट् वषट् इति ऊर्ध्वासः अनक्षन् नमः नमः इति ऊर्ध्वासः अनक्षन् ॥ ९ ॥ १९ ॥

---

॥ ११६ ॥ पिब सोमं महते इंद्रियाय पिब वृत्राय हंतवे शविष्ठ पिब राये शवसे हूयमानः पिब मध्वः तृपत् इंद्र आ वृषस्व ॥ १ ॥ अस्य पिब क्षुऽमतः प्रऽस्थितस्य इंद्र सोमस्य वरं आ सुतस्य स्वस्तिऽदाः मनसा मादयस्व अर्वाचीनः रेवते सौभगाय ॥ २ ॥ ममत्तु त्वा दिव्यः सोमः इंद्र ममत्तु यः सूयते पार्थिवेषु ममत्तु येन वरिवः चकर्थ ममत्तु येन निऽरिणासि शत्रून् ॥ ३ ॥ आ द्विऽबर्हाः अमिनः यातु इंद्रः वृषा हरिऽभ्यां परिऽसिक्तं अंधः गवि आ सुतस्य प्रऽभृतस्य मध्वः सत्रा खेदां अरुशऽहा आ वृषस्व ॥ ४ ॥ नि तिग्मानि भ्राशयन् भ्राश्यानि अव स्थिरा तनुहि यातुऽजूनां उग्राय ते सहः बलं ददामि प्रतिऽइत्य शत्रून् विऽगदेषु वृश्च ॥ ५ ॥ २० ॥ वि अर्यः इंद्र तनुहि श्रवांसि ओजः स्थिराऽइव धन्वनः अभिऽमातीः अस्मद्र्यक् ववृधानः सहःऽभिः अनिऽभृष्टः तन्वं ववृधस्व ॥ ६ ॥ इदं हविः मघऽवन् तुभ्यं रातं प्रति संऽराट् अहृणानः गृभाय तुभ्यं सुतः मघऽवन् तुभ्यं पक्वः अद्धि इंद्र पिब च प्रऽस्थितस्य ॥ ७ ॥ अद्धि इत् इंद्र प्रऽस्थिता इमा हवींषि चनः दधिष्व पचता उत सोमं प्रयस्वंतः प्रति हर्यामसि त्वा सत्याः संतु यजमानस्य कामाः ॥ ८ ॥ प्र इंद्राग्निऽभ्यां सुऽवचस्यां इयर्मि सिंधौऽइव प्र ईरयं नावं अर्कैः अयाःऽइव परि चरंति देवाः ये अस्मभ्यं धनऽदाः उत्ऽभिदः च ॥ ९ ॥ २१ ॥

---

॥ ११७ ॥ न वै ऊं देवाः क्षुधं इत् वधं ददुः उत आशितं उप ग-



Digitized by Google

च्छंति मृत्यवः। उतो रयिः पृणतो नोप दस्यत्युतापृणन्मर्डितारं न विंदते ॥१॥ य आध्राय चकमानाय पित्वोऽन्नवान्त्सन्रफितायोपजग्मुषे। स्थिरं मनः कृणुते सेवते पुरोतो चित्स मर्डितारं न विंदते ॥२॥ स इद्भोजो यो गृहवे ददात्यन्नकामाय चरते कृशाय। अरमस्मै भवति यामहूता उतापरीषु कृणुते सखायं ॥३॥ न स सखा यो न ददाति सख्ये सचाभुवे सचमानाय पित्वः। अपास्मात्प्रेयान्न तदोको अस्ति पृणंतमन्यमरणं चिदिच्छेत् ॥४॥ पृणीयादिन्नाधमानाय तव्यान्द्राघीयांसमनु पश्येत पंथां। ओ हि वर्तंते रथ्येव चक्रान्यमन्यमुप तिष्ठंत रायः ॥५॥२२॥ मोघमन्नं विंदते अप्रचेताः सत्यं ब्रवीमि वध इत्स तस्य। नार्यमणं पुष्यति नो सखायं केवलाघो भवति केवलादी ॥६॥ कृषन्नित्फाल आशितं कृणोति यन्नध्वानमप वृंक्ते चरित्रैः। वदन्ब्रह्मावदतो वनीयान्पृणन्नापिरपृणंतमभि ष्यात् ॥७॥ एकपाद्भूयो द्विपदो वि चक्रमे द्विपात्त्रिपादमभ्येति पश्चात्। चतुष्पादेति द्विपदामभिस्वरे संपश्यन्पंक्तीरुपतिष्ठमानः ॥८॥ समौ चिद्धस्तौ न समं विविष्टः संमातरा चिन्न समं दुहाते। यमयोश्चिन्न समा वीर्याणि ज्ञाती चित्संतौ न समं पृणीतः ॥९॥२३॥

---

॥११८॥ १—९ उरुक्षय आमहीयवः ॥ अग्नी रक्षोहा ॥ गायत्री ॥

॥११८॥ अग्ने हंसि न्य१त्रिणं दीद्यन्मर्त्येष्वा। स्वे क्षये शुचिव्रत ॥१॥ उत्तिष्ठसि स्वाहुतो घृतानि प्रति मोदसे। यत्त्वा स्रुचः समस्थिरन् ॥२॥ स आहुतो वि रोचतेऽग्निरीळेन्यो गिरा। स्रुचा प्रतीकमज्यते ॥३॥ घृतेनाग्निः समज्यते मधु-



Digitized by Google

च्छंति मृत्यवः उतो॑ र॒यिः पृ॒ण॒तः न उप॑ द॒स्य॒ति॒ उ॒त अपृ॑ण॒न् म॒डि॒तार॑म् न विंद॒ते॒ ॥१॥ यः आ॒ध्राय॑ चकमा॒नाय॑ पि॒त्वः अन्न॑ऽवान् सन् र॒फि॒ताय॑ उ॒प॒ऽज॒ग्मुषे॑ स्थि॒रं मनः॑ कृणु॒ते सेव॑ते पु॒रा उ॒तो॒ चि॒त् सः म॒डि॒तार॑म् न विं॒द॒ते॒ ॥२॥ सः इत् भो॒जः यः गृ॒हवे॑ द॒दा॒ति अन्न॑ऽकामाय चर॑ते कृ॒शाय॑ अर॑म् अ॒स्मै॒ भ॒व॒ति॒ याम॑ऽहूतौ उ॒त अ॒प॒री॒षु॒ कृ॒णु॒ते॒ सखा॑यम् ॥३॥ न सः सखा॑ यः न द॒दा॒ति॒ सख्ये॑ स॒चा॒ऽभुवे॑ सच॑मानाय पि॒त्वः अप॑ अ॒स्मा॒त् प्र इ॒या॒त् न तत् ओक॑ः अ॒स्ति॒ पृ॒णन्त॑म् अ॒न्यम् अर॑णम् चि॒त् इ॒च्छे॒त् ॥४॥ पृ॒णी॒या॒त् इत् नाध॑मानाय तव्या॑न् द्रा॒घी॑यांस॑म् अनु॑ प॒श्ये॒त॒ पन्था॑म् ओ॑ हि वर्त॑न्ते रथ्या॑ऽइव च॒क्रा अ॒न्यम्ऽअ॑न्यम् उप॑ ति॒ष्ठ॒न्त॒ रायः॑ ॥५॥२२॥ मोघ॑म् अन्न॑म् विं॒द॒ते॒ अप्र॑ऽचेताः स॒त्यम् ब्र॒वी॒मि॒ व॒धः इत् सः तस्य॑ न अ॒र्य॒मण॑म् पुष्य॑ति नो॑ सखा॑यम् केव॑लऽअघः भ॒व॒ति॒ केव॒ल॒ऽआ॒दी ॥६॥ कृ॒षन् इत् फालः॑ आशि॑तम् कृणो॒ति॒ य॒न् अध्वा॑नम् अप॑ वृ॒ङ्क्ते॒ च॒रित्रैः॑ वद॑न् ब्र॒ह्मा अव॑द॒तः वनी॑यान् पृ॒णन् आ॒पिः अपृ॑णन्त॑म् अ॒भि स्या॒त् ॥७॥ एक॑ऽपात् भूयः॑ द्वि॒ऽप॒दः वि च॒क्र॒मे॒ द्वि॒ऽपा॒त् त्रि॒ऽपा॒द॑म् अ॒भि ए॒ति॒ प॒श्चात् चतु॑ःऽपात् ए॒ति॒ द्वि॒ऽप॒दाम् अ॒भि॒ऽस्व॒रे सं॒ऽप॒श्यन् प॒ङ्क्तीः उ॒प॒ऽति॒ष्ठ॒मा॒नः ॥८॥ स॒मौ चि॒त् हस्तौ॑ न स॒मम् वि॒वि॒ष्टः सं॒ऽमा॒तरा॑ चि॒त् न स॒मम् दु॒हा॒ते॒ य॒मयोः॑ चि॒त् न स॒मा वी॒र्या॑णि ज्ञा॒ती॑ चि॒त् सन्तौ॑ न स॒मम् पृ॒णी॒तः ॥९॥२३॥

---

॥११८॥ अग्ने॑ हंसि॑ नि अ॒त्रिण॑म् दी॒द्य॒त् मर्त्ये॑षु आ स्वे क्षये॑ शु॒चि॒ऽव्र॒त ॥१॥ उ॒त् ति॒ष्ठ॒सि॒ सु॒ऽआ॒हु॒तः घृ॒तानि॑ प्रति॑ मो॒द॒से॒ यत् त्वा॒ स्रु॒चः॑ सं॒ऽअ॒स्थि॒र॒न् ॥२॥ सः आ॒ऽहु॒तः वि रो॒च॒ते॒ अ॒ग्निः ई॒ळे॒न्यः॑ गि॒रा स्रु॒चा प्रती॑कम् अ॒ज्य॒ते॒ ॥३॥ घृ॒तेन॑ अ॒ग्निः सम् अ॒ज्य॒ते॒ मधु॑-



Digitized by Google

प्रतीक आहुतः। रोचमानो विभावसुः॥४॥ जरमाणः समिध्यसे देवेभ्यो हव्यवाहन। तं त्वा हवंत मर्त्याः॥५॥२४॥ तं मर्ता अमर्त्यं घृतेनाग्निं सपर्यत। अदाभ्यं गृहपतिं॥६॥ अदाभ्येन शोचिषाग्ने रक्षस्त्वं दह। गोपा ऋतस्य दीदिहि॥७॥ स त्वमग्ने प्रतीकेन प्रत्योष यातुधान्यः। उरुक्षयेषु दीद्यत्॥८॥ तं त्वा गीर्भिरुरुक्षया हव्यवाहं समीधिरे। यजिष्ठं मानुषे जने॥९॥२५॥

---

॥ ११९ ॥ १–१३ लव ऐंद्रः ॥ आत्मस्तुतिः ॥ गायत्री ॥

॥११९॥ इति वा इति मे मनो गामश्वं सनुयामिति। कुवित्सोमस्यापामिति॥१॥ प्र वाता इव दोधत उन्मा पीता अयंसत। कुवित्सोमस्यापामिति॥२॥ उन्मा पीता अयंसत रथमश्वा इवाशवः। कुवित्सोमस्यापामिति॥३॥ उप मा मतिरस्थित वाश्रा पुत्रमिव प्रियं। कुवित्सोमस्यापामिति॥४॥ अहं तष्टेव वंधुरं पर्यचामि हृदा मतिं। कुवित्सोमस्यापामिति॥५॥ नहि मे अक्षिपच्चनाच्छांत्सुः पंच कृष्टयः। कुवित्सोमस्यापामिति॥६॥२६॥ नहि मे रोदसी उभे अन्यं पक्षं चन प्रति। कुवित्सोमस्यापामिति॥७॥ अभि द्यां महिना भुवमभी३मां पृथिवीं महीं। कुवित्सोमस्यापामिति॥८॥ हंताहं पृथिवीमिमां नि दधानीह वेह वा। कुवित्सोमस्यापामिति॥९॥ ओषमित्पृथिवीमहं जंघनानीह वेह वा। कुवित्सोमस्यापामिति॥१०॥ दिवि मे अन्यः पक्षो३धो अन्यमचीकृषं। कुवित्सोमस्यापामिति॥११॥ अहमस्मि महामहोऽभिनभ्यमुदीषितः। कुवित्सोमस्यापामिति॥१२॥ गृहो याम्यरंकृतो देवेभ्यो हव्यवाहनः। कुवित्सोमस्यापामिति॥१३॥२७॥६॥



Digitized by Google

ऽप्रतीकः आऽहुतः रोचमानः विभाऽवसुः ॥४॥ जरमाणः सं इ-
ध्यसे देवेभ्यः हव्यऽवाहन तं त्वा हवंत मर्त्याः ॥५॥२४॥ तं मर्ताः
अमर्त्यं घृतेन अग्निं सपर्यत अदाभ्यं गृहऽपतिं ॥६॥ अदाभ्येन
शोचिषा अग्ने रक्षः त्वं दह गोपाः ऋतस्य दीदिहि ॥७॥ सः त्वं अग्ने
प्रतीकेन प्रति ओष यातुऽधान्यः उरुऽक्षयेषु दीद्यत् ॥८॥ तं त्वा
गीःऽभिः उरुऽक्षयाः हव्यऽवाहं सं ईधिरे यजिष्ठं मानुषे जने
॥९॥२५॥

---

॥११९॥ इति वै इति मे मनः गां अश्वं सनुयां इति कुवित् सो-
मस्य अपां इति ॥१॥ प्र वाताःऽइव दोधतः उत् मा पीताः अयं-
सत कुवित् सोमस्य अपां इति ॥२॥ उत् मा पीताः अयंसत रथं
अश्वाःऽइव आशवः कुवित् सोमस्य अपां इति ॥३॥ उप मा म-
तिः अस्थित वाश्रा पुत्रंऽइव प्रियं कुवित् सोमस्य अपां इति
॥४॥ अहं तष्टाऽइव वंधुरं परि अचामि हृदा मतिं कुवित् सोमस्य
अपां इति ॥५॥ नहि मे अक्षिऽपत् चन अच्छांत्सुः पंच कृष्टयः
कुवित् सोमस्य अपां इति ॥६॥२६॥ नहि मे रोदसी उभे अन्यं
पक्षं चन प्रति कुवित् सोमस्य अपां इति ॥७॥ अभि द्यां महिना
भुवं अभि इमां पृथिवीं महीं कुवित् सोमस्य अपां इति ॥८॥ हंत
अहं पृथिवीं इमां नि दधानि इह वा इह वा कुवित् सोमस्य अपां
इति ॥९॥ ओषं इत् पृथिवीं अहं जंघनानि इह वा इह वा कुवित्
सोमस्य अपां इति ॥१०॥ दिवि मे अन्यः पक्षः अधः अन्यं अची-
कृषं कुवित् सोमस्य अपां इति ॥११॥ अहं अस्मि महाऽमहः अ-
भिऽनभ्यं उत्ऽईषितः कुवित् सोमस्य अपां इति ॥१२॥ गृहः या-
मि अरंऽकृतः देवेभ्यः हव्यऽवाहनः कुवित् सोमस्य अपां इति
॥१३॥२७॥६॥



Digitized by Google

॥ १२० ॥ १—९ बृहद्दिव आथर्वणः ॥ इंद्रः ॥ त्रिष्टुप् ॥

॥ १२० ॥ तदिदा॑स॒ भुव॑नेषु॒ ज्येष्ठं॒ यतो॑ ज॒ज्ञ उ॒ग्रस्त्वे॒षनृ॑म्णः ।
स॒द्यो ज॑ज्ञा॒नो नि रि॑णाति॒ शत्रू॒ननु॒ यं विश्वे॒ मद॒न्त्यूमाः॑ ॥ १ ॥
वा॒वृ॒धा॒नः शव॑सा॒ भूर्यो॑जाः॒ शत्रु॑र्दा॒साय॑ भि॒यसं॑ दधाति । अव्य॑-
नच्च व्य॒नच्च॒ सस्नि॒ सं ते॑ नवंत॒ प्रभृ॑ता॒ मदे॑षु ॥ २ ॥ त्वे क्रतु॒मपि॑
वृंजंति॒ विश्वे॒ द्विर्यदे॒ते त्रिर्भव॒न्त्यूमाः॑ । स्वा॒दोः स्वादी॑यः स्वा॒दुना॑
सृजा॒ सम॒दः सु मधु॒ मधु॑ना॒भि यो॑धीः ॥ ३ ॥ इति॑ चि॒द्धि त्वा॒ धना॑
जयं॑तं॒ मदे॑मदे अनु॒मद॑न्ति॒ विप्राः॑ । ओजी॑यो धृष्णो स्थि॒रमा त॑-
नुष्व॒ मा त्वा॑ दभन्यातु॒धाना॑ दु॒रेवाः॑ ॥ ४ ॥ त्वया॑ व॒यं शा॑शद्महे॒ रणे॑षु
प्रपश्य॑न्तो यु॒धेन्या॑नि॒ भूरि॑ । चो॒दया॑मि त॒ आयु॑धा॒ वचो॑भिः॒ सं ते॑
शिशामि॒ ब्रह्म॑णा॒ वयां॑सि ॥ ५ ॥ १ ॥ स्तु॒षेय्यं॑ पुरु॒वर्प॑सम्ऋ॒भ्वमि॒न-
त॑ममा॒प्त्यमा॒प्त्याना॑म् । आ द॑र्षते॒ शव॑सा स॒प्त दा॒नून्प्र सा॑क्षते प्रति॒-
माना॑नि॒ भूरि॑ ॥ ६ ॥ नि तद्द॑धिषेऽव॑रं॒ परं॑ च॒ यस्मि॒न्नावि॒थाव॑सा
दु॒रो॒णे । आ मा॒तरा॑ स्थापयसे जिग॒त्नू अत॑ इनोषि॒ कर्व॑रा पु॒रू-
णि॑ ॥ ७ ॥ इ॒मा ब्रह्म॑ बृ॒हद्दि॑वो विव॒क्तीन्द्रा॑य शू॒षम॑ग्रि॒यः स्व॒र्षाः ।
म॒हो गो॒त्रस्य॑ क्षयति स्व॒राजो॒ दुर॑श्च॒ विश्वा॑ अवृणो॒दप॒ स्वाः
॥ ८ ॥ ए॒वा म॒हान्बृ॒हद्दि॑वो॒ अथ॒र्वावो॑च॒त्स्वां त॒न्व१॒मिन्द्र॑मे॒व ।
स्वसा॑रो मात॒रिभ्व॑रीररि॒प्रा हि॒न्वन्ति॑ च॒ शव॑सा व॒र्धय॑न्ति च
॥ ९ ॥ २ ॥

---

॥ १२१ ॥ १—१० हिरण्यगर्भः प्राजापत्यः ॥ कः ॥ त्रिष्टुप् ॥

॥ १२१ ॥ हि॒र॒ण्य॒ग॒र्भः सम॑वर्त॒ताग्रे॑ भू॒तस्य॑ जा॒तः पति॒रेक॑
आसीत् । स दा॑धार पृथि॒वीं द्यामु॒तेमां कस्मै॑ दे॒वाय॑ ह॒विषा॑
विधेम ॥ १ ॥ य आ॑त्म॒दा ब॑ल॒दा यस्य॒ विश्व॑ उ॒पास॑ते प्र॒-
शिषं॒ यस्य॑ दे॒वाः । यस्य॑ छा॒यामृतं॒ यस्य॑ मृ॒त्युः कस्मै॑ दे॒वाय॑ ह॒-



Digitized by Google

॥१२०॥ तत् इत् आस भुवनेषु ज्येष्ठं यतः जज्ञे उग्रः त्वेषऽनृम्णः सद्यः जज्ञानः नि रिणाति शत्रून् अनु यं विश्वे मदंति ऊमाः ॥१॥ ववृधानः शवसा भूरिऽओजाः शत्रुः दासाय भियसं दधाति अविऽअनत् च विऽअनत् च सस्नि सं ते नवंत प्रऽभृता मदेषु ॥२॥ त्वे क्रतुं अपि वृंजंति विश्वे द्विः यत् एते त्रिः भवंति ऊमाः स्वादोः स्वादीयः स्वादुना सृज सं अदः सु मधु मधुना अभि योधीः ॥३॥ इति चित् हि त्वा धना जयंतं मदेऽमदे अनुऽमदंति विप्राः ओजीयः धृष्णो स्थिरं आ तनुष्व मा त्वा दभन् यातुऽधानाः दुःऽएवाः ॥४॥ त्वया वयं शाशद्महे रणेषु प्रऽपश्यंतः युधेन्यानि भूरि चोदयामि ते आयुधा वचःऽभिः सं ते शिशामि ब्रह्मणा वयांसि ॥५॥१॥ स्तुषेय्यं पुरुऽवर्पसं ऋभ्वं इनऽतमं आप्त्यं आप्त्यानां आ दर्षते शवसा सप्त दानून् प्र साक्षते प्रतिऽमानानि भूरि ॥६॥ नि तत् दधिषे अवरं परं च यस्मिन् आविथ अवसा दुरोणे आ मातरा स्थापयसे जिगत्नू अतः इनोषि कर्वरा पुरूणि ॥७॥ इमा ब्रह्म बृहत्ऽदिवः विवक्ति इंद्राय शूषं अग्रियः स्वःऽसाः महः गोत्रस्य क्षयति स्वऽराजः दुरः च विश्वाः अवृणोत् अप स्वाः ॥८॥ एव महान् बृहत्ऽदिवः अथर्वा अवोचत् स्वां तन्वं इंद्रं एव स्वसारः मातरिभ्वरीः अरिप्राः हिन्वंति च शवसा वर्धयंति च ॥९॥२॥

---

॥१२१॥ हिरण्यऽगर्भः सं अवर्तत अग्रे भूतस्य जातः पतिः एकः आसीत् सः दाधार पृथिवीं द्यां उत इमां कस्मै देवाय हविषा विधेम ॥१॥ यः आत्मऽदाः बलऽदाः यस्य विश्वे उपऽआसते प्रऽशिषं यस्य देवाः यस्य छाया अमृतं यस्य मृत्युः कस्मै देवाय ह-



Digitized by Google

विषा विधेम ॥ २ ॥ यः प्राणतो निमिषतो महित्वैक इद्राजा जगतो बभूव। य ईशे अस्य द्विपदश्चतुष्पदः कस्मै देवाय हविषा विधेम ॥ ३ ॥ यस्येमे हिमवंतो महित्वा यस्य समुद्रं रसया सहाहुः। यस्येमाः प्रदिशो यस्य बाहू कस्मै देवाय हविषा विधेम ॥ ४ ॥ येन द्यौरुग्रा पृथिवी च दृळ्हा येन स्वः स्तभितं येन नाकः। यो अंतरिक्षे रजसो विमानः कस्मै देवाय हविषा विधेम ॥ ५ ॥ ३ ॥ यं क्रंदसी अवसा तस्तभाने अभ्यैक्षेतां मनसा रेजमाने। यत्राधि सूर उदितो विभाति कस्मै देवाय हविषा विधेम ॥ ६ ॥ आपो ह यद्बृहतीर्विश्वमायन्गर्भं दधाना जनयंतीरग्निं। ततो देवानां समवर्ततासुरेकः कस्मै देवाय हविषा विधेम ॥ ७ ॥ यश्चिदापो महिना पर्यपश्यद्दक्षं दधाना जनयंतीर्यज्ञं। यो देवेष्वधि देव एक आसीत्कस्मै देवाय हविषा विधेम ॥ ८ ॥ मा नो हिंसीज्जनिता यः पृथिव्या यो वा दिवं सत्यधर्मा जजान। यश्चापश्चंद्रा बृहतीर्जजान कस्मै देवाय हविषा विधेम ॥ ९ ॥ प्रजापते न त्वदेतान्यन्यो विश्वा जातानि परि ता बभूव। यत्कामास्ते जुहुमस्तन्नो अस्तु वयं स्याम पतयो रयीणां ॥ १० ॥ ४ ॥

---

॥ १२२ ॥ १–८ चित्रमहा वासिष्ठः ॥ अग्निः ॥ १. ५ त्रिष्टुप्। २–४. ६–८ जगती ॥

॥ १२२ ॥ वसुं न चित्रमहसं गृणीषे वामं शेवमतिथिमद्विषेण्यं। स रासते शुरुधो विश्वधायसोऽग्निर्होता गृहपतिः सुवीर्यं ॥ १ ॥ जुषाणो अग्ने प्रति हर्य मे वचो विश्वानि विद्वान्वयुनानि सुक्रतो। घृतनिर्णिग्ब्रह्मणे गातुमेरय तव देवा अजनयन्ननु व्रतं ॥ २ ॥ सप्त धामानि परियन्नमर्त्यो दाशद्दाशुषे सुकृते मामहस्व। सुवीरेण रयिणाग्ने स्वाभुवा



Digitized by Google

हविषा विधेम ॥२॥ यः प्राणतः निऽमिषतः महिऽत्वा एकः इत्
राजा जगतः बभूव यः ईशे अस्य द्विऽपदः चतुःऽपदः कस्मै देवाय
हविषा विधेम ॥३॥ यस्य इमे हिमऽवंतः महिऽत्वा यस्य समुद्रं र-
सया सह आहुः यस्य इमाः प्रऽदिशः यस्य बाहू' कस्मै देवाय ह-
विषा विधेम ॥४॥ येन द्यौः उग्रा पृथिवी च दृळ्हा येन स्वः॰ स्त-
भितं येन नाकः यः अंतरिक्षे रजसः विऽमानः कस्मै देवाय हवि-
षा विधेम ॥५॥३॥ यं क्रंदसी' अवसा तस्तभाने' अभि ऐक्षेतां म-
नसा रेजमाने' यत्र अधि सूरः उत्ऽइतः विऽभाति कस्मै देवाय
हविषा विधेम ॥६॥ आपः ह यत् बृहतीः विश्वं आयन् गर्भं दधा-
नाः जनयंतीः अग्निं ततः देवानां सं अवर्तत असुः एकः कस्मै दे-
वाय हविषा विधेम ॥७॥ यः चित् आपः महिना परिऽअपश्यत्
दक्षं दधानाः जनयंतीः यज्ञं यः देवेषु अधि देवः एकः आसीत् क-
स्मै देवाय हविषा विधेम ॥८॥ मा नः हिंसीत् जनिता यः पृथि-
व्याः यः वा दिवं सत्यऽधर्मा जजान यः च अपः चंद्राः बृहतीः ज-
जान कस्मै देवाय हविषा विधेम ॥९॥ प्रजापते न त्वदेतान्यन्यो
विश्वा जातानि परि ता बभूव यत्कामास्ते जुहुमस्तन्नो अस्तु वयं
स्याम पतयो रयीणां ॥१०॥४॥

---

॥१२२॥ वसुं न चित्रऽमहसं गृणीषे वामं शेवं अतिथिं अद्वि-
षेण्यं सः रासते शुरुधः विश्वऽधायसः अग्निः होता गृहऽपतिः
सुऽवीर्यं ॥१॥ जुषाणः अग्ने प्रति हर्य मे वचः विश्वानि विद्वान्
वयुनानि सुऽक्रतो॰ घृतऽनिर्निक् ब्रह्मणे गातुं आ ईरय तव दे-
वाः अजनयन् अनु व्रतं ॥२॥ सप्त धामानि परिऽयन् अमर्त्यः दा-
शत् दाशुषे सुऽकृते ममहस्व सुऽवीरेण रयिणा अग्ने सुऽआभुवा



Digitized by Google

यस्त आनट् समिधा तं जुषस्व ॥३॥ यज्ञस्य केतुं प्रथमं पुरोहितं हविष्मंत ईळते सप्त वाजिनं । शृण्वंतमग्निं घृतपृष्ठमुक्षणं पृणंतं देवं पृणते सुवीर्यं ॥४॥ त्वं दूतः प्रथमो वरेण्यः स हूयमानो अमृताय मत्स्व । त्वां मर्जयन्मरुतो दाशुषो गृहे त्वां स्तोमेभिर्भृगवो वि रुरुचुः ॥५॥५॥ इषं दुहन्सुदुघां विश्वधायसं यज्ञप्रिये यजमानाय सुक्रतो । अग्ने घृतस्नुस्त्रिर्ऋतानि दीद्यद्वर्तिर्यज्ञं परियन्सुक्रतूयसे ॥६॥ त्वामिदस्या उषसो व्युष्टिषु दूतं कृण्वाना अयजंत मानुषाः । त्वां देवा महयाय्याय वावृधुराज्यमग्ने निमृजंतो अध्वरे ॥७॥ नि त्वा वसिष्ठा अह्वंत वाजिनं गृणंतो अग्ने विदथेषु वेधसः । रायस्पोषं यजमानेषु धारय यूयं पात स्वस्तिभिः सदा नः ॥८॥६॥

---

॥१२३॥ १-८ वेनः ॥ वेनः ॥ त्रिष्टुप् ॥

॥१२३॥ अयं वेनश्चोदयत्पृश्निगर्भा ज्योतिर्जरायू रजसो विमाने । इममपां संगमे सूर्यस्य शिशुं न विप्रा मतिभी रिहंति ॥१॥ समुद्रादूर्मिमुदियर्ति वेनो नभोजाः पृष्ठं हर्यतस्य दर्शि । ऋतस्य सानावधि विष्टपि भ्राट् समानं योनिमभ्यनूषत व्राः ॥२॥ समानं पूर्वीरभि वावशानास्तिष्ठन्वत्सस्य मातरः सनीळाः । ऋतस्य सानावधि चक्रमाणा रिहंति मध्वो अमृतस्य वाणीः ॥३॥ जानंतो रूपमकृपंत विप्रा मृगस्य घोषं महिषस्य हि ग्मन् । ऋतेन यंतो अधि सिंधुमस्थुर्विदद्गंधर्वो अमृतानि नाम ॥४॥ अप्सरा जारमुपसिष्मियाणा योषा बिभर्ति परमे व्योमन् । चरत्प्रियस्य योनिषु प्रियः सन्त्सीदत्पक्षे हिरण्यये स वेनः ॥५॥७॥ नाके सुपर्णमुप यत्पतंतं हृदा वेनंतो अभ्यचक्षत त्वा । हिरण्यपक्षं वरु-



Digitized by Google

यः ते आनट् सम्ऽइधा तं जुषस्व ॥ ३ ॥ यज्ञस्य केतुं प्रथमं पुरःऽहितं हविष्मंतः ईळते सप्त वाजिनं शृण्वंतं अग्निं घृतऽपृष्ठं उक्षणं पृणंतं देवं पृणते सुऽवीर्यं ॥ ४ ॥ त्वं दूतः प्रथमः वरेण्यः सः हूयमानः अमृताय मत्स्व त्वां मर्जयन् मरुतः दाशुषः गृहे त्वां स्तोमेभिः भृगवः वि रुरुचुः ॥ ५ ॥ ५ ॥ इषं दुहन् सुऽदुघां विश्वऽधायसं यज्ञऽप्रिये यजमानाय सुऽक्रतो॰ अग्ने घृतऽस्नुः त्रिः ऋतानि दीद्यत् वर्तिः यज्ञं परिऽयन् सुक्रतुऽयसे ॥ ६ ॥ त्वां इत् अस्याः उषसः विऽउष्टिषु दूतं कृण्वानाः अयजंत मानुषाः त्वां देवाः महयाय्याय वावृधुः आज्यं अग्ने निऽमृजंतः अध्वरे ॥ ७ ॥ नि त्वा वसिष्ठाः अह्वंत वाजिनं गृणंतः अग्ने विदथेषु वेधसः रायः पोषं यजमानेषु धारय यूयं पात स्वस्तिऽभिः सदा नः ॥ ८ ॥ ६ ॥

---

॥ १२३ ॥ अयं वेनः चोदयत् पृश्निऽगर्भाः ज्योतिःऽजरायुः रजसः विऽमाने इमं अपां सम्ऽगमे सूर्यस्य शिशुं न विप्राः मतिऽभिः रिहंति ॥ १ ॥ समुद्रात् ऊर्मिं उत् इयर्ति वेनः नभःऽजाः पृष्ठं हर्यतस्य दर्शि ऋतस्य सानौ अधि विष्टपि भ्राट् समानं योनिं अभि अनूषत व्राः ॥ २ ॥ समानं पूर्वीः अभि वावशानाः तिष्ठन् वत्सस्य मातरः सऽनीळाः ऋतस्य सानौ अधि चक्रमाणाः रिहंति मध्वः अमृतस्य वाणीः ॥ ३ ॥ जानंतः रूपं अकृपंत विप्राः मृगस्य घोषं महिषस्य हि ग्मन् ऋतेन यंतः अधि सिंधुं अस्थुः विदत् गंधर्वः अमृतानि नाम ॥ ४ ॥ अप्सराः जारं उपऽसिष्मियाणा योषा बिभर्ति परमे विऽओमन् चरत् प्रियस्य योनिषु प्रियः सन् सीदत् पक्षे हिरण्यये सः वेनः ॥ ५ ॥ ७ ॥ नाके सुऽपर्णं उप यत् पतंतं हृदा वेनंतः अभि अचक्षत त्वा हिरण्यऽपक्षं वरु-

णस्य दूतं यमस्य योनौ शकुनं भुरण्युं ॥६॥ ऊर्ध्वो गंधर्वो अधि
नाके अस्थात्प्रत्यङ्चित्रा बिभ्रदस्यायुधानि । वसानो अत्कं
सुरभिं दृशे कं स्व१र्ण नाम जनत प्रियाणि ॥७॥ द्रप्सः समुद्र-
मभि यज्जिगाति पश्यन्गृध्रस्य चक्षसा विधर्मन् । भानुः शु-
क्रेण शोचिषा चकानस्तृतीये चक्रे रजसि प्रियाणि ॥८॥८॥

---

॥१२४॥ १. ५–९ अग्निवरुणसोमानां निहवः । २–४ अग्निः ॥ १–४ अग्निः ।
५–८ यथानिपातं । ९ इंद्रः ॥ १–६. ८. ९ त्रिष्टुप् । ७ जगती ॥

॥१२४॥ इमं नो अग्न उप यज्ञमेहि पंचयामं त्रिवृतं स-
प्ततंतुं । असो हव्यवाळुत नः पुरोगा ज्योगेव दीर्घं तम
आशयिष्ठाः ॥१॥ अदेवाद्देवः प्रचता गुहा यन्प्रपश्यमानो
अमृतत्वमेमि । शिवं यत्संतमशिवो जहामि स्वात्सख्या-
दरणीं नाभिमेमि ॥२॥ पश्यन्नन्यस्या अतिथिं वयाया
ऋतस्य धाम वि मिमे पुरूणि । शंसामि पित्रे असुराय
शेवमयज्ञियाद्यज्ञियं भागमेमि ॥३॥ बह्वीः समा अकरमंत-
रस्मिन्निंद्रं वृणानः पितरं जहामि । अग्निः सोमो वरुणस्ते
च्यवंते पर्यावर्द्राष्ट्रं तदवाम्यायन् ॥४॥ निर्माया उ त्ये असु-
रा अभूवन्त्वं च मा वरुण कामयासे । ऋतेन राजन्ननृतं
विविंचन्मम राष्ट्रस्याधिपत्यमेहि ॥५॥९॥ इदं स्वरिद-
मिदास वाममयं प्रकाश उर्व१ंतरिक्षं । हनाव वृत्रं निरेहि
सोम हविष्ट्वा संतं हविषा यजाम ॥६॥ कविः कवित्वा दिवि
रूपमासजदप्रभूती वरुणो निरपः सृजत् । क्षेमं कृण्वाना
जनयो न सिंधवस्ता अस्य वर्णं शुचयो भरिभ्रति ॥७॥ ता
अस्य ज्येष्ठमिंद्रियं सचंते ता ईमा क्षेति स्वधया मदंतीः । ता ईं
विशो न राजानं वृणाना बीभत्सुवो अप वृत्रादतिष्ठन् ॥८॥



Digitized by Google

वास्य दूतं यमस्य योनौ शकुनं भुरण्युं ॥ ६ ॥ ऊर्ध्वः गंधर्वः अधि नाके अस्थात् प्रत्यङ् चित्रा बिभ्रत् अस्य आयुधानि वसानः अत्कं सुरभिं दृशे कं स्वः न नाम जनत प्रियाणि ॥ ७ ॥ द्रप्सः समुद्रं अभि यत् जिगाति पश्यन् गृध्रस्य चक्षसा विऽधर्मन् भानुः शुक्रेण शोचिषा चकानः तृतीये चक्रे रजसि प्रियाणि ॥ ८ ॥ ८ ॥

---

॥ १२४ ॥ इमं नः अग्ने उप यज्ञं आ इहि पंचऽयामं त्रिऽवृतं सप्तऽतंतुं असः हव्यऽवाट् उत नः पुरःऽगाः ज्योक् एव दीर्घं तमः आ अशयिष्ठाः ॥ १ ॥ अदेवात् देवः प्रऽचता गुहा यन् प्रऽपश्यमानः अमृतऽत्वं एमि शिवं यत् संतं अशिवः जहामि स्वात् सख्यात् अरणीं नाभिं एमि ॥ २ ॥ पश्यन् अन्यस्याः अतिथिं वयायाः ऋतस्य धाम वि मिमे पुरूणि शंसामि पित्रे असुराय शेवं अयज्ञियात् यज्ञियं भागं एमि ॥ ३ ॥ बह्वीः समाः अकरं अंतः अस्मिन् इंद्रं वृणानः पितरं जहामि अग्निः सोमः वरुणः ते च्यवंते परिऽआवर्त् राष्ट्रं तत् अवामि आऽयन् ॥ ४ ॥ निःऽमायाः ऊं त्ये असुराः अभूवन् त्वं च मा वरुण कामयासे ऋतेन राजन् अनृतं विऽविंचन् मम राष्ट्रस्य अधिऽपत्यं आ इहि ॥ ५ ॥ ९ ॥ इदं स्वः इदं इत् आस वामं अयं प्रऽकाशः उरु अंतरिक्षं हनाव वृत्रं निःऽएहि सोम हविः त्वा संतं हविषा यजाम ॥ ६ ॥ कविः कविऽत्वा दिवि रूपं आ असजत् अप्रऽभूती वरुणः निः अपः सृजत् क्षेमं कृण्वानाः जनयः न सिंधवः ताः अस्य वर्णं शुचयः भरिभ्रति ॥ ७ ॥ ताः अस्य ज्येष्ठं इंद्रियं सचंते ताः ईं आ क्षेति स्वधया मदंतीः ताः ईं विशः न राजानं वृणानाः बीभत्सुवः अप वृत्रात् अतिष्ठन् ॥ ८ ॥

बीभत्सूनां सयुजं हंसमाहुरपां दिव्यानां सख्ये चरंतं । अनुष्टुभ-
मनु चर्चूर्यमाणमिंद्रं नि चिक्युः कवयो मनीषा ॥ ९ ॥ १० ॥

॥ १२५ ॥ १-८ वागांभृणी ॥ वागांभृणी ॥ १. ३-८ त्रिष्टुप् । २ जगती ॥

॥ १२५ ॥ अहं रुद्रेभिर्वसुभिश्चराम्यहमादित्यैरुत विश्वदेवैः ।
अहं मित्रावरुणोभा बिभर्म्यहमिंद्राग्नी अहमश्विनोभा ॥ १ ॥
अहं सोममाहनसं बिभर्म्यहं त्वष्टारमुत पूषणं भगं । अहं दधामि
द्रविणं हविष्मते सुप्राव्ये३ यजमानाय सुन्वते ॥ २ ॥ अहं राष्ट्री सं-
गमनी वसूनां चिकितुषी प्रथमा यज्ञियानां । तां मा देवा व्यदधुः
पुरुत्रा भूरिस्थात्रां भूर्यावेशयंतीं ॥ ३ ॥ मया सो अन्नमत्ति यो वि-
पश्यति यः प्राणिति य ईं शृणोत्युक्तं । अमंतवो मां त उप क्षियं-
ति श्रुधि श्रुत श्रद्धिवं ते वदामि ॥ ४ ॥ अहमेव स्वयमिदं वदामि
जुष्टं देवेभिरुत मानुषेभिः । यं कामये तंतमुग्रं कृणोमि तं ब्रह्माणं
तमृषिं तं सुमेधां ॥ ५ ॥ ११ ॥ अहं रुद्राय धनुरा तनोमि ब्रह्मद्विषे
शरवे हंतवा उ । अहं जनाय समदं कृणोम्यहं द्यावापृथिवी आ
विवेश ॥ ६ ॥ अहं सुवे पितरमस्य मूर्धन्मम योनिरप्स्वं१तः स-
मुद्रे । ततो वि तिष्ठे भुवनानु विश्वोतामूं द्यां वर्ष्मणोप स्पृशामि
॥ ७ ॥ अहमेव वात इव प्र वाम्यारभमाणा भुवनानि विश्वा ।
परो दिवा पर एना पृथिव्यैतावती महिना सं बभूव ॥ ८ ॥ १२ ॥

॥ १२६ ॥ १-८ कुल्मलबर्हिषः शैलूषिरंहोमुग्वा वामदेव्यः ॥ विश्वे देवाः ॥ १-७ उपरि-
ष्टाद्बृहती । ८ त्रिष्टुप् ॥

॥ १२६ ॥ न तमंहो न दुरितं देवासो अष्ट मर्त्यं । सजोषसो य-
मर्यमा मित्रो नयंति वरुणो अति द्विषः ॥ १ ॥ तद्धि वयं वृणीमहे
वरुण मित्रार्यमन् । येना निरंहसो यूयं पाथ नेथा च मर्त्यम-



Digitized by Google

बीभत्सूनां सऽयुजं हंसं आहुः अपां दिव्यानां सख्ये चरंतं अनु-
ऽस्तुभं अनु चचूर्यमाणं इंद्रं नि चिक्युः कवयः मनीषा ॥९॥१०॥

---

॥१२५॥ अहं रुद्रेभिः वसुऽभिः चरामि अहं आदित्यैः उत
विश्वऽदेवैः अहं मित्रावरुणा उभा बिभर्मि अहं इंद्राग्नी॰ अहं
अश्विना उभा ॥१॥ अहं सोमं आहनसं बिभर्मि अहं त्वष्टारं उत
पूषणं भगं अहं दधामि द्रविणं हविष्मते सुप्रऽअव्ये यजमानाय
सुन्वते ॥२॥ अहं राष्ट्री संऽगमनी वसूनां चिकितुषी प्रथमा यज्ञि-
यानां तां मा देवाः वि अदधुः पुरुऽत्रा भूरिऽस्थात्रां भूरि आऽवे-
शयंतीं ॥३॥ मया सः अन्नं अत्ति यः विऽपश्यति यः प्राणिति यः
ईं शृणोति उक्तं अमंतवः मां ते उप क्षियंति श्रुधि श्रुत श्रद्धिऽवं
ते वदामि ॥४॥ अहं एव स्वयं इदं वदामि जुष्टं देवेभिः उत मानु-
षेभिः यं कामये तंऽतं उग्रं कृणोमि तं ब्रह्माणं तं ऋषिं तं सुऽमेधां
॥५॥११॥ अहं रुद्राय धनुः आ तनोमि ब्रह्मऽद्विषे शरवे हंतवै ऊं॰
अहं जनाय सऽमदं कृणोमि अहं द्यावापृथिवी॰ आ विवेश ॥६॥
अहं सुवे पितरं अस्य मूर्धन् मम योनिः अप्ऽसु अंतः॰ समुद्रे
ततः वि तिष्ठे भुवना अनु विश्वा उत अमूं द्यां वर्ष्मणा उप स्पृ-
शामि ॥७॥ अहं एव वातःऽइव प्र वामि आऽरभमाणा भुव-
नानि विश्वा परः दिवा परः एना पृथिव्या एतावती महिना सं
बभूव ॥८॥१२॥

---

॥१२६॥ न तं अंहः न दुःऽइतं देवासः अष्ट मर्त्यं सऽजोषसः यं
अर्यमा मित्रः नयंति वरुणः अति द्विषः ॥१॥ तत् हि वयं वृणीमहे
वरुण मित्र अर्यमन् येन निः अंहसः यूयं पाथ नेथ च मर्त्यं अ-



Digitized by Google

ति द्विषः॥२॥ ते नूनं नोऽयमूतये वरुणो मित्रो अर्यमा। नयिष्ठा उ नो नेषणि पर्षिष्ठा उ नः पर्षण्यति द्विषः॥३॥ यूयं विश्वं परि पाथ वरुणो मित्रो अर्यमा। युष्माकं शर्मणि प्रिये स्याम सुप्रणीतयोऽति द्विषः॥४॥ आदित्यासो अति स्रिधो वरुणो मित्रो अर्यमा। उग्रं मरुद्भी रुद्रं हुवेमेंद्रमग्निं स्वस्तयेऽति द्विषः॥५॥ नेतार ऊ षु णस्तिरो वरुणो मित्रो अर्यमा। अति विश्वानि दुरिता राजानश्चर्षणीनामति द्विषः॥६॥ शुनमस्मभ्यमूतये वरुणो मित्रो अर्यमा। शर्म यच्छंतु सप्रथ आदित्यासो यदीमहे अति द्विषः॥७॥ यथा ह त्यद्वसवो गौर्यं चित्पदि षिताममुंचता यजत्राः। एवो ष्व१स्मन्मुंचता व्यंहः प्र तार्यग्ने प्रतरं न आयुः॥८॥१३॥

---

॥१२७॥ १–८ कुशिकः सौभरो रात्रिर्वा भारद्वाजी ॥ रात्रिस्तवः ॥ गायत्री ॥

॥१२७॥ रात्री व्यख्यदायती पुरुत्रा देव्य१क्षभिः। विश्वा अधि श्रियोऽधित॥१॥ ओर्वप्रा अमर्त्या निवतो देव्यु१द्वतः। ज्योतिषा बाधते तमः॥२॥ निरु स्वसारमस्कृतोषसं देव्यायती। अपेदु हासते तमः॥३॥ सा नो अद्य यस्या वयं नि ते यामन्नविक्ष्महि। वृक्षे न वसतिं वयः॥४॥ नि ग्रामासो अविक्षत नि पद्वंतो नि पक्षिणः। नि श्येनासश्चिदर्थिनः॥५॥ यावया वृक्यं१ वृकं यवय स्तेनमूर्म्ये। अथा नः सुतरा भव॥६॥ उप मा पेपिशत्तमः कृष्णं व्यक्तमस्थित। उष ऋणेव यातय॥७॥ उप ते गा इवाकरं वृणीष्व दुहितर्दिवः। रात्रि स्तोमं न जिग्युषे॥८॥१४॥

---

॥१२८॥ १–९ विहव्यः ॥ विश्वे देवाः ॥ १–८ त्रिष्टुप्। ९ जगती ॥

॥१२८॥ ममाग्ने वर्चो विहवेष्वस्तु वयं त्वेंधानास्तन्वं



Digitized by Google

ति द्विषः ॥२॥ ते नूनं नः अयं ऊतये वरुणः मित्रः अर्यमा नयि-
ष्ठाः ऊं इति नः नेषणि पर्षिष्ठाः ऊं इति नः पर्षणि अति द्विषः ॥३॥ यूयं
विश्वं परि पाथ वरुणः मित्रः अर्यमा युष्माकं शर्मणि प्रिये
स्याम सुऽप्रनीतयः अति द्विषः ॥४॥ आदित्यासः अति स्निधः
वरुणः मित्रः अर्यमा उग्रं मरुत्ऽभिः रुद्रं हुवेम इंद्रं अग्निं स्व-
स्तये अति द्विषः ॥५॥ नेतारः ऊं इति सु नः तिरः वरुणः मित्रः अर्य-
मा अति विश्वानि दुःऽइता राजानः चर्षणीनां अति द्विषः ॥६॥
शुनं अस्मभ्यं ऊतये वरुणः मित्रः अर्यमा शर्म यच्छंतु सऽप्रथः
आदित्यासः यत् ईमहे अति द्विषः ॥७॥ यथा ह त्यत् वसवः गौर्यं
चित् पदि सितां अमुंचत यजत्राः एवो इति सु अस्मत् मुंचत वि अं-
हः प्र तारि अग्ने प्रऽतरं नः आयुः ॥८॥१३॥

---

॥१२७॥ रात्री वि अख्यत् आऽयती पुरुऽत्रा देवी अक्षऽभिः
विश्वाः अधि श्रियः अधित ॥१॥ आ उरु अप्राः अमर्त्या निऽवतः
देवी उत्ऽवतः ज्योतिषा बाधते तमः ॥२॥ निः ऊं इति स्वसारं अकृत
उषसं देवी आऽयती अप इत् ऊं इति हासते तमः ॥३॥ सा नः अद्य य-
स्याः वयं नि ते यामन् अविक्ष्महि वृक्षे न वसतिं वयः ॥४॥ नि
ग्रामासः अविक्षत नि पत्ऽवंतः नि पक्षिणः नि श्येनासः चित्
अर्थिनः ॥५॥ यवय वृक्यं वृकं यवय स्तेनं ऊर्म्ये अथ नः सुऽतरा
भव ॥६॥ उप मा पेपिशत् तमः कृष्णं विऽअक्तं अस्थित उषः ऋ-
णाऽइव यातय ॥७॥ उप ते गाःऽइव आ अकरं वृणीष्व दुहितः
दिवः रात्रि स्तोमं न जिग्युषे ॥८॥१४॥

---

॥१२८॥ मम अग्ने वर्चः विऽहवेषु अस्तु वयं त्वा इंधानाः तन्वं



Digitized by Google

पुषेम। मह्यं नमंतां प्रदिशश्चतस्रस्त्वयाध्यक्षेण पृतना जयेम ॥१॥
मम देवा विहवे संतु सर्व इंद्रवंतो मरुतो विष्णुरग्निः। ममांत-
रिक्षमुरुलोकमस्तु मह्यं वातः पवतां कामे अस्मिन् ॥२॥ मयि
देवा द्रविणमा यजंतां मय्याशीरस्तु मयि देवहूतिः। दैव्या हो-
तारो वनुषंत पूर्वेऽरिष्टाः स्याम तन्वा सुवीराः ॥३॥ मह्यं यजंतु
मम यानि हव्याकूतिः सत्या मनसो मे अस्तु। एनो मा नि गां
कतमच्चनाहं विश्वे देवासो अधि वोचता नः ॥४॥ देवीः षळु-
र्वीरुरु नः कृणोत विश्वे देवास इह वीरयध्वं। मा हास्महि प्रजया
मा तनूभिर्मा रधाम द्विषते सोम राजन् ॥५॥१५॥ अग्ने मन्युं प्र-
तिनुदन्परेषामदब्धो गोपाः परि पाहि नस्त्वं। प्रत्यंचो यंतु नि-
गुतः पुनस्ते३मैषां चित्तं प्रबुधां वि नेशत् ॥६॥ धाता धातॄणां
भुवनस्य यस्पतिर्देवं त्रातारमभिमातिषाहं। इमं यज्ञमश्विनो-
भा बृहस्पतिर्देवाः पांतु यजमानं न्यर्थात् ॥७॥ उरुव्यचा नो म-
हिषः शर्म यंसदस्मिन्हवे पुरुहूतः पुरुक्षुः। स नः प्रजायै हर्यश्व
मृळयेंद्र मा नो रीरिषो मा परा दाः ॥८॥ ये नः सपत्ना अप
ते भवंत्विंद्राग्निभ्यामव बाधामहे तान्। वसवो रुद्रा आदित्या
उपरिस्पृशं मोग्रं चेत्तारमधिराजमक्रन् ॥९॥१६॥१०॥

---

॥ १२९ ॥ १–७ प्रजापतिः परमेष्ठी ॥ भाववृत्तं ॥ त्रिष्टुप् ॥

॥ १२९ ॥ नासदासीन्नो सदासीत्तदानीं नासीद्रजो नो
व्योमा परो यत्। किमावरीवः कुह कस्य शर्मन्नंभः
किमासीद्गहनं गभीरं ॥१॥ न मृत्युरासीदमृतं न तर्हि
न रात्र्या अह्न आसीत्प्रकेतः। आनीदवातं स्वधया त-
देकं तस्माद्धान्यन्न परः किं चनास ॥२॥ तम आसीत्त-



Digitized by Google

पुषेम मह्यं नमंतां प्रऽदिशः चतस्रः त्वया अधिऽअक्षेण पृतनाः जयेम ॥१॥ मम देवाः विऽहवे संतु सर्वे इंद्रऽवंतः मरुतः विष्णुः अग्निः मम अंतरिक्षं उरुऽलोकं अस्तु मह्यं वातः पवतां कामे अस्मिन् ॥२॥ मयि देवाः द्रविणं आ यजंतां मयि आऽशीः अस्तु मयि देवऽहूतिः दैव्याः होतारः वनुषंत पूर्वे अरिष्टाः स्याम तन्वा सुऽवीराः ॥३॥ मह्यं यजंतु मम यानि हव्या आऽकूतिः सत्या मनसः मे अस्तु एनः मा नि गां कतमत् चन अहं विश्वे देवासः अधि वोचत नः ॥४॥ देवीः षट् उर्वीः उरु नः कृणोत विश्वे देवासः इह वीरयध्वं मा हास्महि प्रऽजया मा तनूभिः मा रधाम द्विषते सोम राजन् ॥५॥१५॥ अग्ने मन्युं प्रतिऽनुदन् परेषां अदब्धः गोपाः परि पाहि नः त्वं प्रत्यंचः यंतु निऽगुतः पुनः ते अमा एषां चित्तं प्रऽबुधां वि नेशत् ॥६॥ धाता धातॄणां भुवनस्य यः पतिः देवं धातारं अभिमातिऽसहं इमं यज्ञं अश्विना उभा बृहस्पतिः देवाः पांतु यजमानं निऽअर्थात् ॥७॥ उरुऽव्यचाः नः महिषः शर्म यंसत् अस्मिन् हवे पुरुऽहूतः पुरुऽक्षुः सः नः प्रऽजायै हरिऽअश्व मृळय इंद्र मा नः रिरिषः मा परा दाः ॥८॥ ये नः सऽपत्नाः अप ते भवंतु इंद्राग्निऽभ्यां अव बाधामहे तान् वसवः रुद्राः आदित्याः उपरिऽस्पृशं मा उग्रं चेत्तारं अधिऽराजं अक्रन् ॥९॥१६॥ ॥१०॥

---

॥१२९॥ न असत् आसीत् नो सत् आसीत् तदानीं न आसीत् रजः नो विऽओम परः यत् किं आ अवरीवः कुह कस्य शर्मन् अंभः किं आसीत् गहनं गभीरं ॥१॥ न मृत्युः आसीत् अमृतं न तर्हि न राव्याः अह्नः आसीत् प्रऽकेतः आनीत् अवातं स्वधया तत् एकं तस्मात् ह अन्यत् न परः किं चन आस ॥२॥ तमः आसीत्



Digitized by Google

मसा गूळ्हमग्रेऽप्रकेतं सलिलं सर्वमा इदं। तुच्छ्येनाभ्वपिहितं यदासीत्तपसस्तन्महिनाजायतैकं ॥३॥ कामस्तदग्रे समवर्ततताधि मनसो रेतः प्रथमं यदासीत्। सतो बंधुमसति निरविंदन्हृदि प्रतीष्या कवयो मनीषा ॥४॥ तिरश्चीनो विततो रश्मिरेषामधः स्विदासी३दुपरि स्विदासी३त्। रेतोधा आसन्महिमान आसन्त्स्वधा अवस्तात्प्रयतिः परस्तात् ॥५॥ को अद्धा वेद क इह प्र वोचत्कुत आजाता कुत इयं विसृष्टिः। अर्वाग्देवा अस्य विसर्जनेनाथा को वेद यत आबभूव ॥६॥ इयं विसृष्टिर्यत आबभूव यदि वा दधे यदि वा न। यो अस्याध्यक्षः परमे व्योमन्त्सो अंग वेद यदि वा न वेद ॥७॥१७॥

---

॥ १३० ॥ १–७ यज्ञः प्राजापत्यः ॥ भाववृत्तं ॥ १ जगती । २–७ त्रिष्टुप् ॥

॥१३०॥ यो यज्ञो विश्वतस्तंतुभिस्तत एकशतं देवकर्मेभिरायतः। इमे वयंति पितरो य आययुः प्र वयाप वयेत्यासते तते ॥१॥ पुमाँ एनं तनुत उत्कृणत्ति पुमान्वि तत्ने अधि नाके अस्मिन्। इमे मयूखा उप सेदुरू सदः सामानि चक्रुस्तसराण्योतवे ॥२॥ कासीत्प्रमा प्रतिमा किं निदानमाज्यं किमासीत्परिधिः क आसीत्। छंदः किमासीत्प्रउगं किमुक्थं यद्देवा देवमयजंत विश्वे ॥३॥ अग्नेर्गायत्र्यभवत्सयुग्वोष्णिहया सविता सं बभूव। अनुष्टुभा सोम उक्थैर्महस्वान्बृहस्पतेर्बृहती वाचमावत् ॥४॥ विराण्मित्रावरुणयोरभिश्रीरिंद्रस्य त्रिष्टुबिह भागो अह्नः। विश्वान्देवाञ्जगत्या विवेश तेन चाक्लृप्र ऋषयो मनुष्याः ॥५॥ चाक्लृप्रे तेन ऋषयो मनुष्या यज्ञे जाते पितरो नः पुराणे। प-



Digitized by Google

तमसा गूळ्हं अग्रे अप्रऽकेतं सलिलं सर्वं आः इदं तुच्छ्येन आभु अपिऽहितं यत् आसीत् तपसः तत् महिना अजायत एकं ॥३॥ कामः तत् अग्रे सं अवर्तत अधि मनसः रेतः प्रथमं यत् आसीत् सतः बंधुं असति निः अविंदन् हृदि प्रतिऽइष्य कवयः मनीषा ॥४॥ तिरश्चीनः विऽततः रश्मिः एषां अधः स्वित् आसी३त् उपरि स्वित् आसी३त् रेतःऽधाः आसन् महिमानः आसन् स्वधा अवस्तात् प्रऽयतिः परस्तात् ॥५॥ कः अद्धा वेद कः इह प्र वोचत् कुतः आऽजाता कुतः इयं विऽसृष्टिः अर्वाक् देवाः अस्य विऽसर्जनेन अथ कः वेद यतः आऽबभूव ॥६॥ इयं विऽसृष्टिः यतः आऽबभूव यदि वा दधे यदि वा न यः अस्य अधिऽअक्षः परमे विऽओमन् सः अंग वेद यदि वा न वेद ॥७॥१७॥

---

॥१३०॥ यः यज्ञः विश्वतः तंतुऽभिः ततः एकऽशतं देवऽकर्मेभिः आऽयतः इमे वयंति पितरः ये आऽययुः प्र वय अप वय इति आसते तते ॥१॥ पुमान् एनं तनुते उत् कृणत्ति पुमान् वि तत्ने अधि नाके अस्मिन् इमे मयूखाः उप सेदुः ऊं इति सदः सामानि चक्रुः तसराणि ओतवे ॥२॥ का आसीत् प्रऽमा प्रतिऽमा किं निऽदानं आज्यं किं आसीत् परिऽधिः कः आसीत् छंदः किं आसीत् प्रउगं किं उक्थं यत् देवाः देवं अयजंत विश्वे ॥३॥ अग्नेः गायत्री अभवत् सऽयुग्वा उष्णिहया सविता सं बभूव अनुऽस्तुभा सोमः उक्थैः महस्वान् बृहस्पतेः बृहती वाचं आवत् ॥४॥ विऽराट् मित्रावरुणयोः अभिऽश्रीः इंद्रस्य त्रिऽस्तुप् इह भागः अह्नः विश्वान् देवान् जगती आ विवेश तेन चाकॢप्रे ऋषयः मनुष्याः ॥५॥ चाकॢप्रे तेन ऋषयः मनुष्याः यज्ञे जाते पितरः नः पुराणे प-



Digitized by Google

श्चर्यन्मन्ये मन॑सा चक्ष॑सा तान्य इ॒मं य॒ज्ञमय॑जंत पू॒र्वे ॥६॥ स॒ह-
स्तो॑माः स॒हछं॑दस आ॒वृतः स॒हप्र॑मा॒ ऋष॑यः स॒प्त दैव्याः। पू॒र्वे॑षां॒
पंथा॑मनु॒दृश्य॒ धीरा॑ अ॒न्वाले॑भिरे र॒थ्यो॒३॒ न र॒श्मीन् ॥७॥१८॥

॥१३१॥ १–७ सुकीर्तिः काक्षीवतः ॥ १–३. ६. ७ इंद्रः। ४. ५ अश्विनौ ॥
१–३. ५–७ त्रिष्टुप्। ४ अनुष्टुप् ॥

॥१३१॥ अप॒ प्राचं॑ इंद्र॒ विश्वाँ॑ अ॒मित्रा॒नपापा॑चो अभिभूते
नुदस्व। अपोदी॑चो॒ अप॑ शूराध॒राच॑ उ॒रौ यथा॒ तव॒ शर्म॒न्मदे॑म
॥१॥ कु॒विदं॒ग यव॑मंतो॒ यवं॑ चि॒द्यथा॒ दांत्य॑नुपू॒र्वं वि॒यूय॑। इ॒हेहैषां
कृणुहि॒ भोज॑नानि॒ ये ब॒र्हिषो॒ नमो॑वृक्तिं॒ न ज॒ग्मुः ॥२॥ न॒हि
स्थूर्यृ॑तु॒था या॒तमस्ति॒ नोत श्रवो॑ विवि॒दे संग॒मेषु॑। ग॒व्यंत॒ इंद्रं॑
स॒ख्याय॒ विप्रा॑ अश्वा॒यंतो॒ वृष॑णं वा॒जयं॑तः ॥३॥ यु॒वं सु॒राम॑म-
श्विना॒ नमु॑चावासु॒रे सचा॑। वि॒पि॒पा॒ना शु॑भस्पती॒ इंद्रं॒ कर्म॑स्वा-
वतं ॥४॥ पु॒त्रमि॑व पि॒तरा॑व॒श्विनो॒भेंद्रा॒वथुः॒ काव्यै॑र्दं॒सना॑भिः।
यत्सु॒रामं॒ व्यपि॑बः॒ शची॑भिः॒ सर॑स्वती त्वा मघवन्नभिष्णक् ॥५॥
इंद्रः॑ सु॒त्रामा॒ स्ववाँ॒ अवो॑भिः सुमृळी॒को भ॑वतु वि॒श्ववे॑दाः।
बाध॑तां॒ द्वेषो॒ अभ॑यं कृणोतु सु॒वीर्य॑स्य॒ पत॑यः स्याम ॥६॥ तस्य॑
व॒यं सु॑म॒तौ य॒ज्ञिय॒स्यापि॑ भ॒द्रे सौ॑मन॒से स्या॑म। स सु॒त्रामा॒
स्ववाँ॒ इंद्रो॑ अ॒स्मे आ॒राच्चि॒द्द्वेषः॑ सनु॒तर्यु॑योतु ॥७॥१९॥

॥१३२॥ १–७ शकपूतो नार्मेधः ॥ १ लिंगोक्तदेवताः। २–७ मित्रावरुणौ ॥ १ न्यंकुसा-
रिणी। २. ६ प्रस्तारपंक्तिः। ३–५ विराड्रूपा। ७ महासतोबृहती ॥

॥१३२॥ ई॒जा॒नमिद्द्यौर्गू॒र्तावसुरीजा॒नं भूमि॑र॒भि प्र॑भूष-
णि॑। ई॒जा॒नं दे॒वाव॒श्विना॑व॒भि सु॒म्नैर॑वर्धतां ॥१॥ ता वां॑ मि-
त्रावरुणा धार॒यत्क्षि॑ती सुषु॒म्नेषि॑त॒त्वता॑ यजामसि। यु॒वोः
क्रा॒णाय॑ स॒ख्यैर॒भि ष्या॑म र॒क्षसः॑ ॥२॥ अधा॑ चि॒न्नु यद्धि-



Digitized by Google

पश्यन् मन्ये मनसा चक्षसा तान् ये इमं यज्ञं अयजंत पूर्वे ॥६॥ स-
हऽस्तोमाः सहऽछंदसः आऽवृतः सहऽप्रमाः ऋषयः सप्त दैव्याः
पूर्वेषां पंथां अनुऽदृश्य धीराः अनुऽआलेभिरे रथ्यः न रश्मीन्
॥७॥१८॥

---

॥१३१॥ अप प्राचः इंद्र विश्वान् अमित्रान् अप अपाचः अ-
भिऽभूते नुदस्व अप उदीचः अप शूर अधराचः उरौ यथा तव
शर्मन् मदेम ॥१॥ कुवित् अंग यवऽमंतः यवं चित् यथा दांति
अनुऽपूर्वं विऽयूय इहऽइह एषां कृणुहि भोजनानि ये बर्हिषः
नमःऽवृक्तिं न जग्मुः ॥२॥ नहि स्थूरि ऋतुऽथा यातं अस्ति न
उत श्रवः विविदे संऽगमेषु गव्यंतः इंद्रं सख्याय विप्राः अश्व-
ऽयंतः वृषणं वाजयंतः ॥३॥ युवं सुरामं अश्विना नमुचौ आसुरे
सचा विऽपिपाना शुभः पती इंद्रं कर्मऽसु आवतं ॥४॥ पुत्रंऽइव
पितरौ अश्विना उभा इंद्र आवथुः काव्यैः दंसनाभिः यत् सुऽरामं
वि अपिबः शचीभिः सरस्वती त्वा मघऽवन् अभिष्णक् ॥५॥
इंद्रः सुऽत्रामा स्वऽवान् अवःऽभिः सुऽमृळीकः भवतु विश्व-
ऽवेदाः बाधतां द्वेषः अभयं कृणोतु सुऽवीर्यस्य पतयः स्याम ॥६॥
तस्य वयं सुऽमतौ यज्ञियस्य अपि भद्रे सौमनसे स्याम सः सुऽत्रा-
मा स्वऽवान् इंद्रः अस्मे आरात् चित् द्वेषः सनुतः युयोतु ॥७॥१९॥

---

॥१३२॥ ईजानं इत् द्यौः गूर्तऽवसुः ईजानं भूमिः अभि प्रऽभू-
षणि ईजानं देवौ अश्विनौ अभि सुम्नैः अवर्धतां ॥१॥ ता वां मि-
त्रावरुणा धारयत्ऽक्षिती सुऽसुम्ना इषितत्वता यजामसि युवोः
क्राणाय सख्यैः अभि स्याम रक्षसः ॥२॥ अध चित् नु यत् दि-



Digitized by Google

धिषामहे वामभि प्रियं रेक्णः पत्यमानाः। दद्वाँ वा यत्पुष्यति रेक्णः सम्वारन्नकिरस्य मघानि ॥३॥ असावन्यो असुर सूयत द्यौस्त्वं विश्वेषां वरुणासि राजा। मूर्धा रथस्य चाकन्नैतावतैनसांतकधुक् ॥४॥ अस्मिन्त्स्वे३तच्छकपूत एनो हिते मित्रे निगतान्हंति वीरान्। अवोर्वा यद्धात्तनूष्ववः प्रियासु यज्ञियास्वर्वा ॥५॥ युवोर्हि मातादितिर्विचेतसा द्यौर्न भूमिः पयसा पुपूतनि। अव प्रिया दिदिष्टन सूरो निनिक्त रश्मिभिः ॥६॥ युवं ह्यप्नराजावसीदतं तिष्ठद्रथं न धूर्षदं वनर्षदं। ता नः कणूकयंतीर्नृमेधस्त्रे अंहसः सुमेधस्त्रे अंहसः ॥७॥२०॥

---

॥१३३॥ १-७ सुदाः पैजवनः ॥ इंद्रः ॥ १-३ शक्वरी। ४-६ महापंक्तिः। ७ त्रिष्टुप् ॥

॥१३३॥ प्रो ष्वस्मै पुरोरथमिंद्राय शूषमर्चत। अभीके चिदु लोककृत्संगे समत्सु वृत्रहास्माकं बोधि चोदिता नभंतामन्यकेषां ज्याका अधि धन्वसु ॥१॥ त्वं सिंधूँरवासृजोऽधराचो अहन्नहिं। अशत्रुरिंद्र जज्ञिषे विश्वं पुष्यसि वार्यं तं त्वा परि ष्वजामहे नभंतामन्यकेषां ज्याका अधि धन्वसु ॥२॥ वि षु विश्वा अरातयोऽर्यो नशंत नो धियः। अस्तासि शत्रवे वधं यो न इंद्र जिघांसति या ते रातिर्ददिर्वसु नभंतामन्यकेषां ज्याका अधि धन्वसु ॥३॥ यो न इंद्राभितो जनो वृकायुरादिदेशति। अधस्पदं तमीं कृधि विबाधो असि सासहिर्नभंतामन्यकेषां ज्याका अधि धन्वसु ॥४॥ यो न इंद्राभिदासति सनाभिर्यश्च निष्ट्यः। अव तस्य बलं तिर महीव द्यौरध त्मना नभंतामन्यकेषां ज्याका अधि धन्वसु ॥५॥ वयमिंद्र त्वायवः सखित्वमा रभामहे। ऋतस्य नः पथा नयाति



Digitized by Google

धिषामहे वां अभि प्रियं रेक्णः पत्यमानाः दुद्वान् वा यत् पुष्यति रेक्णः सं ऊं आरन् नकिः अस्य मघानि ॥३॥ असौ अन्यः असुर सूयत द्यौः त्वं विश्वेषां वरुण असि राजा मूर्धा रथस्य चाकन् न एतावता एनसा अंतकऽध्रुक् ॥४॥ अस्मिन् सु एतत् शक्रेऽपूते एनः हिते मित्रे निऽगतान् हंति वीरान् अवोः वा यत् धात् तनूषु अवः प्रियासु यज्ञियासु अर्वा ॥५॥ युवोः हि माता अदितिः विऽचेतसा द्यौः न भूमिः पयसा पुपूतनि अव प्रिया दिदिष्टन सूरः निनिक्त रश्मिऽभिः ॥६॥ युवं हि अप्नःऽराजौ असीदतं तिष्ठत् रथं न धूःऽसदं वनऽसदं ताः नः कणूकऽयंतीः नृऽमेधः तत्रे अंहसः सुऽमेधः तत्रे अंहसः ॥७॥२०॥

---

॥१३३॥ प्रो सु अस्मै पुरःऽरथं इंद्राय शूषं अर्चत अभीके चित् ऊं लोकऽकृत् संऽगे समत्ऽसु वृत्रऽहा अस्माकं बोधि चोदिता नभंतां अन्यकेषां ज्याकाः अधि धन्वऽसु ॥१॥ त्वं सिंधून् अव असृजः अधराचः अहन् अहिं अशत्रुः इंद्र जज्ञिषे विश्वं पुष्यसि वार्यं तं त्वा परि स्वजामहे नभंतां अन्यकेषां ज्याकाः अधि धन्वऽसु ॥२॥ वि सु विश्वाः अरातयः अर्यः नशंत नः धियः अस्ता असि शत्रवे वधं यः नः इंद्र जिघांसति या ते रातिः ददिः वसु नभंतां अन्यकेषां ज्याकाः अधि धन्वऽसु ॥३॥ यः नः इंद्र अभितः जनः वृकऽयुः आऽदिदेशति अधःऽपदं तं ईं कृधि विऽबाधः असि सहिः नभंतां अन्यकेषां ज्याकाः अधि धन्वऽसु ॥४॥ यः नः इंद्र अभिऽदासति सऽनाभिः यः च निष्ट्यः अव तस्य बलं तिर महीऽइव द्यौः अध त्मना नभंतां अन्यकेषां ज्याकाः अधि धन्वऽसु ॥५॥ वयं इंद्र त्वाऽयवः सखिऽत्वं आ रभामहे ऋतस्य नः पथा नय अति



Digitized by Google

विश्वानि दुरिता नभंतामन्यकेषां ज्याका अधि धन्वसु ॥ ६ ॥
अस्मभ्यं सु त्वमिंद्र तां शिक्ष या दोहते प्रति वरं जरित्रे। अच्छिद्रो-
ध्नी पीपयद्यथा नः सहस्रधारा पयसा मही गौः ॥ ७ ॥ २१ ॥

---

॥ १३४ ॥ १—६¹ मांधाता यौवनाश्वः । ६².७ गोधा ॥ इंद्रः ॥ १—६ महापंक्तिः । ७ पंक्तिः ॥

॥ १३४ ॥ उभे यदिंद्र रोदसी आपप्राथोषा इव । महांतं त्वा
महीनां सम्राजं चर्षणीनां देवी जनित्र्यजीजनद्भद्रा जनित्र्यजी-
जनत् ॥ १ ॥ अव स्म दुर्हणायतो मर्तस्य तनुहि स्थिरं । अधस्पदं
तमीं कृधि यो अस्माँ आदिदेशति देवी जनित्र्यजीजनद्भद्रा
जनित्र्यजीजनत् ॥ २ ॥ अव त्या बृहतीरिषो विश्वश्चंद्रा अमि-
त्रहन् । शचीभिः शक्र धूनुहींद्र विश्वाभिरूतिभिर्देवी जनित्र्य-
जीजनद्भद्रा जनित्र्यजीजनत् ॥ ३ ॥ अव यत्त्वं शतक्रतविंद्र वि-
श्वानि धूनुषे । रयिं न सुन्वते सचा सहस्रिणीभिरूतिभिर्देवी
जनित्र्यजीजनद्भद्रा जनित्र्यजीजनत् ॥ ४ ॥ अव स्वेदा इवाभितो
विष्वक्पतंतु दिद्यवः । दूर्वाया इव तंतवो व्य१स्मदेतु दुर्मतिर्देवी
जनित्र्यजीजनद्भद्रा जनित्र्यजीजनत् ॥ ५ ॥ दीर्घं ह्यंकुशं यथा
शक्तिं बिभर्षि मंतुमः । पूर्वेण मघवन्पदाजो वयां यथा यमो
देवी जनित्र्यजीजनद्भद्रा जनित्र्यजीजनत् ॥ ६ ॥ नकिर्देवा मि-
नीमसि नकिरा योपयामसि मंत्रश्रुत्यं चरामसि । पक्षेभिर-
पिकक्षेभिरत्राभि सं रभामहे ॥ ७ ॥ २२ ॥

---

॥ १३५ ॥ १—७ कुमारो यामायनः ॥ यमः ॥ अनुष्टुप् ॥

॥ १३५ ॥ यस्मिन्वृक्षे सुपलाशे देवैः संपिबते यमः । अत्रा
नो विश्पतिः पिता पुराणाँ अनु वेनति ॥ १ ॥ पुराणाँ अनु-



Digitized by Google

विश्वानि दुःऽइता नभंतां अन्यकेषां ज्याकाः अधि धन्वऽसु ॥ ६ ॥
अस्मभ्यं सु त्वं इंद्र तां शिक्ष या दोहते प्रति वरं जरित्रे अच्छिद्र-
ऽऊध्नी पीपयत् यथा नः सहस्रऽधारा पयसा मही गौः ॥ ७ ॥ २१ ॥

---

॥ १३४ ॥ उभे यत् इंद्र रोदसी आऽपप्राथ उषाःऽइव महांतं
त्वा महीनां संऽराजं चर्षणीनां देवी जनित्री अजीजनत् भद्रा
जनित्री अजीजनत् ॥ १ ॥ अव स्म दुःऽहनायतः मर्तस्य तनुहि
स्थिरं अधःऽपदं तं ईं कृधि यः अस्मान् आऽदिदेशति देवी ज-
नित्री अजीजनत् भद्रा जनित्री अजीजनत् ॥ २ ॥ अव त्याः बृह-
तीः इषः विश्वऽचंद्राः अमित्रऽहन् शचीभिः शक्र धूनुहि इंद्र वि-
श्वाभिः ऊतिऽभिः देवी जनित्री अजीजनत् भद्रा जनित्री अजी-
जनत् ॥ ३ ॥ अव यत् त्वं शतऽक्रतो॰ इंद्र विश्वानि धूनुषे रयिं न
सुन्वते सचा सहस्रिणीभिः ऊतिऽभिः देवी जनित्री अजीजनत्
भद्रा जनित्री अजीजनत् ॥ ४ ॥ अव स्वेदाःऽइव अभितः विष्वक्
पतंतु दिद्यवः दूर्वायाःऽइव तंतवः वि अस्मत् एतु दुःऽमतिः दे-
वी जनित्री अजीजनत् भद्रा जनित्री अजीजनत् ॥ ५ ॥ दीर्घं हि
अंकुशं यथा शक्तिं बिभर्षि मंतुऽमः पूर्वेण मघऽवन् पदा अजः
वयां यथा यमः देवी जनित्री अजीजनत् भद्रा जनित्री अजीज-
नत् ॥ ६ ॥ नकिः देवाः मिनीमसि नकिः आ योपयामसि मंत्र-
ऽश्रुत्यं चरामसि पक्षेभिः अपिऽकक्षेभिः अत्र अभि सं रभामहे
॥ ७ ॥ २२ ॥

---

॥ १३५ ॥ यस्मिन् वृक्षे सुऽपलाशे देवैः संऽपिबते यमः अत्र
नः विश्पतिः पिता पुराणान् अनु वेनति ॥ १ ॥ पुराणान् अनु-



Digitized by Google

वेनंतं चरंतं पापयामुया । असूयन्नभ्यचाकशं तस्मा अस्पृहयं
पुनः ॥२॥ यं कुमार नवं रथमचक्रं मनसाकृणोः । एकेषं वि-
श्वतः प्रांचमपश्यन्नधि तिष्ठसि ॥३॥ यं कुमार प्रावर्तयो रथं
विप्रेभ्यस्परि । तं सामानु प्रावर्तत समितो नाव्याहितं ॥४॥ कः
कुमारमजनयद्रथं को निरवर्तयत् । कः स्वित्तदद्य नो ब्रूयादनु-
देयी यथाभवत् ॥५॥ यथाभवदनुदेयी ततो अग्रमजायत ।
पुरस्ताद्बुध्न आततः पश्चान्निरयणं कृतं ॥६॥ इदं यमस्य सादनं
देवमानं यदुच्यते । इयमस्य धम्यते नाळीरयं गीर्भिः परिष्कृ-
तः ॥७॥२३॥

---

॥ १३६ ॥ १–७ मुनयो वातरशनाः ॥ १ जूतिः । २ वातजूतिः । ३ विप्रजूतिः । ४ वृषाणकः । ५ करिक्रतः । ६ एतशः । ७ ऋष्यशृंगः ॥ केशिनः ॥ अनुष्टुप् ॥

॥१३६॥ केश्य१ग्निं केशी विषं केशी बिभर्ति रोदसी । केशी
विश्वं स्वर्दृशे केशीदं ज्योतिरुच्यते ॥१॥ मुनयो वातरशनाः पि-
शंगा वसते मला । वातस्यानु ध्राजिं यंति यद्देवासो अविक्षत
॥२॥ उन्मदिता मौनेयेन वाताँ आ तस्थिमा वयं । शरीरेदस्माकं
यूयं मर्तासो अभि पश्यथ ॥३॥ अंतरिक्षेण पतति विश्वा रूपा-
वचाकशत् । मुनिर्देवस्यदेवस्य सौकृत्याय सखा हितः ॥४॥ वात-
स्याश्वो वायोः सखाथो देवेषितो मुनिः । उभौ समुद्रावा क्षेति
यश्च पूर्व उतापरः ॥५॥ अप्सरसां गंधर्वाणां मृगाणां चरणे च-
रन् । केशी केतस्य विद्वान्सखा स्वादुर्मदिंतमः ॥६॥ वायुरस्मा
उपामंथत्पिनष्टि स्मा कुनंनमा । केशी विषस्य पात्रेण यद्रुद्रे-
णापिबत्सह ॥७॥२४॥

---

॥ १३७ ॥ १–७ सप्त ऋषय एकर्चाः ॥ विश्वे देवाः ॥ अनुष्टुप् ॥

॥१३७॥ उत देवा अवहितं देवा उन्नयथा पुनः । उता-



Digitized by Google

ऽवेनं तं चरंतं पापया अमुया असूयन् अभि अचाकशं तस्मैं अस्पृहयं पुनः॥२॥ यं कुमार नवं रथं अचक्रं मनसा अकृणोः एकऽईषं विश्वतः प्रांचं अपश्यन् अधि तिष्ठसि॥३॥ यं कुमार प्र अवर्तयः रथं विप्रेभ्यः परि तं साम अनु प्र अवर्तत सं इतः नावि आऽहितं॥४॥ कः कुमारं अजनयत् रथं कः निः अवर्तयत् कः स्वित् तत् अद्य नः ब्रूयात् अनुऽदेयी यथा अभवत्॥५॥ यथा अभवत् अनुऽदेयी ततः अग्रं अजायत पुरस्तात् बुध्नः आऽततः पश्चात् निःऽअयनं कृतं॥६॥ इदं यमस्य सदनं देवऽमानं यत् उच्यते इयं अस्य धम्यते नाळीः अयं गीःऽभिः परिऽकृतः॥७॥२३॥

---

॥१३६॥ केशी अग्निं केशी विषं केशी बिभर्ति रोदसी केशी विश्वं स्वः दृशे केशी इदं ज्योतिः उच्यते॥१॥ मुनयः वातऽरशनाः पिशंगाः वसते मला वातस्य अनु ध्राजिं यंति यत् देवासः अविक्षत॥२॥ उत्ऽमदिताः मौनेयेन वातान् आ तस्थिम वयं शरीरा इत् अस्माकं यूयं मर्तासः अभि पश्यथ॥३॥ अंतरिक्षेण पतति विश्वा रूपा अवऽचाकशत् मुनिः देवस्यऽदेवस्य सौकृत्याय सखा हितः॥४॥ वातस्य अश्वः वायोः सखा अथो देवऽइषितः मुनिः उभौ समुद्रौ आ क्षेति यः च पूर्वः उत अपरः॥५॥ अप्सरसां गंधर्वाणां मृगाणां चरणे चरन् केशी केतस्य विद्वान् सखा स्वादुः मदिन्ऽतमः॥६॥ वायुः अस्मै उप अमंथत् पिनष्टि स्म कुनंनमा केशी विषस्य पात्रेण यत् रुद्रेण अपिबत् सह॥७॥२४॥

---

॥१३७॥ उत देवाः अवऽहितं देवाः उत् नयथ पुनः उत



Digitized by Google

गश्चक्रुषं देवा देवा जीवयथा पुनः ॥१॥ द्वाविमौ वातौ वात आ सिंधोरा परावतः । दक्षं ते अन्य आ वातु परान्यो वातु यद्रपः ॥२॥ आ वात वाहि भेषजं वि वात वाहि यद्रपः । त्वं हि विश्वभेषजो देवानां दूत ईयसे ॥३॥ आ त्वागमं शंतातिभिरथो अरिष्टतातिभिः । दक्षं ते भद्रमाभार्षं परा यक्ष्मं सुवामि ते ॥४॥ त्रायंतामिह देवास्त्रायतां मरुतां गणः । त्रायंतां विश्वा भूतानि यथायमरपा असत् ॥५॥ आप इद्वा उ भेषजीरापो अमीवचातनीः । आपः सर्वस्य भेषजीस्तास्ते कृण्वंतु भेषजं ॥६॥ हस्ताभ्यां दशशाखाभ्यां जिह्वा वाचः पुरोगवी । अनामयित्नुभ्यां त्वा ताभ्यां त्वोप स्पृशामसि ॥७॥२५॥

---

॥१३८॥ १—६ अंग औरवः ॥ इंद्रः ॥ जगती ॥

॥१३८॥ तव त्य इंद्र सख्येषु वह्नय ऋतं मन्वाना व्यदर्दिरुर्वलं । यत्रा दशस्यन्नुषसो रिणन्नपः कुत्साय मन्मन्नह्यश्च दंसयः ॥१॥ अवासृजः प्रस्वः श्वंचयो गिरीनुदाज उस्रा अपिबो मधु प्रियं । अवर्धयो वनिनो अस्य दंससा शुशोच सूर्य ऋतजातया गिरा ॥२॥ वि सूर्यो मध्ये अमुचद्रथं दिवो विदद्दासाय प्रतिमानमार्यः । दृळ्हानि पिप्रोरसुरस्य मायिन इंद्रो व्यास्यच्चकृवाँ ऋजिश्वना ॥३॥ अनाधृष्टानि धृषितो व्यास्यन्निधीँरदेवाँ अमृणदयास्यः । मासेव सूर्यो वसु पुर्यमा ददे गृणानः शत्रूँरशृणाद्विरुक्मता ॥४॥ अयुद्धसेनो विभ्वा विभिंदता दाशद्वृत्रहा तुज्यानि तेजते । इंद्रस्य वज्रादबिभेदभिश्नथः प्राक्रामच्छुंध्यूरजहादुषा अनः ॥५॥ एता त्या ते श्रुत्यानि केवला य-



Digitized by Google

आगः चक्रुषं देवाः देवाः जीवयथ पुनरिति॥१॥ द्वौ इमौ वातौ वातः आ सिंधोः आ पराऽवतः दक्षं ते अन्यः आ वातु परा अन्यः वातु यत् रपः॥२॥ आ वात वाहि भेषजं वि वात वाहि यत् रपः त्वं हि विश्वऽभेषजः देवानां दूतः ईयसे॥३॥ आ त्वा अगमं शंतातिऽभिः अथो इति अरिष्टतातिऽभिः दक्षं ते भद्रं आ अभार्षं परा यक्ष्मं सुवामि ते॥४॥ त्रायंतां इह देवाः त्रायतां मरुतां गणः त्रायंतां विश्वा भूतानि यथा अयं अरपाः असत्॥५॥ आपः इत् वै ऊं इति भेषजीः आपः अमीवऽचातनीः आपः सर्वस्य भेषजीः ताः ते कृण्वंतु भेषजं॥६॥ हस्ताभ्यां दशऽशाखाभ्यां जिह्वा वाचः पुरःऽगवी अनामयित्नुऽभ्यां त्वा ताभ्यां त्वा उप स्पृशामसि॥७॥२५॥

---

॥१३८॥ तव त्ये इंद्र सख्येषु वह्नयः ऋतं मन्वानाः वि अदर्दिरुः वलं यत्र दशस्यन् उषसः रिणन् अपः कुत्साय मन्मन् अह्यः च दंसयः॥१॥ अव असृजः प्रऽस्वः श्वंचयः गिरीन् उत् आजः उस्राः अपिबः मधु प्रियं अवर्धयः वनिनः अस्य दंससा शुशोच सूर्यः ऋतऽजातया गिरा॥२॥ वि सूर्यः मध्ये अमुचत् रथं दिवः विदत् दासाय प्रतिऽमानं आर्यः दृळ्हानि पिप्रोः असुरस्य मायिनः इंद्रः वि आस्यत् चकृऽवान् ऋजिश्वना॥३॥ अनाधृष्टानि धृषितः वि आस्यत् निऽधीन् अदेवान् अमृणात् अयास्यः मासाऽइव सूर्यः वसु पुर्यं आ ददे गृणानः शत्रून् अशृणात् विरुक्मता॥४॥ अयुद्धऽसेनः विऽभ्वा विऽभिंदता दाशत् वृत्रऽहा तुज्यानि तेजते इंद्रस्य वज्रात् अबिभेत् अभिऽश्नथः प्र अक्रामत् शुंध्यूः अजहात् उषाः अनः॥५॥ एता त्या ते श्रुत्यानि केवला यत्



Digitized by Google

देक एकमकृणोरयज्ञं । मासां विधानमदधा अधि द्यवि त्वया विभिन्नं भरति प्रधिं पिता ॥ ६ ॥ २६ ॥

---

॥ १३९ ॥ १–६ विश्वावसुर्देवगंधर्वः ॥ १–३ सविता । ४–६ विश्वावसुः ॥ त्रिष्टुप् ॥

॥ १३९ ॥ सूर्यरश्मिर्हरिकेशः पुरस्तात्सविता ज्योतिरुदयाँ अजस्रं । तस्य पूषा प्रसवे याति विद्वान्त्संपश्यन्विश्वा भुवनानि गोपाः ॥ १ ॥ नृचक्षा एष दिवो मध्य आस्त आपप्रिवान्रोदसी अंतरिक्षं । स विश्वाचीरभि चष्टे घृताचीरंतरा पूर्वमपरं च केतुं ॥ २ ॥ रायो बुध्नः संगमनो वसूनां विश्वा रूपाभि चष्टे शचीभिः । देव इव सविता सत्यधर्मेंद्रो न तस्थौ समरे धनानां ॥ ३ ॥ विश्वावसुं सोम गंधर्वमापो ददृशुषीस्तदृतेना व्यायन् । तदन्ववैदिंद्रो रारहाण आसां परि सूर्यस्य परिधीँरपश्यत् ॥ ४ ॥ विश्वावसुरभि तन्नो गृणातु दिव्यो गंधर्वो रजसो विमानः । यद्वा घा सत्यमुत यन्न विद्म धियो हिन्वानो धिय इन्नो अव्याः ॥ ५ ॥ सस्निमविंदच्चरणे नदीनामपावृणोद्दुरो अश्मव्रजानां । प्रासां गंधर्वो अमृतानि वोचदिंद्रो दक्षं परि जानादहीनां ॥ ६ ॥ २७ ॥

---

॥ १४० ॥ १–६ अग्निः पावकः ॥ अग्निः ॥ १ विष्टारपंक्तिः । २–४ सतोबृहती । ५ उपरिष्टाज्ज्योतिः । ६ त्रिष्टुप् ॥

॥ १४० ॥ अग्ने तव श्रवो वयो महि भ्राजंते अर्चयो विभावसो । बृहद्भानो शवसा वाजमुक्थ्यं१ दधासि दाशुषे कवे ॥ १ ॥ पावकवर्चाः शुक्रवर्चा अनूनवर्चा उदियर्षि भानुना । पुत्रो मातरा विचरन्नुपावसि पृणक्षि रोदसी उभे ॥ २ ॥ ऊर्जो नपाज्जातवेदः सुशस्तिभिर्मंदस्व धीतिभिर्हितः । त्वे इषः सं दधुर्भूरिवर्पसश्चित्रोतयो वामजाताः ॥ ३ ॥ इरज्यन्नग्ने प्रथयस्व जंतुभिरस्मे रायो अमर्त्य । स दर्शतस्य व-



Digitized by Google

एकः एकं अकृणोः अयज्ञं मासां विऽधानं अदधाः अधि द्यवि त्वया विऽभिन्नं भरति प्रऽधिं पिता ॥ ६ ॥ २६ ॥

---

॥ १३९ ॥ सूर्यऽरश्मिः हरिऽकेशः पुरस्तात् सविता ज्योतिः उत् अयान् अजस्रं तस्य पूषा प्रऽसवे याति विद्वान् संऽपश्यन् विश्वा भुवनानि गोपाः ॥ १ ॥ नृऽचक्षाः एषः दिवः मध्ये आस्ते आपप्रिऽवान् रोदसी इति अंतरिक्षं सः विश्वाचीः अभि चष्टे घृताचीः अंतरा पूर्वं अपरं च केतुं ॥ २ ॥ रायः बुध्नः संऽगमनः वसूनां विश्वा रूपा अभि चष्टे शचीभिः देवःऽइव सविता सत्यऽधर्मा इंद्रः न तस्थौ संऽअरे धनानां ॥ ३ ॥ विश्वऽवसुं सोम गंधर्वं आपः ददृशुषीः तत् ऋतेन वि आयन् तत् अनुऽअवैत् इंद्रः ररहाणः आसां परि सूर्यस्य परिऽधीन् अपश्यत् ॥ ४ ॥ विश्वऽवसुः अभि तत् नः गृणातु दिव्यः गंधर्वः रजसः विऽमानः यत् वा घ सत्यं उत यत् न विद्म धियः हिन्वानः धियः इत् नः अव्याः ॥ ५ ॥ सस्निं अविंदत् चरणे नदीनां अप अवृणोत् दुरः अश्मऽव्रजानां प्र आसां गंधर्वः अमृतानि वोचत् इंद्रः दक्षं परि जानात् अहीनां ॥ ६ ॥ २७ ॥

---

॥ १४० ॥ अग्ने तव श्रवः वयः महि भ्राजंते अर्चयः विभाऽवसो इति विभाऽवसो बृहत्ऽभानो इति बृहत्ऽभानो शवसा वाजं उक्थ्यं दधासि दाशुषे कवे ॥ १ ॥ पावकऽवर्चाः शुक्रऽवर्चाः अनूनऽवर्चाः उत् इयर्षि भानुना पुत्रः मातरा विऽचरन् उप अवसि पृणक्षि रोदसी इति उभे इति ॥ २ ॥ ऊर्जः नपात् जातऽवेदः सुशस्तिऽभिः मंदस्व धीतिऽभिः हितः त्वे इति इषः सं दधुः भूरिऽवर्पसः चित्रऽऊतयः वामऽजाताः ॥ ३ ॥ इरज्यन् अग्ने प्रथयस्व जंतुऽभिः अस्मे इति रायः अमर्त्य सः दर्शतस्य व-



Digitized by Google

पुंषो वि राजसि पृणक्षि सानसिं क्रतुं ॥४॥ इष्कर्तारमध्वरस्य प्रचेतसं क्षयंतं राधसो महः। रातिं वामस्य सुभगां महीमिषं दधासि सानसिं रयिं ॥५॥ ऋतावानं महिषं विश्वदर्शतमग्निं सुम्नाय दधिरे पुरो जनाः। श्रुत्कर्णं सप्रथस्तमं त्वा गिरा दैव्यं मानुषा युगा ॥६॥२८॥

---

॥ १४१ ॥ १—६ अग्निस्तापसः ॥ विश्वे देवाः ॥ अनुष्टुप् ॥

॥१४१॥ अग्ने अच्छा वदेह नः प्रत्यङ्नः सुमना भव। प्र नो यच्छ विशस्पते धनदा असि नस्त्वं ॥१॥ प्र नो यच्छत्वर्यमा प्र भगः प्र बृहस्पतिः। प्र देवाः प्रोत सूनृता रायो देवी ददातु नः ॥२॥ सोमं राजानमवसेऽग्निं गीर्भिर्हवामहे। आदित्यान्विष्णुं सूर्यं ब्रह्माणं च बृहस्पतिं ॥३॥ इंद्रवायू बृहस्पतिं सुहवेह हवामहे। यथा नः सर्व इज्जनः संगत्यां सुमना असत् ॥४॥ अर्यमणं बृहस्पतिमिंद्रं दानाय चोदय। वातं विष्णुं सरस्वतीं सवितारं च वाजिनं ॥५॥ त्वं नो अग्ने अग्निभिर्ब्रह्म यज्ञं च वर्धय। त्वं नो देवतातये रायो दानाय चोदय ॥६॥२९॥

---

॥ १४२ ॥ १—८ शार्ङ्गाः । १. २ जरिता । ३. ४ द्रोणः । ५. ६ सारिसृक्वः । ७. ८ स्तंबमित्रः ॥ अग्निः ॥ १. २ जगती । ३—६ त्रिष्टुप् । ७. ८ अनुष्टुप् ॥

॥१४२॥ अयमग्ने जरिता त्वे अभूदपि सहसः सूनो नह्यन्यदस्त्याप्यं। भद्रं हि शर्म त्रिवरूथमस्ति त आरे हिंसानामप दिद्युमा कृधि ॥१॥ प्रवत्ते अग्ने जनिमा पितूयतः साचीव विश्वा भुवना न्यृंजसे। प्र सप्तयः प्र संनिषंत नो धियः पुरश्चरंति पशुपा इव त्मना ॥२॥ उत वा उ परि वृणक्षि बप्सद्बहोरग्न उलपस्य स्वधावः। उत खिल्या उर्वराणां भवंति मा ते हेतिं तविषीं चुक्रुधाम ॥३॥ यदुद्वतो निवतो यासि



Digitized by Google

पृषः वि राजसि पृणक्षि सानसिं क्रतुं ॥४॥ इष्कर्तारं अध्वरस्य प्रऽचेतसं क्षयंतं राधसः महः रातिं वामस्य सुऽभगां महीं इषं दधासि सानसिं रयिं ॥५॥ ऋतऽवानं महिषं विश्वऽदर्शतं अग्निं सुम्नाय दधिरे पुरः जनाः श्रुत्ऽकर्णं सप्रथःऽतमं त्वा गिरा दैव्यं मानुषा युगा ॥६॥२८॥

---

॥१४१॥ अग्ने अच्छ वद इह नः प्रत्यङ् नः सुऽमनाः भव प्र नः यच्छ विशः पते धनऽदाः असि नः त्वं ॥१॥ प्र नः यच्छतु अर्यमा प्र भगः प्र बृहस्पतिः प्र देवाः प्र उत सूनृता रायः देवी ददातु नः ॥२॥ सोमं राजानं अवसे अग्निं गीःऽभिः हवामहे आदित्यान् विष्णुं सूर्यं ब्रह्माणं च बृहस्पतिं ॥३॥ इंद्रवायू बृहस्पतिं सुऽहवा इह हवामहे यथा नः सर्वः इत् जनः संऽगत्यां सुऽमनाः असत् ॥४॥ अर्यमणं बृहस्पतिं इंद्रं दानाय चोदय वातं विष्णुं सरस्वतीं सवितारं च वाजिनं ॥५॥ त्वं नः अग्ने अग्निऽभिः ब्रह्म यज्ञं च वर्धय त्वं नः देवऽतातये रायः दानाय चोदय ॥६॥२९॥

---

॥१४२॥ अयं अग्ने जरिता त्वे अभूत् अपि सहसः सूनो नहि अन्यत् अस्ति आप्यं भद्रं हि शर्म त्रिऽवरूथं अस्ति ते आरे हिंसानां अप दिद्युं आ कृधि ॥१॥ प्रऽवत् ते अग्ने जनिम पितुऽयतः साचीऽइव विश्वा भुवना नि ऋंजसे प्र सप्तयः प्र सनिषंत नः धियः पुरः चरंति पशुपाःऽइव त्मना ॥२॥ उत वै ऊं परि वृणक्षि बप्सत् बहोः अग्ने उलपस्य स्वधाऽवः उत खिल्याः उर्वराणां भवंति मा ते हेतिं तविषीं चुक्रुधाम ॥३॥ यत् उत्ऽवतः निऽवतः यासि



Digitized by Google

बप्सत्पृथग्गेषि प्रगर्धिनीव सेना। यदा ते वातो अनुवाति शोचिर्वप्तेव श्मश्रु वपसि प्र भूम ॥४॥ प्रत्यस्य श्रेणयो ददृश्र एकं नियानं बहवो रथासः। बाहू यदग्ने अनुमर्मृजानो न्यङ्ङुत्तानामन्वेषि भूमिं ॥५॥ उत्ते शुष्मा जिहतामुत्ते अर्चिरुत्ते अग्ने शशमानस्य वाजाः। उच्छ्वंचस्व नि नम वर्धमान आ त्वाद्य विश्वे वसवः सदंतु ॥६॥ अपामिदं न्ययनं समुद्रस्य निवेशनं। अन्यं कृणुष्वेतः पंथां तेन याहि वशाँ अनु ॥७॥ आयने ते परायणे दूर्वा रोहंतु पुष्पिणीः। ह्रदाश्च पुंडरीकाणि समुद्रस्य गृहा इमे ॥८॥३०॥७॥

॥ १४३ ॥ १–६ अत्रिः सांख्यः ॥ अश्विनौ ॥ अनुष्टुप् ॥

॥१४३॥ त्यं चिदत्रिमृतजुरमर्थमश्वं न यातवे। कक्षीवंतं यदी पुना रथं न कृणुथो नवं ॥१॥ त्यं चिदश्वं न वाजिनमरेणवो यमत्नत। दृळ्हं ग्रंथिं न वि ष्यतमत्रिं यविष्ठमा रजः ॥२॥ नरा दंसिष्ठावत्रये शुभ्रा सिषासतं धियः। अथा हि वां दिवो नरा पुनः स्तोमो न विशसे ॥३॥ चिते तद्वां सुराधसा रातिः सुमतिरश्विना। आ यन्नः सदने पृथौ समने पर्षथो नरा ॥४॥ युवं भुज्युं समुद्र आ रजसः पार ईंखितं। यातमच्छा पतत्रिभिर्नासत्या सातये कृतं ॥५॥ आ वां सुम्नैः शंयू इव मंहिष्ठा विश्ववेदसा। समस्मे भूषतं नरोत्सं न पिप्युषीरिषः ॥६॥१॥

॥ १४४ ॥ १–६ सुपर्णस्तार्क्ष्यपुत्र ऊर्ध्वकृशनो वा यामायनः ॥ इंद्रः ॥ १. ३. ४ गायत्री। २ बृहती। ५ सतोबृहती। ६ विष्टारपंक्तिः ॥

॥१४४॥ अयं हि ते अमर्त्य इंदुरत्यो न पत्यते। दक्षो विश्वायुर्वेधसे ॥१॥ अयमस्मासु काव्य ऋभुर्वज्रो दास्वते। अयं बिभर्त्यूर्ध्वकृशनं मदमृभुर्न कृत्व्यं मदं ॥२॥ घृषुः श्येनाय कृत्वन आसु स्वासु वंसगः। अव दीधेदहीशुवः ॥३॥ यं सुपर्णः



Digitized by Google

वप्संत् पृथक् एषि प्रगर्धिनीऽइव सेना यदा ते वातः अनुऽवाति शोचिः वप्ताऽइव श्मश्रु वपसि प्र भूम ॥४॥ प्रति अस्य श्रेणयः दृहश्रे एकं निऽयानं बहवः रथासः बाहू यत् अग्ने अनुऽमर्मृजानः न्यङ् उत्तानां अनुऽएषि भूमिं ॥५॥ उत् ते शुष्माः जिहृतां उत् ते अर्चिः उत् ते अग्ने शशमानस्य वाजाः उत् श्वंचस्व नि नम वर्धमानः आ त्वा अद्य विश्वे वसवः सदंतु ॥६॥ अपां इदं निऽअयनं समुद्रस्य निऽवेशनं अन्यं कृणुष्व इतः पंथां तेन याहि वशान् अनु ॥७॥ आऽअयने ते पराऽअयने दूर्वाः रोहंतु पुष्पिणीः ह्रदाः च पुंडरीकाणि समुद्रस्य गृहाः इमे ॥८॥ ३० ॥७॥

---

॥१४३॥ त्यं चित् अत्रिं ऋतऽजुरं अर्थं अश्वं न यातवे कक्षीवंतं यदि पुनः रथं न कृणुथः नवं ॥१॥ त्यं चित् अश्वं न वाजिनं अरेणवः यं अत्नत दृळ्हं ग्रंथिं न वि स्यतं अत्रिं यविष्ठं आ रजः ॥२॥ नरा दंसिष्ठौ अत्रये शुभ्रा सिसासतं धियः अथ हि वां दिवः नरा पुनः स्तोमः न विऽशसे ॥३॥ चिते तत् वां सुऽराधसा रातिः सुऽमतिः अश्विना आ यत् नः सदने पृथौ समने पर्षथः नरा ॥४॥ युवं भुज्युं समुद्रे आ रजसः पारे ईङ्खितं यातं अच्छ पतत्रिऽभिः नासत्या सातये कृतं ॥५॥ आ वां सुम्नैः शंयूऽइव मंहिष्ठा विश्वऽवेदसा सं अस्मे भूषतं नरा उत्सं न पिप्युषीः इषः ॥६॥ १ ॥

---

॥१४४॥ अयं हि ते अमर्त्यः इंदुः अत्यः न पत्यते दक्षः विश्वऽआयुः वेधसे ॥१॥ अयं अस्मासु काव्यः ऋभुः वज्रः दास्वते अयं बिभर्ति ऊर्ध्वऽकृशनं मदं ऋभुः न कृत्व्यं मदं ॥२॥ घृषुः श्येनाय कृत्वने आसु स्वासु वंसगः अव दीधेत् अहीशुवः ॥३॥ यं सुऽपर्णः



Digitized by Google

परावतः श्येनस्त्वं पुत्र आभरत्। शतचक्रं योऽह्यो वर्तनिः ॥४॥ यं ते श्येनश्चारुमवृकं पदाभरदरुणं मानमंधसः। एना वयो वि तार्यायुर्जीवस एना जागार बंधुता ॥५॥ एवा तदिंद्र इंदुना देवेषु चिद्धारयाते महि त्यजः। क्रत्वा वयो वि तार्यायुः सुक्रतो क्रत्वायमस्मदा सुतः ॥६॥२॥

॥ १४५ ॥ १–६ इंद्राणी ॥ उपनिषत्सपत्नीबाधनं ॥ १–५ अनुष्टुप् । ६ पंक्तिः ॥

॥१४५॥ इमां खनाम्योषधिं वीरुधं बलवत्तमां। यया सपत्नीं बाधते यया संविंदते पतिं ॥१॥ उत्तानपर्णे सुभगे देवजूते सहस्वति। सपत्नीं मे परा धम पतिं मे केवलं कुरु ॥२॥ उत्तराहमुत्तर उत्तरेदुत्तराभ्यः। अथा सपत्नी या ममाधरा साधराभ्यः ॥३॥ नह्यस्या नाम गृभ्णामि नो अस्मिन्रमते जने। परामेव परावतं सपत्नीं गमयामसि ॥४॥ अहमस्मि सहमानाथ त्वमसि सासहिः। उभे सहस्वती भूत्वी सपत्नीं मे सहावहै ॥५॥ उप तेऽधां सहमानामभि त्वाधां सहीयसा। मामनु प्र ते मनो वत्सं गौरिव धावतु पथा वारिव धावतु ॥६॥३॥

॥ १४६ ॥ १–६ देवमुनिरैरंमदः ॥ अरण्यानी ॥ अनुष्टुप् ॥

॥१४६॥ अरण्यान्यरण्यान्यसौ या प्रेव नश्यसि। कथा ग्रामं न पृच्छसि न त्वा भीरिव विंदतीँ३ ॥१॥ वृषारवाय वदते यदुपावति चिच्चिकः। आघाटिभिरिव धावयन्नरण्यानिर्महीयते ॥२॥ उत गाव इवादंत्युत वेश्मेव दृश्यते। उतो अरण्यानिः सायं शकटीरिव सर्जति ॥३॥ गामंगैष आ ह्वयति दार्वंगैषो अपावधीत्। वसन्नरण्यान्यां सायमक्रुक्षदिति मन्यते ॥४॥ न वा अरण्यानिर्हंत्यन्यश्चे-



Digitized by Google

पराऽवतः श्येनस्य पुत्रः आ अभरत् शतऽचक्रं यः अह्यः वर्तनिः ॥४॥ यं ते श्येनः चारुं अवृकं पदा आ अभरत् अरुणं मानं अंधसः एना वयः वि तारि आयुः जीवसे एना जागार बंधुता ॥५॥ एव तत् इंद्रः इंदुना देवेषु चित् धारयाते महि त्यजः क्रत्वा वयः वि तारि आयुः सुऽक्रतो॰ क्रत्वा अयं अस्मत् आ सुतः ॥६॥२॥

---

॥१४५॥ इमां खनामि ओषधिं वीरुधं बलवत्ऽतमां यया सऽपत्नीं बाधते यया संऽविंदते पतिं ॥१॥ उत्तानऽपर्णे सुऽभगे देवऽजूते सहस्वति सऽपत्नीं मे परा धम पतिं मे केवलं कुरु ॥२॥ उत्ऽतरा अहं उत्ऽतरे उत्ऽतरा इत् उत्ऽतराभ्यः अथ सऽपत्नी या मम अधरा सा अधराभ्यः ॥३॥ नहि अस्याः नाम गृभ्णामि नो अस्मिन् रमते जने परां एव पराऽवतं सऽपत्नीं गमयामसि ॥४॥ अहं अस्मि सहमाना अथ त्वं असि ससहिः उभे सहस्वती भूत्वी सऽपत्नीं मे सहावहै ॥५॥ उप ते अधां सहमानां अभि त्वा अधां सहीयसा मां अनु प्र ते मनः वत्सं गौःऽइव धावतु पथा वाःऽइव धावतु ॥६॥३॥

---

॥१४६॥ अरण्यानि अरण्यानि असौ या प्रऽइव नश्यसि कथा ग्रामं न पृच्छसि न त्वा भीःऽइव विंदती३ँ ॥१॥ वृषऽरवाय वदते यत् उपऽअवति चिच्चिकः आघाटिभिःऽइव धावयन् अरण्यानिः महीयते ॥२॥ उत गावःऽइव अदंति उत वेश्मऽइव दृश्यते उतो अरण्यानिः सायं शकटीःऽइव सर्जति ॥३॥ गां अंग एषः आ ह्वयति दारु अंग एषः अप अवधीत् वसन् अरण्यान्यां सायं अक्रुक्षत् इति मन्यते ॥४॥ न वै अरण्यानिः हंति अन्यः च



Digitized by Google

चाभिगच्छति । स्वादोः फलस्य जग्ध्वाय यथाकामं नि पद्यते ॥५॥ आंजनगंधिं सुरभिं बह्वन्नामकृषीवलां । प्राहं मृगाणां मातरमरण्यानिमशंसिषं ॥६॥४॥

॥१४७॥ १-५ सुवेदाः शैरीषिः ॥ इंद्रः ॥ १-४ जगती । ५ त्रिष्टुप् ॥

॥१४७॥ श्रत्ते दधामि प्रथमाय मन्यवेऽहन्यद्वृत्रं नर्यं विवेरपः । उभे यत्त्वा भवतो रोदसी अनु रेजते शुष्मात्पृथिवी चिदद्रिवः ॥१॥ त्वं मायाभिरनवद्य मायिनं श्रवस्यता मनसा वृत्रमर्दयः । त्वामिन्नरो वृणते गविष्टिषु त्वां विश्वासु हव्यास्विष्टिषु ॥२॥ ऐषु चाकंधि पुरुहूत सूरिषु वृधासो ये मघवन्नानशुर्मघं । अर्चंति तोके तनये परिष्टिषु मेधसाता वाजिनमह्रये धने ॥३॥ स इन्नु रायः सुभृतस्य चाकनन्मदं यो अस्य रंह्यं चिकेतति । त्वावृधो मघवन्दाश्वध्वरो मक्षू स वाजं भरते धना नृभिः ॥४॥ त्वं शर्धाय महिना गृणान उरु कृधि मघवञ्छग्धि रायः । त्वं नो मित्रो वरुणो न मायी पित्वो न दस्म दयसे विभक्ता ॥५॥५॥

॥१४८॥ १-५ पृथुर्वैन्यः ॥ इंद्रः ॥ त्रिष्टुप् ॥

॥१४८॥ सुष्वाणास इंद्र स्तुमसि त्वा ससवांसश्च तुविनृम्ण वाजं । आ नो भर सुवितं यस्य चाकन्त्मना तना सनुयाम त्वोताः ॥१॥ ऋष्वस्त्वमिंद्र शूर जातो दासीर्विशः सूर्येण सह्याः । गुहा हितं गुह्यं गूळ्हमप्सु बिभृमसि प्रस्रवणे न सोमं ॥२॥ अर्यो वा गिरो अभ्यर्च विद्वानृषीणां विप्रः सुमतिं चकानः । ते स्याम ये रणयंत सोमैरेनोत तुभ्यं रथोळ्ह भक्षैः ॥३॥ इमा ब्रह्मेंद्र तुभ्यं शंसि दा नृभ्यो नृणां शूर शवः । तेभिर्भव सक्रतुर्येषु चाकन्नुत त्रायस्व गृणत उत स्तीन् ॥४॥



Digitized by Google

इत् न अभिऽगच्छति स्वादोः फलस्य जग्ध्वाय यथाऽकामं नि पद्यते ॥५॥ आंजनऽगंधिं सुरभिं बहुऽअन्नां अकृषिऽवलां प्र अहं मृगाणां मातरं अरण्यानिं अशंसिषं ॥६॥४॥

---

॥१४७॥ श्रत् ते दधामि प्रथमाय मन्यवे अहन् यत् वृत्रं नर्यं विवेः अपः उभे यत् त्वा भवतः रोदसी अनु रेजते शुष्मात् पृथिवी चित् अद्रिऽवः ॥१॥ त्वं मायाभिः अनवद्य मायिनं श्रवस्यता मनसा वृत्रं अर्दयः त्वां इत् नरः वृणते गोऽइष्टिषु त्वां विश्वासु हव्यासु इष्टिषु ॥२॥ आ एषु चाकंधि पुरुऽहूत सूरिषु वृधासः ये मघऽवन् आनशुः मघं अर्चंति तोके तनये परिष्टिषु मेधऽसाता वाजिनं अह्रये धने ॥३॥ सः इत् नु रायः सुऽभृतस्य चाकनत् मदं यः अस्य रंह्यं चिकेतति त्वाऽवृधः मघऽवन् दाशुऽअध्वरः मक्षु सः वाजं भरते धना नृऽभिः ॥४॥ त्वं शर्धाय महिना गृणानः उरु कृधि मघऽवन् शग्धि रायः त्वं नः मित्रः वरुणः न मायी पित्वः न दस्म दयसे विऽभक्ता ॥५॥५॥

---

॥१४८॥ सुस्वानासः इंद्र स्तुमसि त्वा ससऽवांसः च तुविऽनृम्ण वाजं आ नः भर सुवितं यस्य चाकन् त्मना तना सनुयाम त्वाऽऊताः ॥१॥ ऋष्वः त्वं इंद्र शूर जातः दासीः विशः सूर्येण सह्याः गुहा हितं गुह्यं गूळ्हं अप्ऽसु बिभृमसि प्रऽस्रवणे न सोमं ॥२॥ अर्यः वा गिरः अभि अर्च विद्वान् ऋषीणां विप्रः सुऽमतिं चकानः ते स्याम ये रणयंत सोमैः एना उत तुभ्यं रथऽओळ्ह भक्षैः ॥३॥ इमा ब्रह्म इंद्र तुभ्यं शंसि दाः नृऽभ्यः नृणां शूर शवः तेभिः भव सऽक्रतुः येषु चाकन् उत त्रायस्व गृणतः उत स्तीन् ॥४॥



Digitized by Google

श्रुधी हवमिंद्र शूर पृथ्या उत स्तवसे वेन्यस्यार्कैः। आ यस्ते योनिं घृतवंतमस्वारूर्मिर्न निम्नैर्द्रवयंत वक्वाः ॥५॥६॥

॥१४९॥ १–५ अर्चन्हैरण्यस्तूपः ॥ सविता ॥ त्रिष्टुप् ॥

॥१४९॥ सविता यंत्रैः पृथिवीमरम्णादस्कंभने सविता द्यामदृंहत्। अश्वमिवाधुक्षद्धुनिमंतरिक्षमतूर्ते बद्धं सविता समुद्रं ॥१॥ यत्रा समुद्रः स्कभितो व्यौनदपां नपात्सविता तस्य वेद। अतो भूरत आ उत्थितं रजोऽतो द्यावापृथिवी अप्रथेतां ॥२॥ पश्चेदमन्यदभवद्यजत्रममर्त्यस्य भुवनस्य भूना। सुपर्णो अंग सवितुर्गरुत्मान्पूर्वो जातः स उ अस्यानु धर्म ॥३॥ गाव इव ग्रामं यूयुधिरिवाश्वान्वाश्रेव वत्सं सुमना दुहाना। पतिरिव जायामभि नो न्येतु धर्ता दिवः सविता विश्ववारः ॥४॥ हिरण्यस्तूपः सवितर्यथा त्वांगिरसो जुह्वे वाजे अस्मिन्। एवा त्वार्चन्नवसे वंदमानः सोमस्येवांशुं प्रति जागराहं ॥५॥७॥

॥१५०॥ १–५ मृळीको वासिष्ठः ॥ अग्निः ॥ १–३ बृहती । ४ उपरिष्टाज्ज्योतिर्जगती वा । ५ उपरिष्टाज्ज्योतिः ॥

॥१५०॥ समिद्धश्चित्समिध्यसे देवेभ्यो हव्यवाहन। आदित्यै रुद्रैर्वसुभिर्न आ गहि मृळीकाय न आ गहि ॥१॥ इमं यज्ञमिदं वचो जुजुषाण उपागहि। मर्तासस्त्वा समिधान हवामहे मृळीकाय हवामहे ॥२॥ त्वामु जातवेदसं विश्ववारं गृणे धिया। अग्ने देवाँ आ वह नः प्रियव्रतान्मृळीकाय प्रियव्रतान् ॥३॥ अग्निर्देवो देवानामभवत्पुरोहितोऽग्निं मनुष्या३ऋषयः समीधिरे। अग्निं महो धनसातावहं हुवे मृळीकं धनसातये ॥४॥ अग्निरत्रिं भरद्वाजं गविष्ठिरं प्रावन्नः



Digitized by Google

श्रुधि हवं इंद्र शूर पृथ्याः उत स्तवसे वेन्यस्य अर्कैः आ यः ते योनिं घृतऽवंतं अस्वाः ऊर्मिः न निम्नैः द्रवयंत वक्वाः ॥५॥६॥

---

॥१४९॥ सविता यंत्रैः पृथिवीं अरम्णात् अस्कंभने सविता द्यां अदृंहत् अश्वंऽइव अधुक्षत् धुनिं अंतरिक्षं अतूर्ते बद्धं सविता समुद्रं ॥१॥ यत्र समुद्रः स्कभितः वि औनत् अपां नपात् सविता तस्य वेद अतः भूः अतः आः उत्थितं रजः अतः द्यावापृथिवी अप्रथेतां ॥२॥ पश्चा इदं अन्यत् अभवत् यजत्रं अमर्त्यस्य भुवनस्य भूना सुऽपर्णः अंग सवितुः गरुत्मान् पूर्वः जातः सः ऊं अस्य अनु धर्म ॥३॥ गावःऽइव ग्रामं युयुधिःऽइव अश्वान् वाश्राऽइव वत्सं सुऽमनाः दुहाना पतिःऽइव जायां अभि नः नि एतु धर्ता दिवः सविता विश्वऽवारः ॥४॥ हिरण्यऽस्तूपः सवितः यथा त्वा आंगिरसः जुह्वे वाजे अस्मिन् एव त्वा अर्चन् अवसे वंदमानः सोमस्यऽइव अंशुं प्रति जागर अहं ॥५॥७॥

---

॥१५०॥ संऽइद्धः चित् सं इध्यसे देवेभ्यः हव्यऽवाहन आदित्यैः रुद्रैः वसुऽभिः नः आ गहि मृळीकाय नः आ गहि ॥१॥ इमं यज्ञं इदं वचः जुजुषाणः उपऽआगहि मर्तासः त्वा संऽइधान हवामहे मृळीकाय हवामहे ॥२॥ त्वां ऊं जातऽवेदसं विश्वऽवारं गृणे धिया अग्ने देवान् आ वह नः प्रियऽव्रतान् मृळीकाय प्रियऽव्रतान् ॥३॥ अग्निः देवः देवानां अभवत् पुरःऽहितः अग्निं मनुष्याः ऋषयः सं ईधिरे अग्निं महः धनऽसातौ अहं हुवे मृळीकं धनऽसातये ॥४॥ अग्निः अत्रिं भरत्ऽवाजं गविष्ठिरं प्र आवत् नः



Digitized by Google

कण्वं त्रसदस्युमाहवे। अग्निं वसिष्ठो हवते पुरोहितो मृळीकाय पुरोहितः ॥५॥८॥

॥ १५१ ॥ १-५ श्रद्धा कामायनी ॥ श्रद्धा ॥ अनुष्टुप् ॥

॥१५१॥ श्रद्धयाग्निः समिध्यते श्रद्धया हूयते हविः। श्रद्धां भगस्य मूर्धनि वचसा वेदयामसि॥१॥ प्रियं श्रद्धे ददतः प्रियं श्रद्धे दिदासतः। प्रियं भोजेषु यज्वस्विदं म उदितं कृधि॥२॥ यथा देवा असुरेषु श्रद्धामुग्रेषु चक्रिरे। एवं भोजेषु यज्वस्वस्माकमुदितं कृधि ॥३॥ श्रद्धां देवा यजमाना वायुगोपा उपासते। श्रद्धां हृदय्य१याकूत्या श्रद्धया विंदते वसु ॥४॥ श्रद्धां प्रातर्हवामहे श्रद्धां मध्यंदिनं परि। श्रद्धां सूर्यस्य निम्रुचि श्रद्धे श्रद्धापयेह नः ॥५॥९॥११॥

॥ १५२ ॥ १-५ शासो भारद्वाजः ॥ इंद्रः ॥ अनुष्टुप् ॥

॥१५२॥ शास इत्था महाँ अस्यमित्रखादो अद्भुतः। न यस्य हन्यते सखा न जीयते कदा चन॥१॥ स्वस्तिदा विशस्पतिर्वृत्रहा विमृधो वशी। वृषेंद्रः पुर एतु नः सोमपा अभयंकरः ॥२॥ वि रक्षो वि मृधो जहि वि वृत्रस्य हनू रुज। वि मन्युमिंद्र वृत्रहन्नमित्रस्याभिदासतः ॥३॥ वि न इंद्र मृधो जहि नीचा यच्छ पृतन्यतः। यो अस्माँ अभिदासत्यधरं गमया तमः ॥४॥ अपेंद्र द्विषतो मनोऽप जिज्यासतो वधं। वि मन्योः शर्म यच्छ वरीयो यवया वधं ॥५॥१०॥

॥ १५३ ॥ १-५ इंद्रमातरो देवजामयः ॥ इंद्रः ॥ गायत्री ॥

॥१५३॥ ईंखयंतीरपस्युव इंद्रं जातमुपासते। भेजानासः सुवीर्यं ॥१॥ त्वमिंद्र बलादधि सहसो जात ओजसः। त्वं वृषन्वृषेदसि ॥२॥ त्वमिंद्रासि वृत्रहा व्य१ंतरिक्षमतिरः। उ-



Digitized by Google

कार्णं त्रसदस्युं आऽहुवे अग्निं वसिष्ठः हुवते पुरःऽहितः मृळीकाय पुरःऽहितः ॥५॥८॥

॥१५१॥ श्रद्धया अग्निः सं इध्यते श्रद्धया हूयते हविः श्रद्धां भगस्य मूर्धनि वचसा आ वेदयामसि ॥१॥ प्रियं श्रद्धे ददतः प्रियं श्रद्धे दिदासतः प्रियं भोजेषु यज्वऽसु इदं मे उदितं कृधि ॥२॥ यथा देवाः असुरेषु श्रद्धां उग्रेषु चक्रिरे एवं भोजेषु यज्वऽसु अस्माकं उदितं कृधि ॥३॥ श्रद्धां देवाः यजमानाः वायुऽगोपाः उप आसते श्रद्धां हृदय्यया आऽकूत्या श्रद्धया विंदते वसु ॥४॥ श्रद्धां प्रातः हवामहे श्रद्धां मध्यंदिनं परि श्रद्धां सूर्यस्य निऽमुचि श्रद्धे श्रत् धापय इह नः ॥५॥९॥११॥

॥१५२॥ शासः इत्था महान् असि अमित्रऽखादः अद्भुतः न यस्य हन्यते सखा न जीयते कदा चन ॥१॥ स्वस्तिऽदाः विशः पतिः वृत्रऽहा विऽमृधः वशी वृषा इंद्रः पुरः एतु नः सोमऽपाः अभयंऽकरः ॥२॥ वि रक्षः वि मृधः जहि वि वृत्रस्य हनू रुज वि मन्युं इंद्र वृत्रऽहन् अमित्रस्य अभिऽदासतः ॥३॥ वि नः इंद्र मृधः जहि नीचा यच्छ पृतन्यतः यः अस्मान् अभिऽदासति अधरं गमय तमः ॥४॥ अप इंद्र द्विषतः मनः अप जिज्यासतः वधं वि मन्योः शर्म यच्छ वरीयः यवय वधं ॥५॥१०॥

॥१५३॥ ईंखयंतीः अपस्युवः इंद्रं जातं उप आसते भेजानासः सुऽवीर्यं ॥१॥ त्वं इंद्र बलात् अधि सहसः जातः ओजसः त्वं वृषन् वृषा इत् असि ॥२॥ त्वं इंद्र असि वृत्रऽहा वि अंतरिक्षं अतिरः उत्



Digitized by Google

द्यामंस्तभ्ना ओजंसा ॥३॥ त्वमिंद्र सजोषसमर्कं बिभर्षि बाह्वोः। वज्रं शिशान ओजंसा ॥४॥ त्वमिंद्राभिभूरसि विश्वा जातान्योजंसा। स विश्वा भुव आभंवः ॥५॥११॥

॥ १५४ ॥ १–५ यमी ॥ भाववृत्तं ॥ अनुष्टुप् ॥

॥१५४॥ सोम एकेभ्यः पवते घृतमेक उपासते। येभ्यो मधु प्रधावति तांश्चिदेवापि गच्छतात् ॥१॥ तपसा ये अनाधृष्यास्तपसा ये स्वर्ययुः। तपो ये चक्रिरे महस्तांश्चिदेवापि गच्छतात् ॥२॥ ये युध्यंते प्रधनेषु शूरासो ये तनूत्यजः। ये वा सहस्रदक्षिणास्तांश्चिदेवापि गच्छतात् ॥३॥ ये चित्पूर्वं ऋतसाप ऋतावान ऋतावृधः। पितॄन्तपस्वतो यम तांश्चिदेवापि गच्छतात् ॥४॥ सहस्रणीथाः कवयो ये गोपायंति सूर्यं। ऋषीन्तपस्वतो यम तपोजाँ अपि गच्छतात् ॥५॥१२॥

॥ १५५ ॥ १–५ शिरिंबिठो भारद्वाजः ॥ अलक्ष्मीघ्नं । २.३ ब्रह्मणस्पतिः । ५ विश्वे देवाः ॥ अनुष्टुप् ॥

॥१५५॥ अरायि काणे विकटे गिरिं गच्छ सदान्वे। शिरिंबिठस्य सत्वभिस्तेभिष्ट्वा चातयामसि ॥१॥ चत्तो इतश्चत्तामुतः सर्वा भ्रूणान्यारुषी। अराय्यं ब्रह्मणस्पते तीक्ष्णशृंगोदृषन्निहि ॥२॥ अदो यद्दारु प्लवते सिंधोः पारे अपूरुषं। तदा रभस्व दुर्हणो तेन गच्छ परस्तरं ॥३॥ यद्ध प्राचीरजगंतोरो मंडूरधाणिकीः। हता इंद्रस्य शत्रवः सर्वे बुद्बुदयाशवः ॥४॥ परीमे गामनेषत पर्यग्निमहृषत। देवेष्वक्रत श्रवः क इमाँ आ दधर्षति ॥५॥१३॥

॥ १५६ ॥ १–५ केतुराग्नेयः ॥ अग्निः ॥ गायत्री ॥

॥१५६॥ अग्निं हिन्वंतु नो धियः सप्तिमाशुमिवाजिषु। तेन



Digitized by Google

द्यां अस्तभ्नाः ओजसा ॥३॥ त्वं इंद्र सऽजोषसं अर्कं बिभर्षि बाह्वोः वज्रं शिशानः ओजसा ॥४॥ त्वं इंद्र अभिऽभूः असि विश्वा जातानि ओजसा सः विश्वाः भुवः आ अभवः ॥५॥११॥

---

॥१५४॥ सोमः एकेभ्यः पवते घृतं एके उप आसते येभ्यः मधु प्रऽधावति तान् चित् एव अपि गच्छतात् ॥१॥ तपसा ये अनाधृष्याः तपसा ये स्वः ययुः तपः ये चक्रिरे महः तान् चित् एव अपि गच्छतात् ॥२॥ ये युध्यंते प्रऽधनेषु शूरासः ये तनूऽत्यजः ये वा सहस्रंऽदक्षिणाः तान् चित् एव अपि गच्छतात् ॥३॥ ये चित् पूर्वे ऋतऽसापः ऋतऽवानः ऋतऽवृधः पितॄन् तपस्वतः यम तान् चित् एव अपि गच्छतात् ॥४॥ सहस्रंऽनीथाः कवयः ये गोपायंति सूर्यं ऋषीन् तपस्वतः यम तपःऽजान् अपि गच्छतात् ॥५॥१२॥

---

॥१५५॥ अरायि काणे विऽकटे गिरिं गच्छ सदान्वे शिरिंबिठस्य सत्वऽभिः तेभिः त्वा चातयामसि ॥१॥ चत्तो इतः चत्त अमुतः सर्वा भ्रूणानि आरुषी अराय्यं ब्रह्मणः पते तीक्ष्णऽशृंग उत्ऽऋषन् इहि ॥२॥ अदः यत् दारु प्लवते सिंधोः पारे अपुरुषं तत् आ रभस्व दुःऽहनो तेन गच्छ परःऽतरं ॥३॥ यत् ह प्राचीः अजगंत उरः मंडूरऽधाणिकीः हताः इंद्रस्य शत्रवः सर्वे बुद्बुदऽयाशवः ॥४॥ परि इमे गां अनेषत परि अग्निं अहृषत देवेषु अक्रत श्रवः कः इमान् आ दधर्षति ॥५॥१३॥

---

॥१५६॥ अग्निं हिन्वंतु नः धियः सप्तिं आशुंऽइव आजिषु तेन

ज्रेष्म धनंधनं ॥१॥ यया गा आकरामहे सेनयाग्ने तवोत्या। तां नो हिन्व मघत्तये ॥२॥ आग्ने स्थूरं रयिं भर पृथुं गोमंतमश्विनं। अंग्धि खं वर्तया पणिं ॥३॥ अग्ने नक्षत्रमजरमा सूर्यं रोहयो दिवि। दधज्ज्योतिर्जनेभ्यः ॥४॥ अग्ने केतुर्विशामसि प्रेष्ठः श्रेष्ठ उपस्थसत्। बोधा स्तोत्रे वयो दधत् ॥५॥१४॥

॥१५७॥ १–५ भुवन आप्त्यः साधनो वा भौवनः ॥ विश्वे देवाः ॥ द्विपदा त्रिष्टुप् ॥

॥१५७॥ इमा नु कं भुवना सीषधामेंद्रश्च विश्वे च देवाः ॥१॥ यज्ञं च नस्तन्वं च प्रजां चादित्यैरिंद्रः सह चीक्लृपाति ॥२॥ आदित्यैरिंद्रः सगणो मरुद्भिरस्माकं भूत्वविता तनूनां ॥३॥ हत्वाय देवा असुरान्यदायन्देवा देवत्वमभिरक्षमाणाः ॥४॥ प्रत्यंचमर्कमनयञ्छचीभिरादित्स्वधामिषिरां पर्यपश्यन् ॥५॥१५॥

॥१५८॥ १–५ चक्षुः सौर्यः ॥ सूर्यः ॥ गायत्री ॥

॥१५८॥ सूर्यो नो दिवस्पातु वातो अंतरिक्षात्। अग्निर्नः पार्थिवेभ्यः ॥१॥ जोषा सवितर्यस्य ते हरः शतं सवाँ अर्हति। पाहि नो दिद्युतः पतंत्याः ॥२॥ चक्षुर्नो देवः सविता चक्षुर्न उत पर्वतः। चक्षुर्धाता दधातु नः ॥३॥ चक्षुर्नो धेहि चक्षुषे चक्षुर्विख्यै तनूभ्यः। सं चेदं वि च पश्येम ॥४॥ सुसंदृशं त्वा वयं प्रति पश्येम सूर्य। वि पश्येम नृचक्षसः ॥५॥१६॥

॥१५९॥ १–६ शची पौलोमी ॥ शची पौलोमी ॥ अनुष्टुप् ॥

॥१५९॥ उदसौ सूर्यो अगादुदयं मामको भगः। अहं तद्विद्वला पतिमभ्यसाक्षि विषासहिः ॥१॥ अहं केतुरहं मूर्धाहमुग्रा विवाचनी। ममेदनु क्रतुं पतिः सेहानाया उपाचरेत् ॥२॥ मम पुत्राः शत्रुहणोऽथो मे दुहिता वि-



Digitized by Google

जेष्म धनैंऽधनं ॥१॥ ययो गाः आऽकरामहे सेनया अग्ने तव ऊत्या तां नः हिन्व मघत्तये ॥२॥ आ अग्ने स्थूरं रयिं भर पृथुं गोऽमंतं अश्विनं अंग्धि खं वर्तय पणिं ॥३॥ अग्ने नक्षत्रं अजरं आ सूर्यं रोहयः दिवि दधत् ज्योतिः जनेभ्यः ॥४॥ अग्ने केतुः विशां असि प्रेष्ठः श्रेष्ठः उपस्थऽसत् बोध स्तोत्रे वयः दधत् ॥५॥ १४॥

---

॥१५७॥ इमा नु कं भुवना सीसधाम इंद्रः च विश्वे च देवाः ॥१॥ यज्ञं च नः तन्वं च प्रऽजां च आदित्यैः इंद्रः सह चीक्लृपाति ॥२॥ आदित्यैः इंद्रः सऽगणः मरुत्ऽभिः अस्माकं भूतु अविता तनूनां ॥३॥ हत्वाय देवाः असुरान् यत् आयन् देवाः देवऽत्वं अभिऽरक्षमाणाः ॥४॥ प्रत्यंचं अर्कं अनयन् शचीभिः आत् इत् स्वधां इषिरां परि अपश्यन् ॥५॥ १५॥

---

॥१५८॥ सूर्यः नः दिवः पातु वातः अंतरिक्षात् अग्निः नः पार्थिवेभ्यः ॥१॥ जोष सवितः यस्य ते हरः शतं सवान् अर्हति पाहि नः दिद्युतः पतंत्याः ॥२॥ चक्षुः नः देवः सविता चक्षुः नः उत पर्वतः चक्षुः धाता दधातु नः ॥३॥ चक्षुः नः धेहि चक्षुषे चक्षुः विऽख्यै तनूभ्यः सं च इदं वि च पश्येम ॥४॥ सुऽसंदृशं त्वा वयं प्रति पश्येम सूर्य वि पश्येम नृऽचक्षसः ॥५॥ १६॥

---

॥१५९॥ उत् असौ सूर्यः अगात् उत् अयं मामकः भगः अहं तत् विद्वला पतिं अभि असाक्षि विऽससहिः ॥१॥ अहं केतुः अहं मूर्धा अहं उग्रा विऽवाचनी मम इत् अनु क्रतुं पतिः सेहानायाः उपऽआचरेत् ॥२॥ मम पुत्राः शत्रुऽहनः अथो मे दुहिता वि-



Digitized by Google

राट्। उताहमस्मि संजया पत्यौ मे श्लोक उत्तमः ॥ ३॥ येनेंद्रो हविषा कृत्व्यभवद्द्युम्न्युत्तमः। इदं तदक्रि देवा असपत्ना किलाभुवं ॥ ४॥ असपत्ना सपत्नघ्नी जयंत्यभिभूवरी। आवृक्षमन्यासां वर्चो राधो अस्थेयसामिव ॥ ५॥ समजैषमिमा अहं सपत्नीरभिभूवरी। यथाहमस्य वीरस्य विराजानि जनस्य च ॥ ६॥ १७॥

॥ १६०॥ १–५ पूरणो वैश्वामित्रः ॥ इंद्रः ॥ त्रिष्टुप् ॥

॥ १६०॥ तीव्रस्याभिवयसो अस्य पाहि सर्वरथा वि हरी इह मुंच। इंद्र मा त्वा यजमानासो अन्ये नि रीरमन्तुभ्यमिमे सुतासः ॥ १॥ तुभ्यं सुतास्तुभ्यमु सोत्वासस्त्वां गिरः श्वात्र्या आ ह्वयंति। इंद्रेदमद्य सवनं जुषाणो विश्वस्य विद्वाँ इह पाहि सोमं ॥ २॥ य उशता मनसा सोममस्मै सर्वहृदा देवकामः सुनोति। न गा इंद्रस्तस्य परा ददाति प्रशस्तमिच्चारुमस्मै कृणोति ॥ ३॥ अनुस्पष्टो भवत्येषो अस्य यो अस्मै रेवान्न सुनोति सोमं। निररत्नौ मघवा तं दधाति ब्रह्मद्विषो हंत्यनानुदिष्टः ॥ ४॥ अश्वायंतो गव्यंतो वाजयंतो हवामहे त्वोपगंतवा उ। आभूषंतस्ते सुमतौ नवायां वयमिंद्र त्वा शुनं हुवेम ॥ ५॥ १८॥

॥ १६१॥ १–५ यक्ष्मनाशनः प्राजापत्यः ॥ राजयक्ष्मघ्नं ॥ १–४ त्रिष्टुप्। ५ अनुष्टुप् ॥

॥ १६१॥ मुंचामि त्वा हविषा जीवनाय कमज्ञातयक्ष्मादुत राजयक्ष्मात्। ग्राहिर्जग्राह यदि वैतदेनं तस्या इंद्राग्नी प्र मुमुक्तमेनं ॥ १॥ यदि क्षितायुर्यदि वा परेतो यदि मृत्योरंतिकं नीत एव। तमा हरामि निर्ऋतेरुपस्थादस्पार्षमेनं शतशारदाय ॥ २॥ सहस्राक्षेण शतशारदेन श-



Digitized by Google

ऽराट् उत अहं अस्मि संऽजया पत्यौ मे श्लोकः उत्ऽतमः ॥३॥ येन इंद्रः हविषा कृत्वी अभवत् द्युम्नी उत्ऽतमः इदं तत् अक्रि देवाः असपत्ना किल अभुवं ॥४॥ असपत्ना सपत्नऽघ्नी जयंती अभिऽभूवरी आ अवृक्षं अन्यासां वर्चः राधः अस्थेयसांऽइव ॥५॥ सं अजैषं इमाः अहं सऽपत्नीः अभिऽभूवरी यथा अहं अस्य वीरस्य विऽराजानि जनस्य च ॥६॥१७॥

---

॥१६०॥ तीव्रस्य अभिऽवयसः अस्य पाहि सर्वऽरथा वि हरी इह मुंच इंद्र मा त्वा यजमानासः अन्ये नि रीरमन् तुभ्यं इमे सुतासः ॥१॥ तुभ्यं सुताः तुभ्यं ऊं इति सोत्वासः त्वां गिरः श्वात्र्याः आ ह्वयंति इंद्र इदं अद्य सवनं जुषाणः विश्वस्य विद्वान् इह पाहि सोमं ॥२॥ यः उशता मनसा सोमं अस्मै सर्वऽहृदा देवऽकामः सुनोति न गाः इंद्रः तस्य परा ददाति प्रऽशस्तं इत् चारु अस्मै कृणोति ॥३॥ अनुऽस्पष्टः भवति एषः अस्य यः अस्मै रेवान् न सुनोति सोमं निः अरत्नौ मघऽवा तं दधाति ब्रह्मऽद्विषः हंति अनानुऽदिष्टः ॥४॥ अश्वऽयंतः गव्यंतः वाजयंतः हवामहे त्वा उपऽगंतवै ऊं इति आऽभूषंतः ते सुऽमतौ नवायां वयं इंद्र त्वा शुनं हुवेम ॥५॥१८॥

---

॥१६१॥ मुंचामि त्वा हविषा जीवनाय कं अज्ञातऽयक्ष्मात् उत राजऽयक्ष्मात् ग्राहिः जग्राह यदि वा एतत् एनं तस्याः इंद्राग्नी इति प्र मुमुक्तं एनं ॥१॥ यदि क्षितऽआयुः यदि वा पराऽइतः यदि मृत्योः अंतिकं निऽइतः एव तं आ हरामि निःऽऋतेः उपऽस्थात् अस्पार्षं एनं शतऽशारदाय ॥२॥ सहस्रऽअक्षेण शतऽशारदेन श-



Digitized by Google

तायुषा हविषाहार्षमेनं। शतं यथेमं शरदो नयातींद्रो विश्वस्य दुरितस्य पारं ॥३॥ शतं जीव शरदो वर्धमानः शतं हेमंताञ्छतमु वसंतान्। शतमिंद्राग्नी सविता बृहस्पतिः शतायुषा हविषेमं पुनर्दुः ॥४॥ आहार्षं त्वाविदं त्वा पुनरागाः पुनर्नव। सर्वांग सर्वं ते चक्षुः सर्वमायुश्च तेऽविदं ॥५॥१९॥

---

॥ १६२ ॥ १–६ रक्षोहा ब्राह्मः ॥ गर्भसंस्रावे प्रायश्चित्तं ॥ अनुष्टुप् ॥

॥१६२॥ ब्रह्मणाग्निः संविदानो रक्षोहा बाधतामितः। अमीवा यस्ते गर्भं दुर्णामा योनिमाशये ॥१॥ यस्ते गर्भममीवा दुर्णामा योनिमाशये। अग्निष्टं ब्रह्मणा सह निष्क्रव्यादमनीनशत् ॥२॥ यस्ते हंति पतयंतं निषत्स्नुं यः सरीसृपं। जातं यस्ते जिघांसति तमितो नाशयामसि ॥३॥ यस्त ऊरू विहरत्यंतरा दंपती शये। योनिं यो अंतरारेळ्हि तमितो नाशयामसि ॥४॥ यस्त्वा भ्राता पतिर्भूत्वा जारो भूत्वा निपद्यते। प्रजां यस्ते जिघांसति तमितो नाशयामसि ॥५॥ यस्त्वा स्वप्नेन तमसा मोहयित्वा निपद्यते। प्रजां यस्ते जिघांसति तमितो नाशयामसि ॥६॥२०॥

---

॥ १६३ ॥ १–६ विवृहा काश्यपः ॥ यक्ष्मघ्नं ॥ अनुष्टुप् ॥

॥१६३॥ अक्षीभ्यां ते नासिकाभ्यां कर्णाभ्यां छुबुकादधि। यक्ष्मं शीर्षण्यं मस्तिष्काज्जिह्वाया वि वृहामि ते ॥१॥ ग्रीवाभ्यस्त उष्णिहाभ्यः कीकसाभ्यो अनूक्यात्। यक्ष्मं दोषण्यं मंसाभ्यां बाहुभ्यां वि वृहामि ते ॥२॥ आंत्रेभ्यस्ते गुदाभ्यो वनिष्ठोर्हृदयादधि। यक्ष्मं मतस्नाभ्यां यक्नः प्लाशिभ्यो वि वृहामि ते ॥३॥ ऊरुभ्यां ते अष्ठीवद्भ्यां पार्ष्णिभ्यां प्रपदाभ्यां। यक्ष्मं श्रो-



Digitized by Google

तऽआयुषा हविषा आ अहार्षं एनं शतं यथा इमं शरदः नयाति इंद्रः विश्वस्य दुःऽइतस्य पारं ॥३॥ शतं जीव शरदः वर्धमानः शतं हेमंतान् शतं ऊं वसंतान् शतं इंद्राग्नी सविता बृहस्पतिः शतऽआयुषा हविषा इमं पुनः दुः ॥४॥ आ अहार्षं त्वा अविदं त्वा पुनः आ अगाः पुनःऽनव सर्वऽअंग सर्वं ते चक्षुः सर्वं आयुः च ते अविदं ॥५॥१९॥

---

॥१६२॥ ब्रह्मणा अग्निः संऽविदानः रक्षःऽहा बाधतां इतः अमीवा यः ते गर्भं दुःऽनामा योनिं आऽशये ॥१॥ यः ते गर्भं अमीवा दुःऽनामा योनिं आऽशये अग्निः तं ब्रह्मणा सह निः क्रव्यऽअदं अनीनशत् ॥२॥ यः ते हंति पतयंतं निऽसत्स्नुं यः सरीसृपं जातं यः ते जिघांसति तं इतः नाशयामसि ॥३॥ यः ते ऊरू विऽहरति अंतरा दंऽपती॰ शये योनिं यः अंतः आऽरेळ्हि तं इतः नाशयामसि ॥४॥ यः त्वा भ्राता पतिः भूत्वा जारः भूत्वा निऽपद्यते प्रऽजां यः ते जिघांसति तं इतः नाशयामसि ॥५॥ यः त्वा स्वप्नेन तमसा मोहयित्वा निऽपद्यते प्रजां यः ते जिघांसति तं इतः नाशयामसि ॥६॥२०॥

---

॥१६३॥ अक्षीभ्यां ते नासिकाभ्यां कर्णाभ्यां छुबुकात् अधि यक्ष्मं शीर्षण्यं मस्तिष्कात् जिह्वायाः वि वृहामि ते ॥१॥ ग्रीवाभ्यः ते उष्णिहाभ्यः कीकसाभ्यः अनूक्यात् यक्ष्मं दोषण्यं अंसाभ्यां बाहुऽभ्यां वि वृहामि ते ॥२॥ आंत्रेभ्यः ते गुदाभ्यः वनिष्ठोः हृदयात् अधि यक्ष्मं मतस्नाभ्यां यक्नः प्लाशिऽभ्यः वि वृहामि ते ॥३॥ ऊरुऽभ्यां ते अष्ठीवत्ऽभ्यां पार्ष्णिऽभ्यां प्रऽपदाभ्यां यक्ष्मं श्रो-



Digitized by Google

णिभ्यां भासदाद्भंससो वि वृहामि ते ॥४॥ मेहनाद्वनंकरणाल्लो-
मभ्यस्ते नखेभ्यः। यक्ष्मं सर्वस्मादात्मनस्तमिदं वि वृहामि ते ॥५॥
अंगादंगाल्लोम्नोलोम्नो जातं पर्वणिपर्वणि। यक्ष्मं सर्वस्मादा-
त्मनस्तमिदं वि वृहामि ते ॥६॥२१॥

॥१६४॥ १—५ प्रचेताः ॥ दुःस्वप्नघ्नं ॥ १. २. ४ अनुष्टुप्। ३ त्रिष्टुप्। ५ पंक्तिः ॥

॥१६४॥ अपेहि मनसस्पतेऽप क्राम परश्चर। परो निर्ऋत्या
आ चक्ष्व बहुधा जीवतो मनः ॥१॥ भद्रं वै वरं वृणते भद्रं युंजंति
दक्षिणं। भद्रं वैवस्वते चक्षुर्बहुत्रा जीवतो मनः ॥२॥ यदाशसा
निःशसाभिशसोपारिम जाग्रतो यत्स्वपंतः। अग्निर्विश्वान्यप
दुष्कृतान्यजुष्टान्यारे अस्मद्दधातु ॥३॥ यदिंद्र ब्रह्मणस्पतेऽभिद्रोहं
चरामसि। प्रचेता न आंगिरसो द्विषतां पात्वंहसः ॥४॥ अजै-
ष्माद्यासनाम चाभूमानागसो वयं। जाग्रत्स्वप्नः संकल्पः पापो
यं द्विष्मस्तं स ऋच्छतु यो नो द्वेष्टि तमृच्छतु ॥५॥२२॥

॥१६५॥ १—५ कपोतो नैर्ऋतः ॥ कपोतोपहतौ प्रायश्चित्तं वैश्वदेवं ॥ त्रिष्टुप् ॥

॥१६५॥ देवाः कपोत इषितो यदिच्छन्दूतो निर्ऋत्या
इदमाजगाम। तस्मा अर्चाम कृणवाम निष्कृतिं शं नो अस्तु
द्विपदे शं चतुष्पदे ॥१॥ शिवः कपोत इषितो नो अस्त्वना-
गा देवाः शकुनो गृहेषु। अग्निर्हि विप्रो जुषतां हविर्नः परि
हेतिः पक्षिणी नो वृणक्तु ॥२॥ हेतिः पक्षिणी न दभात्यस्मा-
नाष्ट्र्यां पदं कृणुते अग्निधाने। शं नो गोभ्यश्च पुरुषेभ्यश्चास्तु
मा नो हिंसीदिह देवाः कपोतः ॥३॥ यदुलूको वदति मोघ-
मेतद्यत्कपोतः पदमग्नौ कृणोति। यस्य दूतः प्रहित एष ए-
तत्तस्मै यमाय नमो अस्तु मृत्यवे ॥४॥ ऋचा कपोतं नुदत प्र-



Digitized by Google

णिंऽभ्यां भासदात् भंसंसः वि वृहामि ते ॥४॥ मेहनात् वनंऽकरं- णात् लोमंऽभ्यः ते नखेभ्यः यक्ष्मं सर्वस्मात् आत्मनः तं इदं वि वृहामि ते ॥५॥ अंगात्ऽअंगात् लोम्नःऽलोम्नः जातं पर्वणिऽपर्वणि यक्ष्मं सर्वस्मात् आत्मनः तं इदं वि वृहामि ते ॥६॥२१॥

---

॥१६४॥ अपं इहि मनसः पते अपं क्राम परः चर परः निःऽऋत्यै आ चक्ष्व बहुधा जीवंतः मनः ॥१॥ भद्रं वै वरं वृणते भद्रं युंजंति दक्षिणं भद्रं वैवस्वते चक्षुः बहुऽधा जीवंतः मनः ॥२॥ यत् आऽशसा निःऽशसा अभिऽशसा उपऽआरिम जाग्रतः यत् स्वपंतः अग्निः विश्वानि अपं दुःऽकृतानि अजुष्टानि आरे अस्मत् दधातु ॥३॥ यत् इंद्र ब्रह्मणः पते अभिऽद्रोहं चरामसि प्रऽचेताः नः आंगिरसः द्विषतां पातु अंहसः ॥४॥ अजैष्म अद्य असनाम च अभूम अनागसः वयं जाग्रत्ऽस्वप्नः संऽकल्पः पापः यं द्विष्मः तं सः ऋच्छतु यः नः द्वेष्टि तं ऋच्छतु ॥५॥२२॥

---

॥१६५॥ देवाः कपोतः इषितः यत् इच्छन् दूतः निःऽऋत्याः इदं आऽजगाम तस्मै अर्चाम कृणवाम निःऽकृतिं शं नः अस्तु द्विऽपदे शं चतुःऽपदे ॥१॥ शिवः कपोतः इषितः नः अस्तु अनागाः देवाः शकुनः गृहेषु अग्निः हि विप्रः जुषतां हविः नः परि हेतिः पक्षिणी नः वृणक्तु ॥२॥ हेतिः पक्षिणी न दभाति अस्मान् आष्ट्र्यां पदं कृणुते अग्निऽधाने शं नः गोभ्यः च पुरुषेभ्यः च अस्तु मा नः हिंसीत् इह देवाः कपोतः ॥३॥ यत् उलूकः वदति मोघं एतत् यत् कपोतः पदं अग्नौ कृणोति यस्य दूतः प्रऽहितः एषः एतत् तस्मै यमाय नमः अस्तु मृत्यवे ॥४॥ ऋचा कपोतं नुदत प्र-



Digitized by Google

सोदमिषं मरुतः परि गां नयध्वं। संयोपयंतो दुरितानि विश्वा हित्वा न ऊर्जं प्र पतात्पतिष्ठः ॥५॥२३॥

---

॥ १६६ ॥ १–५ ऋषभो वैराजः शाक्वरो वा ॥ सपत्नघ्नं ॥ १–४ अनुष्टुप्। ५ महापंक्तिः ॥

॥१६६॥ ऋषभं मा समानानां सपत्नानां विषासहिं। हंतारं शत्रूणां कृधि विराजं गोपतिं गवां ॥१॥ अहमस्मि सपत्नहेंद्र इवारिष्टो अक्षतः। अधः सपत्ना मे पदोरिमे सर्वे अभिष्ठिताः ॥२॥ अत्रैव वोऽपि नह्याम्युभे आर्त्नी इव ज्यया। वाचस्पते नि षेधेमान्यथा मदधरं वदान् ॥३॥ अभिभूरहमागमं विश्वकर्मेण धाम्ना। आ वश्चित्तमा वो व्रतमा वोऽहं समितिं ददे ॥४॥ योगक्षेमं व आदायाहं भूयासमुत्तम आ वो मूर्धानमक्रमीं। अधस्पदान्म उद्वदत मंडूका इवोदकान्मंडूका उदकादिव ॥५॥२४॥

---

॥ १६७ ॥ १–४ विश्वामित्रजमदग्नी ॥ १. २. ४ इंद्रः। ३ लिंगोक्तदेवताः ॥ जगती ॥

॥१६७॥ तुभ्येदमिंद्र परि षिच्यते मधु त्वं सुतस्य कलशस्य राजसि। त्वं रयिं पुरुवीरामु नस्कृधि त्वं तपः परितप्याजयः स्वः ॥१॥ स्वर्जितं महि मंदानमंधसो हवामहे परि शक्रं सुताँ उप। इमं नो यज्ञमिह बोध्या गहि स्पृधो जयंतं मघवानमीमहे ॥२॥ सोमस्य राज्ञो वरुणस्य धर्मणि बृहस्पतेरनुमत्या उ शर्मणि। तवाहमद्य मघवन्नुपस्तुतौ धातर्विधातः कलशाँ अभक्षयं ॥३॥ प्रसूतो भक्षमकरं चरावपि स्तोमं चेमं प्रथमः सूरिरुन्मृजे। सुते सातेन यद्यागमं वां प्रति विश्वामित्रजमदग्नी दमे ॥४॥२५॥

---

॥ १६८ ॥ १–४ अनिलो वातायनः ॥ वायुः ॥ त्रिष्टुप् ॥

॥१६८॥ वातस्य नु महिमानं रथस्य रुजन्नेति स्तनयन्न-



Digitized by Google

ऽनोदं इषं मदंतः परि गां नयध्वं संऽयोपयंतः दुःऽइतानि विश्वा हित्वा नः ऊर्जं प्र पतात् पतिष्ठः ॥५॥२३॥

---

॥१६६॥ ऋषभं मा समानानां सऽपत्नानां विऽससहिं हंतारं शत्रूणां कृधि विऽराजं गोऽपतिं गवां ॥१॥ अहं अस्मि सपत्नऽहा इंद्रःऽइव अरिष्टः अक्षतः अधः सऽपत्नाः मे पदोः इमे सर्वे अभिऽस्थिताः ॥२॥ अत्र एव वः अपि नह्यामि उभे आर्त्नीऽइव॰ ज्यया वाचः पते नि सेध इमान् यथा मत् अधरं वदान् ॥३॥ अभिऽभूः अहं आ अगमं विश्वऽकर्मेण धाम्ना आ वः चित्तं आ वः व्रतं आ वः अहं संऽइतिं ददे ॥४॥ योगऽक्षेमं वः आऽदाय अहं भूयासं उत्ऽतमः आ वः मूर्धानं अक्रमीं अधःऽपदात् मे उत् वदत मंडूकाःऽइव उदकात् मंडूकाः उदकात्ऽइव ॥५॥२४॥

---

॥१६७॥ तुभ्यं इदं इंद्र परि सिच्यते मधु त्वं सुतस्य कलशस्य राजसि त्वं रयिं पुरुऽवीरां ऊं' नः कृधि त्वं तपः परिऽतप्य अजयः स्वः॰ ॥१॥ स्वःऽजितं महि मंदानं अंधसः हवामहे परि शक्रं सुतान् उप इमं नः यज्ञं इह बोधि आ गहि स्पृधः जयंतं मघऽवानं ईमहे ॥२॥ सोमस्य राज्ञः वरुणस्य धर्मणि बृहस्पतेः अनुऽमत्याः ऊं' शर्मणि तव अहं अद्य मघऽवन् उपऽस्तुतौ धातः विऽधातः॰ कलशान् अभक्षयं ॥३॥ प्रऽसूतः भक्षं अकरं चरौ अपि स्तोमं च इमं प्रथमः सूरिः उत् मृजे सुते सातेन यदि आ अगमं वां प्रति विश्वामित्रजमदग्नी' दमे ॥४॥२५॥

---

॥१६८॥ वातस्य नु महिमानं रथस्य रुजन् एति स्तनयन्



Digitized by Google

स्य घोषः। दिविस्पृग्यात्यरुणानि कृण्वन्नुतो एति पृथिव्या रेणु-
मस्यन् ॥१॥ सं प्रेरते अनु वातस्य विष्ठा ऐनं गच्छंति समनं न
योषाः। ताभिः सयुक्सरथं देव ईयतेऽस्य विश्वस्य भुवनस्य रा-
जा ॥२॥ अंतरिक्षे पथिभिरीयमानो न नि विशते कतमच्चनाहः।
अपां सखा प्रथमजा ऋतावा क्व स्विज्जातः कुत आ बभूव ॥३॥
आत्मा देवानां भुवनस्य गर्भो यथावशं चरति देव एषः। घोषा
इदस्य शृण्विरे न रूपं तस्मै वाताय हविषा विधेम ॥४॥२६॥

---

॥१६९॥ १-४ शबरः काक्षीवतः ॥ गावः ॥ त्रिष्टुप् ॥

॥१६९॥ मयोभूर्वातो अभि वातूस्रा ऊर्जस्वतीरोषधी-
रा रिशंतां। पीवस्वतीर्जीवधन्याः पिबंत्ववसाय पद्वते रुद्र
मृळ ॥१॥ याः सरूपा विरूपा एकरूपा यासामग्निरिष्ट्या ना-
मानि वेद। या अंगिरसस्तपसेह चक्रुस्ताभ्यः पर्जन्य महि शर्म
यच्छ ॥२॥ या देवेषु तन्व१मैरयंत यासां सोमो विश्वा रूपाणि
वेद। ता अस्मभ्यं पयसा पिन्वमानाः प्रजावतीरिंद्र गोष्ठे रिरी-
हि ॥३॥ प्रजापतिर्मह्यमेता रराणो विश्वैर्देवैः पितृभिः संवि-
दानः। शिवाः सतीरुप नो गोष्ठमाकस्तासां वयं प्रजया सं स-
देम ॥४॥२७॥

---

॥१७०॥ १-४ विभ्राट् सौर्यः ॥ सूर्यः ॥ १-३ जगती । ४ आस्तारपंक्तिः ॥

॥१७०॥ विभ्राड्बृहत्पिबतु सोम्यं मध्वायुर्दधद्यज्ञपता-
वविहुतं। वातजूतो यो अभिरक्षति त्मना प्रजाः पुपोष
पुरुधा वि राजति ॥१॥ विभ्राड्बृहत्सुभृतं वाजसातमं धर्म-
न्दिवो धरुणे सत्यमर्पितं। अमित्रहा वृत्रहा दस्युहंतमं
ज्योतिर्जज्ञे असुरहा सपत्नहा ॥२॥ इदं श्रेष्ठं ज्योतिषां



Digitized by Google

अस्य घोषः दिवि॒ऽस्पृक् याति अरुणानि कृण्वन् उतो इति पृ॒थि॒व्या रे॒णुं अस्यन् ॥१॥ सं प्र ई॒र॒ते॒ अनु वातस्य वि॒ऽस्थाः आ एनं गच्छंति समनं न योषाः ताभिः स॒ऽयुक् स॒ऽरथं देवः ई॒य॒ते अस्य विश्वस्य भुवनस्य राजा ॥२॥ अंतरिक्षे प॒थि॒ऽभिः ईयमानः न नि विशते कतमत् चन अहः अपां सखा प्र॒थ॒म॒ऽजाः ऋतऽवा क्व स्वित् जातः कुतः आ बभूव ॥३॥ आत्मा देवानां भुवनस्य गर्भः य॒था॒ऽव॒शं चरति देवः एषः घोषाः इत् अस्य शृ॒ण्वि॒रे न रूपं तस्मै वाताय ह॒विषा विधेम ॥४॥२६॥

॥१६९॥ म॒यः॒ऽभूः वातः अभि वातु उस्राः ऊर्जस्वतीः ओषधीः आ रिशंतां पीवस्वतीः जी॒व॒ऽधन्याः पिबंतु अवसाय पत्ऽवते रुद्र मृळ ॥१॥ याः स॒ऽरूपाः वि॒ऽरूपाः एक॒ऽरूपाः यासां अग्निः इष्ट्या नामानि वेद याः अंगिरसः तपसा इह चक्रुः ताभ्यः पर्जन्य महि शर्म यच्छ ॥२॥ याः देवेषु तन्वं ऐरयंत यासां सोमः विश्वा रूपाणि वेद ताः अस्मभ्यं पयसा पिन्वमानाः प्र॒जाऽवतीः इंद्र गो॒ऽस्थे रिरीहि ॥३॥ प्र॒जाऽपतिः मह्यं एताः रराणः विश्वैः देवैः पि॒तृ॒ऽभिः सं॒ऽवि॒दा॒नः शिवाः सतीः उप नः गो॒ऽस्थं आ अकः॰ तासां वयं प्र॒ऽजया सं सदेम ॥४॥२७॥

॥१७०॥ वि॒ऽभ्राट् बृहत् पिबतु सोम्यं मधु आयुः दधत् यज्ञ॒ऽपतौ अवि॒ऽह्रुतं वात॒ऽजूतः यः अभि॒ऽरक्षति त्मना प्र॒ऽजाः पुपोष पु॒रु॒धा वि राजति ॥१॥ वि॒ऽभ्राट् बृहत् सु॒ऽभृतं वा॒ज॒ऽसातमं धर्मन् दिवः धरुणे सत्यं अर्पितं अ॒मि॒त्र॒ऽहा वृ॒त्र॒ऽहा दस्युहन्ऽतमं ज्योतिः जज्ञे असु॒र॒ऽहा स॒प॒त्न॒ऽहा ॥२॥ इदं श्रेष्ठं ज्योतिषां



Digitized by Google

ज्योतिरुत्तमं विश्वजिद्धनजिदुच्यते बृहत्। विश्वभाड्भ्राजो महि सूर्यो दृश उरु पप्रथे सह ओजो अच्युतं ॥३॥ विभ्राजञ्ज्योतिषा स्व१रगच्छो रोचनं दिवः। येनेमा विश्वा भुवनान्याभृता विश्वकर्मणा विश्वदेव्यावता ॥४॥२८॥

---

॥ १७१ ॥ १-४ इटो भार्गवः ॥ इंद्रः ॥ गायत्री ॥

॥१७१॥ त्वं त्यमिटतो रथमिंद्र प्रावः सुतावतः। अशृणोः सोमिनो हवं ॥१॥ त्वं मखस्य दोधतः शिरोऽव त्वचो भरः। अगच्छः सोमिनो गृहं ॥२॥ त्वं त्यमिंद्र मर्त्यमास्त्रबुध्नाय वेन्यं। मुहुः श्रथ्ना मनस्यवे ॥३॥ त्वं त्यमिंद्र सूर्यं पश्चा संतं पुरस्कृधि। देवानां चित्तिरो वशं ॥४॥२९॥

---

॥ १७२ ॥ १-४ संवर्तः ॥ उषाः ॥ द्विपदा ॥

॥१७२॥ आ याहि वनसा सह गावः सचंत वर्तनिं यदूधभिः ॥१॥ आ याहि वस्व्या धिया मंहिष्ठो जारयन्मखः सुदानुभिः ॥२॥ पितुभृतो न तंतुमित्सुदानवः प्रति दध्मो यजामसि ॥३॥ उषा अप स्वसुस्तमः सं वर्तयति वर्तनिं सुजातता ॥४॥३०॥

---

॥ १७३ ॥ १-६ ध्रुवः ॥ राज्ञः स्तुतिः ॥ अनुष्टुप् ॥

॥ १७३ ॥ आ त्वाहार्षमंतरेधि ध्रुवस्तिष्ठाविचाचलिः। विशस्त्वा सर्वा वांछंतु मा त्वद्राष्ट्रमधि भ्रशत् ॥१॥ इहैवैधि माप च्योष्ठाः पर्वत इवाविचाचलिः। इंद्र इवेह ध्रुवस्तिष्ठेह राष्ट्रमु धारय ॥२॥ इममिंद्रो अदीधरद्ध्रुवं ध्रुवेण हविषा। तस्मै सोमो अधि ब्रवत्तस्मा उ ब्रह्मणस्पतिः ॥३॥ ध्रुवा द्यौर्ध्रुवा पृथिवी ध्रुवासः पर्वता इमे। ध्रुवं विश्वमिदं जगद्ध्रुवो राजा विशामयं ॥४॥ ध्रुवं ते राजा वरुणो ध्रुवं देवो बृहस्प-



Digitized by Google

ज्योतिः उत्ऽतमं विश्वऽजित् धनऽजित् उच्यते बृहत् विश्वऽभ्राट् भ्राजः महि सूर्यः दृशे उरु पप्रथे सहः ओजः अच्युतं ॥३॥ विऽभ्राजन् ज्योतिषा स्वः अगच्छः रोचनं दिवः येन इमा विश्वा भुवनानि आऽभृता विश्वऽकर्मणा विश्वदेव्यऽवता ॥४॥२८॥

॥१७१॥ त्वं त्यं इटतः रथं इंद्र प्र आवः सुतऽवतः अशृणोः सोमिनः हवं ॥१॥ त्वं मखस्य दोधतः शिरः अव त्वचः भरः अगच्छः सोमिनः गृहं ॥२॥ त्वं त्यं इंद्र मर्त्यं आस्त्रऽबुध्नाय वेन्यं मुहुः श्रथ्नाः मनस्यवे ॥३॥ त्वं त्यं इंद्र सूर्यं पश्चा संतं पुरः कृधि देवानां चित् तिरः वशं ॥४॥२९॥

॥१७२॥ आ याहि वनसा सह गावः सचंत वर्तनिं यत् ऊधऽभिः ॥१॥ आ याहि वस्व्या धिया मंहिष्ठः जारयत्ऽमखः सुदानुऽभिः ॥२॥ पितुऽभृतः न तंतुं इत् सुऽदानवः प्रति दध्मः यजामसि ॥३॥ उषाः अप स्वसुः तमः सं वर्तयति वर्तनिं सुऽजातता ॥४॥३०॥

॥१७३॥ आ त्वा अहार्षं अंतः एधि ध्रुवः तिष्ठ अविऽचाचलिः विशः त्वा सर्वाः वांछंतु मा त्वत् राष्ट्रं अधि भ्रशत् ॥१॥ इह एव एधि मा अप च्योष्ठाः पर्वतःऽइव अविऽचाचलिः इंद्रःऽइव इह ध्रुवः तिष्ठ इह राष्ट्रं ऊं॰ धारय ॥२॥ इमं इंद्रः अदीधरत् ध्रुवं ध्रुवेण हविषा तस्मै सोमः अधि ब्रवत् तस्मै ऊं॰ ब्रह्मणः पतिः ॥३॥ ध्रुवा द्यौः ध्रुवा पृथिवी ध्रुवासः पर्वताः इमे ध्रुवं विश्वं इदं जगत् ध्रुवः राजा विशां अयं ॥४॥ ध्रुवं ते राजा वरुणः ध्रुवं देवः बृहस्प-



Digitized by Google

तिः। ध्रुवं त इंद्रश्चाग्निश्च राष्ट्रं धारयतां ध्रुवं ॥५॥ ध्रुवं ध्रुवेण हविषाभि सोमं मृशामसि। अथो त इंद्रः केवलीर्विशो बलिहृतस्करत् ॥६॥३१॥

॥१७४॥ १–५ अभीवर्तः ॥ राज्ञः स्तुतिः ॥ अनुष्टुप् ॥

॥१७४॥ अभीवर्तेन हविषा येनेंद्रो अभिवावृते। तेनास्मान्ब्रह्मणस्पतेऽभि राष्ट्राय वर्तय ॥१॥ अभिवृत्य सपत्नानभि या नो अरातयः। अभि पृतन्यंतं तिष्ठाभि यो न इरस्यति ॥२॥ अभि त्वा देवः सविताभि सोमो अवीवृतत्। अभि त्वा विश्वा भूतान्यभीवर्तो यथाससि ॥३॥ येनेंद्रो हविषा कृत्व्यभवद्द्युम्न्युत्तमः। इदं तदक्रि देवा असपत्नः किलाभुवं ॥४॥ असपत्नः सपत्नहाभिराष्ट्रो विषासहिः। यथाहमेषां भूतानां विराजानि जनस्य च ॥५॥३२॥

॥१७५॥ १–४ ऊर्ध्वग्रावार्बुदिः ॥ ग्रावाणः ॥ गायत्री ॥

॥१७५॥ प्र वो ग्रावाणः सविता देवः सुवतु धर्मणा। धूर्षु युज्यध्वं सुनुत ॥१॥ ग्रावाणो अप दुच्छुनामप सेधत दुर्मतिं। उस्राः कर्तन भेषजं ॥२॥ ग्रावाण उपरेष्वा महीयंते सजोषसः। वृष्णे दधतो वृष्ण्यं ॥३॥ ग्रावाणः सविता नु वो देवः सुवतु धर्मणा। यजमानाय सुन्वते ॥४॥३३॥

॥१७६॥ १–४ सूनुरार्भवः ॥ १ ऋभवः। २–४ अग्निः ॥ १.३.४ अनुष्टुप्। २ गायत्री ॥

॥१७६॥ प्र सूनव ऋभूणां बृहन्नवंत वृजना। क्षामा ये विश्वधायसोऽश्नन्धेनुं न मातरं ॥१॥ प्र देवं देव्या धिया भरता जातवेदसं। हव्या नो वक्षदानुषक् ॥२॥ अयमु ष्य प्र देवयुर्होता यज्ञाय नीयते। रथो न योरभीवृतो घृणीवाञ्चेतति



Digitized by Google

तिः ध्रुवं ते इंद्रः च अग्निः च राष्ट्रं धारयतां ध्रुवं ॥ ५ ॥ ध्रुवं ध्रुवेण हविषा अभि सोमं मृशामसि अथो इति ते इंद्रः केवलीः विशः बलिऽहृतः करत् ॥ ६ ॥ ३१ ॥

---

॥ १७४ ॥ अभिऽवर्तेन हविषा येन इंद्रः अभिऽववृते तेन अस्मान् ब्रह्मणः पते अभि राष्ट्राय वर्तय ॥ १ ॥ अभिऽवृत्य सऽपत्नान् अभि याः नः अरातयः अभि पृतन्यंतं तिष्ठ अभि यः नः दुरस्यति ॥ २ ॥ अभि त्वा देवः सविता अभि सोमः अवीवृतत् अभि त्वा विश्वा भूतानि अभिऽवर्तः यथा असंसि ॥ ३ ॥ येन इंद्रः हविषा कृत्वी अभवत् द्युम्नी उत्ऽतमः इदं तत् अक्रि देवाः असपत्नः किल अभुवं ॥ ४ ॥ असपत्नः सपत्नऽहा अभिऽराष्ट्रः विऽससहिः यथा अहं एषां भूतानां विऽराजानि जनस्य च ॥ ५ ॥ ३२ ॥

---

॥ १७५ ॥ प्र वः ग्रावाणः सविता देवः सुवतु धर्मणा धूःऽसु युज्यध्वं सुनुत ॥ १ ॥ ग्रावाणः अप दुच्छुनां अप सेधत दुःऽमतिं उस्राः कर्तन भेषजं ॥ २ ॥ ग्रावाणः उपरेषु आ महीयंते सऽजोषसः वृष्णे दधतः वृष्ण्यं ॥ ३ ॥ ग्रावाणः सविता नु वः देवः सुवतु धर्मणा यजमानाय सुन्वते ॥ ४ ॥ ३३ ॥

---

॥ १७६ ॥ प्र सूनवः ऋभूणां बृहत् नवंत वृजना क्षाम ये विश्वऽधायसः अश्नन् धेनुं न मातरं ॥ १ ॥ प्र देवं देव्या धिया भरत जातऽवेदसं हव्या नः वक्षत् आनुषक् ॥ २ ॥ अयं ऊं इति स्यः प्र देवऽयुः होता यज्ञाय नीयते रथः न योः अभिऽवृतः घृणिऽवान् चेतति



Digitized by Google

त्मना ॥३॥ अयमग्निरुरुष्यत्यमृतादिव जन्मनः। सहसश्चित्सहीयान्देवो जीवातवे कृतः ॥४॥३४॥

॥ १७७ ॥ १–३ पतंगः प्राजापत्यः ॥ मायाभेदः ॥ १ जगती । २.३ त्रिष्टुप् ॥

॥१७७॥ पतंगमक्तमसुरस्य मायया हृदा पश्यंति मनसा विपश्चितः। समुद्रे अंतः कवयो वि चक्षते मरीचीनां पदमिच्छंति वेधसः ॥१॥ पतंगो वाचं मनसा बिभर्ति तां गंधर्वोऽवदद्गर्भे अंतः। तां द्योतमानां स्वर्यं मनीषामृतस्य पदे कवयो नि पांति ॥२॥ अपश्यं गोपामनिपद्यमानमा च परा च पथिभिश्चरंतं। स सध्रीचीः स विषूचीर्वसान आ वरीवर्ति भुवनेष्वंतः ॥३॥३५॥

॥ १७८ ॥ १–३ अरिष्टनेमिस्तार्क्ष्यः ॥ तार्क्ष्यः ॥ त्रिष्टुप् ॥

॥१७८॥ त्यमू षु वाजिनं देवजूतं सहावानं तरुतारं रथानां। अरिष्टनेमिं पृतनाजमाशुं स्वस्तये तार्क्ष्यमिहा हुवेम ॥१॥ इंद्रस्येव रातिमाजोहुवानाः स्वस्तये नावमिवा रुहेम। उर्वी न पृथ्वी बहुले गभीरे मा वामेतौ मा परेतौ रिषाम ॥२॥ सद्यश्चिद्यः शवसा पंच कृष्टीः सूर्य इव ज्योतिषापस्ततान। सहस्रसाः शतसा अस्य रंहिर्न स्मा वरंते युवतिं न शर्यां ॥३॥३६॥

॥ १७९ ॥ १ शिबिरौशीनरः । २ प्रतर्दनः काशिराजः । ३ वसुमना रौहिदश्वः ॥ इंद्रः ॥ १ अनुष्टुप् । २.३ त्रिष्टुप् ॥

॥ १७९॥ उत्तिष्ठताव पश्यतेंद्रस्य भागमृत्वियं। यदि श्रातो जुहोतन यद्यश्रातो ममत्तन ॥१॥ श्रातं हविरो ष्विंद्र प्र याहि जगाम सूरो अध्वनो विमध्यं। परि त्वासते निधिभिः सखायः कुलपा न व्राजपतिं चरंतं ॥२॥ श्रातं मन्य



Digitized by Google

त्मना ॥३॥ अयं अग्निः उरुष्यति अमृतात्ऽइव जन्मनः सहसः चित् सहीयान् देवः जीवातवे कृतः ॥४॥ ३४॥

---

॥१७७॥ पतंगं अक्तं असुरस्य मायया हृदा पश्यंति मनसा विपःऽचितः समुद्रे अंतः कवयः वि चक्षते मरीचीनां पदं इच्छंति वेधसः ॥१॥ पतंगः वाचं मनसा बिभर्ति तां गंधर्वः अवदत् गर्भे अंतः तां द्योतमानां स्वर्यं मनीषां ऋतस्य पदे कवयः नि पांति ॥२॥ अपश्यं गोपां अनिऽपद्यमानं आ च परा च पथिऽभिः चरंतं सः सध्रीचीः सः विषूचीः वसानः आ वरीवर्ति भुवनेषु अंतः ॥३॥ ३५॥

---

॥१७८॥ त्यं ऊं सु वाजिनं देवऽजूतं सहऽवानं तरुतारं रथानां अरिष्टऽनेमिं पृतनाजं आशुं स्वस्तये तार्क्ष्यं इह हुवेम ॥१॥ इंद्रस्यऽइव रातिं आऽजोहुवानाः स्वस्तये नावंऽइव आ रुहेम उर्वी न पृथ्वी बहुले गभीरे मा वां आऽइतौ मा पराऽइतौ रिषाम ॥२॥ सद्यः चित् यः शवसा पंच कृष्टीः सूर्यःऽइव ज्योतिषा अपः ततान सहस्रऽसाः शतऽसाः अस्य रंहिः न स्म वरंते युवतिं न शर्या ॥३॥ ३६॥

---

॥१७९॥ उत् तिष्ठत अव पश्यत इंद्रस्य भागं ऋत्वियं यदि श्रातः जुहोतन यदि अश्रातः ममत्तन ॥१॥ श्रातं हविः ओ सु इंद्र प्र याहि जगाम सूरः अध्वनः विऽमध्यं परि त्वा आसते निधिऽभिः सखायः कुलऽपाः न व्राजऽपतिं चरंतं ॥२॥ श्रातं मन्ये



Digitized by Google

ऊर्ध्वनि आतमग्नौ सुश्रातं मन्ये तदृतं नवीयः। माध्यंदिनस्य सवनस्य दध्नः पिबेंद्र वज्रिन्पुरुकृज्जुषाणः ॥ ३ ॥ ३७ ॥

॥ १८० ॥ १-३ जय ऐंद्रः ॥ इंद्रः ॥ त्रिष्टुप् ॥

॥ १८० ॥ प्र ससाहिषे पुरुहूत शत्रूञ्ज्येष्ठस्ते शुष्म इह रातिरस्तु। इंद्रा भर दक्षिणेना वसूनि पतिः सिंधूनामसि रेवतीनां ॥ १ ॥ मृगो न भीमः कुचरो गिरिष्ठाः परावत आ जगंथा परस्याः। सृकं संशाय पविमिंद्र तिग्मं वि शत्रून्ताळ्हि वि मृधो नुदस्व ॥ २ ॥ इंद्र क्षत्रमभि वाममोजोऽजायथा वृषभ चर्षणीनां। अपानुदो जनममित्रयंतमुरुं देवेभ्यो अकृणोरु लोकं ॥ ३ ॥ ३८ ॥

॥ १८१ ॥ १ प्रथो वासिष्ठः। २ सप्रथो भारद्वाजः। ३ घर्मः सौर्यः ॥ विश्वे देवाः ॥ त्रिष्टुप् ॥

॥ १८१ ॥ प्रथश्च यस्य सप्रथश्च नामानुष्टुभस्य हविषो हविर्यत्। धातुर्द्युतानात्सवितुश्च विष्णो रथंतरमा जभारा वसिष्ठः ॥ १ ॥ अविंदन्ते अतिहितं यदासीद्यज्ञस्य धाम परमं गुहा यत्। धातुर्द्युतानात्सवितुश्च विष्णोर्भरद्वाजो बृहदा चक्रे अग्नेः ॥ २ ॥ तेऽविंदन्मनसा दीध्याना यजुः ष्कन्नं प्रथमं देवयानं। धातुर्द्युतानात्सवितुश्च विष्णोरा सूर्यादभरन्घर्ममेते ॥ ३ ॥ ३९ ॥

॥ १८२ ॥ १-३ तपुर्मूर्धा बार्हस्पत्यः ॥ बृहस्पतिः ॥ त्रिष्टुप् ॥

॥ १८२ ॥ बृहस्पतिर्नयतु दुर्गहा तिरः पुनर्नेषदघशंसाय मन्म। क्षिपदशस्तिमप दुर्मतिं हन्नथा करद्यजमानाय शं योः ॥ १ ॥ नराशंसो नोऽवतु प्रयाजे शं नो अस्त्वनुयाजो हवेषु। क्षिपदशस्तिमप दुर्मतिं हन्नथा करद्यजमानाय शं योः ॥ २ ॥ तपुर्मूर्धा तपतु रक्षसो ये ब्रह्मद्विषः शरवे



Digitized by Google

ऊर्धनि आतं अमो सुऽआतं मन्ये तत् ऋतं नवीयः माध्यंदिनस्य
सवनस्य दधः पिब इंद्र वज्रिन् पुरुऽकृत् जुषाणः ॥ ३ ॥ ३७ ॥

॥ १८० ॥ प्र ससहिषे पुरुऽहूत शत्रून् ज्येष्ठः ते शुष्मः इह रातिः
अस्तु इंद्र आ भर दक्षिणेन वसूनि पतिः सिंधूनां असि रेवतीनां
॥ १ ॥ मृगः न भीमः कुचरः गिरिऽस्थाः पराऽवतः आ जगंथ प-
रस्याः सृकं संऽशाय पविं इंद्र तिग्मं वि शत्रून् ताळ्हि वि मृधः
नुदस्व ॥ २ ॥ इंद्र क्षत्रं अभि वामं ओजः अजायथाः वृषभ चर्ष-
णीनां अप अनुदः जनं अमित्रऽयंतं उरुं देवेभ्यः अकृणोः ऊं
लोकं ॥ ३ ॥ ३८ ॥

॥ १८१ ॥ प्रथः च यस्य सऽप्रथः च नाम आनुऽस्तुभस्य हविषः
हविः यत् धातुः द्युतानात् सवितुः च विष्णोः रथंऽतरं आ ज-
भार वसिष्ठः ॥ १ ॥ अविंदन् ते अतिऽहितं यत् आसीत् यज्ञस्य
धाम परमं गुहा यत् धातुः द्युतानात् सवितुः च विष्णोः भरत्-
ऽवाजः बृहत् आ चक्रे अग्नेः ॥ २ ॥ ते अविंदन् मनसा दीध्यानाः
यजुः स्कन्नं प्रथमं देवऽयानं धातुः द्युतानात् सवितुः च विष्णोः
आ सूर्यात् अभरन् घर्मं एते ॥ ३ ॥ ३९ ॥

॥ १८२ ॥ बृहस्पतिः नयतु दुःऽगहा तिरः पुनः नेषत् अघऽशं-
साय मन्म क्षिपत् अशस्तिं अप दुःऽमतिं हन् अथ करत् यजमा-
नाय शं योः ॥ १ ॥ नराशंसः नः अवतु प्रऽयाजे शं नः अस्तु अनु-
ऽयाजः हवेषु क्षिपत् अशस्तिं अप दुःऽमतिं हन् अथ करत् यज-
मानाय शं योः ॥ २ ॥ तपुःऽमूर्धा तपतु रक्षसः ये ब्रह्मऽद्विषः शरवे



Digitized by Google

हंतवा उ। क्षिपदशस्तिमप दुर्मतिं हन्नथा करद्यजमानाय शं
योः ॥३॥४०॥

॥१८३॥ १–३ प्रजावान्प्राजापत्यः ॥ अन्वृचं यजमानपत्नीहोत्राशिषः ॥ त्रिष्टुप् ॥

॥१८३॥ अपश्यं त्वा मनसा चेकितानं तपसो जातं तपसो
विभूतं। इह प्रजामिह रयिं रराणः प्र जायस्व प्रजया पुत्रकाम
॥१॥ अपश्यं त्वा मनसा दीध्यानां स्वायां तनू ऋत्व्ये नाधमानां।
उप मामुच्चा युवतिर्बभूयाः प्र जायस्व प्रजया पुत्रकामे ॥२॥
अहं गर्भमदधामोषधीष्वहं विश्वेषु भुवनेष्वंतः। अहं प्रजा अज-
नयं पृथिव्यामहं जनिभ्यो अपरीषु पुत्रान् ॥३॥४१॥

॥१८४॥ १–३ त्वष्टा गर्भकर्ता विष्णुर्वा प्राजापत्यः ॥ लिंगोक्तदेवताः। गर्भार्थाशीः ॥ अनुष्टुप् ॥

॥१८४॥ विष्णुर्योनिं कल्पयतु त्वष्टा रूपाणि पिंशतु। आ
सिंचतु प्रजापतिर्धाता गर्भं दधातु ते ॥१॥ गर्भं धेहि सिनीवालि
गर्भं धेहि सरस्वति। गर्भं ते अश्विनौ देवावा धत्तां पुष्करस्रजा
॥२॥ हिरण्ययी अरणी यं निर्मंथतो अश्विना। तं ते गर्भं हवा-
महे दशमे मासि सूतवे ॥३॥४२॥

॥१८५॥ १–३ सत्यधृतिर्वारुणिः ॥ अदितिः। स्वस्त्ययनं ॥ गायत्री ॥

॥१८५॥ महि त्रीणामवोऽस्तु द्युक्षं मित्रस्यार्यम्णः। दुराधर्षं
वरुणस्य ॥१॥ नहि तेषाममा चन नाध्वसु वारणेषु। ईशे रिपु-
रघशंसः ॥२॥ यस्मै पुत्रासो अदितेः प्र जीवसे मर्त्याय। ज्यो-
तिर्यच्छंत्यजस्रं ॥३॥४३॥

॥१८६॥ १–३ उलो वातायनः ॥ वायुः ॥ गायत्री ॥

॥१८६॥ वात आ वातु भेषजं शंभु मयोभु नो हृदे। प्र ण
आयूंषि तारिषत् ॥१॥ उत वात पितासि न उत भ्रातोत



Digitized by Google

हंतवै ऊं क्षिपत् अशस्तिं अप दुःऽमतिं हन् अथ करत् यजमानाय शं योः ॥३॥४०॥

---

॥१८३॥ अपश्यं त्वा मनसा चेकितानं तपसः जातं तपसः विऽभूतं इह प्रऽजां इह रयिं रराणः प्र जायस्व प्रऽजया पुत्रऽकाम ॥१॥ अपश्यं त्वा मनसा दीध्यानां स्वायां तनू' ऋत्व्ये नाधमानां उप मां उच्चा युवतिः बभूयाः प्र जायस्व प्रजया पुत्रऽकामे ॥२॥ अहं गर्भं अदधां ओषधीषु अहं विश्वेषु भुवनेषु अंतः' अहं प्रऽजाः अजनयं पृथिव्यां अहं जनिऽभ्यः अपरीषु पुत्रान् ॥३॥४१॥

---

॥१८४॥ विष्णुः योनिं कल्पयतु त्वष्टा रूपाणि पिंशतु आ सिंचतु प्रजाऽपतिः धाता गर्भं दधातु ते ॥१॥ गर्भं धेहि सिनीवालि गर्भं धेहि सरस्वति गर्भं ते अश्विनौ देवौ आ धत्तां पुष्करऽस्रजा ॥२॥ हिरण्ययी' अरणी' यं निःऽमंथतः अश्विना तं ते गर्भं हवामहे दशमे मासि सूतवे ॥३॥४२॥

---

॥१८५॥ महि त्रीणां अवः अस्तु द्युक्षं मित्रस्य अर्यम्णः दुःऽआधर्षं वरुणस्य ॥१॥ नहि तेषां अमा चन न अध्वऽसु वारणेषु ईशे रिपुः अघऽशंसः ॥२॥ यस्मै पुत्रासः अदितेः प्र जीवसे मर्त्याय ज्योतिः यच्छंति अजस्रं ॥३॥४३॥

---

॥१८६॥ वातः आ वातु भेषजं शंऽभु मयःऽभु नः हृदे प्र नः आयूंषि तारिषत् ॥१॥ उत वात पिता असि नः उत भ्राता उत



Digitized by Google

नः सखा। स नो जीवातवे कृधि ॥२॥ यददो वात ते गृहे३ऽमृतस्य निधिर्हितः। ततो नो देहि जीवसे ॥३॥४४॥

॥१८७॥ १—५ वत्स आग्नेयः ॥ अग्निः ॥ गायत्री ॥

॥१८७॥ प्राग्नये वाचमीरय वृषभाय क्षितीनां। स नः पर्षदति द्विषः ॥१॥ यः परस्याः परावतस्तिरो धन्वातिरोचते। स नः पर्षदति द्विषः ॥२॥ यो रक्षांसि निजूर्वत्यग्निस्तिग्मेन शोचिषा। स नः पर्षदति द्विषः ॥३॥ यो विश्वाभि विपश्यति भुवना सं च पश्यति। स नः पर्षदति द्विषः ॥४॥ यो अस्य पारे रजसः शुक्रो अग्निरजायत। स नः पर्षदति द्विषः ॥५॥४५॥

॥१८८॥ १—३ श्येन आग्नेयः ॥ अग्निर्जातवेदाः ॥ गायत्री ॥

॥१८८॥ प्र नूनं जातवेदसमश्वं हिनोत वाजिनं। इदं नो बर्हिरासदे ॥१॥ अस्य प्र जातवेदसो विप्रवीरस्य मीळ्हुषः। महीमियर्मि सुष्टुतिं ॥२॥ या रुचो जातवेदसो देवत्रा हव्यवाहनीः। ताभिर्नो यज्ञमिन्वतु ॥३॥४६॥

॥१८९॥ १—३ सार्पराज्ञी ॥ सार्पराज्ञी सूर्यो वा ॥ गायत्री ॥

॥१८९॥ आयं गौः पृश्निरक्रमीदसदन्मातरं पुरः। पितरं च प्रयन्त्स्वः ॥१॥ अंतश्चरति रोचनास्य प्राणादपानती। व्यख्यन्महिषो दिवं ॥२॥ त्रिंशद्धाम वि राजति वाक्पतंगाय धीयते। प्रति वस्तोरह द्युभिः ॥३॥४७॥

॥१९०॥ १—३ अघमर्षणो माधुच्छंदसः ॥ भाववृत्तं ॥ अनुष्टुप् ॥

॥१९०॥ ऋतं च सत्यं चाभीद्धात्तपसोऽध्यजायत। ततो रात्र्यजायत ततः समुद्रो अर्णवः ॥१॥ समुद्रादर्णवादधि संवत्सरो अजायत। अहोरात्राणि विदधद्विश्वस्य मिषतो वशी ॥२॥ सूर्याचं-



Digitized by Google

नः सखा सः नः जीवातवे कृधि ॥२॥ यत् अदः वात ते गृहे अमृतस्य निऽधिः हितः ततः नः देहि जीवसे ॥३॥४४॥

---

॥१८७॥ प्र अग्नये वाचं ईरय वृषभाय क्षितीनां सः नः पर्षत् अति द्विषः ॥१॥ यः परस्याः पराऽवतः तिरः धन्व अतिऽरोचते सः नः पर्षत् अति द्विषः ॥२॥ यः रक्षांसि निऽजूर्वति वृषा शुक्रेण शोचिषा सः नः पर्षत् अति द्विषः ॥३॥ यः विश्वा अभि विऽपश्यति भुवना सं च पश्यति सः नः पर्षत् अति द्विषः ॥४॥ यः अस्य पारे रजसः शुक्रः अग्निः अजायत सः नः पर्षत् अति द्विषः ॥५॥४५॥

---

॥१८८॥ प्र नूनं जातऽवेदसं अश्वं हिनोत वाजिनं इदं नः बर्हिः आऽसदे ॥१॥ अस्य प्र जातऽवेदसः विप्रऽवीरस्य मीळ्हुषः महीं इयर्मि सुऽस्तुतिं ॥२॥ याः रुचः जातऽवेदसः देवऽत्रा हव्यऽवाहनीः ताभिः नः यज्ञं इन्वतु ॥३॥४६॥

---

॥१८९॥ आ अयं गौः पृश्निः अक्रमीत् असदत् मातरं पुरः पितरं च प्रऽयन् स्वः ॥१॥ अंतः चरति रोचना अस्य प्राणात् अपऽअनती वि अख्यत् महिषः दिवं ॥२॥ त्रिंशत् धाम वि राजति वाक् पतंगाय धीयते प्रति वस्तोः अह द्युऽभिः ॥३॥४७॥

---

॥१९०॥ ऋतं च सत्यं चाभीद्धात्तपसोऽध्यजायत। ततो रात्र्यजायत ततः समुद्रो अर्णवः ॥१॥ समुद्रादर्णवादधि संवत्सरो अजायत। अहोरात्राणि विदधद्विश्वस्य मिषतो वशी ॥२॥ सूर्याचं-



Digitized by Google

द्रमसौ धाता यथापूर्वमकल्पयत्। दिवं च पृथिवीं चांतरिक्ष-
मथो स्वः ॥३॥४८॥

---

॥ १९१ ॥ १–४ संवननः ॥ १ अग्निः । २–४ संज्ञानं ॥ १. २. ४ अनुष्टुप् । ३ त्रिष्टुप् ॥

॥१९१॥ संसमिद्युवसे वृषन्नग्ने विश्वान्यर्य आ। इळस्पदे स-
मिध्यसे स नो वसून्या भर॥१॥ सं गच्छध्वं सं वदध्वं सं वो मनां-
सि जानतां। देवा भागं यथा पूर्वे संजानाना उपासते॥२॥
समानो मंत्रः समितिः समानी समानं मनः सह चित्तमेषां।
समानं मंत्रमभि मंत्रये वः समानेन वो हविषा जुहोमि॥३॥
समानी व आकूतिः समाना हृदयानि वः। समानमस्तु वो
मनो यथा वः सुसहासति॥४॥४९॥८॥८॥१२॥१०॥

॥ इति दशमं मंडलं समाप्तं ॥

॥ इति शार्मण्यदेशोत्पन्नेनेंगलंडदेशनिवासिना भट्टमोक्ष-
मूलरेण तृतीयवारं ग्रंथादर्शैकमत्येन परिशो-
धितर्ग्वेदसंहिता समाप्ता ॥



Digitized by Google

द्रुमसौ धाता यथापूर्वमकल्पयत्। दिवं च पृथिवीं चांतरिक्ष-
मथो स्वः ॥३॥४८॥

---

॥१९१॥ संऽसं इत् युवसे वृषन् अग्ने विश्वानि अर्यः आ इळः
पदे सं इध्यसे सः नः वसूनि आ भर ॥१॥ सं गच्छध्वं सं वदध्वं सं
वः मनांसि जानतां देवाः भागं यथा पूर्वे संऽजानानाः उपऽआ-
सते ॥२॥ समानः मंत्रः संऽइतिः समानी समानं मनः सह चित्तं
एषां समानं मंत्रं अभि मंत्रये वः समानेन वः हविषा जुहोमि
॥३॥ समानी वः आऽकूतिः समाना हृदयानि वः समानं अस्तु
वः मनः यथा वः सुऽसह असति ॥४॥४९॥८॥८॥१२॥१०॥

॥ इति दशमं मंडलं समाप्तं ॥

॥ इति शार्मण्यदेशोत्पन्नेनेंगलंडदेशनिवासिना भट्टमोक्ष-
मूलरेण तृतीयवारं ग्रंथादर्शैकमत्येन परिशो-
धितर्ग्वेदसंहिता समाप्ता ॥



Digitized by Google

# LINGUISTIC PUBLICATIONS

OF

# TRÜBNER & CO.,

## 57 AND 59, LUDGATE HILL, LONDON, E.C.

---

**Jataka Stories.** With the Commentary and Collection of Buddhist Fairy Tales, Fables, and Folk Lore. Translated from the original Pali by T. Rhys Davids. (The First Part of the Commentary contains the most complete account we yet have of the Life of Buddha.) [*In preparation.*

**Kern.** The Âryabhatiya, with the Commentary Bhatadîpikâ of Paramadiçvara, edited by Dr. H. Kern. 4to. pp. xii. and 107. 9*s.*

**Kielhorn.** A Grammar of the Sanskrit Language. By F. Kielhorn, Ph.D., Superintendent of Sanskrit Studies in Deccan College. Registered under Act xxv. of 1867. Demy 8vo. pp. xvi. and 260, cloth. 1870. 10*s.* 6*d.*

**Kistner.** Buddha and his Doctrines. A Bibliographical Essay. By Otto Kistner. Imp. 8vo. pp. iv. and 32, sewed. 2*s.* 6*d.*

**Laghu Kaumudî.** A Sanskrit Grammar. By Varadarâja. With an English Version, Commentary, and References. By James R. Ballantyne, LL.D., Principal of the Sanskrit College, Benares. 8vo. pp. xxxvi. and 424, cloth. 1*l.* 11*s.* 6*d.*

**Maha-Vira-Charita;** or, the Adventures of the Great Hero Rama. An Indian Drama in Seven Acts. Translated into English Prose from the Sanskrit of Bhavabhûti. By John Pickford, M.A. Crown 8vo. cloth, pp. xviii. and 172. 5*s.*

**Manava-Kalpa-Sutra;** being a portion of this ancient Work on Vaidik Rites, together with the Commentary of Kumarila-Swamin. A Facsimile of the MS. No. 17, in the Library of Her Majesty's Home Government for India. With a Preface by Theodor Goldstücker. Oblong folio, pp. 268 of letterpress and 121 leaves of facsimiles. Cloth. 4*l.* 4*s.*

**Megha-Duta** (Cloud Messenger). By Kālidāsa. Translated from the Sanskrit into English verse, with Notes and Illustrations. By the late H. H. Wilson. The Vocabulary by Francis Johnson. New Edition. 4to. cloth, pp. xi. and 180. 10*s.* 6*d.*

**Muir.** Original Sanskrit Texts, on the Origin and History of the People of India, their Religion and Institutions. Collected, Translated, and Illustrated by John Muir, Esq., D.C.L., LL.D., Ph.D. Vol. I. Mythical and Legendary Accounts of the Origin of Caste, with an Inquiry into its existence in the Vedic Age. Second Edition, rewritten and greatly enlarged. 8vo. cloth, pp. xx. and 532. 1*l.* 1*s.* Vol. II. The Trans-Himalayan Origin of the Hindus, and their Affinity with the Western Branches of the Aryan Race. Second Edition, revised, with additions. 8vo. cloth, pp. xxxii. and 512. 1*l.* 1*s.* Vol. III. The Vedas: Opinions of their Authors, and later Indian Writers, on their Origin, Inspiration, and Authority. Second edition, revised and enlarged. 8vo. cloth, pp. xxxii. and 312. 16*s.* Vol. IV. Comparison of the Vedic with the later representation of the principal Indian Deities. Second edition, revised. 8vo. cloth, pp. xvi. and 524. 1*l.* 1*s.* Vol. V. Contributions to a Knowledge of the Cosmogony, Mythology, Religious Ideas, Life and Manners of the Indians in the Vedic Age. 8vo. cloth, pp. xvi. and 492. 1*l.* 1*s.*

**Müller.** Max Müller's Lecture on Buddhist Nihilism. Delivered before the General Meeting of the Association of German Philologists, at Kiel, 28th September, 1869. 1*s.*

**Nagananda;** or, the Joy of the Snake World. A Buddhist Drama in Five Acts. Translated into English Prose, with Explanatory Notes, from the Sanskrit of Sri-Harsha-Deva. By Palmer Boyd, B.A. With an Introduction by Professor Cowell. Crown 8vo. cloth, pp. xvi. and 100. 4*s.* 6*d.*

Digitized by Google

**Nalopákhyánam.** Story of Nala, an Episode of the Mahá-Bhárata: the Sanskrit text, with a copious Vocabulary, Grammatical Analysis, and Introduction, by Monier Williams, M.A. The Metrical Translation by the Very Rev. H. H. Milman, D.D. 1860. Second edition. 8vo. cloth. 21*s.*

**Naradiya Dharma Sastram**; or, the Institutes of Narada. Translated for the First Time from the unpublished Sanskrit original. By Dr. Julius Jolly, University, Wurzburg. With a Preface, Notes chiefly critical, an Index of Quotations from Narada in the principal Indian Digests, and a general Index. Crown 8vo., pp. xxxv. and 144, cloth. 10*s.* 6*d.*

**Prakrita-Prakasa**; or, the Prakrit Grammar of Vararuchi, with the Commentary (Manorama) of Bhamaha. The first complete edition of the Original Text with Various Readings from a Collation of Six Manuscripts in the Bodleian Library at Oxford, and the Libraries of the Royal Asiatic Society and the East India House; with copious Notes, an English Translation, and Index of Prakrit words, to which is prefixed an easy Introduction to Prakrit Grammar. By Edward Byles Cowell. Second issue, with new Preface, and corrections. 8vo. pp. xxxii. and 204. 14*s.*

**Ram Jasan.** A Sanskrit and English Dictionary. Being an Abridgment of Professor Wilson's Dictionary. With an Appendix explaining the use of Affixes in Sanskrit. By Pandit Ram Jasan, Queen's College, Benares. Published under the Patronage of the Government, N.W.P. Royal 8vo. cloth, pp. ii. and 707. 28*s.*

**Rig-Veda.** The Hymns of the Rig-Veda. The Samhita and Pada Texts in parallel columns. Reprinted from M. Müller's Editio Princeps. In 2 Vols. 8vo.

**Rig-Veda.** The Sacred Hymns of the Brahmins, as preserved to us in the oldest collection of religious poetry, the Rig-Veda-Sanhita, translated and explained. By F. Max Müller, M.A. Vol. I. 8vo. cloth, pp. clii. and 264. 12*s.* 6*d.*

**Rig-Veda-Sanhita.** Collection of Ancient Hindu Hymns, constituting the Fifth to Eighth Ashtakas, or books of the Rig-Veda, the oldest Authority for the Religious and Social Institutions of the Hindus. Translated from the Original Sanskrit by the late Horace Hayman Wilson, M.A., F.R.S., etc. Edited by E. B. Cowell, M.A., Vol. IV., 8vo. cloth, pp. 214. 14*s.* A few copies of Vols. II. and III. still left. (Vols. V. and VI. in the Press.)

**Sakuntalâ.** A Sanskrit Drama in Seven Acts. Edited by Monier Williams, M.A., D.C.L., Boden Professor of Sanskrit. Second Edition. 8vo. cloth. 21*s.*

**Schlagintweit.** Buddhism in Tibet: Illustrated by Literary Documents and Objects of Religious Worship. With an Account of the Buddhist Systems preceding it in India. By Emil de Schlagintweit, LL.D. With a Folio Atlas of 20 Plates, and 20 Tables of Native Prints in the Text. Royal 8vo. pp. xxiv. and 404. 2*l.* 2*s.*

**Schleicher.** Compendium of the Comparative Grammar of the Indo-European, Sanskrit, Greek, and Latin Languages. By August Schleicher. Translated from the Third German Edition by Herbert Bendall, B.A., Chr. Coll. Camb. Part I. Phonology. 8vo. cloth, pp. 184. 7*s.* 6*d.* Part II. Morphology, Roots and Stems: Numerals. 8vo. pp. viii. and 104. cloth. 6*s.*

**Sherring.** The Sacred City of the Hindus. An Account of Benares in Ancient and Modern Times. By the Rev. M. A. Sherring, M.A., LL.D.; and Prefaced with an Introduction by Fitzedward Hall, Esq., D.C.L. With Illustrations. 8vo. pp. xxxvi. and 388, cloth. 21*s.*

**Steele.** An Eastern Love Story. Kusa Jatakaya: A Buddhistic Legendary Poem; with other Stories. By Thomas Steele, Ceylon Civil Service. Crown 8vo., pp. xii. and 260. 6*s.*

**Surya-Siddhanta** (Translation of the). A Text Book of Hindu Astronomy, with Notes and Appendix, &c. By W. D. Whitney. 8vo. boards, pp. iv. and 354. 1*l.* 11*s.* 6*d.*

**Sutta Nipata**; or, Dialogues and Discourses of Gotama Buddha. Translated from the Pali, with Introduction and Notes. By Sir M. Coomára Swámy. Crown 8vo. pp. xxxvi. and 160, cloth. 6*s.*

Digitized by Google

**Trübner's Bibliotheca Sanscrita.** A Catalogue of Sanskrit Literature, chiefly printed in Europe. To which is added a Catalogue of Sanskrit Works printed in India; and a Catalogue of Pali Books. Constantly for sale by Trübner & Co. Crown 8vo. sd., pp. 84. 2s. 6d.

**Weber.** On the Râmâyana. By Dr. Albrecht Weber, Berlin. Translated from the German by the Rev. D. C. Boyd, M.A. Reprinted from 'The Indian Antiquary.' Fcap. 8vo. sd., pp. 130. 5s.

**Wheeler.** The History of India from the Earliest Ages. By J. Talboys Wheeler. Vol. I. containing the Vedic Period and the Mahá Bhárata. With Map. Demy 8vo. pp. lxxv. and 576, cloth, 1867. 18s. Vol. II. The Ramayana and the Brahmanic Period. Demy 8vo. pp. lxxxviii. and 680, with 2 Maps, cloth, 21s. Vol. III. Hindu, Buddhist, and Brahmanical. Demy 8vo. pp. xxiv. and 500. With 2 Maps, cloth. 1874. 18s. Vol. IV. Part I. India under Mussulman Rule. 8vo. pp. xxxii. and 420, cloth, 14s.

**Whitney.** Language and the Study of Language: Twelve Lectures on the Principles of Linguistic Science. By W. D. Whitney. Third Edition, augmented by an Analysis. Crown 8vo. cloth, pp. xii. and 504. 10s. 6d.

**Whitney.** Language and its Study, with especial reference to the Indo-European Family of Languages. Seven Lectures by W. D. Whitney, Professor of Sanskrit, and Instructor in Modern Languages in Yale College. Edited with Introduction, Notes, Tables of Declension and Conjugation, Grimm's Law with Illustration, and an Index, by the Rev. R. Morris, M.A., L.LD. Crown 8vo. cloth, pp. xxii. and 318. 5s.

**Whitney.** Oriental and Linguistic Studies. The Veda; the Avesta; the Science of Language. By William Dwight Whitney, Professor of Sanskrit and Comparative Philology in Yale College. Crown 8vo. cloth, pp. x. and 418. 12s.

**Whitney.** Oriental and Linguistic Studies. By W. D. Whitney, Professor of Sanskrit. Second Series. Contents: the East and West—Religion and Mythology—Orthography and Phonology—Hindû Astronomy. Crown 8vo. cloth, pp. 446. 12s.

**Williams.** A Dictionary, English and Sanskrit. By Monier Williams, M.A. Published under the Patronage of the Honourable East India Company. 4to. pp. xii. and 862, cloth. 1855. 3l. 3s.

**Williams.** A Practical Grammar of the Sanskrit Language, arranged with reference to the Classical Languages of Europe, for the use of English Students, by Monier Williams, M.A. Third Edition. In 8vo. cloth. 1864. 15s.

**Williams.** A Sanskrit-English Dictionary. Etymologically and Philologically Arranged. With Special Reference to Greek, Latin, Gothic, German, Anglo-Saxon, and other Cognate Indo-European Languages. By Monier Williams, M.A., Boden Professor of Sanskrit in the University of Oxford. In demy 4to. cloth. 1872. 4l. 14s. 6d.

**Wilson.** A Dictionary in Sanskrit and English. Translated, amended, and enlarged from an original compilation prepared by learned Natives for the College of Fort William by H. H. Wilson. The Third Edition edited by Jagunmohana Tarkalankara and Khettramohana Mookerjee. Published by Gyanendrachandra Rayachoudhuri and Brothers. 4to. pp. 1008. Calcutta 1874. 3l. 3s.

**Wilson.** Works of the late Horace Hayman Wilson, M.A., F.R.S. Vols. I. and II. Essays and Lectures chiefly on the Religion of the Hindus, by the late H. H. Wilson, M.A., F.R.S. Collected and edited by Dr. Reinhold Rost. 2 vols. cloth, pp. xiii. and 399, vi. and 416. 1l. 1s. Vols. III, IV, and V. Essays Analytical, Critical, and Philological, on Subjects connected with Sanskrit Literature. Collected and edited by Dr. Reinhold Rost. 3 vols. 8vo. cloth, pp. 408, 406, and 390. 1l. 16s. Vols. VI, VII, VIII, IX, and X. in 2 Parts. Vishnu Purána, a System of Hindu Mythology and Tradition. Translated from the original Sanskrit, and Illustrated by Notes derived chiefly from other Puránas. By the late H. H. Wilson. Edited by Fitzedward Hall, M.A., D.C.L. Vols. I. to V (Part 2). 8vo. cloth, pp. cxl. and 200; 344; 344; 346; 392. 3l. 3s. Vols. XI. and XII. Select Specimens of the Theatre of the Hindus. Translated from the Original Sanskrit. By the late H. H. Wilson, M.A., F.R.S. Third corrected edition. 2 vols. 8vo. cloth, pp. lxi. and 384; and iv. and 418. 1l. 1s.

Digitized by Google

